श्लोकः

कोशं शब्दार्थ चिन्तामणि मथ रहितं पूर्णभावेन पूर्णी
कृत्वा श्रीसज्जनेश स्त्रिदिवपथ गत स्तत्प्रचाराय लोके ॥
तत्सूनु स्तातभक्तो नरपति फतह : सिंह भूपैकवीर :
विद्वत्कंठैकशोभा भरण विधिरुचिः प्रेपयत्येक कोशम्. ॥ १ ॥

श्रीम त्फ़तह सिंहस्य नृपते : परमा ज्ञया ॥
कविराजः श्यामलाख्यः कोशं प्रेपयति ध्रुवम्. ॥ २ ॥

---

# NOTICE.

## THE SHABDARTH CHINTAMANI.

### A NEW SANSKRIT LEXICON.



This new and valuable work, in the compilation of which Brahmávadhúta Shri Sukhánand Nathji of Delhi, spent more than [illegible] years of his life, contains (as its name implies) the meanings of all words in general and colloquial use.

The following is a resumè of the plan on which this most useful work has been arranged

1st. The word-forms have been tested by the process suggested in the Grammatical Sutras of Panini.

2nd. The meanings of the words are derived from their roots, by which means not only correctness, but clearness of conception are secured. The Primary meaning is given first, and others are described according to their logical order.

The utmost care has been taken to express the meanings of the words in the best and simplest language – a feature in the construction of this work, which cannot fail to recommend it above all others for practical use.

3rd. Another point is well worthy of notice in the work, viz; that words which have special reference to Aryan Literature whether the Smritis, Purans or Vedas, are clearly and briefly explained.

4th. Special attention has been paid to the full definition of Scientific and Technical terms, whether these occur in the Vedas, Vedangas, Shastras, Chemistry, Mechanics or Music.

5th. The descriptions of weapons of warfare, metals, precious stones; and the directions for preparing the different kinds of soil for planting garden and forest-trees are fully given.

6th The officinal and non-officinal properties of drugs and the immediate causes of those diseases for which they may be given, have been fully described according to the best Medical Treatises on the subject.

7th. The author has specially adapted his work for Educational purposes in explaining the various Figures of Rhetoric employed in Poetry; also those feelings Poetry is calculated to excite, and by describing the different Metres.

8th. In the arrangement of the words the Alphabetical order is strictly preserved.

From these points it will be clearly seen that this excellent work will be an unerring guide to those who seek information on Political as well as Practical matters.

Fully convinced of the usefulness of such a Lexicon, Adi Gaur, Pt. Ghási-Ram (late Gumasta of Govt. Commi[illegible] Agra) resolved to undertake the publication of the first 2 Vols. as far as the letter [illegible] but on account of the want of pecuniary assistance, he could not finish the remaining portion of the Dictionary.

About 16 years ago, the first two volumes were published, and are now in the libraries of many of the Chief Nobles and Pandits of India, who deeply regret that the remaining 2 Vols. are not in their possession.

However, no one seemed willing to undertake this arduous and important task until H. H. the late Mahá Raná Sajjan Singh, G. C. S. I. of Meywár, who during his life time was the Patron of Art and Literature, on hearing through Kavi Raja Shyamal Das of this unfinished Dictionary, issued orders that the remaining 2 vols. (3rd & 4th.) should be printed in the Raj Press with all possible rapidity. So minute were H. H. the late Maha Rana's directions that he expressed the desire that the same kind of paper be used and type of equal clearness and legibility employed as in the first two volumes.

In fulfilment of His Highness' wishes, the work has been completed.

It is therefore requested that those who are desirous of obtaining the Lexicon send their names and full address to the undersigned.

Oodeypore, June 188[illegible]

Pundit Bansi D[illegible]
[illegible]
Manager, Raj P[illegible]
Meywar.

Price for the Complete work Twenty (20) Rupees,
Packing & Postage extra.

# श ब्दा र्थ चि न्ता म णि : को श :

श्रीसुखानन्दनाथेन विरचित :

( *——*——* )

राज्यन्त्वखिलदिव्यसिद्धिसहितंखड्गप्रतापोज्ज्वलंलक्ष्मीवैभवमस्तुतेचिरतरं
पौरन्द र्यमपरम् धर्मः श्रीयशमेधता मनुदिनं नीरोग दीर्घायुषा
श्रीमत्सज्जनसिंहवीरनृपतेश्रीशम्भुस्त्यामदा ॥ १ ॥ गर्वाडम्बर
संभृतादरिगणान्मानंसमुत्सारयन् तत्पत्नीहृदिलोकशोकमनिशं
संस्थापयन्दुस्सहम् ॥ नम्रीभावयुतसुहृद्जनगणेमानंसमावेश
यन्भूयात् सज्जनसिंहभूपतिलको विख्यातनामावनौ ॥ २ ॥
यावन्तेनिकटंनयान्तिमनुजास्संयाचकाश्चार्थिनो मन्यन्ते
हृदयेनदीनसमयानत्यन्तोत्सवान्स्वानभृशम् ॥
प्राप्नोत्स्वपरमेव दातृपदवीमस्यकचरन्तीवरं
श्रीमत्सज्जनसिंहवीरनृपतेर्दान
दातुर्धनम् ॥ ३ ॥

*——*——*

## तृतीयोभाग : पवर्गाद्य :

श्रीमन्महाराजाधिराजरविकुलावतंसमहीमहेन्द्रयावदार्यकुलकमल
दिवाकर मेदपाटदेश श्री १०८ श्रीसज्जनभूपशिरोमण्याज्ञया कवि
राजिराजप्रणया एकोनविंशत्यधिकचत्वारिंशत्तमे १८ ४० वैक्रमे
ऽब्दे राजधान्युदयपुरे श्रीसज्जनयन्त्रालये वाजपेयिवंशोधरप्रबन्ध
त : श्रीमेद ००८ श्वरकोशधनव्ययान्मुद्रित :

श्रीमदेकलिंगोविजयते





प : पुं० पकारे ॥ वाते । पवने ॥ अंडे ॥ पूते ॥ पर्णे ॥ पाने ॥ पातरि ॥

पक्कण : पुं० शवरालये । भिल्लग्रामे ॥ पचन्ति । पचे : क्विप् । कणन्ति कण शब्दे पचाद्यच् । पच : कणायच । पाककलहाद्येव प्रधानंतचनान्यत्

पक्तपीडः पुं० पखौडा इ० भा० प्र० वृ० त्रि० पंचकृत्ये । वर्द्धने ॥ इति रा०नि० ॥

पक्तव्यः त्रि० कर्त्तुरनायासेनंस्वयंपक्वे । पचेलिमे ॥ पचेस्तव्यः ॥

पक्तिः स्त्री० गौरवे ॥ पाके ॥ फलोत्पत्तौ ॥ पचनम् । डुपचष्पाके । शा० क्ति : ॥

पक्तिशूलम् न० परिणामशूले । पाकजे ॥ इ० रा०नि० ॥

पक्ता पुं० अग्नौ ॥ त्रि० पाचके । पाककर्त्तरि ॥ पचति । डुपचष् ० । ण्वुल्तृचाविति तृच् ॥

पक्तृम् न० गार्हपत्याग्नौ ॥ पच्यतेऽनेन डुपचष्० गुधृवीपचिवचीत्यादि नत्र : ॥ तेजसि ॥

पक्त्रिमः त्रि० पाकिमे । पाकजे ॥ डुपचष्० भावे । ड्वितःक्त्रिः । पाकेन निर्वृत्तम् त्रेर्मम्नित्यम् ॥

पक्वः त्रि० परिणते । पका० इ० भा० विनाशाभिमुखे ॥ पच्यतेस्म, डुपचष् ० क्तः । पचोव इति निष्ठातस्यवः ।

निष्ठाम्प्राप्ते । मुह्टढइ०यावत् । पक्का० इ० भाषा । निवृत्ते ॥ यथा, कषाये कर्मभिः पक्वे० इति ॥

पक्वकृत् पुं० निम्बवृक्षे ॥ पक्वं करोति कृञ्० । क्विप् । त्रि । पाककर्तरि ॥

पक्वरसः पुं मद्ये ॥ इतिशब्दरत्नावली ॥

पक्ववटिका । स्त्री० । पकौडी०इ०भा० प्र० वेशनवटिकायाम् ॥ वटिका वेशनस्यापि क्वथितायां निमज्जिता ॥ रुच्या विष्टम्भ जननी वल्या पुष्टिंकरी स्मृता ॥

पक्ववारि न० काञ्जिके पक्व इव तत्

वारि च ॥ पङ्कजले ॥
पक्काधानम् न० पक्काशये ॥
पक्कान्नम् न० कृतपाकितण्डुलादौ ॥ यथा । यतीच ब्रह्मचारीच पक्कान्नस्वामिनावुभौ । तयो रन्न मदत्वा तु भुक्त्वा चान्द्रायणं चरे दिति सदाचारः आमंशूद्रस्य पक्कान्नं पक्क मुच्छिष्ट मुच्यते । इतितिथितत्त्वम् ॥
पक्काशयः पुं० नाभ्यधःस्थले ॥ पक्काशय स्त्वधोनाभेरूर्द्ध्वमामाशयः स्मृतः ॥ पक्कस्य आशयः ।
पक्षः । पुं० मासार्द्धे ॥ पक्ष्यते० परिगृह्यतेदैवकार्यार्थेपितृकार्यार्थेवायःकालविशेषःपक्षः । सचशुक्लकृष्णभेदाद् द्विविधः । शुक्लपक्षेतिथिर्ग्राह्या यस्यामभ्युदितोरविः । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितोरविः ॥ पक्षपरिग्रहे । कर्मणिघञ् ॥ पक्षयति । पक्ष्यतेवा । अच् । घञ्वा ॥ यद्वा । पक्ष्यते चन्द्रस्यपञ्चदशानां कलानामापूरणं क्षयोवायत्रतेतमः ॥ रुढोवापक्षशब्दोविभक्तोमासस्यैकैकमर्द्धं ब्रूते ॥ यद्वा । पशति । पश० । स्पर्धिपक्षयोर्दकौचेतिसः धातोः कान्तादेशः॥ पार्श्वगृहे ॥ साध्ये ॥ विरोधि॥ केशादेः परतोवृन्दे ॥ मित्रबले ॥ सहायबले ॥ चुल्लीरन्ध्रे ॥ पतत्रे ॥ पक्षिपक्षे । गरुति ॥ राजकुञ्जरे ॥ पार्श्वे । पाखाइतिभाषा ॥ वर्गे ॥
देहाङ्गे ॥ सहाये ॥ यथा । श्रुतिशिरः पक्ष ः समाश्रीयतामिथ्यः प्रदेशः ॥ शरपक्षे । बाणे ॥ भित्तौ ॥ एकतरकोटौ ॥ सन्दिग्धसाध्यवति ॥ यथा० धूमवत्त्वे हेतौपर्वतः ॥ सिषाधयिषितधर्मविशिष्टो धर्मी पक्षः । यथा । महानसेधूमवन्ह्यो : सम्बन्धे तत्पूर्वकं पर्वतेवह्निज्ञानम् ॥
पक्षकः । पुं० पार्श्वद्वारे खडकिकायाम् खिड़कीद्वारइ० भा० ॥ पार्श्वमात्रे ॥ पक्षइव । इवेप्रतिकृताविति कन् ॥ स्वार्थेकोवा ॥ सहाये ॥
पक्षघातः । पुं० पक्षाघाताभिधेवातरोगे
पक्षचरः । पुं० चन्द्रे । विधौ ॥ यूथभ्रष्ट पृथक्चारिगजे ॥
पक्षच्छिद्रम् । न० तिथिविशेषे ॥ अष्टमी द्वादशी चैव चतुर्थीच चतुर्दशी ॥ अमावास्याच मुनिभिः पक्षच्छिद्र मुदाहृतम् ॥
पक्षजः । पुं० चन्द्रमसि ॥ पक्षेजातः । जनौ० डः ॥ त्रि० । पक्षजन्मनि ॥
पक्षजन्मा । पुं० चन्द्रे ॥ पक्षेजन्मास्य॥ त्रि० । पक्षजाते ॥
पक्षता । स्त्री० अनुमित्साविरहविशिष्टसिद्ध्यभावे ॥ इयमनुमितिकारणम् तत्र । पर्वतवन्ह्यनुमितौअनुमित्साविरहविशिष्टपर्वतधर्मिकवन्हिनिश्चयाभाव : । यथा । सिषाधयिषयाशून्या सिद्धिर्यत्रनतिष्ठति। सपक्षस्तत्रवाभिस्त्व

ज्ञानादनुमितिर्भवेदिति ॥ भाषापरिच्छेदः ॥

पक्षतिः । स्त्री० पक्षमूले ॥ प्रतिपत्तिथौ पक्षस्यमूलम् । पक्षात्तिः ॥

पक्षद्वारम् । नं० पक्षके ॥ पक्षपार्श्वद्वारम् ॥

पक्षधरः । पुं० मुधांशौ ॥ इन्दौ ॥ यज्ञपत्युपाध्यायकृतार्थे । चिन्तामणि रलोककारे । मिश्रे ॥ त्रि । पक्षधारणकर्त्तरि ॥

पक्षधर्मता । स्त्री० व्याप्यस्यपर्वतादिवृत्तित्वे ॥

पक्षपातः । पुं० आसक्तिविशेषे ॥ अन्याय्यसाहाय्यकरणे ॥ पक्षपातः ॥ पक्षिणांज्वरे ॥ पक्षपातःपतङ्गानामित्युक्तः ॥

पक्षपातिता । स्त्री० सहायतायाम् ॥

पक्षपालिः । स्त्री० खडक्किकायाम् ॥

पक्षभागः । पुं० गजस्यपार्श्वभागे ॥ पक्षयत्यनेन । पक्ष० । चु० । पुंसीति घः । पक्षस्यपक्षएववाभागः ॥

पक्षमूलम् । नं० पक्षतौ । डानक० इ० गौड़० भा० ॥ पक्षस्यमूलं ॥

पक्षवाहनः । पुं० खगे । विहगे ॥

पक्षः । नं० पक्षे । गरुति ॥ पचति । डुपचष् । पचिवचिभ्यांसुट्चेत्यसुन् । पक्षसीतुम्मृतौपक्षावितिशुभाङ्कः ॥ त्यमीकाधिकरणेपूर्वोत्तरेद्वे पक्षसी इतिअमरस्वाम्यादयः ॥ माधवस्तु पक्षपरिग्रहइत्यस्मादसुन् । पक्षशकृदिः संवत्सरार्द्धेत्याह ॥

पक्षसुन्दरः । पुं० लोध्रे ॥ इतिहारावली ॥

पक्षाघातः । पुं० अर्धांगइतिख्याते भावप्रकाशोक्तवातजन्ये रोगविशेषे ॥ पक्षेआहननम् ॥

पक्षान्तः । पुं० द्वयोः पक्षयोः ॥ अमायाम् ॥ पूर्णिमायाम् ॥ पक्षस्य अन्तः ॥

पक्षालुः । पुं० पक्षिणि ॥ इतिशब्दचन्द्रिका ॥

पक्षावसरः । पुं० पूर्णिमायाम् ॥ अमायां ॥

पक्षिणी । स्त्री० पूर्णिमायाम् ॥ खग्याम् । विहग्याम् ॥ शाकिनीभेदे ॥ आगामिवर्त्तमानाहर्युक्तायांनिशि ॥ आगामिवर्त्तमानेअहनीयुक्तेयस्यां साराचिः पक्षिणी । यथा । द्वे अह्नी एकरात्रिश्च पक्षिणीत्यभिधीयते । इति । रात्रिरित्युपलक्षणम् । तेन पूर्वोत्तररात्रियुतंदिनमपिपक्षिणी । पूर्वापरदिनेरात्री वा पक्षाविवस्तो यस्याम् । अत इनिः ॥

पक्षी । पुं० खगे । विहगे । शकुनौ ॥ पक्खी । इतिपंक्ती० इतिचभा० ॥ पक्षावस्यस्तः । अतइनिठनावितीनिः ॥ धान्याङ्कुरचरायेचतेषांमांसंलघूत्तमम् । आनूपंबलकृन्मांसंस्निग्ध

गुरुतरंस्मृतम् ॥ पद्यविशेषं विष्किरे ॥ लिङ्गदेहे ॥ पंचमात्रिकस्य द्वितीयप्रभेदे ऽ । ऽ वाणे ॥
पक्षिपानीयशाला । स्त्री० (चुगटीइ
पक्षिपानीयशालिका । स्त्री० (तालवाले । पक्षिजलपानस्थाने ॥
पक्षिराज : । पुं० सम्पातौ ॥ पक्षिणां राजा । टच् ॥ शलभरूपेशिवे ॥
पक्षिल : । पुं० वात्स्यायनमुनौ ॥
पक्षिशाला । स्त्री० कुलायिकायाम् । नीडे ॥
पक्षिसिंह : । पुं तार्क्ष्ये । गरुडे ॥ पक्षीसिंह इव पक्षिणांसिंहोवा ॥
पक्षिस्वामी । पुं० गरुडे ॥
पक्षीन्द्र : । पुं० जटायौ ॥ तार्क्ष्ये ॥
पक्तृ : । त्रि० पाककर्त्तरि । पक्तरि ॥ पचेःतृ रितिवोपदेव : ॥
पक्ष्म ॥ न० सूत्रादिसूक्ष्मांशे ॥ किञ्जल्के । कुसुमच्छदे ॥ नेत्रलोमनि ॥ अणीयसि । गरुति ॥ पच्यतेऽनेनवा ॥ पच० । कर्मकरणादौमनिन् ॥
पङ्क : । पुं० न० पापे ॥ कर्द्दमे ॥ पङ्को दाहास्रपित्तार्त्तिशोथघ्नःशीतलःसरः ॥ पञ्च्यतेदुःखमनेन । पचिव्यक्तीकरणे हलर्श्च तिकरणेघञ् । कुत्वम् ॥ पञ्च्यतेवा । पचिविस्तारे । कर्मणिघञ् ॥
पङ्ककर्वट : पुं०दलाढ्ये । जलमुक्तपङ्के । दलदल०इ०भा० ॥
पङ्ककीर : । पुं०कोयष्टिखगे ॥
पङ्कगड : । पुं० } पाकाल०इ०गौडभा०
पङ्कगडक : । पुं० }
पङ्कगति : । स्त्री० मत्स्ये ॥ ब्रह्म्याम् ॥
पङ्कग्राह : । पुं० मकरे ॥ इ० हारावली ॥
पङ्कजम् । न० } पद्मे । कमले, ॥ इति राजनिर्घण्ट :
पङ्कजन्म । न० }
पङ्कजिनी । स्त्री० पद्मसमूहे ॥ जलजाकरे ॥ पङ्कजानिसन्त्यस्याम् । पुष्करादिभ्योदेशेइतिइनि : ॥
पङ्कधूम : । पुं० नरकभूभेदे ॥ पङ्कइव धूमोऽस्मिन् ॥
पङ्कप्रभा स्त्री० कर्दमयुक्तनरकवि० ॥
पङ्कमण्डूक : पुं० शम्बूके । जलडिम्बे ॥
पङ्कवल्ली ॥ स्त्री० वृत्तविशेषे ॥ पादकुसुमरवगन्धमनोहरनायकयुगलकरूपमपाहर । नागनृपतिवरभाषितमुद्युतिवृत्तममलमिहपङ्कवल्लीतिहि ॥ यथा । शारदविशदनिशामयिनिन्दतिसम्प्रतिहृदयभिदामपिविन्दति । मन्मथविशिखभयेननिमीलतिमाधव तवविरहेणविषीदतीति ॥
पङ्कवास : । पुं० कर्कटे ॥ इ०रा०नि ॥
पङ्कशुक्ति : । स्त्री० सितालिकायाम् । दुर्नामायाम् ॥
पङ्कशूरण : । पुं० शालूके ॥ इ०त्रि० ॥
पङ्कार : पुं० शैवले ॥ सेतौ ॥ सोपाने ।

जलकुब्जके ॥ इतिमे ० ॥

पङ्किलः । त्रि० सजम्वाले । पङ्काढ्ये॥ पङ्कोस्मिन्नस्ति। पिच्छादित्वात् इलच्॥

पङ्किलत्वम् । न० आर्द्रतायाम् ॥

पङ्कजम् । न० पद्मे ॥ पङ्केजातम् । जनी ० । सप्तम्यामितिड : । तत्पु रुषइत्यलुक् ॥

पङ्केरुहम् । न ० पद्मे ॥ पङ्केरोहति। रुह० । इगुपधेतिक :। तत्पुरुषे कृतीत्यलुक् ॥

पङ्क्तिः ॥ स्त्री० सजातीयसंस्थानविशेषे । वीथ्याम् । श्रेण्याम् ॥पङ्क्तिसाङ्कर्य्य दोषा यथा । नसंदसेन्नपतितैर्नचा- ण्डालैर्नपुक्कशैः । न मूर्खैर्नावलिप्तै श्च नान्त्यैर्नान्त्यावसायिभिः॥ एक शय्यासनंपङ्क्ति भाण्डपक्वान्नमिश्रणम् । याजनाध्यापनंयोनि स्तथैवसह भोजनम् ॥ सहाध्यायस्तु दशमः सहयाजनमेवच ॥ एकादशसमुद्दिष्टा दोषाः साङ्कर्य्यसंज्ञिताः॥ समीपे ह्यप्यवस्थानात् पापंसंक्रमतेनृणाम् । तस्मात्सर्वप्रयत्नेन साङ्कर्य्यं परि वर्ज्जयेत् ॥ पङ्क्तिसाङ्कर्य्यदोष निवारणोपायो यथा । एक पङ्क्त्यु पविष्टायेनस्पृशंति परस्परम्। भस्म नाकृतमर्यादा नतेषांसङ्करोभवेत् ॥अग्निनाभस्मनाचैव षड्भिः पङ्क्ति र्विभिद्यते । इतिकूर्मेपञ्चदशाध्यायः ॥ सान्तरवीथ्याम्॥ पञ्चनम् ।पचि व्यक्तीकरणे । क्तिन्॥यद्वा। पञ्चते । पचिविस्तारे। क्तिच् ॥दशाक्षरच्छन्द सि ॥ दशसंख्यायाम्॥ सुप्रतिष्ठाभेदे । पञ्चाक्षर पादच्छन्दोभेदे । यथा । भगोगिरितिपङ्क्तिः ॥ यथा । कृष्ण सनाथा तर्णकपङ्क्तिः । यामुनक च्छे चारुचचार ॥ चितौ ॥ सङ्ख्ये ये॥ पञ्चकद्वयम् पञ्चपदानि वा परिमाणमस्य । पङ्क्तिविंशतित्रिंश द्दिति निपातनात्प्रकृतेः पञ्चन् शब्दस्य टिलोपः तिप्रत्ययः। चोः कुरितिकुत्वम् । पदशब्दोत्रपादपर्या यः । रूढिशब्दोयम । तथाचात्रना वयवार्थेऽभिनिवेष्टव्यम् । पङ्क्ति शब्दोहिनानार्थः । अस्तिक्रमसन्नि वेशे यथा ब्राह्मणपङ्क्तिः पिपीलि कापङ्क्तिरिति। अस्तिचदशसङ्ख्या याम् । कृतवान्पङ्क्तिरथोविलङ्घ यदिति दशरथइत्यर्थः अस्तिच्छन्दो विशेषे यथा। यस्यपञ्चाक्षराः पादाः । तथाचछन्दोविशेष एवार्थइतिबोध्यं॥

पङ्क्तिग्रीवः । पुं ० रावणे ॥

पङ्क्तिचरः । पुं ० कुररपक्षिणि । कु- ब्जइ०भा० ॥

पङ्क्तिदूषकः । पुं ० अपाङ्क्तेये । मन्वादिस्मृत्युक्तश्राद्धभोजनानर्हब्रा- ह्मणे ॥

पङ्क्तिपावनः । पुं ० श्राद्धभोजनार्हब्रा- ह्मणे ॥ पञ्चाग्निगृहस्थे ॥ यथाह

हारीत:। पवनः पावनस्त्रेतायस्य पञ्चाग्नयोगृहे। सायम्प्रातःप्रदीव्यन्तसविप्रः पङ्क्तिपावनः॥ इति अग्न्याः सर्वेषुवेदेषुसर्वप्रवचनेषुच श्रोत्रियान्वयजाश्चैवविज्ञेयाः पङ्क्तिपावनाः॥ इत्यादिनामनूक्तेषुब्राह्मणेषु॥
पङ्क्तिरथः। पुं० दशरथनृपे॥
पङ्क्तिबीजः पुं० बर्बूरवृक्षे॥
पङ्गुः। पुं० शनैश्चरे॥ परिव्राजि॥ यथा भिक्षार्थंगमनंयस्यविण्मूत्रकरणायच। योजनान्नपरंयातिसर्वथापङ्गुरेवसः॥ त्रि० श्रोणे। जङ्घावैकल्येनचलनाक्षमे। जङ्घाहीने॥ पनतिपन० वा० गुः॥
पङ्गुकायः। पुं० शनैश्चरगृहे॥
पङ्गुलः। पुं० सितकाचाभघोटके॥ इतिहेमचन्द्रः॥
पङ्गुल्यहारिणी। स्त्री० शिम्बडीवृक्षे॥
पङ्गूः। स्त्री० विकलजङ्घायाम्॥ पङ्गोर्श्च स्त्यूङ्॥
पचः। त्रि० पाककर्त्तरि॥ पचति। डुपचष्। पचाद्यच्॥
पचकः। पुं० पचे॥ स्वा० कः॥
पचन्। त्रि० पचमाने॥ पचति। लटः शत्रितिपचेः शतृ॥
पचतः। पुं० चन्द्रे॥ सूर्ये॥ वह्नौ॥ पचति। डुपचष्०। भृमृदृशियजिपर्विपच्यमितमिनमिहर्षिभ्योतच्॥
पचत्पुटः। पुं० सूर्यमणिवृक्षे॥
पचनः। पुं० अग्नौ॥ न० पाके॥ त्रि० पाककर्त्तरि॥
पचनी। स्त्री० वनबीजपूरके॥
पचन्ती। स्त्री० पाककर्त्र्याम्॥
पचमानः। पुं० वन्हौ॥ त्रि० पाककर्त्तरि॥ पचति। पचते। डुपचष्०। लटः शतृशानचावितिशानजादेशः। आनेमुक्॥
पचम्पचा। स्त्री० दार्व्याम्। दारुहरिद्रायाम्॥ पचति। पचेः पचाद्यच्। पृ०॥ ...
पचा। स्त्री० पाके॥ पचनम्। पचेः षित्वादङ्॥ टाप्॥
पचिः। पुं० अग्नौ॥ पचति। डुपचष्०। सर्व० इन्॥
पचेलिमः। पुं० सूर्ये॥ वन्हौ॥ पचति। पचएलिमच्। त्रि० पक्तव्ये॥ यथापचेलिमाः शालयः पक्तव्या इत्यर्थः। पच्यते। पचेः कर्मणि केलिमरउपसङ्ख्यानं॥
पचेलुकः। पुं० पाचके। सूदे॥ इति त्रिकाण्डशेषः॥
पच्छः। अ० पादम्पादमित्यर्थे॥
पच्यमानः। त्रि० वर्त्तमानपचनकर्मताश्रये। वर्त्तमानपाकविशिष्टेतण्डुलादौ॥
पज्जः। पुं० शूद्रे पदो जातः। जनी०। डः॥
पञ्झटिका। स्त्री० मात्राहत्ताम्नरे॥

यथा । प्रतिपद्यमक्तितषोडशमात्रा नवमगुरुत्वविभूषितगात्रा । पुञ्झटिकायाएषविवेक : क्वापिनमध्यगुरुर्गणएक: ॥ यथा । तरलतरंतसाग्निच्छस्नस्यस्खलतर पञ्झटिका कटिबन्ध: । मौलिचपलशिखिचन्द्रकवृन्द: कालियशिरसिनर्त्तमुकुंद : ॥

पञ्चकम् । न० धनिष्ठादिपञ्चनक्षत्रेषु ॥ अत्रग्रहनिमित्तकाष्टहरणेदोषो यथा । अग्निचौरभयंरोगो राजपीडा धनक्षति : । सङ्ग्रहे तृणकाष्ठानां कृर्तेवसादिपंचके ॥ त्रि० पंचसङ्ख्यापरिमाणविशिष्टे ॥ पंचसङ्ख्यापरिमाणमस्य । तदस्यपरिमाणमित्यनुवृत्तौसङ्ख्याया : संज्ञासंघसूत्राध्ययनेषुतिपञ्चसंख्यापरिमितिमंघार्थेकन्प्रत्यय : ॥ पञ्चभि : क्रीते ॥ संख्यायाअतिशदन्तायाइतिकन् ॥ पञ्चानांनिमित्तंसंयोगउत्पातोवा ॥

पञ्चकपाल : । पुं० पञ्चसुकपालेषु संस्कृतेपुरोडाशे ॥ संस्कृतंभक्ष्याइत्यधोद्विगोर्लुगनपत्यइतिलुक् ॥ न० ॥ पंचानांकपालानांसमाहारे ॥

पञ्चकर्म । न० पञ्चप्रकारशारीरकचिकित्साविशेषे ॥ यथा । वमनं रेचनं नस्यं निरूहश्चानुवासनम् । पञ्चकर्मेदमन्यञ्च करउत्क्षेपणादिकम् ॥ इति श० चं० ॥

पंचकषाया : । पुं० महाज्ञानीयपंच



प्रकारकषायद्रव्ये ॥ यथा । जम्बुशाल्मलिवाट्यालं वकुलंवदरंतथा । कषाया : पंचविर्ज्ञे या देव्या :प्रीतिकरा: शुभा: ॥ पंचचतेकषायाश्च ॥

पञ्चकारुकी । स्त्री० कुलालकर्मारवर्द्धकिनापितरजकेषु ॥

पञ्चकृत्य : पुं० पत्रपीडे ॥ न० ॥ सृष्ट्यादिषु ॥ यथा । यस्मिन्सृष्टिस्थितिध्वंसपिधानानुग्रहात्मकम् । कृत्यंपञ्चविधंशश्वद्भासतेतंनुम :शिवमिति ॥

पञ्चकोलम् । न० पञ्चोषणे । पाचनविशेषे ॥ यथा । पञ्चकोलंकणामूलकृष्णाचव्याग्निनागरै : । पञ्चकोलं रसेपाकेकटुकंरुचिकृन्मतम् ॥ तीक्ष्णोष्णंपाचनंश्रेष्ठंदीपनंकफवातनुत् गुल्मप्लीहोदरानाहशूलघ्नंपित्तकोपनम् ॥ इतिभावप्रकाश : ॥

पञ्चकोषा : । पुं० अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेषु ॥ कोषाइवात्माच्छादकत्वात्कोषा : । पञ्चचतेकोषाश्च ॥ यथाहुर्विद्यारण्यगुरव: पितृभुक्तान्नजाद्वीर्याज्जातोऽन्नेनैववर्द्धते । देह :सोन्नमयोनात्माप्राक्चोर्द्धंतदभावत : ॥ १ ॥ पूर्णोदेहेबलंयच्छदक्षाणांय: प्रवर्तक : । वायु:प्राणमयोनासा वात्माचैतन्यवर्जनात् ॥ २ ॥ अहन्तांममतांदेहेगृहादौचकरोतिय: । कामाद्यवस्थयाभ्रा

न्तो नामाबात्मामनोमयः ॥ ३ ॥ ली नामुत्तौबपुर्बोधे व्याप्त्याद्दानवाग्रगा चिच्छायोपेतधीर्नानात्मा विज्ञान मयशब्दभाक् ॥ ४ ॥ काचिदन्तर्मुखा वृत्तिरानन्दप्रतिबिम्बभाक् ॥ पुण्यभो गेभोग शान्तौनिद्रारूपेणलीयते ॥ ५ ॥ कादाचित्कत्वतोनात्मास्यादानन्दम योप्ययम् ॥

पञ्चक्लेशाः । पुं० अविद्यास्मिता राग द्वेषाभिनिवेशेषु ॥ पंचतेक्लेशाश्च ।

पञ्चक्षारगणः । पुं० क्षारपंचके । पंचलवणे ॥ क्षारैस्तुपंचभिः प्रोक्तः पंचक्षाराभिधोगणः । काचसैन्धव सामुद्र विट्सौवर्चलकैः समैः ॥ स्यात्पंचलवणंतच्च मृत्स्नोपेतंपडा ह्वयम् ॥

पंचगणयोगः । पुं० विदारिगन्धा बृहती पृश्निपर्णीनिदिग्धिकाः ॥

पञ्चगव्यम् । न० गोदध्यादिपञ्चसु ॥ यथा । पञ्चगव्यंदधिक्षीरघृतंगोमूत्र गोमये रिति ॥ तन्मानं यथा । पल मात्रंदुग्धभागं गोमूत्रंतावदिष्यते । घृतंचपलमात्रंस्याद् गोमयंतोलक त्रयम् ॥ दधिप्रसृति मात्रंस्यात् पञ्चगव्यमिदंस्मृतम् । अथवा पञ्च गव्यानां समानोभागइष्यतइति गौतमीयतन्त्रम् ॥ अपिच । गोश कृद्द्विगुणंमूत्रं पयः स्यात्तच्चतुर्गु णम् । घृतंतद्द्विगुणंप्रोक्तं पञ्च गव्ये तथादधीति ॥

पञ्चगुप्तः । पुं० चार्वाकदर्शने ॥ कमठे ॥

पञ्चगुप्तिरसा । स्त्री० स्पृक्कायाम् ॥

पञ्चचामरम् । न० षोडशाक्षरपादे छन्दोविशेषे ॥ यथा ॥ प्रमाणिका पदद्वयम् वदन्तिपञ्चचामरम् ॥ यथा । सुरद्रुमूलमंडपे विचित्ररत्न निर्मिते लसद्वितानभूषिते सलीलविभ्रमाल सम् । सुराङ्गनात्तवल्लवी करप्रपञ्च चामरम्फुरत्समीरवीजितं सदाच्युतं भजामितमिति ॥

पञ्चचीरः । पुं० मञ्जुघोषे ॥

पञ्चचूडा । स्त्री० अप्सरोविशेषे ॥

पंचजनः । पुं० नरे । पुरुषे ॥ पंचभिर्भू तैर्जन्यते । जनी० । घञ् । जनिव ध्योश्चेतिनवृद्धिः ॥ यद्वा । पञ्चजना उत्पादकायस्य ॥ संज्ञाद्पुत्रे दैत्य विशेषे ॥ गन्धर्वाः पितरोदेवा असु राश्चांसिपञ्चजनपदवाच्यानिभ- वन्ति ॥ निषादपञ्चमावर्णाश्च ॥

पंचजनीनः । पुं० भाण्डे ॥ त्रि । पञ्च जनहिते ॥ रथकारपंचमाश्चत्वारो वर्णाः पञ्चजनाः । दिक्संख्ये संज्ञायामिति० समासः । पञ्चजने भ्योहितम् । पञ्चजनादुपसङ्ख्यान मितिख । उपसङ्ख्यानस्यकर्मधा रयविषयत्वात् । षष्ठीसमासात्तुबहु व्रीहेश्च छएव । पंचजनीयम् ॥

पंचज्ञान : । पुं ॰ बुद्धे ॥

पंचत् । पुं ॰ पञ्चके । वर्गे ॥ पंच परिमाणमस्य । पञ्चदशतौवर्गेवेति निपातनादतिप्रत्यय : ॥

पंचतत्वम् । न ॰ आकाशादि पंच भूतेषु ॥ मद्यादिपंचमु ॥

पञ्चतन्मात्रम् । न॰ तामसाहंकारोत् पन्नमहाभूतोपादानकारण शब्दस्पर्श रूपरसगन्धेषु ॥ तदाश्रय द्रव्येषुच ॥

पञ्चतपा : । त्रि ॰ अग्निचतुष्टयसूर्य्य तत्पञ्चकसाध्यतपोविशिष्टे ॥

पञ्चतय : । त्रि ॰ पञ्चावयवे ॥

पञ्चता । स्त्री ॰ मरणे । पांचभौति कस्यशरीरस्यपंचधाभावे । देहारम्भ काणांपृथिव्यादिपञ्चमहाभूतानांस्वां शसङ्क्रमणात्पृथक्त्वे ॥ पञ्चभावे ॥ पञ्चानांभाव : । तल् ॥

पञ्चतिक्तम् । न॰ तिक्तद्रव्यपंचके ॥ निम्ब : पटोल : चुद्राचगुडूचीवास कस्तथा । विसर्पकुष्ठनुत्ख्यातो गणो यंपञ्चतिक्तक : ॥

पञ्चत्वम् । न॰ पञ्चभावे ॥ पञ्चता- याम् । मरणे ॥ पञ्चधासम्भृत : कायोयदिपञ्चत्वमागत : । कर्मभि : स्वशरीरोत्थैस्तत्रकापरिदेवना ॥

पञ्चदश : । त्रि॰ पंचदशानांपूरणे । पन्द्रवां इ॰ भाषा॰ प्र॰ ॥ तस्य- पूरणेडट् ॥

पंचदश । त्रि॰ पंचाधिकदशसंख्याया म् ॥ सङ्ख्येये ॥ पंचचदशच ॥

पञ्चदशी । स्त्री ॰ अमावास्यायाम् ॥ पौर्णिमास्याम् ॥ पंचदशानांपूरणी ॥ डट् । ङीप् ॥ देवीविशेषे ॥ विद्यार ण्यकृतेवेदान्तग्रन्थविशेषे ॥

पंचधा । अ॰ पंचप्रकारे ॥ सङ्ख्याया विधार्थेधा ॥

पञ्च । त्रि॰ सङ्ख्याविशेषे ॥ पंचसङ्ख्या- विशिष्टे ॥ यथापंचमहाभूतानि ॥

पञ्चनख : । पुं॰ व्याघ्रगजकूर्मादौ ॥

पञ्चनद : । पुं॰ पंचनदीयुक्तदेशविशेषे । पञ्चाप॰इ॰भा॰वाहीके । तीर्थविशे षे ॥ न॰ । पंचानांनदीनांसमाहा- रे ॥ तीर्थान्तरे ॥

पञ्चनिम्बम् । न॰ निम्बवृक्षस्यपुष्पा- दौ ॥ यथाह । पंचनिम्बन्तुतत्पुष्पमू लवल्कफलच्छदैरिति ॥

पंचनी । स्त्री॰ शारिशृङ्खलायाम् ॥

पंचपक्षी । पुं॰ पारिभाषिकपक्षिपञ्च कद्वाराचिकालबोधकेशिवोक्तप्रश्नग्र- न्थे ॥

पंचपर्व्वा । स्त्री॰ अविद्यायाम् ॥ यथा । तमोमोहोमहामोहस्तामिस्रो ह्यन्धसंज्ञित : । अविद्यापंचपर्वैषा प्रादुर्भूतामहात्मन : ॥ पंचपर्वाण्य- स्या : । अनोवहुव्रीहेरितिनङीप् । पंचपर्व्वाणी॰पंचपर्वाण : ॥ डाप्- पक्षेतु । पंचपर्व्वे ॰ पंचपर्वा : ॰ - इत्यादिबोध्यम् ॥

पञ्चपल्लवम् । न० आम्रादिपंचपत्रके ॥ यथा । आम्रजम्बूकपित्थानांबीजपूरकबिल्वयोः । गंधकर्मणि सर्वत्रपत्राणिपञ्चपल्लवमितिशब्दचन्द्रिका ॥ वैदिकेकर्मणिघटोपरिदेयपञ्चपल्लवे ॥ यथा ॥ आम्राश्वत्थवटपर्कटीयज्ञोदुम्बराणिपञ्चपल्लवानि ॥ पनसोदुम्बरस्वत्थवकुलाम्रसमुद्भवपत्रेषु ॥ अपिच । पनसाम्रंतथाश्वत्थंवटंवकुलमेवच । पञ्चपल्लवमुक्तंचमुनिभिस्तत्त्ववेदिभिरिति ॥ पञ्चानांपल्लवानांसमाहारः ॥

पञ्चपात्रम् । न० पञ्चानांपात्राणां समाहारे ॥ श्राद्धविशेषे ॥

पञ्चपित्तम् । न० पित्तपञ्चके ॥ यथा । वराहच्छागमहिषमत्स्यमायूरपित्तकम् । पञ्चपित्तमितिख्यातंसर्वत्रवह्निकर्मसु ॥ इ० वै० म०

पञ्चपुष्पम् । न० करवीरादिषु ॥ यथा। करवीरंतथाजातीचम्पकंसरसोरुहम् । पाटलाकुसुमंचापिपञ्चपुष्पंप्रकीर्त्तितमिति ॥

पञ्चप्रासादः । पुं० देवगृहविशेषे ॥

पंचबन्धः । पुं नष्टद्रव्यस्यपञ्चमांशदंडे॥

पञ्चभद्रः। पुं० पञ्चस्थानेषुपुष्पितेऽश्वविशेषे ॥ यथा । पञ्चभद्रस्तुहृत्पृष्ठमुखपार्श्वेषुपुष्पितः ॥ पाचन वि० ॥ यथा । छिन्नोद्भवापर्पटवारिवाहभूनिम्बशुण्ठीजनितः कषायः समीरपित्तज्वरजज्जराणांकरोतिभद्रंखलुपञ्चभद्रः ॥ चि० । बिस्तृते व्यसनिनि ॥

पञ्चभूतम् । पुं० चित्यप्तेजोमरुद्व्योमात्मकेषुपंचसु ॥ पंचानांभूतानां समाहारः ॥ शब्दाद्व्योमस्पर्शतस्तेनवायुस्ताभ्यांरूपाद्वह्निरेतैरसाच्च अम्भांस्येतैर्गन्धतोभूर्धरायाभूताः पंचस्युर्गुणोनाःक्रमेणेति प्रपंचसारे १ पटलः ॥ गुरुः स्निग्धस्तीक्ष्णरूक्षौ लघुरेतेगुणाः स्मृताः । पंचभूतेषु तिष्ठन्तिआधिक्याद्पलक्षयेत् पृथिव्यादिगुणाधिक्याद्द्रव्येप्रकल्पयेत् ॥*

पंचमः । पुं० षड्रागाणांमध्येतृतीयरागे ॥ अस्यगानसमयः शरदृतुः प्रातःकालश्च ॥ तन्त्रीकण्ठोत्थितेस्वरविशेषे ॥ अस्योत्पत्तिस्तु । वायुः समुद्गतोनाभेरुरोहृत्कण्ठमूर्द्धसु । विचरन् पंचमस्थानप्राप्त्यापंचमउच्यते ॥ तज्जन्यत्वात्स्वरः पंचमः । अपिच । प्राणोऽपानःसमानश्चउदानोव्यानएवच । एतेषांसमवायेनजायतेपंचमः स्वरः । पुष्पसाधारणेकाले कोकिलो रौतिपंचमम् ॥ पंचमादिनिषेधेभरतः । प्रभातेमुरतोनिन्द्यः ऋषभः पञ्चमोपिच । जनयेत्प्रधनं चुञ्चा पंचत्वंपंचमोपिच ॥ पंचमस्यविशेषोयंकथितःपूर्वसूरिभिः । प्रगेप्रगीतो जनयेद्दशनस्यविपर्ययम् ॥ इति ॥

न० मैथुने ॥ त्रि० । पंचानांपूरणे ॥ रुचिरे ॥ दक्षे ॥ पंचानांपूरणः । त स्यपूरणेडट् ॥ नान्तादितिमट् ॥

पंचमवेदः । पुं० भारते ॥

पञ्चमहायज्ञाः । पुं० गृहस्थकर्त्तव्ये षुपंचविधनित्यकर्मसु ॥ यथा । पाठोहोमश्चातिथीनांमपर्यातर्प्पणंबलि : । एतेपंचमहायज्ञाब्रह्मयज्ञादिनामकाः । तथाचमनुः पंचसूना गृहस्थस्यचुल्लीपेषण्युपस्करः । कण्डनीचोदकुम्भश्चबध्यतेयास्तुवाहयन् ॥ तासांक्रमेणसर्वासां निष्कृत्यर्थंमहात्मभिः । पंचकॢप्तामहायज्ञाः प्रत्यहंगृहमेधिनाम् ॥ अध्यापनंब्रह्मयज्ञः पितृयज्ञस्तुतर्पणम् । होमोदैवोबलिर्भौतो नृयज्ञोतिथिपूजनम् इति ॥ बध्यतेहन्तीत्यर्थः आर्षत्वात् । अथवाबध्यतेहिंसाजनितदुरितेनसम्बध्यतेहन्यतेवेत्यर्थः । वाहयन् प्रवर्त्तयन् ॥

पञ्चमारः । पुं० बलदेवस्यपुत्रे ॥

पञ्चमास्यः । पुं० कोकिले ॥ पञ्चमोरागः स्वरोवाआस्येयस्य ॥ *

पञ्चमी । त्रि० पञ्चमासादिकेत्वष्टादौ ॥ पञ्चमोमासोवर्षोवास्य । वयसिपूरणादितीनिः ॥

पञ्चमी । स्त्री० द्रौपद्याम् ॥ तिथिवि० । साचन्द्रस्यपञ्चमकलाक्रियारूपा । तदुपलक्षितकालश्च । अस्यांजातस्यफलम् । यथा । भूपालमान्योमनुजः सुगात्रः कृपासमेतोविदुषांवरिष्ठः । वाग्मीगुणीबन्धुजनैकमान्यः प्रसूतिकालेयदिपञ्चमीस्यात् ॥ ङसि० भ्याम्० भ्यस्० इ० विभक्तौ ॥ पञ्चानांपूरणी ॥ डट् । मट् । ङीप ॥ विद्याविशेषे ॥ रागिणीविशेषे । वसन्तरागभार्यायाम् ॥ अस्याध्यानं यथा । सङ्गीतगोष्ठीषुगरिष्ठभावंसमाश्रिता गायनसम्प्रदायैः । स्वर्वाङ्गिनीनूपुरपादपद्मासापंचमीपंचमवेदवेत्तीतिसङ्गीतदर्प्पणः ॥

पंचमुखः । पुं० शिवे ॥ पञ्चमुखानियस्य ॥ सिंहे । मृगेन्द्रे ॥ पञ्चते । पचि० । अच् । पञ्चंविस्तृतं मुखमस्य । यद्वा । मुखंपादाश्च० पञ्चमुखानीवयस्य ॥

पंचमुखी । स्त्री० सिंहभार्यायाम् ॥ वासके ॥ जवापुष्पविशेषे ॥ शिवायाम् इति शब्दाम्बुधिः ॥

पञ्चमीव्रतम् । न० माघशुक्लपञ्चमीमारभ्यषड्वर्षपर्यन्तं प्रतिमासीय शुक्लपञ्चम्यांभविष्यपुराणोक्तस्त्रीकर्त्तव्येनियमविशेषे ॥

पञ्चमुद्रा । स्त्री० सन्न्यासिनांचिदण्डकमण्डलुशिक्यपात्र जलपवित्ररूपेलिङ्गे ॥ पूजायामावाहन्यादिषु ॥

पञ्चमूत्रम् । न० गोजाविमहिषीगर्दभीनांमूत्रे ॥ पञ्चानांमूत्राणां

समाहारः ॥

पञ्चमूर्त्तिः । पुं० सदाशिवे ॥ सृष्टिस्थितिसंहारनिरोधानुग्रह लक्षणपञ्चकृत्यसिद्ध्यर्थ मीशानतत्पुरुषाघोरवामदेवसद्योजातलक्षणाः पञ्चमूर्त्तयोयस्य ॥

पञ्चमूलम् । न० स्वनाम्नाप्रसिद्धेपाचनविशेषे ॥ तच्चिविधम्यथा । श्रीफलः सर्वतोभद्रापाटलागणिकारिका । स्योनाकः पञ्चभिश्चैतैः पञ्चमूलंमहन्मतम् ॥ पंचमूलंमहत् तिक्तकषायंकफवातनुत् । मधुरंकासश्वासघ्नमुष्णंलघ्वग्निदीपनम् ॥ * लघुपञ्चमूलन्तु । शालपर्णीपृश्निपर्णीवार्ताकीकण्टकारिका । गोक्षुरः पञ्चभिश्चैतैः कनिष्ठंपञ्चमूलकम् ॥ पञ्चमूलंलघुस्वादुवल्यंपित्तानिलापहम् । नात्युष्णंबृंहणंग्राहिज्वरश्वासाश्मरीप्रणुत् ॥ * तृतीयंतृणाख्यंतत्तु । कुशः काशः शरोदर्भइक्षुश्चेतितृणोद्भवम् । पित्तकृच्छ्रहरंपञ्चमूलंवस्तिविशोधनमिति ॥

पञ्चमूली । स्त्री० लघुपंचमूलपाचने ॥ पञ्चानांमूलानां समाहारः । द्विगोरितिङीप् ॥

पञ्चरक्षकः । पुं० पत्रपौडवृक्षे ॥

पञ्चरत्नम् । न० कनकादिरत्नपञ्चके ॥ यथा । कनकंहीरकंनीलं पद्मरागश्च मौक्तिकम् । पंचरत्नमिदंप्रोक्तमृषिभिः पूर्वदर्शिभिः ॥ रत्नानामप्यभावेतुस्वर्णंकर्षार्द्धमेववा । सुवर्णस्याप्यभावेतुआज्यंज्ञेयंविचक्षणैरितिहेमाद्रिः ॥ पञ्चानांरत्नानांसमाहारः ॥

पञ्चरसा । स्त्री० आमलक्याम् ॥

पंचरात्रम् । न० ग्रन्थविशेषे ॥ यथा । रात्रञ्चज्ञानवचनंज्ञानंपंचविधंस्मृतम् । तेनेदंपञ्चरात्रंचप्रवदन्तिमनीषिणः ॥ तत्सप्तविधंयथा । पञ्चरात्रंसप्तविधंज्ञानिनांज्ञानदंपरम् । ब्राह्मंशैवंचकौमारंवाशिष्ठंकापिलंपरम् ॥ गौतमीयंनारदीय मिदंसप्तविधंस्मृतम् । इतिनारदपञ्चरात्रेप्रथमरात्रम् ॥ एतदतिरिक्तानिहयशीर्षपृथुध्रुवादिपञ्चरात्राणिसन्ति ॥ पञ्चमुनिशास्तु ॥

पञ्चलक्षणम् । न० पुराणे ॥ यथा । सर्गश्चप्रतिसर्गश्च वंशोमन्वन्तराणि च । वंशानुचरितंचैव पुराणंपञ्चलक्षणमिति ॥ पुं० । पुरुषविशेषे ॥

पञ्चलवणम् । न० सैंधवादिपञ्चसु ॥ यथा । सैंधवंरुचकंचैवविडंसामुद्रकंगुडमिति ॥ पञ्चानांलवणानां समाहारः ॥

पञ्चलाङ्गलकम् । न० महादान विशेषे ॥

पञ्चलोहम् । न० सौराष्ट्रकलोहेइति हेमचंद्रः ॥ स्वर्णरूप्यताम्रसीसकरङ्गेषु ॥

पञ्चलोहकम् । न० स्वर्ण रजत ताम्र

वङ्गनागेषु ॥

पञ्चवक्त्रः । पुं० शिवे ॥ पञ्चवक्त्राणियस्यसः । तानियथा । विभाव्यमुखपञ्चकंहि शिवस्यवरवर्णिनि । सद्योजातंवामदेवमघोरंचततः परम् ॥ तत्पुरुषंतथेशानंपञ्चवक्त्रंप्रकीर्तितम् ॥ सद्योजातंचवैशुक्लं शुद्धस्फटिकसन्निभम् । पीतवर्णंतथासौम्यंवामदेवंमनोहरम् ॥ कृष्णावर्णमघोरंच समंभीमविमर्दनम् । रक्तंतत्पुरुषंदेविदिव्यमूर्तिमनोहरम् ॥ श्यामलंचतथेशानं सर्वदेवशिवात्मकम् । चिंतयेत्पश्चिमेचाद्यंद्वितीयंचतथोत्तरे ॥ अघोरंदक्षिणेदेवंपूर्वेतत्पुरुषंतथा । ईशानंमध्यतोज्ञेयंचिन्तयेत्भक्तितत्परइति निर्वाणतन्त्रे षष्ठःपटलः ॥ सिंहे ॥

पञ्चवटः । पुं० उरस्कटे । जोटिङ्गे । बालयज्ञोपवीतके । तीर्थविशेषे ॥

पञ्चवटी । स्त्री० दण्डकारण्यान्तर्भूतस्थलविशेषे ॥ पञ्चानांवटानां समाहारः । द्विगोरितिङीप् । तदुपलक्षितत्वात् । पञ्चवटीत्यभिविश्रुतः प्रसिद्धोदेशउच्यते ॥ तपःकरणार्थंपञ्चप्रकारवृक्षविशेषे ॥ यथा । अश्वत्थोबिल्ववृक्षश्चवटोधात्रीह्यशोकः । वटीपञ्चकमित्युक्तंस्थापयेत्पञ्चदिक्षुच ॥ अश्वत्थंस्थापयेत्प्राचि बिल्वमुत्तरभागतः । वटंपश्चिमभागेतुधात्रींदक्षिणतस्तथा ॥ अशोकंवह्निदिक्स्थाप्यंतपस्यार्थंसुरेश्वरि । मध्येवेदीं चतुर्हस्तां सुन्दरीं सुमनोहराम् ॥ प्रतिष्ठां कारयेत्तस्याः पञ्चवर्षोत्तरंशिवे । अनन्तफलधात्री सा तपस्याफलदायिनी ॥ इयंपञ्चवटीप्रोक्ताबृहत्पञ्चवटींशृणु । विल्ववृक्षंमध्यभागेचतुर्दिक्षुचतुष्टयम् । वटवृक्षंचतुष्कोणे वेदसंख्यंप्ररोपयेत् । अशोकंवर्तुलाकारंपचविंशतिसम्मितम् ॥ दिग्विदिक्ष्वामलकींच एकैकंपरमेश्वरि । अश्वत्थंचचतुर्दिक्षु बृहत्पञ्चवटीभवेत् ॥ यः करोति महेशानि साक्षादिन्द्रसमोभवेत् । इहलोके मन्त्रसिद्धिः परेचपरमा गतिः ॥ इति हेमाद्रीयव्रतखण्डधृतस्कन्दपुराण वचनानि ॥

पञ्चवर्गः । पुं० कापटिकोदास्थितगृहपतिवैदेहिकतापसव्यञ्जनात्मके राज्ञांपञ्चविधेचारवर्गे ॥ यथा । तत्र परमर्मज्ञः प्रगल्भश्छात्रः कपटव्यवहारित्वात्कापटिकः । तंवृत्त्यर्थिनमर्थमानाभ्यामुपगृह्यरहसिराजा ब्रूयात्यस्यदुर्वृत्तं पश्यसितत्तदानीमेवमयिवक्तव्यमिति ॥ १ ॥ प्रव्रज्यारूढ़पतित उदास्थितः । तं लोकेषु विदित दोषंप्रज्ञाशौच युक्तं वृत्त्यर्थिनं ज्ञात्वारहसिराजापूर्ववद्

ब्रूयात् । वह्नत्पत्तिकमठे स्थापयेत्० प्रचुर सस्योत्पत्तिकं भूम्यन्तरंच तद्वृत्त्यर्थमुपकल्पयेत् सचान्येषामपिप्रव्रजितानां राज चारकर्म कारिणां ग्रासाच्छादनादिकंदद्यात् ॥ २ ॥ कर्षक : चीणवृत्तिः प्रज्ञाशौचयुक्तोगृहपतिव्यञ्जनः ॥ तमपि पूर्ववदुक्त्वास्वभूमौकृषिकर्मकारयेत् ॥ ३ ॥ वाणिजक : चीणवृत्तिर्वैदेहिकव्यञ्जनः । तंपूर्ववदुक्त्वाधनमानाभ्या मात्मीकृत्य वाणिज्यङ्कारयेत् ॥ ४ ॥ मुण्डोजटिलोवावृत्तिकामस्तापसव्यञ्जन : । सोपिकश्चिदाश्रमेव मन् वहुमुण्डजटिलान्तर कपटशिष्यगणवृत्तोगुप्तराजोपकल्पितवृत्तिस्तापस्यंकुर्यात् । मासद्विमासान्तरितं प्रकाशं वदरादि मुष्टिमश्नीयात् । रहसिचराजोपकल्पितं यथेष्टमाहारंकल्पयेत् । शिष्यास्तास्यातीतानागतज्ञानादिकं ख्यापयेयु : तेनवहुलोकवेष्टनमासाद्य सर्वेषां विश्वसनीयत्वात् सर्वेकार्ये मकार्येच पृच्छन्ति अन्यस्यचकुक्रियादिकं कथयन्ति ॥ ५ ॥ एवंपञ्चवर्गं प्रकल्पनेन राज्ञ : प्रतिराजस्य आत्मीयानां चामात्यादीना मनुरागविरागज्ञानं भवति ॥ पञ्चानां वर्ग : ॥

पञ्चवल्कलम् । न० त्वक्पञ्चके ॥ यथा । न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः । सर्वैरेकत्रसंयुक्तैः पंचवल्कलमुच्यते ॥ अपिच । न्यग्रोधोदुम्बराश्वत्थ प्लक्षपिप्पल पीतना : । क्षीरिवृक्षाश्च पञ्चैषां वल्कलं पञ्चवल्कलम् ॥ पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक्पञ्च लक्षणम् । त्वक्पञ्च कंकिमं ग्राहिव्रण शोथ विसर्पजिदितिराजनिर्घण्टः ॥

पंचवाणः पुं० कामदेवे । स्मरे ॥ पंच वाणा : द्रावणाद्याअस्य । तेच । द्रवणं शोषणं वाणं तापनं मोहनाऽभिधम् । उन्मादनंचकामस्यवाणा : पंचप्रकीर्त्तिता : ॥ अपिच अरविन्दम शोकंच चूतंचनवमल्लिका । नीलोत्पलंचपञ्चैते पंचवाणस्यसायका : ॥ पंचानां वाणानां समाहारे ॥ त्रि० । पंचवाण विशिष्टे ॥

पंचवायव : । पुं० प्राणापानव्यानोदान समानाख्येषु ॥ पंचचते वायवश्च ॥

पंचविधकृतत्यम् । न० जगज्जन्मस्थितिध्वंसतिरोभावविमुक्तिषु ॥

पंचविपर्य्ययभेदा : । पुं ० अविद्यास्मिता रागद्वेषाभिनिवेशेषु यथासङ्ख्यंतमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञकेषु ॥ विपर्य्यय प्रभावानामप्यस्मिता दीनां विपर्य्यय स्वभावत्वात् ॥ यद्वा । यदविद्ययाविपर्य्ययेण अवधार्यते वस्तु अस्मिता इय

सत्त्वभावा : सम्यस्तदभि निविशं ति । अतएव पंच पर्वा अविद्येत्याह वार्षगण्य : ॥ *

पंचशर : । पुं० कामे । मकरध्वजे ॥ पंचशरा अस्य । तेच उन्मादनस्तापनश्च शोषणस्तम्भनस्तथा । सम्मोहनश्च कामस्य पंचबाणा: प्रकीर्त्तिता : ॥ पञ्चेन्द्रियार्था:शरा : अस्येत्यन्ये ॥

पंचशलाका । स्त्री० विवाहोपयोगिविधविशेषे ॥

पञ्चशस्यम् । न० धान्य मुद्गतिल यव श्वेतसर्षपरूपे शस्यपञ्चके ॥ सर्षपस्थाने माषोपीतिदुर्गोत्सव पद्धति : ॥

पञ्चशाख: । पुं० शये । पाणौ । हस्ते ॥ पञ्च शाखा इव अङ्गुलयोऽस्य ॥ न० पञ्च शाखानां समाहारे ॥ त्रि० । पञ्च शाखा विशिष्टे ॥

पंचशिख : । पुं० सिंहे ॥ धर्मस्य हिंसाभार्यायां जातेमुनिविशेषे ॥ यथोक्तं वामन पुराणे ५ . अध्याये । धर्मस्यभार्याहिंसाख्या तस्यां पुत्र चतुष्टयम् । सम्प्राप्तं मुनि शार्दूल योगशास्त्रविचारकम् ॥ ज्येष्ठ : सनत्कुमारोभूद्द्वितीयश्च सनातन: । तृतीय : सनकोनाम चतुर्थश्च सनन्दन : ॥ साङ्ख्य वेत्तारमपरं कपिलम्बोढु मासुरिम् । दृष्ट्वा पञ्च शिखं श्रेष्ठं योगनिष्ठं तपोनिधिम् । ज्ञानयोगंनते दद्युर्भार्यांसो पिकनीयसामिति ॥

पंचशरण : । पुं पंचप्रकारशरणे ॥ यथा । अत्यम्लपर्णीकाण्डीर माला कन्द द्विशरणे: । क्रमोभवतियोगोयं पञ्चशरणसंज्ञक : । इतिराजनिर्घंट: शरण: श्वेतशरणश्चेति शरणद्वयम् ।

पञ्चशैरीषकम् । न० शिरीषस्यत्वगादि पंचसु ॥ त्वक्पत्रफलमूलानिकुसुमश्चैवपंचमम् ॥

पंचषा : । त्रि० पंचवाषड्वापरिमाणयेषां तेषु ॥ बहुवचनान्तोयम् ॥

पंचसिद्धौषधय : । पुं० पंचप्रकारौषधिविशेषे ॥ यथा । तैलकन्द सुधाकन्द क्रोडकन्द रुदन्तिका: । सर्पनेत्रयुता : पंच सिद्धौषधिकसंज्ञका:॥

पञ्चसुगन्धकम् । न० पंचप्रकार सुगन्धद्रव्ये ॥ यथा । कर्पूरकक्कोल लवङ्गपुष्प गुवाकजाती फलपंचकेन । समांशभागेनचयोजितेनमनोहरं पंचसुगन्धकंस्यात् ॥

पंचसूना । स्त्री० पंचप्रकारप्राणिवधस्थाने ॥ यथा । पंचसूनागृहस्थस्य चुल्लीपेषण्युपस्कर : । कण्डनीचोदकुम्भश्च बध्यते यास्तुवाहयन् ॥

पंचसूरणम् । न० पंचशूरणे ॥

पंचस्कन्धी । पुं० रूपविज्ञानादिस्कन्धानांसमुदाये ॥

पंचस्रोत : । पुं० शैवशास्त्रे ॥

पंचखरा । स्त्री० ज्योतिर्ग्रन्थविशेषे ॥

पंचखरोदय : । पुं० ज्योतिः शास्त्र विशेषे ॥

पंचाग्नि : । पुं० अग्निहोत्रिणि ॥ गार्हपत्यदक्षिणाग्न्याहवनीयसभ्यावसथ्याख्याः पंचाग्नयोयस्यतथोक्तोगृहे ॥ पवन : पावनस्त्रेतायस्यपंचाग्नयो गृहे । सायंप्रात : प्रदीप्यन्ते सविप्रः पङ्क्तिपावन : ॥ द्युपर्जन्यपृथिवीपुरुषयोषित्सुअग्निदृष्टिंय : कुरुते ० सोऽग्निहोत्रादिकारीवापंचाग्नि : ॥

पंचाङ्ग : । पुं० पुष्पिताश्वे । पंच-भेदे ॥ कूर्मे ॥ प्रणामविशेषे ॥ यथा । बाहुभ्यांचैवजानुभ्यां शिरसावचसा दृशा । पंचाङ्गोयंप्रणाम : स्यात् पूजायांप्रवरोह्यसौ ॥ राज्ञांनये ॥ यथा । सहाया : साधनोपायाविभागोदेशकालयो : । विनिपातप्रतीकार : सिद्धि : पंचाङ्गइष्यतेइति ॥ न० । वृक्षस्यत्वगादिषु ॥ यथा ॥ त्वक्पत्रंकुसुमंमूलं फलमेकस्यशाखिन : । एकत्रमिलितश्चैतत्पंचाङ्गमितिमंज्ञितम् ॥ अधिकरणे ॥ यथा ॥ विषयोविषयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेतिपंचाङ्गंशास्त्रे धिकरणंस्मृतमिति ॥ देवाराधना थैंस्तोत्रादिषु ॥ यथा ॥ स्तोत्रंच कवचं चैवपद्धति : पटलंतथा । नाम्नांसहस्रमित्येतत्पंचाङ्गं तन्त्रवेदिन इति ॥ तिथिवाराद्यात्मकेपत्रे । यथा । तिथिर्वारंचनक्षत्रंयोग : करणमेवच । पंचांगस्यफलंश्रुत्वांगङ्गास्नानफलंलभेदिति ॥ अपिच । वाराहरतिदु : स्वप्नंनक्षत्रंपापनाशनम् । तिथिर्भवतिगङ्गायायोग : सागरसङ्गम : ॥ करणंसर्वतीर्थानिश्रूयतेयत्पंचिकेति ॥

पञ्चाङ्गगुप्त : । पुं० कमठे । कच्छपे ॥

पञ्चाङ्गप्रणाम : । पुं० भक्तिश्रद्धातिशययुक्तेगुर्वादिप्रणतिविशेषे ॥ यथा । जानुभ्यांचसपाणिभ्या मुरसाशिरसागिरा । पंचाङ्गताप्रणामस्यपूजायांप्रवरामतेति ॥

पंचाङ्गुल : । पुं० मण्डे । एरण्डे ॥ शुक्लैरंडे ॥ त्रि । पंचाङ्गुलिमिते ॥ पंचाङ्गुलयोस्य । तत्पुरुषस्याङ्गुलेरित्यच् ॥ अङ्गुलिसदृशावयवेधान्यादिविक्षेपकेकाष्ठे ॥ पचाङ्गुलयोयस्य । अङ्गुलेर्दारुणीतिषच्समासान्त : ॥

पंचाङ्गुली । स्त्री० तन्त्राह्वातुपे ॥ इ० राजनि० ॥

पंचातपा । स्त्री० तपस्या विशेषे ॥ यथा । चर्या पंचा तपाचिन्त्याशाम्भवी शाम्भवो जप : । यस्त्रियै दारुभि : शुष्कै श्चतुर्दिक्षुचतुष्कृतम् ॥ वह्नि संस्थापनं ग्रीष्मे तीव्रांशुस्त च पचम : । हस्तान्तरे चतुर्वह्नीन् कृत्वावैश्वानरेष्टिना ॥ तन्मध्यस्था सूर्यविम्बं वीक्षती वहुलांशुके

तिकालिका पुराणम् ॥

पञ्चात्मक : । त्रि० पाञ्चभौतिके ॥

पञ्चानन : । पुं० शिवे । पञ्च आननान्यस्य ॥ सिंहे ॥ पञ्चविस्तृत माननं यस्य सः ॥ यद्वा । मुखं पादाश्च पञ्च आननानीव यस्य सः ॥ अत्युग्रे ॥

पंचाप्सर : । न० दण्डकारण्यस्थे तटाक विशेषे ॥ पंचाप्सरसोनिवसन्त्यत्र ॥

पञ्चामरा । स्त्री० पञ्चप्रकारामरलतासु ॥ यथा । एकातु अमरा दूर्वा तस्याग्रन्थिं समानयेत् । अन्यातु विजया देवी सिद्धिरूपा सरस्वती । अन्यातु विल्वपत्रस्था शिवसन्तोषकारिणी । अन्यातु योगसिद्ध्यर्थे निर्गुण्डीचामरालता ॥ अन्यातु काल तुलसी श्री विष्णोः प्रियतोषणी । एताः पञ्चा मरा ज्ञेया : योगसाधनकर्मणीति रुद्रयामलोत्तर खण्डे ३६ पटलः ॥

पञ्चामृतम् । न० दुग्धादि. पञ्चसु । यथा । दुग्धं सशर्करंचैव घृतं दधि तथामधु । पञ्चामृत मिदं प्रोक्तं विधेयं सर्व कर्मसु ॥ पञ्चानाममृतानां समाहारः ॥

पञ्चामृतयोग: । पुं० गुडूच्यादि पञ्चानांयोगे ॥ यथा । गुडूची गोक्षुरश्चैव मुसलीमुण्डिकातथा । शतावरीति पञ्चानां योगः पञ्चामृताभिध इ०

राज० नि० ॥

पञ्चाम्नाय : । पुं० शिव पञ्चमुख निर्गत पञ्चप्रकार शैवशास्त्र विशेषे ॥ ॥ यथा ॥ पूर्वाम्नाय : पूर्वमुख : पश्चिम : पश्चिमा मुख : । दक्षिणोदक्षिणस्तद्व दुत्तरश्चोत्तर : परः । निरुत्तरंतथाचोर्द्ध सिद्धान्तागमरूपिणम् । ऊर्द्धाम्नायपरिज्ञानं नाल्पस्यतपस : फलम् ॥ पूर्वाम्नाय : शब्दरूपो दक्षिण : कर्णरूपक : । पश्चिम : प्रश्नरूप : स्यादुत्तरश्चोत्तरस्तथा ॥ ऊर्द्धाम्नायस्तत्त्वबोध : केवलमनुभवात्मक : इति भैरव तन्त्रादि ॥

पंचाम्रवापी । त्रि० पंचानामाम्रसहितानां वृक्षविशेषाणांसमारोपके ॥ यथा । अश्वत्थमेकंपिचुमर्दमेकं न्यग्रोधमेकं दशपुष्पजाती : । द्वे द्वे तथादाडिममातुलुङ्गे पचाम्रवापी नरकंनयाती तिवाराहपु० ॥

पंचाम्लम् । न० अम्लवेतसादिपञ्चसु ॥ यथा । अम्लवेतसवृचाम्ल वृहज्जम्बीरनिम्बुकै : । चतुरम्लंहि पंचाम्लं बीजपूरयुतं भवेत् ॥

पंचारी । स्त्री ० शारिशृङ्खलायाम् ॥ इतिशब्दरत्नमाला ॥

पंचार्चि: । पुं० बुधग्रहे ॥ इ ० त्रि० ॥

पंचाल : । पुं० वर्णवृत्तप्रभेदे ॥ यथा । कर्णेनदंडेन पंचालमाख्याहि ॥ यथा । शर्माणिसर्वाणि । देयानि

रुद्राणि ॥ प्रभूम्नि । पंचाला : । नीवृद्विशेषे । कान्यकुब्जाद्दिक्चवाभि धदेशेषु ॥ पंचते । पचिविस्तारे । तमि विशि बिडीत्यादिना कालन ॥ पंचाला : चत्रिया : तेषांनिवासो जनपद : पंचाला : । निवासे ऽ णोजनपदे लुप् । लुपियुक्तवद्व्यक्ति वचने ॥ पुराणोक्ता व्युत्पत्तिस्तुहर्य श्वान्मुद्गल सृञ्जय वृहदिषु यवीनर काम्पिल्लसंज्ञा: पंचानामेतेषां विष याणां रक्षणायालमेतेमत्पुत्रा इति पुत्रा ऽ भिहिता इति पंचाला : । इ० वि० पु० ४ अंशे १६ अध्याय: ॥ कुरुक्षेत्रात् पश्चिमेतु तथाचोत्तर भागत : । इन्द्रप्रस्थान्महेशानि दश योजनकद्वये ॥ पञ्चालदेशो देवेशि सौन्दर्यगर्वभूषित इति तन्त्रशास्त्रम्॥

पञ्चालिका । स्त्री ० वस्त्रादिकृत पुत्रिकायाम्॥ गीतिविशेषे॥ पञ्च भिर्वर्णैरल्यते। अलभूषणादौ । घञ् । स्वार्थेकन् । टाप् । प्रत्ययस्था दितीत्त्वम् ॥ संज्ञायामितिएवुक्त्वा ॥ संज्ञापूर्वकत्वान्नवृद्धि : ॥

पंचाली । स्त्री ० पंचालिकार्थे ॥ शारि शृङ्खलायाम् ॥

पंचावटम् । न० उरस्कटे । वालोपवीते ॥

पंचावयव : । पुं ० अनुमाने ॥ पंच अवयवाअस्य । तेचयथा । प्रति ज्ञाहेतूदाहरणोपनयनिगमनानि पं चावयवा : । यथा । पर्वतोवह्निमा निति प्रतिज्ञा । धूमवत्वादितिहेतु: योयोधूमवान् सर्वोग्निमान् यथाम हानसम् इत्युदाहरणम् .तथाचाय मित्युपनय : तस्मात्तथेति निगमन म् ॥

पञ्चावस्थ : । त्रि० मृते । शवे ॥

पंचावस्था : । स्त्री० भूम्नि । कौमारं पंचमाब्दंस्यात्पौगण्डंदशमावधि । कैशोरमापंचदशाद्यौवनंचततः परम् । वार्द्धकंचतत:प्रोक्तं पंचाव स्था : प्रकीर्त्तिता : ॥ त्रि ० । पंचावस्थायुक्ते ॥

पंचाशत् । त्रि० सङ्ख्याविशेषे ॥ पंच दशत : परिमाणऽमस्य । पङ्क्तिविं शति त्रिंशदित्यादिना निपातनात् प्रकृतेपंचाभाव : शत्प्रत्यय : ॥ सङ्ख्येये ॥

पंचास्य : । पुं० सिंहे ॥ पंचते । पचि अच् । पंचंविस्तृतमास्यमस्य यद्वा । मुखं पादाश्च पञ्चास्यानीवयस्यस: ॥ शिवे ॥ पञ्चआस्यान्यस्य ॥

पञ्चिका । स्त्री० द्यूतविशेषे ॥ सतुपंच भिरक्षै : पंचभि : कपर्दै : पंचभि शलाकाभिर्वाभवति । तत्रयदा सर्वे उत्ताना : पतन्ति अवाची वा तदा पातयिता न्यं जयति । तस्यै वान्यथापाते सतिपातयिताऽन्येन जीयते ॥

पंचकरणम् । न ० आकाशादिसूक्ष्मभूतानां परस्परंव्यवहर्तृ प्राणिनिकाय व्यवहार निर्वाहकतदीय धर्माधर्मापेचपरमेश्वर सान्निध्यादि निमित्तापेचया विभागेन मिलितानां स्थूलतापत्ती॥ तत्प्रकारस्तु । आकाशादिषु पञ्चसु एकैकं द्विधासमंविभज्य तेषु दशभागेषु प्राथमिकान् पञ्च भागान् प्रत्येकं चतुर्द्धासमंविभज्यतेषां चतुर्णां भागानां स्वस्वद्वितीयार्द्ध भाग परित्यागेन भागान्तरेषुयोजन मिति।तदुक्तम् । द्विधाविधायचैकैकं चतुर्द्धाप्रथमं पुन:। स्वस्वेतरद्वितीयांशैर्योजनात् पञ्चपञ्चतेति ॥ स्वार्द्धेषु स्वेतरार्द्धानां पादशो योजनन्तुतदितिच ॥ अपिच । द्विधाकृतस्यभूम्यादे रर्द्धमेकंचतुष्कृतम् । स्वान्यद्वितीयकार्द्धेषु संयुक्तंपञ्चताकरम् ॥ एवमर्द्धद्विभूताना मितराष्टमभामजम् । स्वांशाधिक्येनभूम्यादि व्यपदेशोचसंस्फुट इति ॥

पञ्चेन्द्रियम् । न० श्रोत्रादिषु । श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं पञ्चेन्द्रियंमतम् । पञ्चानामिन्द्रियाणांवैशुभेश्रवणादर्शने । श्रवणाद्वस्तुविज्ञानं दर्शनाच्चित्तरञ्जन मिति भागवतम् ॥ वागादिषु ॥ वाक् पाणि पाद पायू पस्थाख्यं कर्मेन्द्रियं मतमित्युक्ते : ॥

पञ्चेषु : । पुं० मदने ॥ पञ्चइषवोऽस्य ॥

पञ्चोपविषम् । न० उपविषाणां पंचके ॥ यथा । स्नुह्यर्कं करवीराणि लाङ्गली विषमुष्टिका । एतान्युपविषाण्याहु: पंचपांडित्य शालिन इ० रा० नि० ॥

पञ्चोषणम् । न० पञ्चकोले ॥

पञ्चोष्माण: । पुं ० भूम्नि आहार पाचक शरीरस्थ पञ्चाग्निषु ॥ यथा ॥ भौमा ऽऽप्याग्नेय वायव्या : पञ्चोष्माण: सनाभसा: । पञ्चाहार गुणान् स्वान् स्वान् पार्थिवादीन् पचन्त्यनु ॥पार्थिवा : पार्थिवानेव शेषा : शेषांशदेहगान् ॥ इति सारकौमुदी ॥

पञ्जर: । पुं० शरीरे ॥ देहास्थि समूहे । कङ्काले॥ कलियुगे ॥ गवां नीराजनाविधौ चेति सारस्वताभिधान मिति राधाकान्त:।न० ।कायास्थिवृन्दे । शरीरास्थिपञ्जरं ॥ शालारे ।पच्याादिबन्धगृहे। पिंजरा० इ० भा० ॥

पिंजरखेट : । पुं ० पीलो ० इ० गौ० भाषा प्रसिद्धे पलवे । मत्स्यमारणोपाये ॥

पञ्झल : । पुं० कोलकंदे ॥

पञ्जि : । स्त्री० सूत्रनालिकायाम् । पांइज० इ० गौ० भा० ॥ पञ्जि

कायाम् ॥

पञ्जिका । स्त्री० तूलनालिकायाम् । पांइज० गौ० भा० ॥ टीकाविशेषे ॥ यथा । टीकानिरन्तर व्याख्या पञ्जिकापद भञ्जिकेति हेमचन्द्रः ॥ अयसम्वान्याम् ॥ पञ्चाङ्गे । पत्रा इ० भा० । तिथिवारादि बोधके पत्रे ॥ आयव्यय लेखनार्थपत्रे । वही० खाता इ० भा० ॥ सकल पदव्याख्यायाम् ॥ पिञ्ज्यतेऽर्थोऽस्याम् । पिजिर्भाषार्थः । गुरोश्च हल इत्यः । पृ० । इकारस्याकारः । स्वार्थिकः ॥ पिञ्जयतिवा । क्वुन् ॥

पञ्जिकारकः । पुं० कायस्थजातौ ॥ त्रि० । टीकाकारके ॥

पञ्जी । स्त्री० तिथ्यादिज्ञापके पत्र विशेषे । तिथिपत्र० इ०प्र० । पञ्जिकायाम् ॥ यथा । यः गृहदैवज्ञ मुखेन पञ्जीं शृणोति राजा नरकं प्रयाति । दैवज्ञ वर्क्त्रा ग शृणोति पञ्जींशत्रुः क्षयंयाति शशीव कृष्णे ॥ग्रन्थवि० ॥ टीकायाम् ॥

पञ्चीकरः । पुं कायस्थे । पञ्जिकाकृति ॥

पटः । पुं० चायालद्रुमे ॥ पुरस्कृते ॥ न० । चाले । पटले । छदिषि ॥ पुं० सुचेलके । शोभनवस्त्रे ॥ वस्त्रे ॥ चित्रपटे । चत्र० इ०भा० ॥ पटति । पटगतौ० पटविस्तारे वा । पचाद्यच् ॥ यद्वा । पट्यतेऽनेन पटभासने । खमोघचेतिघः घित्वा दन्यस्मादपि ॥ हलश्चेतिघञ् संज्ञा पूर्वकत्वाद् वृद्ध्यभावः । क्वचिद् चवाद् विषयेऽप्युत्सर्गोभिनिविशते इतिघञ् विषये पुंसीतिघोवा ॥

पटकः । पुं० सेनानिवेशे । शिविरे ॥

पटकारः । पुं० तन्तुवाये ॥ चित्रकरे ॥ चातेरा० इ० भा० ॥ पटंशोभन वस्त्रं चित्रपटंवा करोति । डुकृञ् । कर्मण्यण् ॥

पटकुटी । स्त्री० वस्त्र वेश्मनि । दूष्ये । गुणालयनिकायाम् । तंबू । इ० भा० ॥

पटच्चरम् । न० जीर्णवस्त्रे ॥ पटति । पट० वा० अत् । भूतपूर्वपटत् । भूतपूर्वचरट् ॥ यद्वा । पटत्इत्य व्यक्तं शब्दंचरति करोति । अच् ॥ यद्वा । पटइवाचरति । सर्वप्रातिप दिकेभ्यः क्विब्वा । आचारक्विपिश चत्वाच्चरट् ॥ पुं० । चौरे ॥

पटबन्धः । पुं० पटका इतिख्यातेकटि बन्धवि० पटस्यबन्धः ॥

पटभवनम् । न० उपकार्यायाम् । पट मण्डपादिराजसदने ॥

पटमठः । पुं० अंशुकालये ॥

पटमण्डपः । पुं० पटभवने । दूष्ये ॥

पटमयम् । न० वस्त्रालये । दूष्ये ॥ शौम्बाम् । पटवासे ।

पटरकः । पुं० गुन्द्रवृक्षे । पटेरा इ०भा०

पटलम् । न० पिटके ॥ परिच्छदे। परिवारे ॥ छदिषि । गृहाच्छादने । कानिइ०भा० तिलके दृग्रोगे । दृष्टेरावरके । आंखकापड़दा इ० भा०यथा । प्रथमे पटलेदोषोयस्यदृष्ट्यांव्यवस्थितः । अव्यक्तानिसरूपाणि कदाचिदथपश्यति ॥ दृष्ट्यांचत्वारि पटलानिसन्ति रसरक्ताश्रयंबाह्यम् द्वितीयंमांससंश्रयम् । तृतीयमेदःसंश्रितम् चतुर्थंकालकाश्रितम् ॥ तथा चसुश्रुतः । तेजोजलाश्रितंबाह्यं तेष्वन्यत्पिशिताश्रितम् । मेदस्तृतीयंपटल माश्रितंत्वचिचापरम् ॥ पञ्चमांशसमंदृष्टे स्तेषांबाहुल्यमिष्यते०इति० ॥ अचरसेज: शब्देनरक्तम् जल शब्देनरसोव्याख्यातः । तेषुपटलेषु बाह्यादिभेदेनाधिष्ठानविशेषप्रभावात् दोषाणां लिङ्गविशेषमाह प्रथमे पटले इत्यादि । प्रथमेपटलेसर्वाभ्यन्तरेनतुवाह्ये ० इ० विजयरक्षितः ॥ स्त्री०न० । व्रजे । बृन्दे । सञ्चये ॥ पुं० न० ग्रन्थप्रभेदे ॥ पटंविस्तारंलाति।ला० । आतोनुपेतिकः ॥ पटत्युद्रकंवा । पटगतौ०अर्थ : । वृषादित्वात्कलच् ॥

पटलप्रान्तम् । न० वलीकनीध्रे । परीली इति० परावर्ली इतिच भाषा० ॥ पटस्य छदिषःप्रांतम् ॥

पटली । स्त्री० छदिषि ॥ गौ० ङीष् ॥

पटवापः । पुं० अंशुकालये ॥ चूर्णविशेषे । पटस्यवास : ॥ पटोवास्यते येनबा । वास० । घु । घ : ।

पटवासकः । पुं० चूर्णवि० । पिष्टातै । बुक्का इ० भा० ॥ पटोवास्यते येन । वासउपसेवायाम् । चु० । घः । स्वा० कन् ॥ पटंवासयतिवा । कर्मण्यण् । कन् ॥ *

पटहः । पुं० समारम्भे । आरम्भे ॥ युद्धवाद्यमानढक्कायाम् । आडम्बरे॥ पटहोदुन्दुभिरितिस्वामी॥ पिसतेः॥ पुं० । न० । आनके । ढोल इ० भा० ॥ पटंहन्ति । हन्० । अन्येभ्योपीतिड : ॥ पटेतिशब्दं जहाति । ओहाक्त्यागे । आतोनुपेतिकः॥

पटाक : । पुं० पक्षिविशेषे ॥ पटति । पट० । पिना० आक : ॥

पटाका । स्त्री० पताकायाम् ॥ टाप् ॥ इतिशब्दरत्नावली ॥

पटालुका । स्त्री० जलौकायाम् ॥

पटि : । स्त्री० पटविशेषे ॥ वागुली ॥ कुंभिकाद्रुमे ॥ इतिमेदिनी ॥

पटिका । स्त्री० वस्त्रे ॥

पटिमा । पुं० पटुतायाम् । पाटवे ॥ पटोर्भाव । पृथ्० इमनिच् ॥

पटिष्ठ : । त्रि० पटुतमे ॥ अयमेषा

मतिशयेनपटु : । अतिशायनेतम-
विष्ठनाविति० इष्ठन् ॥
पटी । स्त्री० तिरस्करिण्याम् । यव-
निकायाम् ॥ वस्त्रविशेषे ॥ गौरा-
दित्वान्ङीष् ॥
पटीयान् । त्रि० पटुतरे ॥ अयमनयो-
रतिशयेनपटु : । द्विवचनविभज्यो
पपदेतरबीयसुनौ ॥ स्त्री० । उगित
श्चेतिङीपि० पटीयसी ॥ समर्थतरे
त्रिलिङ्ग : ॥
पटीर : । पुं० पाटीरार्थेषु ॥ पटति
पटगतौ । कृशृपृकटिपटिशौटिभ्य-
ईरन् ॥
पटु : । पुं० पटोले । कारवेल्लीलता
याम् ॥ कारवेल्ले ॥ चौरके ॥ पटोल
पत्रे ॥ न० । छत्रायाम् ॥ लवणे ॥
पांशुलवणे ॥ त्रि० । दक्षे ॥ चतुरे ॥
मधुरे ॥ नीरोगे । रोगविहीने ॥
तीक्ष्णे ॥ स्फुटे ॥ निर्दये ॥ निष्ठुरे ॥
धूर्ते ॥ पाटयति । पटगतौ । ण्य-
न्त: । फलिपाटीत्यु: पटादेशश्च ॥
पटुक : । पुं० पटोले ॥
पटुतम : । त्रि० पटिष्ठे ॥ अयमेषाम-
तिशयेनपटु: । अतिशायनेतमप् ॥
पटुतृणकम् । न० लवणतृणे ॥
पटुपत्रिका । स्त्री० क्षुद्रचञ्चुक्षुपे ॥
पटुपर्णिका । स्त्री० क्षीरिणीवृक्षे ॥
पटुपर्णी । स्त्री० स्वर्णक्षीर्याम् ॥ हैमा
ह्वायाम् ॥ पटूनिपर्णान्यस्या : ॥

पाककर्मेतिङीष् ॥
पटोटजम् । न० छत्राके ॥
पटोल : । पुं० औषधि विशेषे । कर्क
च्छदे । तिक्तके । परवर इ० पलवल
इतिचभा० ॥ पटोलं पाचनं हृद्यं
वृष्यंलघ्वग्निदीपनम् । स्निग्धोष्णं
हन्तिकासास्रज्वरदोषत्रयक्रमीन् ॥
पटोलस्यभवेन्मूलं विरेचनकरंसुखा
त् । नालंश्लेष्महरंपत्रं पित्तहारिफ
लंपुन : । दोषत्रयहरंप्रोक्तं तद्वत्ति
क्तापटोलिका ॥ अपिच । पटोलप
त्रंपित्तघ्नं मूलंतस्यविरेचकम् । फलं
तस्यत्रिदोषघ्नंनाडीतस्यकफापहा ॥
पटति । पट० । अन्तर्भावितण्यर्थो
वा । कपिगडिगण्डीत्योलच् ॥ न०
वस्त्रान्तरे ॥
पटोलक : । पुं० शुक्तौ ॥
पटोलपत्रम् । न० पलवलपत्तीतिप्रसि
द्धशाके ॥ पटोलपत्रंपित्तघ्नं दीपनं
पाचनंलघु । स्निग्धं वृष्यं तथोष्णञ्च
ज्वरकासक्रमिप्रणुत् ॥
पटोलिका । स्त्री० ज्योत्स्न्यामपचेंडा
० इ० प्र० दीर्घफले । पटति । पट०
। ओलजन्तात् ० स्वा ० कन् ०
टाबित्वञ्च ॥
पटोली । स्त्री० ज्योत्स्नाम् । चचेंडा०
पंडोल० इ० भा० प्र० दीर्घफले ॥
जातेरिति० गौरादित्वाद्वाङीष् ॥
पट्ट : । पुं० पेषणपाषाणे । शिल० इ

तिभाषा ॥ ब्रणादीनांबन्धने । पट्टी इ०.भा० ॥ चतुष्पथे । चौवाटा०इ० भा० राजादिशासनवि० पट्टा० इ० भा० ॥ पीठे । पट्टा इति पटड़ा० इतिच भा० ॥ फलके । ढाल० इ तिभाषा० ॥ शाकप्रभेदे ॥ कौषिये ॥ नृपादीनां किरीटविशेषे ॥

पट्टकः । पुं० पट्टार्थे ॥

पट्टजम् । न० वस्त्रान्तरे । पट्टवस्त्रे ॥

पट्टदेवी । स्त्री० महाराज्ञ्याम् । पटरा णी० इ० भाषा० ॥

पट्टनम् । न० पत्तने ॥ पटन्तिजनायत्र पटगतौ ॥ वा० तनन् ॥

पट्टनी । स्त्री० पत्तने ॥

पट्टरङ्गम् । न० पतङ्गे । वकम्० इ०भा

पट्टरञ्जनकम् । न० पट्टरङ्गे ॥

पट्टलक्षणम् । न० नृपादीनां किरीट विशेषस्वरूपे ॥ यथा । विस्तरेणोनि द्दिष्टं पट्टानां लक्षणं यदाचार्यैः ॥ तत्सङ्क्षेपः क्रियते मयात्रसकलार्थसम्पन्नः ॥ पट्टः शुभदोराज्ञां मध्येष्टावङ्गुलानि विस्तीर्णः । सप्तन रेन्द्र महिष्याः षड्युवराजस्य निर्दिष्टः ॥ चतुरङ्गुल विस्तारः पट्टः सेनापते र्भवतिमध्ये । द्वेचप्रसाद पट्टः पञ्चैते कीर्तिताः पट्टाः ॥ सर्वेद्विगुणा यामा मध्यादर्द्धेन पार्श्वविस्तीर्णाः । सर्वेच शुद्धकांचन विनिर्मिताः श्रेयसो वृद्ध्यै ॥ अत्रैव शुभाशुभज्ञानमाह । क्रियमाणं यदिपत्रं सुखेन विस्तारमेति पट्टस्य । वृद्धिजयौ भूमिपतेस्तथा प्रजानांच सुखसम्पत् ॥ जीवितराज्य विनाशंकरोति मध्ये ब्रणः समुत्पन्नः । मध्ये स्फुटितस्त्याज्यो विघ्नकरः पार्श्वयोः स्फुटितः ॥ अशुभेलक्षणे दृष्टे किङ्कुर्यादित्याह । अशुभ निमित्तोत्पत्तौ शास्त्रज्ञः शान्तिमादिशेद्राज्ञः । शस्तनिमित्तः पट्टो नृपराष्ट्रविवृद्धये भवति ॥

पट्टशाकम् । न० नाडीचे । नालिता शाक० इ० गौ० भा० । नालीकाशाक ॥ इ० दे० भा० ॥

पट्टारोहा । स्त्री० पट्टदेव्यां ॥ पट्टे आरोहोयस्याः सा ॥

पट्टाही । स्त्री० पट्टदेव्याम् ॥

पट्टिका । स्त्री० अल्पविस्तारेपट्टवस्त्र विशेषे ॥ पट्टी० इ० प्र० वस्त्रे ॥ वितस्तिविस्तारेवस्त्रे ॥ पट्टिकाख्य लोध्रे ॥

पट्टिकाख्यः । पुं० क्रमुके । रक्तलोध्रे ॥ पट्टिका आख्यायस्य ॥

पट्टिकालोध्रः । पुं० क्रमुके । लाक्षाप्रसादने । रक्तलोध्रे ॥

पट्टी । पुं० रक्तलोध्रे । पट्टिकाख्ये ॥ त्रि० । पट्टविशिष्टे ॥ पट्टोस्यास्तीति । अतइनिः ॥

पट्टिलः । पुं० पूतिकरञ्जे ॥

पट्टिश : पुं० खड्गविशेषे । अस्त्रविशेषे ॥

पट्टिस : । पुं० परशु : पट्टिशोनाम सएवचपरश्वध इतिभरत : ॥

पट्टी । स्त्री० ललाट भूषायाम् ॥ पट्टिकालोध्रे ॥ तलसारके । अश्ववक्षोबन्धनरज्जौ ॥ व्रणावृतौ ॥ स्त्रिजन्त्वात्पट्टिशब्दात्ङीष् ॥

पट्टोलिका । स्त्री० व्यवस्थापत्रे ॥ पट्ट इ० भा० प्र० इ० केचित् ॥

पट्टः । पुं० रथे ॥ भूलोके ॥ पठ्यते पटगतौ । सर्वनिघृष्वरिष्वेति साधुः ॥

पठकः । पुं० पठनकर्त्तरि ॥ पठति । पठ० । अच् । स्वा ० कः ॥

पठनम् । न० वाचने ॥ यथा । भूतप्रेतपिशाचानांपठनादेवनाशनमिति ॥

पठमञ्जरी । स्त्री० श्रीरागस्यचतुर्थरागिण्याम् । अस्यालक्षणंयथा । वियोगिनीकान्तवितीर्णपुष्पां स्रजंवहन्तीवपुषातिमुग्धा । आश्वास्यमानाप्रिययाचसख्याविधूसराङ्गीपठमञ्जरीयमितिदामोदरः ॥

पठसमञ्जरी । स्त्री० रागिणीविशेषे ॥ इतिहलायुधः ॥

पठिः । स्त्री० पठने ॥ इ० शब्द० ॥

पठितः । त्रि० वाचिते । अधीते । कृतपाठे । यथा । मयान पठिताचण्डी त्वयानापिचिकित्सितम् । अकस्मान्नगरोपान्ते कथंधूमा यतेचितेतिहा स्यार्णव : ॥

पठितव्यः । त्रि० पठनीये । पाठ्ये ॥

पड्वीशशङ्कुः । पुं० अश्वस्य पादबन्धनकीले ॥ पद्नशीलाः पादाः । तेषांसंहतिःपड्वी । तस्याईशो नियामक पड्वीश : वर्णविकारश्छान्दसः । सचासौशङ्कुश्चेतिवैदिकोयम् ॥

पणः । पुं० वराटकानांविंशतिगण्डके ॥ मूल्ये ॥ कार्षापणे ॥ क्रय्यशाकादिकायाम् ।विक्रय्यशाकादिमुष्टौ ॥ व्यवहारे ॥ भृतौ ॥ धने ॥ द्यूतादावुत्सृष्टे ॥ इतिहेमचन्द्रः ॥ पणनम् पण्यतेऽनेनवापण० । नित्यंपणः परिमाण इत्यप् पुंसीति घोवा । हलश्चेतिघञ्वा । संज्ञापूर्वकत्वान्नवृद्धिः । शौण्डिके ॥ पणितद्यूतवेतने ॥ ग्लहे । होडइतिभाषा ॥ पण्यते उत्सृज्यते । इ०सः ॥ द्यूते ॥ पणो ग्लहोऽस्त्यस्मिन् । अर्शआद्यच् ॥

पणग्रन्थिः । पुं० हट्टे ॥

पणनम् । न० विक्रये ॥

पणफरम् । न० लग्नाद्द्वितीय पंचमाष्टमैकादशलग्नेषु ॥

पणबन्धः । पुं० संधौ ॥ फलसिद्धौ ॥

पणवः । पुं० वाद्यविशेषे ॥ गायन पटहे ढोलकी० इ० प्र० ॥ करताल इ० ख्याते ॥ मुखवाद्यवि० । नेपालेगुर्जरेच भूकर इ० नाम्ना प्रसिद्धे इत्येके ॥ करणालइ० भाषा० प्र०

इवाद्ये ॥ पणांवाति० गच्छति । आ तु इ० क : ॥ पणायति अन्तस्त्लोकः पणइइति स्वामी ॥

पणवा । स्त्री० पणव वाद्ये ॥ इतिद्वि० ॥

पणस : । पुं० पनसे । पण्यद्रव्ये ॥ पणायतेस्म । पणव्यवहारेस्तुतौच । अल्यविचमीत्यसच् ॥

पणाङ्गना । स्त्री० वेश्यायाम् ॥ इ० द्वि०

पणाया । स्त्री० क्रय विक्रयरूपे व्यवहारे ॥

पणायितः । त्रि० ईड़िते । स्तुते ॥ पणाय्यतेस्म । पण० । क्त : । आयादय आर्द्धधातुकेवा ॥

पणास्थि । न० वराटके॥पणस्यअस्थि ॥

पणास्थिकम्।न० वराटके । कपर्दके ॥

पणि :।पुं० चौरे ॥

पणित : । त्रि० पणायिते । स्तुते ॥ पणाय्यतेस्म । पण० । क्त : । आयाभाव : ॥

पणितव्य :। त्रि० विक्रेयद्रव्ये ॥ स्तौतव्ये ॥ व्यवहार्ये ॥ पण्यते।पण०। तव्यत्तव्यानीयर : ॥

पण्ड : । पुं० क्लीबे । नपुंसके ॥ पंडाते । पडिगतौ । अच् ॥ यद्वा पणते ॥ पण० । अमन्ताड्डः ॥ त्रि० । निष्फले ॥

पण्डक : । पुं० पण्डे ॥ भिक्षौ । परिव्राजि ॥ यथा । अद्यजातां यथा नारींतथा षोड़श वार्षिकीम् । शत वर्षांच योदृष्ट्वा निर्विकार : सपण्डक इति०॥

पण्डा । स्त्री० धियि । बुद्धौ ॥ पण्ड्यतेऽनया । पडि० । गुरोश्चेत्य: । टाप् । तत्त्वानुगायां बुद्धौ ॥ निर्णयात्मज्ञाने ॥

पण्डापूर्वम् । न० फलजनकापूर्वे ॥ त्रि० । तद्विशिष्टे ॥

पण्डित : । पुं० विदुषि । दोषज्ञे । सद्भाववति । कवौ । धीरे । निषेवते प्रशस्तानि निन्दितानिन सेवते । अनास्तिक : श्रद्दधान एतत् पण्डित लक्षणम् ॥ पठकाः पाठकाश्चैव येचान्ये शास्त्र चिन्तका : । सर्वे व्यसिनोमूर्खाय: क्रियावान् सपण्डित इत्यस्यलक्षणं महाभारते वनपर्वण्युक्तम्॥ सम्यग्दर्शिनि । समदर्शिनि । ज्ञानिनि विचार जन्यात्म तत्त्वज्ञानवति ॥ शास्त्रकुशले ॥ उपदिष्टार्थग्रहणसमर्थे ॥ पण्डाजाता ऽस्य ता० । इतच्॥ यद्वा॥ पण्डतेऽस्मात् पडि० । गत्यर्थेतिक्तः । इट् ॥ नातः परतरंलोकेक्वचिदाश्चर्यमद्भुतम्। पुत्रदारगृहासक्त : पण्डित: परिगीयते ॥ सिल्हके ॥

पण्डितम्मन्य : । त्रि० आत्मानंपण्डितंमन्यतेयस्स्मिन् ॥

पण्डितमानो । त्रि० पण्डिताभि मानिनि ॥

पण्यम् । त्रि० विक्रेये । विक्रयक्रिया कर्मणि । पणितव्ये ॥ पण्यते । पण० अवद्यपण्य वर्य्यागर्ह्यपणितव्याऽनिरोधेष्विति साधु ॥ व्यवहर्त्तव्ये ॥ स्तुत्यर्हे ॥

पण्यवीथिका । स्त्री० विपणौ ॥ पण्यानांवीथी । स्वार्थेकन् । बाणीआवीहीइतिवजार० इतिचभाषा ॥ आपण : पण्यवीथीचद्वयंवीथीतिसंज्ञितमितिशाश्वत : ॥

पण्यवीथी । स्त्री० विपणौ । हट्टशून्ये विक्रयस्थाने ॥ क्रयविक्रयस्थाने ॥ हट्टमार्गे ॥ पण्यानांवीथी ॥

पण्यशाला । स्त्री० हट्टे । विक्रयगृहे ॥ पण्यानांशाला ॥

पण्यस्त्री । स्त्री० वेश्यायाम् ॥

पण्या । स्त्री० ज्योतिष्मत्याम् । मालकोंगणी० इ० भा० ॥ टाप् ॥

पण्याङ्गना । स्त्री० वेश्यायाम् ॥

पण्याजीव: । पुं० क्रयविक्रयिके । वणिजि ॥ पण्यमाजीवोस्य ॥

पण्याजीवकम् । न० हट्टे ॥

पण्यान्धा । स्त्री० तृणविशेषे , कङ्गनीपत्रायाम् ॥ दीर्घामध्यातथाऽस्वापण्यान्धाचत्रिविधास्मृता । रसवीर्यविपाकेषुमध्यमा गुणदायिकेतिराजनिर्घण्ट: ॥

पतम् । न० पत्रे ॥

पतग: । पुं० पक्षिणि ॥ पतेनपक्षेणगच्छति । गम्लृ० । ड : ।

पतगोत्तम : । पुं गरुडे ॥ पतगेषुउत्तम : ॥

पतङ्ग: । पुं० शलभे ॥ शालिप्रभेदे ॥ पक्षिणि ॥ सूर्ये ॥ कन्दुके ॥ योसौत्वयाकरसरोरुहत: पतङ्गइतिलक्ष्यम् । जलमधूके ॥ पतति । पत्लृ० । पतेरङ्गच्पक्षिणि । बाहुलकात्अर्थान्तरेप्यङ्गच् । न० । सूते । पारदे ॥ पटरञ्जनके । वकम्० इ० भा० प्र० । पतङ्गंमधुरंशीतंपित्तश्लेष्मव्रणास्रनुत् । हरिचन्दनवद्वेद्यं विशेषाद्दाहनाशनम् ॥

पतङ्गिका । स्त्री० पुत्तिकायाम् । मधुमक्षिकाप्रभेदे ॥ अङ्गजन्तात्पतते : स्वार्थेकन्संज्ञायांवा ॥

पतञ्चिका । स्त्री० धनुर्ज्यायाम् ॥ इ० शब्द ० ॥

पतञ्जलि : । पुं० गोनर्दीये । वार्षगण्ये । महाभाष्यकारमुनौ ॥ वररुचौ० इतिशब्दरत्नावली ॥

पतन् । पुं० खगे ॥ त्रि० । पातुके । पतनशीले ॥ पतति । पत्लृ । लट: शत्रादेश : ॥

पतत्पति : । पुं० अण्डजमण्डलेश्वरे । गरुडे ॥ पततां पति : ॥

पतत्रम् । न० पक्षिपक्षे । पंख० इ० भा० ॥ पतन्तंत्रायते । त्रैङ् । आतोनुपेतिक : ॥ पतत्यनेनवा ।

पतेर्वाहुलकादचन् ॥ पतति । पत्लृ० । अमिनचीत्यचन् वा ॥

पतत्रिः । पुं० खगे । पक्षिणि ॥ पतति । पत्लृ० । पतेरत्रिन् ॥

पतत्री । पुं० विहंगे । पक्षिणि ॥ पतत्त्रमस्त्यस्य । अतइनिः ॥

पतद्ग्रहः । पुं० कटकोले । प्रतिग्राहे । प्रोगढे । निष्ठीवनपात्रे । पीकदानी इति भा० ॥ पतन्तं गृह्णाति । ग्रह० । विभाषाग्रह इतिपक्षे ऽच् ॥ पतती ग्रह इतिवा ॥

पतनम् । न० पाते । पडनां इ० भा० ॥ यथा । अशनैः पतनेनवेदना पतनन्नान मतीवदुःसहमिति ॥ पापे ॥ यथा । अकुर्वन्विहितं कर्म निन्दितञ्चसमारन् । प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छतीति ॥ पतेर्ल्युट् ॥

पतयालुः । त्रि० पातुके । पतनशीले ॥ पतयति ॥ पतगतौ । चु० । अदन्तः । स्पृहिगृहीत्यालुच् ॥

पतसः । पुं० पक्षिणि ॥ पक्षिविशेषे ॥ पतंगे ॥ चन्द्रे ॥ पतति । पत्लृ० । अत्यविचमीत्यादिना ऽसच् ॥

पताका । स्त्री० ध्वजाञ्चले । वैजयन्त्याम् । केतने ॥ शोभमाना ध्वजाग्रेयापताकासा प्रकीर्त्तिता ॥ पततिपत्यतेवायतयोधभेदो ऽनयावा । पत्लृ० । बलाकादयश्चेति साधुः ॥ ध्वजे ॥ सौभाग्ये ॥ नाटकाङ्के ॥ केतौ ॥

पताकिकः । त्रि० पताकावति ॥ पताकास्त्यस्य ॥ व्रीं० ठन् ॥

पताकी । त्रि० पताकासंयुक्ते । वैजयन्तिके ॥ पताकास्यास्तिव्री० इनिः । रिष्टारिष्ट बोधके ज्योतिर्विदां चक्रविशेषे ॥

पताकिनी । स्त्री० सेनायाम् ॥ नान्तलक्षणोङीप् ॥

पतिः । पुं० कान्ते । धवे । प्रिये । भर्त्तरि । विधिनापाणिग्राहके । भर्तार० इ० भा० ॥ अनुकूल दक्षिणधृष्टशठभेदात् पतिश्चतुर्विधः ॥ परमेश्वरे ॥ यथा । सर्वपतिः स्यादकुतोभयः स्वयम् समन्ततः पाति भयातुरंजनम् । सएकएवेतरथामिथोभयंनैवात्मलाभादधि मन्यतेपरमिति ॥ मूले ॥ गतौ ॥ त्रि० । ईशे ॥ त्राणशीले ॥ पाति । पारक्षणे । पातेर्डतिः ॥

पतिम्बरा । स्त्री० स्वयम्बरायाम् । स्वेच्छया पतिकृति कन्यायाम् ॥ पतिं वृणोति । वृञ् ० । संज्ञायां भृतवृजीत्यादिना खचिपूर्वपदस्यमुम् ॥ पतिंवृणीतेवा । वृङ्सम्भक्तौ ॥ कृष्णजीरके ॥ इ० श० चं० ॥

पतिघ्नी । स्त्री० पाणिरेखाविशेषे ॥ पतिं हन्ति । हन० । अमनुष्यकर्तृके चेतिटक् ॥ स्वामिहन्त्र्याम् ॥ लक्षणे जायापत्योष्टक् । उपधालोप: कुत्वम् ॥

पतित: । त्रि० महापातकिनि । स्वधर्मच्युते । पातित्यविशिष्टे ॥ स्वधर्मं य: समुच्छिद्य परधर्मं समाश्रयेत् । अनापदि स विद्वद्भि: पतित: परिकीर्तित: ॥ गलिते । पतनाश्रये । प्रस्कन्ने । पडा० इ० भा० ॥ पत्लृ० । क्त: । द्वितीया श्रितातीतपतित इतिनिपातादिट् ॥ पतितागुरवस्त्याज्या नतुमाता कदाचन । गर्भधारण पोषाभ्यां तेभ्यो माता गरीयसी ॥

पतिदेवता । स्त्री० पतिव्रतायाम् ॥ पतिरेव देवतायस्या: ॥

पतिबान्धव: । पुं० पत्युर्मातृ प्रभृतिषु ॥ यथा । पत्युर्माता पिताभ्राता पत्युर्भ्रातु: स्वसु: सुता । पत्यु: पितु: सोदराश्च विज्ञेया: पतिबान्धवा: ॥ इतिमहानिर्वाणतन्त्रम् ।

पतिवत्नी । स्त्री० सधवायाम् । सभर्तृकायाम् ॥ पतिर्विद्यते यस्या: । मतुप् । अन्तर्वत्पतिवतोर्नुगित्यनेन निपातनात् वत्वं नुगागम विधानञ्च । ततश्चन्नेभ्योङीप् ॥

पतिव्रता । स्त्री० सुचरित्रायाम् । सत्याम् । साध्व्याम् । पतिशुश्रूषा व्रतायाम् ॥ पत्यौव्रतं नियमोऽस्या: । पतिव्रतमस्यावा । पतिशब्द: पतिसेवायां लाक्षणिक: ॥ यथा । आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा । मृतेम्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता ॥ अपिच० सुप्तेप श्चाच्चयाशेते पूर्वमेव प्रबुध्यते । नान्यं कामयते चित्ते सास्त्रीज्ञेया पतिव्रते ति ॥ धर्मार्थकामेषु मनोवाक् काय कर्मभि: पतिरेव मया परिचरणीय इति व्रतंयस्या:सा ॥

पतेर: । पुं० खगे ॥ पक्षिणि ॥ त्रिं० । गन्तरि । गमनशीले ॥ पतति । पत्लृ० । पतिकठिकुठील्येरक् ॥

पत्तङ्गम् । न० रक्तचन्दने ॥ वकम्० इ० भा० प्र०वृक्षवि० ॥ पतङ्गे । रक्तकाष्ठे । सुरङ्गदे ॥ पत्तङ्गन्तुरक्तसारं सुरङ्गं रञ्जनं तथा । पटरञ्जन माख्यातं पत्तूरंचकुचन्दनम् ॥ पत्तङ्गं मधुरंशीतं पित्तघ्नं प्रव्रणास्रनुत् । हरिचन्दवज्ज्ञेयंविशेषाद्दाहनाशनम् ॥

पत्तनम् । न० नगरे । पुटभेदने ॥ पतन्तिजनायत्र ॥ पत्लृ० । विपतिभ्यां तनन् ॥ यत्रराजातत्परिचारकाश्च तिष्ठन्तितत्पत्तनम् ॥ महल्यांपुर्याम् ॥ मृदङ्गे ॥

पत्तनवणिक् । पुं० स्वाध्यायिनि । नगरवणिजि ॥ इतित्रिकाण्डशेष: । पत्त

नस्यवणिक् ॥

पत्तलम् । न० अघनदुग्धे ॥ इति प्राणकृष्णशब्दाम्बुधिः ॥

पत्तिः । पुं० पदगे । पदातिके ॥ पद्यते । पद० । वाहुलकात्तिः । त्तिज्वा ॥ वीरमात्रे ॥ चतुर्मात्रिकस्य चतुर्थभेदे ॥ स्त्री० । गतौ ॥ सेनाविशेषे ॥ एकेभैकरथात्र्यश्वापत्तिः पंचपदातिकेत्युक्तेः ॥ अपिच । एकोरथोगजश्चैकोनराः पंचपदातयः । त्रयश्चतुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ समस्तसङ्ख्यया पत्त्यां दशते परिकीर्त्तिताः ॥ पतति०पत्यतेवा पत्लृ० । क्तिन् ॥ पद्यते पद०स्त्रियांक्तिन् । क्तिज्वा ॥

पत्तिकः । पुं० पत्तिपतौ ॥ हस्त्यश्वरथपदात्यात्मकस्याङ्गदशकस्यैकः पतिः कार्यः सचपत्तिकउच्यते ॥

पत्तिसंहतिः । स्त्री० पादाते । पत्तीनां संहतिः ॥

पत्तूरः । पुं० शालिञ्चशाके । लोहमारके ॥ न० । पत्तङ्गे । कुचन्दने ॥

पत्नी । स्त्री० द्वितीयायाम् । पाणिगृहीत्याम् । सहधर्मिण्याम् ॥ पतिव्रता रूपवती स्वाचारासंयतेन्द्रिया । पत्नीयदातदाविद्धि नाल्पस्यतपसःफलम् ॥ पत्युर्यज्ञेसंयोगो ययादम्पत्योः सहाधिकारात् पत्युर्नोयज्ञसंयोगे० इ० नकारांता देशोङीप्च ॥ सर्वावयवसंपूर्णा सुवृत्तामुद्रहेन्नरः । क्रयक्रीताचयानारी पत्नीसानविधीयते ॥

पत्नीसंयाजः । पुं० यागविशेषे ॥

पत्न्याटः । पुं० वासागारे । भोगगृहे । निष्कुटे ॥ इ० त्रि० शे० ॥

पत्मा । पुं० अन्तरीक्षे ॥ पतन्ति पक्षिणोऽस्मिन् । अन्येभ्यो० इ० पततेर्मनिन् ॥

पत्रम् । पुं० । न० अश्वादिवाहने । यानमात्रे ॥ पलाशे । पर्णे । दले ॥ शरपक्षे ॥ पक्षिपक्षे ॥ क्रुर्याम् ॥ पतन्त्यऽनेनेत्यर्थे दामनीशसेत्यादिनाकरणेष्ट्रन् ॥ पततिवा । पत्लृ० । सर्वधातुभ्यः ष्ट्रन् ॥ तेजपत्रे । तमालपत्रे । पत्रके । लेखनाधारे । पत्रा० इ० भा० ॥ यथा । षाण्मासिकेतुसम्प्राप्ते भ्रान्तिः सञ्जायते यतः । धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा ॥ धातुमय पत्राकृति द्रव्ये । पत्तर० इ० भा० ॥ दूरदेशस्थ सुहृदादीनां वार्ताबोधक लिपिविशेषे । चिट्ठी० पत्री० इ० भा० ॥ अथ पत्ररञ्जनम् । सुवर्णरूप्य रङ्गाद्यै रञ्जयेत् पत्रमुत्तमम् । सामान्योत्तम मध्यानां पत्ररञ्जनमीरितम् ॥ अथ पत्रप्रमाणम् । षडङ्गुलाधिकं हस्तं पत्रमुत्तममीरितम् । मध्यमं हस्तमात्रं स्यात् सा

पत्रम्

मान्यं मुद्रिहीनकम् ॥ अथ पत्रभ ङ्गप्रकार: । पत्रन्तु त्रिगुणी कृत्य ऊर्द्ध्वं तु द्विगुणं त्यजेत् । शेषभागे लिखेद्वर्णान् गद्यपद्यादि संयुतान् ॥ अथ पत्रस्वरचनक्रम: । राजले खकमाहूय नृपो ब्रूयात् प्रयत्नतः । पत्रं कुरुयथायोग्यं गद्यपद्यादिसंयु तम् ॥ पण्डितद्वय मानीय लेख कोरहसिस्थित: । यथायोग्यानु सारेणपत्रं कुर्यात् मनोरमम् ॥ दिन द्वयंत्रयंवापि बिचार्यपण्डितैनवै । स्व भाल्लेर्दूषणंज्ञात्वा विलिखेत्पत्रपुस्त के ॥ सामान्यपत्रं मंलिख्य रहसिश्राव येन्नृपम् । नृपाज्ञयाशुभेपत्रे विलि खेद्राजलेखक: ॥ अथ लेखनप्रका र: । अङ्कुशं प्रथमं दद्यात् मङ्ग लार्थं विचक्षण: । मध्ये बिंदु समा युक्त मध: सप्ताङ्क संयुतम् ॥ तदध: स्वस्ति विन्यस्य ततोगद्यं सुशोभनम् । तत: श्री शब्दरूपाणि पदन्यासक्रमंलिखेत् ॥ भाषयासंस्कृ तेनैव कुशलंविलिखेत्सुधी: । तत: शुभाशुभांवार्तां संस्कृतै: प्राकृतै स्तथा ॥ तत: प्रमाणमंदेशं ततोवा र्तांनियोजयेत् । कीर्तिप्रीतियुतंपद्यं तत: किमधिकादिकम् ॥ पत्रप्रे षणशोकंच अङ्कमासादिमंयुतम् । सर्वेषामेव पत्रेषु लिखनं चैवमीरि तम् ॥ सर्वेषामेव पत्राणां विधिंज्ञा

पत्रम्

त्वालिखेत्तु य: । स्वदेशे कीर्तिमा प्नोति तथा देशान्तरेष्वपि ॥ एवं शास्त्रक्रमंज्ञात्वा योलिखेत्राजपत्र कम् । सराज मन्त्रिभि:सार्द्धं यश: प्राप्नोत्यनुत्तमम् ॥ शास्त्रसन्दर्भम ज्ञात्वा योलिखेद्राजपत्रकम् । स राज मन्त्रिभि: सार्द्धं दुर्यशोमहद्रा प्नुयात् ॥ * ॥ अथ पत्रनयनक्रम: । राजपत्रं नयेन्मूर्ध्नि ललाटेमन्त्रिणां मतम् । गुरुपत्रं नयेन्मूर्ध्नि ब्राह्मणा नांतथैवच ॥ यतिसन्न्यासिनांचै व स्वामिनस्तथैवच । सादरेणैवय त्नेन तथामूर्द्ध निधारयेत् ॥ भार्यापु त्रस्यमित्रस्य हृदयेधारयेत्सुधी: । प्रवीराणांकण्ठदेशे पत्रधारणमीरि तम् ॥ एतेषांचैवपत्राणा मुक्तंधार णलक्षणम् । अन्येषामपिपत्राणां नि यमोनात्रदर्शित: ॥

अथपत्रपठनप्रकार: । पत्रं धृत्वान मस्कृत्य पूर्वाग्रेस्थापयेत्सुधी: । द क्षिणार्ये णसदसि नृपाग्रेराजलेक: ॥ पत्रं वितत्यसदसि द्विवारंमनसा पठेत् । स्फुटंपश्चात्प्रवक्तव्यमन्त्रोभो राजलेखक: ॥ रहसिश्रावयेत्पत्रं शुभंवायदिवाऽशुभम् । पत्रंश्रुत्वावि दित्वार्थं सभायांश्रावयेत्तत: ॥ रहस्यपत्रं रहसि नृपाग्रेश्रावयेत्द्विज: । अशुभंनैवसदसि शुभंपत्रं नृपाज्ञ या ॥ एवंक्रमेणपत्रार्थं श्रावयित्वा

पत्रम्

द्विजोत्तम : ॥ नृपते : सन्निधौप्यि
तेस्वा नृपाज्ञामनुवर्त्तते ॥
अथ पत्रचिह्नानि । ऊर्द्ध्वे षडङ्गुलं
त्यक्त्वा वर्त्तुलंचन्द्रबिम्बवत् । कस्तूरी
कुङ्कुमै:कुर्यात् राजपत्रंसुचिह्नितम्॥
मन्त्रिणांकुङ्कुमेनैव पण्डितस्यैवचन्द
नै: । गुरूणांचन्दनेनैव सिंदूरेणैव
स्वामिन: ॥ भार्यायाश्चाप्यलक्तेन च
न्दनै:पितृपुत्रयो: । सन्यासिनांचन्द
नेन यतीनांकुंकुमेनच ॥ रक्तचन्दन
पंकेन भृत्यस्यसमुदीरितम् ॥ शोणि
तेनैवशत्रूणां पत्रचिह्नंप्रकल्पयेत् ॥
एतेषांचैवसर्वेषां यथायोग्यानुसार
त: । पत्रस्योर्द्ध्वे तुमतिमान् कुर्यात्
चिह्नंसुवर्त्तुलम् ॥ अथ राजपत्रस्यको
णच्छेदनप्रकार: । दक्षिणेपत्रकोणस्य
अधस्ताच्छेदयेत्सुधी: ॥एकांगुलप्र
माणेन राजपत्रस्य वैवहि ॥ अथ राज
पत्रादे: पदन्यास: । महाराजाधिरा
जश्च दानशौंडंतथैवच । तथासच्चरि
तंयोज्यं कल्पवृक्षादिकंन्यसेत् ॥ य
थायोग्यानुसारेण तथैवगुणभेदत: ।
राजपत्रेषुसर्वेषु पदन्यासक्रमंविदु: ॥
अथमन्त्रिपत्रस्य । प्रवरंगुणभेदेन त
थासच्चरितादिकम् । विन्यस्यविलि
खेत्प्राज्ञो मन्त्रिपत्रेपदक्रमम् ॥ अथ
पण्डितस्य । सद्भावद्वन्दितपदं शा
स्त्रार्थनिपुणादिकम् । पण्डितानांच
पत्रेषु विलिखेद्वैपदक्रमम् ॥ अथ

पत्रम्

गुरुपत्रस्य । साङ्ख्यसिद्धान्तनिपुणंसन
मस्कारकंपदम् । विन्यस्यविलिखेत्
प्राज्ञो गुरुपत्रे पदक्रमम् ॥ * ॥ अथ
स्वामिपत्रस्य । प्रवर्यं सनमस्कारं प्रा
णप्रियादिकंपदम् । बिन्यस्यबि लिखे
द्धीमान् स्वामिपत्रे पदक्रमम् ॥ ०
अथ भार्या पत्रस्य । प्राण प्रियापदं
साध्वीं तथासच्चरिता दिकम् । भार्या
पत्रे लिखेद् बिद्वान् पदक्रममनुत्तम
म् ॥ ० ॥ अथ पुत्रस्य प्राणपुत्रपदं
तद्वत्तथासच्चरितादिकम् । आशीर्व
चनसंयुक्तं पुत्रपत्रे पदक्रमम् ॥
। अथपितृपत्रस्य । प्रभुवर्यंनमस्कारं
तथासच्चरितादिकम् । बिन्यस्यबि
लिखेत्पुत्र : पितृपत्रे पदक्रमम् ॥
अथ सन्न्यासियतिपत्रस्य । सर्ववा
ञ्छाविनिर्मुक्तं सर्वशास्त्रार्थपारगम् ।
सन्न्यासियतिपत्रेषु विलिखेच्चपद
क्रमम् ॥ सामान्यस्य । सामान्य
भृत्यशत्रूणां विनियोज्यामुकंप्रति । श
स्त्रावशेषितपदं छागतुल्यादिकंतथा
॥ एतेषामेवपत्रेषु यथायोग्यानुसा
रत : । विन्यस्यविलिखेत्प्राज्ञ :
पदक्रममनुत्तमम् ॥ अथश्रीशब्द
बिन्यास सङ्ख्या षड्गुरो: स्वामि
न:पञ्च द्वे भृत्ये चतुरो रिपौ ।
श्रीशब्दानां त्रयंमित्रे एकैकंपुत्रभा
र्ययो : ॥ अथराज्ञ : प्रशस्ति : । स्व
स्तिगीर्वाण चयचूडारत्नराजिरोचि

पत्रम्

श्रुम्बितचन्द्रचूडचरणनखेन्दुवृन्दच
न्द्रिकासंदोहास्वादचतुरचेतश्चकोरच
रविषमसमरसञ्चरत्प्रबलतरतुरगखु
रपुटपटलदलितभूपृष्ठोत्थितद्भूयिष्ठ
धूलिधाराधूसरितसकलहरिदन्तरप्र
चण्डभुजदण्डभ्राजमानखरतरासि
विवासितप्रत्यर्थिपृथ्वीपतिसार्थप्रा
र्थितानुकम्पासुधासम्पातानवरतवि
द्दहारिद्र्यविद्रावणद्रविणराशिवि
श्राणनसमुपार्जितोर्जितयशोमराला
वलिकवलितवलिदधीचिसञ्चितोय
शोमृणालजालभूपालकुलतिलकश्री
युतमहाराजाधिराजेषु ॥ १ ॥
स्वस्तिप्रचण्डदोर्दण्डखण्डखण्डिता
रिमण्डलमुण्डोन्मुक्तमुक्तावलीमंडि
तमङ्गामाङ्गनरिङ्गमाणानेकवारण
वाहादिकायकांडवक्रतरनक्रचक्रच
ङ्क्रमणदुरतिक्रमणीयापगापतिप्रभू
तयशश्चन्द्रचन्द्रिकाद्योतविद्योतिता
खिलजगन्मंडलविविधद्रविणार्पणस
न्तोषितसूरिसमूहस्तूयमानावदात
कीर्तिनर्तकीनर्तनलीलालिपलिपितगी
तिधुरीणोर्वश्यादिवेश्याजनसविला
सगीयमानगुणश्रवणान्दोलिताखंड
श्रवणकुंडलपरितःप्रसर्पितप्रतापात
पनोतापितारातितसमध्यासितनि
कुञ्जकुञ्जप्रस्तुतसौन्दर्यगाथामुदितश्री
मन्नारायणचरणकिङ्करश्रीयुतमहारा
जदानशौण्डेषु ॥ २ ॥

पत्रम्

अथमन्त्रिप्रशस्तिः । स्वस्तिश्रीमत्स
मस्तसामन्तसेवक निर्वाहकेषु को
शगोष्ठपिष्ठपौबल गजवाजिरथपरि
वारहर्षहेतुनीतिसेतुरक्षणनिपुणेषु
षट्शास्त्रविश्वासैकनिकेतनेषुश्रीश्रीमन्त्रि
प्रवीरेषु आशीराशिनिवेदनकोऽयं
वर्णभूतोऽत्रत्यं भव्यमावेदयन् तत्र
त्यं भव्यमव्याहत मनुदिनमनुक्षणं
पृच्छतिस्म ॥ ॥
अथगुरुप्रशस्तिः ॥ स्वस्तिश्रीनाराय
णपदपाथोरुहनिस्सरन् मकरन्दमधु
पायमानमानसेषु । विविधविद्या
विद्योतिताखिलगुणगणा लङ्कृत
वेदवेदाङ्ग पारग स्वाश्रमोचिताचार
सम्पन्नपरमहंसपरिव्राजकाचार्यसेव्य
मान श्रीगोविन्दस्वरूपगुरुचरणारवि
न्देषु कोटिशः प्रणामाः ॥
अथभार्यायाःस्वामिप्रशस्तिः । स्वस्ति
श्रीमदुद्दाम प्रेमहिमभूषितास्मदा
दिभक्तजनेषु । कर्णयोरधिष्टानेषु ।
नेत्रयोरधिदैवतेषु । कामस्यपरि
णामेषु । चतुवर्गप्रदायकेषु । म
मापररूपेषु । श्रीमत् स्वामिचरणा
रविंदेषु । गोविंदद्वैदिराया :
शङ्करइव गिरिजाया : महेन्द्र इव
पुलोमजाया : प्रतिदिनं वर्द्धमाना
समाराधना प्रणामपूर्वमास्ताम् ॥
* ॥ अथभर्त्तुर्भार्या प्रशस्तिः ।
स्वस्तिश्रीमत् समस्तप्रेमपारलावण्य

पत्रम्

मूर्त्तौप्रियतमायां नेत्रयुग्मस्यकनीनिकायामिव चन्द्रस्यचन्द्रिकायामिव कमलाकरस्य कमलिन्यामिव पथिकस्य छायायामिवतृषातुरस्य शीतलामृतधारायामिव ममसप्रेमनिवेदयम्नी पत्रीशुभाशीराशीन् निवेदयतुसर्वदा ॥ * ॥ अथपुत्रस्यपितरं प्रतिप्रशस्तिः। स्वस्तिश्रीमदभिनववशंवदचित्तचिन्तितस्वीयानुरागानुरञ्जितानुगृहीतस्वगृह्यवर्गेषु। निजचरणसरोजरंजितपरागसंरक्तास्मदादि भालस्थलविशालभाग्य संभावुकेषु। श्रीयुतपितृचरण सरोरुहेषु। अकिञ्चित्करकिङ्करस्यमम बद्धकर सम्पुटस्यावनीपृष्ठलग्नाः साष्टाङ्गप्रणतयः सहस्रमजस्रं विज्ञाप्यन्त ॥ * ॥ अथपितुः पुत्रं प्रति प्रशस्तिः। स्वस्तिश्री विश्वेश्वरचरणसरोरुहानुग्रहसमासादितातिविततानवद्यविद्याविलासपीयूषपरम्पराभावुकानुपममाधुरीधुरीणविविधगुणालङ्कृतनिजवंशावतंससकलविश्वासनिधाननिजकुलपवित्रीकृतात्मप्रायेषु। श्रीयुतशुद्धाचारपरिपूरितपुत्रेषुशुभाशिषां राशयः सन्तुविज्ञाप्यञ्च ॥ * ॥ अथ सन्न्यासियतिप्रशस्तिः। स्वस्तिश्रीमत्परहंसपरिव्राजकाचार्यकरणनिपुणतापराङ्मुखेषु। विषमविष

पत्रम्

यदोषदर्शनदूषितप्रपञ्चरचनाविभावेषु। वेदवेदान्तसाङ्ख्यसिद्धान्तवद्धदेयप्रकृतिपुरुषविवेकज्ञानशीलेषु। सङ्ख्यावन्मुख्यवन्दितचरणारविन्दस्वाश्रमोचिताचारपरिपालनपवित्रीकृतधरित्रीतलेषु। सकलभूदेवपूजितश्रीयुतगोस्वामिचरणारविन्देषु। ममावनीसंलग्नंसाष्टाङ्गप्रणामसहस्रमजस्रमोंनमोनारायणायेतिमन्त्रेणाकलितमस्तु ॥ * ॥ अथ भृत्यप्रशस्तिः। स्वस्तिभगवच्चरणपरायणसकलद्रवणाधिरत्नकगोमहिष्यादिप्रतिपालकनिखिलवंशानुसेवकवशंवदामुकभृत्यंप्रति ॥ * ॥ ॥ * ॥ अथारिप्रशस्तिः। स्वस्ति समराङ्गनभ्रष्टप्रतिभटायशः परिपूरितसकलसामन्तराजधानीविजृम्भितवीरशस्त्रावशेषितनिजवंशानुरत्नकसततपरित्रस्तशरणागतामुकं प्रति ॥ * ॥ * ॥ अथविवेकिनांप्रशस्तिः। स्वस्तिश्रीभगवत्पदपङ्कजपूजनोपचितपुण्यपुञ्जपवित्रीकृतान्तःकरणदिग्विलासिनीविसरधम्मिल्लमिलन्मल्लीमालाकलायशोनुवन्धिनिरवधिवसुविश्राणनाधरीकृतमुरपुरभूमिरुहेषु। स्वस्तिश्रीमत्परमेश्वरपादपाथोरुहाम्वादचतुरचित्तचञ्चरीकभूवृन्दारकवृन्दावनजनितामितयशः पटीरपङ्कपट

लालङ्कृतदिगङ्गनागणस्तनतटप्र
बलप्रतापोर्वखर्वीकृतप्रत्यर्थिसार्थग
र्वाकूपारपारेषु ॥ इतिवररुचिकृता
पत्रकौमुदी ॥ * ॥ * ॥ * ॥ पत्र
पात्रेत्यादिलिङ्गानुशासनात्पुंस्त्वम
पिज्ञेयम्

पत्रकम् । न० पालाशे । तेजपत्रे । ते
जपात्० इ० भा० ॥ पत्रकं मधुरं
किंचित् तीक्ष्णोष्णं पित्तलं लघु ।
निहन्तिकफ वातार्शो हृल्लासा रुचि
पीनसान् ॥ पत्रावल्याम् ॥ पुं० ।
शालिंचशाके ॥

पत्रकाहला । स्त्री० पत्रशब्दे । पिञ्जो
लायां ॥

पत्रकृच्छ्रः । पुं० पर्णकृच्छ्रव्रते ॥ यथा ।
पर्णोदुम्बरराजीव बिल्वपत्र कुशोद
कैः । प्रत्येकं प्रत्यहं पीतैः पर्ण
कृच्छ्रउदाहृतः इति याज्ञवल्क्यः
॥ पलाशोदुम्बरारविन्दश्रीवृत्तपर्णा
नामेकैकेन क्वथितमुदकं प्रत्यहंपिबे
त् कुशोदकंचैकस्मिन्नहनीति पञ्चाह
साध्यः पर्णकृच्छ्र इतिमिताक्षरा ॥

पत्रगुप्तः । पुं० स्नुहीभेदे । त्रिकण्टे ॥

पत्रघना । स्त्री० सातलायाम् ॥

पत्राङ्गम् । न० पत्राङ्गे । रक्तचन्दने ॥

पत्रभङ्कारः । पुं० रायभाटी० इ० गौ
० भा० प्रसिद्धे ॥ पुरोटौ ॥

पत्रणा । स्त्री० शरपत्र रचनायाम् ॥
शराणां पत्ररचना पत्रणापरिकीर्त्ति
ते तिकाण्डशेषः ॥ — ते तिद्वारावली ॥

पत्रतण्डुली । स्त्री० यवतिक्तायां ॥

पत्रतरुः । पुं० दुष्खदिरे ॥

पत्रत्रयम् । न० वर्वरादिषु ॥ बर्बरा तु
लसी बिल्वं पत्रत्र यमुदाहृतम् ॥

पत्रदारकः । पुं० करपत्रे । क्रकचे ॥

पत्रद्रुमः । पुं० तालीदलतरौ ॥

पत्रनाडिका । स्त्री० पत्रशिरायाम् ॥

पत्रपरशुः । पुं० स्वर्णकारादिनां स्वर्णा
दिच्छेदिकायाम् । व्रश्चने । छेनी
इ० भाषा० ॥ पत्रमिवपरशुः ॥

पत्रपा । स्त्री० अपत्रपायाम् । लज्जाय
म् ॥ इ० शब्द० ॥

पत्रपालः । पुं० आयतायांछुरिकाया
म् ॥

पत्रपाली । स्त्री० कर्त्तर्याम् । कैंची०
इ० भा० ॥

पत्रपाश्या । स्त्री० सुवर्णादि रचिते ल
लाटाभरणे ।ललाटिकायाम् ॥ पाशा
नां समूहः पाश्या । पत्रमिवपाश्या ॥

पत्रपिशाचिका । स्त्री० टोका० इ०
गौ० भा० प्र० । मूड़खोले ॥ इ०
वि० जलवायाम् । खर्परे ।वारिवा
याम् । शिरसिपलाशपत्राणां बंध
ने ॥ बंधः पलाश पत्राणां शीर्षेपत्र
पिशाचिके तिद्वारावली ॥

पत्रपुष्पः । पुं० रक्ततुलस्याम् ॥

पत्रपुष्पकः । पुं० भूर्जपत्रे ॥

पत्रपुष्पा । स्त्री० तुलस्याम् ॥ क्षुद्रपत्र

तुलस्याम् ॥

पत्रबंधः। पुं० पुष्प रचनायाम् ॥ यथा रचनाच परिष्यन्दः पत्रबंध इति त्रयम् । पत्रभङ्ग प्रसूनादि रचनायां निगद्यते ॥ इतिशब्द रत्नावली ॥

पत्रबाल:। पुं०तुलाघटेदांड इति गौ० भा० ॥

पत्रभंगः। पुं० स्तनकपोलादौ कस्तूरिकादि रचित पत्रावल्याम्। पत्रलेखायाम् ॥

पत्रभङ्गिः । पुं०)
पात्रभंङ्गे ॥
पत्रभङ्गी। स्त्री० ) ॥

पत्रयौवनम्। न० नवीनपर्णे । पल्लवे किसलये ॥ नवोद्गते किशलयं किशलं पत्रयौवनम् ॥ इतिजटाधर: ॥

पत्ररथ:। पुं० अण्डजे । पक्षिणि ॥ पत्त्रंरथइवयस्य ॥

पत्रलम्। न० अघनदधिनि इति हेमचन्द्र: ॥

पत्रलेखा। स्त्री० पत्रभंगे। स्तनादौकस्तूरिकादिनारचिते तिलकविशेषे। पत्राङ्गुल्याम्॥ पत्राकारा लेखा। शा० ॥

पत्रवल्ली। स्त्री० पत्रभंगे ॥ पलाशीलतायाम् ॥ रुद्रजटायाम् ॥

पत्रवाहः। पुं० वाणे ॥ पक्षिणि ॥ त्रि० । लिपिवाहके ॥ पत्रस्यवाहोरथो मनुष्यादिर्वा ॥ पत्त्राणिवहतिवा । अण् ॥

पत्रशाक:। पुं० षड्विध शाकान्तर्गत पत्रात्मकशाके ॥

पत्रशिरा। स्त्री० पत्रनाडिकायाम्। माव्यां ॥

पत्रश्रेणी। स्त्री० द्रवन्त्याम् ॥ पर्णपङ्क्त्याम् ॥

पत्रश्रेष्ठः। पुं०विल्वे। इ० रा० नि० ।

पत्रसूचिः। पुं० कण्टके ॥ इ०त्रि०

पत्रहिमम्। न० हिमदुर्दिने ॥

पत्राख्यम्। न० तेजपत्रे ॥ तालीश पत्रे ॥ हरितालप्रभेदे ॥ यथा ॥ स्वर्णवर्णं गुरुस्निग्धं सपत्रंचाभ्रपत्रवत्॥ पत्राख्यं तालकं विद्याद्गुणाढ्यं तद्रसायनं ॥

पत्राङ्गम्। न० रक्तचन्दने ॥ भूर्जे ॥ पद्मके ॥ रक्तचन्दनसदृशे काष्ठविशेषे। वकम् ० पतङ्ग० इभा० ॥ पत्रमेवाङ्गमस्य ॥ पत्रे षु अङ्ग तिवा । अगिगतौ । अच् ॥

पत्राङ्गुलिः। स्त्री० भङ्ग० । स्तनकपोलादौकस्तूरिकादि रचितपत्रावल्याम् ॥ पत्रार्थमङ्गुलि : अङ्गुलिव्यापार: ॥

पत्राञ्जनम्। न०मस्यां ॥

पत्राढ्यम्। न० पिप्पलीमूले॥पर्वततृणे । मृगप्रिये ॥ तालीशे ॥

पत्रान्यम् । न० पत्तङ्गे ॥

पत्राम्ला। स्त्री० चुक्रिकायाम्। चूका०

ह०भा०॥

पत्रालुः। पुं० इत्तुदर्भायाम्॥ कासाञ्जौ॥

पत्रावलिः। स्त्री० गैरिके। पत्रश्रेण्याम्॥

पत्रावली। स्त्री० पत्रलेखायाम्॥ नवदुर्गासम्प्रदानमधुमिश्रितयवचूर्णयुक्तनवाश्वत्थपत्रेषु॥ यथा। अमायां निशिसङ्घेतु पत्रेचाश्वत्थसंज्ञके। क्रमात्पत्रावलीदेयं मधुनाय्यवचूर्णकम्॥ देवादिसन्निधौसन्दिग्ध वस्तुनोरेकतराव धारणार्थकब्राह्मण बालकोत्तोलिततत्तन्नामन्देहकोटिलिखित पत्रसमूहे॥

पत्राहारः। त्रि०तपोविशेषाल्लब्ध संज्ञे तापसविशेषे। दीर्घपत्राशने॥

पत्रिका। स्त्री० लघुपत्रे। चिट्ठी ह० भा०॥ पल्याम्। लिपौ॥

पत्रिकाख्यः। पुं० कर्पूरविशेषे॥ त्रि० पत्रिकानामके॥

पत्रिणी। स्त्री० पल्लवे॥

पत्री। पुं०श्येने॥ पत्ररथे। खगे॥ काण्डे वाणे॥ द्रुमे॥ रथिके॥ अद्रौ॥ रथि॥ तालद्रुमे॥ श्वेतकिणिह्याम्॥ गङ्गापत्र्याम्॥ पाच्याम्॥ पत्राणि संन्त्यस्यअतइनिठनाविति।नि:॥ अतिशयितम्० प्रशस्तंवापत्रमस्येति वा॥ त्रि०। पत्रयुक्ते॥

पत्री। स्त्री० पत्रे॥ लिपौ॥ यथा। जन्म पत्री॥

पत्रोपस्करः। पुं० कासमर्द्दे॥

पत्रोर्णः। पुं० शोणके। स्योनाकवृत्ते। अरलू०ह०भा०॥ न० ।धौतकौषेयवाससि। मुकट।०ह०भा०॥ पत्रे ऊर्णाऽस्य। पत्रेषुक्रताऊर्णाबटलकुचादिपत्रेषुक्रमिभिरूर्णायाःक्रतत्त्वात्। पत्रोर्णाऽस्यत्र। अर्शआद्यच्॥

पत्मलः। पुं० पथि॥ पतति। पत्लृ० पतेरस्थलङ्०सरः॥

पथः। पुं० मार्गे॥ पथति। पथेगतौ। प०अच्। बाट: पथश्चमार्गश्चे तिसुभूतिचन्द्रपुरुषोत्तमौ। पथः पथीति द्विरूपेषुविश्वश्च॥

पथकः। पुं०पथिकुशले॥ तत्रकुशल:पथ इतिवुन्॥

पथरथः। पुं। अध्वरथे॥

पथिकः। त्रि० अध्वनीने। अध्वगे॥ पन्थानंगच्छति। पथःष्कन्॥

पथिकसन्तति : स्त्री० )
पथिकसंहति : स्त्री० ) इरी। पथिकसमूहे॥

पथिका। स्त्री० कपिलद्राक्षायाम्॥

पथिकी। स्त्री० अध्वगायाम्॥ पन्थानं गच्छति। पथःष्कन्। षित्त्वान् ङीष्॥

पथिद्रुमः। पुं० श्वेतखदिरे॥

पंथाः। पुं० अयने। वर्त्मनि। मार्गे। अध्वनि॥ द्वाविमावथ पन्थानौयत्र

वेदाः प्रतिष्ठिता : । प्रवृत्तिलक्षणो धर्मोनिवृत्तौचविभापित : ॥ अर्यते ऽनेन । पथि० । पथिमथिभ्यामिनिः ॥ पतन्त्यनेनवा । पतेःस्थश्चतिइनिः । थान्तादेशश्च ॥ पन्थादेयोब्राह्मणा यस्त्रियैराज्ञे ह्यचक्षुषे । वृद्धायभार युक्तायरोगिणेदुर्बलायच ॥ यथाहम नुः । चक्रिणोदशमीस्थस्यरोगिणोभा रिणःस्त्रियाः । स्नातकस्यचराज्ञश्चप न्थादेयो वरस्यच ॥ तेषान्तु समवेता नांमान्यौस्नातक पार्थिवौ । राजस्ना तकयोश्चैव स्नातको नृपमानभा गि ति ॥ गमनगुणाः । पन्थामेद : क फस्थौल्यसौकुमार्यविनाशन : । य त्तुचङ्क्रमणंनातिदेहपीड़ाकरंभवे त् ॥ तदायुर्बलमेधाग्निप्रदमिन्द्रि यशोभनम् ॥ उपाये ॥ यथा । एषप न्था अमृत्वप्राप्तये यदेतदात्मज्ञान मिति ॥

पथिप्रज्ञ : ॥ पुं० मार्गाभिज्ञे ॥ पन्थानम् प्रजानाति । प्रेदाज्ञइतिकः ॥

पथिल : । त्रि० पथिके ।' पथन्ति ऽनेन । पथि० । मि० इलच् ॥

पथिवाहक : । पुं० निष्ठुरे ॥ शाकुनिके ॥

पथ्यः । पुं० हरीतकीवृक्षे ॥ न० । सैन्धवे ॥ त्रि० । हिते । चिकित्सा दौहितकारके ॥ यथा । अशीतेनाभ्यसास्नानं पयःपानंनवाःस्त्रियः । एतद्दोमानवाःपथ्यं स्निग्धमल्पञ्चभोजनम् ॥ मानवाः इतिसम्बोधनम् ॥ विनापिभेजषजैर्व्याधिःपथ्यादेवनिवर्तते । नतुपथ्यविहीनस्य भेषजानांशतैरपि ॥ न० । शुभावहेवचने ॥ शास्त्रीयात्पथोनपेतः । धर्मपथ्यर्थन्या दिनायत् ॥ भूयोपिपथ्यंवक्तव्यमेवमाहुर्हितैषिणः ॥

पथ्यशाकः । पुं० तण्डुलीयशाके ॥

पथ्या । स्त्री० हरीतक्याम् । अभयायाम् ॥ विजयारोहिणीचैवपूतनाचामृताभया । जीवन्तीचेतकीचेति पथ्यायाः सप्तजातयः ॥ अलावुवृत्ता विजयावृत्तासारोहिणीस्मृता । पूतनास्थिमती सूक्ष्मा अमृतामांस ला स्मृता ॥ पञ्चरेखाभयाप्रोक्ता जीवन्तीस्वर्णवर्णिनी । त्रिरेखाचेतकीज्ञेया सप्तानामियमाकृतिः ॥ विजया सर्वरोगेषु रोहिणीव्रणरोहिणी । प्रलेपेपूतनायोज्या शोधनार्थेऽमृताहिता ॥ अक्षिरोगेऽभयाशस्ता जीवन्ती सर्वरोगहृत् । चूर्णार्थेचेतकीशस्ता यथायुक्तंप्रयोजयेत् ॥ वंध्याकर्कोटक्याम् ॥ मृगेर्वारौ ॥ चिर्भिटायाम् ॥ पथोनपेता । धर्मपथ्यर्थ न्यायाद नपेते०इ०यत् । टाप् ॥ चतुर्दशाक्षरच्छन्द : प्रभेदे । यथा ॥ सजसाय लौचसहगेनपथ्यामता ॥ यथा । स्थगयन्त्यमूः शमितचातकार्तस्वराः

जलदास्तडिल्लुलितकांतकार्तस्वराः। जगतीरिहस्फुरितचारुचामीकराः सवितुः क्वचित् कपिशयन्तिचामीकराः ॥ * ॥ आर्याप्रभेदेपि ॥ यथा। प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्त्तितापथ्या ॥ यथा। जय जयजगदीशविभोकेशवकंसान्तमाधवानन्त। कुरुकरुणामितिभणितिः पथ्याभवरोगदुःस्थानाम् ॥ *

पथ्यादिगुग्गुलुः। पुं० भावप्रकाशोक्तौषधविशेषे ॥

पथ्यापथ्यम्। न० रोगाणांहिताहितकारकद्रव्येषु ॥ तत्प्रतिपादकग्रन्थे ॥

पथ्यावक्त्रम्। न० विषमवृत्तविशेषे ॥ यथा। युजोश्चतुर्थतोजेन पथ्यावक्त्रं प्रकीर्त्तितम् ॥ यथा। रासकेलिसतृष्णस्य कृष्णस्य मधुवासरे। आसीद्गोपमृगाक्षीणां पथ्यावक्त्रा मधुस्तुतिरिति ॥

पत्०द्। पुं० चरणे। पादे ॥ पद्यते। पद्गतौ। क्विप् ॥ स्वामीतुदान्तं नमन्यते। पदन्निव्यादेशविधानात् ज्ञापकात्। अन्येतुपदादेशएवायमित्याहुः। प्रभृतिग्रहणस्यप्रकारार्थत्वेनशसाद्यनंतभूतेपितत्प्रवृत्तेः सम्भवात्। अतएवश्रौडः श्यां कंकुड्डोपणी इति भाष्योदाहरणं सङ्गच्छते ॥

पदः। पुं० किरणे ॥ न० व्यवसितौ। व्यवसाये ॥ त्राणे ॥ स्थाने ॥ शास्त्रस्थितौ ॥ लक्ष्मणि। चिह्ने ॥ अङ्घ्रौ। पादे ॥ पादचिन्हे ॥ वस्तुनि ॥ अङ्के ॥ प्रदेशे ॥ श्लोकपादे ॥ वाक्ये ॥ शब्दे ॥ विभक्त्यन्ते ॥ पदंविधान्तंसुप्तिङ्भ्यामव्ययं तद्विवर्ज्जितम् ॥ चत्वारिपदजातानिनामाख्यातेउपसर्गनिपाताश्चेति नैरुक्ताः ॥ चत्वारिपदजातानिनामाख्यातोपसर्गनिपाताश्चेतिमहाभाष्यम् ॥ मिषे। व्याजे ॥ पदनीये आत्मतत्वे। आनन्दरूपे। ब्रह्मणि। स्वरूपे ॥ पदति पद्यतेयोगादिसाधनैः सर्वैर्मुनिभिः प्राप्यतेवा। पद स्थैर्ये० पदगतौवा। प्रचाद्यच्। भावकर्मकरणेषुवाघञ्। संज्ञापूर्वकत्वाद्वृद्ध्यभावः। खनोघचेतिघित्करणादन्यतोप्ययमिति ज्ञापनाद्वा ॥

पदकः। पुं० पदग्रन्थाभिज्ञे ॥ पदमधीतेवेदवा। क्रमा० वुन्। चि०। पदज्ञातरि ॥ देवपदचिह्नादियुक्तेस्वनाम्नाप्रसिद्धेकण्ठभूषणे ॥

पदगः। पुं० पदातौ ॥ पादाभ्यांगच्छति। गम्लृ०। अन्येभ्यो०डः। पादस्यपदाज्यातिगोपहतेष्वितिपादस्यपदइत्यदन्तआदेशः ॥

पदजातम्। न० पदसमूहे। परापश्यन्तीमध्यमावैखरीरूपाणीतिविप्र

वरणकारा : ॥

पदनीय : । त्रि० गमनीये ॥ पदैरनीयर् ॥

पदन्यास : । पुं० गोक्षुरे ॥ पदविन्यासे ॥

पदभञ्जनम् । न० निरुक्तौ । गूढार्थशब्दव्याख्यायाम् ॥

पदभञ्जिका । स्त्री० पञ्जिकायाम् । व्याख्यायाम् ॥ पदानांभञ्जिका ॥

पदवाक्यप्रमाणज्ञ: । त्रि०व्याकरणमीमांसातर्काभिज्ञे ॥

पदवि: । स्त्री० पदव्याम् । मार्गे ॥ पद्यतेऽनया । पदगतौ । पद्यटिभ्यामवि : ॥

पदवी । स्त्री० अयने । वर्त्मनि । पथि । सृतौ ॥ कृदिकारादक्तिनइ० ङीष् ॥

पदमाला । स्त्री०मोहनशीलाख्याम् विद्यायाम् ॥ इतिदेवीपुराणम् ॥

पदष्ठीवम् । न० पादौचअष्ठीवन्तौच० तयो: ॥ अचतुरविचतुरेति निपातनात् टिलोप: पद्भावश्च ॥

पदाङ्क: । पुं० क्रमाङ्के । पादचिह्ने ॥

पदाङ्गी । स्त्री० हंसपद्याम् ॥

पदाजि: । पुं०पत्तौ । पदगे । पादातिके ॥ पादाभ्यामजति । अज० अज्यतिभ्यांपादेचेतीण् । पादस्यपदाजीतिपदादेशोऽजेर्व्यभावश्च ॥

पदाति: । पुं० पदगे । पादातिके । पद्गे ॥



पादाभ्यामतति । अत० । अज्यतिभ्यांपादेचेतीण् । पादस्यपदाज्यातिगोपहतेष्वितिपदादेश: । चतुर्मात्रिकस्यान्तिमप्रभेदे ॥

पदातिक: । पुं० पत्तौ । पदगे ॥ स्वा० कन् ॥

पदानुप्रास: । पुं० शब्दालङ्कारेषुलाटानुप्रासे ॥ पदानामनुप्रास: ॥

पदार: । पुं० पादधूलौ ॥पादालिन्दे ॥

पदार्थ: । पुं० भावे । धर्मे । तत्त्वे । वस्तुनि ॥ ॥ किंपुनराकृति : पदार्थ आहोस्विद्द्रव्यम् । कथंज्ञायते । उभयथाह्याचार्येणसूत्राणि प्रणीतानि । आकृतिंपदार्थं मत्वाजात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामित्युच्यते। द्रव्यंपदार्थं मत्वा स्वरूपाणामेकशेष आरभ्यतेइतिभाष्यम्। तत्रजातिवादिनआहु: । जातिरेवशब्दे नप्रतिपाद्यते। व्यक्तीनामानन्त्यात् सम्बन्धग्रहणासम्भवात् ॥ साजाति: सर्वव्यक्तिष्वेकाकारप्रत्ययदर्शनादस्तीत्यवसीयते । तत्र गवादय:शब्दाभिन्नद्रव्यसमवेतां जातिमभिदधति ॥ तस्यांप्रतीतायांतदावेशात्तदवच्छिन्नंद्रव्यंप्रतीयते ॥ शुक्लादय : शब्दागुणसमवेतांजातिमाचक्षते गुणेतुतत्सम्बन्धात्प्रत्यय: । द्रव्ये सम्बन्धि सम्बन्धात् संज्ञाशब्दानामप्युत्पत्ति प्रभृत्याविनाशात्

पदार्थः

पिण्डस्य कौमार यौवनाद्यवस्था भेदेपिसएवा यमित्यभिन्न प्रत्यय निमित्ता डित्थत्वादिकाजातिर्वाच्या क्रियास्वपि जातिर्विद्यते सैवधातु वाच्या पठति पठतः पठन्तीत्यादेर भिन्नस्य प्रत्ययस्यसद्भावात् तन्निमित्तजात्य भ्युपगम : ॥ व्यक्तिवादिन स्त्वाहुः शब्दस्य व्यक्तिरेवाभिधेया जातिस्तूपलक्षणभावेनाश्रयणादान न्त्यादिदोषानवकाशइतिकैयट : ॥ पदानां घटपटादीना मर्थोऽभिधेयः पदार्थ : ॥ द्रव्य गुणकर्म सामान्य विशेष समवाया भावेषु सप्तसु ॥ यथा । द्रव्यं गुणास्तथा कर्म सामान्यं सविशेषकम् । समवाय स्तथा भाव : पदार्था सप्त कीर्तिता : ॥ एतेवैशेषिक प्रसिद्धा : पदार्था नैयायिकानामप्य विरुद्धा : ॥ गोतमोक्ताः षोड्श पदार्थास्तु । यथा । प्रमाण प्रमेय संशय प्रयोजन दृष्टान्त सिद्धान्ताऽवयव तर्कनिर्णयवादजल्प वितण्डा हेत्वाभासच्छल जाति निग्रह स्थानानां तत्त्वज्ञानान्निश्रेयसाधिगम : ॥ एषां लक्षणानि० यथा । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ १ ॥ आत्मशरीरेन्द्रियार्थ वुद्धि मनः प्रवृत्तिदोषप्रेत्यभावफल दुःखापवर्गास्तुप्रमेयम् ॥ २ ॥ समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपल

पदार्थः

ब्ध्यनुपलब्ध्यवस्थातश्चविशेषापेक्षो विमर्शसंशयः ॥ ३ ॥ यमर्थमधिकृत्य प्रवर्त्ततेतत्प्रयोजनम् ॥ ४ ॥ लौकिकपरीक्षकाणांयस्मिन्नर्थेबुद्धिसामान्यं सदृष्टान्त : ॥ ५ ॥ प्रतिज्ञा हेतूदाहरणोपनयनिगमनान्यवयवाः ॥ ७ ॥ अविज्ञाततत्त्वेऽर्थेकारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क : ॥ ८ ॥ विमृश्यपक्षप्रतिपक्षाभ्यामर्थावधारणंनिर्णय : ॥ ९ ॥ प्रमाणतर्कसाधनोपलम्भःसिद्धान्ताविरुद्धःपञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहोवादः ॥ १० ॥ यथोपपन्नछलजातिनिग्रहस्थानोपालम्भोजल्पः॥ ११ ॥ सत्प्रतिपक्षस्थापनाहीनोवितण्डा ॥ १२ ॥ सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकालात्ययापदिष्टाहेत्वाभासा : ॥ १३ ॥ वचनविघातोर्थविकल्पोपपत्त्याछलम् ॥ १४ ॥ साधर्म्यवैधर्म्याभ्यांप्रत्यवस्थानंजाति : ॥ १५ ॥ विप्रतिपत्तिरप्रतिपत्तिश्चनिग्रहस्थानमिति ॥ १६ ॥ † ॥ अनेकान्तवादिनांजीवाजीवादिसप्तसु ॥ यथा । इहसप्तपदार्थाः स्युर्जीवाजीवास्रवाश्रय : । संवरोनिर्जरश्चैव बन्धमोक्षावुभावपीति ॥ † ॥ शैवानांपतिपशुपाशेषुत्रिषु ॥ * ॥ अध्यात्मवादिनां पदार्थो द्विविध : आत्मा अनात्मा चेति । तत्रापित्मापिद्विविध : । ईश्वरोजी

वस्थे तिएतावपिशुद्धाशुद्धभेदाद्द्वि विधौ। तत्राशुद्धौ मायाविद्योपाधित्वेन भेदव्यवहार...तू। शुद्धौत्व भेदव्यवहारहेतू। अनात्मापि विविधः। कारण सूक्ष्म स्थूलभेदात् एतदेव शरीरत्रय मिति व्यवह्रियते पदस्यअर्थः पदार्थः। सद्विविधः शाक्तिको लाक्षणिकश्चेति॥ धर्मार्थकाममोक्षेषु॥ यथा। द्वावेवस्तः पदार्थानांद्वावेवनिधनङ्गतौ। प्रथमश्चतुरीयश्च त्रिषुलोकेषुदुर्लभौ। अर्थकामौ प्रशस्तौद्वौ सर्वेषां सम्मतौ प्रियौ। धर्माधर्मेति वाग्वादो दम्भोयं महतामपि॥ पश्चात्ताप वचन मेतद्वृत्रासुरवधेमुनीनाम्॥

पदार्थाभिनयः। पुं० नृत्ये॥ पदार्थाभिनयोनामर्त्तं योवागङ्गसत्त्वजः। इतिभरतः। सत्त्वमन्तःकरणम्॥

पदासनम्। न० पादपीठे॥

पदिकः। पुं० पदातौ॥ पादाभ्यां चरति। पर्या० ष्ठन्। ठस्येकः। इकेचरताविति पदादेशः॥

पद्गः। पुं० पदातिके॥ पद्भ्यांगच्छति। गम्लृ०। अन्येभ्यो० डः। पादेनसमानार्थः पच्छब्दः॥

पद्धतिः। स्त्री० पङ्क्तौ॥ वर्त्मनि। पथि॥ अनुष्ठानक्रमेग्रन्थे॥ ग्रन्थार्थबोधकेग्रन्थे॥ पादाभ्यांहन्यते। हन्०। क्तिन्। हिमकाषिहतिषु चेतिपद्भावः॥

पद्धती। स्त्री० पंद्धतौ॥ बह्वादिभ्यश्चेति वाङीष्॥

पद्धिमम्। न० पादशीतलतायाम्॥

पद्मः। पुं० नागराजविशेषे॥ दाशरथौ॥ द्वादशजिनचक्रवर्त्यन्तर्गत चक्रवर्ति विशेषे। पद्मोत्तरात्मजे॥ बलदेवे। रतिबन्धविशेषे॥ यथा हस्ताभ्याञ्च समालिङ्ग्य नारींपद्मासनोपरि। रमेद्गाढंसमाकृष्य बन्धोयंपद्मसंज्ञकः॥ पुं०। न०। नलिने। अरविन्दे। कमले। तामरसे। राजीवे॥ वसन्तशीतभीताश्च कोकिलस्यवनेरुतम्। अन्तर्जलगताः पद्माः श्रोतुकामारवोत्थिताइति॥ पद्मके। इभाननविन्दुवृन्दे। व्यूहविशेषे। निधिप्रभेदे। दशार्बुदे १०००००००००० पद्मकाष्ठौषधौ॥ न०। पुष्करमूले॥ सीसके॥ चित्रकाव्यभेप्रदे॥ पद्मालक्ष्मीरस्मिन्नस्ति। अर्शआद्यच्॥ पद्यते। पद०। अर्त्तिस्तुस्वितिमन्॥

पद्मकम्। न० विन्दुजालके। हस्त्याननादिस्थविन्दुवृन्दे॥ पद्मकाष्ठे। पद्माकइतिपाजाइतिचभाषा॥ ऋषभाद्रिसमुद्भवे पद्मदलसमानवर्णे चन्दनविशेषे॥ पुं० सुगंधिपुष्पेवृक्षविशेषे॥ पद्मकंतुवरंतिक्तंशीतलं वातलंलघु। विसर्पदाहविस्फोटकुष्ठ

श्लेष्मास्रपित्तहृत् । गर्भसंस्थापनं रुच्यं वमिव्रणतृषाप्रणुत् ॥ पद्ममिव । इवेप्रतिकृताविति कन् ॥

पद्मकन्दः । पुं० शालूके । पद्ममूले ॥

पद्मकर्कटी । स्त्री० पद्मबीजे ॥

पद्मकर्णिका । स्त्री० पद्मकर्णिकायाम् ॥ पद्मस्यकर्णिकातिक्ताकषाया मधुराहिमा । मुखवैशद्यकृल्लध्वीतृष्णास्रकफपित्तनुत् ॥

पद्मकाष्ठम् । न० पद्मके । पीतके केदारजे । पाटलापुष्पसन्निभे ॥

पद्मकी । पुं० कृचपत्रके । भूर्जवृक्षे ॥

पद्मकेशरः । पुं० । न० किञ्जल्के ॥

पद्मखण्डम् । न० पद्मसमूहे ॥ तस्यसमूहइत्यधिकारे कमलादिभ्यःखण्डः ॥

पद्मगन्धि । न० पद्मके । पद्माकइति । पाजा० इतिचभा० ॥ पद्मस्यगन्धइवगन्धोस्य । उपमानाच्चेतीत्वम्

पद्मगर्भः । पुं० ब्रह्मणि ॥ पद्मोगर्भःजन्मकारणमस्य ॥ हरौ ॥ पद्मस्यहृदयाख्यस्यमध्येउपास्यत्वात् ॥

पद्मचारिणी । स्त्री० उत्तरापथभवस्थामख्यातवृक्षविशेषे । अव्यथायायाम् । अतिचरायाम् । चारस्याम् ॥ स्थलपद्मिन्याम् ॥ पद्मचरितुशीलमस्याः । सुपीतिणिनिः ॥

पद्मजः । पुं० चतुरानने ॥ मधुविशेषे ॥ पद्मजातः । जनीडः ॥

पद्मतन्तुः । पुं० मृणाले ॥

पद्मदर्शनः । पुं० श्रीवासे । धूपविशेषे ॥

पद्मनाभः । पुं० मधुरिपौ । विष्णौ ॥ पद्मंनाभौयस्य । अच्प्रत्यन्ववेत्यचाजितियोगविभागादच् । पद्ममिवंसुवर्तुलानाभिरस्यवा ॥ यद्वा । पद्मस्यहृदयपद्मस्यनाभौमध्येप्रकाशनात् पद्मनाभः । पृ० साधुः ॥ भाविजिनविशेषे ॥

पद्मनाभिः । पुं० पद्मनाभे । विष्णौ ॥ पद्मंनाभौयस्य । अजितियोगविभागमयासार्वत्रिकत्त्वान्नाच् ॥

पद्मनालम् । न० मृणाले ॥ इतिहेमचन्द्रः ॥

पद्मपत्रम् । न० पुष्करमूले ॥ पद्मस्येवपत्रमस्य ॥ अब्जदले ॥

पद्मपर्णम् । न० पद्मपत्रे ॥

पद्मपाणिः । पुं० ब्रह्मणि ॥ सूर्ये ॥ बुद्धे ॥ त्रि० । कमलहस्ते ॥ पद्मंपाणौयस्ये ॥

पद्मपुराणम् । न० पाद्मे ॥ तत्संख्याश्लोकायथा । पञ्चपञ्चाशत्साहस्रं-पद्माख्यंविपुलंमतमिति ॥

पद्मपुष्पः । पुं० कर्णिकारे । पिङ्काङ्गपक्षिणि ॥

पद्मप्रभः । पुं० वृत्तार्हद्विशेषे ॥ त्रि० । पद्मसमानप्रभायुक्ते ॥ *

पद्मप्रिया । स्त्री० लक्ष्म्याम् ॥ जरत्कारुमुनेःपत्न्याम् । मनसादेव्याम् ॥

पद्मानिप्रियाणियस्याः ॥
पद्मबन्धः । पुं० चित्रकाव्यविशेषे.॥
पद्मबन्धुः । पुं० सूर्य्ये । पद्मानांबन्धुः ॥
भ्रमरे ॥ पद्माबंधवोऽस्य ॥
पद्मभूः । पुं० ब्रह्मणि ॥
पद्ममुखः । त्रि० पद्मसदृशमुखयुक्ते ॥
पद्ममुखी । स्त्री० दुरालभायाम् ।
फञ्जिकायाम् ॥ पद्मतुल्यास्यविशि
ष्टायां ॥
पद्मयोनिः । पुं० धातरि । द्रुहिणे
। ब्रह्मणि ॥ पदमंयोनिरुत्पत्ति
स्थानंयस्य ॥
पद्मरजः । न० त्रसरेणौ । परमासव
ष्टके ॥
पद्मरागः । पुं० रक्तवर्णमणिविशेषे ।
शोणरत्ने । लोहितके । माणिक्ये ।
माणक इ० भा० ॥ पद्ममिवरा
गोऽस्य ॥ अनेकमन्येतिसमासः ॥
अस्योत्पत्त्यादयोयथा ॥ सौगन्धिक
कुरुविन्दस्फटिकेभ्यः पद्मरागस
म्भूतिः । सौगन्धिकजाभ्रमराञ्जना
मजम्बूरसद्युतयः ॥ कुरुविन्दभवाः
शबलामन्दद्युतयश्चधातुभिर्विद्धाः ।
स्फटिकभवाद्युतिमन्तोनानावर्णा
विशुद्धाश्च ॥ स्निग्धः प्रभानुलेपी
स्वच्छोर्चिष्मान्गुरुः सुसंस्थानः ।
अन्तः प्रभोतिरागोमणिरत्नगुणाः
समस्तानाम् ॥ कलुषामन्दद्युतयो
लेखाकीर्णाः सधातवः खण्डाः
। दुर्विद्धानमनोज्ञाः सशर्कराश्चेति
मणिदोषाः ॥ सर्पमणेर्लचणम्
भ्रमरशिखिकण्ठवर्णोदीपशिखास
मप्रभोभुजङ्गानाम् । भवतिमणिः
किलमूर्द्धनियोऽनर्घ्यैयः सविज्ञेयः
॥ यस्तंबिभर्त्तिमनुजाधिपतिर्नतस्य
दोषाभवन्तिविषरोगकृताः कदाचि
त्॥ राष्ट्रेचनित्यमभिवर्षतितस्यदेवः
शत्रूंश्चनाशयतितस्यमणेः प्रभावात्
॥ ६ ॥ षड्विंशतिसहस्राण्येकस्यम
णेः पलप्रमाणस्य । कर्षत्रयस्यविंशति
रुपदिष्टानिपद्मरागस्य ॥ अर्द्धपलस्यद्वा
दशकर्षस्यैकस्यषट्सहस्राणि । यश्चाष्ट
माषकधृतस्तस्यसहस्रत्रयंमूल्यम् ॥ मा
षकचतुष्टयंदशशतत्रयंद्वौतुपञ्चशत
मूल्यौ । परिकल्प्यमन्तरालेमूल्यंहो
नाधिकगुणानाम् ॥ वर्णन्यूनस्यार्द्धं
तेजोहीनस्यमूल्यमष्टांशम् । अल्प
गुणोवहुदोषोमूल्यात् प्राप्नोतिविं
शांशम् ॥ आधूम्रंव्रणवहुलंस्वल्प
गुणंचाप्नुयाद्द्विशतम् । इतिपद्म
रागमूल्यंपूर्वाचार्य्यैः समुद्दिष्टम् ॥
११ ॥ इत्येकोनाशीतिर्वाराह्याम्
॥ विशेषोयुक्तिकल्पतरौद्रष्टव्यः ॥
पद्मलता । स्त्री० मृणालिन्याम् ॥
पद्मलाञ्छनः । पुं० ब्रह्मणि । वेधसि ॥
भास्करे । रवौ ॥ धनदे ॥ गुह्यकेश्व
रे ॥ बुद्धभेदे । लोकेश्वरे ॥
पद्मलाञ्छना । स्त्री० तारायाम् ॥ लक्ष्

म्याम् । श्रियाम् ॥ वाग्देवतायाम् । सरस्वत्याम् ॥ पद्मंलाञ्छनंयस्याः पद्मवर्णकम् । न० पुष्करमूले ॥ त्रि० पद्मसमानवर्णवति ॥

पद्मवासा । स्त्री० लक्ष्म्याम् ॥ पद्मे वासोस्याः ॥

पद्मवीजम् । न० गालोड्ये । पद्माचे । कमलवीजइतिकमलगट्टा० इतिचभाषा ॥ पद्मस्यवीजम् ॥ पद्मवीजं हिमंस्वादुकषायंतिक्तकंगुरु ॥ विष्टम्भिवृष्यंरूक्षञ्च गर्भसंस्थापकंपरम् ॥ कफवातरंबल्यं ग्राहिपित्तास्रदाहनुत् ॥

पद्मबीजाभम् । न० मखान्ने । मखाना इ० भा० प्र०पा०नीयफले ॥

पद्मव्यूहः । पुं० पद्माकृतौ व्यूहविशेषे ॥ समविस्तृतपरिमण्डलो मध्योपविष्ट जिगीषुः पद्मव्यूहः । तेनराजापुरान्निर्गत्यसर्वदा कपटनिवेशनंकुर्यात् ॥

पद्महस्ता । स्त्री० श्रियि । लक्ष्म्याम् ॥ पद्मंहस्तेयस्याः ॥ त्रि० पद्मविशिष्टकरे ॥

पद्मा । स्त्री० फञ्जिकायाम् । भार्ग्यारे पद्माभंपुष्पमस्त्यस्याः ॥ श्रियि । रमायाम् ॥ चारम्याम् । पद्मचारम्याम् ॥ पद्मानुष्णाकटुस्तिक्ता कषायाकफवातजित् । मूत्रकृच्छ्राश्म शूलघ्नी श्वासकास विषापहा ॥ पन्नग्याम् । मनसायाम् । जरत्कारुमुनेः पत्न्याम् ॥ वर्त्तार्हन्मातरि ॥ कल्किदेवेनविवाहितायाम्बृहद्रथराजकन्यायाम् ॥ कुसुम्भ पुष्पे ॥ पद्ममस्त्यस्याः । अर्शआद्यच् ॥ यद्वा । पद्यते । पद० । अर्त्ति स्तुस्वितिमन् । टाप् ॥

पद्माकरः । पुं० तडागे । कासारे सपद्मागाधजलाशये ॥ योग्यतयानिष्पद्मे चमहाजलाशये ॥ पद्मानामाकरःउत्पत्तिस्थानम् ॥ क्वचित्पद्मशून्येपि योग्यतयाप्रयोगः ॥

पद्माक्षम् । न० पद्मवीजे ॥ त्रि० । पद्मलोचने ॥

पद्माख्या । स्त्री० पद्माह्वायाम् ॥

पद्माटः । पुं० चक्रमर्द्दके । उरणाचे । पवाड० इ० भा० ॥ पद्ममिवपद्मां वाद्मपसमूहंवा अटति अटगतौ । कर्मण्यण् ॥

पद्मालया । स्त्री० लक्ष्म्याम् । कमलायाम् ॥ पद्ममालयोऽस्याः ॥

पद्मावतिका । स्त्री० मात्रावृत्तविशेषे ॥ यथा । यद्यष्टचतुष्कलगणनिर्मित पदकरपदकर्णद्विजविहिता सापद्मावतिकाविबुध सुमहिता जगणविरहिता सुकविहिता । इहदशवसुभुवनैर्भवति विरामः सकलाभिमत फलायतदाफणिनायकपिंगलभणित सुमङ्गल रसिकमनः संविहितमदा ॥ यथा । विधुरेवविधुरयतिमर्म निकृन्ततिजनयतिशर्म्म नमर्मसदः चन्दनबन पवनोविकलयतिमनो द

लयतिमदनोष्ट्दयमदः। प्रियसखि ममनयनंपङ्कजनयनंकीर्त्ति सिंहधर धीरमथयदिमिलतिविशालं भवति तदालं विरहपयोनिधिसन्तरणम् ॥

पद्मावती। स्त्री० जरत्कारुमुने: प त्न्याम्। मनसादेव्याम्।नदीप्रभे दे। पद्मा० इ० गौ० भा० ॥ पद्मचारिण्योषधौ ॥ पद्मावतिका वृत्ते ॥ जयदेवकवेः पत्न्याम् ॥

पद्मावतीप्रियः। पुं० जरत्कारुमुनौ॥

पद्मासनम्। न० योगिनामासनविशेषे ॥ यथा। वामोरूपरिदक्षिणं नियमत: संस्थाप्य वामंतथा दक्षोरूपरि पश्चिमेनविधिनाधृत्वाकराभ्यां धृतम्। अङ्गुष्ठं हृदयेनिधायचिबुकंनासाग्रमालोकयेदेतद्व्याधिविकारनाशनकरंपद्मासनंप्रोच्यते इति॥ अपिच। ऊर्वोरुपरिविन्यस्यसम्यक्पादतलेशुभे। अङ्गुष्ठौचनिबध्नीयाद्धस्ताभ्यांव्युत्क्रमात्ततः॥ पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गममितिदेवीगीता ॥

पद्मासनः। पुं० ब्रह्मणि। कमलासने ॥

पद्मासना। स्त्री० लक्ष्म्याम्। पद्ममासनंयस्याः॥

पद्माह्वयम्। न० पद्मके। पद्माक० इ० भा० ॥

पद्माह्वा। स्त्री० पद्मचारिण्योषधौ ॥

पद्मी। पुं० हस्तिनि ॥ पद्मंबिंदुजालकमस्त्यस्य। इनिः॥ हरौ ॥ पद्मंहस्तेऽस्य ॥

पद्मिनी। स्त्री० पद्मसङ्घाते॥ नलिन्याम्। बिसिन्याम्॥ मूलनालदलोत्फुल्लफलैः समुदितापुनः। पद्मिनीप्रोच्यतेप्राज्ञैर्बिसिन्यादिश्चसास्मृता॥ पद्मिनीमधुरा तिक्ता कषाया शिशिरा परा। पित्तकृमिशोष वान्ति भ्रान्ति सन्ताप दोषहृत्॥ इतिराजनिर्घण्टोक्ता लक्षणगुणा:। अन्यत्रापि गुणायथा। पद्मिनी शीतलागुर्वी मधुरालवणा चसा। पित्तासृक्कफनुद्रूक्षावातविष्टम्भकारिणी॥ सरोरुहे॥ सरस्याम्॥ पद्मयुक्तदेशे ॥ पद्मानिसन्त्यत्र। पु० इनिः॥ स्त्रीविशेषे ॥ यथा। भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा अविरल कुचयुग्मा दीर्घकेशीकृशाङ्गी। मृदुवचनसुशीला नृत्यगीतानुरक्ता सकलतनुसुवेशा पद्मिनीपद्मगन्धा॥ हस्तिन्याम्॥ मृणाले॥ पद्मे॥ सरोवरे ॥

पद्मिनीकण्टकः। पुं० पद्मकांटा इति गौडेप्रख्याते॥ भावप्रकाशोक्तेक्षुद्ररोगविशेषे ॥

पद्मिनीकान्तः। पुं० रवौ॥

पद्मिनीखण्डम्। न० पद्मिनीनां

समूहे ॥ कर्म॰खण्ड : ॥

पद्मिनीवल्लभ : । पुं॰ सूर्ये ॥

पद्मेशय : । पुं॰ कृष्णे । विष्णौ ॥ पद्मेशेते । शीङ् । अधिकरणेशेते रित्यच् । शयवासेत्यलुक् ॥

पद्मोत्तर : । पुं॰ कुसुम्भे ॥

पद्मोत्तरात्मज : । पुं॰ जिनचक्रवर्त्ति विशेषे ॥

पद्मोद्भव : । पुं॰ अब्जयोनौ । सृज्ये ष्ठ ॥ पद्मेउद्भवोऽस्य ॥

पद्मोद्भवा । स्त्री॰ मनसादेव्याम् ॥

पद्य : । पुं॰ शूद्रे । अवरवर्णे ॥ न॰ श्लोके । कविकृतौ ॥ तल्लक्षणं यथा । गद्यंपद्यमिति प्राहुर्वाङ्मयं द्वि विधंबुधैः । वर्णमात्राप्रभेदेन पद्यं बहुविधंस्मृतम् ॥ अपिच । पद्यंच तुष्पदीतच्च वृत्तंजातिरिति द्विधा । वृत्तमक्षरसङ्ख्यातं जातिर्मात्रा कृ ताभवेदिति ॥ शाब्दे ॥

पद्या । स्त्री॰ वर्त्मन्याम् । बर्त्मनि ॥ पादायहिता । शरीरावयवाद्यत् । पद्यत्यतदर्थइतिपद्भाव : ॥ कर्दमे पदंहश्यमस्मिन् । पदमस्मिन्दृश्य मितिवायत् ॥ यद्वा ॥ पादौविध्य न्तिपद्या : शर्करा : । विद्ध्यत्यधनु षेतियत् ॥ स्तुताविति विश्व : ॥

पद्र : । पुं॰ ग्रामे ॥ जनपदे ॥ पद्य ते ऽस्मिन् । पद ॰ । स्फायितञ्ची तिरक् ॥

पद्व : । पुं॰ भूर्लोके ॥

पद्वा । पुं॰ पथि ॥ रथे ॥ पद्यते । पद॰ । स्नामदिपद्यर्त्यादिनावनिप् ॥

पद्वरी । स्त्री॰ गतौ । वनोरचेति ङीब्रौ ॥

पनस : । पुं॰ फलवृक्षवि॰ । कण्ट किफले । कटहलइतिफनस॰ इ तिचभाषा ॥ अस्यपर्यायादयोयथा पनस : कण्टकिफल : फणाशोति बृहत्फल : । पनसंशीतलंपक्वंस्नि ग्धंपित्तानिलापहम् ॥ तर्पणंबृंह णंस्वादुमांसलंश्लेष्मलंभृशम् । बल्यं शुक्रप्रदंहन्तिरक्तपित्तक्षतक्षयान् ॥ आमंतदेविष्टम्भिवातलंतुवरंगुरु । दाहकृन्मधुरंबल्यं कफमेदोविवर्धन म् ॥ पनसोद्भूतबीजानिवृष्याणि मधुराणिच । गुरूणिवद्धवर्चांसिसृ ष्टमूत्राणिसंवदेत् ॥ मज्जापनसजो वृष्योवातपित्तकफापह : । विशे षात्पनसंवर्ज्यं गुल्मिभिर्मन्दवह्नि भि : । अलंपनसपाकाय फलंकदल सम्भवम् ॥ इतिभावप्रकाश : ॥ कण्टाफलंसुमधुरं बृंहणंस्निग्धशीत लम् । दुर्जरंवातपित्तघ्नं श्लेष्मशुक्र बलप्रदम् ॥ तदेवसर्पिषायुक्तंस्निग्धं हृद्यंबलप्रदम् । रुद्दिघ्नंनचचक्षुष्यं वृष्यञ्चवातपित्तनुत् ॥ कण्टाफलम पक्वन्तुकषायंस्वादुवातलम् । रक्त पित्तहरंस्वादु तत्फलास्थ्यापितद्गु

याम् ॥ इतिराजवल्लभः ॥ कण्टकि ॥ वानरविशेषे ॥ पनाय्यतेस्तूयते । पन० अत्यविचमितमीत्यादिना असच् ॥ :

पनसतालिका । स्त्री० पनसस्यफले॥

पनसा । स्त्री० रोगप्रभेदे ॥ राक्षसी विशेषे ॥ वानरीविशेषे । नदीवि शेषे ॥

पनसिका । स्त्री० भावप्रकाशोक्तकर्ण मध्यजातव्रणेक्षुद्ररोगविशेषे ॥

पनायित : । त्रि० शस्ते ॥ पनाय्यते स्म । पण । पनच । क्त : । आ याद्ययआर्द्धधातुकेवा ॥

पनित: । त्रि० ईडिते । पनायिते ॥ पन० । क्त : । आयाभाव : ॥

पन्थक : । त्रि० पथिजाते ॥ पथः पन्थ चेतिवुन् ॥

पन्न : । पुं० अधोगमने । नीचैर्गतौ ॥ पनेः कृदृजृसीतिनन् ॥ त्रि० । च्युते । गलिते । पतिते ॥ पद्य तेस्म । पद० । क्त : । गत्यर्थेति कर्त्तरिचाक्त : ॥

पन्नग : । पुं० नागेभ्योभिन्नेपवनाशने : सर्पे ॥ पन्नं गच्छति । गम्लृ० सर्वत्रपन्नयोरुपसङ्ख्यानमितिडः ॥ पद्भ्यांनगच्छतीतिवाविग्रह : ॥ पद्मकाष्ठे ॥

पन्नगकेशर : । पुं० नागकेशरपुष्पे ॥ पन्नगाख्य:केशर : ॥

पन्नगाशन : । पुं० गरुडे । वैनतेये ॥ पन्नगान्अश्नातिअश० । ल्यु : ॥ पन्नगाअशनंयस्येतिवा ॥

पन्नगी । स्त्री० सर्पिण्याम् ॥ सर्पिणी क्षुपे । मनसादेव्याम् ॥

पन्नद्धा । स्त्री० चर्म्मपादुकायाम् ॥

पन्नध्री । चर्म्मपादुकायाम् ॥ पनद्धा पनद्धी० इतिचभाषा ॥

पपी : । पुं० सोमे । चन्द्रे ॥ सूर्ये ॥ पातिलोकमृपिबतिवा । पा० । या पो : किद्द्वेचेतिई : ॥

पपु: । पुं० पालके ॥ स्त्री० । धात्र्याम् ॥ पाति । पा० । कुर्भ्रश्चेतिचकारा दन्यतोपिकुर्द्वित्वेच ॥

पमरा । स्त्री० सल्लकी० इ० गौ० भा० प्र० गंधद्रव्यविशेषे ॥

पम्पा । दण्डकारण्यान्तर्गतसरोविशेषे ॥ ऋष्यमूकसमीपवर्तिन्यां पुष्करि ण्याम् ॥ यथा । पश्यलक्ष्मणपम्पा यावक : परमधार्मिक : । शनै : श्चालयतेपादान्प्राणिनां वधशङ्कया ॥ वकः किंवर्ण्यते रामयेनाहंनिष् कुलीकृत: । सहवासी विजानाति चेष्टितंसहवासिनामिति ॥ ओड्रदे शस्थनदीविशेषे ॥

पय : कन्दा । स्त्री० क्षीरविदार्याम् ॥ पय : कन्देयस्या : ।

पय:खल्ल: । पुं० चतुष्पदवहनीयेजला हरणार्थचर्म्मपुटविशेषे । दृतौ । प

स्वालङ्कतिरिंग० ॥

पयः पूरः । पुं० अपांसमूहे ॥

पयः प्रसादि।न० कतके।कङ्कआनिर्मली० इ० भा० ॥

पयःफेनी । स्त्री० । दुग्धफेनीक्षुपे ॥

पयश्चयः । पुं० अपांसमूहे । पूरे ॥ पयसांचयः ॥

पयः । न० क्षीरे । दुग्धे ॥ नीरे । जले ॥ पय्यते०पयतेवा । पयगतौपीङ्० पानेवा । सर्वधातुभ्यइस्यसुन् ॥

पयस्यः । पुं० मार्जारे ॥ त्रि० । पयःपानकर्त्तरि ॥ पयः पिबति । पा० । सुपीतिकः ॥

पयस्पाशम् । न० कुत्सितेपयसि ॥याप्ये पाशप् । पाशकल्पककाम्ये ष्विति विसर्गस्यसः ॥

पयस्यः । त्रि० पयोजाताज्यदध्यादौ ॥ पयोहिते ॥ पयसोविकारः । गोपयसोर्यत् ॥

पयस्या । स्त्री० दुग्धिकायाम् ॥ क्षीरकाकोल्याम् ॥ स्वर्णक्षीर्याम् ॥ सूर्यवल्ल्याम् ॥ कुटम्बिनो क्षुपे ॥ आमिषायामितिहैमचन्द्रः ॥

पयस्वान् । त्रि० पयस्विनि ॥ पयोऽस्यास्त्यमतुप् ॥

पयस्वला । स्त्री० छाग्याम् ॥ पयोऽस्यास्याम् । अन्येभ्योपीतिवलः ॥

पयस्विनी । स्त्री० नद्याम् ॥भारतवर्षस्यविशेषनद्याम् ॥ धेनौ ॥ विभावर्य्याम् । रजन्याम् ॥ काकोल्याम् ॥ दुग्धफेन्याम् ॥ क्षीरविदार्याम् ॥ छाग्याम् ॥ जीवन्त्याम् ॥ पयोस्त्यस्याम् ॥ अस्मायामेधेतिविनिः ङीप् ॥

पयोगडः । पुं० द्वीपे ॥ घनोपले ॥

पयोघनः । पुं० घनोपले ॥ इ०शा० ॥

पयोजन्मा । पुं० घने । मेघे ॥ पयसोजन्मयस्मात् ॥

पयोदः । पुं०मेघे ॥ पयोददाति॥ डुदाञ्० । कः ॥

पयोदबान्तम् । न० अभ्रःकणे

पयोधरः । पुं०वृक्षविशेषे । कोषकारे ॥ नारिकेले ॥ स्त्रीस्तने । कुचे ॥ यथा । यापांसुपाण्डुरवपुर्विरसापुरासीत् सैवालकाङ्कुरलतामधुनाविभर्त्ति वक्त्रं प्रसर्पति तनोर्वितनोति लक्ष्मीप्राय : पयोधरसमुन्नतिरत्रहेतुरिति ॥ कशेरुणि ॥ मेघे ॥ धरति । धृञ्० । अच् । पयसोधर : ॥ गुरुमध्यगतचतुर्मात्रिकप्रभेदे ॥ कर्णिकारवृक्षे इतिशब्दाम्बुधि : ॥

पयोधा : । पुं० समुद्रे ॥ जलाधारे ॥ पयोदधाति । डुधाञ्० । पयसिचेति धाओऽसि : ॥ मेघे ॥

पयोधि : पुं० समुद्रे ॥ पयांसिधीयन्तेऽत्र । डुधाञ् । कर्मण्यधिकरणेचेतिकि : ॥

पयोधिकम् । न० समुद्रफेने ॥

पयोनिधि : । पुं० समुद्रे ॥ क्षीराब्धौ ॥ पयांसिनितरांधीयन्तेऽत्र ।‍डुधाञ्० । अधिकरणेकिः ॥

पयोमुक् । पुं० मेघे ॥ पयोमुञ्चति ॥ मुच्लृ० क्विप् ॥

पयोलता । स्त्री० क्षीरविदार्याम् । पयसोलतेव ॥

पयोव्रतः । पुं० पयोमात्रपानरूपव्रतविशेषे । द्वादशाहसाध्ये विष्णुव्रतवि० ॥

पयोष्णिजाता । स्त्री० सरस्वतीसरिति ॥

पयोष्णी । स्त्री० तीर्थविशेषे ॥ बिन्ध्याचलदक्षिणेप्रसिद्धायांनद्याम् ॥ पयोष्णी सलिलंरुच्यंपवित्रंपापनाशनम् । सर्वपापहरं सौख्यबलकान्तिप्रदंलघ्विति राजनिर्घण्टः ॥

परः । पुं० देहादन्यस्मिन्नात्मनि ॥ ब्रह्मणआयुषि ॥ यथा । कालसङ्ख्यासमासेनपूर्वार्द्धद्वयकल्पिता । सएवस्यात्परः कालस्तदन्तेप्रतिसृज्यते ॥ निजेनतस्यमानेन चायुर्वर्षशतंस्मृतम् । तत्पराख्यंतदर्द्धञ्चपरार्द्धमभिधीयते ॥ अपिच । चौणिकल्पशतानिस्युस्तथा षष्टिर्द्विजोत्तमाः ॥ ब्रह्मणः कथितंवर्षंपराख्यंतच्चतत्पदम् ॥ इ० कूर्मपुराणे ५ अध्यायः ॥ मायातीतेपरमेश्वरे ॥ न० । पश्चाद्भाविनिकार्ये ॥ न० ॥ केवले ॥ मोक्षे ॥ यथा ॥ यस्यवाङ्मनसी स्यातांसम्यक्प्रणिहितेसदा । तपस्त्यागश्चसत्यञ्चसवै परमवाप्नुयादिति ॥ सत्तायाम् । परसामान्ये ॥ ब्रह्मणि ॥ त्रि० । प्रकृष्टे । श्रेष्ठे ॥ निरतिशये । उत्कृष्टे । प्रकृतिगुणासंस्पृष्टे । अप्रामाण्यशंकाकलङ्कशून्ये ॥ यथा एकाक्षरंपरम्ब्रह्म प्राणायामंपरंतपः । सावित्र्यास्तु परंनास्तिमौनात् सत्यंविशिष्यतइतिमनुः ॥ बहुकालीने ॥ अरौ । शत्रौ ॥ दूरे । अन्यस्मिन । व्यतिरिक्ते । स्वस्मादितरस्मिन् ॥ उत्तरस्मिन् ॥ पिपर्त्तिरोषम् । पूर्यतेऽनेनवा । पृ० । प० । ऋदोरप्० पुंसीतिघोवा ॥

परः शतः । त्रि० शतात्परस्मिन्सङ्ख्येये । शताधिके ॥ शतात्परः । पञ्चमीतियोगविभागात्समासः । राजदंतादिः । पारस्करादित्वात्सुट् ॥ परः शताद्यास्तेयेषांपरासङ्ख्याशतादिकात् ॥

परःसहस्रः । त्रि० सहस्रात्परस्मिन् । सहस्राधिके ॥ सहस्रात्परं । पञ्चमीति योगविभागात् ० स० राजदंतादिः । पारस्० सुट ॥

परकीयः । त्रि० परसम्बन्धिनि ॥ परस्येदम् । गहादिषुकुग् जनस्यपरस्य चेतिच्छः ॥

परकीया । स्त्री० नायिका भेदे ॥

परकृतिः । पुं पुरुषविशेषनिष्ठमिथोविरुद्धकथने । अर्थवादविशेषे ॥

परक्षेत्रम् । न० परभूमौ ॥ यथा । वृषापेहिपरक्षेत्रादायातिक्षेत्ररक्षकः । इति ॥ परपत्न्याम् ॥ परशरीरे ॥

परग्रन्थिः । पुं० पर्वावधौ । अङ्गुलिपर्वणि ॥ इ० हा० ॥

परच्छिद्रम् । न० परदोषे ॥ नीचः सर्षपमात्राणिपरच्छिद्राणिपश्यति । आत्मनो बिल्वतुल्यानिपश्यन्नपिनपश्यति ॥ इ० ग० पु० ॥

परजातः । पुं०कोकिले ॥ त्रि० । पराचिते । परेधिते ॥ परस्माज्जातः परपोषितत्वात् ॥

परजितः । त्रि० शत्रुणापराजिते ॥

परञ्जः । पुं० तैलयन्त्रे ॥ छुरिकाफले । फेने ॥ असौ ॥

परञ्जनः । पुं० वरुणे ॥ इ०तिस्मि चन्द्रः ॥

परञ्जयः । पुं० वरुणे ॥ त्रिकाण्डशेषः ॥ त्रि०शत्रुजयकर्त्तरि ॥

परतन्त्रम् । न०परकीयशास्त्रे ॥ व्यक्तं ॥ यथा । बुद्ध्यादिस्वकार्यमहङ्कारे जनयितव्येप्रकृत्यापूरोऽपेक्ष्यते अन्यथाक्षीणासतीनालमहङ्कारंजनयितुमितिस्थितिः । एवमहङ्कारादिभिरपिस्वकार्यजनने प्रकृत्यापूरमपेक्ष्यते । तेनप्रकृतिंपरामपेक्ष्यमाणं कारणमपि कार्योपजनने परतन्त्रं भवति । त्रि० । परवशे । पराधीने ॥ परस्तन्त्रंप्रधानंयस्य ॥ परेषां तन्त्रम् ॥

परतः । अ० परस्मादर्थे ॥ परस्मिन्परस्याम्परस्मात्परस्याः परः परावा । वसत्यागतोरमणीयंवा । विभाषापराऽवराभ्यामित्यतसुच् । तद्धितश्चासर्व्वविभक्तिरित्यव्ययत्त्वम् ॥

परत्र । अ० परलोके ॥ परस्मिन् । सप्तम्यास्त्रल् ॥

परत्रभीरुः । त्रि० धार्मिके । परकालभयशीले ॥

परत्त्वम् । न० परतायाम् । परव्यवहारकारणे ॥ तद्द्विविधम् । दिक्कृत्कृतङ्कालकृतञ्च दूरस्थेदिक्कृतं परत्त्वम् । ज्येष्ठेकालकृतंपरत्त्वमिति ॥

परदारः । पुं० परभार्यायाम् ॥ तद्गमनेदोषोयथा । परदाररताश्चैवपरद्रव्यहराश्चये । अधोधोनरकेयान्तिपीड्यन्तेयमकिङ्करैरिति ॥

परदुःखम् । न० अन्यजनपीडायाम् ॥

परदेवता । स्त्री० परमात्मनि । पर ब्रह्मणि ॥

परद्वेषी । त्रि० विद्वेषके । परद्वेष्टरि ॥

परधर्म्मः । पुं० स्वमप्रत्यविहिते ॥ पर-

स्यपरेषांवाधर्मः ।

परध्यानम् । न० ध्यानविशेषे ॥

परन्तपः । पुं० परतापिनि । शत्रुतापने ॥ जितेन्द्रिये ॥ परेषांकाम क्रोधलोभादिशत्रूणांतापजनके । अज्ञानशत्रुदमने ॥ परंशत्रुंकामक्रोधादिरूपंशत्रुगणंशौर्येणबलवता विवेकेनतपसाचभानुरिवतापयती तिविग्रहेतपसन्ताप इत्यस्मात्धा- त्वात्परेकर्मण्युपपदेद्विषत्परयोस्ता पेरितिखच्प्रत्ययः । खचिहृस्वः । मुम् ॥

परन्तु । अ० प्रागुक्तविरुद्धार्थे ॥

परपदम् । न० मुक्तौ ॥ श्रेष्ठस्थाने परस्यतत्पदस्य ॥

परपाकनिवृत्तः । पुं० परोद्देश्यकपाकरहिते । पञ्चयज्ञाकर्तरि ॥ यथा । गृहीत्वाग्निंसमारोप्यपञ्चयज्ञान्ननिर्वपेत् । परपाकनिवृत्तोऽसौमुनिभिः परिकीर्तितः ॥ इतिमिताक्षरा ॥

परपाकरतः । पुं० परपाकरुचौ ॥ प्रातः पञ्चयज्ञान्निर्वर्त्यपरान्नभोजिनि ॥ यथा । पञ्चयज्ञान्स्वयंकृत्वापरान्नमुपजीवति । सततंप्रातरुत्थायपरपाकरतस्तुसः ॥ परपाकनिवृत्तस्यपरपाकरतस्यच । अपचस्यचभुक्त्वान्नंद्विजश्चान्द्रायणंचरेत् ॥ इतिमिताक्षरायांप्रायश्चित्ताध्यायः ॥

परपिण्डादः । त्रि० पराम्नि । परान्नजीविनि ॥ परस्यपिण्डः । तमत्ति ॥ अद० । कर्मण्यण् ॥

परपुरुषः । पुं० विष्णौ ॥ परश्चासौ पुरुषश्च ॥ अन्यपुंसि ॥ उपनायके ॥

परपुष्टः । पुं० कलकंठे । कोकिले ॥ परेणवायसेनपुष्टः पालितः ॥ त्रि० । अन्यपालिते । परेण पोषिते ॥

परपुष्टमहोत्सवः । पुं० आम्रे ॥ परपुष्टानांमहोत्सवोयस्मिन् ॥

परपुष्टमहोत्सवा । स्त्री० वेश्यायाम् ॥ परपुष्टेमहोत्सवोयस्याः ॥

परपुष्टा । स्त्री० पण्याङ्गनायाम् । वारनार्याम् ॥ परैः पुष्टा ॥

परपूर्वा । स्त्री० पुनर्भ्वाम् । स्वैरिण्याम् । परोऽन्यःपूर्वोभर्तायस्याः सा । परपूर्वाःस्त्रियस्त्वन्याःसप्तप्रोक्तायथा क्रमम् । पुनर्भूस्त्रिविधातासां स्वैरिणीतुचतुर्विधेति नारदः । पतिंहित्वाऽपकृष्टंस्वमुत्कृष्टं यानिषेवते । निंद्यैवसाभवेल्लोकेपरपूर्वेतिचोच्यतेइतिमनुः ॥

परप्रतिनप्ता । स्त्री० (इतिहैम

परप्रपौत्रः । पुं० वृद्धप्रपौत्रे ॥(चन्द्रः ॥

परभाषा । स्त्री० अपशब्दे । म्लेच्छितें ॥

परभागः । पुं० गुणोत्कर्षे ॥ सुमस्पदि ॥ शेषांशे ॥ शोभातिशये

॥ परभागोऽभिवृद्धिर्णद्वयमंसर्गजारुचि:

परभुक्ता । स्त्री० अन्यपुरुषसम्भोगविशिष्टायाम् ॥ परभुक्ताञ्चकान्ताञ्च योभुङ्क्ते सनराधम :। सपच्यते कालसूत्रे यावच्चन्द्रदिवाकरौ ॥ इत्यादिनाब्रह्मवैवर्त्ते श्रीकृष्णजन्मखंडे १८५ ध्यायेविशेषोद्रष्टव्य : ॥

परभृत् । पुं० काके ॥ परंबिभर्त्ति डुभृञ्० । क्विप् ॥

परभृत: । पुं० कोकिले पिके ॥ परेणकाकेनभृत: ॥ त्रि० ॥ परपोषिते ॥

परम् । अ० नियोगे ॥ त्रपे ॥ किन्त्वर्थे ॥ केवले ॥

परम : । पुं० प्रणवे ॥ त्रि० । परे । उत्कृष्टे ॥ अग्रेसरे ॥ प्रथमे ॥ अकारे ॥ प्रकृष्टे । उत्पत्तिविनाशशून्यस्वप्रकाशपरमानन्दरूपे । निरतिशयपुरुषार्थपर्यवसायिनि ॥ प्रधाने ॥ पराउत्कृष्टामायस्यस : ॥

परमगति : । स्त्री० मुक्तौ ॥ त्रि० मोक्षहेतौ ॥ यांविप्रा:सर्वत : शान्ताविशुद्धाज्ञाननिश्चया : । गतिंगच्छन्तिसन्तुष्टास्तामाहु : परमांगतिमितिमोक्षधर्म : ॥

परमन्तप : । न० इन्द्रियजये ॥ मनसश्चेन्द्रियाणाञ्चह्यैकाग्र्यंपरमंतप: । प्राणायामात्राह्मणस्यत्रयोपिविधिवत्कृता: । व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमंतप : ॥ आलोचने ॥

परमपद : । पुं० न० श्रेष्ठस्थाने ॥ परदेवताचरणे ॥ पद्यतेज्ञानिभि : प्राप्यते इति पद: परमश्चासौपदश्चेति

परमब्रह्म । न० परमेश्वरे । नारायणे ॥

परमम् । अ० अनुज्ञायाम् । अनुमतौ । शां० इ० भा० ॥ परंमिमीतेमिनोतिमीनातिवा । डम् ॥

परमर्षि : । पुं० भेलादृषिविशेषे ॥ सप्तर्षिषु ॥

परमहंस : । पुं० आत्मा नात्मविवेकिपरिव्राजिब्राह्मणे । संवर्तकारुणिश्वेतकेतुदुर्वासाऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतौ ॥ मुख्यजानामयंधर्मो यद्विष्णोर्लिङ्गधारणं । बाहुजातोरुजाताना मयंधर्मो नविद्यते ॥ * ॥ चतुर्विधावधूतेषुतुरीये ॥ यथा । चतुर्णामवधूतानां तुरीयोहंसउच्यते । त्रयोन्ये भोगयोगाढ्यामुक्ता : सर्वेशिवोपमा : ॥ हंसोनकुर्यात् स्त्रीसङ्गंनवाधातुपरिग्रहम् । प्रारब्धमश्नन्विहरेन्निषेधविधिवर्जित : ॥ त्यजेत्स्वजातिचिह्नानि कर्माणिगृहमेधिनाम् । तुरीयोविचरेत्क्षोणीं नि : संकल्पोनिरुद्यम: । सदात्मभावसंतुष्ट : शोकमोहविवर्जित : । निर्निकेतस्तितिक्षु : स्यान्नि : शंकोनिरुपद्रव : ॥ नार्पणंभक्ष्यपेयानांनतस्यध्यानधारणा: । मु

कोविरक्तोनिर्द्वन्द्वोहंसाचारपरोयति
रिति महानिर्वाणतन्त्रम् ॥ ..
परमागति : । स्त्री० साक्षान्मोक्षहेतौ
॥ यथा ।.कषायपक्तिः कर्माणिज्ञा
नन्तुपरमागतिरिति ॥
परमाणु : । पुं० परिमण्डले। परमेणौ
। यतोऽणुर्नास्ति सपरमाणुरित्यर्थः
॥ जालान्तरगतेभानौयत्सूक्ष्मंदृश्य
तेरज : । तस्यय : षष्ठकोभागः पर
माणु : सउच्यते ॥ * ॥ सौत्रान्ति
कादिमतेचतुष्टयेचपृथिव्यादिपरमा
णव: खरस्नेहोष्णेरणस्वभावा : । तथा
हि कठिनस्वभावा:पृथिवीपरमाणव:
। स्नेहस्वभावा:अपांपरमाणव: । उष्ण
स्वभावास्तेजस : परमाणव: । ईर
णस्वभावावायुपरमाणव : इति ॥
परमश्वासावणुश्च ॥ * ॥ पृथिव्या
दिभूतचतुष्टयानांद्व्यणुकानामवय
व : परमाणु : । सचनित्योनिरवय
वस्तत : सूक्ष्ममपिनास्ति । यथा ।
नित्याऽनित्याचसाद्वेधा नित्यास्याद
णुलक्षणा । अनित्यातुतदन्यास्यात्
सैवावयवयोगिनी ॥ पारिमाण्डल्य
नामकतत्परिमाणन्तु नकस्यापिका
रणम् । यथा । पारिमांडल्यभिन्ना
नांकारणत्वमुदाहृतम् ॥ जलादिप
रमाणुरूपस्यनित्यत्वम् । पार्थिवपर
माणुरूपस्याऽनित्यत्वम् । यथा ।
जलादिपरमाणौतन्नित्यमन्यत्रहेतु

कम । इ० भा० प० ॥ तैरेवपरमा
णुभिराद्यपादानैर्द्व्यणुकत्रसरेणवा
दिक्रमेणस्थूलक्षितिजलतेजोमरुत:
सृजतिपरमेश्वर : । यथा । अयोज
नंपरमाणुकर्मतथाचसर्गाद्यकालीनं
द्व्यणुकारम्भकपरमाणुकर्मयत्नजन्य
प्रयत्नवदात्मसंयोगजन्यंवाकर्मत्वाद
स्मदादिशरीरकर्मवदिति कुसुमाञ्ज
लि : ॥ प्रलयेऽतिस्थूलस्थूलनाशान
न्तरंपरमाणुक्रियाविभागपूर्वसंयोग
नाशादिक्रमेणद्व्यणुकनाशानात्तिष्ठ
न्तिपरमाणवएवेति । यथा ।दोधूय
मानास्तिष्ठन्तिप्रलयेपरमाणव : ।इ
ति प्राचीनकारिका ॥ तस्यमहत्वा
भावादतीन्द्रियत्वम् । यथा ॥ मह
त्त्वंषड्विधेहेतुरिति० भा० प० ॥ *
कालविशेषे ॥ यथा , सकाल : पर
माणुर्वैयोभुङ्क्तेपरमाणुताम् । सतो
विशेषभुग्यस्तुकाल : सपरमोमहा
न् ॥ अणुर्द्वौपरमाणूस्यात्त्र्यसरेणु
स्त्रय : स्मृत : । जालार्करश्म्यवग
त : खमेवानुपतन्नगात् ॥ इ० श्री
भागवते ३स्कन्धे ११ अध्याय : ॥
अस्यार्थ : । सत : प्रपञ्चस्यपरमाणु
तांपरमाणववस्थांयोभुङ्क्तेसकाल :
परमाणु : तस्यैवाविशेषंसाकल्यंयो
भुङ्क्तेसपरममहान् । अयमर्थ : ।
ग्रहर्क्षताराचक्रस्थइत्यादिनायत्सूर्य
पर्यटनं वक्ष्यति तत्रसूर्योयावतापर

माणुदेशमतिक्रामतितावान्काल : परमाणु : । यावताचह्वादशराश्या त्मकंसर्वंभुवनकोषमतिक्रामति । सपरममहान्संवत्सरात्मक: तस्यैवा ह्न्यायुगमन्वन्तरादिक्रमेणद्विपरार्द्धा न्तत्त्वमिति। तथाच पञ्चमेसूर्यगत्यैव कालादिविभागंवच्यति ॥ इदानीं द्रव्यणुकादिलचणपूर्वकंमध्यमकाला वस्थांकथयतिद्वौपरमाणूत्रणु : स्या त्त्रयोणवस्त्रसरेणु: सतुप्रत्यचद्रष्टव्या ह्जालार्केति । गवाचप्रविष्टेष्वर्कर श्मिष्ववगत : कोसौयोतिलघुत्वेन खमेवानुपतन्त्रगात्गत: । नगामि तिपाठेखमेवानुपतन्नवगत: नतुगां पृथ्वीम् । इति श्रीधरस्वामिन : ॥

परमाणवङ्गक : । पुं० विष्णौ ॥

परमात्मा । पुं० चिदात्मनि । स्वप्रका शज्ञानस्वभावात्मनि । कार्यकारण विलचणेनित्यशुद्धबुद्धमुक्तस्वभावे ॥ देहादिबुद्ध्यन्तानामविद्ययात्मत्वेन कल्पितानांपरम: प्रकृष्टउपद्रष्टृत्वा दिविशेषणविशिष्टआत्मा ॥ अन्नम यप्राणमयमनोमयविज्ञानमयानन्द मयेभ्य : पञ्चभ्योऽविद्याकल्पितात्म भ्य : परम : प्रकृष्टोऽ कल्पितोब्रह्म पुच्छंप्रतिष्ठेत्युक्त: आत्माच सर्वभूता नांप्रत्यक्चेतन : । उत्तम : पुरुषस्त्व न्य : परमात्मेत्युदाहृत : । परामा मायाशक्ति र्वायस्यस : । अतति सर्वंव्याप्नोतीत्यात्मा । परमश्चासा वात्माचेतिवा ॥ परमात्मातत्पदा र्थ : सर्वोपाधिविवर्जित : ॥ यदुक्तं श्रीदेवीभागवते । याशक्ति : पर मात्मासौयोसौसापरमात्मता । अ- न्तरंनैतयो : कोपिसूक्ष्मं वेदचनार देति ॥ अंतरंभेद : सूक्ष्ममपिनवे द ॥ अस्यध्यानं यथा । हृत्पद्ममध्ये पुरुषंपुराणं सत्यात्मकंसर्वजगत् स्व रूपम् । ध्यायामिनित्यंपरमात्मसंज्ञं चिद्रूपमेकंवचसामगम्यमिति ॥

परमाद्वैत : । पुं० विष्णौ ॥ मतविशेषे ॥ यथा । निर्गुणंवामभागेचसव्यभा गेऽद्भुतानिजा । मध्येनाथ : स्वयं ज्योतिस्तज्ज्योतिर्मतमोहरमिति ॥

परमानन्द : । पुं० अविनाशिनिरति शयत्वाभ्यामुत्कृष्टे सुखविशेषे ॥ पर मश्चासावानन्दश्च ॥ अतिशयाह्लादे ॥ ब्रह्मानन्दे ॥ सार्वभौमादिहि रण्यगर्भान्तानन्दानामुत्तरोत्कर्ष पर मावधित्वात् ॥

परमान्नम् । न० चीरिकायाम् ॥ पायसे । खीर इ० भा० ॥ परमञ्च तदन्नञ्च ॥ यद्वा । परमाणामुत्तमानांदेवादी नामन्नम् ॥

परमायस्त : । त्रि० अतिश्रान्ते ॥ पर मश्चासौ आयस्तश्च ॥

परमायु : । पुं० विंशत्यधिके वर्षशते । जीवितकाले ॥ यथा । शतंवर्षा

त्रिविंशत्यानिशाभिः पञ्चभिः स ह । परमायु रिदंप्रोक्तं नराणांकरि णामिह। अब्दाद्वात्रिंशदश्वानांशुनां द्वादशवत्सराः। पञ्चविंशतिवर्षाणि खरस्यकरभस्यच॥ चतुर्विंशतिरब्दा नांवृषस्यमहिषस्यच । मृगशूकरव स्तादिपशूनांषड्दशान्विताः॥इ० शब्दमाला ॥

परमायुषः। पुं० असनद्रुमे ॥

परमारः। पुं० पवांर इ० भाषां० प्र० क्षत्रियजातिविशेषे० ॥

परमार्थः। पुं० सत्ये । एकरूपेणावस्थि तेर्थे ॥ परमार्थोद्विधाप्रोक्तो मयाहे स्वर्गवासिनः। एकः स्वभावतः सा क्षात्परमार्थः सदैवतु ॥ सशिवः सत्यचैतन्यसुखानन्तस्वलक्षणः। अपरः कल्पितः साक्षात् ब्रह्मण्यध्यस्तमा यया ॥ व्यावहारिकसत्यार्थं साक्षात् सत्यार्थचिद्घनं। उभयंवक्तिवेदस्तु मार्गमिवंवदन्तिहि ॥ इत्युक्तं ब्रह्म गीतायांब्रह्मणाब्रह्मदर्शिना ॥ २ ॥ अध्याये ॥ चतुर्ष्वर्थेषूत्कृष्टे मोक्षे । यथार्थे ॥ प्रपञ्चोयदिविद्येत निवर्त्ते तनसंशयः। मायामात्रमिदंद्वैतम द्वैतंपरमार्थतः ॥ परमश्चासावर्थश्च ॥ स्वर्गादिषुधर्मादिषुवापरमोमोक्षो र्थः परमार्थः ॥

परमार्थवित्। त्रि०।तत्त्वदर्शिनि ॥ अश्व मेधशतसहस्राण्यथकुरुतेब्रह्मघातल क्षाणि । परमार्थविन्नपुण्यै र्नचपापै र्लिप्यतेविमलः ॥

परमार्हतः। पुं० जैनराजर्षिविशेषे ॥

परमाशक्तिः। पुं०साम्यावस्थमायोपा धिकब्रह्मरूपिण्याम् ॥ यदाहगीता सु । अपरेयमितस्त्वन्यांप्रकृतिंवि द्धिमेपराम् ।जीवभूतांमहाबाहोय येदंधार्यतेजगदिति ॥

परमृत्युः। पुं०काके। वायसे ॥ परे भ्योमृत्युरस्य ॥

परमेशः। पुं० परशिवे॥ परमात्मनि ॥ परमश्चासावीशश्च । परमाइन्द्रादि भ्योप्युत्कृष्टाब्रह्मादयःतेषामीशः।

परमेश्वरः। पुं०महेश्वरे । शिवे ॥ पर मात्मनि । सर्वजडवर्गसत्तास्फूर्त्ति प्रदत्वेनबाध्यबाधकभावशून्ये । सर्व दोषानस्कंदिते । परश्चासावीश्वर श्च । परमउत्कृष्टःईश्वरेभ्योहिरण्य गर्भादिभ्यः सचासावीश्वरश्च ।

परमेश्वरी। स्त्री। दुर्गायाम्। परदेव तायाम् । पराम्बायाम् ॥ परमा चासावीश्वरीच। यद्वा। परमाणां ब्रह्मादीनामीश्वरीनियन्त्री ॥

परमेष्ठी। पुं० धातरि। पितामहे। अब्ज योनौ ॥ परमेव्योम्निचिदाकाशेब्रह्म पदेवातिष्ठतिष्ठा०। परमेस्थःकिदि तीनिः। तत्पुरुषेकृतीत्यलुक्। स्था स्थिन्स्थूणामितिषत्वम्॥ गुरुविशेषे। यथा। आदौसर्वत्रदेवेशिमन्त्रदःपर

मोगुरु: । परापरगुरुस्त्वंहिपरमेष्ठी त्वहंगुरुरितिहृन्नीलतन्त्रे २ पटल: ॥ मन्त्रदातागुरु:प्रोक्तोमन्त्रस्तुपरमोगुरु: । परापरगुरुस्त्वं हिपरमेष्ठिगुरुस्त्वहमितितन्त्रान्तरम् ॥ शालग्रामविशेषे ॥ यथा ॥ परमेष्ठीचशुक्राभ : पद्मचक्रसमन्वित: । चित्राकृतिस्तथापृष्ठे शुषिरश्चातिपुष्कलम् ॥ परमेष्ठीलोहिताभश्चक्रमेकंतथायुतम् । विम्बाकृतिस्तथा रेखाशुषिरश्चातिपुष्कलमिति ब्रह्मपुराणम् ॥ अपिच । परमेष्ठीचशुक्लाभश्चक्रपद्मसमन्वित : ॥ सवर्तुलस्तथापीत : पृष्ठे चशुषिरंध्रुवमिति पुराणसंग्रह : ॥ परमेष्ठीतुरक्ताभश्चक्रपद्मसमन्वित: । द्विधाकृतस्तथापृष्ठे शुषिरश्चापिवर्तुलम् ॥ पीतवर्णयुतोवापिभुक्तिमुक्तिवरप्रद इति वैश्वानरसंहिता ॥ जिने । बुद्धे ॥

परमेष्ठिनी । स्त्री० ब्राह्म्याम् । वामनहाटी० इ० गौ० भा० ॥ परमेष्ठिन : शक्तौ ॥

परमेष्वास :। पुं० उत्कृष्टधनुषि ॥ त्रि० महाधनुर्धरे ॥

परम्पर :। पुं० मृगविशेषे ॥ तनयस्य प्रपौत्रे इतिमेदिनी ॥ प्रपौत्रादावितिहेमचन्द्र : ॥

परम्परा । स्त्री० परिपाट्याम् । अनुक्रमे ॥ वधे । हिंसायाम् ॥ अन्वये । सन्ताने ॥ परम्पराशब्दोऽव्युत्पन्नं प्रातिपदिकम् ॥ यद्वा । परंपिपर्ति । पृ० । अच् । श्वपचजारवदितिवत् । तत्पुरुषेकृतीति बहुलग्रहणादमोलुक् । पृ० ॥

परम्पराकम् । न० इष्ट्यांपशुघाते । शमने । प्रोक्षणे ॥ परम्परायाअकनं । अक० । भावेघञ् । अश्वतेर्घञ् वा ॥ यद्वा । परमतिशयेऽव्ययम् । परंपर : श्रेष्ठ : आकोऽस्मात् ॥

परम्परीण :। त्रि० परम्पराप्राप्ते ॥ परांश्चपरतरांश्चअनुभवति । परोवरपरम्परेत्यादिनाख : । प्रकृते : परम्परभावोनिपातनात् ॥ लक्ष्मींपरम्परीणांत्वंपुत्रपौत्रीणतांनयेतिभट्टि: ॥

परीणम् । न० पर्वणि ॥ पर्णान्तरसे ॥ पर्णसिरायाम् ॥ घृतकम्बले ॥ इतिहेमचन्द्र : ॥

परुः पुं० केशराजे । भृङ्गरोदरे ॥

परलोक :। पुं० स्वर्गादिलोकान्तरे । शत्रुजने ॥ परश्चासौलोकश्च ॥

परलोकगम :। पुं० मृत्यौ ॥

परवञ्चनम् । न ० परस्यव्याजेनवशीकरणे ॥ परस्यवञ्चनम् ॥

परवान् । त्रि ० पराधीने ॥ पर : स्वामीअस्यास्ति । तदस्यास्त्यस्मिन्निति मतुप् । मादुपधायाश्चमतोर्वोऽयवादिभ्यइतिवत्त्वम् ॥

परवश :। त्रि० अस्वतन्त्रे । परायत्ते

। पराधीने ॥ परस्यवश : ॥

परवश्य: । त्रि० पराधीने । परस्याधीनताङ्गते ॥

परवाणि : । पुं० धर्माध्यक्षे ॥ वत्सरे । वर्षे ॥ कार्त्तिकेयस्यवाहने ॥

परवैराग्यम् । न० फलभूतवैराग्ये ॥ तत्परमपुरुषख्यातेर्गुणवैतृष्ण्यमितियोगसूत्रम् ॥ १६ ॥ तत् वैराग्यं परम्उत्कृष्टम्प्रथमंवैराग्यं विषयविषयम् । द्वितीयन्तुगुणविषयमुत्पन्नगुणविवेकख्यातेरेवभवति । निरोधसमाधेरनुकूलत्वात् । इ० भोज: ॥ सम्प्रज्ञातसमाधिपाटवेन गुणत्रयात्मिकात् प्रधानाद्विविक्तस्य पुरुषस्यख्याति : साक्षात्कारउत्पद्यतेततस्ताशेषगुणत्रयव्यवहारेषु वैतृष्ण्यं यद्भवतितत्परं श्रेष्ठं फलभूतंवैराग्यम् । तत्परिपाकनिमित्ता श्चित्तोपशमपरिपाकादविलम्बेनकैवल्यमिति ॥ परञ्चतद्वैराग्यंच ॥ संसारमेवनिस्सारंदृष्ट्वासारदिदृक्षया प्रव्रजन्त्यकृतोद्वाहा: परंवैराग्यमाश्रिता : इति विविदिषासन्न्यासपरंवाक्यम् ॥

परव्रत : । पुं ० धृतराष्ट्रे ॥

परशम् । न० रत्नविशेषे ॥

परशव्यम् । त्रि० परशवेहिते ॥ उपगवादिभ्योयत् ॥

परशु: । पुं० सुधितौ । कुठारे ॥ परं शृणाति ॥ शृ हिंसायाम् । आङ्परयो : खनिशृभ्योडिच्चेतिकु : ॥

परशुधर : । पुं० गणेशे । लम्बोदरे ॥ धरति । धृञ्० । अच् । परशोर्धर: ॥ त्रि० परशुधारिणि ॥

परशुराम : । पुं० जामदग्न्ये । भार्गवे ॥ अवतारेषोडशमेपश्यन् ब्रह्मद्रुहोनृपान् । त्रि : सप्तकृत्व : कुपितोनि : क्षत्रामकरोन्महीम् ॥ परशुनाराम : ॥ अयंत्रेतायुगादाव तीर्णः ॥ अस्योत्पत्त्यादिकमुक्तंकालिकापुराणे ८५ अध्याये यथा । मार्कण्डेयउवाच अथकालेव्यतीतेतु यमदग्निर्महातपा : । विदर्भराजस्य सुतांप्रयत्नेन जितांस्वयम् ॥ भार्यार्थे प्रतिजग्राह रेणुकांजक्षणान्विताम् । सातस्मात् सातस्मात् सुषुवेपुत्रांश्चतुरो वेदसंमतान् ॥ रुमण्वन्तंसुषेणञ्च विश्वंविश्वावसुंतथा । पश्चात्तस्यां स्वयंजज्ञेभगवान्मधुसूदन : ॥ कार्त्तवीर्यवधायाशुशक्राद्यै : सकलै : सुरै: । याचित : पञ्चम : सोभूत्तेषांरामाख्यस्तुय : ॥ भारावतरणार्थाय जात : परशुनासह । सहज : परशुस्तस्य तंजहातिकदाचन ॥ अयंनिजपितामह्या चरुभुक्तिविपर्यया त् । ब्राह्मण : क्षत्रियाचारोरामोभूत् क्रूरकर्मकृत् ॥ सवेदान खिला

मुत्रास्वाधनुर्वेदांशसर्वेश : । स्वतातात्क्रतक्रत्योभूतवेदविद्या विशारद इति ॥ विशेष : पाद्मोत्तरखण्डे द्रष्टव्य : ५० अध्याये ॥

परशुरामक : । पुं॰ भृगूणांपतौ । जामदग्न्ये ॥ स्वार्थेक : ॥

परश्वध : । पुं॰ कुठारे । फरसा॰ इ॰ भा॰ । परश्वयनम् । टुओश्वि॰ । अन्येष्वपीतिड : । परश्वंधयति । धेट्॰ । आतोनुपेतिक : ॥

परश्वान् । पुं॰ द्वन्दशूकविशेषे ॥

परश्व : । अ॰श्व: परदिने । आगामिदिनात्परदिने । परसों इ॰ भा॰ ॥ परश्चतत्श्वश्च । श्व:परंवा । राजदन्तादि : ॥ अतिक्रान्ते पूर्वतरेदिने परश्वोजात इति प्रयोगेगौण : ॥

परसंज्ञक : । पुं॰ आत्मनि ॥

परस्तात् । अ॰ परतोर्थे ॥ परस्मिन् परस्याम्परस्मात्परस्या:पर:परावा वसत्यागतोरमणीयंवा । विभाषा परावराभ्यामितिपक्षे अस्ताति: ॥

परस्परम् । अ॰ अन्योन्यार्थे ॥ परस्परं विप्रानमंति । कर्मव्यतिहारेसर्वनाम्नोद्वे वाच्ये । असमासवद्भावे पूर्वपदस्थसुप : सुर्वक्तव्य : । कस्कादित्वात्विसर्जनीयस्यस : ॥

परस्परपराहतम् । न॰ सङ्कुले । क्लिष्टे ॥ विरुद्ध वाक्ये । मातामेवन्ध्येति विरुद्धार्थवचने ॥ पराघाति । इन्ते : कर्मणिक्त : । परस्परेणपराहतम् ॥

परस्मैपदम् । न॰ तङानौ वर्जयित्वा लादेशेषु तिप्॰ तस् झि । सिप् थस् थ॰ । मिप् वस् मस् एतेषु॰ शतृक्वसु॰ इत्येतयोश्च ॥ तादर्थ्ये चतुर्थीति योगविभागात् समास : । परस्मैचेतिचतुर्थ्याअलुक् ॥

परस्वध: । पुं॰ परश्वधे । कुठारे ॥ परस्यस्वंदधाति । काष्ठदण्डधारकत्वात् । डुधाञ्॰ । आतोनुपेतिक : ॥

परा । अ॰ विमोचे॥ प्राधान्ये ॥ प्रातिलोम्ये ॥ धर्षणे ॥ आभिमुख्ये ॥ भृशार्थे ॥ विक्रमे ॥ गतौ ॥ वधे ॥ इ॰ मेदिनी ॥ अपिच । वधेगतौ दर्शनेच विक्रमाभि मुखेभृशे । अधीनमोक्षणप्रातिलोम्यकेषु परामत: ॥ यथा । वधेपराहत : । गतौ परागत: । दर्शने परादृष्ट: । विक्रमे पराक्रान्त: । अभिमुखेप रावृत्त: । भृशे पराजित: । अधीने पराधीन : । मोक्षणे पराकृत : । प्रातिलोम्ये पराङ्मुख इति ॥

परा । स्त्री॰ वन्ध्याकर्कोटक्याम् ॥ नाभिरूपमूलाधारात् प्रथमोदितनादस्वरूपवर्णे ॥ मूलाधारात् प्रथममुदितोयस्तुतार : पराख्य : ॥ इत्यलङ्कारकौस्तुभे १ किरण : ॥

पराक : । पुं॰ खड्गे ॥ क्षुद्रे ॥ रोग

विशेषे ॥ जन्तुभेदे ॥ व्रतविशेषे ॥ यथाहमनुः । यतात्मनोप्रमत्तस्य द्वादशाहमभोजनम् । पराकोनाम कृच्छ्रोयंसर्वपापापनोदनइति ॥ द्वादशाहोपवासेनपराकः सर्वपापहा । एकैकंवर्धयेत्पिण्डंशुक्ले कृष्णेचह्रास येदिति ग० पु० ॥ पराकेपरस्वधेन वः । पराकाख्यप्राजापत्यपरस्वकतुल्य त्वात् ॥

पराकरणम् । न० पराक्रियायाम् । पराङ्मुखकरणे ॥

पराकृत :। त्रि० प्रत्याख्याते ॥ पराकारि । कृञ : क्त :

पराकपुष्पी । स्त्री० अपामार्गे ॥ पराक्चिपुष्पाख्यस्याः ॥

पराक्रम :। पुं० विक्रमे ॥ सामर्थ्ये ॥ सहसि, बले । शौर्ये ॥ उद्योगे ॥ अभियोगे ॥ निष्क्रान्ताविति शब्० ॥ पराक्रमणम्० पराक्रम्यते अनेनवा । क्रमु० । हलश्चेति० घञ् । नोदात्तोपदेशस्येतिनवृद्धिः ॥ नसामरत्तःसुगुणायकल्पते नदानमर्थोपचिते पुवर्तते । नभेदसाध्याबलदर्पिताजनाः पराक्रमस्त्वेवममेहरोचते इति रामायणम् ॥

पराक्रिया । स्त्री० पराकरणे ॥ तथाचाहुर्वेदान्तविदः । योविप्रजातिंचैतन्यादन्यदृस्त्वभिमन्यते । कैवल्यात्तंपराकुर्यात् विप्रजातिपराङ्मुखम् ॥ ब्राह्मणोहमिति भ्रान्त्याहृस्यतिसवादिषु । प्रवृत्तोलभतेजन्मत्येवास्यपराक्रियेति ॥

पराग:। पुं० सुमनोरजसि । कुसुमरेणौ ॥ धूलौ ॥ स्नानीये ॥ गिरिप्रभेदे ॥ विख्यातौ ॥ उपरागे ॥ चन्दने ॥ परागच्छति । गम्लृ० । अन्येभ्योपीतिडः ॥ स्वच्छन्दगमने इति शब्० ॥

परागति:। स्त्री० मोक्षे ॥ यद्गत्वाननिवर्तन्ते सैवप्रोक्तापरागतिः ॥ स्वर्गे ॥ कर्मफले ॥ प्रकृष्टायाङ्गतौ ॥ पराचासौगतिश्च ॥

परागृद्धी । त्रि० पराभिध्याने ॥

पराङ्गद :। पुं० शिवे ॥

पराङ्गव :। पुं० समुद्रे ॥

पराङ्मुख :। त्रि० विमुखे । पराचीने ॥ पराञ्चति० अनभिमुखोभवति । अञ्चु० । ऋत्विगित्यादिना क्विन् । पराक्मुखमस्य ॥

पराक् । त्रि० प्रतिलोमगमनाश्रये ॥ परा० अञ्चति । अञ्चु ॥ क्विन् ॥ पश्चादर्थे ॥

पराचित :। पुं० कोकिले ॥ त्रि० । औदासीन्येनपरपुष्टे । परिस्कन्दे । परैधिते ॥ परेणआचित :। चिञ्० । क्त :॥

पराचीन :। त्रि० विमुखे । पराङ्मुखे ॥ पराञ्चति अनभिमुखोभवति ।

ग्रष्ठ ० । ऋत्विगादिनाक्विन् तत : स्वार्थेविभाषाग्वे रदिक् स्त्रियामिति ख : ॥

पराजय : । पुं ० रणेभंगे । पराभवे । पराजयनम् ॥ जिश्रभिभवे । पराजयनम् एरच् ॥ सर्वत्रजयमन्विच्छे त् पुत्रादिकंपराजयमित्यङ्गीकार : ॥

पराजित : । त्रि० पराभूते । निर्जिते । जिते ॥ पराजीयतेस्म परैराजीयतेस्मवा । जिश्रभिभवे । क्त : ॥

पराजिते ॥ परेणश्राजीयतेस्म । जि० । क्त : । यद्वा । परेषामाज : क्षेपणंजातमस्य । ता० । इतच् ॥

पराञ्च : । पुं० परञ्चार्थे ॥

पराडीनम् । न० पक्षिण : परावृत्यगमने ॥

परात्पर : । त्रि० श्रेष्ठतमे ॥ विश्वात्मनि ॥ परात्ब्रह्मादेरपिपर: श्रेष्ठ: । दूरार्थकत्वात् पञ्चम्या: स्तोकादिभ्यइत्यलुक् ॥

परात्प्रिय : । पुं० तृणविशेषे ॥ त्रि० प्रियोत्तमे ॥

परात्मा । पुं० प्रत्यगभिन्नब्रह्मणि ॥उत्सर्यानात्मन : सर्वानन्वयव्यतिरेकत: । प्रत्यक्प्रधानयादृष्ट्यानिजात्मानमवेत्परम् ॥परश्चासावात्माच । परमात्मा ॥

पराद्न: । पुं० पारसीकाश्वे ॥ इति त्रिकाण्डशेष : ॥

पराधीन : । त्रि० परवशे । परतन्त्रे । नाथवति ॥ परस्मिन्नधि सप्तमीशौण्डैरितिसमास : । श्रषडक्षेतिख : ॥ स्वाधीनवृत्ते : साफल्यंनपराधीनवृत्तिता । येपराधीनकर्माणोजीवन्तोपिचतेमृता : । इति गरुड़पुराणे ११३ अध्याय : ॥

परानन्द: । पुं० निरतिशयसुखस्वरूपे ॥ परश्चासावानन्दश्च ॥ परानन्दावाप्तिश्चागमाचार्यात्मानुभवप्रत्ययत्रयस्यैकविषयत्वेनभवति । यथाहुरागमविद : । शास्त्रदृष्टिर्गुरोर्वाक्यंतृतीय : स्वात्मनिश्चय : । निरन्तरानुसन्धानंपरानंदाप्तिहेतव इति ॥

परानसा । स्त्री० चिकित्सायाम् ॥

अन्तकाल : । पुं० द्विपरार्द्धावसानेपरस्यकार्यब्रह्मण : अन्तकाल : विनाशकाल : ॥

परान्नम् । अन्यस्वामिकभक्तपिष्टकादौ ॥ परस्य ृष्टान्ने ॥ परान्नंपरवासञ्च नित्यंधर्मरतस्त्यजेत् ॥ त्रि० । परपिण्डादे । परान्ने नोपजीविनि ॥ परस्यश्रन्नम् । परान्नंनित्यमस्य । श्रर्श्रादिभ्योऽच् ॥

परापम् । त्रि० परेपि ॥ परागताश्रापोऽस्मिन् । अवर्णान्तादै तिपक्षे अपवृद्धभाव : ॥

परापरम् । न० परूषके ॥ त्रि० परस्मिन्नपरस्मिंश्च ॥

परापरगुरु : । पुं० गुरुविशेषे ॥ पार्वत्यां ॥

परापरज्ञ : । त्रि० विद्याविद्याविभागज्ञे ॥

परप्रकृति: । स्त्री० अपराप्रकृतेर्भिन्नायांप्रकृतौ ॥ अपरेयमितस्त्वन्यांप्रकृतिंविद्धिमेपराम् । जीवभूतांमहाबाहोययेदंधार्यतेजगत् ॥ क्षेत्रज्ञलक्षणायाम्० पराशक्तौ ॥

पराभव : । पुं० तिरस्कारे । न्यक्कारे । तिरस्क्रियायाम् । परिभवे ॥ यथा । विश्वेश्वरमजंदेवंजगत : प्रभवाप्ययम् । भजंतियेपुष्कराक्षं नतेयान्तिपराभवमिति ॥ ब्राह्मणस्याऽपशब्दभाषणफलंपराभव इति विवरणकार : ॥ विनाशे ॥ पराजये ॥ विपदि ॥ चत्वारिंशत्सङ्ख्यकेवत्सरे ॥ यथा । पार्थिवेन्द्रपसैन्यैश्चसमस्तै : खण्डमण्डले । प्रपीड्यन्ते जना: सर्वेभयभीता:पराभवे ॥

पराभिध्यान: । त्रि० परागुदर्शिनि ॥

पराभुक्ति : । स्त्री० पातालादिकलाभाधुवर्त्ति विचित्रैश्वर्य्य सम्पन्नतत्तद्भुवनाधिपत्ये ॥

पराभूत : । त्रि० जिते । प्राप्ताभिभवे । पराजिते । पराभूयतेस्म । भू ० । क्त : ॥ *

परामर्श: । पुं० विवेचनायाम् । युक्तौ । वितर्के । विमर्षणे । तर्के । अर्थे ॥ स्मरणज्ञाने ॥ व्याप्तिविशिष्टपक्षधर्मताज्ञाने ॥ यथा । व्याप्यस्यपक्षधर्मत्वधी : परामर्शउच्यते । अस्यार्थ : । व्याप्तिविशिष्टस्य पक्षेणसहवैशिष्ठ्यावगाहिज्ञानमनुमितिजनकम् । तत्रव्याप्य : पक्ष इतिज्ञानम् । पक्षोव्याप्यवान् इति ज्ञानंवा । इति सिद्धान्तमुक्तावली ॥ सचानुमतौ व्यापार : । यथा । व्यापारस्तुपरामर्श: करणंव्याप्तिधीर्भवेत् । अस्यार्थ: । अनुमायामनुमितौव्याप्तिज्ञानंकारणंपरामर्शोव्यापार : । तथाहि । येनपुरुषेणमहानसादौधूमेवह्नेर्व्याप्तिर्गृहीतापश्चात्सएवपुरुष: क्वचित्पर्वतादौअविच्छिन्नमूलांधूमरेखांपश्यति तदनन्तरं धूमोवह्निव्याप्य इत्येवंरूपं व्याप्तिस्मरणंतस्यपुरुषस्यभवतिपश्चाच्चवह्निव्याप्यधूमवान्पर्वतइतिज्ञानंभवति सएवपरामर्श इत्युच्यते ॥ इतिसिद्धान्तमुक्तावली ॥

परामृतम् । न० गोघृते ॥ वर्षणे ॥

परामृष्ट : । त्रि० सम्बद्धे । सम्बन्धयुक्ते ॥ कृतपरामर्शे ॥ विवेचिते ॥ परामृश्यते । मृश० । क्त : ॥

परास्बा । स्त्री० पराम्बिकायाम् । साम्यावस्थमायोपाधिक ब्रह्मरूपिण्याम् ॥

परायण : । त्रि० अभीष्टे ॥ तत्परे ॥ आश्रये ॥ यथा । शुद्धाभवन्ति यद्यन्येऽन्त्यजाःकृष्णपरायणाइति । न० आसङ्गवचने ॥ परमुत्कृष्टमय नंस्थानमस्य । ब्रह्मणि ॥ परमुत्कृष्टं पुनरावृत्तिरहितंचतदयनंमुक्तप्राप्यं स्थानंचेतिपरायणम् । पूर्वपदात्संज्ञायामितिणत्वम् ॥

परायत्तः । त्रि० पराधीने ॥

परारि अ० पूर्वतरवर्षे गततृतीयवर्षे ॥पूर्वतरे वत्सरेइत्यर्थेसद्यःपरुत्परार्येषमइत्यादिनापूर्वतरस्यपरभावः आरिचसंवत्सरे ॥

परारि. । त्रि० परश्वौ ॥

परारित्ना त्रि० पूर्वतरवत्सरसम्बन्धिनि ॥ परारिभवइत्यर्थेचिरपरुत् परारिभ्यस्त्नोवक्तव्यः ॥

पराकः । पुं० कठिल्ले । कारवेल्ले ॥

पराकरुकः । पुं० अश्मनि ॥

परार्थानुमानम् न० परप्रतिपत्त्यर्थेऽनुमानवचने । यत्रस्वयमेवधूमादग्निमनुमायपरप्रतिपत्त्यर्थं पञ्चावयवंवाक्यंप्रयुङ्क्तेतस्मिन्॥यथा ।पर्वतोवह्निमान् धूमात्योयोधूमवान्ससोग्निमान् यथामहानसम् तथा चायम् तस्मात्तथेति । अनेनप्रतिपादिताल्लिंगात्परोप्यग्निं प्रतिपद्यते ॥

परार्द्धम् । न० ब्रह्मणआयुषोऽर्द्धे ॥ यथा । निजेनतस्यमानेनआयुर्वर्षशतंस्मृतम् । तत् पराख्यंतदर्द्धञ्चपरार्द्ध मभिधीयते ॥ इ० वि- पुं० ॥ हृदये ॥ परस्यब्रह्मणोर्द्धं स्थानम् । तस्मिन्हिपरब्रह्मोपलभ्यते ॥ दशमध्यसंख्यायाम् । **** । १००००००००००००००००० ॥ स्थानात्स्थानन्दशगुणमेकस्माद्गुणितेद्विज । ततोष्टादशमेभागेपरार्द्धमभिधीयते ॥

परार्ध्यः । त्रि० प्रधाने । श्रेष्ठे ॥ परस्मिन्नर्द्धे भव : ॥ अर्द्धाद्यत् । परावराधमोत्तमपूर्वाच्च ॥

परावतम् । न० परुषके । फालसा इ० भा० ।

परावर : त्रि० परमात्मनि । ब्रह्मणि । सर्वात्मके ॥ परंहैरण्यगर्भपदम् अवरंयस्मात् ॥ यद्वा । परंहिरण्यगर्भादिअवरंमनुष्यादि परञ्चअपरञ्चपराक्रम्० सर्वात्मकंब्रह्मेत्यर्थः ।।

परावर्त्तः । पुं० परिवर्त्ते । विनिमये ॥

परावह : । पुं० वायौ : षष्ठस्कन्धे ॥ ईदृक्च : पुरुषोन्यादृक् यमितासमदृक् तथा । त्वामयप्रतिहृच्चैव स्यास प्तर्षे : परावह : ॥ सप्तवायुन्तर्गत सप्तमवायौ ॥सतुपरिवहवायोरूर्द्ध स्थित : ॥

पराविद्धः । पुं० कुवेरे ॥ त्रि० । परैःशत्रुभिराविद्धे । अविद्धे च ॥

पराविद्या । स्त्री० ब्रह्मविद्यायाम् ॥ यथा । परांविद्यांगृणामुनेययाब्रह्मावगम्यते । यत्तदद्दश्यमग्राह्य मगोचरगां भुवम् । अचचुः श्रोत्रंतद पाणिपादंनित्यंविभुंसर्वगतं सुसूक्ष्ममिति ॥

परावृत्तः । अपावृत्ते ॥

परावृत्तिः । स्त्री० निवृत्तौ ॥ उल्लङ्घने ॥

परावेदी । स्त्री० वृहत्याम् ॥

पराशक्तिः । स्त्री० पराप्रकृतौ ॥ परात्मायाम् ॥ यथाह्जनमेजयं प्रति व्यासः । यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेववा । तत्तदेवावगच्छत्वं पराशक्त्यंशसम्भवम् । एतेचान्येचराजानः पराशक्तेरुपासकाः । संसारतरुमूलस्य कुठारा अभवन्नृपेति ॥ पराचासौशक्तिश्च ॥

पराशरः । पुं० व्यासमुनेर्जनके । शक्तिमुनेः पुत्रे ॥

पराश्रयः । त्रि० अन्यावलम्बे ॥ परआश्रयोयस्य ॥

पराश्रया । स्त्री० वृक्षोपरिजातलताविशेषे । वृन्दायाम् । वृक्षादन्याम् ॥

परासनम् । न० मारणे । वधे ॥ असु० । ल्युट् ॥

परासिसुः । त्रि० परासितुमिच्छौ ॥ अस्यतेः सन्नन्तादुप्रत्ययः ॥

परासुः । त्रि० मृते ॥ परागताअसवोस्मात् ॥

परासुता । स्त्री० मृतत्वे ॥ निद्रापरवशतायाम् ॥

परास्कन्दी । पुं० चौरे ॥ परान्आस्कन्दितुंशीलमस्य । स्कन्दिर्० । सुपीतिणिनिः ॥

परास्तः । त्रि० अपास्ते । अवज्ञाते । निरस्ते । पराजिते ॥ पराअस्यतेस्म । असु० । क्तः ॥

पराहतः । त्रि० दूरीभूते ॥ ताडिते पराहन्यतेस्म । हन० । क्तः ॥

पराहन्ता । स्त्री० समष्ट्यहङ्कारे । पराहन्तारूपश्चवृहदारण्यके । योवेदाहंब्रह्मास्मीति बृसिरूपउक्तः । तथाच सृष्टिसमयेयः प्रथमोभावो व्यक्तस्यपरावाणीरूपोऽयमस्मीत्युत्पन्नः पराहन्तारूपः सोहङ्कारः सदेवसौम्येदमग्रआसी दित्यत्रोक्तात् सतउत्पन्न इतिनीलकण्ठः ॥

पराह्णः । पुं० अपराह्णे ॥ अरपञ्चतदहश्चेतिविग्रहः ॥

परि । अ० सर्वतोभावे ॥ वर्ज्जने ॥ व्याधौ ॥ शेषे ॥ कृत्यंभूताख्याने ॥ भागे ॥ वीप्सायाम् ॥ आलिङ्गने लक्षणे ॥ दोषाख्याने ॥ निरसने ॥ पूजायाम् ॥ व्याप्तौ ॥ भूषणे ॥ उपरमे ॥ शोके ॥ सन्तोषभाषणे ॥

परिकथा । स्त्री० वाङ्मयभेदे ॥ यथा । अथवाङ्मयभेदाः स्युरस्मयुव

गडकथाकथा। आख्यायिकापरिक थेति। त्रिकाण्डशेषः॥

परिकम्प:। पुं० भये॥ कम्पे॥ परितः कम्पः॥

परिकर:। पुं० सङ्घे। गणे॥ पर्यङ्के॥ परिवारे॥ वस्त्रादिनाप्रगाढगात्रिकावन्धे॥ यथा। सकृदुच्चरितंयेनहरिरित्यक्षरद्वयम्। बद्धः परिकरस्तेनमोक्षायगमनंप्रतीति॥ युद्धोचितपरिधाने॥ समारम्भे॥ विवेके॥ सहकारिणि॥ यत्ने॥ अलङ्कारवि०॥ यथा॥ विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तुसः॥ चर्थाद्विशेष्यस्य। उदाहरणम्। यथा॥ महौजसो मान धना धनार्चिताधनुर्भृतः संयतिलब्धकीर्त्तयः। नसंहतास्तस्यनभिन्नवृत्तयः प्रियाणिवाञ्छन्त्यसुभिः समीहितुम्॥ यद्यप्यपुष्टार्थस्य दोषतमभिधानात्तन्निराकरणेनपुष्टार्थस्वीकारः कृतः तथाप्येकनिष्ठात्वेनवहूनांविशेषणानामेवमुपन्यासेवैचित्र्यमित्यलङ्कारमध्येगणितः॥ परिक्रियते। कृविक्षेपे। ऋदोरप्॥ परिक्रियतेऽनेन। पुंसीतिघः॥

परिकर्त्तिका। स्त्री० गुदेकर्त्तनवत्पीडायाम्॥

परिकर्त्ता। पुं० अनूढज्येष्ठाकनिष्ठाविवाहस्ययाजकेऽस्यद्वाहतत्त्वम्॥

परिकर्म्म। पुं० सेवके। परिचारके॥ इतिरत्॥ न०। अङ्गसंस्कारे। कुङ्कुमादिनाशरीरशोभाधायककर्म्मणि॥ परिमलवर्जनार्थी क्रियापरिकर्मस्नानोद्वर्त्तनादीत्यर्थः॥

परिकर्म्मी। त्रि० सेवके॥ इ०हे०॥

परिकल्पित:। त्रि० कृते॥

परिकल्प्य:। त्रि० परिकल्पितुंयोग्ये॥

परिकाङ्क्षित:। त्रि० तपस्विनि॥ इतिशब्०॥

परिकीर्ण:। त्रि० व्याप्ते॥ परितः कीर्णः॥

परिकूटम्। न० पुरद्वारकूटके। नगरद्वारकूटके। हस्तिनखे। इत्यनो० ह०इ० भा०॥

परिक्रम:। पुं० विहारे। क्रीडार्थंपद्भ्यांसञ्चरणे॥ प्रदक्षिणे। परिकर्मा०इ०भा०परिक्रमणम्। क्रमु०। घञ्॥ नोदात्तोपदेशस्येतिनवृद्धिः॥

परिक्रमसह:। पुं० छागले॥

परिक्रयणम्। न० नियतकालंभृत्या स्वीकरणे॥ परितःक्रयणम्॥ क्रयणस्यसमीपंवा॥

परिक्रिया। स्त्री० परिसर्पे परिजनादिनावेष्टने॥ परिकरणम्। कृञः शच्। रिङ्शयग्लिङ्क्षु॥

परिक्रान्त:। त्रि० परिश्रान्ते॥

परिक्षित्। पुं० नृपान्तरे॥ अभिमन्युपुत्रे॥ अश्वमेधे॥ परितोदुरितंक्षी

यतीयेनेतिव्याख्यानात् ॥

परिक्षिप्तः । त्रि० जलादिनाऽवक्षिप्ते । परिखादिनावेष्टिते । निवृते ॥ परितःक्षिप्यतेस्म । क्षिप० । क्तः सर्वतोभावेनक्षेपयुक्ते ॥

परिखा । स्त्री० खेये । राजधान्यादीनांखातरूपवेष्टने । श० दृ० दू० भा० ॥ अस्यामानम् । प्रत्येकपरिखामानं शतहस्तंप्रशस्तकम् । परितःशिविराखागम्भीरंदशहस्तकम् ॥ सङ्केतपूर्वकश्चैवपरिखाद्वारमीप्सितम् । शत्रोरगम्यंमित्रस्यगम्यमेवसुखेनचेति ॥ परितःखन्यते० परितःखाता-वा । अन्येभ्योपीतिडः ॥

परिखातः ।पुं० गर्त्ते ॥

परिख्यातः । त्रि० विख्याते ॥

परिगणितः । त्रि० सर्वतोभावेनगणनायुक्ते ॥

परिगत : । त्रि० प्राप्ते ॥ विस्मृते ॥ ज्ञाते ॥ चेष्टिते ॥ गते ॥ वेष्टिते ॥

परिगृह्या । स्त्री० नार्याम् ॥

परिग्रह : । पुं० परिजने । पुत्रमित्रकलत्रादौ ॥ यथा । क्वचिदुपकृतिःकर्त्ताऽमीभिःकृताक्रियतेथवानचभुविभवन्त्येतेपुंसांसुखायपरिग्रहाः । दधतिविरहमर्मच्छेदंतदर्थमपार्थकंतदपिविपुलायासाःसीदंत्यहोवतजन्तवः ॥ पत्न्याम् ॥ स्वीकारे ॥ मूल्ये ॥ मूले ॥ शापे । शपथे ॥ राहुवक्त्रस्थभास्करे ॥ प्रतिग्रहे । सैन्यपश्चाद्भागे ॥ सङ्ग्रहे ॥ शास्त्राऽनिषिद्धमार्गेणदेहयात्रानिर्वाहकाधिकभोगसाधनस्वीकारे । शरीरधारणार्थमस्य इत्येवं पिपरोपनीतवाह्योपकरणे ॥ परिगृह्यतेपरिग्रहणम्परिगृह्णातिवा ग्रहवृदृनिश्चगमश्चेत्यप्‌विभाषाग्रहइत्यज्वा ॥ परिगृह्यतेऽनेनेतिकरणव्युत्पत्तिर्हस्ते॥

परिघः । पुं० योगविशेषे ॥ तत्रजातस्यफलंयथा । उत्पत्तिकालेपरिघोयदिस्यान्नरस्तदावंशकुठारकल्पः । असत्यसाक्षीचमयाविहीनःस्वल्पानुभोक्ताविजितारिपक्षः ॥ लोहांगी० दृ० प्र० अस्त्रविशेषे । परिघातने । लोहबद्धलगुडे ॥ दर्गले ॥ घाते । परिघाते ॥ मुद्गरे ॥ शूले ॥ कलसीषतथाकाचघटेगोपुरऌग्ननोरिति शब्दरत्नावली ॥ परिहननम् ० परिहन्यतेऽनेनवा । हन० । परौघञ्च्यप् । घादेशश्च ॥

परिघातः । पुं० अस्त्रे ॥ हनने ॥ परितोघात : ॥

परिघातन : । पुं० परिघे । लोहबद्धलगुडे ॥ लोहबद्धयष्ट्याम् ॥ परितोघातइत्यनेन । ल्युट् ॥ । न० सर्वतोभावेनहनने ॥

परिघोष : । पुं० निनादे । शब्दे ॥ अवाच्ये ॥ जलदध्वनौ ॥ परितोघोषोऽत्रवा ॥

परिचयः। पुं० संस्तवे। विशेषेणज्ञाने ॥ परत्वाद्०भा० ॥ परिसमन्तात्चयनम् । चिञ् ० । एरच् ॥ अभ्यासे ॥

परिचरः। पुं० युद्धकालेपरप्रहाराद्रथरक्षके ॥ परिधिस्थे। सेनायांराजोदण्डनायके ॥ प्रयाणेसामन्तस्थापकर्षेभृत्यन्ये ॥ रथगजादेरक्षपादादिरक्षकेष्०केचित् ॥ सेवके ॥ परितश्चरति। पचाद्यच् ॥

परिचरणम्। न० गुर्वादिशुश्रूषायाम् ॥

परिचर्य्या। स्त्री० सेवायाम्। उपासने। शुश्रूषायाम्॥ परिचरणम्। चर०। परिचर्या परिसर्येतिशोयक्चनिपात्यते ॥

परिचायकः। पुं० लक्षणे ॥

परिचाय्यः। पुं० यज्ञाग्नौ। समूह्ये। उपचाय्ये ॥ परिचीयते। चिञ्०। अग्नौपरिचाय्येतिसाधुः। अग्निरिहनज्वलनः। किन्त्वग्निधारणार्थमिष्टकाचयनेननिर्मितंस्थलम्। तस्मिन्नभिधेये ॥

परिचारः। पुं० परिचरणे ॥ परिचरेर्घञ् ॥

परिचारकः। त्रि० भृत्ये। दासेरे। दासे। सेवके ॥ परिचरति। चर०। ण्वुल् ॥

परिचारिणी। स्त्री० परिचरणशीलायाम्। परिचरणवित्तायाम् ॥ परिचरतीचरेर्णिनिः ॥ ङीप् ।

परिचाय्यः। त्रि० सेव्ये ॥

परिचितः। त्रि० परिचयविशिष्टे। ज्ञाते। समृद्धे

परिचेयः। त्रि० परिचयनीये। परिचेतव्ये ॥

परिच्छदः। पुं० परिजने। पोष्यवर्गे ॥ वसनाभरणादौ। गृहोपकरणे ॥ युद्धोपकरणे ॥ आच्छादने ॥ परिच्छाद्यतेऽनेन। छद०। पुंसीतिघः। छादेर्घेद्व्युपसर्गस्येत्युपधाह्रस्वः ॥

परिच्छन्दः। पुं० परिच्छदे ॥

परिच्छन्नः। त्रि० परिच्छदविशिष्टे ॥ सर्वतोभावेनाच्छादिते। संवृते ॥

परिच्छित्तिः स्त्री० परिमाणे। इयत्तायाम् ॥

परिच्छिद्य। अ० निश्चित्य ॥ *

परिच्छिन्नः। त्रि० परिच्छेदविशिष्टे। अवधिप्राप्ते ॥ परिमिते। एकदेशवर्त्तिनि ॥ परिच्छिन्नत्वंत्रिविधम्। देशतःकालतोवस्तुतश्चेतिभेदात्। तत्रदेशान्तरनिष्ठाभावप्रतियोगित्वरूपंदेशतःपरिच्छिन्नत्वं। कालान्तरनिष्ठाभावप्रतियोगित्वं कालतःपरिच्छिन्नत्वम्। वस्त्वन्तरनिष्ठभेदप्रतियोगित्वलक्षणंवस्तुपरिच्छिन्नत्वमिति ॥

परिच्छेदः। पुं० ग्रन्थसन्धौ। ग्रन्थस्य विच्छेदे ॥ यथा। सर्गोवर्गः परिच्छे

दोघाताध्यायाङ्कसंग्रहाः । उच्छ्वासः परिवर्त्तश्चपटलःकाण्डमस्त्रियाम् ॥ स्थानंप्रकरणंपर्वाह्निकश्चग्रन्थसन्धयः ॥ अवधौ । सीमायाम् ॥ परिच्छिन्नत्वंपरिमितत्त्वंबापरिच्छेदः ॥

परिजनः । पुं० अनुचरे ॥ परिवारे । पोष्यवर्गे । नियतसन्निधिवर्त्तिपरिचारके ॥ यथा । किरीटंवैरिञ्चंपरिहरपुरःकैटभभिदःकठोरेकोटीरेस्खलसिजहिजम्भारिमुकुटम् । प्रणम्रेष्वेतेषुप्रसभमभियातस्यभवनंहरस्याभ्युत्थानेतवपरिजनोक्तिर्विजयते ॥ ब्रह्मसम्बन्धिमुकुटमग्रेत्यज ॥ विष्णोः कठिनेमुकुटेस्खलसि । इन्द्रस्यमुकुटंत्यज । एतेषुब्रह्मादिषुप्रणम्रेषुसत्सु हठात्गृहमागतस्यशिवस्याभ्युत्थानेसतितवसखीनामुक्तिः शोभतेइत्यर्थः ॥

परिजय्यः । त्रि० जेतुंशक्ये ॥ परितोजय्यः ॥

परिजल्पितम् । न० दशाङ्गचित्रजल्पान्तर्गतद्वितीयजल्पे ॥ यथा । प्रभोर्निर्दयताशाठ्यंचापलाद्युपपादनात् । स्वविचक्षणता व्यक्तिर्भङ्ग्यास्यात्परिजल्पितम् ॥

परिजातः । त्रि० परिगते ॥ सम्बद्धे ॥ परितोजातः ॥

परिज्ञानम् । न० तत्त्व ज्ञाने ॥

परिज्मा । पुं० चन्द्रमसि ॥ बह्नौ ॥ परिजीयते । जनी० श्वन्नुक्षन्पूषन्प्लीहन्नितिसधिः ॥ त्रि० । परितोगन्तरि ॥ अजेःपरिपूर्वस्यश्वन्नुक्षन्नित्यादिनामनृप्रत्ययोऽकारलोप०माद्युदात्तत्वश्चनिपात्यते०वेदभाष्ये ॥

परिज्वा । पुं० इन्दौ ॥ याज्ञिके ॥ परिचारके ॥ उज्ज्वलदत्तोहिश्वन्नुक्षन्नित्यत्रपरिज्मेत्यस्यस्थानेपरिज्वेतिपठित्वाज्ञुःसौत्रोधातुःपरिपूर्वोयणादेशइत्याह ॥

परिडीनकम् । न० सर्वतःपतनरूपे । पक्षिगतिविशेषे ॥

परिणतः । त्रि० परिणामप्राप्ते । पक्वे ॥ परिणमतिस्म । णम० । अकर्मकत्वात्क्तः ॥ सर्वतोभावेननते ॥ पुं० । तिर्यग्घातिगजे ॥ तिर्यग्दन्तप्रहारस्तुगजः परिणतोमतइतिहलायुधः ॥

परिणतिः । स्त्री० परिणामे ॥

परिणद्धः । त्रि० विशाले । परिरब्धे । आलिङ्गिते । बद्धे ॥

परिणयः । पुं० विवाहे ॥ परिणयनम् । णीञ्० । एरच् ॥

परिणयनम् । न० विवाहे ॥

परिणामः । पुं० विकारे । गुणानांप्रादुर्भावे । प्रकृतेरन्यथाभावे ॥ फलकाले ॥ परिपाकावस्थायाम् ॥ परिणमनम् । णम० । घञ् ॥ चरमे । शेषे ॥ पूर्वरूपपरित्यागेनरूपा

न्तरापत्तिः परिणामः ॥

परिणामदर्शी । त्रि० चरमकालप्रेक्षिणि । पश्चाद्दर्शिनि । विषयादेः शेषद्रष्टरि ॥

परिणामवादः । पुं० वादविशेषे ॥ ब्रह्मैश्नामरूपप्रपञ्चभेदेनपरिणमतेमृत्तिकेवोदञ्चनादिभावेन । अतएव प्राकृतरूपस्यसस्वस्यापरित्यागःप्रपञ्चेषु उदञ्चनादाविवमृत्तिकास्त्वस्येत्यर्थः ॥ परिणामवादश्चसाङ्ख्यपातञ्जलपाशुपतानांनये ॥ यथा। गुणसाम्यंप्रधानंस्याद्गुणाःसत्वंरजस्तमः । सुखदुःखमोहरूपंदृश्यते हिस्फुटं जगत् ॥ प्रधानंस्यान्महान् सोहङ्कारोऽसौषोडशात्मना । जायतेपञ्चतन्मात्राण्यक्षाण्येकादशापियत् ॥ तन्मात्राणितुभूतानिजायन्ते तत्तसङ्ख्यया । चतुर्विंशतिरेतानितत्रात्मा पञ्चविंशतिः सदेवकार्यमुत्पत्तेः पूर्वंकारकरूपकम् । आविर्भावस्तिरोभावौजन्मनाशावुदीरिताविति ।

परिणामशूलः । पुं० रोगविशेषे॥ तस्योत्पत्तिर्यथा । स्वैर्निदानैःप्रकुपितो वायुःसन्निहतोयदा कफपित्ते समावृत्यशूलकारीभवेद्बली ॥ तस्यौषधंयथा । लौहचूर्णसमायुक्तं त्रिफलाचूर्णमेववा । मधुनास्वादितंरुद्रपरिणामाख्यशूलनुदिति ग० पु० ॥

परिणामी । त्रि० विकारिणि ॥ परिणामोस्त्यस्येति । म० इनिः ॥

परिणामवादी । त्रि० परिणामवादिनि ॥ पूर्वरूपत्यागेनरूपान्तरप्राप्तिलक्षणं परिणामंयोवक्तिसः ॥

परिणायः । पुं० शारीणांसमन्तान्नयने ॥ परितोणामदक्षिणतोनयनम् । णीञ् ॥ परिन्योरितिघञ् परिणायेनशारीन्हन्तिसमन्तान्नयनेनेत्यर्थः ॥

परिणायकः । पुं० परिणेतरि॥ नयतेर्ण्वुल् । उपसर्गादसमासेपीतिणत्वम् ॥

परिणाहः । पुं० विस्तारे। पनश्रा० चौड़ाचौसार इत्यादिभा० । विशालतायाम्॥ परिणह्यतेऽनेन । णह० । घञ् । उपसर्गादसमासेपीतिणत्वम् ॥

परिणिंसुः । त्रि० परिणन्तुंतिर्यक्प्रहर्तुमिच्छौ ॥ नमेस्सन्नन्तादुप्रत्ययः । एकाचउपदेशेऽनुदात्तादितीट् प्रतिषेधः ॥

परिणूतः । त्रि० स्तुते ॥ परिणूयते स्म । णू स्तुतौ । क्तः ॥

परिणेता । पुं० भर्तरि । वोढरि ॥ परिणयति । णीञस्तृच् ॥

परितप्तः । त्रि० परिदूने ॥

परितर्कणम् । न० ऊहे ॥ हिंसायाम् ॥

परितप्यंणम् । न० परितृप्तिक्रियायाम् ॥

परित: । अ० सर्वतोर्थे ॥ पर्यभिभ्याञ्चे तिपूरिशब्दात्तसिल्सर्वोभयार्थाभ्या मिष्यते ॥ सर्वञ्च ॥

परिताप: । पुं० दु:क्खे ॥ नरकान्तरे॥ कम्पे ॥ भये ॥ शोके ॥ परित स्ताप: ॥

परितुष्ट: । त्रि० परितोषयुक्ते । सन्तु-ष्टे ॥

परितोष: । पुं० अतितृप्तौ । सन्तोषे। सर्वतोभावेनतुष्टौ ॥ यथा । त्वामु दरसाधुमन्येशाकैरपियदसिलब्धपरि तोषम् । हतहृदयंह्यधिकाधिकवा ञ्छाशतदुर्भरंनपुन: ॥

परित्याग: । पुं० सर्वतोभावेनवर्ज ने । परित्यजने । क्षोरणे ॥ मलो त्सारणे ॥ परितस्त्याग: ॥

परित्राणम् । न० मारणोद्यतस्यनिवार णे । हस्तधारणे । हस्तवारणे । पर्याप्तौ ॥ त्रैङ्० । ल्युट् ॥ र-क्षणे ॥

परिदर: । पुं० दन्तरोगविशेषे ॥ यथा । दन्तमांसानिशीर्यन्ते यस्मिन् ष्ठीवतिचाप्यसृक् । पित्तासृक्कफ जोव्याधिर्ज्ञेय:परिदरोहिसइति ॥

परिदानम् । न० नैमेये । परीवर्त्ते । विनिमये ॥ परिक्रतस्यदानम् ॥ न्य स्तवस्तुप्रत्यर्पणेपीतिकश्चित् ॥

परिदायी । पुं० अनूढज्येष्ठेतत्कनिष्ठा यकन्यादातरि ॥ यथाहहारीत: । ज्येष्ठेऽनिर्विष्टे कनीयान्निर्विशन् परिवेत्ताभवतिपरिविन्नोज्येष्ठ: प रिवेदनीयाकन्यापरिदायीदाताप रिकर्त्तायाजकस्ते सर्वेपतिताइति ॥

परिदीपक: । त्रि० अवबोधके ॥

परिदीपित: । त्रि० प्रकाशिते ॥ परिसर्वतोदीपित: ॥

परिदृष्ट: । त्रि० समन्तात्साक्षात् कृते ॥

परिदेवनम् । न० अनुशोचनोक्तौ । विलापे ॥ दिवुपरिदेवने । चु० । ल्युट् ॥

परिदेवना । स्त्री० शोकनिमित्तविला पे । शोकोक्तौ ॥ यथा । अव्यक्ता दीनिभूतानिव्यक्तमध्यानिभारत । अव्यक्तनिधनान्येवतत्रकापरिदेवना ॥ इतिभगवद्गीता ॥ नमन्त्रबल वीर्येणप्रज्ञया पौरुषेणच । अलभ्यं लभतेमर्त्त्य स्तत्रकापरिदेवना ॥ ए कसार्थंप्रयातानांसर्वेषांतत्रगामि नाम् । यद्येकस्त्वरितोयातिकात त्रपरिदेवनेतिग० पु० ॥ दिवुपरि देवने । चु० । ण्यासश्रन्थोयुजिति युच् ॥ टाप् ॥

परिद्यून: । त्रि० परिदेवनांप्राप्ते ॥ क्षीणचेतने ॥ दिवु० क्त: ॥

परिद्रष्टा । त्रि० समन्ताद्दर्शनस्यक र्त्तरि । साक्षिपुरुषे ॥ परिपश्यति । दृशिर: । वा० तृन् ॥

परिधानम् । न० अधोंशुके । अन्तरीये । उपसंव्याने ।। परिधीयतेऽनेनवा । डुधाञ् ० कृत्यल्युटोबहुलम् ॥

परिधाय : । पुं ० जलस्थाने ॥ परिच्छदे ॥ नितम्बे ॥

परिधावी । पुं ०वत्सरविशेषे ॥ यथा। अभिभूतंजगत्सर्वंक्ष्म शैर्बहुविधै : प्रिये । मारुतै:फलदाहैस्सपरिधाविनिशोभने ॥

परिधि: । पुं ० यज्ञियद्रुशाखायाम् ॥ उपसूर्यके । परिवेशे । चन्द्रसूर्यसमीपमण्डले ॥ परितोधीतेऽनेनवा । डुधाञ्० । उपसर्गेघो : कि: ॥ चक्रप्रान्ते ॥ भूगोलादेर्वेष्टने ॥

परिधिस्थ : । पुं ०परिचरे । परित : स्थिते सेनारक्षके ॥ परिधौसेनान्ते तिष्ठति । ष्ठा० । सुपीतिक : ॥

परिधेय : । त्रि० परिधानीये । परिधानोपयुक्ते उत्तरीयादिवस्त्रे ॥ परिधातुंशक्य : । धाञ्० । अचोयत् ईद्यति । गुण : ॥

परिनिष्ठित : । त्रि० चतुरे ॥ निश्चिते ॥

परिपक्व : । त्रि० परिणते ॥ परित: पक्व : ॥

परिपक्वमानस : । त्रि० श्रवणमननादिभि : स्थितप्रज्ञे ॥

परिपणम् । न० नौव्याम् । वणिङ्मूलधने । पुंजी० इति भा० ॥ परिपण्यतेव्यवहारार्थंप्रयुज्यते । पण० । पुंसीतिघ : ॥ राजपुत्रादेर्बन्धके ॥

परिपन्थक : । पुं० शत्रौ ॥ इ० ॥ ट० ॥

परिपन्थी । त्रि० शत्रौ ॥ परितोदोषाख्यानंपन्थयितुंशीलमस्य । पथिगतौ चु० । णिनि : ॥ परिवर्जनीय : पन्थाअस्यवासमासान्तविधेरनित्यत्वादेन ॥ विघ्नकृति । पथिकदस्यौ ॥

परिपल्लवम् । न० तीर्थविशेषे ॥

परिपवनम् । न० तितउनि ॥ तितउपरिपवनम्भवतीतिपस्पशाभाष्यम् ॥

परिपाक : । पुं० विपाके ॥ परिपचनम् । डुपचष्० । घञ् ॥ परिपक्वतायाम् ॥ यथा । दृष्ट्वैतंकेवलक्लिपक्वमांसेनमत्स्य : परिपाकमेतीतिभावप्रकाश : ॥ नैपुण्ये ॥ य० । वीक्ष्यतस्यविनयेपरिपाकंपाकशासनपदंस्पृशतोपीति०नैषधेपञ्चम : सर्ग : ॥

परिपाकिनी । स्त्री० त्रिवृतायाम् ॥

परिपाटि : । स्त्री० अनुक्रमे । आनुपूर्व्याम् ॥ परिभागे । भागेनपाटनम् । पट० । स्वार्थण्यन्त: । अचइ : ॥ कृगाजादिभ्यवृतीखवा ॥ कृतिकारव्यतायाम् ॥

परिपाटी । स्त्री० आवृति । अनु-

ञामे ॥ ञदिकारादितिङीष् ॥

परिपिष्टकम् । न० सीसके ॥

परिपुष्करा । स्त्री० गोडुम्बायाम् । राजगोमकडू०गौ०भा० ॥

परिपूतम् । न० निष्पुलाकीकृते । अपास्तपुलाके । अपास्ततुषधान्ये ॥ त्रि० । सर्वतोभावेनपवित्रे ॥

परिपूरी । त्रि० भक्ताभरदे ॥ परिपूरयतिकामैर्भक्तान् । परिपूरयतेर्णिनिः ॥

परिपूर्णः । त्रि० पूरिते ॥ परितःपूर्णः ॥

परिपूर्णता । स्त्री० आभोगे । सम्पूर्णतायाम् ॥ परितःपूर्यतेस्म । पूरी० । गत्यर्थेतिक्तः । रदाभ्यामितिनिष्ठानत्वम् ॥ परिपूर्णस्यभावः । तस्यभावइतितल् ॥

परिपूर्णत्वम् । न० आभोगे । पूर्णतायाम् ॥ परिपूर्णस्यभावः । तस्यभावस्त्वतलौ ॥

परिपेलम् । न० कैवर्त्तीमुस्तके । नागरमोथा०इ०भा० ॥ यथा । परिपेलंप्लवंवल्यंतत्कुटन्नटसंज्ञकम् । आयतेमुस्तकाकारंशैवालकुलसन्चये ॥

परिपेलवम् । न० कैवर्त्तीमुस्तके ॥ परितःपेलवम्मृदु ॥

परिप्रश्नः । पुं० कोऽहंकथमिदंजातंकोवैकर्त्तास्यविद्यते०उपादानंकिमस्य स्यकार्यंबद्धोस्मिकेनोपायेनमुच्येइत्यादिपृच्छायाम् ॥ पृच्छामात्रे ॥ परितःप्रश्नः ॥

परिप्लवः । त्रि० चञ्चले ॥ परिप्लवते । प्लुङ्गतौ । प०अच् ॥ आकुले ॥

परिप्लुतः । त्रि० आप्लुते । व्याप्ते सर्वतोव्याप्ते ॥ परितःप्लुतः ॥

परिप्लुता । स्त्री० मदिरायाम् ॥ या स्वधर्मेवेदनावत्यांयोनौ ॥ यथा । परिप्लुतायाम्भवतिग्राम्यधर्मेरुजाभृशम् । इतियोनिव्यापन्निदानेमाधवकारः ॥

परिफुल्लः । त्रि० हर्षपुलकिते ॥ फुल्लते । फुल्ल० । पचाद्यजन्तंनतुफुल्लेतिनिष्ठान्तं । अनुपसर्गादितिकथनाविरोधात् । परितःफुल्लः ॥

परिबर्हः । पुं० राजयोग्यद्रव्ये । सितच्छत्रादौ ॥ परिच्छदे ॥ परिबर्हतेपरिबर्ह्यतेवा । बर्हप्रधान्ये । अच् ०घञ्वा ॥

परिभवः । पुं० अनादरे ॥ यथा । जन्मव्याद्दिजजातयः परिभवेप्येतद्वचः पालनात्पीतःकुम्भसमुद्भवेनमुनिनाकिंजातमेतावता । मर्यादांयदिलङ्घतेविधिवशाद्यस्मिन्क्षणेवारिधिस्त्रैलोक्यंसचराचरंग्रसतियःकस्तत्रकुम्भोद्भवः ॥ परौभुवोऽवज्ञानइ०घञभावेऋदोरप् ॥ स

र्वतोभवने ॥

परिभावः । पुं० अनादरे । परिभवे ॥ परीभुवोऽवज्ञानइतिभावेघञ् । वृद्धिः ॥

परिभावुकः । त्रि० तिरस्कुर्वति ॥ लषपतेत्यादिनोकञ् ॥

परिभाषणम् । न० सनिन्देउपालम्भे ॥ उपालम्भोद्विविधः । गुणाविष्करणपूर्वकोनिन्दापूर्वकश्च । आद्यो-यथा । महाकुलस्यभवतः किमुचितमिदमिति । द्वितीयस्तुबन्धकीसुतस्यभवतउचितमेवेदमिति । तत्रयोर्द्वितीयःसपरिभाषणशब्दार्थः ॥ भाषव्यक्तायांवाचि । ल्युट् ॥ नियमे ॥ आलापे ॥

परिभाषा । स्त्री० परिष्कृतभाषणे । पदार्थविवेचकाचार्याणांयुक्तियुक्तायांवाचि । प्रज्ञप्तौ । शैल्याम् ॥ अनियमनिवारकेन्यायविशेषे ॥ अनियमेनियमकारिणीपरिभाषेतिलक्षणात् ॥ आधुनिकसङ्केते ॥ द्र० शक्तिवादेगादाधरीटीका ॥

परिभूः । पुं० ईश्वरे ॥ सर्वेषामुपर्युपरिभवनात्०परिसर्व्वतोभवति । भू० । क्विप् ॥

परिभूतः । त्रि० परिभवान्विते । अनादृते । अवमते । अवमानिते ॥ परिभूयतेस्म । भू० । क्तः ॥

परिभूयमानः त्रि० अनादरानुभवकर्त्तरि ॥ यथा ॥ येबालभावेनपठन्तिविद्यांकामातुरायौवननष्टचित्ताः । तेवृद्धकालेपरिभूयमानाः सन्दह्यमानाः शिशिरेयथाब्जाइति ॥

परिभोगः । पुं० उपभोगे ॥ परिभोजनम् । भुज० । घञ् ॥

परिभ्रमः । पुं० सर्वतोभ्रमणे ॥

परिभ्रमणम् । न० पर्यटने ॥ धनाशापुरुषस्येहपरिभ्रमणकारणम् ॥

परिभ्रामणम् । न० हस्तादिघुरणेस्वापरितश्चालने ॥

परिमण्डलः । त्रि० वर्तिले ॥ परितश्चक्राकारे ॥ न० । परमाणौ ॥

परिमण्डलितः । त्रि० विवर्तिते ॥ वर्त्तुलीकृते ॥

परिमलः । पुं० विमर्दने । कुङ्कुमादिमर्द्दने ॥ विमर्द्दोत्थगन्धे । अतिमनोहरगन्धे ॥ जनमनोहरेसुरतादिविमर्द्दनेनोत्पन्नेमाल्यादिगन्धे । सुरतोपमर्द्दविकसच्छरीररागादिसौरभे ॥ सम्भोगे ॥ पण्डितानांसमूहे । द्र० शब्० ॥ परिमलनम् । मलधारणे । घञ् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ घर्षणसमुद्भवेचन्दनादिगन्धे ॥

परिमाणम् । न० आढककुडवादौपरिच्छेदके । सर्वतोमाने ॥ आरोहपरिणाहाभ्यांस्वगताभ्यांयेनकाष्ठादिनिर्मितेनव्रीह्यादिपरिमीयतेतत्

परिमाणंप्रस्थादिरित्यर्थ:। परि: सर्वतोभावे। यथोक्तम्। परिमाणमुसर्वत। इति॥ न्यायमतेतुमानव्यवहारासाधारणकारणे। पृथिव्यादिनवद्रव्यवर्त्तिनि॥ तच्चतुर्विधम्। अणुमहत्दीर्घंमृ्ह्रस्वंचेतिभेदात्। यथोक्तंभाषापरिच्छेदे। परिमाणंभवेन्मानव्यवहारस्यकारणम्। अणुदीर्घंमहद्धूस्वमितितद्भेदईरित:॥ अनित्येतदनित्यं स्यान्नित्येनित्यमुदाहृतम्। सङ्ख्यात: परिमाणाञ्च प्रचयादपिजायते॥ अनित्यंद्व्यणुकादौतु सङ्ख्याजन्यमुदाहृतम्। परिमाणंघटादौतुपरिमाणजउच्यते॥ प्रचय: शिथिलाख्योय: संयोगस्तेनजन्यते। परिमाणंतूलकादौनाशस्त्वाश्रयनाशत:॥ इति॥ परिमीयतेपरिच्छिद्यते येनतद्॥

परिमार्ज्जनम्। न० परिशोधने॥ खाद्यविशेषे। मधुमस्तके॥ यथा। मधुतैलघृतैर्मध्ये वेष्टिता:समिताश्च या:। मधुमस्तकमुद्दिष्टंतस्याख्या परिमार्ज्जनमितिशब्दचन्द्रिका॥

परिमित:। त्रि० परिमाणविशिष्टे। परिच्छिन्ने। एतावति। इतनाइ० भाषा० युक्ते॥ परितोमित:॥

परिमिलित:। त्रि० व्याप्ते। समन्तात्सङ्गते॥

परिमृष्ट:। त्रि० व्याप्ते॥

परिमेय:। त्रि० परिमातुंयोग्ये॥ माङ्०। अचोयत्। ईद्यति। गुण:॥ परिमितौ॥

परिमोक्ष:। पुं० मलत्यागे॥ परितोमोक्षणे॥

परिमोषी। त्रि० परिमोषणशीले। चौरे॥

परिरब्ध:। त्रि० गृहीते॥ आलिङ्गिते॥

परिरम्भ:। पुं० आलिङ्गने। परिष्वङ्गे। बाहुभ्यांनिष्पीडने॥ परिरम्भणम्। रभ०। घञ्। रभेरशब्लिटोरितिनुम्॥

परिरम्भित:। त्रि० आलिङ्गिते। रचिते॥

परिवत्सर:। पुं० वत्सरे॥ वत्सरविशेषे॥ यथा। शकाब्दात्पञ्चभिर्हृतेय:शेषस्तिष्ठतितेनैकादिक्रमेण संपरिइदाअनुउदापूर्वकवत्सर संज्ञका: वत्सराभवन्ति। यथोक्तम्। शकाब्दात्पञ्चभि: शेषात्समाद्यादिषुवत्सरा:। सम्परीदानुपूर्वाश्च तथोदापूर्वकामता:॥ परिपूर्वेतथादामंयवानांचद्विजोत्तमा:। इति विष्णुधर्मोत्तरम्॥ परितोवसन्त्यत्रायनर्त्वादय:। वस०। संपूर्वाच्चिदितिसर:। सस्यार्द्धधातुकइति सस्यत:॥

परिवर्जनम् । न० मारणे॥ परित्यागे॥ यथा । गोप्योनदोषोमथुराङ्गनानांधूर्तस्यकृष्णस्यहिरीतिरेषा । विपर्ययोयेनकृतः स्वपित्रोस्तस्योपपत्नीपरिवर्जनंकिम्॥ वृजीवर्जने । ल्युट् । परितोवर्जनम्॥ कुभार्य्याञ्चकुमित्रञ्चकुराजानंकुसौहृदम् । कुबन्धुञ्चकुदेशञ्चदूरतः परिवर्जयेत्॥ ब्राह्मणंबालिशंचक्षमयोद्धारंविशंजडम् । शूद्रमक्षरसंयुक्तं दूरतःपरिवर्जयेत्॥

परिवर्त्तः । पुं० नैमेये । विनिमये॥ कूर्मराजे॥ प्रवर्त्तने॥ पलायिते । युगान्ते॥ परिवर्त्तनम् । वृतु० । भावेघञ्॥ ग्रन्थविच्छेदे॥ अपवर्त्तने॥

परिवर्त्तनम् । न० परिदाने । परिवर्ते । विनिमये । परेतना इ०भा०॥ इतस्ततोभ्रमणे॥(***(*)*(*)

परिवर्त्तिका । स्त्री० भावप्रकाशोक्तमेढ्रजातेक्षुद्ररोगविशेषे॥

परिवर्त्तितः । त्रि० निवर्त्तिते॥

परिवर्त्ती । त्रि० विनश्वरे॥ संसारःपरिवर्त्तीतिप्रसिद्धम्।

परिवर्त्तिनी । स्त्री० विष्टुतिप्रभेदे॥

परिवर्हः । पुं० राजयोग्यद्रव्ये॥ परिच्छदे॥ परिवर्हतेपरिवर्ह्यतेवा । वर्हप्राधान्ये । पचाद्यच् । घञ्वा॥

परिवर्हणम् । न० आराधने॥

परिवसथः । पुं० ग्रामे॥ परितोवसन्त्यत्र । वस० । उपसर्गेवसेरित्यथः॥

परिवहः । पुं० परावहवायोरुपरिस्थितेसप्तवाय्वन्तर्गतसप्तमवायौ॥

परिवादः । पुं० परदोषकथने । अपवादे । निन्दायाम्॥ यथा॥ सततसुलभदैन्येनिःसुखेजीवलोकेयदिममपरिवादात्प्रीतिमाप्नोतिकश्चित् । परिवदतुयथेष्टंमत्समक्षंतिरोवा जगतिहिवहुदुःखेदुर्लभः प्रीतियोगइति॥ वीणावादनवस्तुनि॥ परिपूर्वाद्वदेर्भावेघञ्॥

परिवादकः । त्रि० परिवादकर्त्तरि॥

परिवादी । त्रि० परिवादकर्त्तरि॥ परिवादविशिष्टे॥

परिवादिनी । स्त्री० सप्ततन्त्रीयुक्तायां वीणायाम् । सतरसिया० इ० भा०॥ परिवदतिस्वरान् । वद० । सुपीतिणिनिः॥ परिवादविशिष्टायाम्॥

परिवापः । पुं० पर्युप्तौ । वपने॥ जलस्थाने॥ परिच्छदे । परिवारे॥ परिवपनम्नेनवा । टुवप्० । भावेघञ्हलश्चेतिवा॥

परिवापनम् । न० मुण्डने॥ हेतुमण्णिजन्ताद्वपेर्ल्युट्॥

परिवापितः । त्रि० मुंडिते॥ परि

वाप्यतेऽस्मि । मंगलनार्थोऽवपिच्छोऽन्तः । क्तः ॥

परिवारः । पुं० परिजने । पोष्यवर्गे ॥ खड्गकोषे ॥ परिच्छदे ॥ परिवार्यतेऽनेन परिवारणं वा । घञ् ॥

परिवाहः । पुं० जलोच्छ्वासे । परीवाहे । समधिकजलस्योपायैर्निष्कासने ॥ परिवहन्त्येभिः । वह० । हलश्चेति घञ् उपसर्गस्य घञीतिपक्षे दीर्घाभावः यद्वा परिवहनम् । भावे घञ् ॥

परिविन्नः । पुं० परिवित्ती ॥ यथा । ज्येष्ठेऽनिविष्टे कनीयान् निर्विशन् परिवेत्ता भवति परिविन्नोज्येष्ठः परिवेदनीया कन्या परिदायी दाता परिकर्ता याजकः ते एते सर्वे पतिता इत्यु हारीतस्वम् ॥

परिवित्तिः । योग्ये दारपरिग्रहीतस्य ज्येष्ठे । परिवेत्तरनूढे ज्येष्ठे भ्रातरि परिवर्जनं विन्दति लभते । विदॢ ० । क्तिच् ॥ परिवित्तिः परीवेत्ता यया च परिविद्यते । सर्वे ते नरकं यान्ति दातृयाजकपञ्चमाः इ० मनुः ॥

परिवीतः । त्रि० परितो वेष्टिते । संवृते ॥ व्याप्ते ॥

परिवृंहणम् । न० समृद्धौ ॥

परिवृंहितः । त्रि० परिपूर्णे ॥ वृंहेः क्तः ॥

परिवृक्णः । त्रि० छिन्नहस्ताद्यवयवे ॥

परिवृढः । त्रि० अधिपे । प्रभौ ॥ परिवर्हति वृंहति वा । वह वृहि वृद्धौ कर्त्तरि क्तप्रत्ययः ॥ प्रभौ परिवृढ इति नकारहकारयोर्लोपो निष्ठातकारस्य ढत्वञ्च निपात्यते ॥

परिवृतः । त्रि० आवृते । समन्ताद्वेष्टिते । व्यवहारान् नृपः पश्येत् सभ्यैः परिवृतोऽन्वहम् ॥ परिसर्वतो भावे वृतः ॥

परिवृत्तः । त्रि० सर्वतः प्रवृत्ते ॥

परिवृत्तिः । पुं० अलङ्कारविशेषे ॥ यथा । परिवृत्तिर्विनिमयो योऽर्थानां स्यात् समासमैः । परिवृत्तिरलङ्कार इति ॥ उदाहरणं यथा । लतानामेतासामुदितकुसुमानां मरुदयं मरालास्यं दत्त्वाश्रयत भृशमामोदमसमम् लतास्त्वध्वन्यानामहह दृशमादाय सहसा ददत्याधि व्याधिभ्रमरुदितमोहव्यतिकरम् ॥ अत्र प्रथमेऽर्द्धे समेन समस्य द्वितीये उत्तमेन न्यूनस्य ॥ नानाविधप्रहरणैर्नृपसंप्रहारे स्वीकृत्य दारुणनिनादवतः प्रहारान् । दृप्तारिवीरविसरेण वसुन्धरेयं निर्विप्रलम्भपरिरंभविधिर्वितीर्णा ॥ अत्र न्यूनेनोत्तमस्य ॥ विवृत्ती ॥ परिविक्ता विति० इष्टः ॥

परिवेत्ता । पुं० ज्येष्ठेऽनूढे दारपरिग्राहिणि कनीयसि ॥ दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥

परिविन्दतिज्येष्ठंपरित्यज्यभार्याम् अग्निहोत्रं वालभवे । विद्लृलाभे हलन्तचौरंसिचदादिभ्यः संज्ञायां चानिटौ ॥

परिवेदनम् । न० विवाहे ॥ समन्ताभावे सर्वतोभावेनलाभे ॥

परिवेदनीया । स्त्री० अनूढज्येष्ठेतल्कनिष्ठेनविवाहितायाम् ॥

परिवेदनी । स्त्री० परिवेत्तुः स्त्रियाम् इ० हेमचन्द्रः ॥

परिवेशः । पुं० वेष्टने ॥ परिधाने ॥ परितोविशति । विश० । घञ् ॥ परिधौ ॥

परिवेषः । पुं० भोजनार्थमन्नादीनांपरिवेषणे ॥ परिविषेर्भावेघञ् ॥ परिवृत्तौ ॥ परिधौ । चन्द्रसूर्ययोर्तुल्याभूतरश्मिमण्डले ॥ यथाहवराहमिहिरः सम्मूर्छितारवीन्द्वोःकिरणाःपवनेनमण्डलीभूताः । नानावर्णाकृतयोहन्यन्तेव्योम्नितन्वभ्रे ॥ तेषांसंज्ञान्तराख्याह । तेरक्तनीलपाण्डुरकापोताभाभशबलहरितशुक्लाः । इन्द्रयमवरुणनिरृतिश्वसनेशपितामहाग्न्युक्ताः ॥ धनदः करोति मेचकमन्योन्यगुणाश्रयेणचाप्यन्ये । प्रविलीयतेमुहुर्मुहुरल्पफलः सोपिवायुकृतः ॥ वस्तुवत्तेनफलमाह । चापशिखिरजततैलक्षीरजलाभःस्वकालसम्भूतः । अविकलवृत्तःस्निग्धः परिवेषःशिवसुभिक्षकरः ॥ सकलगगनानुचारीनैकाभःक्षतजसन्निभोरूक्षः । असकलशकटशरासनशृङ्गाटकवत् स्थितःपापः ॥ शिखिगलसमेतिवर्षंबहुवर्णेनृपवधोभयंधूम्ने । हरिचापनिभेयुद्धान्यशोककुसुमप्रभेचापि ॥ वर्णेनैकेनयदावहुलःस्निग्धःक्षुराभ्रकाकीर्णः । स्वर्तौसद्योवर्षंकरोतिपीतश्चदीप्तार्कः ॥ दीप्तमृगविहङ्गरुतः कलुषःसन्ध्यात्रयोत्थितोतिमहान् । भयकृत्तडिदुल्काद्यैर्हतोन्नृपैर्निहन्ति शस्त्रेण ॥ प्रतिदिनमर्कहिमांशोरहन्निशंरक्तयोर्नरेन्द्रवधः । परिविष्टयोरभीक्ष्णं लग्नास्तमयस्थयोस्तद्वत् ॥ सेनापतेर्भयकरोद्विमण्डलोनातिशस्त्रकोपकरः । त्रिप्रभृतिशस्त्रकोपंयुवराजभयंनगररोधम् ॥ * ॥ विशेषमाह । वृष्टिस्त्रिभिर्मासैर्नविग्रहोवायहेंदुर्भनिरोधे । होराजन्माधिपयोर्जन्मर्क्षेवाशुभो राज्ञः ॥ * ॥ परिवेषमध्यगतानांग्रहाणांफलमाह । परिवेषमण्डल गतोरवितनयः क्षुद्रधान्यनाशकरः । जनयतिचवातवृष्टिं स्थावरकृषिकृन्निहन्ता च । भौम : कुमारवलपतिसैन्यानांविद्रवोग्निशस्त्रभयम् । जीवेपरिवेषगतेपुरोहिता मात्यनृपपीडा ॥ मन्त्रिस्थावरलेखक परिव

विखन्दगौसुवृष्टिश्च । शुक्रेयायिच-
चियराज्ञीपीडाप्रियस्यान्नम् ॥ बु-
दनलमृत्युनराधिपगलेभ्योजायतेभ
यंक्रेतौ । परिविष्टेगर्भभयंराष्ट्रीव्या
धिर्नृपभयश्च ॥ * ॥ द्वादिषुग्रहे
षुमध्यगतेषुफलमाह । युद्धानिवि
जानीयात्परिवेषाभ्यन्तरेद्वयोर्ग्रह
यो : । दिवसकृत : शशिनोवाक्षु-
द्‌वृष्टिभयंत्रिषुप्रोक्तम् ॥ यातिचतु
र्षुनरेन्द्र : सामात्यपुरोहितोवशंमृ
त्यो : । प्रलयमिववेद्धिजगत : प
ञ्चादिषुमण्डलस्थेषु ॥ * ॥ अथता
राग्रहाणांवापृथक्परिविष्टानांफल
माह । ताराग्रहस्तुकुर्यात्पृथगेवस-
मुत्थितोनरेन्द्रवधम् । नक्षत्राणाम
थवायदिकेतोर्नाशोभवति ॥ * ॥
तिथिक्रमेणपरिवेषफलान्याह । वि
प्रक्षत्रियविट्‌शूद्रहाभवेत्प्रतिपदा-
दिषुक्रमश : । श्रेणीपुरकोषाणांप-
ञ्चम्यादिष्वशुभकारी ॥ युवराज-
स्याष्टम्यांपरतस्त्रिषुपार्थिवस्यदोषक
र : । पुररोधोद्वादश्यांसैन्यक्षोभस्त्र-
योदश्याम् ॥ नरपतिपत्नीपीडांपरि
वेशोभ्युत्थितश्चतुर्दश्याम् । कुर्यात्तु
पञ्चदश्यांपीडांमनुजाऽधिपस्यैव ॥
* ॥ परिवेषलेखावशेनशुभाशुभमा
ह । नागरकाणामाभ्यन्तरस्थिता-
यायिनाञ्चवाह्यस्था । परिवेषमध्य-
रेखाविज्ञेयाक्रन्दसाराणाम् ॥ रक्त:

श्यामोरूक्षोभवतिचयेषांपराजयस्ते
षाम् । स्निग्ध : श्वेतोद्युतिमान्ये
षांभागोजयस्तेषामिति ॥ * ॥ अ-
पिच । दिनकरपरिवेष : पूर्वयामे-
तुपीडा० दिनकरपरिवेषोव्रह्मियुद्ध
द्वितीये ॥ दिनकरपरिवेष : क्षेम-
मायुस्तृतीयेदिनकरपरिवेष : सर्व
नाशश्चतुर्थे ॥ दिवासूर्यपरिवेषोरा-
त्रौचन्द्रेयदाभवेत् । एकस्मिंस्तेदत्ते
रात्रेतदानश्यतिपार्थिव : ॥ एतेन-
विधिनानित्यंसप्ताहंपरिविष्यते ।
सर्वभूतविनाश : स्यात्तस्मिन्नुत्पा
तदर्शने ॥ परितोविष्यतेऽनेन । वि
षॢव्याप्तौ । घञ् ॥

परिवेषक : । त्रि० अन्नादिपरिवेषण
कर्त्तरि ॥ सयथा । स्नातश्चन्दनच
र्चित : सुवसन : स्रग्वीप्रसन्नानन:
स्पष्टालापसुभग : प्रसन्नहृदय : श्री
कान्तपूजारत : । स्वामिस्नेहपर :
स्वपाकनिपुण : प्रौढोवदान्य : शु-
चिर्विप्रोवापरिवेषकस्तुकुलजश्चान्यो
पिवाभूपते : ॥ स्त्री० । परिवेषि
का ॥ यथा । स्नाताविशुद्धवसनान
वधूपिताङ्गीकर्पूरसौरभमुखीनयना
भिरामा । विम्वाधराशिरसिवद्धसु
गन्धपुष्पामन्दस्मितात्रितिभृतांपरि
वेषिकास्यात् ॥

परिवेषणम् । न० भोजनार्थमन्नादे :
पात्रेसमर्पणे । परोसना० इ० भा० ॥

## प्ररिवेषणम्

तत्प्रकारोयथा । पुरस्ताद्विमलं-पात्रंसुविस्तीर्णंमनोहरम् । स्थापितंपीठकेशुभेनाभिदेशसमुन्नते ॥ तत्रभक्तंपरिन्यस्तंमध्यभागेसुसंयतम् । सूपंसर्पिः पलंशाकंपिष्टमन्नन्तुमत्स्यकम् ॥ स्थापितंदक्षिणेपार्श्वेभुञ्जानस्ययथाक्रमम् । प्रलेह्याद्रवाः सर्वेपानीयंपानकंपयः ॥ चोष्यंसम्यानकंलेह्यंसव्यपार्श्वेनिधापयेत् । सर्वानिचुषिकारांस्तपक्वान्नंपायसंदधि ॥ पुरतः स्थापयेद्भोक्तुर्द्वयोः पङ्क्त्योस्तुमध्यतः । एवंविज्ञायमतिमान्परिवेषप्रकल्पनम् ॥ ततोऽर्हीभवतिप्राज्ञः सम्यक्सम्परिवेषितुम् ॥ * ॥ अथश्राद्धेपरिवेषणेमनुः । पाणिभ्यान्तूपसङ्गृह्यस्वयमन्नस्यवर्द्धितम् । विप्रान्तिकेपितृन्ध्यायन्शनकैरुपनिक्षिपेत् ॥ अन्नस्येति तृतीयार्थेषष्ठी । वर्द्धितं०पूर्णंपिठरानिपात्रम् । उपनिक्षिपेत्ब्राह्मणानांसमीपेपरिवेषणार्थमत्वरयास्थापयेत् । तथाचपाकस्थाल्याआक्रष्यप्रथमंभोजनपात्रेनदेयम्किन्तुस्थाल्यादिकंपाणिभ्यांपात्रसमीपेभूमौसंस्थाप्यपश्चात्पाणिभ्यांपात्रान्तरिताभ्यांश्राद्धेपरिवेषयेत् । उभाभ्यामपिपाणिभ्यामाक्रष्यपरिवेषयेत्० इतिमत्स्यपुराणात् । यत्तुश्राद्धेपरिवेषणन्तुदक्षिणपाणिमात्रेणैवाऽङ्गामभिधानादितिमैथिलोक्तं तन्न । एकेनपाणिनादत्तं शूद्रादत्तं नभक्षयेदित्यादिपुराणीयेनएकपाणिदत्तशूद्रादत्तभक्षणनिषेधेनतस्माच्चपरिवेषणस्यापिनिषिद्धत्वात्पाणिभ्यामपिपात्रान्तरितंकृत्वादेयम् । हस्तदत्तायेस्नेहालवणंव्यञ्जनानिच । दातारंनोपतिष्ठन्तेभोक्ताभुङ्क्तेच-किल्बिषम् ॥ तस्माद्न्तरितंदेयंपर्णेनाथतृणेनवा । प्रदद्यान्नतुहस्तेन नायसेनकदाचन ॥ इतिवशिष्ठवचनेनसामान्यतोऽभिधानात् । पितृभक्तितरङ्गिण्यामप्येवम् । मनुः । गुणांश्चसूपशाकाद्यान्पयोदधिघृतं मधु । विन्यसेद्प्रयतः सम्यक्भूमावेवसमाहितः ॥ आमिषंपानपात्रश्चभोक्तुर्दक्षिणतोन्यसेत् । भक्ष्यभोज्यञ्चविविधंमूलानिचफलानिच ॥ हृद्यानिचैवमांसानिपानानिसुरभीणिच । उपनीयचतत्सर्वंशनकैः सुसमाहितः ॥ परिवेषयेत्प्रयतोगुणान्सर्वान्प्रचोदयन् ॥ गुणानुपकरणानिभूमावेवनतुव्यञ्जनादिपात्राणिअन्नादिपात्रोपरिनिक्षिपेत् ॥ इतिश्राद्धतत्त्वम् ॥

परिवेष्टितः । त्रि० परिक्षिप्ते । परिस्कृते । परिते ॥ परितोवेष्टितः ॥

## परिविष्टा

परिविष्टा । त्रि० परिवेषणस्य[illegible]रि ॥ परिवारे ॥

परिव्याध : । पुं० अम्बुवेतसे ॥ द्रुमोत्पले ॥ परिविध्यते । व्यधताडने । घञ् ॥ परिविध्यतिवा । स्यादृव्यधेतिणः ॥

परिव्रज्या । स्त्री० तपस्यायाम् ॥ दृ० हे० ॥

परिव्राट्०ज् । पुं० भिक्षौ । कर्मन्दिनि । पारासरिणि । मस्करिणि ॥ तल्लक्षणंयथा । सर्वारम्भपरित्यागोभैक्षाश्यंवृक्षमूलता । निष्परिग्रहताऽद्रोहः समतासर्वजन्तुषु ॥ प्रियाप्रियपरिष्वङ्गेसुखदुःखाविकारिता । सबाह्याभ्यन्तरंशौचंसुखदुःखाविकारिता ॥ सर्वेन्द्रियसमाहारोधारणाध्याननित्यता ॥ भावसंशुद्धिरित्येषपरिव्राड्वर्यउच्यते ॥ दूतिगरुडपुराणम् । परित्यज्यसर्वंव्रजति । व्रज० । परौव्रजे : षः पदान्तइतिक्विप्०दीर्घश्चपदान्तविषयेषत्वञ्च ॥

परिव्राजक : । पुं० सन्यासिनि ॥ परिव्रजति । व्रज० । ण्वुल् ॥

परिव्राजि : । स्त्री० श्रावण्याभोषधौ ॥

परिशङ्कनीय : । त्रि० सर्वतोभावेनशङ्काविषये ॥ यथा । शास्त्रंसुचिन्तितमपिप्रतिचिन्तनीयंस्वाराधितोऽपि नृपति : परिशङ्कनीय : । अङ्केस्थितापियुवति : परिरक्षणीयाशास्त्रेनृपेचयुवतौचकुतोवशित्वम् ॥

परिशासनम् । न० भृत्यादिप्रेरणे । आकारणपूर्वकभृत्यादिप्रेषणे ॥ शासु० । ल्युट् ॥

परिशिष्टम् । न० परिशेषविशिष्टे । अवशिष्टार्थबोधकेग्रन्थे ॥ त्रि० । अवशिष्टे ॥ परित : शिष्ट : ॥

परिशीलनम् । न० श्रुत्यादिविचारे ॥

परिशीलित : । त्रि० अभ्यस्ते ॥

परिशुष्कम् । न० मांसव्यञ्जनप्रभेदे ॥ यथा । खिन्नंयत्कृदृघृतेदर्व्यासुहुरालोड्यभर्ज्जितम् । मात्रयादधिसिंधूत्थरामठैलापरिप्लुतम् ॥ मरिचार्द्रकसंयुक्तंसुगन्धिद्रव्यवासितम् । गतद्रवंसुधातुल्यंपरिशुष्कंतदुच्यते ॥ अपिच । मांसंबहुघृतैर्भृष्टंसिक्तंस्तोकाम्बुनामुहुः । जीरकाद्यैःसमायुक्तंपरिशुष्कंतदुच्यते ॥ दृ० ॥ त्रि० सर्वतोनीरसे ॥ निर्मांसे ॥ परित : शुष्कम् ॥

परिशेष : । पुं० प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणेसम्प्रत्यये ॥ परिशिष्यते । शिष्लृविशेषणे । घञ् ॥

परिशोध : । पुं० परिशोधने । सर्वतोभावेनशुद्धौ ॥ परित : शोध : ॥

परिशोष : । पुं० सर्वतोभावेनशुष्कतायां ॥

परिश्रम : । पुं० श्रमे । क्लमे ॥ क्लेशे । प्रयासे । परिश्रान्तौ ॥ परित:श्रम: ॥

परिश्रय : । पुं० सभायाम् ॥ आश्रये ॥ परिश्रयणम् । श्रिञ्० । एरच् ॥

परिश्रान्त : । त्रि० सर्वतोभावेनश्रान्तियुक्ते ॥ परित : श्रान्त : ॥

परिश्रुत : । त्रि० सर्वतोभावेनश्रवणविशिष्टे ॥

परिश्लेष : । पुं० आश्लेषे ॥

परिषत् । स्त्री० अधीतशास्त्राणांसमवाये । सभायाम् ॥ परिषत्त्वं यथा । एकविंशतिसङ्ख्याकैर्मीमांसान्यायपारगै : । वेदाङ्गकुशलैश्चैवपरिषत्त्वंप्रकल्पयेत् ॥ परित : सीदन्त्यस्याम् । षद्लृ० । सं०क्विप् । सत्सूद्विषेतिवाक्विप् । सदिरप्रतेरितिषत्वम् ॥

परिषद : । पुं० पारिषदे । अनुचरे ॥ इ०हि० ॥

परिषद्वल : । पुं० सभ्ये । सभासदे ॥ परिषदस्यास्ति । रज : कृष्यासुतिपरिषदोवलच् ॥

परिषिक्त : । पुं० स्नानादौ ॥

परिष्कन्द : । पुं० परिस्कन्दे । पराचिते ॥ परिस्कन्दति । स्कन्दिर० । पचाद्यच् ॥ परेश्चे तिवाषत्वम् ॥

परिष्कार : । पुं० विभूषणे । अलङ्कारे ॥ परिष्क्रियतेऽनेन । घञ् । सम्परिभ्यामितिसुट् । परिनिवीतिषत्वम् ॥ संस्कारे । शुद्धौ ॥

परिष्कृत : । त्रि० अलङ्कृते । भूषिते ॥ परिस्क्रियतेस्म । क्त : । सम्परिभ्यामितिसुट् । परिनिविभ्य : सिवसितसयसिवुसहसुट्स्तुस्वञ्जामितिषत्वम् ॥

परिष्वक्त : । त्रि० आलिङ्गिते ॥ यथा । स्त्रीपुंसौपरिष्वक्तौभवत : ॥ अन्योन्यंगाढलिङ्गितौभवतइत्यर्थ: ॥

परिष्वङ्ग : । पुं० आलिङ्गने । परिरम्भे ॥ परिष्वञ्जनम् । ष्वञ्जपरिष्वङ्गे । घञ् । परिनिविभ्य : इतिष : ॥

परिसङ्ख्या । स्त्री० विधिविशेषे ॥ यथातत्रचान्यत्रचप्राप्तौपरिसङ्ख्येतिगीयते । साचोभयप्राप्तावितरनिवृत्तिं बोधयति । यथा । पञ्चपञ्चनखाभक्ष्याइत्यत्रशशादिमांसितरपञ्चनखमांसभक्षणनिवृत्तिबोध : । तदुक्तम् । नियम : परिसङ्ख्यावाविद्ध्यर्थोऽभिवेद्यत : । अनात्मदर्शनेनैवपरात्मानमुपास्महेइति ॥ एकस्योभयत्रप्राप्तावेकत्रनियमनेयथाहु : । एकस्यवस्तुन : प्राप्तावनेकत्रैकधायदा । एकत्रनियम : साहिपरिसङ्ख्यानिगद्यतेइति ॥ अलङ्कारविशेषे ॥ यथा । इयंविदोषवतीयथाहस्मार्त्त : । श्रुतार्थस्यपरित्यागादश्रुतार्थस्यकल्पनात् । प्राप्तस्यबाधादित्येवंपरिसङ्ख्यात्रिदूषणेति ॥ किञ्चित्पृष्टमपृष्टंवाकथि

तंयत्प्रकल्प्यते। तादृगन्यव्यपोहाय परिसङ्ख्यातुसास्मृता ॥ प्रमाणा न्तरावगतमपिवस्तुशब्देनप्रतिपादितम्प्रयोजनान्तराभावात्सदृशवस्त्वन्तरव्यवच्छेदाययत्पर्यवस्यति साभवेत्परिसङ्ख्या ॥ अत्रकथनंप्रश्नपूर्वकंतदन्यथ। अपरिदृष्टं तथोभयत्रव्यपोह्यमानस्यप्रतीयमानतावाच्यत्वञ्चेतिचत्वारोभेदाः । क्रमेणोदाहरणम् । किमासेव्यंपुंसांसविधमनवद्यंद्युसरितः किमेकान्तेध्येयंचरणयुगलंकौस्तुभभृतः । किमाराध्यंपुण्यंकिमभिलषणीयञ्चकरुणायदासक्त्याचेतोनिरवधिविमुक्तौप्रभवति ॥ किम्भूषणंसुदृढमत्रयशोनराणांकिं कार्यमार्यचरितंसुकृतंनदोषः । किंचक्षुरप्रतिहतंधिषणानमेचंजानातिकस्त्वदपरः सदसद्विवेकम् ॥ कौटिल्यंकचनिचयेकरचरणाधरदलेषुरागस्ते । काठिन्यंकुचयुगलेतरलत्वंनयनयोर्वसति ॥भक्तिर्भवेनविभवेव्यसनंशास्त्रेनयुवतिकामास्त्रे । चिन्तायशसिनवपुषिप्राय : परिदृश्यतेमहतामिति ॥

परिसङ्ख्यानम् । न० गणनायाम् ॥

परिसङ्ख्याविधि : । पुं० उभयोश्चयुगपत्प्राप्ताावितरव्यावृत्तिपरेविधौ॥ यथा । पञ्चपञ्चनखाभक्ष्याइति । इदंहिवाक्यंनपञ्चनखभक्षणपरम् । तस्यरागतः प्राप्तत्वात् । नापिनियमपरम्पञ्चनखभक्षणस्ययुगपत्प्राप्तेः पक्षेऽप्राप्त्यभावात् । अतइदम पञ्चनखभक्षणनिवृत्तिपरमितिभवतिपरिसङ्ख्याविधि : । साचद्विविधा । श्रौतीलाक्षणिकीच । तत्र अत्रचैवावयवतीतिश्रौतीपरिसङ्ख्या । एवकारेणपवमानातिरिक्तस्तोत्रव्यावृत्ते रभिधानात् । पञ्चपञ्चनखाभक्ष्याइतितुलाक्षणिकीइतरनिवृत्तिवाचकपदाभावात् । अतए वैषात्रिदोषग्रस्ता । दोषत्रयञ्च । श्रुतहानि : अश्रुतकल्पनाप्राप्तबाधश्चेति । तदुक्तम् । श्रुतार्थस्यपरित्यागादश्रुतार्थस्यकल्पनात् । प्राप्तस्यबाधइत्येवंपरिसङ्ख्यात्रिदूषणेति ॥ श्रुतस्यपञ्चनखभक्षणनिवृत्तेः कल्पनात्प्राप्तस्यचपञ्चनखभक्षणस्य बाधनादिति । अस्मिंश्चदोषत्रयंशब्दनिष्ठंप्राप्तबाधस्त्वर्थनिष्ठइतिदिक् ॥

परिसमाप्ति : । स्त्री० निश्चये ॥

परिसर : । पुं० पर्यन्तभूमौ । नदीनगरपर्वतादेरुपान्तभूमौ ॥ परितः सरत्यत्र । स्गतौ । पुंसीतिघः ॥ मृत्यौ । विधौ ॥ देवे ॥

परिसरणम् । न० सर्वतोगमने ॥ सृगतौ । ल्युट् ॥

परिसरा । स्त्री० नाड्यां ॥

परिसर्प्पः । पुं० परिक्रियायाम् । परिजनादिनावेष्टने ॥ परिसमन्तात् सर्पणम् । सृगतौ । घञ् ॥

परिसर्प्पणम् । न० प्रसरणे ॥ परिसर्प्प ॥

परिसर्य्या । स्त्री० परीसारे । सर्वतोगमने ॥ परिसरणम् । सृ० । परिचर्यापरिसर्यामृगयाटाट्यानामुपसङ्ख्यानमितिशप्रत्ययोयक्गुणौच-निपातनात् ॥

परिसीमा । स्त्री० वृयत्तायाम् ॥ परित:सीमा ॥

परिस्कन्दः । पुं० पराचिते । परपुष्टे ॥ परिस्कन्दति । स्कन्दिर्० । प० अच् । परेश्चेतिपक्षेषत्वाभावः ॥

परिस्तरणम् । न० आच्छादने ॥

परिस्तोमः । पुं० गजपृष्ठस्थचित्रकम्बले । प्रवेण्याम् । वर्णे । कुथे ॥ परिस्तूयते । ष्टुञ्० । अर्त्तिस्तुसुहुस्रु इति मन् ॥ यद्वा । परिगतः स्तोमोऽत्र वर्णस्तोमत्वात् । यत्क्रियायुक्तादृति परेःस्तौतिंप्रतिअनुपसर्गत्वान्नषः ॥

परिस्पन्दः । पुं० कुसुमप्रकरादेः पत्रावल्यादेश्वरचनायाम् ॥ शिखास्थमाल्ये ॥ परिवारे ॥ परिस्पन्दनम् । स्पदि० । भावे अधिकरणेवा घञ् ॥

परिस्पन्दनम् । न० सर्वतोभावेनकम्पने ॥

परिस्पन्दमानः । त्रि० सर्वतोभावेन कम्पमाने ॥

परिस्फुटः । त्रि० प्रसिद्धावयवार्थे ॥

परिस्फुरितः । त्रि० प्रकाशिते ॥

परिस्रुत् । स्त्री० वरुणात्मजायाम् । मदिरायाम् ॥ परितः स्रवति । स्रु० । क्विप्तुकौ ॥

परिस्रुतः । त्रि० स्यन्ने । स्रवयुक्ते ॥ परितः स्रूयतेस्म । स्रुप्रस्रवणे । गत्यर्थेतिक्तः ॥

परिस्रुता । स्त्री० वारुण्याम् । मदिरायाम् ॥ परितःस्रवति । स्रु० । क्विप्० तुक् । भागुरिमते । टाप् ॥ यद्वा । परितः स्रूयतेस्मलोकैः । स्रु० । गत्यर्थेतिक्तः ॥

परिहापितः । त्रि० त्याजिते ॥

परिहारः । पुं० अनादरे ॥ परिह्रियतेऽनेनाचवा । हृञ् । घञ्० । उपसर्गस्येति पाक्षिकोदीर्घाभावः ॥

परिहार्य्यः । पुं० वलये ॥ त्रि० । त्याज्ये ॥

परिहासः । पुं० नर्मवाक्ये । परीहासेठट्ठा इतिभाषा ॥ परिहसनम् । हसेहसने । घञ् ॥

परीक्षकः । त्रि० निरूपके । कारणिके ॥ शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षे । प्रतिपादके ॥ परीक्षते । ईक्षदर्शने । ण्वुल् ॥

परीक्षणम् । न० परीक्षायाम् । राज्ञा

धर्मकामार्थभयैरमात्या दैर्भावितत्त्वनिरूपणे । यथा । भेदोपजापांवुपधाधर्माद्यैर्यत्परीक्षणम् । इति ॥ सर्वतोभावेनदर्शने ॥ संशय्यपूर्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापने ॥ परित : ईक्षणम् ॥

परीक्षा । स्त्री० विचारणायाम् ॥ परितईक्षणमनया । ईक्ष० । गुरोश्चहल: । टाप् ॥ दिव्ये ॥

परीक्षित् । पुं० नृपविशेषे ॥ अभिमन्युसुते । विष्णुराते ॥ सयुधिष्ठिरानन्तरंकलियुगस्यारम्भे चक्रवर्त्तीराजाबभूव । सएवलोकविख्यात : परीक्षिदितियतप्रभु : । पूर्वदृष्टमनुध्यायन्परीक्षेतनरेष्विह ॥

परीक्षित: । पुं० परीक्षिति । अभिमन्युपुत्रे नृपे ॥ यथा । परिक्षीणेषुवंशेषुजातोयस्मादयंसुत: । तस्मात्परीक्षितोनाम विख्यात: पृथिवीतले इ० देवीभागवतम् ॥ त्रि० । सञ्जातापरीक्षायस्यता० इतच् ॥

परीक्ष्यकारी । त्रि० सम्यग्घेतुभिर्विमृश्यकरणशीले ॥

परीत : । त्रि० परिवेष्टिते ॥ व्याप्ते ॥

परीतत् । त्रि० सर्वतोभावेनविस्तृते ॥

परीप्सा । स्त्री० त्वरायाम् ॥ अपादानेपरीप्सायामितिदर्शनात् ॥ प्राप्तुमिच्छायाम् ॥ पर्याप्तुमिच्छायाम्

परीप्सु : । त्रि० जिघांसौ ॥ आप्नोतेः सन्नंतादुप्रत्यय : । आप्ज्ञप्धामीदितीकार : । अचलोपोभ्यासस्येत्यभ्यासलोप : ॥

परीभाव : । पु० तिरस्क्रियायाम् अनादरे ॥ परौभुवोवज्ञानइति०-भावेघञ् । वृद्धि: । उपसर्गस्यघञीतिदीर्घ : ॥

परीरम् । न० फले ॥ पृणाति । पॄपालनपूरणयो : । कॄशॄपॄकटिपटिशौटिभ्यईरन् ॥

परीरण : । पुं० कमठे ॥ दण्डे ॥ पट्टशाटके ॥ इतिमेदिनी ॥

परीरम्भ : । पुं० आलिङ्गने । परिरम्भे ॥

परीवर्त्त : । पु० प्रतिदाने । निमये । नैमेये ॥ परिवर्त्तनम् । वृतु० । भावेघञ् । उपसर्गस्येतिदीर्घ : ॥

परीवाद : । पुं० अपवादे । निन्दायाम् ॥ परिपूर्वाद्वदेर्भावेघञ् । उपसर्गस्यघञीतिदीर्घ : । विद्यमानदोषस्याभिधानंपरीवाद : । अविद्यमानदोषाभिधानंनिन्देतिविवेक : ॥ यथा । परीवादस्तथ्योभवतुवितथोवापिमहतांतथाप्युच्चैर्धाम्नां हरतिमहिमानंजनरव: तुलोत्तीर्णस्यापिप्रकटनिहताशेषतमसोरवेस्तादृक्तेजोनहिभवतिकन्यांगतवत : ॥

परीवापः । पुं० पर्युप्तौ ॥ सलिलस्थाने परिवारे ॥ परिवपनम् अनेनावा । टुवप्० । भावेघञ् हलश्चेतिवा । उपसर्गस्येतिदीर्घः ॥

परिवारः । पुं० परिजने ॥ खड्गकोषे ॥ परिच्छदे । शोभाजनके उपकरणे छत्रचामरादौ । सभ्यजनादौच ॥ परिवार्यते ऽनेनपरिवारणंवा । घञ् । उपसर्गस्येतिदीर्घः ॥

परीवाहः । पुं० जलोच्छ्रासे । परिवाहे ॥ परिवहन्त्यभिः । वह० । हलश्चेतिघञ उपसर्गस्यघञीति पाक्षिकोदीर्घः ॥ परिवहनम् । भावेवा० घञ् ॥ मही भृद्योग्यवस्तुनि

परीष्टिः । स्त्री० अन्वेषणायाम् ॥ इषेरनिच्छार्थस्यपरेर्वेतिपक्षेक्तिन् । परिचर्य्यायाम् ॥ प्राकाम्ये ॥ परीसारः परिसर्य्यायाम् । सर्वतोगमने ॥ परिसरणम् । सृ० । घञ् उपसर्गस्यघञीतिदीर्घः ॥

परीहारः । पुं० अवज्ञायाम् । अनादरे ॥ परिहरणम् । हृञ्० । भावेघञ् । उपसर्गस्येतिपक्षिकोदीर्घः ॥

परीहासः । पुं० द्रवेकेलौ । नर्मणि ॥ परिहसनम् । हसे० । घञ् । पाक्षिकोदीर्घः ॥

परुः । पुं० वंशादिपर्वणि ॥ पिपर्त्ति । पृ० । बाहुलकादुः ॥

परुत् । अ० पूर्ववत्सरे । गतवर्षे ॥ पूर्वस्मिन्वत्सरेइत्यर्थे । सद्यःपरुदितिपूर्वस्यपरभावः उत्० च । संवत्सरे ॥

परुत्न : । त्रि० पूर्ववर्षभवे ॥ परुद्भवः । चिरपरुत्परारिभ्यस्त्नोवक्तव्यः ॥

परुद्वारः । पुं० घोटके ॥

परुट् । पुं० पर्वणि ॥ यत्परुषिदिनमितिश्रुतौपरुषिपर्वणीत्यर्थात् ॥

परुषम् । न० निष्ठुरवाक्ये ॥ नीलझिण्ट्याम् ॥ परुषफले ॥ न० । तिलकवृक्षे ॥ त्रि० कर्बुरे ॥ रूक्षे ॥ निष्ठुरोक्तौ । परेषांदेशजातिकुलविद्याशिल्परूपवृत्त्याचारपरिच्छदशरीरकर्मजीविनांप्रत्यक्षदोषवचनम् परुषमितिवदन्ति ॥ पश्चान्यत्क्रोधसन्तापत्रासस्सञ्जननंवचः । परुषंतद्विज्ञेयंयच्चान्यत्तत्तथाविधम् ॥ चक्षुष्मन्नितिलुप्ताक्षंचण्डालंब्राह्मणेच । प्रशंसानिन्दनंद्वेषात्परुषान्नविशिष्यतेइतिदेवलः ॥ परुषवचनानामेवपरोक्षमुदाहरणमपवादइत्याहुः ॥ निष्ठुरवाग्युक्ते ॥ पिपर्त्ति पूर्यतिअलंबुद्धिंकरोति । पृ० । पृनहिकलिभ्यउषच् ॥

परुषा । स्त्री० वृत्यनुप्रासघटकवृत्तिभेदे ॥ ओजः प्रकाशकैर्वर्णैः परुषाख्यास्मृतापरा ॥ वामनादिमतेगौडीय्येया ॥

परुः । न० ग्रन्थौ । वंशादिपर्वणि ॥ पिपर्त्ति । पृपालनपूरणयोः । अर्त्ति पृवपीत्युम् ॥

परूषम् । न० फलवृक्षभेदे । अल्पाऽस्थिनि । नीलचर्मणि । परुसादृति च फालसा० इतिचभाषा० ॥

परूषकम् । न० परूषे ॥ परूषकंकषायाम्लमामंपित्तकारंलघु । तत्पक्वंमधुरंपाकेशीतंविष्टम्भिबृंहणम् ॥ हृद्यंतद्पित्तदाहास्रज्वरक्षयसमीरहृदितिभावप्रकाशः ॥

परेण । अ० परतोर्थे ॥ विभक्तिप्रतिरूपकमव्ययम् ॥

परेतः । पुं० भूतान्तरे ॥ त्रि० । मृते ॥ परंलोकमृइतः ॥ परादूरमितोवा ॥

परेतरः । त्रि० आत्मीये । अवञ्चके ॥ परादितरः ॥ स्वामिकार्यार्थमितरेषांभेदके ॥ परान्विपक्षान्इतरयतिभेदेनआत्मसात्करोति । तत्करोतीतिण्यन्तात्कर्म्मण्यण् ॥

परेतराट् । पुं० धर्मराजे । पितृपतौ । यमे ॥परेतेषुमृतेषुराजते । राजृ० । सत्सूद्विषेतिक्विप् । ग्रान्तः ॥

परेद्यवि । अ० परस्मिन्नहनि ॥ सद्यः परुदित्यादिनापरस्मादेद्यव्यहनिनिपात्यते ॥

परेपम् । त्रि० परापे ॥ परागताआपोयत्र । इयन्तरुपसर्गेभ्योपईदित्यप्रवर्णान्तादित्युक्तेः पाचिकईत् ॥

परेष्टुका । स्त्री० बहुसूत्याम् । बहुपत्यायाङ्गवि ॥ परमिच्छतिपरेरिष्यतेवा । वा०तुः । स्वा० कः ॥

परैधित ः । पुं० कोकिले ॥ त्रि० । पराचिते । औदासीन्येनपरपुष्टे ॥ परैरेधितः सम्वर्द्धितः ॥

परोक्षः । पुं० तपस्विनि ॥ त्रि० । इन्द्रियाविषये । अप्रत्यक्षे ॥ परोक्षमस्त्यस्य । अर्शआद्यच् ॥ अत्राहुः । परोभावः परस्याक्षेपरोक्षेलिटि दृश्यताम् । उत्वंवादेः परादक्ष्णः सिद्धंवास्मान्निपातनात् ॥ अस्मात्परोक्षेलिडितिनिर्द्देशात् ॥

परोक्षम् । अ० इन्द्रियाविषये ॥ वृत्तिविषयेऽक्षिशब्दइन्द्रियमात्रपरः । अक्ष्णः परमितिविग्रहेशरदादिषुप्रतिपरेतिसमासान्तविधानसामर्थ्यादव्ययीभावः । परोक्षेलिडितिनिपातनात्परस्यौकारादेशः ॥ पारस्करादित्वात्सुडित्यप्याहुः ॥ श्रीभोजस्तुपरार्थेपरःशब्दंमन्यते ॥

परोपकारः । पुं० परस्यपरेषांवाउपकृतौ । अन्यसम्बन्धिहिते । दधीचिनापुराणगीतः श्लोकश्चश्रूयतेभुवि । सर्वधर्ममयः सारः सर्वधर्मज्ञसम्मतः ॥ परोपकारः कर्त्तव्यःप्राणैः कण्ठगतैरपि । परोपकारजंपुण्यंतुल्यंक्रतुशतैरपीतिपाद्मोत्तरख

गडे २२ अध्याय : ॥

परोवरीण : । त्रि० योऽपिपरांश्चावरांश्चअनुभवतितस्मिन् ॥ परोवरपरम्परपुत्रपौत्रमनुभवतीतिख : । अवरस्यादेरुत्त्वंनिपात्यते । गुण : ॥

परोवरीयान् । त्रि० उत्तरमुत्तरंश्रेष्ठाद पिश्रेष्ठे ॥ पुं० । परमपरंवरीयस्तु गुणवतिप्राणे ॥

परोष्णी । स्त्री० तैलपायिकायाम् । मुखविष्ठावागुलिकादिनामिकायां म् । चटिकाविशेषे ॥ परंशत्रु उष्णं यस्या: । गौ०ङी ॥

पर्कटि : । स्त्री० प्लक्षवृक्षे ॥

पर्कटी । पुं० प्लक्षवृक्षे । जटिनि ॥ कमण्डलुतरौ ॥ पाकरि० इतिभाषा ॥

पर्कटी । स्त्री० प्लक्षवृक्षे । पाकरि० इ० भा० प्र० ॥ पूगादेर्नूतनेफले ॥ पृच्यते पृची० । वा० कट : । गौ० ङीष् ॥

पर्जनी । स्त्री० दारुहरिद्रायाम् ॥ पिपर्त्ति । पृ० विच् । पर्चासौजनी च ॥ परम्पालकंस्वासथ्यंजनयति वा । जनी ० ॥ ण्यन्त: । कर्मण्यण् ॥

पर्जन्य : । पुं० मेघशब्दे ॥ ध्वनदम्बुदे ॥ शक्रे ॥ पिपर्त्ति । पर्षतिवा । पृ० । पृषुसेचनेवा । पर्जन्य इ० साधु: ॥ वृष्ट्यात्मकेदेवे ॥ पर्जन्योनाम वृष्ट्युपकरणाभिमानिनीदेवताविशेष इतिछान्दोग्यभाष्यम् ॥ मेघसामान्ये ॥ यज्ञाद्भवतिपर्जन्य: ॥ सूर्ये ॥ खगोभिर्भिंक्तुमारेभेपर्जन्य : काल आगते

पर्जन्यहर्ष : । पुं इन्द्रे ॥

पर्जन्या । स्त्री० दारुहरिद्रायाम् ॥

पर्ण : । पुं० वातपोथे । पलाशे । किंशुके । ढाक० इ० भा० ॥ पिपर्त्ति । पृ० । धापृवस्यज्यतिभ्योन : ॥ यद्वा ॥ पर्णयति पर्णहरितभावे । अच् ॥ न० । पत्रे ॥ ताम्बूले ॥ यथा । अनिधायमुखे पर्णं पूगंखादयतेनर: । मतिभ्रंशो दरिद्र:स्यादन्ते नस्मरतेहरिम् ॥

पर्णकृच्छ्र: । पुं० पत्रकृच्छ्रव्रते ॥ यथा । पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकै: । प्रत्येकंप्रत्यहाभ्यस्तै: पर्णकृच्छ्रउदाहृत: ॥ इतिगरुड़पुराणम् ॥

पर्णखण्ड : । पुं० वनस्पतौ ॥ ताम्बूलैकांशे ॥

पर्णचोरक : । पुं० चोरकनामगन्धद्रव्ये ॥

पर्णध्वत् । त्रि० पर्णध्वंसकर्त्तरि ।

पर्णनर: । पुं० पित्रादिशवासथ्यलाभेदाहार्थंतत्प्रतिनिधिभूतशरपलाशपत्ररचितोर्णातन्तुवेष्टितयवपिष्टलिप्तनराकारेपुत्तलके ॥

पर्णभेदिनी । स्त्री० प्रियङ्गौ

पर्णभोजन: । पुं० छागले ॥ पर्णानि

भोजनंयस्य ॥ त्रि० । पत्रभचके ॥

पर्णमाचाल : । पुं० कर्मरङ्गवृक्षे ॥

पर्णमृग : । पुं० वानरादिमृगगणविशेषे ॥ यथा । वनौकोवृक्षमार्जार वृक्षमर्कटिकादय : । एतेपर्णमृगा : प्रोक्ता : सुश्रुताद्यैर्महर्षिभि : ॥ स्मृता : पर्णमृगावृष्य चक्षुष्या: शोषिणहिता: । श्वासार्शकासशमना: सृष्टमूत्रपुरीषका इतिभावप्रकाश:॥

पर्णलता । स्त्री० नागवल्ल्याम् ॥

पर्णवल्ली । स्त्री० पलाशीलतायाम् ॥

पर्णशाला । स्त्री० उटजे । मुनिगृहे ॥ पर्णनिर्मिताशाला । शाकपार्थिवादि : ॥

पर्णसि : । पुं० पङ्कजे । पद्मे ॥ जलगृहे ॥ पृणोति । पृप्रीतौ । सानसिवर्णसि पर्णसीत्यादिनाऽसिप्रत्यय : पृणोतेर्नुक्च ॥

पर्णाशन : । पुं० घने । मेघे ॥

पर्णास : । पुं०स्वल्पपत्रतुलस्याम् । कठिञ्जरे ॥ पर्णान्यस्यति । असु० । कर्मण्यण् ॥ यद्वा पर्णैरसति । असदीप्तौ । पचाद्यच् ॥

पर्णी । पुं० द्रुमे । वृक्षे ॥

पर्णिनी । स्त्री० माषपर्ण्याम् ॥

पर्णोटजम् । न० उटजे । पर्णशालायाम् ॥

पर्द्द : । पुं० अपानोत्सर्गे । कुत्सितशब्दे । गुरुरवे ॥ पर्द्दते ॥ पर्द्द० । प० अच् ॥

पर्द्दनम् । न० पर्द्दे । पाद० इ०भा० ।

पर्प्प : । पुं० पङ्गुपीठे । येनकाष्ठेन पङ्गुश्चरतितस्मिन्काष्ठे ॥ पर्प्पगतौ । हलश्चेतिकरणे घञ् ॥ न० । नवतृणे ॥ गृहे ॥ (पर्पत्ति । पृ० । खष्यशिल्पशष्पत्यादिनापप्रत्ययान्त: साधु : ॥

पर्प्पट : । पुं० पित्तपापड़ा० इ० भा० भेषजान्तरे । कवचे । तिक्ते ॥ पर्पटोवरतिक्तश्चस्मृत : पर्पटकश्चस : । कथित: पांशुपर्यायस्तथा कवचनामक : ॥ पर्पटोहन्तिपित्तास्रभ्रमतृष्णाकफज्वरान् । सङ्ग्राही शीतलस्तिक्तोदाहनुद्वातलोलघु : इतिभावप्रकाश :॥ पापड़० इ०भा० पिष्टप्रभेदे ॥ धूमक्षीरचितहिङ्गु हरिद्रालवणैर्युता : ॥ सर्जिकाजीरकाभ्यां श्चतनूकृत्यचवेल्लिता : ॥ पर्पटास्तेसदङ्गारभृष्टा : परमरोचका : । दीपना : पाचनारूक्षागुरव : किञ्चिदीरिता: ॥ मौद्गाश्चतद्गुणा: प्रोक्ता विशेषाल्लघवोहिता : । चणकस्यगुणैर्युक्ता : पर्पटाश्चणकोद्भवा: ॥ स्नेहभृष्टास्तुतेसर्वे भवेयुर्मध्यमागुणैरितिभावप्रकाश : ॥

पर्प्पटक : । पुं० कवचे । तिक्ते । पर्पटे ॥

पर्प्पटद्रुम : । पुं० कुम्भीवृक्षे ॥

पर्प्पटी । स्त्री० सौराष्ट्रमृत्तिकायाम् ॥ पिष्टप्रभेदे । पापड़ी० इ० भा०॥ उत्तरदेशभवसुगन्धिद्रव्ये । पपरी० इ० भा० । रञ्जन्याम् । चक्रवर्त्तिन्याम् ॥ अस्यागुणा यथा । पर्पटी तुवरातिक्ताशिशिरावर्णकृल्लघु: । विषव्रणहरीकण्डूकफपित्तास्रकुष्ठनुत् ॥

पर्प्परीक: । पुं० सूर्ये ॥ वह्नौ ॥ भूपे ॥ पिपर्त्ति । पॄ० । फर्फरीकादयश्चेति ईकन् । धातोर्द्वित्वं रुक्चाभ्यासस्य ॥ वेदभाष्येतुपॄ पालन पूरणयोरस्य निपातनमिदं माश्रित्यस्तोतॄणां पालक० इ० व्याख्यातं ॥

पर्प्परीण: । पुं० पर्णस्यशिरायाम् ॥ द्यूतकम्बले ॥ पर्णं चूर्णरसे ॥ न० पर्णे ॥ इतिमेदिनी ॥

पर्प्पिक: । पुं० पङ्गौ ॥ खञ्जे ॥ पर्पेण चरति । पर० ॥ स्त्री पर्प्पिकी ॥ षित्त्वान्ङीष् ॥

पर्फरीकम् । न० किसलये ॥ स्फुरति । स्फुरस्फुरणे । पर्फरीकादयश्चेतिईकन्धातोपर्फरादेशश्च ॥ यद्वा । धातोर्द्वित्वम्० उकारस्याकार:सलोप: रुक्चाभ्यासस्य । वेदभाष्ये तु अिफलाविशरणेस्यनिपातनमाश्रित्यशत्रूणां विदारयितेतिव्याख्यातम्॥

पर्य्यङ्क: । पुं० मञ्चे । मांचा० इ० भाषा ॥ पल्यङ्क० पलङ्ग: इ०भाषायाम् । ऋषीणामासने ॥ पर्य्यस्तिकायाम् खाट० भा० ॥ परितोऽङ्क्यते । अकिलक्षणे घञ् ॥

पर्यङ्कपादिका । स्त्री० कोलशिंब्याम् ॥

पर्य्यक् । त्रि० परितोर्थे ॥

पर्य्यटनम् । न० भ्रमणे । व्रज्यायाम् । अटाव्याम् । फिरना० इ० भाषा अट० परिपूर्व: । भावेल्युट् ॥

पर्य्यनुयोग: । पुं० जिज्ञासायाम् ॥ इतिहलायुध: ॥ दोषविशेषे ॥

पर्यनुयोज्योपेक्षणम् । न० निग्रहस्थानप्राप्तस्यनिग्रहे ॥ निग्रहस्थानंप्राप्तवतोऽनिग्रह:निग्रहनिग्रहस्थानानुद्भावनमित्यर्थ: । यत्रत्त्वनेकनिग्रहस्थानपाते एकतरोद्भावनंतत्रनपर्यनुयोज्योपेक्षणम् । अवसरेनिग्रहस्थानोद्भावनत्त्वावच्छिन्नाभावस्यैवतत्त्वात् । ननुवादिनाकथमिदमुद्भाव्यंस्वकौपीनविवरणस्यायुक्तत्त्वादिति चेत्सत्यम् । मध्यस्थैनैवेदमुद्भाव्यम् । वादेचस्वयमुद्भावनेऽप्यदोष: ॥

पर्यन्त: । पुं० अन्त्यसीमायाम् । प्रान्तदेशे ॥ परितोऽन्त: ॥ समीपे ॥

पर्य्यन्तभू: । स्त्री० नदीनगरादिसमीपभूमौ । परिसरे ॥ पर्य्यन्तेभू: ॥

पर्यन्तिका । स्त्री० गुणभ्रंशे ॥

पर्य्यय : । पुं० व्यतिक्रमे । क्रमोल्लङ्घने । शास्त्रतोलोकव्यवहाराद्वाप्राप्तस्यार्थस्यपरित्यागे । अतिपाते । उपात्यये ॥ पर्ययणम् । इण् गतौ । एरच् ॥
पर्य्ययणम् । न० अश्वसज्जायाम् । जीन० इ० भाषा० पलानइतिच ॥
पर्य्यवसानम् । न० चरमे ॥ षोन्तकर्मणि ॥ पर्यवपूर्वः । ल्युट् ॥
पर्य्यवसितः । त्रि० पर्य्यवसानप्राप्ते ॥
पर्य्यवस्था । स्त्री० विरोधने ॥ पर्य्यवस्थानम् । छा० । आतश्चोपसर्गे० ॥
पर्य्यवस्थाता । त्रि० शत्रौ । विरोधिनि ॥ पर्य्यवतिष्ठति । छा० । तृच् ॥ पर्य्यवरोद्धरि ॥
पर्यवस्थानम् । न० विरोधे ॥ छा० । ल्युट् ॥ सर्वतोभावेनावस्थितौ ॥
पर्य्यश्रु : । त्रि० परिगतानन्दवाष्पे ॥
पर्य्यस्त : । त्रि० पतिते । स्रस्ते । ढेपडा० इतिभा० ॥ हते ॥ परितोऽस्त : ॥ परिवृत्ते । सर्वतःप्रसृते ॥ क्षिप्ते ॥
पर्य्यस्तिका । स्त्री० खट्वायाम् ॥
पर्य्याचान्तम् । न० एकपङ्क्तिस्थान्यानवमन्ययत्रान्नेभुज्यमानेकेनचिदाचमनंक्रियतेतदन्नंपर्याचान्तमुच्यते ॥
पर्य्याणम् । न० पल्ययने । घोडेकापलान० इ० भा० ॥ वङ्कायभागे० इ० त्रि० शि० ॥

पर्य्याधाता । पुं० आहिताग्नौकनिष्ठे ॥ यथा । 'सोदर्येतिष्ठतिज्येष्ठेयन्याधानंकरोतिहि । तयोः पर्याहितोज्येष्ठः पर्याधाताकनिष्ठकः ॥
पर्य्याप्तम् । न० यथेष्टे । निकामे ॥ निवारणे ॥ त्रि० । तृप्ते ॥ शक्ते ॥ कार्यकारणदक्षे ॥ परिमिते ॥ आप्लृव्याप्तौ । परिपूर्वः । भावे० क्त : ॥ प्राप्तौ ॥ तृप्ताविति मेदिनिकारः ॥
पर्य्याप्ति : । स्त्री० प्रकामे ॥ प्राप्तौ ॥ रक्षणे । मारणोद्यतस्यनिवारणे ॥ पर्यापनम् । पर्याप्ऽतिस्त्राणार्थः । क्तिन् ॥ सामर्थ्ये ॥ स्वरूपसम्बन्धविशेषे ॥ सचसर्वेषामेवपदार्थानांविशिष्टबुद्धिनियामकः । पदार्थभेदेननाना । यथा । पर्याप्तिश्चायमेकोघटइमौद्वावित्यादिप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषइतिदीधितिः । समवायेनगुणे गुणस्यासत्त्वेपिचत्वारोगुणाइत्यादिप्रतीत्यागुणादिषुसङ्ख्यादिमत्वनियामकोपिताद्दशसम्बन्धः । इतिसामान्याभावेजगदीशः । द्वितीयवादेगदाधरभट्टाचार्यश्च ॥
पर्याय : । पुं० प्रकारे । अवसरे ॥ क्रमे । आनुपूर्व्याम् । परिपाट्याम् । अनुक्रमे । वारी० इ० भा० ॥ निर्माणे ॥ द्रव्यधर्मे ॥ क्रमेण कार्थवाचकाः शब्दाः पर्यायाः इतिविजय

पर्याय :

रचित ५॥ सम्पर्कविशेषे ॥ येनस-हयत्सम्पर्कः सम्बन्धस्तेनसहतत्-पर्यायः। यथा। समानं कुलभाव स्वदानादानन्तथैवच। तयोर्वंशस-मानंहिपर्यायश्चप्रचक्षते ॥ इतिकु-लदीपिका ॥ अलङ्कारवि०। यथा। एकंक्रमेणानेकस्मिन्पर्यायः। एकं वस्तुक्रमेणानेकस्मिन्भवतिक्रियते-वासपर्यायः। क्रमेणोदाहरणम्। श्रोणीभारस्त्यजतितनुतांसेवतेमध्य भागः पद्भ्यांभुक्तास्तरलगतयः संश्रितालोचनाभ्याम्। धत्तेवक्षः कुचसचिवतामद्वितीयञ्चवक्त्रम्तद्गा त्राणांगुणविनिमयः कल्पितो-यौवनेन ॥ यथावा। नन्वाश्रयस्थि-तिरियंतवकालकूटकेनोत्तरोत्तरवि शिष्टपदोपदिष्टा ॥ प्रागर्णवस्यहृद येवृषलक्ष्मणोथकण्ठेऽधुनावससि वाचिपुनः खलानाम् ॥ यथावा। बिम्बोष्ठएवरागस्तेतन्विपूर्वमदृश्य त। अधुनाहृदयेप्येषमृगशावाक्षि-दृश्यते ॥ रागस्यवस्तुतोभेदेपिएक तयाध्यवसितत्त्वादेकत्त्वमविरुद्धम् ॥ तत्ताणसिरिसहोअररअणाहरणम्मि हिअअमेकरसम्। बिम्बाहरेपि आणंनिवेसिअंकुसुमवाणेन ॥ * ॥ तत्तेषांश्रीसहोदररत्नाभरणे हृदय मेकरसम्। बिम्बाधरेप्रियाणांनिवे शितुकुसुमवाणेनेतिसंस्कृतम् ॥

पर्यायशयनम्

श्रीसहोदररत्नंकौस्तुभः आभरणं-यस्यतस्मिन्विष्णौएकरसमेकतान त्वत्तेषांपातालवासिनामसुराणामि-तिचंडीदासहृदयम्। कुसुमवाणे-नप्रियाणांकान्तानांबिम्बसदृशेऽधरे विनिवेशितमित्यनेकत्रस्थितौप्रयो-जकनिर्देशाद्भेदः ॥ अन्यस्ततोन्य-था। अनेकमेकस्मिन्क्रमेणभवति-क्रियतेवासोन्यः। क्रमेणोदाहरण म्। मधुरिमरुचिरंवचः खलाना-ममृतमहोप्रथमंपृथुव्यनक्ति। अथ-कथयतिमोहहेतुमन्तर्गतमिवहालह लंविषंतदेव ॥ तद्गेहंनतभित्तिम-न्दिरमिदंलब्धावकाशंदिवः साधेनु र्जरतीनदन्तिकरिणामेताघनाभाघ टाः। सक्षुद्रोमुशलध्वनिः कलमि दंसङ्गीतकंयोषितामाश्चर्यं दिवसैर्द्वि जोयमियतींभूमिंसमारोपितः ॥ च चैकस्यैवहानोपदानयोरविवक्षितत्वा न्नपरिवृत्तिः ॥ * ॥ अपिचलक्षणा न्तरम्। क्रमेणैकमनेकस्मिन्नाधारे वर्ततेयदि। एकस्मिन्नथवानेकंपर्या यालङ्कृतिर्मतेति ॥ पर्ययणम्। इण०। परावनुपात्ययइणइतिघञ्। व्यत्ययेपि ॥ यथा। प्राप्तः पर्याय कालोव इतिब्रह्माभ्यभाषतइति ॥ पर्यायशयनम्। न० उपशाये। विशा-ये। प्रहरिकादीनांपर्यायेणक्रमेणश यनम् ॥

पर्यायोक्तम् । न० अलङ्कारविशेषे ॥ पर्यायोक्तंविनावाच्यवाचकत्वेनैंवस्तुयत् ॥ वाच्यवाचकभावव्यतिरिक्तेनावगमनव्यापारेणयत्प्रतिपादनं तत्पर्यायेणभङ्ग्यन्तरेणकथनात्पर्यायोक्तम् । उदाहरणम् । यंप्रेच्य चिररूढापिनिवासप्रीतिरुज्झिता मदेनैरावणमुखमानेनहृदयेहरेः ॥ अत्रैरावणशक्रौमदमानंमुक्तौजातावितिव्यङ्ग्यमपिशब्देनोच्यते । तेनयदेवोच्यतेतदेवव्यङ्ग्यंयथातुव्यङ्ग्यंनतथोच्यतेयथागविशुक्लंचलति दृष्टेगौः शुक्लश्चलतीति विकल्पोयदेवदृश्यतेतदेवविकल्पयति० नतुयथादृष्टंतथा० यतोभिन्नासंसृष्टत्वेनदृष्टंभेदसंसर्गाभ्यांविकल्पयति ॥

पर्य्यासित : । त्रि० पर्य्यावर्त्तिते ॥

पर्य्याहारः । पुं० वीवधे । उभयतोबद्धशिक्यस्कन्धवाह्यकाष्ठविशेषे । कांबड़इतिबङ्गीइतिचभा० ॥ परित आह्रियतेऽनेन ॥

पर्य्याहितः।पुं० योऽग्रेऽग्न्याधानंकरोतितस्यज्येष्ठे ॥ यथा । सोदर्येतिष्ठज्येष्ठेअग्न्याधानंकरोतिहि । तयोः पर्य्याहितोज्येष्ठः पर्याधाताकनिष्ठकः ॥

पर्य्युदञ्चनम् । न० उद्धारे । ऋणे ॥ परितउदच्यते । अञ्चु० । कृत्यल्युटइतिकर्मणिल्युट् ॥

पर्य्युदस्तः । त्रि० पर्युदासविशिष्टे । विध्यन्वयिभेदात्मकनञर्थयुक्ते ॥

पर्युदासः । पुं० प्रतिषेधभेदे ॥ प्राधान्यन्तुविधेर्यत्रप्रतिषेधेऽप्रधानता । पर्युदासः सविज्ञेयोयत्रोत्तरपदेननञ् ॥ सामान्यशास्त्रप्राप्तनिषेधस्यैवपर्युदासत्वम् ॥ यथा । अमावास्यायाम्पितृभ्योदद्यात् रात्रौश्राद्धं नकुर्वीत । अत्रश्राद्धकरणे रात्रेः पर्युदासः ॥ परिसर्व्वतोभावेनउदास्यतेविधियेत्रसपर्युदासइतिगौडाः ॥

पर्युपयुक्त : । त्रि० समाप्ते ॥ यथा । आगमकालेनैवास्य यःकृतस्नंपर्य्युपयुक्तंस्यादितिमहाभाष्यम् । आगमकालेनविद्याग्रहणकालेन । अस्यविद्यार्थिनः । पर्य्युपयुक्तंसमाप्तमिति तदर्थः ॥

पर्युषितम् : त्रि० रात्यन्तरितपक्वान्ने । व्युष्टे । बासी० इ० भाषा० ॥ यातयामंगतरसंपूतिपर्युषितञ्चयत् । उच्छिष्टमपिचामेध्यंभोजनंतामसप्रियमितिभगवद्गीता ॥

पर्य्येषणा । स्त्री० अन्वेषणायाम् । ढूंढणाइतिढूंढइतिचभा॥ अन्यांपर्येषणांचर ॥ तर्कादिनायथावोधितधर्माद्यन्वेषणे ॥ इषगत० दि० । इषआभीक्ष्ण्ये क्र्या० । आभ्यांपरेर्वेतिपक्षेयुच् । टाप् ॥

पर्व्वकम् । न०जानुपर्वणि । घोंटूइति

जान् इतिच भा० ॥
पर्व्वकारी । पुं० धनादिलोभेनअपर्व्वसु अमावास्याक्रियावर्त्तके ॥
पर्व्वगामी । पुं० पर्व्वसु स्त्रीगामिनि ॥
पर्व्वतः । पुं० महीध्रे । शिखरिणि । क्ष्माभृति । अहार्य्ये । गोत्रे । गिरौ ॥ पर्व्वाणिसन्त्यस्य । तपपर्व्वमरुद्भ्याम् ॥ यद्वा । पर्व्वति । पर्व्वपूरणे । भृमृदृशियजिपर्व्विपच्यमितमिनमिहर्यिभ्योऽतच् ॥ विंशतिश्च ष्टपर्व्वता यथा । हिमवान्हेमकूटश्चनिषधोनीलपर्व्वतः ॥ श्वेतश्चभृङ्गवान् मेरुर्माल्यवान्गन्धमादनः ॥ महेन्द्रोमलयः सह्य . शुक्तिमानृक्षमानपि । विन्ध्यश्चपारियात्रश्चकैलासो मन्दिरस्तथा ॥ लोकालोकोमहांस्तेषु तथैवोत्तरमानसः । एतेविंशतिर्विख्याताः पर्व्वतास्तस्यपांवराः ॥ पादपे । वृक्षे ॥ शाकप्रभेदे ॥ पावदा इ० गो० शा० प्र० मत्स्यविशेषे ॥ देवर्षिविशेषे ॥
पर्व्वतकाकः । पुं० द्रोणकाके ॥
पर्व्वतजः । पुं० गिरिसंभववस्तुनि ॥
पर्व्वतजा । स्त्री० पार्व्वत्याम् ॥ सरिति । नद्याम् ॥ द्राक्षावि० । पहाड़ी० दाख इ० भा० ॥ पर्व्वतात्जाता । जनी० । पञ्चम्यामिति ड ः ॥
पर्व्वततृणम् । न० तृणविशेषे । तृणाढ्ये । मृगप्रिये ॥

पर्व्वतमोचा । स्त्री० अद्रिकदल्याम् ॥
पर्व्वतराजः । पुं० नगाधिराजेहिमाद्रौ । पर्व्वतानांराजा॥राजेतिटच् ॥
पर्व्वतराजपुत्री । स्त्री० उमायाम् । दुर्गायाम् । यथा । शक्रध्वजात्पञ्चयुते दशाहेमूलर्क्षयुक्तासितसप्तमीया । आरभ्यतस्यांदशमीञ्चयावत् प्रपूजयेत्पर्व्वतराजपुत्रीमिति ॥
पर्व्वतवासिनी । स्त्री० आकाशमांस्याम् ॥ गायत्र्याम् ॥ काल्याम् ॥
पर्व्वताधारा । स्त्री० पृथिव्याम् ॥
पर्व्वतारिः । पुं० इन्द्रे ॥ पर्व्वतानामरिः ॥
पर्व्वतालयः । पुं० वानरे ॥ पर्व्वतआलयोयस्य ॥
पर्व्वताशयः । पुं० मेघे ॥
पर्व्वताश्रयः । पुं० शरभे ॥ त्रि० । पर्व्वतवासिनि ॥
पर्व्वश्रयदेशः । पुं० देशविशेषेषु ॥ ते यथा । अतोदेशान्प्रवक्ष्यामिपर्व्वताश्रयिणश्चये । निर्व्वाराहंसवर्णाश्चकुपथाअपथाःखशाः ॥ कुथप्रावरणाश्चैव ऊर्णादर्भासमूहकाः । त्रिगर्त्तामगडलाश्चैवकिराताश्चामरैः सह ॥ इतिमत्स्यपुराणम् ॥
पर्व्वतीयः । पुं० अचोटे ॥ पर्व्वतेभवः । विभाषामनुष्य इतिपक्षेछः ॥ त्रि० पर्व्वतोत्पन्नमनुष्यादौपर्व्वतोनिवासोऽस्य । पर्व्वताच्चेतिछः ॥

पर्व्वधिः । पुं० हिमांशौ । चन्द्रे ॥

पर्व्व । न० उत्सवे । मखे ॥ ग्रन्थौ ॥ प्रस्तावे ॥ लक्षणान्तरे ॥ दर्शप्रतिपदोःसन्धौ ॥ विषुवत्प्रभृतिषु ॥ ग्रन्थविशेषे ॥ ग्रन्थसन्धौ ॥ यथा । महाभारतेऽष्टादशपर्वाणि । तानियथा आदिःसभावनविराटसथोद्यमश्चभीष्मोगुरुरविजमद्रवसौप्तिकश्च । स्त्रीपर्वशान्तिरनुशासनमश्वमेधव्यासाश्रमोमुषलयानदिवावरोहइतिमहाभारतटीका ॥ तिथिविशेषेषु ॥ चतुर्दश्यष्टमीकृष्णाअमावास्याचपूर्णिमा । पर्वाण्येतानिराजेन्द्ररविसङ्क्रमणंतथा ॥ पर्वति०पर्वतेवा । पर्वपूरणे । वा० कनिन् ॥ यद्वा। पिपर्त्ति पृणातिवा ॥ पॄ० । स्नामदिपद्यर्त्तिपृशकिभ्योवनिप् ॥ क्षणे ॥

पर्व्वपुष्पी । स्त्री० रामदूतीवृक्षे ॥

पर्व्वपूर्णता । स्त्री० आयोजने । सम्भारे ॥ पर्व्वणःपूर्णत्वे ॥

पर्व्वमूला । स्त्री० श्वेतायाम् ॥

पर्व्वयोनिः । पुं० इक्ष्वादौ ॥ पर्वणियोनिरुत्पत्तिर्यस्य ॥

पर्व्वरुट् । पुं० पिण्डपुष्पे । दाडिमे ॥

पर्व्ववल्ली । स्त्री० मालादूर्वायाम् ॥

पर्व्वसन्धिः । पुं० प्रतिपत्पञ्चदश्योरन्तरे ॥ पञ्चदशीशब्देनपूर्णिमाऽमावास्ययोर्द्वयोर्ग्रहणम् । अतएवपौर्णमास्याअमावास्यायावाशेषसार्द्धदण्डचतुष्टयम्प्रतिपदश्चप्रथमसार्द्धदण्डचतुष्टयं पर्वसन्धिरिति बुधाः ॥ सैंहिकेयोयदाराहुर्ग्रसतेपर्वसन्धिष्वितियमः ॥ पर्वणोःसन्धिः ॥

पर्व्वितः । पुं० पर्वतमत्स्ये ॥

पर्शुः । पुं० कुठारे । परशौ ॥ परंशत्रुं शृणाति । शॄहिंसायाम् । आङ्परयोःखनिशॄभ्यांडिच्चेतिकुः ॥ पृ० ॥ यद्वा । स्पृश्यते स्पृशसंस्पर्शने स्पृशेश्वण्शुनौपृचेति०शुन्० । पृ । आदेशश्च ॥

पर्शुका । स्त्री० पार्श्वास्थिनि । पांसुइतिभाषा ॥ स्पृशति स्पृश्यतेवा । स्पृश० । स्पृशेः श्वण्शुनौपृच स्वार्थेकन् ॥ यद्वा पर्शुरिव । इवेप्रतिकृताविति कन् ॥

पर्शुपाणिः । पुं० गणेशे । विनायके ॥

पर्शुरामः । पुं० जामदग्न्ये । परशुरामे ॥

पर्शूः । स्त्री० पर्शुकायाम् ॥ अप्राणिजातेरित्यूङ् ॥

पश्वधः । पुं० कुठारे । परसा० इ० भा० ॥ परश्ववयनम् । टुओश्वि० । अन्येष्वपीतिडः । परश्वंदधाति डुधाञ् । आतइतिकः । पृषोदरादिः ॥

पर्षत् । स्त्री० सभायाम् ॥ यथाह० याज्ञवल्क्यः । चत्वारोवेदधर्मज्ञाः पर्षत्त्रैविद्यमेववा । साब्रूतेयंसधर्मः

स्यादेकोर्वाऽध्यात्मवित्तमः ॥ इति ॥ अन्यदप्युक्तंलक्षणंभविष्यपुराणे । द्विगुणाच्चक्षियाणान्तु वैश्यानांत्रिगुणास्मृता । चतुर्गुणातुशूद्राणांपर्षदुक्तामहात्मनामिति ॥ परितः सीदन्त्यस्याम् । षद्लृ० । सं० क्विप् । सदिरप्रतेरितिषत्त्वम् । वा०परेरन्तलोपः ॥ यद्वा । शॄहभसोऽदिरिति स्यदिप्रत्ययोबाहुलकात्पृषेरपि ॥

पर्षद्वल: । त्रि० परिषद्वत्त्वे । सभासदि । सभ्ये ॥ पर्षदस्त्यस्य । रजः कृष्यासुतिपरिषदोवलजित्यत्र पर्षदित्यपिपाठाद्वलच् ॥

पल: । पुं० पलाले । शस्यक्षीमधान्यनाले । पराल० इ० भा० ॥

पलम् । न० आमिषे । मांसे ॥ उन्माने । कर्षचतुष्टये । मुष्टौ । प्रकुञ्चे । विल्वे ॥ तत्तुशास्त्रे तोलकचतुष्टयम् । वैद्यकेअष्टतोलकम् । लौकिकेसाष्टरक्तिद्विमाषकतोलकत्रितयम् ॥ यथा । पलन्तुलौकिकैर्माने: साष्टरक्तिद्विमाषकम् । तोलकत्रितयंचैवंज्योतिर्ज्ञैः स्मृतिसम्मतम् ॥ इतितिथितत्त्वम् ॥ पलंसुवर्णाश्चत्वारः पञ्चवापिप्रकीर्त्तिताः ॥ (**) ॥ विघटिकायाम् । घटिकाषष्टिभागेकभागे । षष्टिविपले ॥ पलदण्डयोः प्रमाणन्तु दशगुर्वक्षरोच्चारणकाल: प्राण: षडात्मकै: , तै: पलंस्यात्तत्षष्ट्यादण्डइत्यभिधीयते ॥ लेभच । माकान्ते पत्तस्यान्ते पर्याकाशेदेशेस्वामी : कान्तंवक्तं हतंपूर्वं चन्द्रंमस्वाराचेचेत् । मृतस्नाम : प्राटैश्चे तश्चे तोराहु : क्रूर:प्राद्यात् तस्माद्धाम्नेहर्म्यस्यान्तेशय्ये कान्तेकर्त्तव्या ॥ अस्यैकपाठात्पलमृषष्टिपाठाद्दण्डोभवति ॥ यथाहकालिदास : । गुर्वक्षराणामुदितस्वषष्ट्यापलंपलानांघटिकाकिलैका । षष्ट्याघटीनांभदिनंतयार्यैस्त्रिंश्यैकयाचन्द्रमसोदिनंस्यादिति ॥ पलति । पलगतौ । पचाद्यच् ॥

पलक्या । स्त्री० पालङ्क्यशाके ॥ इ०रा० नि० ॥

पलगण्ड: । पुं० लेपके । राज० इ० भा० ॥ पलंमांसंतत्तुल्येनमृदादिनागण्डतिवदनैकदेशमिवकरोति । गडिवदनैकदेशे । पचाद्यच् ॥

पलङ्कट: । त्रि० भयशीले । भीरौ ॥ इ० त्रि० ॥

पलङ्कर: । पुं० पित्ते ॥ इति त्रि० ॥

पलङ्कष: । पुं० राक्षसे ॥ कणगुग्गुलौ ॥ पलङ्कषति । कषहिंसायाम् । मू०क: । तत्पुरुषइ० द्वितीयायाअलुक् ॥

पलङ्कषा । स्त्री० गोक्षुरके । रास्नायाम् । किंशुके । गुग्गुलौ । मुण्डीर्याम् । लाक्षायाम् । क्षुद्रगोक्षुरके । महाश्राव

ख्याम् ॥ मक्षिकायाम् ॥ टाप् ॥

पलप्रिय : । पुं० द्रोणकाके ॥ त्रि० । मांसादे ॥

पलभा । स्त्री० पलविभायाम् । विषुवत्प्रभायाम् ॥ सायमेषसङ्क्रमणादर्वाक्सपादाष्टदिनेमध्याह्ने द्वादशाङ्गुलजाछाया । यच्छाङ्कग्रहलाघवे । मेषादिकेसायनभागसूर्येदिनार्द्धजाभापलभाभवेत्सेति ॥

पलल : । पुं० राक्षसे । यातुधाने ॥ न० पङ्के ॥ मांसे ॥ तिलचूर्णे ॥ पललंतिलकल्कंस्यात् तिलचूर्णञ्चपिष्टक : । पललंमधुरंरुच्यंपित्तास्रबलपुष्टिदम् । इ० राजनिर्घण्ट : ॥ मिश्रवतिलचूर्णे । तिलकुट० इ० भा ॥ यथा । पललन्तुसमाख्यातंसेक्षवन्तिलपिष्टकम् । पललंमलकृद्वृष्यंवातघ्नंकफपित्तकृत् ॥ वृंहणंगुरुहृद्यञ्चस्निग्धंमूत्रनिवर्त्तनम् ॥ पलति० पल्यतेऽनेनवा । पलगतौ । वृषादिभ्यश्चिदितिकल : ॥

पललज्वर : । पुं० पित्ते ॥ इतिहारावली० ॥

पललप्रिय : । पुं० द्रोणकाके ॥

पललाशय : । पुं० गण्डरोगे ॥

पलव : । पुं० प्लवे । पञ्जराख्यिटे । मत्स्यधारणोपाये । लोपो० इ० गौ० भाषा० ॥

पलशतम् । न० तुलायाम् ॥ पलानां शतम् ॥

पलाग्नि : । पुं० पित्ते ॥

पलाङ्ग : । पुं० शिशुमारे ॥

पलाण्डु : । पुं० सुकन्दके । मुखदूषणे । शूद्रप्रिये । रोचने । प्याज० इ० भा० ॥ पलाण्डुर्यवनेष्टश्चदुर्गन्धोमुखदूषक : । फरणोन्य : पलाण्डुस्सुलताकोद्रुद्रुमश्चस: ॥ इ० धन्वन्तरि : ॥ सुश्रुतस्तु । लशुनोदीर्घपत्रश्चपिच्छगन्धोमहौषधम् । फरणश्चपलाण्डुश्चलतार्कश्चापदारिका ॥ गृञ्जनंयवनेष्टश्चपलाण्डोर्दशजातय : ॥ इत्याह ॥ पलाण्डुस्तुगुणैर्ज्ञेयोरसोनसदृशोबुधै : ॥ स्वादुपाकरसोऽनुष्ण : कफकृन्नातिपित्तल : ॥ हरते केवलंवातंबलवीर्यकरोगुरुरिति भावप्रकाश : ॥ पलति । पलरक्षणे । बाहुलकात्आण्डुप्रत्यय : ॥

पलाद : । पुं० । स्त्री० । राक्षसे ॥ पलमत्ति । अद० । कर्मण्यण् ॥

पलादन : । पुं० । स्त्री० । राक्षसे ॥ त्रि० मांसभक्षणशीले ॥

पलान्नम् । न० पाकराजेश्वरोक्तप्रकारे मांसादियुक्तसिद्धभक्ते । पलौदने । मांसौदने ॥

पलाप: । पुं० गजगंडे । हस्तिकपोले ॥

पलायनम् । न० अपयाने । प्रद्रावे । भयादिनास्थानान्तरगमने । भागना० इ० भा० ॥

पलायित : । त्रि० नष्टे ॥ गृहीतदिशि । तिरोहिते । पलायनविशिष्टे ॥ इ० हि० ॥

पलाल : । पुं० । न० । निष्फलितृणादिकाण्डे । सस्यशूकधान्यनाले ॥ पलति पल्यतेवा । पलगतौ । तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्य : कालन् ॥ पलमलतिवा । अल० । कर्मण्यण् ॥

पलालदोहद : । पुं० आम्रवृक्षे ॥ इति शब्दमाला ॥

पलालिनम् । न० महत्पलालंपलाली तद्वति ॥ मत्वर्थे० पामादित्वात्नः । शाकीपलालीदद्र्वांह्रस्वत्वञ्च ॥

पलाली । पुं० महत्पलाले ॥

पलाश : । पुं० शव्याम् ॥ राक्षसे ॥ मगधदेशे ॥ हरिते ॥ किंशुके पर्णे । वातपोथे । याज्ञिके । ढाक० इ० भा० ॥ पलाशोदीपनोवृष्य : सरोष्णोव्रणगुल्मजित् । कषाय : कटुकस्तिक्त : स्निग्धोगुदजरोगजित् ॥ भग्नसन्धानकृद्दोषग्रहण्यर्श : क्रमीन्हरेत् । तत्पुष्पंस्वादुपाकेतुकटुतिक्तंकषायकम् ॥ वातलंकफपित्तास्रकृच्छ्रजिद्ग्राहिशीतलम् । तट्ट्राहशमनंवातरक्तकुष्ठहरंपरम् ॥ फलंलघूष्णंमेहार्श : क्रिमिवातकफापहम् । विपाकेकटुकंरूक्षंकुष्ठगुल्मोदरप्रणुत् ॥ न० । छदने । पर्णे । छदे । पत्रा० इ० भा० ॥ पलाशपत्रे ॥ शासने ॥ परिभाषणे ॥ त्रि० । हरिद्वर्णविशिष्टे ॥ निर्दये ॥ पलाशस्यपत्रस्यायम् । अण् । संज्ञापूर्वकत्वाद्वृद्ध्यभाव : ॥ यद्वा । . पलंमांसं० अश्नाति । अश० । कर्मण्यण् ॥ पलेमांसेआशायस्यवा ॥

पलाशक: । पुं शाव्याम् । किंशुकवृक्षे॥

पलाशपर्णी । स्त्री० अश्वगन्धायाम् ॥

पलाशसार : । पुं० शाकद्रुमे ॥

पलाशाक्ष : । पुं० नाडीहिङ्गुनि ॥

पलाशाख्य : । पुं० नाडीहिंगुनि ।

पलाशान्ता । स्त्री० गन्धपत्रायाम् ॥

पलाशी । पुं० वृक्षमात्रे पलाशमिसन्त्यस्य । अतइनि : ॥ राक्षसे ॥ क्षीरिवृक्षे ॥

पलाशी । स्त्री० लताविशेषे । पत्रवल्ल्याम् । अम्लपल्याम् ॥ शव्याम् ॥ काश्मीरेगन्धपलाशीतिप्रसिद्धे । कर्चूरप्रभेदे ॥

पलिक्नी । स्त्री० वृद्धायाम् ॥ पलितमस्त्यस्या : । अर० अच् । असितपलितयोर्न । छन्दसिक्नमेके० इत्यस्य कौमुदीभाषायामपिअनयोस्तइत्यस्य स्थानेक्न इत्ये षआदेशोभवति । नान्तत्वान्ङीप् ॥ गर्भिण्यांगवि ॥

पलिघ : । पुं० काचकलसे ॥ घटे ॥ प्राकारगोपुरे ॥ परिहननम्० परिहन्यतेऽनेनवा । हन० । परीघइत्यप

घादेशश्च ।

पलितम् । न० केशपाके । जरसाके शानांशौक्ल्ये ॥ फलतिफलमंवा । फलनिष्पत्तौ । ञिफलाविशरणे । नपुंसकेभावेक्त : । लोष्ठपलि ताविति माधु ॥ फलेरितजादेश्चपो वा ॥ शैलजे ॥ तापे ॥ कर्दमे ॥ केशपाशे ॥ केशशुक्लताहेतौरोगे ॥ तन्निदानं यथा । क्रोधशोकश्रमकृत: शरीरोष्माशिरोगत : । पित्तश्चकेशा न्पचतिपलितंतेनजायत इतिमाध व : । अस्यचिकित्सा यथा । लोह चूर्णस्यकर्षन्तुदशार्द्धंचूतमज्जत : । धात्रीफलद्वयंपथ्यं द्वितयेकंविभीतक म् ॥ पिष्ट्वालोहमयेभाण्डेस्थापयेन्नि शिवासयेत् । लेपोऽयमचिराद्धन्ति पलितंनेहसंशय : ॥ दशार्द्धंपञ्चक- र्षाणि ॥ काश्मर्यामूलमार्दौसहचर कुसुमंकेतकस्यापिमूलंलौहंचूर्णंसभृ ङ्गंत्रिफलपलयुतंतैलमेभि:पचेद्य: । कृत्वालोहस्यभाण्डेक्षितितलनिहि तंस्थापयेन्मासमेकंकेशा:काशप्रका शाअपिमधुपनिभा अस्ययोगाद्भव- न्ति ॥ त्रिफलानीलिकापत्रं भङ्गरा जोऽयसोरज : । अवीमूत्रेणसंपिष्टं लेपात्कृष्णीकरंपरमिति भावप्रका श : ॥

पलिता । स्त्री० वृद्धायाम् ॥ असित पलितयोर्नेति० प्रतिषेधात्ङीप्

तकारस्यनकारादेशश्चन ॥

पलौदनम् । न० मांसौदने । पलाव० इ० भा० ॥ पलश्चओदनश्चअनयो: समाहार : ॥

पल्य : । त्रि० मांसभोजिनि ॥ पलम र्हति । तदर्हतीतियत् ॥

पल्यङ्क : । पुं० पर्यङ्के ॥ मञ्चे ॥ व्रष्या म् ॥ पर्यस्तिकायाम् ॥ परितोऽङ्क्यते । अङ्किलक्षणे । घञ् । परेश्चघाङ्क- योरितिवालत्वम् ॥

पल्ययनम् । पुं० पर्याणे । पलानइति भाषा० ॥ इ०हि० च०॥ वल्लादल्ला लिकापल्ययनमिति० त्रि० श० ॥

पल्ल : । पुं० स्थूलकुसूलके । पालइति मरा इ० च० गौ० भा० ॥

पल्लव : । पुं० । न० । किसलये । नव पत्रे । प्रवाले ॥ पर्वपत्रादिसन्ताने शाखाया : पल्लवोमत : इतिकोशा न्तरम् ॥ पल्यते । सं० क्विप् । लूय ते । लूञ्० । ऋदोरप् । पल्चासौ लवश्च ॥ विटपे ॥ विस्तरे ॥ अञ्चले ॥ शृङ्गारे ॥ अलक्तरागे ॥ षिङ्गे ॥

पल्लवक : । पुं० वेश्याधवे ॥ मत्स्यविशे षे ॥

पल्लवद्रु : । पुं० अशोकवृक्षे ॥

पल्लवाङ्कुर : । पुं० तीक्ष्णे । कौपर० इ० भा० ॥

पल्लवाधार : । पुं० शाखायाम् ॥

पल्लविक : । त्रि० कामुके ॥

पल्लवितम् । त्रि० लाक्षारक्ते ॥ सपल्लवे ॥ तते । विस्तृते ॥ पल्लवा : सञ्जाताअस्य । ता० इतच् ॥

पल्लवी । पुं० द्रुमे ॥

पल्लि : । स्त्री० क्षुद्रग्रामे ॥ कुट्याम् ॥ कुटीसमूहे ॥

पल्लिका । स्त्री० गृहगोधिकायाम् ॥

पल्लिवाह : । पुं० तृणविशेषे ॥ पल्लिवाहोदीर्घतृण : सुपत्त्रस्ताम्रवर्णक : । अदृढ : शाकपत्रादि : पशूनामवलप्रद : ॥

पल्ली । स्त्री० अल्पग्रामे ॥ कुटन्याम् ॥ दक्षिणदेशप्रसिद्धे नगरविशेषे ॥ कुट्यमत्स्ये । विशम्बरायाम् । गृहगोधिकायाम् । छापकी इति० छिपकली०इतिच०भा० ॥ अस्यापतनफलमुक्तंज्योतिश्शास्त्रे । यथा । निपततियदिपल्लीदक्षिणाङ्गेनराणामस्वजनधनवियोगोलाभदावामभागे । उरसिशिरसिपृष्ठेकण्ठदेशेचराज्यंकरचरणहृदिस्थासर्वसौख्यंददातीति ॥ दिग्विशेषेतस्या : शब्दफलं यथा । वित्तंब्रह्मणिकार्यसिद्धिरतुलाशक्रेहुताशेभयम् । याम्यासम्निभयंसुरद्विपिकलिर्लाभ : समुद्रालये । वायव्यांवरवस्त्रगन्धसलिलंदिव्याङ्गनाचोत्तरे ऐशान्यांमरणंध्रुवंनिगदितं दिग्लक्षणंवञ्चने ॥ज्येष्ठीकृतेचतेप्येसूच : केचिच्चकोविदा इति० ॥

दिग्लक्षणंखञ्जनेयज्ज्ञेयंज्येष्ठीकृतेपितदितिच ॥

पल्वलम् । न० क्षुद्रसरसि । वेशन्ते । डवोखरा० इ० भा० ॥ अमरसिंह : पल्वलंस्याद्यत्रचन्द्रस्तेगेरवौ । नतिष्ठतिजलंकिञ्चित्तत्त्वारिपाल्वलम् ॥ पाल्वलंगुर्वभिष्यन्दिविष्टम्भिदोषलंपरम् ॥ पलतिपल्यतेवा । पलगतौ । सानसिवर्णसिपर्णसितगडुलाङ्कुचपालिल्वलपल्वलधिषण्यशिल्पा : इतिवलच् । यद्वा । पिवन्त्यस्मिन् । पापानि अस्मात्सानसीत्यादिनैवबलच्लुगागमोह्रस्वत्वञ्च ।

पल्वलावास : । पुं० कूर्मे ॥

पव : । पुं० निष्पावे । धान्यादीनांनिस्तुषीकरणे ॥ वायौ । पवनम् । पूञ्० । ऋदोरप् ॥ न० । गोमये इति श० चं० ॥

पवन : । पुं० वायौ । मरुति ॥ पुनातिपवतेवा । बहुलमन्यत्रापीतियुच् ॥ एवनस्यपावयितृणांवेगवतांवामध्येभगवतोविभूति : । सप्तवाह्यपवना यथा । भूवायुरावहइहप्रवहस्तदूर्द्ध : स्यादुद्वहस्तदनुसंवहसंज्ञकश्च । अन्य : परोपिसुवह : परिपूर्वकोस्माद्बाह्या : परावहइमेपवना : प्रसिद्धाइतिसिद्धान्तशिरोमणि : ॥ आवसथ्याग्नौ ॥ निष्पावे । प्रवातेसूर्पादिनाधान्यस्योत्क्षेपणेननिस्तु

षीकरणे ॥ स्वातिनक्षत्रे ॥ लघ्वादित्रिकले ॥ ।ऽ। मध्यगुरौचतुष्कले ॥ ।ऽ न० । आपाके । कुम्भकारस्यामघटादीनां पाकस्थाने । आवाइतिभा० ॥ जले । त्रि० । पवित्रे । प्रयते ॥ पूञ्० । ल्युट् ॥

पवनविजय : । पुं० गरुडोक्तशुभाशुभसूचकश्वासवायुजयोपायकग्रन्थविशेषे ॥

पवनव्याधि : । पुं० श्रीकृष्णस्यमित्रे । उद्धवे ॥ वायुरोगे ॥

पवनात्मज : । पुं० हनूमति ॥ अग्नौ ॥ पवनस्यात्मज : ॥

पवनाल: । पुं० तृणाह्वे । देवधान्ये । जुम्हरी इतिजुवार० इतिचभा०

पवनाश : । पुं० सर्पे ॥

पवनाशन : । पुं० सर्पे ॥ पवनोऽशनं यस्य ॥

पवनाशनाश : । पुं० गरुडे ॥ मयूरे

पवनेष्ट : । पुं० महानिम्बे ॥ निम्बे

पवनोम्बुजम् । न० परूषफले ॥

पवमान : । पुं० वायौ ॥ पवते । पूङ् ॥ पूङ्यजो:शानन् । आनेमुक् ॥ स्तोत्रविशेषेषु ॥ ज्योतिष्टोमेबहिद्वाद्गस्तोत्राणितत्रोद्गात्रायैस्त्रिभिर्यजमानार्थं कर्मक्रियते तानिपवमानपदवाच्यानिस्तोत्राणीत्यर्थ : ॥ निर्मथ्याग्नौ ॥ सचगार्हपत्याग्नि : । यथा । अथय : पवमानस्तु निर्मथ्योग्नि : सउच्यते । मथवेगार्हपत्योग्नि : प्रथमोब्रह्मण:स्मृत : इतिमत्स्यपुराणम् ॥

पवनात्मज : । पुं० हव्यवाहने ॥ यथा । पवमानात्मजोह्यग्निर्हव्यवाहनउच्यते ॥

पवारुक : । पुं० अश्मनि । पाषाणे ।

पवि : । पुं० कुलिशे । वज्रे ॥ पुनाति । क्षीरकस्यपवित्रत्वोक्ते: पुनातेरचइ : ॥

पवित : । त्रि० पविचिते । पूते ॥ पूयतेस्म । पूङ् । क्त:पूङश्चेतीड्विकल्प: । गणावार्दिशौ ॥ न० । मरीचे ॥

पविता । त्रि० पवित्रताकारके ॥ पुनाति । पूञ्० । तृच् ॥

पवित्रम् । न० वर्षणे ॥ कुशे ॥ ताम्रे ॥ पयसि । जले ॥ अर्घोपकरणे ॥ यज्ञोपवीते ॥ घृते ॥ मधुनि ॥ पार्वणश्राद्धादावर्घार्थं होमादावाज्यसंस्कारार्थश्चसाग्रनिर्गर्भकुशान्तरवेष्टितप्रादेशमात्रद्वयं ॥ यथा । अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेवच । प्रादेशमात्रंविज्ञेयं पवित्रंयत्रकुत्रचिदिति ॥ पुं० । तिलकवृक्षे ॥ पुत्रजीवद्रुमे ॥ त्रि० व्रतादिना शुद्धे । प्रयते । पूते ॥ शुद्धिजनके । मेध्ये ॥ पावने । शुद्धिकरे ॥ पुनाति । पूञ्० । कर्त्तरिचर्षिदेव

तयोरितीच : ॥ यद्वा । पवतेपुनातिवा । पू ङ्० । पू ञ्०वा । अशिचोदिभ्यइत्रौचौ ॥

पवित्रकः । पुं० अश्वत्थे ॥ उदुम्बरे ॥ कुशे ॥ मदनके ॥ न० । शणसूत्रजाले ॥ पवित्रमुपवीतम्तद्वदिव । इवेप्रतिकृताविति कन् ॥ पवित्रादृविपरीतलक्षणायामंज्ञायांकोवा । सम्मन्थितुपवित्रकमितिस्मृतिः ॥ जानूरुनाभिमानान्तंप्रतिमासुपवित्रकम् । इत्यग्निपुराणम् ॥

पवित्रधान्यम् । न० यवे ॥ इ० रा० नि० ॥

पवित्रा । स्त्री० नदीविशेषे ॥ तुलस्याम् ॥ अश्वत्थीवृक्षे ॥ हरिद्रायाम् ॥

पवित्रारोपणम् । न० श्रीकृष्णसंप्रदानकोपवीतदानरूपोत्सवविशेषे ॥ यथा । श्रावणस्यसितेपक्षेद्वादश्यांवैष्णवैर्मुदा । कर्तव्यः कृष्णदेवस्यपवित्रारोपणोत्सवः ॥ श्रीकृष्णदेवस्येत्युपलक्षणमन्यदेवतानामपि ॥

पवित्रारोहणम् । न० पवित्रारोपणे ॥ यथा । आषाढशुक्लपक्षस्ययाष्टमीश्रावणस्यच । पवित्रारोहणंकुर्याद्देव्याः प्रीतिकरंपरम् ॥ दुर्गामन्त्रेणमन्त्रेणदुर्गाबीजेनभैरव । वैष्णवीतंत्रमन्त्रेणपवित्रारोहणंचरेत् ॥ विशेषाच्छ्रावणारभ्यदेव्याः कुर्यात्पवित्रकम् । सर्वेषामपिदेवानांपवित्रारोहणंचरेत् ॥

पवित्राष्टकम् । न० स्थाणवादिषु ॥ स्थाणुस्वर्णाक्षगोकर्णभद्रकर्णमहाबलाः । वस्त्रापदाविमुक्ताख्यरुद्रकोट्यः खमण्डले ॥ आकाशतत्त्वेएतत्पवित्राष्टकमिति मृगेन्द्रसंहिता ।

पवित्रितः । त्रि० पवित्रे । प्रयते । पूते । शुचौ । शुद्धे ॥ पवित्रंसञ्जातमस्य । ता० इतच् ॥

पशव्यः । त्रि० पशूपभोग्यबालतृणादिसमृद्धदेशे ॥ पशुभ्योहितमित्यर्थेयत् ॥

पशु । अ० दर्शने ॥ परमदर्शने ॥ सम्यगर्थे ॥ पशुमन्यमानाः ॥

पशुः । पुं० मृगादौ । सिंहव्याघ्रादौ । तिर्यगादिसर्वप्राणिषु ॥ अस्यलक्षणम् । लोमवल्लाङ्गूलवत्त्वम् । इ० भा० । रत्नकणादः । ग्राम्यारण्यप्रभेदेनचतुर्दशविधाःपशवोभवन्ति । यथा । हर्पैठीनसिः । गौरविरजोऽश्वोऽश्वतरोगर्दभोमनुष्यश्चेति सप्तग्राम्याः पशवः । महिषवानरर्क्षसरीसृपरुरुपृषतमृगाश्चेतिसप्तारण्याःपशवइति दुर्गोत्सवतत्त्वम् ॥ देवाजे । छागे ॥ छागादौपशुपदप्रयोगमाहयज्ञपार्श्वउष्ट्रोवायदिवामेषश्छागोवायदिवाहयःपशुस्थानेनियुक्तानांपशुशब्दोभिधीते ॥ इतिबलिदानप्रकरणे तिथि

तत्त्वम् ॥ अवैधपशुहननेदोषो यथा गारुड़े । बसेत्सनरकेघोरेदिनानि पशुरोमभि: । सम्मितानिदुराचा- रोयोहन्त्यविधिनापशून् ॥ इति ॥ प्रमथे । महादेवगणप्रभेदे ॥ स्वर्गा- दिकामेसंसारपरवशेनरे ॥ घृणा द्यष्टपाशबद्धेप्राणिनि ॥ पाशायथा घृणाशंकाभयंलज्जाजुगुप्साचेतिपञ्च मी । कुलंशीलंतथाजातिरष्टौपाशा: प्रकीर्त्तिता: ॥ पाशबद्ध: पशु:प्रोक्त: पाशमुक्त: सदाशिव: इति ॥ ज्ञा नशून्येजने ॥ यथा । आहारनिद्रा भयमैथुनंनिसमान्यमेतत् पशुभिर्न राणाम् । ज्ञानंनराणामधिकोविशे षोज्ञानेनहीना: पशुभि: समाना इति ॥ गवादौ ॥ देव॥प्राणिमा त्रे ॥ यज्ञे ॥ यज्ञोदुम्बरे ॥ साध कानांभावत्रयाणांप्रथमेभावे॥तस्य निर्णयोयथा । नित्यश्राद्धंतथासंन् ध्यावन्दनंपितृतर्पणम् । देवताद र्शनंपीठदर्शनंतीर्थदर्शनम्॥गुरोरा ज्ञापालनञ्चदेवतानित्यपूजनम् । पशुभावस्थितोमर्त्त्योमहासिद्धिंलभे, द्ध्रुवम् ॥ अपिच । पत्रंपुष्पंफलं तोयंस्वयमेवाहरेत्पशु: । नशूद्रदर्श नंकुर्यान्मनसानस्त्रियंस्मरेत् ॥ आ दौभावंपशो:कृत्वापश्चात्कुर्याद्दवश्य कम् । वीरभावं महाभावं सर्वभा वोत्तमोत्तमम् ॥ तत्पश्चादतिसौन्द र्यंदिव्यभावंमहाफलमिति रुद्रयाम ले उत्तरखण्डम् ॥ दिव्यस्तुदेवता प्राय:शुद्धान्त:करण: सदा । द्वन्द्वा तीतोबीतराग: सर्वभूतसम: क्ष- मी ॥ तस्यकालो यथा । आषोड शमदंडेनपशुभाव मथापिवा । इ- ति रुद्रजामले उत्तरखण्डम् ॥ जन्ममात्रं पशुभावंवर्षषोडशकाव धिइतिवामकेश्वरे ५१ पटल: । पशुभावकर्त्तव्याकर्त्तव्यगर्भतद्भाव निन्दा माहरुद्रजामले । पशुभाव रतायचकेवलं पशुरूपिण: । रात्रौ यन्त्रञ्चमंत्रञ्च नस्पृशेन्नजपेत्क्वचित् ॥ संशयोबलिदानेच तन्त्रेचसंशय: सदा ॥ मन्त्रेचाक्षरबुद्धिश्चविश्वा सोगुरौसदा ॥ प्रतिमासु शिलाबु द्धिर्भेदकोदैवते पुन: । निरामिषेण देवेशिदेवताया: प्रपूजनम् ॥ अ- स्नानेन तथा स्नानंप्रत्यहं देहताड़ नम् । सर्वषाञ्चैवनिन्दान्तुय:कुर्या च्चमहेश्वरि ॥ सएवशुभावेनद्यधम: परिकीर्त्तित: ॥ इति रुद्रजामले उत्तरखण्डे ६ पटल: ॥ रात्रौनैव यजेद्देवीं संध्यायां बापराह्णके । ऋतुकालंविनादेविरमणं परिवर्ज्ज येत् ॥ मांसादिकं महेशानिलज्जेत् पञ्चपर्वसु । यदन्यद्देवविहितं कु- र्यान्नियमतत्पर: ॥ इतिनित्यात न्त्रे प्रथमपटल: ॥ (**) ॥ संसा

र्य्गो ॥ यथा। चैतन्यंदृक्क्रियारूपं तदस्यात्मनिसर्वदा। सर्वतश्चयतोमुक्तौश्रूयतेसर्वतोमुखम् ॥ सदप्यभासमानत्त्वात् तन्निरुद्धं प्रतीयते। वश्योनावृतवीर्य्यस्समोतएवविमोक्षणात् ॥ अस्यार्थ: । ज्ञानक्रियात्मकंयच्चैतन्यं तदात्मन्यस्ति नतु शरीरसमवेतमितिचार्वाकनिराकरणशास्त्रप्रतिपादितम्। तच्चसर्वदैवास्तिनतुमुक्तावेषमुक्तौतुमं विस्वभावो यथा। वैशेषिकैरिष्टस्तथाविधायामोहरूपायामुक्तेर्निराकृतत्त्वात्। यतोमुक्तौमुक्तात्मनांसर्वतोमुखस्यचैतन्यस्यश्रवणात्। नचतेषांतदानीमेवतदुत्पद्यतेइतिवाच्यम्। सदुत्पत्त: सत्कार्य्यवादेप्रतिपादितत्त्वात्। अथमुक्ताविवतथाविधचैतन्यश्रुते: पूर्व्वञ्चतदनुपलम्भादन्वयव्यतिरेकाभ्यांसंसारावस्थायांसर्व्वतोमुखत्वं चैतन्यस्यकुतइत्याशङ्कानिरासायाह। सदपीतिसत्स्यमनुपलंभ:संसारावस्थायांतथाविधस्यचैतन्यस्यसत्त्वन्यथासिद्ध:। व्यञ्जकाभावकृतोहियोनुपलम्भ:सनाभावसाधकोऽपितुअसतिव्यञ्जकेयथायमनुपलम्भ:सव्यञ्जकाभावकृत:अतश्चनाऽसत्त्वंसाधयति। तच्चसर्वतोमुखत्वंसदपियस्मात्प्रथतेतत: केनापिप्रतिबद्धमित्यवसीयते। अस्माच्चहेतोरनावृतनिजसामर्थ्यस्यपुरामुक्ति:सचात्मावश्य: इति ॥ पश्यतिसर्वमविशेषेण। इशिर०। अर्जिदृशिकम्यमिपशिबाधामृजिपशितुक्धुक्दीर्घहकाराश्चच्यु: पशिरादेशश्च ॥ पशवश्चग्राम्यारण्यावेदस्मृत्यागमविहितकर्मसाधनभूता:। नहितान्विनायज्ञाद्यनुष्ठानम्यज्ञार्थमेवचतेषांसृष्टि:। तत्र ग्राम्याअजादयोगवयादयस्त्वारण्या इतिभेद: ॥

**पशुक्रिया।** स्त्री० मैथुने ॥

**पशुजाति:।** स्त्री० पशुशब्दवाच्ये ॥ सिंहाद्याहरिणाद्याश्चगवाद्यायेचजन्तव:। तेसर्वेशास्त्रदृष्ट्याच प्रोक्ताहिपशुजातय: ॥

**पशुपति:।** पुं० चन्द्रमौलौ। शिवे ॥ पशोर्ह्रपस्यपति: ॥ पालयामिपशून्यस्मात् सृजामिचयदृच्छया। तेषाञ्चपतिरेवाहं तस्मात्पशुपति: स्मृत: ॥ पशूनांजीवानांसुरनरतिरश्चांपतिरितिवा। यथा। ब्रह्माद्यास्थावरान्ताश्चपशव: परिकीर्तिता:। तेषांपतिर्महादेव:स्मृत: पशुपति: श्रुतौ ॥ हुताशने ॥ यजमानमूर्तौ

**पशुपल्वलम्।** न० कैवर्तीमुस्तके ॥

**पशुपाल:।** पुं० वृत्त्यर्थतयाछागमेषादिपोषके ॥

**पशुपाश:।** पुं० पुत्रकलत्रादिषु ॥ घ्रृगालज्ञाद्यष्टसु ॥ पशूनांपाशोघ्रृणा

दि : । घृणाशङ्काभयंलज्जाजुगुप्सा चेतिपञ्चमी । कुलंशीलंतथाजातिरष्टौपाशा : प्रकीर्त्तिता : ॥ षड्दर्शनमहाकूपेपतिता : पशव : प्रिये । परमार्थंनजानन्तिपशुपाशनियन्त्रिता इतिकुलार्णवे १ उल्लासे ॥

पशुपाशक : । पुं० रतिबन्धविशेषे ॥ यथा । स्त्रियमानतपूर्व्वाङ्गींस्वपादान्तःपदद्वयम् । ऊर्द्धांशेनरमेत्कामीबन्धोयंपशुपाशक : ॥

पशुप्रेरणम् । न० गवादीनांचालने । उदर्जे ' हांकना० इ० भा० ॥ पशूनांप्रेरणम् ॥

पशुमोहनिका । स्त्री० कटुकीलतायाम्

पशुरज्जु : । स्त्री० अश्वादिबन्धनरज्जौ । दामन्याम् ॥ पशुबन्धनीरज्जु: ॥ शाकपार्थिवादि : ॥

पशुराज : । पुं० सिंहे ॥ पशूनांराजा टच् ॥

पशुवृत्ति : । त्रि० अतिवत्सले ॥

पशुहरीतकी । स्त्री० आम्रातकफले ॥

पश्चात् । अ० प्रतीच्याम् ॥ चरमे ॥ अधिकारे ॥ पृष्ठभागे ॥ अपरस्मिन्० अपरस्मात्० अपरोवा । वसत्यागतोरमणीयंवा । पश्चादितिसूत्रेणाअपरस्यपश्चभाव : आतिश्चप्रत्ययोऽस्तातेर्विषये ॥

पश्चात्ताप : । पुं० अनुतापे । विप्रतीसारे । अनुशोचने । पछतावा० इ० भा० ॥ पश्चात्तपनम् । तपसंतापे । घञ् ॥

पश्चार्द्ध : । त्रि० अपरार्द्धे । शेषार्द्धे ॥ अपरस्यामावर्द्धश्च । अपरस्यार्द्धे पश्चभावोवक्तव्य : ॥

पश्चिम : । त्रि० चरमे । अन्ते ॥ पश्चाद्भव : । अग्रादिपश्चाड्डिमचच् ॥ पच्छम० इ० प्रसिद्धे देशे ॥

पश्चिमक्रतु : । पुं० अन्त्येष्ट्याम् ॥

पश्चिमरात्रि : । स्त्री० अपररात्रे ॥ ॥ पश्चिमाचासौरात्रिश्च । विशेषणसमास : ॥

पश्चिमा । स्त्री० अस्ताचलावच्छिन्नदिशि । प्रतीच्याम् । वारुण्याम् ॥ तद्दिग्भववायुगुणा यथा । पश्चिमोमारुतस्तीक्ष्ण : कफमेदविशोषण : । सद्य : प्राणहरोदुष्ट : शोषकारीशरीरिणाम् इ० रा० नि० ॥ अपिच । पश्चिमोग्निप्रदर्पणोबलारोग्यविवर्धन: । कषाय : शोषण : स्वर्योरोचनो विशदोलघु:॥ अपांलघुत्त्ववैशद्यशैत्यवैमल्यकारक: । सर्वद्रव्येष्वभिव्यक्त: प्रभावरसवीर्यकृत् ॥ व्रणसंरोपण:स्वच्छोदाहशोथतृषापह इ० रा०व० ॥

पश्य । अ० विस्मये ॥ प्रशंसायाम् ॥

पश्यन् । त्रि० ईक्षणकर्त्तरि ॥ पश्यति । दृशिर्० । लट : शतृ ॥

पश्यत । अ० प्रशंसायाम् ॥ विस्मये ।

पश्यतोहर : । त्रि० चोरे ॥ यथा ।

य: पश्यतोहरेदर्थंसचौर: पश्यतो हर: ॥ पश्यन्तमनादृत्यहरति । हृञ् । अच् । षष्ठीचानादरे० इतिषष्ठी । वाग्दिक्पश्यद्भ्योयुक्तिदण्डहरे ष्विति० षष्ठ्याअलुक् ॥

पश्यन्ती । स्त्री० मूलाधारोत्थितहृदयग तनादरूपवर्णे ॥ यथा । मूलाधारा त्प्रथममुदितोयस्तुतार: पराख्य: पश्चात्पश्यन्त्यथहृदयगोबुद्धियुङ्मध्य माख्य: । इत्यलङ्कारकौस्तुभ: ॥

पश्वाचार: । पुं० आचारविशेषे ॥ यथा । वेदोक्तेनयजेद्देवींकामसंकल्प पूर्वकम् । सएववैदिकाचार: पश्वा चार:सउच्यते ॥ इत्याचारतन्त्रम् ॥

पष्ठवाट् । त्रि० युगपार्श्वगे । दमन कालिकस्कन्धारोपितकाष्ठवाहे ॥ पश्च मंषष्ठंवावर्षंवहति । वह० । वहश्चे तिण्वि: । पृषोदरादि: ॥

पष्ठौही । स्त्री० बालगर्भिण्यांगवि ॥ प्रष्ठंवहति । ण्वि: । वाहइतिङीप् पृषोदरादित्वाद्रलोप: ।

पस्त्यम् । न० निशान्ते । सदने । गृहे ॥ अपस्त्यायन्ति । ष्टै स्त्यै शब्दसङ्घात यो: । आतश्चोपसर्गेइतिक: । पृ० ॥

पस्पश: । पुं० शास्त्रारम्भसमर्थकेउपो द्घातसन्दर्भग्रन्थे ॥

पस्पशा । स्त्री० महाभाष्यस्यादिमा ह्निके ॥ स्पशबाधनस्पर्शनयो: । यङन्तादचियङोऽचिचेतिलुक् । अ

जाद्यतइतिटाप् । दीर्घोकितइत्य भ्यासस्यदीर्घस्तुनभवति । संज्ञापू र्वकविधेरनित्यत्वादित्याहु: ॥

पह्लव: । पुं० श्मश्रुधारिम्लेच्छजातिवि शेषे ॥ पारदामुक्तकेशाश्चपह्लवा: श्म श्रुधारिण इतिहरिवंश: ॥

पह्लिका । स्त्री० कत्तृणे । वारिप्रश्न्या म् ॥

पा । स्त्री० रक्षणे ॥ पाने ॥ पूते ॥ पूरिते ॥ त्रि० पातरि ॥ पानम् । पा० । मं० । क्विप् ॥

पांशवम् । न० लवणविशेषे । रोमके । औद्भिज्जे । ऊषरजे । औषरे । रेह इति भा० ॥

पांशु: । पुं० धूलौ ॥ सम्यार्थचिरसं चितगोमये ॥ पर्पटे ॥ कर्पूरविशे षे ॥ न० ह्रस्वमन्थरे ॥ स्त्री० । नदी भेदे ॥ पंशति । पशिनाशने । अर्जि दृशिकम्यमिपशिबाधामित्यादिना० साधु: ॥

पांशुका । स्त्री० केतक्याम् ॥ रजस्वला याम् ॥ इ० शब्दाम्बुधि: ॥

पांशुकासीसम् । न० कासीसे इ०रा०॥

पांशुकुली । स्त्री० रथ्यायाम् ॥ इ० हारावली ॥

पांशुकूलम् । न० अनामपट्टोलिकाया म् ॥ यथा । शासनंधर्मकील:स्यान् मकुति: शूद्रशासनम् । पट्टोलिका क्रयकीलापांशुकूलंनकस्यचिदिति

त्रिकाण्डशेषः ॥

पांशुचत्त्वरः । पुं० घनोपले ॥

पांशुचन्दनः । पुं० शिवे ॥ पांशुचन्दनमिवयस्य ॥

पांशुचामरः । पुं० दूर्वाञ्चिततटीभुवि ॥ वस्त्रापके ॥ प्रशंसायाम् ॥ पुरोटौ ॥ धूलिगुच्छके । पटवासे ॥

पांशुजम् । न० पाक्यलवणे । औद्भिदे ॥

पांशुपत्रम् । न० वास्तूके ॥

पांशुपर्य्यायः । पुं० पर्प्पटे । पित्तपापड़ा इ० भा० ॥

पांशुमर्द्दनः । पुं० केदारे ॥

पांशुरः । पुं० दंशके । डांस०इ०भा० ॥ पीठसर्पिणि । खञ्जे ॥ पांशुरस्यास्त्यस्मिन्वा । नगपांशुपाण्डुभ्यश्चेतिरः ॥

पांशुरागिणी । स्त्री० महामेदायाम् ॥

पांशुलः । पुं० पुंश्चले ॥ शम्भोः खट्वाङ्गे ॥ हरे ॥ पापिनि ॥ पूतिके । करञ्जविशेषे ॥ त्रि० पांशुयुक्ते ॥ पांशुः अस्तिअस्यअस्मिन्वा । सिध्मादित्वाल्लच् ॥

पांशुलवणम् । न० औद्भिदे । पांशवे । वसुके ॥ औद्भिदं पांशुलवणंयज्जातंभूमितः स्वयम् । क्षारंगुरुकटु स्निग्धंश्लेष्मलंवातनाशनम् ॥

पांशुला । स्त्री० असत्याम् ॥ भुवि ॥ पांशुपापमस्त्यस्याः । नगपांशुपाण्डुभ्यश्चेतिरः । कपि० । लेः ॥ सिध्मादित्वाल्लज्वा ॥ पांशुलातिवा । आतोनुपेतिकः ॥ केतक्याम् ॥ रजस्वलायाम् ॥ इ० रा० नि० ॥

पांसनः । त्रि० दूषके । दोषोत्पादके

पांसुः । पुं० रजसि । धूलौ ॥ चिरसंचितगोमये । खात० इ० भा० ॥ पंसयति । पसिनाशने । अर्जिदृशीतिसाधुः ॥

पांसुलः । त्रि० रजस्वले ॥ पांसुरस्यास्य । सि० लच् ॥

पाकः । पुं० परिणतौ ॥ शिशौ ॥ केशस्यजरसाशौक्ल्ये ॥ उदराग्निनाहारस्यपचने ॥ पचायाम् । स्थाल्यादौपचने ॥ स्थालीमार्जनाद्योदनपरीक्षान्तोव्यापारनिचयः पाकः इतिस्मृतिः ॥ भर्जनंतलनंस्वेदः पचनंक्वथितंतथा । तान्दूरंपुटपाकश्चपाकः सप्तविधोमतः ॥ नित्यंनूतनभाण्डेनकर्त्तव्यः पाकएवच । अथवापञ्चपर्यन्तं ततस्त्याज्यंमनीषिभिः ॥ दैत्यविशेषेतच्चभ्रातरि ॥ पचनम् । डुपचष्० । घञ् ॥ पच्यते,परिणंस्यतेऽनेनवा । हलश्चेतिघञ् ॥ पातिपिबतिवा । पारक्षणे पानेवा । अर्भकपृथुकपाकावयसीतिकन्प्रत्ययान्तोनिपातितः ॥ इणभीकापाशल्यतिमर्चिभ्यः कन्वा ॥

पाकक्षणाः । पुं० पानीयामलके ॥

कृष्णफलपाके ॥

पाककृष्णफल : । पुं० पाककृष्णे ॥

पाकजम् । न० काचलवणे ॥ परिणामशूले ॥ त्रि० । पाकाज्जाते ॥ यथारूपादिचतुष्टयंपृथिव्यांपाकजमनित्यञ्च । अन्यत्रापाकजंनित्यमनित्यञ्च । नित्यगतंनित्यमनित्यगतमनित्यम् । पाकस्तेज : संयोग : तेन पूर्वरूपंनश्यतिरूपान्तरमुत्पद्यते इत्यर्थ: । अत्रपरमाणुष्वेवपाकोनद्व्यणुकादौ,आपाकनिचिप्ते घटेपरमाणुषुरूपान्तरोत्पत्तौश्यामघटनाशेपुनर्द्व्यणुकादिक्रमेणरक्तघटोत्पत्ति: । तत्रचपरमाणव:समवायिकारणम् । तेज:संयोगोऽसमवायिकारणम् । अदृष्टादिकंनिमित्तकारणम् द्व्यणुकादिरूपंपरमाणुरूपमसमवायिकारणमितिपीलुपाकवादिनोवैशेषिका : । पूर्वघटस्यनाशंविनैवावयविन्यवयवेषुपरमाणुपर्यन्तेषु युगपद्रूपांतरोत्पत्तिरिति। पिठरपाकवादिनोनैयायिका : । अतएवपार्थिवपरमाणुरूपादिकमनित्यमित्यर्थ: ॥ अन्यत्रजलादावित्यर्थ : इतितर्कदीपिका ॥

पाकपुटी । स्त्री० कुम्भशालायाम् । आवा इ० भा० ॥ इ० हेमचन्द्र: ॥

पाकफल: । पुं० पानीयामलके ॥

पाकमत्स्य : । पुं० व्यञ्जनविशेषे, मत्स्ये ॥

पाकयज्ञ : । पुं० ब्रह्मयज्ञादन्येषुपंचमहायज्ञान्तर्गतेषुवैश्वदेवहोमबलिकर्मनित्यश्राद्धाऽतिथिभोजनात्मकेषुचतुर्षु ॥ स्वर्गापवर्गयो : सिद्धिं पाकयज्ञेप्रचचते इतिफलंसमुचितस्य । प्रत्येकफलमुक्तं हारीतेनयद्दवेभ्योजुहोतिदेवलोकंतेनजयतियत्पितृभ्योददातिपितृलोकंतेनजयति०यत्स्वाध्यायमधीतेऋषिलोकंतेनजयति यद्भूतेभ्योबलिंहरतिभूतलोकंतेनजयतीति ॥ धन्यंयशस्यमायुष्यं स्वर्ग्यं चातिथिपूजनम् इतिमनु : ॥ अत्रभ्रात्रादीनामविभक्तानामपिसंसृष्टानांमध्ये नैकेनैवपाकयज्ञा : कर्त्तव्या : । यदाहु : । एकपाकेनिवसतांपितृदेवद्विजार्चनम् । एकंभवेद्विभक्तानांतदेवस्याद्गृहेगृहे इति एकपाकेनिवसतामित्युपक्रम्यसंसृष्टानामित्यभिधानाद्विभक्तानामिति द्रव्यपार्थक्यपरं ॥ अष्टकादिषु ॥ वृषोत्सर्गगृहप्रतिष्ठादीनांहोमे । चरुहोमाङ्गकर्मणि ॥

पाकयज्ञिक : । पुं० पाकयज्ञकर्त्तरि ॥

पाकरञ्जनम् । न० तेजपत्रे ॥

पाकल : । पुं० कुञ्जरज्वरे ॥ बोधनद्रव्ये ॥ अनिले ॥ वह्नौ ॥ पाकंलाति । ला० । आतोनुपेतिक : ॥ न० । कुष्ठौषधौ ॥ त्रि० । व्रणादिपाकका

रिणि ॥

पाकली । स्त्री॰ कर्कट्याम् ॥

पाकशाला । स्त्री॰ महानसे । रसवत्याम् । रसोई॰ इ॰ भा॰ ॥ अग्निकोणेतस्याः कर्त्तव्यतोक्ता । प्राच्यां दिशिस्नानगृहमाग्नेय्यां पचनालयम् । शयनंयाम्यदिग्भागेनैर्ऋत्यांशस्त्रमन्दिरम् ॥ प्रतीच्यांभोजनगृहं वायुभागेसभागृहम् । भाण्डारसदनंसौम्ये त्वैशान्यां देवतालयमिति पीयूषधारायांकश्यपः ॥

पाकशासनः । पुं॰ इन्द्रे ॥ पाकस्यव्रत्तभातुः शासनः । शासयति । शासु॰ । णिजन्तः नं॰ ल्यु॰ ॥

पाकशासनिः । पुं॰ इन्द्रात्मजे । जयन्ते ॥ पाकशासनस्यापत्यम् अत इञ् ॥

पाकशुक्ला । स्त्री॰ कक्खट्याम् ॥

पाकस्थानम् । न॰ महानसे ॥ पाकस्य स्थानम् ॥

पाकस्थाली । स्त्री॰ रन्धनपात्रे ॥ पाकस्यस्थाली ॥

पाका । स्त्री॰ बालिकायाम् ॥ अजा॰ टाप् ॥

पाकाभिमुखः । त्रि॰ सिद्ध्युन्मुखे ॥

पाकारिः । पुं॰ श्वेतकाञ्चने ॥

पाकिमम् । त्रि॰ पक्तिमे ॥ पाकेननिर्वृत्तम् । भावप्रत्ययान्तादिमप् ॥

पाकिमा । पुं॰ पाकतायाम् ॥ पाकस्य भावः । इमनिच् ॥

पाकुकः । पुं॰ सूपकारे ॥ पचति । डुपचष्॰ । पचिनशोर्णुकन्कनुमौ चेतिसाधुः ॥

पाक्यम् । न॰ विड्लवणे । खारीलूण इ॰ भा॰ ॥ पुं॰ यवक्षारे ॥ त्रि॰ । पक्तव्ये ॥ पच्यते । डुपचष्॰ । ऋहलोर्ण्यत् । चजोरितिकुत्वम् ॥ पाकेसाधुवा । तत्रसाधुरितियत् ॥

पाक्षिकः । त्रि॰ पक्षपातिनि ॥ पक्षिघातके । शाकुनिके ॥ पक्षेगानिर्वृत्तम् । ठञ् ॥ पक्षिणोहन्ति । पक्षिमत्स्यमृगान्हन्तीतिठक् ॥ पक्षभवे॥

पाखण्डः । पुं॰ पाषण्डे । सर्वलिङ्गिनि ॥ पाखण्डयति । खडिभेदने । पचाद्यच् ॥ यथा । पालनाच्चत्रयीधर्मः पाशब्देननिगद्यते । तंखण्डयन्तितेयस्मात्पाखण्डास्तेनहेतुना ॥ नानाव्रतधरानानावेशाः पाखण्डिनोमताः ॥ एषांवाङ्मात्रेणाप्यर्चनंनिषिद्धम् । यथाहमनुः । पाखण्डिनोविकर्मस्थानवैडालव्रतिकान् शठान् । हैतुकान्वकवृत्तींश्चवाङ्मात्रेणापिनार्चयेदिति ॥ ( * ) ॥ निशामुखेषुखद्योता स्तमसाभान्तिनोग्रहाः । यथापापेनपाखण्डा नहिवेदाः कलौयुगे ॥ इतिभागवतम् ॥

पागलः । पुं॰ उन्मत्ते । वातुले ॥ य

था । पागलायाङ्गहीनायचान्धायव धिरायच । जडायचैवमूर्खायक्लीवतुल्यायपापिने ॥ ब्रह्महत्यांलभेत्सोपिय : स्वकन्यांददातिचेतिब्रह्मवैवर्त्ते प्रकृतिखण्डे १४ अध्याय : ॥ पागलायेत्यत्रपङ्गवे० इतिपाठान्तरमपिदृश्यते ॥

पाङ्क्तिः । पुं० प्रगाथविशेषे ॥ पङ्क्तिरादिरस्य । सोस्यादिरितिच्छन्दसः प्रगाथेष्विति** ॥ पङ्क्तिभोजनार्हे

पाङ्क्तेय : । त्रि० सद्भि : सहैकपङ्

पाङ्क्त्य : । त्रि० त्रीभोजनार्हे ॥

पावक : । पुं० अग्नौ ॥ सूपकारे । विक्लित्त्यनुकूलव्यापारवति ॥ न० । पित्तविशेषे ॥ यथा । पाचकंपचते भुक्तशेषाग्निवलिवर्द्धनम् । रसमूत्रपुरीषाणिविरेचयतिनित्यश इति भावमिश्र : ॥ पचति । डुपचष्० । ण्वुल् ॥

पाचन : । पुं० अनले । अग्नौ ॥ अम्लरसे ॥ रत्नखण्डे ॥ न० । दोषपाचककाथौषधे । दशमूल्यादौ ॥ यत्पचत्याममाहारं पचेदामंरसञ्चयत् । यदपक्कान्पचेद्दोषांस्तद्विपाचनमुच्यते ॥ अम्ले ॥ प्रायश्चित्ते ॥ त्रि० पाचयितरि ॥

पाचनक : । पुं० टंकणे ॥

पाचनी । स्त्री० हरीतक्याम् ॥

पाचल : । पुं० अग्नौ ॥ पाचके ॥ एधनद्रव्ये ॥ वाते । वायौ ॥ न० पाचने ॥ इ० हे० ॥

पाचाल : । पुं० पाचलार्थेषु ॥ इ० हे० ॥

पाचित : त्रि० कृतपाके । सञ्जातपाके । पकाया० इ० भा० ॥

पाची । स्त्री० लताविशेषे । मरकतपत्र्याम् । हरितपत्रिकायाम् ॥

पाज : । न० वले ॥ पाति । पारक्षणे पातेर्बलेर्जुट्चेत्यसुन् । पाजसी०पाजांसी० इत्यादि ॥

पाञ्चकपाल : । त्रि० पञ्चकपालयागसम्बन्धिनि ॥ पञ्चकपालस्यायम् । अण् ॥

पाञ्चकलायिकम् । न० परिमाणविशेषे ॥ पञ्चकलाया : परिमाणमस्य । तद्धितार्थेतिसम्० । तदस्यपरिमाणमिति ठञ् ॥

पाञ्चजन्य : । पुं० श्रीकृष्णस्यशङ्खे ॥ पञ्चजनेदैत्ये विशेषेभव : । पञ्चजनादुपसंख्यानमितिञ्य : । पञ्चजनो नामासुरआसीत्तदस्थिभवत्वात् ॥ पञ्चजनेपातालेभव : इ० स्वामी ॥ जम्बूद्वीपस्योपद्वीपभेदे ॥ अग्नौ ॥

पाञ्चजन्यधर : । पुं० विष्णौ ॥

पाञ्चनद : । पुं० पञ्चनददेशाधिपे ॥ त्रि० पञ्चनददेशसम्बन्धिनि ॥

पाञ्चभौतिका । त्रि० पञ्चभूतनिर्मिते ॥

पाञ्चालिका । स्त्री० पाञ्चालिकायाम् ॥

पाञ्चलोहितकम् । न० परिमाणविशे-

षि । पञ्चलोहिन्योगुञ्जाःपरिमाणमस्य । तद्धितार्थेतिसमासेतदस्यपरिमाणमितिठञ् । भस्याढइतिपुंवद्भावाल्लोहिनीशब्दस्य कारनकारयोर्निवृत्तिः॥
पाञ्चशब्दिकम् । न० पञ्चप्रकारवाद्ये ॥ यथा । अङ्गजंचर्मजंचैवतन्त्रजंकांस्यजंतथा । फुत्कृतञ्चेतिमुनिभिः कथितंपाञ्चशब्दिकमितिस्कान्दे रेवाखण्डम् ॥
पाञ्चार्थिकः । पाशुपते ॥ इ० त्रि० ॥
पांचालः । पुं० पांचालानांराज्ञि ॥ क्षत्रियसमानशब्दादित्यपत्यवत्प्रत्ययः ॥ पंचालाः पुं०बहुत्वे ॥ त्रि० । पचालदेशोद्भवे ॥
पांचालिका । स्त्री० वस्त्रदन्तादिनिर्मितपुत्रिकायाम् । शालभञ्ज्याम् ॥ पंचालदेशभवा । जनपदतदवध्योरिति वुञ् ॥
पांचालनगरम् । न० }
पांचालपुरम् । न० } स्त्रच्छ् युफर कावाद इति ख्यातेपत्तने॥
पांचाली । स्त्री० द्रौपद्याम् ॥ पुत्रिकायाम् । पुतली० इति० भा० ॥ कोमलाख्यवृत्त्यनुप्रासघटकवृत्तिभेदे ॥ मागध्याम् । पिप्पल्याम् ॥
पाट् । अ० सम्बोधने ॥ पाटयति । पटगतौ । णिजन्तः क्विप् ॥
पाटकः । पुं० रोधसि ॥ ग्रामैकदेशे ॥ अक्षादिपातके । अक्षादिचालने ॥

वाद्यप्रभेदे ॥ महाकिष्को ॥ मूलद्रव्यापचये ॥ कटकान्तरे ॥ पटति । पट० । ण्वुल् ॥
पाटच्चरः । पुं० चौरे ॥ पाटयंश्चरति । चर० । पचाद्यच् । पृषोदरादिः ॥
पाटनम् । न० छेदने । फाडना इ०भा०
पाटलः । पुं० आशुधान्ये । षष्टिकादौ ॥ श्वेतरक्तवर्णे । गुलाबीरङ्ग० इ० ग्रामीण० भा० ॥ न० । पाटलापुष्पे ॥ कुङ्कुमे ॥ पाटल्यवयवे ॥ पाटलीविकारे ॥ त्रि० श्वेतरक्तवर्णयुक्ते ॥ पाटलोवर्णोऽस्यास्ति । अच् ॥ पाटयति । पट० । ण्यन्तात्वृषादित्वात्कलः ॥ पाटल्याअवयवोविकारो वा । बिल्वाद्यण् ॥ पाटलायाः पुष्पम्पाटलम् । अनुदात्तादेश्चेत्यञः पुष्पमूलेषुबहुलमितिबहुलग्रहणात्नेहलुप् ॥
पाटलद्रुमः । पुं० पुन्नागवृक्षे ॥
पाटला । स्त्री० पाडल इ० भा० पुष्पवृक्षे । अमोघायाम् । काचस्थाल्याम् । फलेरुहायाम् । पारुल इ०गौ० भा० ॥ पाटलातुवरातिक्ताऽनुष्णा दोषत्रयापहा । अरुचिश्वासशोथास्रच्छर्दिहिक्कातृषाहरी ॥ पुष्पंकषायंमधुरंहिमंहृद्यंकफास्रनुत् । पित्तातीसारदाहघ्नं फलंहिक्कास्रपित्तनुत् ॥ पाटलाति । ला० । कः ॥ पाटलवर्णायांगवि ॥ अनुदात्तत्वाभावा

न्नडीष् ॥
पाटलापुष्पसन्निभम् । न० पद्मकाष्ठे ॥
पाटलि : । पुं० स्त्री० पाटलायाम् ॥
मुष्ककद्रुमे ॥ पाति । पा० क्विप् । टलति । टलवैक्लव्ये । सर्वधातुभ्य इन् । पाश्चासौटलिश्च ॥
पाटलिपुत्रम् । न० पाटलिपुत्रके ॥ यत्रत्यसुदर्शनाभिधस्यराज्ञ:पुत्राणांराजविद्याधिगमायकलौमर्त्त्यलोकेवृहस्पतिसदृशेनविष्णुशर्मणाप्रंचतन्त्रहितोपदेशाद्ययोग्रंथारचिता : ॥
पाटलिपुत्रकम् । न० पटना० इ० प्र० नगरवि० । कुसुमपुरे ॥
पाटली । स्त्री० मुष्ककवृक्षे ॥ काटभीवृक्षे ॥ पाटलायाम् ॥
पाटवम् । न० पटुत्त्वे । पटिमनि ॥ पटोर्भाव : । इगन्ताच्चलघुपूर्वादित्यण् ॥ आरोग्ये ॥
पाटविक : । त्रि० धूर्त्ते ॥ पटौ । दक्षे ॥ पाटववति । मत्वर्थीयष्ठन् ॥
पाटहिका । स्त्री० गुञ्जायाम् ॥ इति० हारावली ॥
पाटित : । त्रि० दारिते । भिन्ने ॥
पाटी स्त्री० वलायाम् ॥ अनुक्रमे । परिपाट्याम् ॥ यथा । पाटींसङ्गिगतस्येति ॥
पाटीर: । पुं० मूलके ॥ केदारे ॥ वेणुसारे ॥ वारिदे ॥ तितऊ ॥ वङ्गे ॥ वातिके ॥ चन्दने ॥ यथा । पाटीरतवपटीयान्क : परिपाटीमिमामुरीकर्तुम् । यत्पिंषतामपिनृणांपिष्टोपितनोषिपरिमलै : पुष्टिम् ॥ पटीरएव । स्वार्थिकोण् ॥
पाट्यम् । न० पट्टशाके ॥ पाट्यंशाकन्तुमधुरंदुर्जरंगुरुपाकिच ॥
पाठ : । पुं० पठने । ब्रह्मयज्ञे । शिष्याणामध्यापने ॥ विधिनावेदस्याभ्यसने ॥ यथा । आदौचप्रणवंजप्त्वास्तोत्रंवासंहितांपठेत् । अन्तेचप्रणवंदद्यादित्युवाचादिपूरुष: ॥ सर्वत्रपाठेविज्ञेयोह्यन्यथाविफलंभवेत् ॥ शुद्धेनानन्यचित्तेनपठितव्यंप्रयत्नत: । नकार्यासक्तमनसाकार्यंस्तोत्रस्यवाचनमिति तान्त्रिका: ॥ अपिच ॥ आधारेस्थापयित्वातुपुस्तकंवाचयेत्सुधी: । हस्तसंस्थापनादेवयस्मादल्पफलंलभेत् । स्वयंचलिखितंयत्तुकृतिनालिखितंनयत् । अब्राह्मणेनलिखितंतच्चापिविफलंभवेदिति चण्डीस्तोत्रादिपाठेषुविधिरेषनिरूपित : ॥ पठनम्०पाठनंवा । पठ० । भावेघञ् ॥
पाठक : । त्रि० उपाध्याये ॥ धर्मभाणके । धर्मकथके ॥ पठति । पठ० । ण्वुल् ॥ अर्ध्यतरि ॥
पाठक्रम : । पुं० पदार्थबोधकवाक्यानांक्रमे ॥ तस्माच्चपदार्थानांक्रमआश्रीयते । येनक्रमेणवाक्यानिपठिता

नितेनैवक्रमेणाधीतान्यर्थप्रत्ययंजन यन्ति । यथार्थप्रत्ययंचपदानामनु-ष्ठानम् । सचपाठोद्विविध : । मन्त्र पाठोब्राह्मणपाठश्चेति । तत्राग्नेया ऽग्नीषोमीययोस्तत्तद्याज्यानुवाक्या नांपाठक्रमाद्य:क्रमश्वाश्रीयतेसमन्त्र पाठ : । सचायंमन्त्रपाठोब्राह्मणपा ठाद्बलीयान् । अनुष्ठानेब्राह्मणवा-क्यापेक्षयामन्त्रपाठस्यान्तरङ्गत्वात् । ब्राह्मणवाक्यंहिप्रयोगाद्बहिरेवे दमेवंकर्त्तव्यमित्यवबोध्यकृतार्थम् । मन्त्रा : पुन : प्रयोगकालेव्याप्रिय-न्ते । अनुष्ठानक्रमस्यस्मरणक्रमाधी नत्वात् तत्क्रमस्यचमन्त्रक्रमाधी-नत्वादन्तरङ्गोमन्त्रपाठइति । प्रया-जादीनांसमिधोयजतितनूनपातंय जतीत्येवंविधिवाक्यक्रमाद्य: क्रम : सब्राह्मणपाठक्रम:यद्यपिब्राह्मणवा । क्यान्यर्थंविधायकृतार्थानितथापि प्रयाजानांक्रमस्मारकान्तरस्याभावा त्तान्येवक्रमस्मारकत्वेनस्वीक्रिय-न्ते इतिलौगाक्षिभास्कर : ॥ पाठ क्रमादर्थक्रमोबलीयान् ॥

पाठभू : । स्त्री० ब्रह्मारण्ये । वेदपाठ स्थाने ॥

पाठमञ्जरी । स्त्री० शालिपक्षिण्याम् ॥

पाठशाला । स्त्री० अध्ययनगृहे ॥ पाठ स्यअध्ययनस्यशालागृहम् ॥ यद्वा । विधिबोधितस्यसाङ्गवेदाध्ययनस्य-विधिवद्गुरुमुखादध्ययनाध्यापनरू पंब्रह्मयज्ञापरपर्यायमभ्यसनंपाठ: । तदर्थंशालादेवालयादि: ॥ तथाहि मनु : । तपोविशेषैर्विविधैर्व्रतैश्चवि धिचोदितै : । वेद: कृत्स्नोऽधिगन्त व्य : सरहस्योद्विजन्मना ॥ २ । १६५ ॥ तपोविशेषैर्नियमकलापैर्वि विधैर्बहुप्रकारैरध्येयमाणस्त्वा चान्द्रायणादिनोक्तै: सेवेतेमांस्तुनि यमानित्यादिभिर्वक्ष्यमाणैरपि । ब्र तैश्चउपनिषन्महानाम्निकादिभि : विधिदेशितै : स्वगृह्यविहितै : । समग्रवेदोमन्त्रब्राह्मणात्मक : सोपि निषत्कोपिअध्येतव्य : । रहस्यमु पनिषत् । प्राधान्यख्यापनायपृथङ् निर्देश : ॥ १६५ ॥ अपिच । योन धीत्यद्विजोवेदमन्यत्रकुरुतेश्रमम् । सजीवन्नेवशूद्रत्वमाशुगच्छतिसान्व य : ॥ योद्विजोवेदमनधीत्यअन्यत्रा र्थशास्त्रादौश्रमंयत्नातिशयंकरोति सजीवन्नेवपुत्रपौत्रादिसहित : शी घ्रंशूद्रत्वंगच्छति । वेदमनधीत्यापि स्मृतिवेदाङ्गाध्ययनेविरोधाभाव : । अतएवशङ्खलिखितौ । नवेदम नधीत्यान्यांविद्यामधीयीतान्यत्रवे दाङ्गस्मृतिभ्य : ॥ १६८ ॥ ( * ) ॥ तस्माद्देवालयेनित्यं धर्मशास्त्रस्य वाश्रुते : । पठनंकारयेद्राजन्यदी-च्छेद्धर्ममात्मनइतिवह्निपुराणम् ॥

यस्तुदेव्यागृहेनित्यंविद्यादानंप्रवर्त्तयेत्। सभवेत्सर्वलोकानांपूज्यः पूजापदंव्रजेदितिपुराणान्तरम् ॥

पाठशालिनी। स्त्री० पाठमञ्जर्याम् ॥

पाठा। लताविशेषे। अम्बष्ठायाम्। वनतिक्तिकायाम्। तिक्तपुष्पायाम् ॥ अस्यागुणायथा। पाठोष्णाकटुकातीक्ष्णावातश्लेष्महरीलघुः। हन्तिशूलज्वरच्छर्दिकुष्ठातीसारहृद्रुजः ॥ दाहकण्डूविषश्वासकृमिगुल्मगरव्रणान्। इ० भावप्रकाशः॥ अम्बष्ठासकषायाम्लाकफकण्ठरुजापहा। वातामयबलामघ्नीरुचिकृद्दीपनीपरा ॥ इ० रा० नि० ॥ अस्याःशाकप्रकारस्तु। पाठाशाकंगतरविद्दिनेग व्यतक्रे गासिद्धंप्रातःकालिजरणसहितंतप्ततैलविपाच्यम्। चूर्णलिप्तंलवणसहितंमारिचंतत्तनव्यं सर्वेभ्यस्तद्भवतिरुचिदंव्यञ्जनेभ्यःप्रभूतम् ॥ पठ्यते। पठ०। कर्मणिघञ्। अजादित्वात्टाप् ॥

पाठिका। स्त्री० पाठायाम्। पटोड्० इ० प० भा० ॥

पाठितः। त्रि० अध्यापिते॥ यथा। माताशत्रुःपितावैरीबालोयेननपाठितः। नशोभतेसभामध्येहंसमध्येवकोयथेति ॥

पाठी। पुं० चित्रकवृक्षे ॥ यथा त्रि०। पाठविशिष्टे पाठोस्यास्तीति। अतइनिठनाविति इनिः ॥

पाठीकुटः। पुं० चित्रकवृक्षे ॥

पाठीनः। पुं० बोयालीति ख्याते भा० प्रसिद्धमत्स्ये। सहस्रदंष्ट्रे। बोढाले ॥ गुणायथा। पाठीनःश्लेष्मलोवल्योनिद्रालुःपिशिताशनः। दूषयेद्रुधिरंपित्तंकुष्ठरोगंकरोतिच ॥ ✽✽✽ ॥ पाठीनःखण्डितःशस्त्रैर्वेसवारसमन्वितः। कटुतैलेनसम्भृष्टोहिङ्गुतक्रेणयोजितः ॥ पाठीनःकफकृद्वल्योनिद्रालुर्वातनाशनः। मांसाशीवातरक्तस्यकारकोरितसस्तथा ॥ पाठिंपृष्ठंनमयति। णमप्रह्वत्वे। णिच्। अन्येभ्योडः। अन्येषामपीतिदीर्घः ॥ पाठके ॥ गुग्गुलुद्रुमे ॥

पाठ्यः। त्रि० अध्यापनीये। पाठनीये ॥

पाणः। पुं० पाणौ ॥ इतिशब्दचन्द्रिका ॥

पाणविकः। त्रि० पणवस्यवादके ॥

पाणिः। पुं० पञ्चशाखे॥ शये। करे। हस्ते ॥ पणायन्तिव्यवहरन्त्यनेन। पण०। अशिपणाय्योरुडायलुकौचेतीण्। आयप्रत्ययस्यलुक्च ॥ कुलिकवृक्षे ॥ स्त्री०। पण्यवीथ्याम्। हट्टे

पाणिकम्। न० पणेनक्रीते ॥ असमासेनिष्कादिभ्यइतिठक् ॥

पाणिगृहीती। स्त्री० पत्न्याम्। वि-

धामेनोढायाम् ॥ अग्निसाक्षिकृतयापाणिः गृहीतोयस्याः । पाणिगृहीतीभार्यायामितिङीष् । कुलदृलादिनापाणिर्गृहीतोयस्यास्तस्यादेः सातुपाणिगृहीता ॥

पाणिग्रहणम् । न० विवाहे ॥

पाणिग्राहः । पुं० भर्त्तरि । पत्यौ ॥ पाणिंगृह्णाति । ग्रह०। अण् ॥

पाणिघः । पुं० पाणिवादे । मृदङ्गादिवादके ॥ पाणिंपाणिनावाहन्तीति विग्रहेपाणिघताडघौशिल्पिनीत्यनेनपाणावुपपदेहंतेष्टक्टिलोपोघत्वञ्चनिपात्यते ॥

पाणिघातः । पुं० पाणिनाहनने ॥

पाणिजः । पुं० नखे ॥

पाणितलम् । न० कर्षपरिमाणे । तोलकद्वये ॥ हस्ताधोभागे ॥

पाणिनः । पुं० पाणिनिमुनौ ॥ इतित्रिकाण्डशेषः ॥ पणनम् पण० । घञर्थेकविधानमितिपणेःकः पणोऽस्यास्ति० इ० पणीतस्यगोत्रापत्यम् । अण् । गाथिविदथिकेशिगणिपणिनश्चेत्यऽणिपरेटिलोपोन ॥

पाणिनि । पुं० दाक्षीपुत्रे । शालङ्किनि । व्याकरणसूत्रकारेमुनौ ॥ पणिनोयुवापत्यम् । इञ् ॥

पाणिनीयम् । न० पाणिनिप्रोक्तेव्याकरणे ॥ प्रमाणभूतआचार्योदर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्यमहताप्रयत्नेनसूत्राणिप्रणयतिस्मतत्राशक्यं वर्णेनाप्यनर्थकेनभवितुमिति महाभाष्यम् ॥ पाणिनिनाप्रोक्तम्० उपज्ञातंवा । वृद्धाच्छः ॥ त्रि० तदध्येतृवेदितरि ॥ पाणिनीयमधीतेवेदवा । प्रोक्ताल्लुगित्यणोलुक् । तेनस्त्रियाम्पाणिनीया० व्राह्मणोत्यत्रनङीप् ॥

पाणिन्धम । त्रि० अन्धकाराद्यावृतासु धूनिं ॥ तत्रहिप्राणयोधायन्तेऽस्मिन्निति विग्रहेउग्रम्पश्येरम्मदपाणिन्धमाश्चेतिखश् । मुम् ॥

पाणिन्धयः । त्रि० पाणिद्वारापानकर्त्तरि ॥

पाणिपीडनम् । न० विवाहे ॥ पाणेः पीडनम्ग्रहणम् । कृद्योगाचषष्ठीससमस्यतइतिवाच्यम् ॥

पाणिभुक् । पुं० उदुम्बरवृक्षे ॥ त्रि० । पाणिकरणकभोक्तरि ॥

पाणिमर्द्दः । पुं० करमर्द्दके ॥ पाणिंमृद्नाति । मृदक्षोदे । कर्म्मण्यण् ॥

पाणिमुक्तम् । न० अस्त्रे ॥ इतिहलायुधः ॥

पाणिरुहः । पुं० नखे ॥

पाणिवादः । त्रि० मृदङ्गादिवादके ॥ पाणिंवादयति । वदेर्ण्यन्तादण् ॥

पाणिवादकः । त्रि० पाणिवादे ॥ इ० हे० च० ॥

पाणिसर्ग्या । स्त्री० रज्जौ ॥ पाणिभ्यां

सृज्यते । सृजविसर्गे । पाणौसृजेर्ण्य
दितिण्यत् । चजोरितिकुत्वम् ॥
पाणीतलम् । न० पाणितले ॥ विडा-
लपदकर्षौचपाणीतलमुदुम्बरमिति
शब्दमाला ॥
पाणीकरणम् । न० विवाहे ॥ इति०
जटाधरः ॥
पाण्डरः । पुं० शुक्लवर्णे ॥ मरुवके ॥
न० कुन्दपुष्पे ॥ गैरिके ॥ त्रि० श्वे
तवर्णवति ॥
पाण्डरपुष्पिका । स्त्री० शीतलावृक्षे ॥
पाण्डवः । पुं० युधिष्ठिरादिपञ्चसु ॥
पांडोरपत्यम् । अण् ॥
पाण्डवाभीलः । पुं० श्रीकृष्णे ॥
पाण्डवायनः । पुं० श्रीकृष्णे ॥ पाण्ड
वानामयनः ॥
पाण्डवेयः । पुं० अभिमन्युसुते । पा
रीक्षितनृपे ॥
पाण्डित्यम् । न० पण्डितधर्मकर्मणोः
॥ वेदान्ततात्पर्याभिज्ञत्वे । अद्विती
यवस्तुविचारचातुर्यपरिनिष्पन्ने श्रव
णे ॥ पण्डा तिबुद्धेर्नामैतत्साजाता
यस्यमानतः । सपण्डितस्तस्यक-
र्म पांडित्यं श्रुतिसम्मतम् ॥ पण्डि
तस्यभावः । वर्णदृढादिभ्यः ष्य-
ञ्चेतिष्यञ् ॥
पांडुः । पुं० नृपतिविशेषे । कुन्तीप
तौ । युधिष्ठिरादीनांजनके ॥ सिते
वर्णे ॥ श्वेतहस्तिनि ॥ प्रतुदाख्यप-
क्षिविशेषे ॥ यथा पांडुस्तुद्विविधोक्तो
यस्त्रिवपत्तः कलध्वनिः । द्वितीयो
धवलःप्रोक्तः सकपोतस्फुटध्वनिः ॥
चित्रपत्तः कफहरो वातघ्नोग्रहणी-
प्रणुत् । धवलः पांडुदृष्टिोरक्तपि
त्तहरोहिमः ॥ रसेपाकेचमधुरः
सङ्ग्राहीवातशांतिकृत् ॥ ‡**‡ ॥
पाण्डुरफलीक्षुपे ॥ पटोले ॥ शुक्लपी
तमिश्रितवर्णे । हरिणे । पाण्डुरे ॥
सितपीतसमायुक्तः पाण्डुवर्णः प्र
कीर्त्तितः । भेदोपिदृश्यते यथा । पा
ण्डुरस्तुरक्तपीतभागोप्रत्यूषचन्द्रवत्
। पाण्डुस्तुपीतभागार्द्धःकेतकीधूलि
सन्निभः ॥ रोगविशेषे ॥ तस्यौषधं
यथा । लोहचूर्णंतक्रपीतंपाण्डुरोग
हरंभवेत् ॥ १ ॥ अपिच । सप्तरात्रं
गवांमूत्रेभावितंचायसोरजः । पा-
ण्डुरोगप्रशान्त्यर्थंपयसाप्रपिवेन्नरः
॥ २ ॥ गोमूत्रसिद्धंमण्डूरचूर्णंसगु-
डमश्नतः । पाण्डुरोगःक्षयंयातिप
क्तिशूलञ्चदारुणम् ॥ ३ ॥ अयोमलं
सुसंतप्तंभूयोगोमूत्रसाधितम् । म-
धुसर्पिर्युतंलीढ्वा पाण्डुरोगीसुखीभ
वेत् ॥ ४ ॥ पुनर्नवात्रिवृद्व्योषवि-
डङ्गंदारुचित्रकम् । कुष्ठंहरिद्रेत्रि
फलादन्तीचव्यंकलिङ्गकम् ॥ ५ ॥
कटुकापिप्पलीमूलंमुस्तंशृङ्गीचकार
वी । यवानीकट्फलञ्चेतिपृथक्प
लमितंमतमिति ॥ त्रि० । तद्वति ॥

पाण्डु : । स्त्री० माषपर्ण्याम् । माषाणी इ० गौ० भा० ॥ खरुसंयोगोपधान्नेतिनङीष् ॥

पाण्डुक: । पुं० शालिविशेषे ॥ पाण्डुरोगे ॥ पांडुनृपे ॥ पांडुवर्णे ॥

पांडुकण्टक : । पुं० अपामार्गे ॥ पांडूनिकण्टकान्यस्य ॥

पांडुकम्बल : । पुं० श्वेतप्रावारे । श्वेतकम्बले ॥ राजास्तरणवर्णकम्बले ॥ पांडुवर्णकम्बल : । पांडुश्चासौकम्बलश्चेतिवा । ग्रावभेदे ॥

पांडुकम्बली । पुं० पांडुवर्णकम्बलावृतरथे ॥ पांडुकम्बलेनपरिवृतोरथ: । पांडुकम्बलादिनिरितीनि: ॥ त्रि० । पांडुकम्बलयुक्ते ॥ मत्त्वर्थीयइनि: ॥

पांडुतरु : । पुं० धववृक्षे ॥

पांडुनाग : । पुं० पुन्नागवृक्षे ॥ श्वेतगजनागयो : ॥

पांडुपत्री । स्त्री० कौन्त्याख्यौषधौ । रेणुकायाम् ॥

पांडुपत्रम् । न० परिपक्वपत्रे ॥

पांडुपुत्र : । पुं० पांडवे ॥

पाण्डुपृष्ठ : । त्रि० अलक्षणे । पांडुवर्णपृष्ठयुक्ते ॥

पांडुफल : । पुं० पटोले ॥

पांडुफला । स्त्री० चिर्भिटायाम् ॥

पांडुभूम : । त्रि० पांडुवर्णभूमियुक्तदेशे ॥ पांडुभूमिरस्मिन् । कृष्णोदकपांडुसङ्ख्यायाभूमेरजिष्यते ॥

पांडुमृत् । स्त्री० पांडुभूमौ ॥ खट्याम् ॥

पाण्डुर : । पुं० श्वेतपीतमिश्रितवर्णे ॥ ईषच्छ्वेते ॥ श्वित्ररोगे ॥ कामलारोगे ॥ त्रि० तद्वति ॥ न० मरुवके ॥ पांडु:शुक्लोवर्णोऽस्त्यस्यास्मिन्वा । नगपांशुपांडुभ्यश्चेतिर : ॥

पांडुरद्रुम : । पुं० कुटजे ॥

पांडुरपृष्ठ : । त्रि० लक्षणहीने ॥ इ० हे० ॥ पाण्डुरवर्णपृष्ठयुक्ते ॥

पांडुरफली । स्त्री० क्षुद्रक्षुपविशेषे । धूसरायाम् ॥

पांडुरा । स्त्री० माषपर्ण्याम् ॥ पांडुरवर्णायां ॥

पांडुराग : । पुं० मदनकवृक्षे ॥ त्रि० । पांडुवर्णयुक्ते ॥

पांडुरेक्षु : । पुं० श्वेतेक्षौ ॥

पांडुलेख : । पुं० प्रथमलिखिते । मसौदा० इ० भा० पांडुलिपौ ॥ यथा । पांडुलेखेनफलकेभूमौवाप्रथमंलिखेत् । न्यूनाधिकन्तुसंशोध्यपश्चात्पत्रेनिवेशयेदिति व्यवहारतत्त्वेव्यास : ॥

पांडुलोमा । त्रि० पाण्डुवर्णलोमभियुक्ते ॥

पांडुलोमशा । स्त्री० माषपर्ण्याम् ॥

पांडुलोमा । स्त्री० माषपर्ण्याम् । माषाणी० इ० गौ० भा० ॥

पांडुशर्करा । स्त्री० रोगविशेषे ॥ यथा

। पिष्टं वै मालतीमूलं ग्रीष्मकाले समाहृतम्। साधितं छागदुग्धेन पीतं शर्करयान्वितम्॥ हरेन्मूत्रनिरोधञ्च हरेद्वै पांडुशर्कराम्॥

पांडुशर्मिला। स्त्री०। द्रौपद्याम्॥

पांडुसोपाकः। पुं०। चण्डालेन वैदेह्यां जनिते त्वक्सारव्यवहारजीविन्यन्त्यजान्तरे॥

पांडूकः। पुं०। शालिविशेषे॥ पांडूनां जनपदानां राजनि॥

पाण्ड्यः। पुं०। पाण्डोराज्ञि। देशविशेषे॥ यथा। कम्बोजाद्दक्षभागे तु इन्द्रप्रस्थाच्च पश्चिमे। पाण्ड्यदेशो महेशानि महाशूरत्वकारकः इति॥ पाण्डोरपत्यम् राजा वा। पाण्डोर्ड्यण्। टिलोपः॥

पाण्यः। त्रि०। स्तुत्यर्हे। स्तवनीये॥ पण०। ण्यत्॥

पाण्यास्यः। पुं०। ब्राह्मणे॥ पाणिरास्यमस्य। पाण्यास्यो हि द्विजः स्मृतः॥

पातः। पुं०। निपातने॥ पतने॥ राहौ॥ पञ्चमषष्ठयोर्मासयोर्गर्भस्य पतने॥ पतनम्। पत्लृ०। घञ्॥ नम्रीभावे॥ त्रि०। त्राते॥

पातकम्। न०। नरकसाधने। पापे। अंहसि। दुरिते॥ तच्च शुष्कार्द्रभेदाद् द्विविधम्। अकामात्पातकं शुष्कं कामादार्द्रमुदाहृतमित्युक्तेः॥ पातयति अधोगमयतीयत्ततत्॥

तच्च नवविधम्। यथा। अतिपातकम् १ महापातकम् २ अनुपातकम् ३ उपपातकम् ४ सङ्करीकरणम् ५ अपात्रीकरणम् ६ जातिभ्रंशकरणम् ७ मलावहम् ८ प्रकीर्णकम् ९ इतिभेदात्॥

पातकी। त्रि०। पापिनि॥ पातकमस्यास्ति। अतइनिठनाविति इनिः॥

पातङ्गिः। पुं०। शनैश्चरयमे॥ पतङ्गस्याऽपत्यम्। अतइञ्॥

पातञ्जलम्। न०। व्याकरणभाष्ये। महाभाष्ये॥ (*)॥ पतञ्जलिमुनिप्रणीतपादचतुष्टयात्मकयोगकाण्डनिरूपकदर्शनशास्त्रविशेषे॥ तत्र प्रथमेपादे अथ योगानुशासनमिति योगशास्त्रारम्भं प्रतिज्ञां विधाय योगश्चित्तवृत्तिनिरोध इत्यादिना योगलक्षणमभिधाय समाधिं सप्रपञ्चं निरदिक्षद्भगवान् पतञ्जलिः॥ १॥ द्वितीये। तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोग इत्यादिना व्युत्थितचित्तस्य क्रियायोगं यमादीनि पञ्च बहिरङ्गानि साधनानि॥ २॥ तृतीये। देशबन्धश्चित्तस्य धारणेत्यादिना धारणाध्यानसमाधित्रयमन्तरङ्गं संयमपदवाच्यं तत्रावान्तरफलं विभूतिजातम्॥ ३॥ चतुर्थे। जन्मौषधिमन्त्रतपः समाधिजाः सिद्धय इत्यादिना सिद्धिप्रपञ्चनपुरस्सरं परमं प्रयोजनं कैवल्यम्॥ ४॥

प्रधानादीनिपञ्चविंशतितत्त्वानिसा
ङ्ख्योक्तान्येवात्रापि।षड्विंशस्तुपरमे
श्वरोऽधिकः॥ इतिसर्वदर्शनसंग्र
हः॥

पातदुग्धा। स्त्री० वन्ध्यकर्क्कोटक्याम्॥

पातनम्। न० अधोनयने॥

पातनिका। स्त्री० पीठिकायाम्॥

पातालम्। न० अधोभुवने। रसातले
। नागलोके॥ तानिचसप्त। यथा।
अतल वितल सुतल रसातल तला
तल महातल पातालान्यधोधोविद्य
मानानिसामान्यतः पातालशब्द-
वाच्यानिभवन्ति॥ विवरे॥ वड़वा
नले॥ लग्नाच्चतुर्थभवने॥ पतन्त्यत्र
पापात्। पत्लृ०। पतिचण्डिभ्या
मालञ्॥ पातम् अलतिपातमाला
तिवा॥पुं०।औषधपाकार्थयन्त्रविशे
षे॥ यथा। जर्ध्वमापस्तलेवह्निर्मध्ये
तुरससंग्रहः। पातालयन्त्रमेतद्वि
शोधयेत्सूतकादिकम्॥

पातालगरुड़ी। स्त्री० लताविशेषे।
वत्सादन्याम्।सोमवल्ल्याम्। ति
क्ताङ्गायाम्। गारुड्याम्। छिउ-
ड़ा० इ० भा०॥ छिलिहिण्डे॥
छिलिहिण्डोमहामूलः पातालगरु
ड़ाह्वयः। छिलिहिण्डः परंवृष्यः
कफघ्नः पवनापहः॥

पातालनिलयः। पुं० दैत्ये॥ सर्पे॥
त्रि० पातालवासिनि॥ पातालंनि
लयोयस्य॥

पातालयन्त्रम्।न० औषधपाकार्थयन्त्र
विशेषे। पाताले॥

पातालौकाः। पुं० दैत्ये॥ त्रि० पाता
लवासिनि॥ पातालेओकआश्रितो
यस्यसः॥

पातिः। पुं० प्रभौ। भर्त्तरि। स्वामि
नि।॥ पाति। पा०। पातेरतिः॥

पातिकः। पुं० शिशुमारे॥

पातितः। त्रि० भ्रंशिते॥

पातिली। स्त्री० वागुरायाम्॥ नार्या
म्॥ मृत्पात्रविशेषे।पातिल्० इ०
गौ० भा० प्र०। पतीलौ० इ० दे०
भा० प्र०॥ इ० मे०॥

पातुकः। पुं० प्रपाते॥ जलहस्तिनि
॥ त्रि० पतयालौ। पतनशीले॥ प
तति। पत्लृ०। लषपतपदस्थाभू-
वृषहनकमगमशृभ्यउकञ्॥

पाता। पुं० काठरके। गन्धपत्रे। वायु
इ० इति० भा०॥ रक्षितरि॥ पा-
नशीले इतिकश्चित्॥

पात्रः। पुं० न० भाजने॥ याज्ञ्येस्रु
वादौ॥स्रुवादिकन्तुयज्ञादौपात्रमि
त्यभिधीयते॥ राजमन्त्रिणि॥कूल
योर्मध्ये। तीरद्वयान्तरे। पारावार
मध्यभागे॥ पर्णे॥ यज्ञभाण्डे॥
नाट्यानुकर्त्तरि॥ आढकपरिमाणे
॥ इतिवैद्यकपरिभाषा॥ दानपात्रे
। विद्यातपोयुक्ते। रक्षके॥ नविद्य

याक्षिवलयातपसावापिपात्रता । यत्रवृत्तीइमेचोभेतद्धिपात्रंप्रकीर्त्तितम् ॥ रत्नकोषिस : । यतोविद्यातपोभ्यामात्मनोदातुश्चपालनत्तमएवप्रतिगृह्णीयादितिशास्त्रम् ॥ विद्यायुक्तोधर्मशील : प्रशान्त : क्षान्तोदान्त : सत्यवादीकृतज्ञ : । वृत्तिग्लानोगोहितोगोशरण्योदातायज्वाब्राह्मण : पात्रमाहु : ॥ जनार्द्दने ॥ पतनात्त्रायतेयस्मात्तस्मात्पात्रंजनार्द्दन : ॥ पिवतित्र्यनेनात्रवा । पान्त्यस्माद्वा । पाति । पायतेवापीयतेऽनेनवा । पापाने । पारक्षणेवा सर्वधातुभ्यष्ट्रन्नितिष्ट्रन् । दादिभ्यश्छन्दसीतित्रन्वा ॥

पात्रट : । पुं० कर्पटके । कर्परे ॥ त्रि० कृशे ॥

पात्रटीर : । पुं० मुक्तव्यापारमन्त्रिणि । अपव्यापारमन्त्रिणि ॥ लोहकांस्यरजतपात्रे ॥ सिङ्घाणे ॥ पावके । हुताशे ॥ पिङ्गाशे ॥ वायसे ॥ कङ्के ॥

पात्रसंस्कार : । पुं० पुरोटै । पत्रभङ्कारे । रायभाटी० इ० गौ० भा० । भाजनशुद्धौ ॥

पात्रिकम् । न० पात्रपरिमितब्रीह्यादिवापयोग्यक्षेत्रे ॥ पात्रस्यवाप : । पात्रात्ष्ठन् ॥

पात्रिकी । स्त्री० दे वभक्तौ ॥ पित्त्वानृङीष् ॥

पात्रिय : । त्रि० पात्र्ये ॥ पात्रमर्हति । पात्राद्घँश्च ॥

पात्री । स्त्री० अमत्रे । पात्रे ॥ पिवन्त्यनया । पा० ष्ट्रन् । ङीष् ॥

पात्रीयम् । न० यज्ञपात्रे ॥

पात्रीर : । पुं० न० यज्ञद्रव्ये ॥ पचे इतिकश्चित् ॥

पात्रे समित : । त्रि० भोजनसमयएवसङ्गतेनतुकार्ये ॥ सपात्रे समितोन्यत्रभोजनान्मिलितोनय : ॥ पात्रेसमितादयश्चे तिसप्तम्याअलुक्समासश्चनिपात्यते ॥ पापिविशेषे ॥ यथा निधायहृदयेपापं य : परंशंसतिस्वयम् । सपात्रे समितोऽयस्यादितिशब्दमाला ॥

पात्रोपकरणम् । न० भूपभूषणे ॥

पात्र्य : । त्रि० पात्रिये ॥ पात्रमर्हति । पात्राद्घँश्चे तियत् ॥

पात्वम् । न० पापित्वातरि ॥ सर्वेषामेवपात्राणांपरंपात्वं महेश्वर : । पतन्तं त्रायतेयस्मादतीवनरकार्णवात् ॥

पात्वता । स्त्री० पात्वत्वे ॥

पाथ : । न० पानीये । जले । उदके ॥ पाति । पारक्षणे । सर्वधातुभ्योऽसुन्नित्यसुन् । उदकेथुट्चेत्यसुन:थुट् ॥ भक्ते । भात० इ० भा० ॥ अन्ने चेत्यसुनथुट्च ॥

पाथि: । पुं॰ अब्धौ । समुद्रे ॥ जले ॥ चक्षुषि ॥ पिबति । पा॰ । पिबतेस्थुगितीसिन् ॥

पाथेय: । वि॰ पथिव्ययोपयोगिनि । शम्बले ॥ पथिसाधु: । पथ्यतिथिवसति स्वपतेर्ढञ् ॥ कन्याराशौ ॥

पाथोजम् । न॰ कमले ॥ पाथसिजातम् । जनी॰ । सप्तम्यांजनेर्ड: ॥

पाथोद: । पुं॰ मेघे ॥ पाथोददाति । डुदाञ् । आतोनुपेतिक: ॥

पाथोधर: । पुं॰ मेघे ॥ पाथसोधरि: ॥

पाथोधि: । पुं॰ समुद्रे ॥ पाथांसिधीयन्तेऽस्मिन् । कर्मण्यधिकरणेचेतिधाञ: कि: ॥

पाथोनिधि: । पुं॰ समुद्रे । अकूपारे ॥ पाथसांनिधि: ॥ पाथांसिनिधीयन्तेऽत्रवा । पाथोधिवद्धाञ:कि: ॥

पात्—द् । पुं॰ चरणे । पादे ॥

पाद: । पुं॰ बुध्ने । मूले । तुरीयांशे । रूपकादेस्तुर्थभागे ॥ शैलप्रत्यन्तपर्वतेमहाद्रे: समीपेक्षुद्रपर्वते ॥ चरणे । अङ्घ्रौ ॥ अस्यलक्षणंयथा । अस्वेदनौमृदुतलौ कमलोदराभौश्लिष्टाङ्गुलौरुचिरताम्रनखौसुपार्ष्णी । उष्णौशिराविरहितौचनिगूढगुल्फौकूर्मोन्नतौचचरणौमनुजेश्वरस्येति ॥ अस्याशुभलक्षणानि यथा । सूर्पाकारविरूक्षपाण्डुरनखौवक्रौशिरासन्ततौसंशुष्कौविरलाङ्गुलीचचरणौ दारिद्र्यदु:खप्रदौ । मार्गायोत्कटकौकषायसदृशौवंशस्यविच्छेददौब्रह्मघ्नौपरिपक्वमृद्द्युतितलौपीतावगम्यारताविति ॥ विरूक्षावस्निग्धौ । पाण्डुरनखौ॰ पाण्डुराशुक्लाभानखाययो: । वक्रावस्पष्टौदीर्घौवा । उत्कटौमध्यादुन्नतौमार्गायअध्वनिरतौभवत: । कषायसदृशौकृष्णलोहितौ ॥ मयूखे । उस्रे । किरणे ॥ वृक्पादे ॥ श्लोकस्यतुर्यांशे ॥ पद्यतेऽसौ । पदगतौ । पदरुजविशस्पृशोघञ् ॥ पद्यतेगम्यतेऽनेनवा । हलश्चेतिकरणे घञ् ॥

पादकटक: पुं॰ नूपुरे ॥ हंसके । शब्दरहितपादभूषणे ॥ पादस्यकटक: ॥

पादकृच्छ्र: । पुं॰ व्रतविशेषे । यथा । एकभक्तेननक्तेनतथैवायाचितेनच । उपवासेनचैकेनपादकृच्छ्रउदाहृत: ॥ इतिगारु१०३ अध्याय: ॥

पादगण्डिर: पुं॰ पादरोगविशेषे ॥ श्लीपदे । गोद॰ इ॰ गौड भा॰ ॥

पादग्रहणम् । न॰अभिवादने । नामोच्चारणपूर्वकसंस्कृत प्रयोगेणनमस्कारे ॥ पादयोर्ग्रहणंस्पर्श: ॥ व्यस्तपाणिना कार्यमुपसङ्ग्रहणंगुरो: । सव्येनसव्य: स्प्रष्टव्योदक्षिणेनच दक्षिण: ॥

पादचतुर: । पुं॰ छागे ॥ सैकते ॥

पिप्पले ॥ अश्वत्थे । कारके ॥ परद्रोषैकप्रवक्तृपरुषे ॥ इ० मे० ॥

पादचत्वरः । पुं० पादचतुरे ॥ इ० हेमचन्द्रः ॥

पादचारी । पुं० पादाती ॥ त्रि० पद्भ्यां गमनशीले ॥

पादजः । पुं० शूद्रे ॥ पद्भ्यांजातः । जनी० डः ॥

पादत्राणम् । न० पादुकायाम् ॥

पाददद्रुः । पुं० विचर्चिकायाम् ॥

पादनिकेतः ॥ पुं० चरणपीठे ॥ पादयोर्निकेतः आश्रयः ॥

पादपः । पुं० । द्रौ । वृक्षे ॥ पादैः पिबति । पा० सुपीतियोगविभागात्कः ॥ पादपीठे ॥

पादपखण्डः । पुं० वृक्षसमूहे ॥ पादपानांसमूहः । वृक्षादिभ्यः खण्डः

पादपरुहा । स्त्री० बन्दायाम् ॥

पादपा । स्त्री० पादुकायाम् ॥

पादपाशः । पुं० दामाञ्चने । अश्वपादरज्जौ ॥

पादपाशी । स्त्री० शृङ्खलायाम् । पैरकीसकली इ० भा० ॥ खड्‌काायाम् । खड्‌वा इ० भा० ॥

पादपीठः । पुं० न० पादासने । पादस्थापनपीठे । पादनिकेते ॥ इ० हे० चं० ॥ यथा । अस्पृष्टचरणाग्रस्यचूडामणिमरीचिभिः । नीराजयन्तिभूपालाःपादपीठान्तभूतलमि



तिश्रीकृष्णमिश्रः ॥

पादपीठिका । स्त्री० नापितादिशिल्पे ॥

पादपोत्पलः । पुं० कर्णिकारे ॥ पादपेउत्पलमुत्तदाकारंपुष्पमस्य ॥

पादवलयः । पुं० हंसके । पादकटके ॥

पादवल्मीकम् । न० श्लीपदे ॥

पादमूलम् । न० चरणाधोभागे । गोष्ठिरे ॥

पादरक्षणम् । न० पादुकायाम् ॥

पादरज्जुः । स्त्री० पार्याम् । हस्तिपादबन्धनगुणे ॥ चरणबन्धनदाममात्रे ॥

पादरथी । स्त्री० पादुकायाम् ॥

पादरोहणः । पुं० वटवृक्षे ॥

पादविकः । पुं० पथिके ॥ पदवींधावति । माथोत्तरपदेत्यादिनाठक् ॥

पादविरजाः । स्त्री० पादुकायाम् ॥

पादविहरणम् । न० पातक्षेपे ॥

पादशः । अ० पादम् पादमित्यर्थे ॥

पादशैलः । पुं० प्रत्यन्तपर्वते ॥

पादशोथः । पुं० पादगतशोफे ॥ यथा । अनन्योपद्रवकृतः शोथः पादसमुत्थितः । पुरुषंहन्तिनारीन्तु मुखजोगुह्यजोद्वयम् इति माधवः ॥

पादस्फोटः । पुं० विपादिकायाम् । बिवाइ० इ० भा० । स्फुटति । स्फुट० । घञ् । पादस्यस्फोटः ॥ पादौस्फोटयतिवा । कर्मण्यण् ॥

पादाकुलकम् । न० मात्रावृत्तविशेषे ॥ यथा । अक्षरगुरुलघुनियमविरहितं

भुजगराजपिङ्गलपरिभणितम् । भवतिसुगुम्फितषोड़शकलकंवाणीभूषा पादाकुलकम् ॥ यथा । मलयपवनहृतकुसुमपराग: परभृतनिभृतरणितवनभाग: । चिरतरसञ्चितमानदुरन्त: कस्यनमुद मुपनयति वसन्त: ॥

पादाग्रम् । न० प्रपदे । पादस्याग्रम् ॥

पादाङ्गदम् । न० नूपुरे ॥ पादस्याङ्गदमिव ॥ यद्वा । पादएवाङ्गम् । पादाङ्गंद्यति । दो० । दायतिवा । दैप्० । दयते । देङ् पालनेवा । आतइतिक: ॥

पादात् । पुं० पादातौ ॥

पादातम् । न० पत्तिसंहतौ ॥ पदातीनांसमूह: । भिक्षादित्त्वादण् ॥ पुं० । पादातौ ॥ पादाभ्यामतति । अत० । पचाद्यच् ॥

पादाति: । पुं० पत्तौ । पादातिके ॥

पादातिक: । पुं० पादातौ ॥ पादातिरेव । विनयादित्त्वात्स्वार्थेठक् ॥ पादाभ्यामतति अत० । बाहुलकात्तकोवा ॥

पादाभ्यासयमकम् । न० चित्रकाव्यप्रभेदे ॥ यथा । आपदिव्यापृतनयास्तथायुयुधिरेनृपा: । आपदिव्यापृतनयाविस्मयंजनतायथेतिमाघकाव्य१८ सर्गे ६० श्लोक: ॥ नृपाराजान: । आपदिव्यसनेऽपि । व्यापृतनयाप्रवृत्तिनीतिकाएवमन्त: न तुस्वापदवस्थेतिभाव: । पृतनया सेनयासाधनेन । वाक्यान्तरस्थस्यापिपृतनाशब्दस्यअत्रान्वयश्चित्रे सोढव्य: । तथातेनप्रकारेणयुयुधिरेसम्प्रजह्नु: । यथा दिव्याजनताअन्तरिक्षवर्त्ति सिद्धविद्याधरसङ्घोविस्मयमाप । अमानुषयुद्धंचक्रुरित्यर्थ: ॥

पादारक: । पुं० पोलिंदे । नौकावयवविशेषे ॥

पादार्प्पणम् । न० पादप्रदाने ॥

पादालिन्द: । पुं० नौकायां ॥

पादावर्त्त: । पुं० अरघट्टके । रहंट्० इ० भा० ॥

पादाविक: । पुं० पादातौ ॥ पादाभ्यामवति । अवरक्षणादौ । वा० इक: ॥ यद्वा । पादेनावोरक्षणम् । तत्रनियुक्त० इतिठक् ॥

पादासनम् । न० पादपीठे ॥

पादी । पुं० पादविशिष्ट कुम्भीरादिजलजन्तुषु ॥ तेयथा । कुम्भीर कूर्मनक्राश्वगोधामकरशङ्कव: । घण्टिक: शिशुमारश्चेत्यादय:पादिन:स्मृता: ॥ पादिनो पिचयेतेतुकोषस्थानां गुणै: समा: ॥ चतुर्थांशभागिनि ॥ यथा । सर्वेषामर्द्धिनोमुख्यास्तदर्द्धेनार्द्धिनोऽपरे । तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्चपादिन: ॥ त्रि० । पादविशिष्टे ॥

पादुक : । त्रि० गमनशीले ॥

पादुका । स्त्री० पादत्राणे । चर्मादिनिर्मितपादाच्छादने । उपानहि ॥ पादूएव । स्वार्थिक : ॥

पादुकाकार : । पुं० चर्मकारे ॥ पादुकांकरोति । डुकृञ्० । कर्मण्यण् ॥

पादुकाकृत् । पुं० चर्मकारे ॥

पादू: । स्त्री० पादुकायाम् ॥ पद्यतेऽनेनया । पद० । णित्कसिपद्यर्त्तेरित्यू: ॥

पादूकृत् । पुं० चर्मकारे ॥ पादूंकरोति । कृञ्० । क्विप् । तुक् ॥

पादोदकम् । न० चरणधौतजले ॥ चरणामृते ॥ यथा । हृदिरूपंमुखेनाम नैवेद्यमुदरेहरे: । पादोदकञ्चनिर्माल्यं मस्तकेयस्यसोच्युत: ॥ नैवेद्यमन्नं तुलसीविमिश्रं विशेषत : पादजलंपिवेच्च । योश्नातिनित्यं प्रयतो मुरारे : प्राप्नोतिमुप्रे मयुतांसभक्तिमितिपाद्मोत्तरखण्डे १०० अध्याय : ॥ अपिचतत्रैव । हन्त्यां हन्ति यदङ्घ्रिसङ्गितुलसीस्तेयघ्न पादोदकं नैवेद्यंवहुमद्यपानदुरितंगुर्वङ्गनासङ्गमम् । भक्त्याधीनमतिस्थिति र्हरिजनेतत्सङ्गति : सज्जांशालग्रामशिलादिमूर्तिसहितांजानन्ति केवैहरेरिति ॥ श्रीनृसिंहपुराणे गंगाप्रयागगयनैमिषपुष्कराणिपुण्यानियानि कुरुजाङ्गलयामुनानि । कालिनतीर्थसलिलानिपुनन्तिपापं-पादोदकंभगवत:प्रपुनातिसद्यइति पीतेपादोदकेविष्णोर्यदिप्राणैर्विमुच्यते । हत्वायमभटान्सर्वान्वैष्णवंलोकमाप्नुयात् ॥

पाद्धतम् । न० पद्धतिसमूहे ॥ भि० अण्० ॥

पाद्म: । पुं० वेधसि ॥ न० । पद्मपुराणे ॥

पाद्यम् । न० पादार्थवारिणि । पादप्रक्षालनार्थजले ॥ पाद्यपात्रलक्षणं यथा । षडङ्गुलंप्रविस्तारमुत्सेधञ्च तुरङ्गुलम् । श्रोष्ठमेकाङ्गुलंकुर्यान्नासिकांचतुरङ्गुलाम् ॥ पृष्ठे पादसमायुक्तंचतुरङ्गुलमानत : । पाद्यपात्रमितिख्यातंसर्वदेवप्रपूजने इति ॥ पादार्थमुदकम् । पादार्घाभ्याञ्चेति यत् ॥

पान : । पुं० नि:श्वासे ॥ शौण्डिकालये । शुण्डायाम् । खड्गादे : संस्कारविशेषे । पाण० इ० भा० ॥

पानम् । न० पीतौ । द्रवद्रव्यस्यगलाधोनयने । पीना० इ० भा० भाजने ॥ रक्षणे ॥ शौण्डिकालये ॥ पिवत्यत्र । पापाने । अधिकरणेल्युट् ॥ पेयेजलादौ ॥ पीयते यत्तत् । कृत्यल्युटोवहुलमितिकर्मणिल्युट् ॥

पानकम् । न० पन्नापानारसवत्० इ० भा० प्र० पेयपदार्थे ॥ तत्राम्रफलपानकम् ॥ यथा । आम्रमार्मजल-

खिन्नं मर्दितं दृढपाणिना । सिता-
शीताम्बुसंयुक्तंकर्पूरमरिचान्वितम् ॥
प्रपानकमिदंश्रेष्ठं भीमसेनेननिर्मि
तम् । सद्योरुचिकरं बल्यं शीघ्रमिन्द्रि
यतर्पणम् ॥ अपक्वाम्ररसोद्भूतंपान
कंवातनाशनम् । कफपित्तकरंकि-
ञ्चित्प्रत्यहंयदिसेवितम् ॥ पक्वाम्र
स्यतु । सुपक्वमाम्रस्यफलंसुमुष्टिना
सम्मर्दितंशर्करयासमन्वितम् । एला
लवङ्गार्द्रकवासवासितंवर्णान्वितं
कस्यनरोचकंभवेत् ॥ पानकंचाम्र-
सम्भूतंस्वाद्वम्लंगुरुपित्तजित् । सुहृ
द्यं श्रमघ्नंबल्यं वर्ण्यंवृष्यं रुचिप्रद-
म् ॥ -( ✱✱‡✱✱ )- ॥ अम्लिकाफ
लपानकंयथा । अम्लिकायाः फलं
पक्वंमर्दितम्वारिणादृढम् । शर्करा
मरिचोन्मिश्रं लवंगेन्दुसुवासितम् ॥
अम्लिकाफलसम्भूतंपानकंवातनाश
नम् । पित्तश्लेष्मकरंकिञ्चित्सुरुच्यं
वह्निबोधनम् ॥ निम्बूफलपानकं
यथा । भागैकंनिम्बुजंतोयंषड्भा-
गंशर्करोदकम् । लवङ्गमरिचोन्मिश्रं
पानकंपानकोत्तमम् ॥ निम्बूफल-
भवंपानमत्यम्लंवातनाशनम् । व-
ह्निदीप्तिकरंरुच्यंसमस्ताहारपाचक
म् ॥ ( ०० ) ॥ धान्याकपानकंयथा
। शिलायांसाधुसम्पिष्टं धान्याकंव-
स्त्रगालितम् । शर्करोदकसंयुक्तंकर्पू
रादिसुसंस्कृतम् ॥ नवीनेमृन्मयेपा-

त्रेस्थितंपित्तहरम्परम् ॥०॥ जम्बुवाः
पानकं यथा । जम्बूफलंस्थूलतरंसु
पक्वंसम्मर्दितम्शर्करयाम्बुजालम् ।
। सुवासितंवेल्लजभृङ्गपत्रैरुचिंविधत्ते
विरुचीजनानाम् ॥ जम्बूफलभवं-
रुच्यं पानकंकफनाशनम् । कषायं-
वातकृत्स्तोकंस्वाद्वम्लं ग्राहकंपरम् ॥
वीजपूरपानकम् । मातुलुङ्गरसेयो-
ज्यं त्रिगुणंशार्करंजलम् । कर्पूरमरि
चोन्मिश्रं पानकंस्यादिदंवरम् । मातु
लुङ्गभवंपानंशूलानाहविनाशनम् ।
श्वासेकासेऽरुचौवातविड्बन्धेषुचपूजि
तम् ॥ हैमकिरणन्तु । शर्करानालिके
लम्बीजपूररसप्लुतम् । पटपूतंभ-
वेद्धैमकिरणंनामपानकम् ॥ पानकं
हैमकिरणंरुच्यं वृष्यं बलप्रदम् । सु
स्निग्धंवातहृच्छुभ्रं किञ्चित्कफकार
गुरु ॥ करमर्दपानकंयथा । लवङ्गार्द्र
कसंयुक्तंसुपिष्टं वारिणायुतम् । क
रमर्दकरैर्मर्द्यंसप्तभागसितान्वितम्
॥ वातहृद्रुचिदंभव्यं हृद्यमम्लतरंस्मृ
तम् । रक्तपित्तकरश्चोष्णमाकण्ठ्यं
कारमर्दिकम् ॥ नारङ्गपानकं यथा ।
सुपक्वनारङ्गफलंनिपीडितं संयोजि
तंशर्करयातिशुभ्रया । सहार्द्रकंचे-
न्दुकणेनवासितम् पानेच्छयाकेन
नसंस्तुतंचणम् ॥ नारङ्गफलसम्भू
तंपानकंवातनाशनम् । मधुरंविश-
दंरुच्यं सुस्निग्धंपित्तहृद्दृढम् । ०।

चारस्यते। चारस्यफलजंसशर्करं मर्दितंशिशिरवारिणादृढम्। ऐलमाद्रकयुतेनसुवासंभक्तसिक्थमिलितंक्रतसासम्॥ चारस्यफलजंपानं गुरुहृष्यंरुचिप्रदम्। कफपित्तहरंश्रेष्ठंहृद्यंमधुरपाकिच॥ परूषकेरसुक्राद्रिद्राचादाडिमजंतथा। एकैकं सम्भवंभिन्नंपानकंक्रियतेबुधैः॥ एवमस्लस्यपुष्पस्य फलस्याम्लस्यवातथा। शर्करामरिचोन्मिश्रंरस्यंस्यात् पानकंवरम्। एवंहिपानककार्यं सुधियासुष्ठुयत्कृतम्। गुणाद्रव्यानुसारेणज्ञातव्याः पानकेषुच

पानगोष्ठिका। स्त्री० आपाने। सम्भूयपिबन्तियत्र० अस्मिन्स्थाने॥ पानस्यगोष्ठी। स्वार्थेकः॥

पानगोष्ठी। स्त्री० पानगोष्ठिकायाम्॥

पानपात्रम्। न० मद्यपानपात्रे। चषके॥ अस्यपरिमाणाद्युक्तंकुलसारे। नयनाग्निवाणसङ्ख्यकर्षैस्तुपरमेश्वरि। हेतुपात्रंप्रकर्त्तव्यमित्युक्तंकुलसाधने॥ इतोप्यधिकपात्रन्तुनकर्त्तव्यंचसाधकैरिति॥ कर्षैर्लौकिकतोलकमित्यर्थः॥ तदुक्तंकुलोत्तमे। गुञ्जाद्वादशमाषः स्यात्तदष्टौकर्षउच्यतइति॥ पानस्यपानायवा पात्रम्॥

पानवणिक्। पुं० शौण्डिके॥ पानेन उपलक्षितो वणिक्॥

पानभाजनम्। न० पानपात्रे। कंसे। कटोरा० इ० भाषा॥ पीयते० पानम्। चीरादि। पापाने। ल्युट्। पानस्यभाजनम्॥

पानसम्। न० पनसभवमद्ये॥ त्रि० पनससम्बन्धिनि। पनसस्येदम्। अण्॥

पानात्ययः। पुं० मदात्ययरोगे॥

पानिलम्। न० पानपात्रे॥

पानीयम्। त्रि० पातव्ये। पेये॥ रक्षणीये॥ यथा। पानीयंपानीयंशरदिवसन्ते चपानीयमिति। अस्यार्थः। पानीयंजलंशरदिपानीयम्पानार्हम्भवतिनिर्मलत्त्वात्त्रिदोषघ्नत्त्वात्विशेषतः पित्तोपशान्तित्त्वात्। वसन्ते चपुनस्तदेवपानीयंरक्षणीयमल्पंदेयमितिभावः। पारक्षणे॥ न० उदके। जले। सलिले॥ अस्य गुणायथा। पानीयंश्रमनाशनंक्लमहरंमूर्च्छापिपासापहंतन्द्राछर्दिविनाशनंबलकरंनिद्राहरंतर्पणम्। हृद्यंगुप्तरसंह्यजीर्णशमनंनित्त्यंहितं शीतलंलघ्वच्छंरसकारणंनिगदितं पीयूषवज्जीवनम्॥ तद्भेदास्तु। पानीयंमुनिभिःप्रोक्तंदिव्यंभौममिति द्विधा। दिव्यञ्चतुर्विधंप्रोक्तंधाराजं कारकाभवम्॥ तौषारञ्चतथाहैमंतेषुधारंगुणाधिकम्॥ भौममम्भोनिगदितंप्रथमंत्रिविधंबुधैः॥ जाङ्गलं

परमानूपंतत : साधारणंक्रमात् ॥ अनात्तवंप्रमुञ्चन्तिवारिवारिधरास्तु यत् । तत्त्रिदोषायसर्वेषांदेहिनां- परिकीर्तितम् ॥ नादेयमौद्भिदंचैव नैर्झरंसारसंतथा । ताड़ागञ्चतथा- वाप्यंकौपंचौडाञ्चपाल्वलम् ॥ वि- किरञ्चवकेदारंवार्षिकञ्चापिकीर्त्ति तम् । भौमान्येतानिवारीणि ज्ञात व्यानिविचक्षणै : ॥ भुक्त्वादौसलि लंपीतंकार्श्यमन्दाग्निदोषकृत । म ध्येऽग्निदीपनंश्रेष्ठंचान्ते स्थौल्यक फप्रदम् ॥ पानीयंप्राणिन : प्राणा: पानीयंपावनंमहत् ।पानीयस्यप्रदा नेनतृप्तिर्भवतिशाश्वती ॥ पीयते । पापाने । अनीयर् ॥ पायतेवा । पै शोषणे । अनीयर् ॥

पानीयतण्डुलीय : । पुं० तण्डुलीय प्रभेदे । कञ्चटे ॥

पानीयनकुल : । पुं० उद्रे । जलमार्जा रे ॥

पानीयपृष्ठज: । पुं० कुम्भ्याम् ॥

पानीयफलम् । न० मखान्ने । मखाना इतिभाषा० ॥ शृङ्गाटके । सिंघाडा इ० भा० ॥

पानीयमूलम् । न० कुम्भ्याम् । सोमरा ज्यां ॥

पानीयमूलकम् । न० सोमराज्याम् ॥

पानीयवर्णिका । स्त्री० वालुकायाम् ॥

पानीयशाला । स्त्री० प्रपायाम् ॥पानी यस्यशाला ॥ जलावस्थानगृहे ॥

पानीयशालिका । स्त्री० प्रपायाम् ॥ स्वार्थेकन् ॥

पानीयामलकम् । न० प्राचीनामलके ॥ प्राचीनामलकंलोकेपानीयामल- कंस्मृतम् ॥

पानीयालु : । पुं० जलालौ । पनिया लु० इ० भा० ॥

पानीयाम्ना । स्त्री० वल्वजायाम् ॥

पान्थ : । त्रि० पथिके ॥ पन्थानंनित्यं गच्छति । पन्थोणनित्यम् । इ० प- न्थादेशोणप्रत्ययश्च ॥ स्त्री० । पान्था

पापम् । न० अधर्मे । अनर्थानुबन्धिनि । किल्बिषे । वृजिने । एनसि । दु- रिते ॥ निषिद्धकर्म्मानुष्ठानविहित कर्माऽननुष्ठानाभ्यांपापोत्पत्तिंसवि शेषमाहश्रीसदाशिव : । अनुष्ठानं- निषिद्धस्यत्यागोविहितकर्मणा : । नृणांजनयत : पापंक्लेशशोकामय- प्रदम् ॥ स्वानिष्टमात्रजननात्परा- निष्टोपपादनात् । तदेवपापंद्विविधं जानीहिकुलनायिके ॥ परानिष्टक- रात्पापान्मुच्यतेराजशासनात् । अ न्यस्मान्मुच्यतेमर्त्य : प्रायश्चित्तास माधिना ॥ प्रायश्चित्तायवादण्डैर्न- पूतायेकृतांहस : । नरकाननिव- र्त्तन्ते इहामुत्रनिगर्हिता इति श्री महानिर्वाणतन्त्रम् ॥ तद्दशविधंय- था । प्राणाभिपातनंस्तैन्यंपरदार

मथापिच । "त्रीणिपापानिकायेनस र्वतः परिवर्ज्जयेत् ॥ असत्प्रलापं पारुष्यं पैशुन्यमनृतंतथा । चत्वारि वाचाराजेन्द्रनजल्पे तनचिन्तयेत् ॥ अनभिध्यापरस्वे षुसर्वसत्त्वे षुसौहृ- दम् । कर्मणांफलमस्तीतित्रिविधंम नसाचरेत् ॥ अपिच । अदत्तानामु पादानंहिंसाचैवाविधानतः। परदा रोपसेवाचकायिकंत्रिविधंस्मृतम् ॥ पारुष्यमनृतञ्चैवपैशुन्यंचापिसर्व- शः । असम्बद्धप्रलापश्चवाङ्मयंस्या- च्चतुर्विधम् ॥ परद्रव्येष्वपिध्यानंम नसानिष्टचिंतनम् । वितथाभिनि- वेशश्चत्रिविधंकर्ममानसम् । त्रि० । अधर्मिणि । शास्त्रप्रतिषिद्धकारिणि ॥ यथा । कथापिखलुपापानामल- मश्रेयसेभवेदिति ॥ क्रूरे । परद्रो हादिकरे ॥ " पात्यस्मादात्मानम् । पारक्षणे । पानीविषिभ्यःपः ॥ पापमस्यास्तिवा । अर्शआद्यच् ॥ पापंचिन्तयतेचैवब्रवीतिचकरोतिच । तस्याधर्मेनिविष्टस्य गुणानश्यन्ति- साधवः ॥ धर्मनित्यःप्रशान्तात्मा कार्य्ययोगवहः सदा । नाधर्मेकुरु तेबुद्धिंनचपापेप्रवर्त्तते ॥ धर्मलि प्सोधर्मेनितरांरतः । कार्य्ययोगव- हः कार्य्योपायतत्परः ॥

पापकम् । न० दुरदृष्टे । पाप्मनि । पापे ॥

पापकर्त्तृकयोगः । पुं० याचार्य्योगवि शेषे ॥ यथा । दुर्बलोयदिमार्गेशोनि वसेत्पापमध्यगः । पापकर्त्तृकयो गोयंयातुः पलौनिहन्तिवै ॥

पापकर्म्मा । त्रि० पापाचारे ॥ नचिरं पापकर्माणः क्रूरालोकजुगुप्सिताः । ऐश्वर्य्यंप्राप्यतिष्ठन्ति शीर्णमूला- इवद्रुमाः ॥ पापंकर्म्म यस्यसः ॥

पापकृत् । त्रि० पापकारिणि ॥ पापं- कृतवानितिविग्रहेसुकर्मपापमन्त्र- पुण्येषुकृञ इतिक्विप् ॥

पापकृत्तमः । त्रि० अतिशयपापका- रिणि ॥

पापगणः । पुं० पञ्चमाचक्षाष्टमप्रभेदे ॥

पापग्रहः । पुं० अर्कौनचन्द्रादौ ॥ य- था । अर्कौनेन्दुः कुजोराहुः शनि स्तैर्युतश्चन्द्रजः । रविःपापाभवन्त्ये तेशुभास्त्वान्ये प्रकीर्त्तिताः ॥ जन्म राश्यपेक्षयाषष्ठादिस्थानस्थाः पा- पाअपिशुभाभवन्ति । यथा । केतूप ञ्चभौममन्दगतयः षष्ठत्रिसंस्थाः शुभाश्चन्द्रार्काविपितेचतौचदंशमौ- चन्द्रः पुनः सप्तमः । जीवः स प्त नवद्विपञ्चमगतोयुग्मेषुसोमात्म जः शुक्रः षड्दशसप्तवर्जमितरेस र्वेऽप्युपान्ते शुभाइति ॥

पापघ्नः । पुं० तिले ॥ त्रि० पापना- शके ॥

पापचेलिका । स्त्री० अम्बष्ठायाम् ।

पाठायाम् ॥

पापचेली । स्त्री॰ प्राचीनायाम् ॥ अम्बष्ठायाम् । पाठायाम् ॥ पापेचलति । चलविलसने । पचादौ चेलडितिनिपातनात्ङीप् ॥ पचेर्यङन्तादचिपापक्तीतिपापचोवायु :। तमीरयतिवा । अण् ॥

पापपति :। पुं॰ जारे । उपपतौ ॥

पापपुरुष :। पुं॰ पापमयाङ्गनरे ॥ सचोक्त: पाद्मे क्रियायोगसारे । सृष्ट्वादौपुरुष : श्रेष्ठ : समारंसचराचरम् । सर्वेषांदमनार्थायसृष्टवान्पापपूरुषम् ॥ द्विजातिहत्यामूर्द्धानंमदिरापानलोचनम् । सुवर्णास्तेयवदनं गुरुतल्पगतिश्रुतिम् ॥ स्त्रीहत्यानासिकद्वे वगोहत्यादोषबाहुकम् । न्यासापहरणग्रीवंभ्रूणहत्यागलंतथा ॥ परस्त्रीगतिवृक्षालंसुहृल्लोकवधोदरम् । शरणापन्नहत्यादिनाभिं गर्भकथाकटिम् ॥ गुरुनिन्दासक्थिभागंकन्याविक्रयशेफसम् । विश्वासवाक्यकथनपायुंपितृवधाङ्घ्रिकम् ॥ उपपातकरोमाणंमहाकायंभयङ्करम् । कृष्णवर्णंपिङ्गनेत्रं स्वाश्रयात्यन्तदुःखदमिति ॥

पापफलम् । न॰ रोगे ॥ कर्मविपाके ॥

पापमुक्त :। त्रि॰ निष्पापे ॥

पापयोनि :। पुं॰ अजे ॥ तिरश्चि ॥

पापरोग :। पुं॰ मसूरीरोगे ॥ अष्टौपापरोगा :। तेच । उन्माद :। त्वग्दोष :। राजयक्ष्मा । श्वास: । मधुमेह :। भगन्दर :। महोदर :। अश्मरी । इति ॥

पापरोगी । त्रि॰ कुष्ठिनि ॥ क्षयरोगिणि ॥ पापरोगाणामष्टविधत्वादष्टौ पापरोगिणोभवन्ति ॥

पापर्द्धि :। पुं॰ मृगयायाम् ॥ इ॰ हे॰

पापल :। त्रि॰ पापग्राहके ॥

पापशमन :। त्रि॰ पापनाशके ॥

पापशमनी । स्त्री॰ शमीवृक्षे ॥ पापनाशिकायाम् ॥

पापात्मा । पुं॰ अधर्मशीले । पापाशये । पापिनि ॥

पापित्ता । स्त्री॰ वर्णवृत्तविशेषे ॥ आदौकर्णद्वयललितंकृत्वाविप्रं गुरुसहितम् । तद्वृत्तं पिंगलभणितंपापित्तेतिश्रवणहितम् ॥ यथा । भ्रामंभ्रामंभुवनतलंदर्शन्दर्शंजगदखिलम् । भूयोभूय: परिगुणितम् विष्णोर्नामश्रवणहितम् ॥

पापी । त्रि॰ पापयुक्ते ॥

पाप्मा । पुं॰ पापे ॥ त्रि॰ । तद्वति । आप्नोति । व्याप्नोतिलोकान् । आप्नृ॰ । नामन्सीमन्व्योमन्निति॰ निपातित: ॥ पातिपिवतिवा । पा॰ । नामन्निति॰ मनिन्॰ धातो : पुगागमश्च- निपातनात् ॥

पामघ्न :। पुं॰ गन्धके ॥

पामघ्नी । स्त्री० कटुकायाम् ॥ इति० राजनिर्घण्ट : ॥

पाम । न० विचर्चिकायाम् । कच्छाम् ॥ पायत्यङ्गम् । पैशोषणे । मनिन् ॥ पायतेदेहोऽस्माद्वा । पारक्षणे । पिवतिदेहंवा ॥

पामन : । त्रि० कच्छुरे । पामरोगविशिष्टे । विचर्चिकायुक्ते ॥ पामाऽस्यास्ति । पामादित्वान्नः ॥

पामर : । त्रि० खले ॥ नीचे ॥ मूर्खे ॥ पामानंराति । रा० । आतइतिकः ॥ यद्वा । पाधर्मः म्रियतेयेन । मृङ् प्राणत्यागे । पुंसीतिघः ॥

पामरोद्गारा । स्त्री० गुडूच्याम् ॥

पामवान् । त्रि० पामने ॥ अस्त्यर्थेमतुप् ॥

पामा । स्त्री० विचर्चिकायाम् ॥ कच्छाम् । खर्ज्वाम् ॥ अस्याऔषधं यथा । हरिद्राहरितालञ्चदूर्वागोमूत्रसैन्धवम् । अयंलेपोहन्तिदद्रूंपामानंवेगरंतथा ॥ अपिच । माहिषंनवनीतंचसिन्दूरञ्चमरीचकम् । पामाविलेपितानश्येदतुलापित्तषध्वज ॥ अन्यच्च ॥ मरिचंत्रिवृतंकुष्ठंहरितालंमनश्शिला । देवदारुहरिद्रेद्वेकुष्ठमांसीतिचन्दनम् ॥ विशालाकरवीरञ्च अर्कक्षीरंसकृत्फलम् । एषांचकार्षिकोभागोविषस्यार्द्धपलंभवेत् ॥ प्रस्थंकटुकतैलस्यगोमूत्रेष्टगुणेपचेत् । मृत्पात्रेलोहपात्रेवाशनैर्मृद्वग्निनापचेत् ॥ पामाविचर्चिकाचैव दद्रुविस्फोटकानिच । अभ्यङ्गेनप्रणश्यन्ति कोमलत्वञ्चजायते ॥ प्रसूतान्यपिश्वित्राणितैलेनानेनम्रक्षणात् । चिरोत्थितमपिश्वित्रं विवर्णतत्क्षणाद्भवेदिति गारुडे १९४ अध्यायः ॥ पायत्यङ्गम् । पैं० । मनिन् ॥ मनइति ङीप् । डाबुभाभ्यामितिडाप् ॥

पामारि : । पुं० गन्धके ॥

पायस : । पुं० न० क्षीरतण्डुलमिश्रे । परमान्ने ॥ अतप्ततण्डुलाधौताः परिभृष्टाघृतेनच । खण्डयुक्तेनदुग्धेनपाचिताः पायसोभवेत् ॥ पायस : कफकृद्बल्योविष्टम्भीमधुरोगुरुः ॥ अपिच । पायसंदुर्जरंबल्यं-धातुपुष्टिविवर्द्धनम् । विष्टम्भजननंहन्तिरक्तपित्ताग्निमारुतम् ॥ श्रीवासे । सरलद्रवेटारपिन्इति भा० ॥ पयएव । प्रज्ञाद्यण् ॥ पयसोविकारोवा । तस्यविकारइत्यण् ॥ पयसिसंस्कृतोवा । संस्कृतंभक्षा० इत्यण् ॥

पायिक : । पुं० पदातिके । पायकइतिभाषा ॥ इति शब्दरत्नावली ॥

पायित: । त्रि० पानङ्कारिते ॥ पिवतेर्ण्यन्तात्कर्तरिक्तः । शाच्छासाह्वाव्यावेपांयुगितियुगागमः ॥

पायुः । पुं० मलद्वारे । अपाने । गुदे ॥

अवाग्गतिरपानश्चपायुरध्यात्ममुच्यते । अधिभूतंविसर्गश्चमित्रस्तत्राधिदैवतम् ॥ पायतिशोषयतितैलमितिपायु :॥ पुं० । कृवापाजीत्युण् । आतोयुक् ॥ यद्वापातिमलनिस्सारणेन । पारत्राणे पिबतिवस्त्यौषधंवा । पापाने । प्राग्वत् ॥ त्रि० रक्षके ॥

पाय्यम् । न० परिमाणे । यौतवे ॥ मीयतेऽनेन । माङ्माने । पाय्यसान्नाय्येतिनिपातनात्ण्यत्धात्वादे: पकारादेशोयुगागमश्च ॥ जले ॥ त्रि० । निन्दनीये ॥

पारम् । न० परतटे । नदीलङ्घनाद्नन्त्यतीरे ॥ पुं० । न० प्राप्ते ॥ पारयति। पारतीरकर्मसमाप्तौ ॥ पचाद्यच् ॥ समाप्तौ ॥ पुं० । पारदेपीतिकश्चित् ॥

पारकुलीन : । त्रि० परकुलेसाधौ ॥ प्रति० खञ् ॥

पारक्य : । त्रि० परकीये ॥ यथा । यन्नाम्नातंस्वशाखायांपारक्यमविरोधियत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मवत् इति ॥ पुं० । परलोकहितकर्मणि । यथा । पादेनतस्यपारक्यं कुर्यात्सञ्चयमात्मवान् । अर्द्धेनचात्मभरणं नित्यनैमित्तिकंतथा ॥ पादस्यार्द्धार्द्धमर्थस्यमूलभूतंविवर्द्धयेत् । एवमाचरत : पुंसोह्यर्थ : साफल्यमृच्छतीतिमार्कण्डेयपुराणम् ॥

पारग : । त्रि० । पारगामिनि ॥ पारङ्गच्छति । गम्लृ० । अन्तात्यन्ताध्वदूरपारसर्वेत्यादिनागमेर्ड : प्रत्यय : ॥

पारगत : । पुं० जिने ॥ त्रि० । पारगे ॥

पारक् । न० सुवर्णे ॥ पारयति । पार० । पारयतेरजि : ॥

पारजायिक : । पुं० पारदारिके ॥ इतिमहाभारते राजधर्म : ॥

पारटीट : । पुं० । अश्मनि ॥

पारणा: । पुं० मेघे ॥ न० । पारणायाम् ॥ यथा । पारणंपावनंपुंसां सर्वपापप्रणाशनम् । उपवासाङ्गभूतञ्चफलदंशुद्धिकारणम् ॥ सर्वेष्वेवोपवासेषु दिवापारणमिष्यते । अन्यथाफलहानि : स्याद्दतेधारणपारणम् ॥ नराचौपारणंकुर्याद्दिते वैरोहिणीव्रतात् । निशायांपारणं कुर्याद्वर्जयित्वामहानिशाम् ॥ पूर्णाहेपारणंशस्तं कृत्वाविप्रसुरार्चनम् । सर्वेषांसम्मतंकुर्याद्दितेवैरोहिणीव्रतमितिब्रह्मवैवर्त्ते श्रीकृष्णजन्मखंडे ८ अध्याय : ॥ जन्माष्टमीव्रतेपारणाकालस्तु । अष्टम्यामथरोहिण्यां नकुर्यात्पारणंक्वचित् । हन्यात् पुराकृतंकर्म उपवासार्जितंफलम् ॥ तिथिरष्टगुणं हन्तिनक्षत्रञ्चचतुर्गुणम् । तस्मात्प्रयत्नत : कुर्या

त् तिथिभान्ते चपारणम् ॥ श्रयो भयवियोगेपारणमुक्तम्। यदासार्द्ध प्रहरनिशाभ्यन्तरेएकस्यैववियोगस्त देकतरवियोगेपिपारणम्। तथाच नारदीये। तिथिनक्षत्रसंयोगेउप वासोयदाभवेत्। पारणन्तुनकर्त्त व्यंयावन्नैकस्यसंक्षयः॥ सांयोगि केव्रतेप्राप्ते यद्यप्येकोवियुज्यते। त त्रैवपारणं कुर्यादेवंवेदविदोविदुः॥ यदैकस्यापि। सार्द्धप्रहरनिशाभ्य न्तरेनवियोगस्तदातयोरवियोगेपिप्रा तरुत्सवान्ते पारणम्तिथ्यन्ते चोत्स वान्ते वाव्रतीकुर्वीतपारणमित्युक्त रिति॥

पारणा। स्त्री०। उपवासोत्तरदिने- विहितकालेविहितभोजने॥

पारतः। पुं०। पारदे। पारा० इ० भा०॥ पारंतनोति। तनु०। अन्येभ्यो० डः।

पारतन्त्र्यम्। न०। पराधीने। परत न्त्रतायाम्। पराधीनविषयताशालित्वे

पारत्रिकम् त्रि०। परलोकभवे॥

पारदः। पुं० रसराजे। रसेन्द्रे। महार से। चपले। रसे। सूते। यथा। पा रदस्तुमनाक्पाण्डुः मृतस्तुरहितो मलात्। पारदस्तुमनाक्शीतः स र्वतुल्यगुणाः स्मृताः॥ श्रुतिशब्दा र्णव:॥ तस्योत्पत्त्यादयोयथा। शिवाङ्गात्प्रच्युतंरेतः पतितंधर- णीतले। तद्देहसारजातत्वाच्छुक्ल मच्छम भूच्चतत्॥ क्षेत्रभेदेन त्रि त्रेयंशिववीर्यंचतुर्विधम्। श्वेतंरक्तं तथापीतंकृष्णंतत्तुभवेत्क्रमात्॥ ब्राह्मणः क्षत्रियोवैश्यः शूद्रस्तुख लुजातितः। श्वेतंशस्तंरुजांनाशे रक्तंकिलरसायने॥ धातुवादेतुतत् पीतंखेगतौकृष्णमेवच॥ पारदः ष ड्रसः स्निग्धस्त्रिदोषघ्नोरसायनः। योगवाहीमहावृष्यः सदादृष्टिबल प्रदः॥ सर्वामयहरः प्रोक्तोविशेषा त्सर्वकुष्ठनुत्। स्वस्थोरसोभवेद्ब्र ह्माबद्धोज्ञेयोजनार्दनः॥ रञ्जितः क्रामितश्चापिसाक्षाद्देवोमहेश्वरः॥ मूर्च्छित्वाहरतिरुजंबन्धनमनुभूय- खेगतिंकुरुते। अजरीकरोतिहिमृ- तःकोन्यःकरुणाकरःसूतात्॥ रसामृ ते। यस्ययोगस्ययोयोगस्तेनैवसहयो जितः। रसेन्द्रोहन्तितंरोगंनरकुञ्जर- वाजिनाम्॥ तस्यदोषायथा। मलं विषंवह्निगिरित्वचापलंनैसर्गिकंदोष मुशन्तिपारदे। उपाधिजौद्वौत्रपुना गयोगजौदोषौरसेन्द्रे कथितौमुनी श्वरैः॥ मलेनमूर्च्छामरणंविषेणदा होग्निनाकष्टतरः शरीरे। देहस्यजा ड्यंगिरिणासदास्याच्चाञ्चल्यतोवीर्य हृतिश्चपुंसाम्॥ वङ्गेनकुष्ठंभुजगेन गण्डोभवेदतोसौपरिशोधनीयः। वह्निर्विषंमलञ्चेतिमुख्या दोषास्त्र

योरसि ॥ एतेकुर्वन्तिसन्तापंमूर्तिंमू
र्च्छांन्नृणांक्रमात् ॥ अन्येपिकथिता
दोषाभिषग्भि: पारदेर्यदि । तथा
प्येतेत्रयोदोषाहरणीयाविशेषत : ॥
संस्कारहीनं खलुसूतराजंय : सेव
तेतस्यकरोतिबाधाम । देहस्यनाशं
विदधातिनूनंकष्टांश्चरोगान्जनयेन्न
राणाम् ॥ पल्लवशब्दवाच्येम्लेच्छजा
तिविशेषे ॥ त्रि० पारदातरि ॥ पा
रंददाति । ड्दाञ० । आतोनुपे-
तिक: ॥ पारदस्यमारितस्यमूर्च्छित
स्यगुणायथा । पारद : क्रमिकुष्ठघ्नो
जयदोदृष्टिद : सर: । मृत्युहृच्चम
हावीर्योयोगवाहीजराहर : ॥ स्मृ-
त्योजोरूपदोवृष्योवृद्धिकृद्धातुवर्द्धन :
। षण्ढत्वनाशन: शूर : खेचर : सि
द्धिद : पर : ॥ पारद:सकलरोगहा
स्मृत : षड्रसोनिखिलयोगवाहक:
। पञ्चभूतमयएषकीर्त्तितस्तेनतद्
गुणगणैर्विराजते ॥ अथास्यशोधन
विधि: । तत्रस्वेदनम् । नानाधान्यै
र्यथाप्राप्तैस्तुषवर्ज्जैर्जलान्वितै: । मृद्भा-
ण्डंपूरितंरक्षेद्यावदम्लत्वमाप्नुयात् ॥
तन्मध्ये भृङ्गराणमुण्डीविष्णुक्रान्ता
पुनर्नवा । मीनाक्षीचैवसर्पाक्षीसह
देवीशतावरी ॥ त्रिफलागिरिकर्णी
च हंसपादीचचित्रकम् । समूलं
कुट्टयित्वातुयथालाभंविनि:क्षिपेत्
। पूर्वाम्लभाण्डमध्ये तु धान्याम्लक



मिदंस्मृतम् । स्वेदनादिषुसर्वत्र
रसराजस्ययोजयेत् ॥ विष्णुक्रा
न्तागिरिकर्णीच अपराजितैवपूर्वं त
नीलपुष्पभेदात् ॥ अत्यम्लमारनालं
वातदभावेप्रयोजयेत् । तदभावे ।
धान्याम्लाभावे । त्र्यूषणंलवणंरा
जीरजनीत्रिफलार्द्रकम् । महा
बलानागबलामेघनाद : पुनर्नवा ॥
मेषशृङ्गीचित्रकञ्चनवसारंसमंसमम्
। एतत्समस्तंव्यस्तंवापूर्वाम्लेनैव
पेषयेत् ॥ प्रलिम्पेत्तेनकल्केनवस्त्र
मङ्गुलमात्रकम् । तन्मध्येनि:क्षि
पेत्सूतंबध्वातत्त्रिदिनंपचेत् ॥ दो
लायन्त्रेऽम्लसंयुक्तेजायतेस्वेदितो
रस : । मेषशृङ्गीमेढाशृङ्गी । तद-
लाभे कर्कटशृङ्गीग्राह्या ॥ नवसारम्
नौसादर । अन्यच्च । मूलकानल-
सिन्धूत्थत्र्यूषणार्द्रकराजिका : ।
रसस्यषोडशांशेनद्रव्यंयुञ्ज्यात्पृथक्-
पृथक् ॥ द्रव्येष्वनुक्तमानेषुमतंभा-
नमिदंबुधै : । घटाहतेषुचैतेषुसूतं
प्रक्षिप्यकाञ्जिके ॥ स्वेदयेद्दिनमेक
ञ्चदोलायन्त्रेणबुद्धिमान् । स्वेदात्ती
व्रोभवेत्सूतोमर्दनाच्चसुनिर्मल : ॥
मूलकंमुरइ । अनलश्चित्रकम् । त्र्यू
षणंत्रिकटु । राजिकाराइ ॥ -|- ॥
अथ मर्दनम् । इष्टकाचूर्णचूर्णा-
भ्यामादौ मर्द्योरसस्तत : । दध्नागु
डेनसिन्धूत्थराजिकागृहधूमकै: ॥

अन्यच्च । कुमारिका चित्रकरक्तसर्षपैः कृतैः कषायैर्बृहती विमिश्रितैः । फलत्रिकेणापि तमर्दितोरसोदिनत्रयं सर्वमलैर्विमुच्यते ॥ + ॥ अथमूर्च्छनम् । त्र्यूषणं त्रिफलावन्ध्याकन्दैः चुद्राद्वयान्वितैः । चित्रकोर्णानिशाक्षारकन्यार्ककनकद्रवैः ॥ सूतंकृतेनयूषेणवारान्सप्ताभिमूर्च्छयेत् । इत्थं सम्मूर्च्छितः सूतस्त्यजेत्सप्तापिकञ्चुकान् ॥ वन्ध्याकन्दंबांझखखसाकन्द । चुद्राद्वयम्० कोटीकटै आ०वडीकटैआ । ऊर्णा ऊर्णामेषका । निशाहरिद्रा । क्षारोयवक्षारः । कन्याकुमारी । अर्कोऽर्कपत्ररसः । कनकोधत्तूरपत्ररसः अथोर्द्धपातनम् । मयूरग्रीवताप्याभ्यांनष्टपिष्टीकृतस्यच । यन्त्रे विद्याधरेकुर्याद्रसेन्द्रस्योर्द्धपातनम् ॥ सूतस्स्यादूर्द्धपातेनसर्वदोषविवर्जितः । मयूरग्रीवातूतिया । ताप्यंसुवर्णमाखी । नष्टपिष्टीकृतस्यकुमारिकाद्रवयोगेनतावन्मर्द्दनंकर्तव्यंयावत्पारदः पृथङ्नदृश्यते । विद्याधरेयन्त्रे डमरूयन्त्रे ॥ अथाधःपातनम् । त्रिफलाशिग्रुशिखिभिर्लवणासुरिसंयुतैः । नष्टपिष्टंरसंकृत्वालेपयेदूर्द्ध्वभाजनम् ॥ ततोदीप्तैरधःपातमुपलैस्तस्यकारयेत् । यन्त्रे भूधरसंज्ञेतुततः सूतो विशुद्ध्यति ॥ स्वेदनादिक्रि-



याभिस्तुशोधितोऽसौयदाभवेत् । तदाकार्याणिकुरुतेप्रयोज्यः सर्वकर्मसु ॥ + ॥ अथ मुख्य दोष हरशोधनविधिः । गृहकन्याहरतिमलं त्रिफलाग्निं चित्रको विषंहन्ति । तस्मादेभिर्मिश्रैर्वारान् सम्मूर्च्छयेत्सप्त ॥ ०( ०++० )० ॥ अथ सर्वदोषहरः संक्षिप्तः शोधनविधिः । कुमारिकाचित्रकरक्तसर्षपैः कृतैःकषायैर्बृहतीविमिश्रितैः । फलत्रिकेणापिविमर्दितोरसोदिनत्रयंसर्वमलैर्विमुच्यते ॥ एवंकदर्थितः सूतः षण्ढोभवतिनिश्चितम् । वह्नौषधीकषायेणस्वेदितः सबलीभवेत् ॥ सर्पाचीदिव्यावन्ध्या भृङ्गाब्दैः स्वेदितो बली । ततः सपावकद्रावैःखिन्नः स्याद्दितिदीप्तवान् ॥ सर्पाचीनागफणी । चिञ्चिका अम्ली । वन्ध्याबांझखखसा । भृङ्गी भृङ्गराजः । अब्दोमुस्ता । पावकश्चित्रकः ॥ + ॥ अथरसस्यमारणविधिः । धूमसारंरसंतोरीगन्धकंनवसादरम् ॥ यामैकंमर्दयेदम्लैर्भागंकृत्वासमंसमम् ॥ काचकूप्यांविनिःक्षिप्यताञ्चमृद्वस्त्रमुद्रया । विलिप्यपरितोषक्तां मुद्रांदत्त्वाविशोषयेत् ॥ अधः सच्छिद्रपिठरीमध्ये कूपींनिवेशयेत् । पिठरींवालुकापूरैर्भृत्वाचाकूपिकागलम् ॥ निवेश्यचु

लल्यांतदधोवह्निंकुर्याच्छनैःशनैः। तस्मादप्यधिकंकिञ्चित्पावकंज्वालयेत्क्रमात् ॥ एवंद्वादशभिर्यामैम्रियतेरसउत्तमः। स्फोटयेत्स्वाङ्गशीतंतमूर्द्धगंगन्धकंत्यजेत् ॥ अधःस्थंचमृतंसूतंगृह्णीयात्सम्मुमात्रया। यथोचितानुपानेनसर्वकर्मसुयोजयेत् ॥ अथान्यः प्रकारः। अपामार्गस्यवीजानांमूषायुग्मंप्रकल्पयेत्। तत्संपुटेक्षिपेत्सूतंमलपूदुग्धमिश्रितम् ॥ मलपूः काष्ठोदुम्बरिका ॥ द्रोणपुष्पीप्रसूनानि विडङ्गमरिचैदकः। एतच्चूर्णमधश्चोर्द्ध दत्त्वामुद्रांप्रदापयेत् ॥ तद्गोलमाधमेत्सम्यक्मृन्मूषासंपुटेसुधीः। मुद्रांदत्त्वाशोषयित्वाततोगजपुटेपचेत् ॥ एकेनैवपुटेनैवंसूतकंभस्मजायते। तत्प्रयोज्यं यथास्थानेयथामात्रं यथाविधि- ॥ + ॥ --( ** )-- ॥ अथान्यः प्रकारः ॥ काष्ठोदुम्बरिकादुग्धैरसंकिञ्चिद्विमर्दयेत्। तद्दुग्धघृष्टहिङ्गोश्चमूषायुग्मंप्रकल्पयेत् ॥ क्षिप्त्वातत्संपुटेसूतंतच्चमुद्रांप्रदापयेत्। धृत्वा तद्गोलकंप्राज्ञोमृन्मूषासंपुटेधिके ॥ पचेत्गजपुटेतेनसूतकंयातिभस्मताम् ॥ अन्यः प्रकारोपि। नागवल्लीरसैर्घृष्टः कर्कोटीकन्दगर्भितः। मृन्मूषासंपुटेपक्वः सूतोयात्येवभस्मतामिति भावप्रकाशः ॥

पारदण्डः। पुं०. देशविशेषे। सतु० ओड्रदेशैकभागइतिकेचित् ॥

पारदर्शी। त्रि० पारज्ञे ॥ पारंद्रष्टुं शीलंयस्य। णिनिः ॥

पारदारिकः। पुं० परदाररते। परस्त्रीगामिनि ॥ यः परस्त्रीषुनिरतस्तस्यश्रीर्वाकुतोयशः। सचनिन्द्यः पापयुक्तः शश्वत्सर्वसभासुच ॥ परदारान्गच्छति। गच्छतौपरदारादिभ्यइतिठक् ॥

पारदार्य्यम्। न० परदारगमने ॥

पारदृश्वा। त्रि० पारज्ञे ॥ पारमन्तं दृष्टवान् ॥ दृशेःक्वनिप् ॥

पारमार्थिकः। त्रि० परमार्थयुक्ते ॥ मुख्ये ॥ परमार्थादागतः। ठक् ॥

पारमेष्ठ्यम्। न० ब्रह्मपदे ॥

पारम्पर्य्यम्। न० आम्नाये। कुलक्रमे ॥ यस्मिन्देशेयआचारः पारम्पर्यक्रमागतः। तत्रतेनावमन्येत धर्मस्तत्रैवतादृशः इतिविवादभंगार्णवः ॥ परम्परायाआगतःततआगतइत्यण्। चतुर्वर्णादित्वात्ष्यञ् ॥ परम्पराशब्दात्स्वार्थेष्यञ्वा ॥

पारम्पर्योपदेशः। पुं० ऐतिह्ये। उपदेशपरम्परायाम् ॥ पारम्पर्येणउपदेशः ॥ कर्मधारयोवा ॥

पारलौकिकः। त्रि० परलोकसम्बन्धिनि ॥ पारलौकिककार्येषुप्रसुप्ताभृशनास्तिकाः ॥ परलोकेभवः। अध्या

त्मादेष्टत्रिष्यति । अनुशतिकादिः ॥
पारवत : । पुं० कपोते । पारावते ॥
पारशवः । पुं० निषादे ॥ यथा । यंब्रा
ह्मणस्तुशूद्रायांकामादुत्पादयेत्सुत
म् । सपारयन्नेवशवस्तस्मात्पारशवः
स्मृत : ॥ ब्राह्मणात्परिणीतशूद्रा-
सुते ॥ करणेनसमाचाऽस्यवृत्तिर्न्न-
यामनीषिभि : ॥ परस्त्रीतनये ॥ अ
यसि । लोहे ॥ शस्त्रे ॥ परान्शृणा
ति । शॄ० । आङ्परयो : खनिशॄ-
भ्यांडिच्चे त्यु् : । परशुरिव । प्रज्ञाद्य
ण् ॥ परस्त्रियाअपत्यंवा । परस्त्री-
परशुञ्चे ति विदादिषुपाठात्प्रकृतेः
परशुरादेशोऽञ्प्रत्यय : ॥ परशव्य-
स्यविकारे ॥ कंसीयपरशव्ययोर्यञ
ञौलुक्चेत्यञ्यतोलुक्च ॥
पारश्वध : । पुं० परश्वधधारिणि ॥
पारश्वधिक : । पुं० कुठारधारिणि ।
पारश्वधे । परश्वधायुधे ॥ परश्वधः
प्रहरणमस्य । परश्वधाट्ठञ्च ॥
पारसिकः । पुं० देशान्तरे । पारसीके ॥
पारसी । स्त्री० पारसस्यभाषायाम् ॥
पारसदेशभवलेखनादिशिल्पे ॥ त
दारम्भदिनंयथा गणपतिमुहूर्ते ।
ज्येष्ठाश्लेषामघापूर्वारेवतीभरणीद्व
ये । विशाखार्द्रोत्तराषाढशतभेपाप
वासरे ॥ लग्ने स्थिरेसचेन्द्रेचपारसी
मारबीपठेत् । शूद्रइतिशेष : ॥ द्वि
जस्यतदध्ययनाभावात् । योऽनधी-
त्यद्विजोवेदमन्यत्रकुरुतेश्रमम् । स-
जीवन्नेवशूद्रत्वमाशुगच्छतिसान्वय
इतिमनूक्तेः । औशनसादिप्रोक्तमर्थ
शास्त्रमधीयानोयदिसान्वय : शूद्र-
त्वंप्राप्नोतितदापारस्यादिम्लेच्छभा-
षाध्ययनंकुर्वाण : सान्वयोम्लेच्छता
माप्नोतीतिकिंवाच्यम् ॥ अपशब्द-
त्वाच्चद्विजेननपारस्यादिकमध्येयम् ।
म्लेच्छोहवायदपशब्दइतिमहाभाष्या
त् । अपिच । ब्राह्मणेननापशब्दोव
क्तव्य : । भाष्यकारेणतदुच्चारणस्य
म्लेच्छतापादकत्वप्रतिपादनात् । म्ले
च्छाभाभूमेत्यध्येयंव्याकरणमिति-
पस्पशाभाष्यम् ॥
पारसीक : । पुं० अश्वविशेषे । आव-
ट्टजे । पराट्ने ॥ देशविशेषे । पार
सिके ॥ त्रि० । तद्देशोद्भवे ॥ पार-
सीकेदेशविशेषेभव : । कोपधाच्चे-
त्यण् ॥
पारसीकयवानी । स्त्री० खुरासानीअ
जवायन० इ० भा० प्र० द्रव्ये ।
पारसीकयवानीतुयवानीसदृशीगु
णै : । विशेषात्पाचनीरूच्याग्राहि-
णीमादिनीगुरु : ॥
पारसीकवचा । स्त्री० खुरासानीवच०
इ०प्र० वस्तुनि ॥ पारसीकवचाशु
क्लाप्रोक्ताहैमवतीतिसा । हैमवत्यु
दितातद्वच्छूलंहन्तिविशेषत : ॥
पारस्कर : । पुं० देशविशेषे ॥ पारंक

रोति । डुकृञ्० । कृञोहेत्विति कः । पारस्करप्रभृतीतिनिचसंज्ञायामितिसुट् ॥

पारस्त्रैणेय :। त्रि० परभार्यायामुत्पन्ने ॥ परस्त्रियाः अपत्यम् । कल्याण्यादित्वाट्ढक् । इन ङादेशश्च । अनुशतिकादीनांचेत्युभयपदवृद्धि : ॥

पारा । स्त्री० पारिपात्रपर्वतोद्भवनदीविशेषे ॥ पारात्टाप् ॥

पारापार : । पुं० पारावारे । समुद्रे ॥ पारमपारमस्य ॥ न० । तुष्टिःप्रभेदे ॥ अर्जितंधनंराजैकागारिकाग्निजलादिभ्योविनङ्क्ष्यतीतितद्रक्षणेमहदुःखमितिभावयतोविषयोपरमेया तुष्टि : साद्वितीयापारापारमुच्यते० इ० साङ्ख्यविद : ॥

पारायणम् । न० साकल्यवचने ॥ पारगतौ ॥ आदितआरभ्यान्तादविच्छेदेनवेदस्याध्यापने ॥ पारमेयन्तिसकलंप्राप्नुवन्तियेन । अय० । करणेतिल्युट् ० युज्वा ॥ पारस्यायनम्वा । पूर्वपदादितिणत्वम् ॥ समासङ्गे ॥ पुराणपाठे ॥

पारायणिक : । पुं० शिष्ये । छात्रे ॥ पारायणंवर्त्तयति । पारायणंहिवेदाध्यापनम् तच्चगुरुशिष्याभ्यांनिवर्त्यते । अन्यतरासन्निधावध्ययनक्रियायाअनुत्पादात् । तथापिशिष्ये एवपारायणतुरायणेतिठन्प्रत्ययइ

ष्याकर : । तथाहि । यश्चाधीते यश्चपरस्यकरोतिउभौतौवर्त्तयत : । यश्चयजतेयश्चचरुपुरोडाशान्निर्वपति उभौतौवपत : । उभयत्रकस्मान्नभवति । अनभिधानादितिभाष्यम् ॥

पाराशक : । पुं० अश्मनि । पाषाणे । इतिशब्दरत्नावली ॥

पारावत : । पुं० कलरवे । कपोते ॥ पारावतोगुरुस्निग्धोरक्तपित्तानिलापह : । सङ्ग्राहीशीतलस्तज्ज्ञै : कथितोवीर्यवर्द्धन : ॥ यात्रायोगान्तरे ॥ यथा । चन्द्रोदयेगुरुश्चास्तेलग्नेवासुरपूजिते । योग : पारावतोयातु : शुक्रेवालग्नकेन्द्रगे ॥ प्रवलोयदियोगोसौगमनेसर्वसिद्धिद : ॥ गिरौ ॥ मर्कटतिन्दुके ॥ दत्तात्रेयस्यगुरौ ॥ परंजीवमवति । परात्शत्रोरहङ्कारादाज्ञानोपदेशेनवाअवति । अव० । शतृप्रत्यय : । द्वितीयेति पञ्चमीतियोगविभागाद्वासमास : ॥ तस्येदमित्यण् ॥

पारावतपदी । स्त्री० ज्योतिष्मत्याम् । पारावताङ्घ्रौ ॥ काकजङ्घायाम् ॥

पारावताङ्घ्रि : । स्त्री० कटभ्याम् । पण्यायाम् । ज्योतिष्मत्याम् । मालकांगणी० इ० भा० ॥ पारावतइव अङ्घ्रिरस्या : ॥

पारावताङ्घ्रिपिच्छ : । पुं० पारावतान्तरे ॥ यथाहराजनिर्घण्ट : । पारा

वतोन्योवर्गइ शीकामुकोघुल्घुलार व : । पारावताङ्घ्रिपिच्छवर्णेयोग लरवश्चसइति ॥

पारावती । स्त्री० गोपगीते ॥ नदीप्र-भेदे ॥ लवलीफले ॥

पारावार : । पुं० उदन्वति । समुद्रे ॥ न० तटद्वये ॥ पारमावृणोति । वृञ् । कर्मण्यण् ॥ पारावारावस्यस्तइति वा । अर्शआद्यच् ॥

पारावारीण : । त्रि० पारावारगामिनि । पारावारङ्गच्छति० । इत्याद्यर्थेषु । अ रपाराद्विगृहीतादिपरीताच्चेति ख : ॥

पाराशर : । पुं० द्वैपायने । व्यासे ॥ इ तिशब्दरत्नावली ॥ पराशरस्यापत्य-म् । ऋष्यण् ॥ न० । पराशरोक्ते भिक्षुसूत्रे ॥ उपपुराणविशेषे ॥ त्रि० । पराशरसम्बन्धिनि ॥

पाराशरि : । पुं० वेदव्यासे ॥ पराशर-स्यापत्यम् । अतइञ् ॥

पाराशरी । पुं० भिक्षौ । मस्करिणि ॥ पाराशर्येणप्रोक्तंभिक्षुसूत्रमधीते । पाराशर्यशिलालिभ्यांभिक्षुनटसूत्रयो रितिणिनि : ॥

पाराशर्य्य : । पुं० वेदव्यासे । वादरा यणे ॥ पराशरस्यगोत्रापत्यम् । गर्गा दित्वाद्यञ् ० अत्यनन्तरापत्येपिगो त्ररूपाध्यारोपात्प्रत्यय : ॥

पारिकाङ्क्षी । पुं० तपस्विनि ॥ परि काङ्क्षितुंशीलमस्य । काङ्क्षिकाङ् क्षायाम् । सुपीतिणिनि : । पृ० ॥ यद्वा । पारमत्रास्ति । इनि : । पा रिब्रह्मज्ञानंकाङ्क्षति ॥ मस्करिणि इ० हेमचन्द्र : ॥

पारिक्षित : । पुं० अश्वमेधयाजिनि ॥ परितोदुरितंक्षीयतेयेनसपरिक्षित्-अश्वमेध : तद्याजी ॥ जनमेजये ॥

पारिघ : । पुं० यात्रायामलङ्घनीये ॥ यथा । पूर्वादिषुचतुर्दिक्षुसप्तसप्तऽन लर्क्षत : । वायव्याग्नेयदिक्संस्थं-पारिघन्तुनलङ्घयेत् ॥ कृत्तिकातश्च त्वात्सप्तभानिपूर्वस्याम्मघात:सप्त-भानियाम्यायाम्अनुराधात : सप्त-भानिपश्चिमायाम्धनिष्ठात : सप्त-भान्युत्तरस्यांलिख्यानीतिसर्वत्रवाक्य-शेष : । तत्र०वायव्याग्नेयदिगुपनि बद्धरेखापारिघोदण्डस्तंसर्वथानल ङ्घयेदित्यर्थ : ॥ तत्रयवनेश्वर : । प्राचीमुदग्द्वारिभिरत्रयायात्प्राग्-द्वारिकैश्चोडुभिरप्युदीचीम् । तत्रैव याम्यामपराश्रितैर्भैर्याम्याश्रितैश्चाप्य परांप्रयायादिति ॥

पारिघातिक : । पुं० अधुरथे ॥

पारिजात : । पुं० मन्दारे । पारिभद्र-तरौ ॥ सुरद्रुमे ॥ पारिणोब्धेर्जात : ॥ पारमस्यास्ति । अतइनि : । पा-रिपारङ्गतंजातंजन्मास्यवा ॥ पारि-जातोविष्णुपद्या : पारिजातेतिवि-

श्रुतञ्चस्यागमः ॥

पारिजातकः । पुं० सुरतरौ ॥ मन्दारे ॥ पारिजातात्स्वार्थेकः ॥

पारिणामिकः । पुं० परिणामात्मिके ॥

पारिणाय्यम् । न० परिणयलब्धधने ॥ यथा । मातुः पारिणाय्यं स्त्रियो विभजेरन्निति ॥

पारिणाह्यम् । त्रि० गृहोपकरणेशय्यासनकुण्डकटाहादौ ॥ यथा । अर्थस्य सङ्ग्रहेचैनांव्ययेचैवनियोजयेत् । शौचेधर्मेऽन्नपक्त्याञ्चपारिणाह्यस्य चेक्षणे ॥ इतिमानवे ९ ऽध्यायः एनांपत्नीं ॥

पारितथ्या । स्त्री० वालपाश्यायाम् । सीमन्तस्थितायांस्वर्णादिपट्टिकायाम् । बन्दीबेना० इ० भा० । सिंथी० इ० गौ० भा० ॥ परितस्तथाभूतापरितथा । चतुः० स्वार्थेष्यञ् ॥

पारितोषिकः । त्रि० प्रदेये । तुष्टिदाने ॥ परितोषजनकद्रव्ये ॥ परितोषेणलब्धम् । परितोषादागतंवा । शैषिकष्ठक् ॥

पारिपन्थिकः । पुं० चौरे । पन्थानंवर्जयित्वाव्याप्यवातिष्ठति । परिपन्थंहन्तिवा । परिपन्थञ्चतिष्ठतीतिठक् ।

पारिपात्रः । पुं० कुलाचलविशेषे । चित्रकूटे । सुदारौ ॥ इतिहेमचं०

पारिपात्रकः । पुं० पारिपात्रपर्वते ॥

पारिपार्श्विकः । पुं० अनुगे ॥ पार्श्ववर्त्तिनि ॥ पार्श्वे इतिपरिपार्श्वम् । विभक्त्यर्थेऽव्ययीभावः । परिपार्श्वंवर्त्तते । परिमुखंचेतिचकाराट्ठक् ॥ नस्याः पार्श्वस्थे ॥

पारिप्लवः । पुं० नानाविधोपाख्यानसमुदाये । अश्वमेधेकर्मणिजामितापरिहारार्थंपुत्रादि हृतायराज्ञेकथासौष्ठवार्थकथने ॥ मनुर्वैवस्वतोराजाइत्याद्किासाचित्कथा । तस्यांरात्रौपारिप्लव माचक्षीतेतियथा ॥ जलोपरिसञ्चारिणिपक्षिविशेषे ॥ त्रि० । चञ्चले ॥ आकुले ॥ परिप्लवते । प्लुङ्गतौ । अच् । प्रज्ञाद्यण् ॥

पारिभद्रः । पुं० मन्दारे । निम्बतरौ । पारिजातके । पालितामादार० इ० गौ० भा० ॥ पारिभद्रोऽनिलश्लेष्मशोथमेदः क्रमिप्रणुत् ॥ तत्पुष्पंपित्तरोगघ्नंकर्णव्याधिविनाशनम् ॥ निम्बद्रुमे ॥ देवदारुणि ॥ पारमस्यास्ति । अतइनिः ॥ पारिपारङ्गतंभद्रमस्य ॥ परितोभद्रमस्येतिवा । प्रज्ञाद्यण् ॥

पारिभद्रकः । पुं० भद्रदारुणि । द्रुकिलिमे । देवदारुणि ॥ निम्बवृक्षे ॥ न० । कुष्ठौषधौ ॥

पारिभाव्यम् । न० कुष्टौषधौ व्याप्ये । पाकलेपरिभावेसाधुः ॥ [illegible]साधुरितियत् स्वार्थेऽण् ॥ पारिषुतोयाश्रयेषुभवति । भव्यगेयेतिसाधुरितिस्वामी ॥ परि

भुवोभावे । जामिनी इ० भा० ॥ यथा । साक्षित्वं पारिभाव्यञ्चदानं-ग्रहणमेवच । विभक्ताभ्रातर : कुर्यु-र्नाविभक्ता:परस्परमितिदायभाग:
पारिभाषिकम् । त्रि० आधुनिकसङ्के-तेनार्थबोधकेपदे ॥
पारिमाण्डल्यम् । न० परमाणुमात्र-वृत्तिपरिमाणे ॥ परमाणुगुणविशेषे ॥
पारिमुखिक: । त्रि० सेवके ॥ अपपरी त्यव्ययीभावेपरिमुखंवर्त्तते । परि-मुखंचेतिठक् । स्वामिनोमुखंवर्ज-यित्वाय : सेवकोवर्त्तते । सएवमु-च्यते । यदातुसर्वतोभावेपरिशब्द: प्रादिसमासश्चतदायतोयत: स्वामि नोमुखंततस्ततोयोवर्त्ततेसोर्थोबो-ध्य : । एवंपारिपार्श्विकेप्यूह्यम् ॥
पारियात्र: । पुं० पारिपात्रगिरौ । चि त्रकूटे ॥ परितोयात्रयाहृश्यते । शेष इत्यण् ॥ पर्वतविशेषे ॥
पारियात्रक : । पुं० पारियात्रे ॥ स्वा र्थेकन्
पारिरक्षक : । पुं० मस्करिणि । ताप से ॥
पारिवर्ह : । पुं० न० विवाहकालप्रदे येवरवध्वो: प्रीतिदेये ॥
पारिश : । पुं० गर्दभाण्डे । कन्दरा-ले । कपीतने । पलाशपीपलइति-गजगण्ड० इतिचगौ० भा० प्र० वचे ॥ पारिशोदुर्जर : स्निग्ध : कृ मिशुक्रकफप्रद : । फलेम्लमधुरोमू ले कषाय : स्वादुमज्जक : ॥
पारिषद : । पुं० सभ्ये ॥ शिवानुचरे । परिषदिसभायांसाधु: परिषदो ण्यइत्यत्रपरिषदइतियोगविभागात्स: ॥ उदीच्यग्रामविशेषोत्पन्ने ॥ परिष दिभव: । प्रस्थोत्तरपदपलद्यादिको पधादण् ॥ त्रि० परिषत्सम्बन्धिनि परिषदइदम् । यथाधूर्युपरिषदश्चे-त्यञ् ॥
पारिषद्य : । पुं० सभ्ये । सभासदि । सामाजिके ॥ शिवानुचरे ॥ परिष दिसाधु: । परिषदंसमवैतिवा । प रिषदोण्यइतिण्य : ॥
पारिहारिक: । त्रि० परिहारकर्त्तरि॥
पारिहार्य: । पुं० आवापके । कटके वलये । प्रकोष्ठाभरणे ॥ परिह्रियते । ह्रञ्० । ऋहलोर्ण्यत् । परिहार्य एव । प्रज्ञाद्यण् ॥ यद्वा । यञन्ता-च्चतुर्वर्णादित्वात्स्वार्थेष्यञ्। न० प रिहारत्वे ॥
पारी । स्त्री० पूरे । जलसमूहे ॥ कर्क र्याम् । सनालजलपात्रे । भारी इ० भा० ॥ दन्तिन: पादरज्जौ ॥ परा गे ॥ पाल्याम् । दोहनपात्रे ॥ पानपात्रे ॥ पारयति० प्रार्यतेवा । पृपूर्त्तौ । ण्वु० । पचाद्यच्पचन्वा । ङीप् ॥
पारीक्षित : । पुं० परीक्षितनृपे ॥ परी

क्षितनये । जनमेजये ॥ न० । परी क्षितकथिते श्रीभागवते ॥

पारीण: । त्रि० पारगामिनि ॥ शैषिक : खः ॥ पारङ्गामी । अवारपारेतिखोवा ॥

पारीन्द्र : । पुं० सिंहे । अजगरसर्पे ॥

पारीरण: । पुं० कमठे ॥ दण्डे ॥ पटशाटके ॥

पारु : । पुं० वह्नौ ॥ सूर्ये ॥ पिवति । पा० । वा० । पिवतेर्रुः ॥

पारुष्य: । पुं० गीष्पतौ । बृहस्पतौ ॥ न० । परुषत्वे । अप्रियाभिधाने ॥ प्रत्यक्षरूक्षवचनशीलत्वे ॥ दुर्वाक्ये ॥ संक्रन्दनवने ॥ परुषोनिष्ठुरभाषी । तस्यभाव: । ब्राह्मणादित्वात्ष्यञ् ॥ अगुरुणि ॥

पारेरक : । पुं० खड्गे ॥ इतिशब्दमाला ॥

पार्घट : । पुं० पांशौ ॥ इतिहाराव ली ॥

पार्थ : । पुं० पृथातनये । पृथयादेवप्रसादलब्धे युधिष्ठिरादौ ॥ पृथायाअपत्यम् । शिवाद्यण् ॥ अर्जुनद्रुमे ॥ राज्ञि ॥

पार्थक्यम् । न० पृथक्त्वे ॥ भावेष्यञ्॥

पार्थनगरम् । न० इन्द्रप्रस्थे ॥

पार्थवम् । न० पृथुतायाम् ॥

पार्थिव: । पुं० क्ष्माभृति । नृपे । भूपे ॥ वत्सरविशेषे ॥ बहुशस्यानिजायन्ते सर्वदेशेसुलोचने । सौराष्ट्रेलाटदेशेचपार्थिवेनात्रसंशय : ॥ १९ ॥ शरावे ॥ न० । तगरपुष्पे ॥ त्रि० पृथिवीसमवायिकारणके । भूमिविकारे । पृथिव्याविकृतौ ॥ पृथिव्याईश्वर : तत्रविदितोवा । सर्वभूमिपृथिवीभ्यामणञाविष्यनुवर्त्तमानेतस्येश्वर : तत्रविदितइतिचेत्यञ् ॥ पृथिव्याअयमितिप्राग्दीव्यतीयेष्वर्थेषुपृथिव्याञाञावितिञाञौ । तेनञे । स्त्रियांपार्थिवा अञिपार्थिवीतिबोध्यम् ॥ पृथिव्यानिमित्तंसंयोगउत्पातोवा । सर्वभूमीत्यञ् ॥

पार्थिवव्रतम् । न० राज्ञोव्रतविशेषे ॥ यथासर्वाणिभूतानिधराधारयतेसमम् तथासर्वाणिभूतानिविभ्रत : पार्थिवंव्रतम् ॥

पार्थिवी । स्त्री० सीतायाम् । जनकजायाम् ॥ अञन्तत्वाट्टिड्ढेतिङीप्॥

पार्पर : । पुं० भक्तसिक्थे ॥ कीनाशे । यमे ॥ राजयक्ष्मणि ॥ जराटे ॥ नीपकेसरे । कदम्बकिञ्जल्के ॥ गदान्तरे ॥ भस्मनि ॥

पार्याप्तिक : । त्रि० पर्याप्तवादिनि ॥ पर्याप्तमाह । ठक् ॥

पार्वणम् । न० श्राद्धविशेषे ॥ यथा । अमावास्यांयत्क्रियतेतत्पार्वणमुदाहृतम् । क्रियतेवापर्वणियत्तत् पार्वणमितिस्थिति:॥पार्वणपदेनगोष्ठी

आग्रान्यपिराग्रन्तेतेषांपार्वणविधिना विधानत् । यद्यपिपर्वणिभवमिति-व्युत्पत्तिस्तथापिदेवश्राद्धपूर्वकषट्पुरुषश्राद्धंपार्वणमितिबोध्यंस्मृत्यनुरोधात् ॥ पर्वकर्म्मणि । पुं॰ मृगविशेषे ॥इतिशब्दचन्द्रिका ॥

पार्वत : । पुं॰ महानिम्बे । बकायन इतिडिकइतिच भाषा ॥ त्रि॰ पर्वतोत्पन्नफलादौ ॥ पर्वतेभव : । विभाषामनुष्यइतिपक्षेण् ॥

पार्वती । स्त्री॰ अपर्णायाम् । दुर्गायाम् । मृडान्याम् ॥ शल्लक्याम् ॥ गोपालकन्यकायाम् ॥ सौराष्ट्रमृत्तिकायाम् ॥ धातक्याम् ॥ सैंहल्याम् ॥ क्षुद्रपाषाणभेदायाम् ॥ जीवन्याम् ॥ अतस्याम् ॥ द्रौपद्याम् ॥ पर्वतस्येयम् । तस्येदमित्यण् ॥ अपत्यार्थे तुअपवादित्वादिञ्स्यात् । इतोमनुष्ये तिनङीष् । मनुष्यजातिवाचित्वाभावात् । क्वचिदपवादविषयेप्युत्सर्गोभिनिविशत इतिवासमाधेयम् ॥

पार्वतीनन्दन : । पुं॰ स्कन्दे । कार्त्तिकेये ॥ पार्वत्यानन्दन : ॥

पार्वतीपति : । पुं॰ सदाशिवे ॥ पार्वत्या : पति : ॥

पार्वतीय : । पुं॰ अक्षोटे ॥ त्रि॰ गणविशेषे ॥ पर्वतीयस्यायम् । कान्तादण् । असरूपत्वाच्छैषिकाच्छैषिको नेतिननिषेध : ॥ यथा ॥ तमजन्यंरुघोर्घोरंपार्वतीयैर्गणैरभूत्इतिरघु: ॥

पार्वतीयकुमार : । पुं॰ पार्वतीपुत्रे ॥

पार्वबेयम् । न॰ सौबीराञ्जने ॥ पुं॰ सुवर्चलायाम् । सूर्यावर्त्ते । हुलहुलइतिप्र॰शाके ॥

पार्श्व : । पुं॰ वृत्तार्हद्विशेषे ॥ न॰ । कक्षाऽधोभागे ॥ चक्रोपान्ते ॥ पर्शुगणे ॥ अन्तिके ॥ पर्शुनांसमूह : । पार्श्वाणम् । सितिचेतिपदत्त्वाद्गस्वाभावादोर्गुणेन ॥ यद्वा । स्पृश्यते । स्पृश॰ । स्पृशे : श्वणशुनौपृचेति-श्वण् णित्त्वाद्वृद्धि : ॥ कटिरुपरिचतुरङ्गुलेभागे ॥ यथा । मांसलैर्मृदुभि : पार्श्वैर्दक्षिणावर्त्तरोमभि: । नराभूम्यधिपा ज्ञेयाविपरीतै : सुदु : खिताइति ॥

पार्श्वक : । त्रि॰ शाठ्येनवित्तान्वेषिणि । कौसतिके ॥ कुत्स्याविभान्वेषीपार्श्वक : सन्धिजीवकाइ॰-हे॰ ॥ अनृजुरुपाय : पार्श्वम् । तेनार्थानन्विच्छति । पार्श्वमान्विच्छतीतिकन्

पार्श्वग : । त्रि॰ समीपस्थेपुरुषादौ ॥

पार्श्वगत : । त्रि॰ समीपस्थे

पार्श्वत : । अ॰ पार्श्वयोरित्यर्थे ॥ आद्यादिभ्यउपसङ्ख्यानमितितसि : ॥

पार्श्वतीय : । त्रि॰ पार्श्वतोजाता-

द्रौ ॥ मुखपार्श्वतसोर्लोपश्चेतिफ्क: ॥
पार्श्वपरिवर्त्तनम् । न० भाद्रशुक्लैका-
दश्यांश्रीहरे : पार्श्वपरिवर्त्तनोत्स-
वे ॥
पार्श्वभाग: । पुं० पक्षभागे ॥ पार्श्व-
स्यपार्श्वमेववाभाग ॥
पार्श्वशूल : । पुं० न० शूलरोगविशे-
षे ॥ तस्यौषधंयथा । शतपुष्पादेव-
दारुशालपर्णीवचागुरु । कुष्ठंमांसी-
सैन्धवस्वपलमेकंपुनर्नवा ॥ पामेन-
स्ये तथाभ्यङ्गेतैलमेतत्प्रदापयेत् । ह्र
च्छूलंपार्श्वशूलञ्चगण्डमालांचनाश-
येत्इतिगारुडे १८८ अध्याय: ॥
पार्श्वस्थ : । पुं० समीपस्थितनटे ॥
त्रि० पार्श्वस्थिते ॥ पर्यन्तस्थे ॥
पार्श्वास्थि । न० पर्शुकायाम् । कक्षा
धोभागस्थितेसस्थ्नि ॥
पार्श्वोदरप्रिय: । पुं० कर्कटे ॥ इ० हे० ॥
पार्षती । स्त्री० द्रौपद्याम् ॥ सल्लक्यां-
म् ॥ जीवन्याम् ॥ गौर्याम् ॥ इतिहे
मचन्द्र : ॥
पार्षद : । पुं० शिवानुचरे ॥ त्रि०
सभ्ये ॥ पर्षदिसाधु : । पर्षदोण्य-
इतिपाठेपर्षद्इतियोगविभागात्सा: ॥
पार्षद्य : । पुं० शिवानुचरे ॥ त्रि० स-
भ्ये ॥ पर्षदिसाधु : । पर्षदोण्य: ०
इ० ण्य : ॥
पार्ष्णि : । पुं० पादमूले । पादपश्चाद्भा-
गे । गुल्फाधोभागे । एडी० इ०
भा० । जिगीषायाम् ॥ पुं० स्त्री०-
सैन्यपृष्ठे ॥ पादमूले ॥ पृष्ठे ॥ स्त्री०
उन्मत्तस्त्रियाम् ॥ कुम्भ्याम् ॥ पर्ष
ति० पृष्यतेऽनेनवा । पृषुसेचने ।
घृणिपृश्निपार्ष्णीतिसाधु : ॥ स्पृश-
न्त्यनयावा । पूर्ववत्साधु : ॥
पार्ष्णिग्राह : । पुं० पृष्ठत : शत्रौ ।
जिगीषो : पृष्ठभागस्थितेशत्रुविशे-
षेराज्ञि । विजिगीषोररिंप्रतिनि-
र्यातस्यय : पृष्ठवत्तीनृपतिर्देशाक्रम-
णाद्याचरतिसपार्ष्णिग्राहइत्यर्थ: ॥
पार्ष्णिम्पश्चात्पदंगृह्णाति । कर्म-
ण्यण् ॥ गजपार्श्वरक्षके ॥
पार्ष्णित्रम् । न० पश्चाद्रक्षकसेनायाम् ॥
पाल: । पुं० गवादिपालके ॥ पुं० रा-
ज्ञि ॥ पतद्ग्रहे । इ० हे० चं० ॥
पालक: । पुं० मुनिभेदे ॥ घोटकरक्षके ॥
न० चित्रकवृक्षे ॥ त्रि० पालनक-
र्त्तरि ॥ पालयति । पालरक्षणे ।
ण्वुल् ॥
पालकाप्य : । पुं० मुनिविशेषे । करे-
णुभुवि ॥ धन्वन्तरी ॥ इतित्रिका-
ण्डशेष : ॥
पालकाव्य : । पुं० गजशास्त्रकृतिमह-
र्षिविशेषे ॥
पालघ्न : । पुं० जलजतृणभेदे । छत्रा-
याम् ॥ पालंक्षेत्रंहन्ति । अमनुष्ये-
तिटक् ॥
पालङ्क : । पुं० शल्लक्याम् ॥ पालङ्क्इ०
प्र० शाके ॥ बाज० इ० प्र० खगे ॥

पालङ्की । स्त्री० कुन्दुरुनामगन्धद्रव्ये॥
पालङ्ङ्ग०भा०प्र०शा० ॥
पालङ्क्यम् । न० पालङ्० इ० प्र० शाके । मधुरायाम् । क्षुरपत्रिकायाम् ॥ अस्यगुणा : । ईषत्कटुत्वंमधुरत्वम् पथ्यत्वं शीतलत्वम् रक्तपित्तहरत्वम् ग्राहित्वम्परमतर्पणश्चेति० राज० नि० ॥
पालङ्क्या । स्त्री० कुन्दुरौ । कुन्दुरखोटीतिगौ०भा० ॥ पालङ्कशाकेपालङ्क्या वास्तुकाकाराक्कुरिकाचीरितच्छदा ॥ पालङ्क्यावातलाशीताश्लेष्मलाभेदिनीगुरु: । विष्टम्भिनीमदश्वासपित्तरक्तविषापहा ॥ पालङ्क्यंदलितंशाकं तिलतैलेविपाचितम् । अम्लद्रव्यसमाकीर्णंहिङ्गुसैंधवसंयुतम् ॥ पालनम् । पाल० । सं० क्षिप् । पाल्यक्ष्यते । च क्षपदेलक्षणेच । अदन्त: । अचोयत् ॥
पालनम् । न० रक्षणे ॥ यथा । नभार्यान्ताडयेत्क्वापिमातृवत्पालयेत्सदा । नत्यजेद्घोरकष्टे पियदिसाध्वीपतिव्रतेति श्रीमहानिर्वाणतन्त्रम् ॥ पाल्यतेऽनेन । पाल० । करणाधिकरणयोश्चेतिल्युट् ॥ सद्य : प्रसूताया : गोदुग्धे ॥
पालनी । स्त्री० प्रतिष्ठापिकायाम् ॥
पालाश : । पुं० हरिद्वर्णे ॥ पलाशस्य पत्रस्यायम् । अण् ॥ पलाशदण्डादौ ॥ पलाशस्यविकार : । पलाशादिभ्योवेत्यञ् ॥ न० । तमालपत्रे । तेजपात० इ० भा ॥ त्रि० हरिद्वर्णवति ॥ पलाशवृक्षसम्बन्धिनि ॥
पालाशषण्ड : । पुं० मगधदेशे ॥ पलाशसमूहे ॥
पालाशी । स्त्री० मत्स्यविशेषे ॥ यथा । पालाशिखण्डं तिलतैलयुक्तं विपाचितंसैन्धवकासमर्दै : । हिंग्वार्द्रधात्रीफलचूर्णपूर्णंनवंनवंरोचनमातनोति ॥ पालाशीवलदावृष्यावातघ्नीपित्तकृत्सरा । गुर्वीकफकरीचोष्णामेद : शुक्रविवर्द्धिनीति ॥
पालि : । स्त्री० कर्णलताग्रे ॥ अश्रौ ॥ पङ्क्तौ ॥ अङ्के ॥ प्रभेदे ॥ क्षत्रादिदेये ॥ पालयतिपाल्यतेवा । पाल० । ण्यन्त : । अचइ: ॥ पाल्याम् ॥
पालिका । स्त्री० कुन्तलिकायाम् । दध्यादिच्छेदन्याम् ॥ अश्रौ ॥ कर्णपत्रे ॥ पालयति । पाल० । ण्वुल् ॥
पालित : । त्रि० रक्षिते ॥
पालिन्द : । पुं० कुन्दुरुके ॥ पालयति । पाल । वा० किन्दच् ॥
पालिन्दी । स्त्री० कृष्णत्रिवृतायाम् । श्यामायाम् ॥ गौरादित्वान्ङीष् ॥
पाली । स्त्री० यूकायाम् ॥ सश्मश्रुयोषिति ॥ प्रान्ते ॥ सेतौ ॥ कल्पितभोजने ॥ प्रशंसायाम् ॥ कर्णलतयो: ॥ उत्सङ्गे ॥ प्रस्थे ॥ चिह्ने ॥ वाप्याम् ॥ कृदिकारादितिङीष् ॥

ग्रीष्याम् ॥ स्थाल्याम् ॥

पाल्य : । त्रि० रक्षणीये ॥

पाल्वलम् । न० पल्वलोदके ॥ यथा । अल्पंसर : पल्वलंस्यादाद्यचन्द्रर्क्षगेरवौ । नतिष्ठतिजलंकिञ्चित्तदल्पं वारिपाल्वलम् ॥ पाल्वलंवार्यभिष्यन्दिगुरुत्वादुत्रिदोषकृत् ॥

पावक : । पुं० अष्टानांवसूनांमध्येभगवद्विभूतिविशेषे ॥ अग्नौ ॥ सदाचारे ॥ वह्निमन्थे ॥ चित्रके ॥ भल्लातके ॥ विडङ्गे ॥ शोधयितृनरे ॥ रक्तचित्रके ॥ कुसुम्भे ॥ वैद्युताग्नौ ॥ यथा । पावक : पवमानश्चशुचिरग्निस्त्रतित्रय : । निर्मथ्य : पवमान:स्याद्वैद्युत:पावक:स्मृत : ॥ यश्चासौतपतेसूर्य : शुचिरग्निस्त्वसौस्मृत : ॥ इतिकौर्मे१२८ध्याय : ॥ पुनाति । पूञ् । एवुल् ॥ पचिविषि० ॥

पावकारणि : । पुं० अग्निमन्थे ॥

पावकि : । पुं० कार्त्तिकेये ॥

पावन : । पुं० द्वैपायने । व्यासे ॥ पावके ॥ सभ्येग्नौ ॥ य : शीतापनोदनाद्यऽर्थंबहुषुप्रदेशेष्वपिविधीयतेससभ्योग्नि : ॥ पीतभृङ्गराजे ॥ सिह्लके ॥ न० प्रायश्चित्ते । पापक्षयकरे ॥ जले ॥ कृच्छ्रे ॥ गोमये ॥ रुद्राक्षे ॥ कुष्ठौषधौ ॥ चित्रके अध्यासे ॥ त्रि० ॥ पवित्रे पूते । पावयितरि । पा० गङ्गास्नानगायत्रीजपादौ ॥ पावयति । कर्त्तरिल्युट् ॥

पावनध्वनि : । पुं० शङ्खे ॥ पावनो ध्वनिर्यस्य ॥

पावनी । स्त्री० हरीतक्याम् ॥ तुलस्याम् ॥ गवि ॥ गङ्गायाम् ॥

पावित : । त्रि० पवित्रीकृते ॥

पाश : । पुं० मृगपक्ष्यादिबन्धने ॥ केशादिपूर्व : सङ्घाते ॥ कर्णपूर्वक : शोभनार्थे ॥ छत्रादिपूर्वोनिन्दार्थे । बन्धनहेतौ । पाशजाले । देहेन्द्रियादिसंयोगवियोगलक्षणे० अनवरतजन्ममरणजरारोगाद्यनर्थव्राते ॥ अविद्यास्मितारागद्वेषाभिनिवेशेषु ॥ घृणादिषु ॥ यथा । घृणालज्जा भयंशङ्का जुगुप्साचेतिपञ्चमी । कुलंशीलतथाजातिरष्टौपाशा : प्रकीर्त्तिता: ॥ पाश्यतेबध्यतेयेनवा । पश बन्धने । चु० । घञ् । घोवा ॥

पाशक : । पुं० अक्षे । देवने । पासा० । इतिभा० ॥ पाशयति० पशयतिवा । पश० ॥ एवुल्० कुन्वा ॥

पाशजालम् । न० प्राबल्यादौ ॥ प्राबतीशवलिकर्ममायाकार्यंचतुर्विधम् । पाशजालंसमासेनधर्मानाम्नैवकीर्त्तिता : ॥ आत्मनांसहजसामर्थ्यप्रतिबन्धकत्वात् आशानांजालमिव जालम् ॥

पाशपाणि : । पुं० वरुणे । अप्पतौ ॥
पाश : पाणौयस्य ॥
पाशवपालनम् । न० घासे ॥
पाशित : । त्रि० पाशयुक्ते । बद्धे ॥
पाशी । पुं० वरुणे । प्रचेतसि ॥ व्याधे ॥ यमे ॥ त्रि० पाशधरे ॥ पाशोऽस्यास्ति । इनि : ॥
पाशीकृत : । त्रि० पाशबद्धे ॥
पाशुपत : । पुं० शिवमल्याम् । एकाष्ठीले । वकपुष्पे ॥ पशुपत्यधिदैवते ॥ पशुपतिभक्ते ॥ पशुपतिपाशात्मकपदार्थत्रयवादिनिशैवे ॥ पशुपतेरयम् । तत्प्रियत्वात्तस्येदमित्यण् ॥ पशुपतिर्दैवतास्यवा । सास्यदेवतेत्यर्थेऽश्वपत्यादित्वादण् ॥
पाशुपतव्रतम् । न० पशुपतिदेवताकेवह्निपुराणोक्तेव्रतविशेषे ॥ यथापशुपतिर्नित्यंहत्वासर्वमिदंजगत् । न लिप्यतेपुन : सोपियोनित्यं व्रतमाचरेत् ॥
पाशुपतास्त्रम् । न० पशुपते: शूलाग्रे ॥
पाशुपाल्यम् । न० वैश्यवृत्तिविशेषे । गोरक्ष्ये ॥ पशून्गोमहिष्यादीन्पालयति । पाल० । कर्मण्यण् । तस्यकर्म्म भावोवा । ष्यञ् ॥
पाश्चात्य : । त्रि० अन्त्ये । चरमे ॥ पश्चाद्भव : । दक्षिणापश्चात्पुरसस्त्यक् ॥ पश्चिमदेशजाते ॥
पाश्चात्याकरसम्भवम् । न० । रोमके । रामलवणे । सांभर० इ० भा० ॥
पाश्या । स्त्री० पाशवृन्दे ॥ पाशानांसमूह : । पाशादिभ्योय : ॥
पाषक : । पुं० पादाभरणविशेषे । पाषुली० गौड़० भा० ॥
पाषण्ड : । पुं० बौद्धक्षपणकादौ वेदविरोधिनि । वेदवाह्यरक्तपटमौण्ड्यादिव्रतचर्याशालिनि । सर्वलिङ्गिनि ॥ त्यजपाखण्डसंसर्गंसङ्गंभजसतांसदा । पापंसनोतिसनतिवा । षणुदाने । षणसम्भक्तौवा । अमन्ताड्ड : । पृषोदरादि : ॥
पाषण्डक : । पुं० पाषण्डे ॥
पाषण्डी । पुं० पाषण्डे ॥ वेदवाह्यरक्तपटमौण्ड्यादिव्रतचर्यापाखण्डम् । तदस्यास्ति । इनि : ॥ तस्मात्पाषण्डिभि : पापै रालापंस्पर्शनंत्यजेत् । विशेषत : क्रियाकालेयज्ञादौचापिदीक्षित : ॥ क्रियाहानिर्गृहेयस्यमासमेकंप्रजायते । तस्यावलोकनात्सूर्यंपश्येतमतिमान्नर: ॥ किंपुनर्यैस्तुसन्त्यक्तात्रयीसर्वात्मनाद्विज । पाषण्डभोजिभि : पापैर्वेदवादविरोधिभि : ॥ पाषण्डिनो विकर्मस्थान्वैडालव्रतिकान्शठान् । हैतुकान्वकवृत्तींश्चवाङ्मात्रेणापिनार्चयेत् ॥ दूरापास्तस्तुसंसर्ग : सहास्यावापिपापिभि : । पाषण्डिभिर्दुराचारैस्तस्मात्तान्परिवर्ज्जयेत् ॥

॥ एतेनग्नास्तवाख्याताहष्यथाश्मान्तो पघातका: । एषांमनभाषणात्पुंसां दिनपुण्यंविनश्यतीत्यादिपाद्मोत्त रखण्डम् ॥

पाषाण : । पुं० प्रस्तरे । ग्रावणि । उपले ॥ पिनष्टि ; पिष्लृसञ्चूर्णने । बाहुलकादानच् । पृ० । मूर्द्धन्य : ष : । पषत्यनेनवापषवा धेयन्यच । हलश्चेतिघञ् । अणाति । अण्० । अच् । पाषश्चासौ अणश्च ॥

पाषाणदारक : । पुं० टङ्के । टांकी इतिभा० । पाषाणस्यदारक : ॥

पाषाणदारण : । पुं० टङ्क ॥ पाषाणो दार्यतेऽनेन । दॄविदारणे । ण्यन्त : । ल्युट् ॥

पाषाणभेद : । पुं० अश्मभेदे ॥

पाषाणभेदन : । पुं० हाथाजुडी०इ० गौ० भा० प्रसिद्धे । वृक्षविशेषे । अश्मघ्ने । शिलाभेदे । पाषाणभेदइतिभाषा ॥ पाषाणभेदनोश्मघ्नो गिरिभिद्भिन्नयोजनी । अश्मभेदोहिमस्तिक्त : कषायोवस्तिशोधन : ॥ भेदनोहन्तिदोषार्शो गुल्मकृच्छ्राश्म हृद्रुज : । योनिरोगान् प्रमेहांश्च प्लीहशूलव्रणानिचेतिभावमिश्र : ॥

पाषाणभेदी । पुं० अश्मभेदे । पत्थरचूर० इतिभाषा ॥

पाषाणमाक्षिकम् । न० स्वर्णमाक्षिके ॥

पाषाणी । स्त्री० वटखरा० इ० प्र० क्षुद्रपाषाणे । पृषाकरायां ॥

पिक : । पुं० कोकिले । वनप्रिये ॥ अपिकायति । कैशब्दे । आतश्चोपसर्गेक : । वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयो : ॥

पिकप्रिय : । पुं० आम्रे । पिकानां प्रिय : ॥

पिकप्रिया । स्त्री० महाजम्ब्वाम् ॥

पिकबन्धु : । पुं० आम्रवृक्षे ॥ पिकानांबन्धुरिव ॥

पिकराग : । पुं० आम्रवृक्षे ॥

पिकवल्लभ : । पुं० आम्रवृक्षे ॥ पिकानांवल्लभ : ॥

पिकाक्ष : । पुं० रोचन्यां ॥

पिकाङ्ग : । पुं० खगान्तरे ॥

पिकानन्द : । पुं० वसन्तकाले ॥ पिकानामानन्दोयस्मिन् ॥

पिकी । स्त्री० कोकिलस्त्रियाम् । कोकिलायां ॥

पिकेक्षण : । त्रि० कोकिलचक्षुस्तुल्यचक्षुर्युक्ते ॥

पिकेक्षणा । स्त्री० कोकिलाक्षे ॥

पिक्क : । पुं हस्तिशिशौ ॥ इ० शब्दमाला ॥

पिङ्ग : । पुं० पिशङ्गवर्णे ॥ मूषिके ॥ न० । वलाके ॥ हरिताले ॥ त्रि० । पिङ्गलवर्णवति ॥ पिञ्जति । पिजिवर्णे । अच् । न्यङ्

क्रादि : ॥

पिङ्गकपिशा । स्त्री० तैलपायिकायाम् ॥

पिङ्गचचु : । पुं० कुंभीरे ॥

पिङ्गजट : । पुं० शिवे ॥

पिङ्गतीर्थम् । न० तीर्थविशेषे ॥

पिङ्गल : । पुं० नागविशेषे ॥ रुद्रे ॥ चण्डांशो : पारिपार्श्विके ॥ निधिप्रभेदे ॥ कपौ ॥ अग्नौ ॥ मुनिविशेषे ॥ नकुले ॥ स्थावरविषविशेषे ॥ चुद्रोलूके ॥ वत्सरविशेषे ॥ देशभङ्गोथदुर्भिचंसमासात् कथयाम्यहम् । पिङ्गलेचारुपद्माचिदुर्भिचंनर्मदातटे ॥ पिङ्गलनागाचार्यकृतप्राकृतच्छन्दोग्रन्थविशेषे ॥ नीलपीतमिश्रितवर्णे ॥ तत्पर्याया : यथा । कडार : कपिल : पिङ्ग : पिशङ्ग : कद्रु : । केचिदत्रद्वयंद्वयंपर्यायमाहु : अत्र नीलपीत : कपिल : । रोचनाभ : पिशङ्ग : । कनकपिङ्गल : कद्रु: ॥ पिशङ्गोरोचनापांडु : कद्रु : कनकपिङ्गल : ॥ इतिनाममाला ॥ पिङ्गोदीपशिखाभ : स्यात्पिशङ्ग : पद्मधूलिवत् । पीतनीलहरिद्रक्त : कडारस्तृणवह्निवत् ॥ त्रि० । तद्वर्णविशिष्टे ॥ सन्ध्यातपवर्णमवद्वावर्णविशेष : कपिल : इत्यपिव्यास्यातारमाहु : ॥ न० । पित्तले ॥ पिङ्गति । पिजिवर्णे । वृषादित्वात्कलच् । न्यङ्क्वादित्वात् कुत्वम् ॥ यद्वा ॥ पिङ्गोवर्णोऽस्यास्ति । सिध्मादित्वात्लच् ॥ पिङ्गलोवर्णोऽस्यास्ति । अर्शआद्यच् ॥

पिङ्गललोहम् । न० पित्तले ॥ इ० रा० ॥

पिङ्गला । स्त्री० वामनाख्यदचिणदिग्गजस्यहस्तिन्याम् ॥ कुमुदस्यकरिण्याम् ॥ वेश्याविशेषे ॥ यथा । आशाहिपरमंदु:खं नैराश्यं परमं सुखम् । यथासंछिद्यकान्ताशांसुखंसुष्वापपिङ्गलेति श्रीभागवतम् ॥ कर्णिकायाम् ॥ पचिविशेषे ॥ राजरीत्याम् ॥ शिंशपायाम् ॥ ज्योतिष्मत्याम् ॥ नाड़ीविशेषे ॥ दचिणागडाध : स्याधनुर्वक्रा दचिणनासान्तंगतायानाड़ीसापिङ्गलेत्युच्यते ॥

पिङ्गलिका । स्त्री० वलाकायाम् ॥

पिङ्गसार : । पुं० हरिताले ॥ इ० रा० ॥

पिङ्गस्फटिक : । पुं० गोमेदमणौ ॥

पिङ्गा । स्त्री० गोरोचनायाम् ॥ हिङ्गुनालिकायाम् । रामठ्याम् ॥ चण्डिकायाम् । उमायाम् ॥ वंशरोचनायामिति रा० नि० ॥ हरिद्रायाम् । इति श० चं ॥

पिङ्गाच : । पुं० शिवे ॥ त्रि० पिंगलनेत्रे ॥ पिङ्गेअचिणीयस्य । वहुव्रीहाविति षच् ॥

पिङ्गाश : । पुं० पल्लीपतौ ॥ मत्स्यवि

शेषे। पाङ्गाश० इ० गौ० भा० ॥ न० आत्यस्वर्णे ॥

पिङ्गाशी। स्त्री० नालिकायाम् ॥ इ० हे० चं० ॥ नीलिकायामिति मेदिनिकरः ॥

पिङ्गास्य :। पुं० पिङ्गाशमत्स्ये ॥ त्रि० पिङ्गलवर्णमुखविशिष्टे ॥

पिङ्गी। स्त्री० शमीवृक्षे ॥

पिङ्गेक्षण :। पुं० शिवे ॥

पिङ्गोग्रज :। पुं० रवेः पार्श्वगान्तरे॥

पिचण्ड :। पुं० उदरे ॥ पशोरवयवे ॥ अपिचमत्स्यन्नम्। चमु०। अमन्ताड्डः। वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः॥ अपिचण्डातेऽनेन हेतुनावा। चण्डिकोपे। पुंसीति घोवा ॥

पिचण्डिल :। त्रि० तुन्दिले ॥ अतिशयितंपिचण्डमुदरमस्य। तुन्दादित्वादिलच् ॥

पिचव्य :। पुं० कार्पासे ॥ इ० हे० ॥

पिचिण्ड :। पुं० पिचण्डार्थे ॥ पृ०॥

पिचिण्डिका। स्त्री० पिण्डिकायाम्। जङ्घापश्चिमभागे। पिँडली० इति भाषा० ॥

पिचिण्डिल :। त्रि० तुन्दिले। बृहत्कुक्षौ ॥ अतिशयितंपिचिण्डमुदरमस्य। तुन्दादित्वादिलच् ॥

पिचु :। पुं० निर्बीजकार्पासे। तुले। कुष्ठभेदे ॥ कर्षे ॥ असुरविशेषे ॥ भैरवे ॥ सस्यप्रभेदे ॥ पिचति ॥

पिचुमर्दने। मृ०कुः ॥

पिचुक :। पुं० मदनवृक्षे। मयना० इति० गौड़भा० ॥

पिचुतूल :। पुं० न० कार्पासतूले ॥

पिचुमन्द :। पुं० निम्बद्रुमे ॥ पिचुं कुष्ठविशेषंमन्दयति। मदिस्तुत्यादौ। णिच्। कर्मण्यण् ॥

पिचुमर्द :। पुं० निम्बवृक्षे ॥ पिचुंकुष्ठभेदंमर्दयति। मृदक्षोदे। णिच्। कर्मण्यण् ॥

पिचुल :। पुं० झावुकद्रुमे। झाउ० इतिभा० ॥ इज्जले। हिज्जले ॥ जलवायसे ॥ पिचुंतूलंलाति। ला०। आतोनुपेतिकः ॥

पिच्चटम्। न० सीसके ॥ रङ्गे। त्रपुणा। रांग० इ० भा० ॥ पुं० नेत्ररोगे ॥ पिच्चयति पिच्यतेवा। पिच्चच्छेदने। अच्। पिच्चंटीकते। अन्येभ्योपीतिडः॥ पिच्चयति। शकादिभ्योऽटन्वा ॥

पिच्छ :। पुं लाङ्गूले। पुच्छे ॥ न०। वर्हिशिखण्डे ॥ चूड़ायाम्। पिच्छतिपिच्छयतिवा। पिच्छकुट्टने। अचघञ्वा ॥

पिच्छल :। त्रि० अशुद्धे ॥

पिच्छलदला। स्त्री० वदरीवृक्षे ॥

पिच्छबाण :। पुं० श्येनपक्षिणि ॥

पिच्छा। स्त्री० पूगे ॥ छटायाम् ॥

कोषे ॥ मोचायाम् ॥ शाल्मलिविशे ॥ भक्तसंभूतमण्डे । मांड० इ० भा० ॥ पक्षौश्वपदामये ॥ पिच्छिले ॥ चोलिकायाम् ॥ फणिलालायाम् ॥ शिंशपावृक्षे ॥ इ० श० चं० । पिच्छति । पिच्छबाधे । गुरोश्च ह्य : । टाप् ॥ पिच्छतिपिच्छति वा । अच्घञ्वा ॥ यद्वा । पतितुमिच्छति । पत्लृ० । सन्नन्त: । प० अच् पृषोदरादि : ॥

पिच्छावान् । त्रि० पिच्छिले ॥ अस्त्यर्थेमतुप् ॥

पिच्छितिका । स्त्री० शिंशपायाम् ॥

पिच्छिल : । पुं० बहुवारके । श्लेष्मान्तकवृक्षे ॥ त्रि० विजिले । लालसीके । विजिलस्तुभक्तमण्डयुक्तमितिरायमुकुट:सरसव्यञ्जनादीतिभरत:सूपादीतिरमानाथ: । स्निग्धसूपादीतिभानुदीक्षित : । यथा । तक्रं गां सर्षपशाकंनवौदनानिपिच्छिलानिचदधीनि । अल्पव्ययेनसुन्दरिग्राम्यजनोमिष्टमश्नातीति ॥ मण्डयुक्तव्यञ्जनमितिनीलकण्ठ : ॥ पिच्छाभक्तादिमण्डोस्यास्ति । पिच्छादित्वादिलच् ॥

पिच्छिलक : । पुं० धन्वनवृक्षे ॥

पच्छिलच्छदा । स्त्री० उपोदक्याम् ॥

पिच्छिलत्वक् । पुं० नागरङ्गवृक्षे ॥ ध-

पिच्छिलसार : । पुं० मोचरसे ॥

पिच्छिला । स्त्री० पोतिकायाम् ॥ शिंशपायाम् ॥ शाल्मली ॥ सिन्धुविशेषे ॥ कोकिलाक्षे ॥ वृश्चिकालुपे ॥ शूलीतृणे ॥ अतस्याम् । कच्व्याम् ॥ शाल्मलिनिर्यास : पिच्छा । सास्यास्ति । पि० इलच् ॥

पिच्छोदकम् । न० नेत्रमले ॥

पिञ्ज : । पुं० वधे ॥ पिञ्जनम् । पिजिहिंसायाम् । चु० । अच् ॥ कर्पूरविशेषे ॥ न० बले ॥ त्रि० ॥ व्याकुले । व्यग्रे ॥

पिञ्जट: । पुं० नेत्रमले । दूषिकायाम् ॥

पिञ्जनम् । न० कार्पासस्फोटनधनुषि । विहनने । तूलस्फोटनकार्मुके । पीजनइ० भा० ॥

पिञ्जर: । पुं० अश्वविशेषे ॥ पीतरक्तवर्णे ॥ न० पीतके । हरिताले ॥ स्वर्णे ॥ नागकेशरे ॥ पक्ष्यादिरोधगृहे ॥ त्रि० चित्रिते ॥ पीतवर्णे ॥ पिञ्जनम् । पिजिहिंसायाम्०वर्णेवा । घञ् । निष्ठायामनिट्वचनान्नकुत्त्वम् । पिञ्जं वर्णविशेषंरातिक : ॥

पिञ्जरकम् । न० हरिताले ॥

पिञ्जल : । पुं० अत्यन्तव्याकुलसैन्ये । समुत्पिञ्जे ॥ पिञ्जयति०पिञ्जते-वा । पिजि० । बाहुलकादलच् ॥ पिञ्जं लातिवा । आतइतिक : ॥

न० ॥ कुशपत्रे ॥ हरिद्राभे ॥ हरिताले ॥

पिञ्जली । स्त्री० कुशान्तरवेष्टितप्रादेशमात्रसाग्रकुशपत्रद्वये । पवित्रे ॥ यथा । अनन्तर्गर्भिणंसाग्रंकौशंद्विदलमेवच । प्रादेशमात्रंविज्ञेयंपवित्रं यत्रकुत्रचित् ॥ एतदेवहिपिञ्जल्यालक्षणंसमुदाहृतमितिच्छन्दोगपरिशिष्टम् ॥

पिञ्जा । स्त्री० तूले ॥ हरिद्रायाम् ॥ हिंसायाम् ॥

पिञ्जानम् । न० स्वर्णे ॥ इतिरा० नि० ॥

पिञ्जिका । स्त्री० तूलनालिकायाम् । पं इज० इ० गौ० भाषा ॥ इ० त्रि० ॥

पिञ्जूलम् । न० कुशवर्त्त्याम् ॥ वर्त्तिकायाम् ॥ पिञ्जति । पिजि० । खर्जपिञ्जादिभ्यऊरोलचाविच्यूलच् ॥

पिञ्जूष : । पुं० कर्णमले ॥ इ० हे० ॥

पिञ्जेट : । पुं० नेत्रमले ॥

पिञ्जोला । स्त्री० पत्रकाहलायाम् ॥

पिट: । पुं० नलादिरचितभाण्डे । कंडोले । पेटीपिटार० इतिचभाषा । पेटति । पिटशब्दसङ्घातयो : । कर्तरिइगुपधेतिक : ॥ न० चाले ॥ इ० त्रि० ॥

पिटक : । पुं० पेटके । पेडायाम् । मञ्जूषायाम् ॥ त्रि० विस्फोटे ॥ पेटति । पिट० । क्वुन् । स्त्रियां० पिटका । क्षिपकादित्वान्नेत्वम् ॥

पिटक्या । स्त्री० पिटकसमूहे ॥ पिटकानांसमूह: । पाशादिभ्योय : ॥

पिटङ्कश : । पुं० पर्वताभिधेमत्स्ये ॥

पिटङ्कोका । स्त्री० इन्द्रवारुण्याम् ॥

पिटाक : । पुं० मुनिविशेषे ॥

पिट्टकम् । न० दन्तकिट्टके ॥

पिठर : । पुं० स्थाल्याम् ॥ गृहप्रभेदे ॥ कुद्रङ्के । उद्घाटे ॥ न० । मुस्तायाम् ॥ मन्थानदण्डे ॥ पेठति पिठ्यतेवा । पिठहिंसासंक्लेशनयो : । बाहुलकादरोगुणाभावश्च ॥ पिठेरिगुपधेतिक : । पिठंराति । रादाने । आतोनुपेतिक : ॥

पिठरी । स्त्री० स्थाल्याम् ॥ अध : सच्छिद्रपिठरीतिलक्ष्यम् ॥

पिडक : । पुं० स्फोटके ॥ इ० हे० ॥

पिडका । स्त्री० स्फोटकविशेषे । पिडिया इ० फुडिया० इतिचभाषा ॥

पिण्ड : । पुं० बोले ॥ बले ॥ सान्द्रे ॥ देहे ॥ अगारैकदेशे ॥ देहैकदेशे । अङ्गे ॥ निवापे ॥ गोले सिह्लके ॥ ओड्रपुष्पे ॥ वृन्दे ॥ कवले ॥ गजकुम्भे ॥ मदनवृक्षे ॥ न० । आजीवने ॥ अयसि ॥ पुं० न० श्राद्धविशेषद्रव्यनिर्मितविल्वफलाकारेपितृदेयेऽन्ने ॥ पिण्डते । पिडिसङ्घाते । अच्० ॥ पिण्ड्यतेवा । कर्म्मणिघञ् ॥

पिण्डकः । पुं॰ सिह्लनामगन्धद्रव्ये ॥ पिशाचे ॥ पिंडालौ ॥ वोले ॥ पिण्डमूले ॥ स्वार्थेकन् ॥

पिण्डकन्दः पुं॰ । पिण्डालौ ॥

पिण्डखर्जूरः । पुं॰ राजजम्बाम् । पिण्डखर्जूर्याम् ॥

पिण्डखर्जूरी । स्त्री॰ मधुस्रवायाम् । स्वादुपिण्डायाम् पिण्डखर्जूर॰ इ॰ भा॰ ॥ पिण्डखर्जूरिकात्वन्यासादेशेपश्चिमेभवेत् ॥ गुणार्थेपश्यखर्जूरीम् ॥

पिण्डतालकम् । न॰ हरितालप्रभेदे । पिण्डाख्ये ॥ निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वंतथागुरु । स्त्रीपुष्पहारकं स्वल्पगुणंतत्पिण्डतालकम् ॥

पिण्डतैलकः । पुं॰ तुरुष्के । सिह्ले ॥

पिण्डदः । पुं॰ पिण्डदानकर्त्तरि ॥ यथा । लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिंडदःसप्तमस्तेषांसापिंडंसाप्तपौरुषम् ॥

पिण्डपद्म् । न॰ अङ्कविशेषे ॥

पिण्डपादः । पुं॰ गजे । हस्तिनि ॥

पिण्डपुष्पम् । न॰ अशोकपुष्पे ॥ जवापुष्पे ॥ कुशेशये । पद्मपुष्पे ॥ तगरपुष्पे ॥

पिण्डपुष्पकः । पुं॰ वास्तूके ॥

पिण्डफला । स्त्री॰ अलाबाम् ॥ कटुतुम्ब्याम् ॥ पिण्डइवफलानियस्याः सा । टाप् ॥

पिण्डमुस्ता । स्त्री॰ नागरमुस्तके ॥

पिण्डमूलम् । न॰ गजाण्डे । पिण्डके । मूलविशेषे ॥ गर्जरे ॥

पिंडलः । पुं॰ सेतौ ॥ इ॰ हारा॰ ॥

पिंडवीजकः । पुं॰ कर्णिकारवृक्षे ॥

पिंडा । स्त्री॰ पिंडायसे ॥ कस्तूरीप्रभेदे ॥ वंशपत्र्याम् ॥

पिंडातः । पुं॰ सिह्लके ॥

पिंडान्वाहार्यकम् । न॰ अन्वाहार्ये । मासिकश्राद्धे ॥ पितृयज्ञपिंडानामनुपश्चादाह्रियते इति ॥

पिण्डाभ्रम् । न॰ घनोपले ॥

पिंडायसम् । न॰ तीक्ष्णायसे ॥

पिंडारः । पुं॰ क्षपणे ॥ गोपे ॥ महिषीरक्षके ॥ द्रुमे ॥ क्षेपे ॥ विकङ्कतवृक्षे न॰ । फलशाकविशेषे ॥ पिंडारंशीतलंबल्यं पित्तघ्नंरुचिकारकम् । पाकेलघुविशेषेण विषशान्तिकरं स्मृतम् ॥

पिंडारकम् ॥ न॰ भौमेतीर्थभेदे । द्वारवत्यामेतत्तीर्थम् । अत्रमहादेवस्तिष्ठति । पद्मचिह्नयुक्तामुद्राःशूलचिह्नितानिपद्मानिचाद्यापिदृश्यन्ते ॥

पिंडालुः । पुं॰ कन्दगुडूच्याम् । ग्रन्थिले । रोमकन्दे । ताम्बूलपत्रे । मुष्टिनी॰ इ॰ भा॰ । चुवडिआलु॰ इ॰ गौ॰ भा॰ प्र॰ कन्दे ॥

पिंडालुकम् । न॰ चुवडिआलु॰ गोलआलु॰ इ॰ गौ॰भा॰ प्र॰ कन्दे॥

पिंडाश : । पुं० भिक्षौ ॥

पिंडाह्वा । स्त्री० नाडीहिङ्गुनि ॥

पिंडिका । स्त्री० रथनाभौ । रथचक्रमध्ये सर्वेश : काष्ठानियत्रसज्यन्ते तस्मिन् ॥ पिचिंडिकायाम् । जानुनोधोमांसलप्रदेशे । पिंडली० इ० भा० ॥ श्वेताम्ली ॥ वेद्याम् ॥ प्रतिमाद्याधारे । पीठे ॥ पीडाम्ले ऽरायस्याम् । पिडि० । इलस्येति घञ् । गौ० ङीष् । स्वार्थेकन् ॥

पिंडित : । पुं० तुरुष्के । सिह्लके । नागौरीगूंद० लोबान० इ० भा० ॥ त्रि० गुणिते ॥ घने ॥

पिंडी । पुं० पिंडीतके । मदने ॥

पिंडिल : । पुं० सेतौ ॥ गणके ॥ त्रि० स्थूलजंघे ॥ पिंडते । पिडि० । सलिकलीति० इलच् ॥

पिंडिला । स्त्री० गोडुम्बायाम् ॥

पिंडी । स्त्री० पिंडीतगरे ॥ अलाबूप्रभेदे ॥ खर्जूरविशेषे ॥ गौ० ङीष् ॥ ज्ञाननिरूपणार्थकोपन्यासे । इ० धरणि : ॥ पिंडे ॥ भक्तपिंडीसुगन्धनीमितिकालिकापुराणम् ॥

पिंडीतक : । पुं० मरुवके । श्वसने । मदनवृक्षे ॥ पिंडीतनोति । तनु० । अन्येभ्योपीतिड : । संज्ञायांकन् ॥ तगरे ॥ फणिज्झके ॥

पिंडीतगरक : । पुं० तगरविशेषे । कफवर्द्धने ॥

पिंडीतगरक : । पुं० तगरे ।

पिंडीतरु : । पुं० महापिंडीतरौ ॥

पिंडीपुष्प : । पुं० अशोकवृक्षे ॥

पिंडीर : । पुं० दाडिमद्रुमे ॥ त्रि० नीरसे ॥

पिंडीशूर : । पुं० गेहेनर्दिनि । गेहेशूरे । स्वगेहमात्रेवसन्परद्वेषिणि ॥ इतिहेमचन्द्र : ॥

पिंडोलि : । स्त्री० भुक्तसमुज्झिते ॥

पिण्याक : । पुं० न० तिलकल्के । खल० इ० भा० ॥ तिलकिट्टन्तु पिण्याकस्तथा तिलखलि:स्मृता । पिण्याकोग्लयनोरूक्षो विष्टम्भीदृष्टिदूषण : ॥ हिंगुनि ॥ वाह्लीके । कुङ्कुमे ॥ सिह्लके ॥ पणयते । प-ण० । पिनाकादयश्चेतिसाधु : ॥ यद्वा । पिनष्टिपिष्यतेवा । पिष्लृ सञ्चूर्णने । पिनाकादित्वादाक : षस्यणत्वम् । धातोर्युगागमश्च ॥

पितरौ । पुं० सहोक्तामातापित्रो: ॥ माताचपिताच । पितामात्रेत्यकशेष : ॥

पितामह: । पुं० विरञ्चौ । पद्मयोनौ । ब्रह्मणि ॥ तापस्यजनके । आर्यके ॥ लोकपितॄणांमरीच्यादीनामर्यमादीनांवापितापितामह: ॥ पितृव्यमातुलमातामह पितामहाइत्यत्र मातृपितृभ्यां पितरिडामहच्निपातित : ॥ आदिगुरुचतुष्कले (ऽ॥) ॥

पितामहसर : । न० तीर्थविशेषे ॥

पितामही । स्त्री० पितामहपत्न्याम् ॥ पितुर्माता । मातरिपितरे तिडा महच्पित्वान्ङीष् ॥

पिता । पुं० ताते ॥ जनके ॥ सचबालोपिपितैव । यथाहमनुः । ब्राह्मस्यजन्मन : कर्त्तास्वधर्मस्यचशासिता । बालोपिविप्रोवृद्धस्यपिताभवतिधर्मतः अध्यापयामासपितॄन्शिशुराङ्गिरसः कविः । पुत्रकाइतिहोवाचज्ञानेनपरिगृह्यतान् ॥ तेतमर्थमपृच्छन्तदेवानागतमन्यवः । देवाश्चैतान्समेत्योचुर्न्याय्यंवःशिशुरुक्तवान् ॥ अज्ञोभवतिवैबाल : पिताभवतिमन्त्रदः । अज्ञंहिबालमित्याहुः पितेत्येवतुमन्त्रदमिति ॥ पाति । पा२त्तणे । नप्तृनेष्टृत्वष्ट्रितिनिपातनात्साधुः ॥ पुं० भू० पितरः । दिव्यपितृगणे ॥ ऋषिभ्यः पितरोजाताः पितृभ्योदेवमानवाः । देवेभ्यश्चजगत्सर्वंचरंस्थाण्वनुपूर्वशः ॥ पितरोग्निष्वात्तमुख्याः ॥ स्वधापितॄणांपत्नी ॥

पितृकम् । त्रि० पितृसम्बन्धिनि ॥ इतिशब्दमाला ॥

पितृकाननम् । न० श्मशाने ॥

पितृकार्य्यम् । न० पितॄनुद्दिश्यक्रियमाणे श्राद्धे ॥

[illegible] पुं० आज्यपादीनांसमूहे सोमपादिषु ॥ मनोर्हैरण्यगर्भस्ययेमरीच्यादयः सुताः । तेषांमृषीणांसर्वेषांपुत्राः पितृगणाःस्मृताः ॥

पितृगृहम् । न० श्मशाने ॥ पितुर्वेश्मनि ॥

पितृतर्प्पणम् । न० पितृतीर्थे । तर्जन्यङ्गुष्ठयोर्मध्ये ॥ निवापे ॥ तिले ॥ पितृतीर्थेन पित्रुद्देश्यकजलदाने ॥ पितॄणांतृप्तिमात्रे ॥ बिनारूप्यसुवर्णेनविनाताम्रतिलैः खगैः । विनादर्भैश्चमन्त्रैश्चपितॄणांनोपतिष्ठति इतिशङ्कः ॥ नेष्टकादिचितेपितॄंस्तर्पयेत् । नवेष्टितशिरानक्रुष्णकषायवासादेवपितृकार्यंकुर्यात् ॥ *** ॥ यदेषतर्पयत्यद्भिः पितॄन्स्नात्वाद्विजोत्तमः । तेनैवसर्वमाप्नोतिपितृयज्ञक्रियाफलमितिमन्वादयः ॥

पितृतिथिः । स्त्री० अमावास्यायाम् ॥

पितृतीर्थम् । न० गयायाम् ॥ तर्जन्यङ्गुष्ठयोर्मध्ये ॥ पितॄणांतीर्थम् ॥

पितृदानम् । न० निवापे । सपिण्डनादूर्द्ध्वंपित्रुद्देशेनदाने ॥ पितृपदं मृतोपलक्षणम् । तेनमात्रादेरपि ग्रहणम् ॥ पितृभ्योदानम् ॥

पितृदानकम् । न० निवापे ॥

पितृपतिः । पुं० यमे ॥ पितॄणांपतिः ॥

पितृपिता । पुं० पितामहे ॥ पितुः पिता ॥

पितृप्रसूः । स्त्री० सायंसंध्यायाम् ॥

पितॄन्प्रसूते । क्विप् । पितॄणां प्रसूर्वा ॥ पितामह्याम् ॥

पितृप्रियः । पुं० भृङ्गराजे ॥ पितॄणां प्रियः ॥

पितृबान्धवः । पुं० पितुर्मात्रादिषु ॥ यथा । पितुर्मातापिताभ्राता पितुर्भ्रातुः स्वसुः सुताः । पितुः पितुः सोदराश्चविज्ञेयाःपितृबान्धवाः

पितृभोगीणः । त्रि० पितृशरीरहिते ॥ पितुर्भोगः शरीरम् । तस्मै हितः । आत्मन्विश्वजनभोगोत्तरपदात्खः ॥

पितृभोजनः । पुं० माषे ॥ न० । पितॄणांभक्षणे ॥

पितृभ्राता । पुं० पितृव्ये ॥ पितुर्भ्राता ॥

पितृमान् । त्रि० सुशिक्षिते ॥ प्रशंसार्थेमतुप् ॥

पितृयज्ञः । पुं० पितॄणांतर्पणे ॥

पितृयाणः । पुं० कर्मिणांमार्गविशेषे । इष्टापूर्तेदत्तमितिकर्मतनप्रतिपत्त्र्ये पथि । कृष्णागत्यपरपर्यायेद‌क्षिणमार्गे ॥

पितृराजः । पुं अर्यम्णि ॥ पितॄणां राजा । टच् ॥

पितृलोकः । पुं० पितॄणांभुवने ॥ दक्षिणमार्गे ॥ यएषदक्षिणः पन्थाः पितृलोकः सउच्यते । मनुष्यानन्दतः सोयंगुणैस्तु स्यान्छताधिकः ॥

पितृवनम् । न० श्मशाने ॥ पितॄणां वनम् ॥ पितॄन्वनतिवा । वनसम्भक्तौ । पचाद्यच् ॥

पितृव्यः । पुं० पितुर्भ्रातरि ॥ पितृव्यमातुलेतिनिपातनात् । पितुर्भ्रातरिव्यत् ॥

पितृष्वसा । स्त्री० पितुः स्वसरि । पितुर्भगिन्याम् ॥ मातृपितृभ्यां स्वसेतिषत्वम् ॥

पितृस्वस्रीयः । त्रि० पितुर्भागिनेये ॥

पितृसन्निभः । त्रि० मनोजवे । पितृसमे ॥ पितेवसम्यङ्निभाति । भा० । आतश्चोपसर्गइ० कः ॥

पितृसूः । स्त्री० सन्ध्यायाम् ॥

पित्तम् । न० शरीरस्थधातुविशेषे । मायौ ॥ अस्यस्वरूपम् । पित्तमुष्णं द्रवंपीतंनीलंसत्वगुणोत्तरम् । सरंकटुलघुस्निग्धं तीक्ष्णमम्लन्तुपाकतः ॥ पीतंनिरामम् । नीलं [illegible]मामाशयगतंसौरंतेजः पित्तमित्युच्यते ॥ अस्यकोपकालो यथा । पित्तस्यघर्मान्तनिदाघयोश्चेति । अत्रकोपइति संबध्यते ॥ यतः । आश्विनेकार्तिकेमासि वैशाखज्येष्ठयोर्ध्रुवम् । वैद्यशास्त्रविचारज्ञैः पित्तोराजा प्रकोर्त्तितइतिनिर्देशात्पुंस्त्वमपि । अस्यप्र

कोपकारणान्याह भावमिश्रः । कटूष्णोष्णविदाहितीक्ष्णलवणक्रोधोपवासातपस्त्रीसम्भोगतृषाक्षुधाभिहननव्यायामनद्यादिभिः । भुक्ते ऽजीर्यतिभोजनेचशरदिग्रीष्मे तथा प्राणिनांमध्याह्ने च तथार्द्धरात्रसमयेपित्तप्रकोपोभवेदिति ॥ अन्यच्च । माषैस्तिलैःकुलत्थैश्चमत्स्यैर्मेषामिषेणच । गव्येनदधितक्रेणान्नेनां पित्तंप्रकुप्यतीति ॥ शब्दचन्द्रिकायामस्यप्रभेदाः पंचोक्ताः । यथा । पाचकंभाजकंचैवरञ्जकालोचकेतथा । साधकंचैवपंचेतिपित्तनामान्यनुक्रमादिति ॥ एषांस्थानान्याह । अग्न्याशयेयकृत्प्लीह्नोर्हृदये लोचनद्वये । त्वचिसर्वशरीरेषुपित्तंनिवसतिक्रमादितिभावप्रकाशः ॥ अपिदीयतेस्म । दो० देङ० वा । क्तः । अवउपसर्गात्तः । वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः । संज्ञापूर्वकत्वाद्स्तीतिदीर्घोन ।

पित्तघ्नम् । न० घृते ॥ पित्तंहन्ति । हन० । अमनुष्यकर्त्तृकेचेतिटक् ॥ त्रि० पित्तनाशकद्रव्ये ॥

पित्तघ्नी । स्त्री० गुडूच्याम् । ङीप् ॥

पित्तज्वरः । पुं० पैत्तिकज्वरे ॥ विशेषतः कोमलनारिकेलंनिहन्तिपित्तज्वरमूत्रदोषान् ॥

पित्तद्रावी । पुं० मधुरजम्बीरे ॥

पित्तरक्तम् । न० रोगविशेषे । रक्तपित्ते ॥

पित्तलम् । न० धातुविशेषे । आरकूटे । पीतल० इ० भा० ॥ त्रि० पित्तवति ॥ पित्तमस्त्यस्यास्मिन्वा । सि० लच् ॥

पित्तला । स्त्री० तोयपिप्पल्याम् । लाङ्गल्याम् । टाप् ॥

पित्तारिः । पुं० पर्पटे ॥ लाक्षायाम् ॥ चन्दनान्तरे ॥ पित्तस्यअरिः ॥

पित्रीयः । त्रि० पित्रे हिते । तस्मैहितमितिच्छः ॥

पित्र्यः । न० पितृतीर्थे । अङ्गुष्ठाङ्गुल्योर्मध्ये ॥ श्राद्धादौ । मधुनि ॥ श्राद्धकल्पे ॥ पितरोदेवताअस्य । वाय्वृतुपित्रितियत् । रीङृतः । यस्येतिच ॥ त्रि० पितुरागते ॥ तत्रआगतइत्यधिकारेपितुर्यच्चेतियत् ॥

पित्सन् । पुं० विहङ्गमे । त्रि० पतनेच्छौ ॥ पतितुमिच्छुः । लटः शतृ । सनिमीमेतीस् । अभ्यासलोपः ॥

पित्सनम् । न० पथि ॥ इतिप्राणकृष्णशब्दाम्बुधिः ॥

पित्सुः । त्रि० पिपतिषति ॥

पिधानः । पुं० न० तिरोधाने । अपिपूर्वकडुधाञोल्युट । वष्टिभागुरिरितिपक्षेअल्लोपः ॥

पिनद्धः । त्रि० आमुक्ते । परिहितक-

वचादौभटे ॥ अपिनह्यतेस्म । णह-बंधने । कर्मणिक्तः । वष्टिभागुरि-रित्यल्लोपः ॥

पिनाकः । पुं० न० रुद्रचापे ॥ पांशु-वर्षे ॥ त्रिशूले ॥ शाङ्करएवत्रिशूलः इति०स्वामी । पातिशिवानुचरान् । पिनाकादयश्चेतिपातेराकः इत्त्वं-नुम्च ॥ पनाय्यते । पनस्तुतौ ॥ पिनाकादित्वात्साधुर्वा ॥

पिनाकी । पुं० शिवे ॥ पिनाकोधनु-रस्यास्ति । इनिः ॥ यात्रायोगान्त रे ॥ रविः षष्ठेसितश्छिद्रे तृतीये-भूमिनन्दनः । पिनाकयोगोविज्ञे-योयातुर्विजयकारकः ॥

पिपतिषन् । पुं० खगे ॥ त्रि०पित्सौ । पतनेच्छौ ॥

पिपतिषुः । पुं० विहगे ॥ त्रि० प-तितुमिच्छौ ॥ पतेः सन्नन्तादुप्र-त्ययः । तनिपतीत्यादिनाइट् ॥

पिपासा । स्त्री० तृषि ॥ लोभस्यभार्येयम् । पश्यचुत्पिपासे ॥ पातुमि-च्छा । पापाने । धातोरितिसन् । अप्रत्ययात् । टाप् ॥

पिपासुः । तृषिते ॥ पातुमिच्छुः । पिबतेःसन्नन्तादुप्रत्ययः ॥

पिपीलकः । पुं० कीटविशेषे ॥ अ-पिपील्यते । पीलप्रतिष्टम्भे । घञ् । वष्टिभागुरिरित्यपेरल्लोपः । स्वार्थे-कन् ॥ शनैर्यातिपिपीलकः ॥

पिपीलिका । स्त्री० पिपीलकस्त्रियि । चींटी०इ०भा० ॥ टाप् । प्रत्यय-स्थादितीत्त्वम् ॥

पिपीली । स्त्री० पिपीलिकायाम् ॥ घ-ञन्तान्ङीष् ॥

पिप्पकः । पुं० खगान्तरे ॥

पिप्पटा । स्त्री० खाद्यभेदे । गुडशर्क-रायाम् ॥

पिप्पलः । पुं० बोधिद्रुमे । चलदले । अश्वत्थवृक्षे । पीपल०इ०भा० ॥ पि प्पलोदुर्जरः शीतः पित्तश्लेष्मव्र-णास्रजित् । गुरुस्तुवरकोरूक्षोवर्ण्यो योनिविशोधनःइतिभावप्रकाशः ॥ ※ अत्रपद्मपुराणोक्तानिवचनानि-लिख्यन्ते । अश्वत्थमूलमासाद्यशा केनान्नोदकेनवा । एकंवाभोजयेद्-विप्रंकोटिकोटिफलंलभेत् ॥ ※ ॥ अश्वत्थमूलमासाद्यतपोहोमः सुरा र्चनम् । अक्षयंमुनिशार्दूलत्रह्मणोव चनंयथा ॥ ✣ ॥ एवंसमर्चितोऽ श्वत्थः सर्वसौख्यप्रदोभवेत् । यज्ञा र्थंछेदितोश्वत्थः सर्वारोग्यप्रदोभ-वेत् ॥ ✣ ॥ अश्वत्थः पूजितोयेनपूजिताः सर्वदेवताः । अश्वत्थ-श्छेदितोयेनछेदिताःसर्वदेवताः ॥ अन्तःशुद्धः सुसन्तुष्टोऽश्वत्थोदेवम-योगुरुः । ससेव्यः पूजनीयश्चक्षणात् यविनाशकः ॥ भृग्वर्कवारेभौमेच-मध्याह्ने निशिसंध्ययोः । अश्वत्थदर्श

नंकार्थंकुलक्षयभयात्मभिरिति ॥ पिप्पलंजलमस्यास्तिमूलेसिक्तत्वात्। अर्शआद्यच् ॥ निरंशुके ॥ पक्षि-विशेषे ॥ निरर्गले ॥ न० । सलिले ॥ वस्त्रच्छेदविशेषे ॥ कर्मफले ॥

पिप्पलकम्। वक्षोजवृन्ते। चूचुके॥ सीवनसूत्रे ॥

पिप्पलव्रतम् । न० वालिवैधव्ययोगनाशकेव्रते ॥ बलवद्विधवायोगेबाल्येसतिमृगीदृशाम् । पितारक्षसिकुर्वीततद्व्रतंशास्त्रसम्मतम् ॥

पिप्पलादः । पुं० वेदप्रसिद्धऋषिविशेषे ॥

पिप्पलिका । स्त्री० कणायाम् । पिप्पल्याम् ॥ पिप्पल्येव। स्वार्थेकः। ह्रस्वः॥

पिप्पली । स्त्री० कृष्णायाम् । उपकुल्यायाम् । मागध्याम् । कणायाम् । पीपल० इ० भा० ॥ पिप्पलीदीपनीवृष्यास्वादुपाकारसायनी । अनुष्णाकटुकास्निग्धावातश्लेष्महरीलघुः ॥ पित्तलारेचनी हन्तिश्वासकासोदरज्वरान् । कुष्ठप्रमेहगुल्मार्शः प्लीहशूलाममारुतान् ॥ आर्द्राकफप्रदास्निग्धाशीतलामधुरागुरुः । पित्तप्रशमनीसातुशुष्कापित्तप्रकोपिणी ॥ पिप्पलीमधुसंयुक्तामेदःकफविनाशिनी । श्वासकासज्वरहरीवृष्यामेधाग्निवर्द्धिनी ॥ जीर्णज्वरेऽग्निमान्द्ये चशस्यतेगुडपिप्पली । कासाजीर्णारुचिश्वासहृत्पाण्डुकृमिरोगनुत् ॥ द्विगुणःपिप्पलीचूर्णाद्गुणोत्रभिषजांमतः ॥ पिपर्त्ति । पॄ० । वा० अलच् । पृ० । गौरादित्वान्ङीष् ॥

पिप्पलीका । स्त्री० अश्वत्थीवृक्षे ॥

पिप्पलीमूलम् । न० ग्रन्थिके। पीपलामूल० इ० भा० ॥ दीपनंपिप्पलीमूलं कटूष्णंपाचनंलघु । रूक्षंपित्तकरंभेदिकफवातोदरापहम् ॥ आनाहप्लीहगुल्मघ्नं कृमिश्वासक्षयापहमितिभावप्रकाशः ॥ पिप्पल्यामूलम् ॥

पिप्पिका । स्त्री० दन्तमले ॥ इ० हे०

पिप्लुः । पुं० जड्डुल । लस्सन इतिभाषा ॥ अपिप्लवते भ्रङ्क्तौ ॥ मितद्वादित्वाड्डुः । वष्टिभागुरिरल्लोप मवाप्योरुपसर्गयोः ॥

पियालः । पुं० राजादने । सन्नकद्रौ॥ चिरौंजी० इतिप्रसिद्धबीजस्यवृक्षे ॥ पीयते । पीयुः सौत्रोधातुः । पीयुक्षिभ्यांकालन् । वाहुलकाद्ध्रस्वश्च ॥

पिलुकः । पुं० पीलुवृक्षे ॥

पिल्लः । पुं० क्लिन्ने चक्षुणि । क्लेदयुक्तनेत्रे ॥ त्रि० । तद्वति ॥ क्लिन्ने चक्षुषीअस्य । क्लिन्नस्यचिल्पिलौतिपिलादेशोलश्चप्रत्ययः ॥ चक्षुर्गतः क्लेदरोगः पिल्लशब्दवाच्यः। तद्योगाच्चक्षुस्तद्योगात्पुरुषोपीतिव्याख्यातारः ॥

पिशङ्गः। पुं० कपिले। पिङ्गलवर्णे। सुवर्णवर्णसदृशवर्णे॥ त्रि०। तद्वति॥ पिं शति। पिशश्रवयवे। त्रिङादिभ्यः किदित्यङ्गच्॥

पिशङ्गा। स्त्री० कपिलवर्णायाम्॥ पचेटाप्॥

पिशङ्गी। स्त्री० पिङ्गलवर्णायाम्॥ पिशङ्गादुपसङ्ख्यानमितिपाचिकोङीप्॥

पिशाचः। पुं० देवयोनिविशेषे। पिचास पिशाच० इतिचभाषा०॥ राक्षसादपकृष्टे अशुचिमरुदेशनिवासिनि॥ पिशितमश्नाति। अश०। कर्म्मण्यण् पृ० शितशब्दस्यलोपः। अशशब्दस्यशाचादेशः। मध्यतालव्यः॥ प्रेते॥ यथा। अशौचान्ताद्द्वितीयेह्निवस्त्रनोत्सृज्यतेयदि। पिशाचत्वंभवेत्तस्यदत्तैःश्राद्धशतैरपि॥

पिशाचकः। पुं० पिशाचेकुशले॥ आकर्षादिभ्यः कन्॥

पिशाचकी। पुं० कुवेरे॥ पिशाचाःसन्त्यस्य। पिशाचाचेतीनिः कुगागमश्च॥

पिशाचद्रुः। पुं० शाखोटवृक्षे॥ पिशाचानांद्रुः॥

पिशाचपतिः। पुं० रुद्रे॥ पिशाचानां पतिः॥

पिशाचवृक्षः। पुं० शाखोटे॥

पिशाची। स्त्री० गन्धमांस्याम्॥ पिशाचिकायाम्। पिशाचस्त्रियि॥

पिशितम्। न० मांसे॥ पिं शति। पिशअवयवे। पिशेः किच्चेतीतन् पिश्यतेस्मवा। क्तः॥

पिशिता। स्त्री० जटामांस्याम्॥

पिशिताशी। त्रि० शाष्कुले। मांसभक्षके॥

पिशी। स्त्री० जटामांस्याम्॥

पिशुनः। पुं० कपिवक्त्रे। नारदे॥ काके॥ न० कुङ्कुमे॥ त्रि० सूचके। परोक्षेपरदोषोद्भासके॥ क्रूरे॥ पिं शति। पिशि०। क्षुधिपिशिमिथिभ्यः किदित्युनन्॥

पिशुना। स्त्री० पृक्कायाम्। पिडिंशाक इति गौ० भा०॥ अदन्तलक्षणष्टाप्॥

पिष्टम्। न० सीसके॥ पृषे॥ त्रि० चूर्णिते। चूर्णीकृते। चूर्णे। पीसा इ० भा०॥

पिष्टकः। पुं० घृतपूपादौ। अपूपे पूडा० इति भा०। नेत्ररोगविशेषे॥ तल्लक्षणं यथा। श्लेष्मामारुतकोपेन शुक्ले पिष्टसमुन्नतम्। पिष्टवत्पिष्टकंविद्धिमलाक्तादर्शसन्निभम्॥ पिष्टस्यविकारः। संज्ञायामिति कन्॥ न०। तिलचूर्णे॥

पिष्टकारिणी। स्त्री० चूर्णदास्याम्। पिसनहारी इ० भा०॥

पिष्टपम्। पुं० न० भुवने। विष्टपे॥ विशन्त्यस्मिन्सुकृतिनः। विशप्रवेश

ने। अस्मात्० विटपपिष्टपविशपो लपाङ्स्थौणादिकः कपन्०विशते रादेः पः प्रत्ययस्यतुट्चेतिष त्वम्॥ यद्वा पिश्यते० पिष्यतेवा। पिशगतौ० पिष्लसञ्चूर्णनेवा॥ प्रक्रियापूर्ववत्॥ सूत्रेविष्टपस्थाने पिष्टपइतिपकारादिपाठस्तूज्ज्व लदत्तरीत्योक्तः। नायंयुक्तः। यत्र ब्रध्नस्यविष्टपमित्यादौदन्त्योष्ठ्यादि पाठस्यदर्शनात्॥

पिष्टपचनम्। न० ऋजीषे। पिष्टपाक पात्रे। तई इ० भा०॥ तैलाती इ० गौ० भा०॥ पच्यतेऽत्र। डुप चष्०। करणेतिल्युट्। पिष्टस्यप चनम्॥

पिष्टपाकभृत्। पुं० पिष्टकपाकपात्रे। पिष्टपचने॥

पिष्टपूरः। पुं० वटकेघृतपूरे॥ इ० है०॥

पिष्टवर्त्तिः। पुं० मुद्गमसूरादिपिष्टे चमस्याम्॥

पिष्टसौरभम्। न० चन्दने॥ इ० हा०॥

पिष्टातः। पुं० पटवासके। धूलिगुच्छ के। अबीर इतिख्याते० इतिभा० ॥ वस्त्रादिवासनार्थमेकीकृत्यगन्ध द्रव्यचूर्णे॥ पिष्टमतति। अत०। कर्मण्यण्॥

पिष्टकम्। न० तण्डुलोद्भवतवचौरे॥

पिष्टिका। स्त्री० पिष्टविदले॥ पिट्ठी इ० भा०॥ यथा। दालिःसंस्था पितातोयेततोपक्ष्टतकञ्चुका॥ शि- लायांसाधुसम्पिष्टापिष्टिकाकथिता बुधैरितिभावमिश्रः॥

पिष्टोडी। स्त्री० श्वेतामलिकाया म्॥

पिहितः। त्रि० आच्छादिते। संवी ते। आवृते। छन्ने। ढका० इ० भा०। तिरोहिते। अपिधीयतेस्म। डुधाञ्०। क्तः। दधातेर्हिः। भागुरिमतेनाल्लोपः॥

पीठः। त्रि० चौकोतिपीढी०इत्यादि नाम्नाचप्रसिद्धे॥ उपवेशनाधारे। आसनविशेषे। पेठन्त्यत्र। पिठहिं सासंक्लेशनयोः। हलश्चेतिघञ्। बाहुलकाद्दीर्घः। पीयतेऽत्रवा। पी ङ्पाने। वा० ठक्॥ धातुपाषाण काष्ठैस्तुपीठस्त्रिविधउच्यते॥ विशे षोयुक्तिकल्पतरौपीठोद्देशेद्रष्टव्यः॥एकपञ्चाशद्भेदभिन्नेदेवतास्थान विशेषे॥ यथा॥ कृतयुगेदक्षप्रजा पतेर्यज्ञेशिवनिन्दांश्रुत्वाप्राणांस्त्य क्तवत्याःसत्याःशरीरंशिरसिधृ त्वाभ्रमतिशिवेविष्णुनाचक्रेणच्छि न्नाअवयवाः यत्रयत्रपतितास्तएव देशाएकपञ्चाशन्महापीठाअभवन्नि तिपौराणिकीकथातिप्रसिद्धास्ति ॥*॥ अथतेषांनिरूपणम्। ईश्व रउवाच। मातःपरापरेदेविसर्व ज्ञानमयीश्वरि। कथ्यतांमेसर्वपी

ठंशक्तिभैरवदेवता: ॥ देव्युवाच ॥
शृणुवत्सप्रवक्ष्यामिदयालोभक्तवत्सल
याभिर्विनानसिध्यन्तिजपसाधनत
त्क्रिया : ॥ पञ्चाशदेकपीठानिएवं
भैरवदेवता: । अङ्गप्रत्यङ्गपातेन
विष्णुचक्रक्षतेनच ॥ ममान्यवपुषो
देवहितायत्वयि कथ्यते ॥ ब्रह्म
रंध्रं हिङ्गुलायांभैरवोभीमलोचन :
। कोट्टवीसामहामायात्रिगुणायादि
गम्बरी ॥ १ ॥ शर्करारेत्रिनेत्रंमे
देवीमहिषमर्दिनी। क्रोधीशोभैरव
स्तत्रसर्वसिद्धिप्रदायक : ॥ २ ॥
सुगन्धायांनासिकामेदेवस्त्र्यम्बकभै
रव : । सुन्दरीसामहादेवीसुनन्दा
तत्रदेवता । ३ ॥ काश्मीरेकण्ठदे
शश्चत्रिसंध्येश्वरभैरव: । महामाया
भगवतीगुणातीतावरप्रदा॥४॥ ज्वा
लामुख्यांमहाजिह्वादेवउन्मत्तभैरव:
। अम्बिकासिद्धिदानाम्नीस्तनंजाल-
न्धरेमम ॥ ५ ॥ भीषणोभैरवस्तत्रदे
वीत्रिपुरमालिनी ॥ हार्दपीठंवैद्य-
नाथेवैद्यनाथस्तुभैरव: ॥६॥ देवताज
यदुर्गाख्या ॥ ७ ॥ नेपालेजानुनीम
म ॥ कपालीभैरव : श्रीमान्महा-
मायाचदेवता ॥ ८ ॥ मानसेदक्षह-
स्तोमेदेवीदाक्षायणीहर ॥ अमरोभै-
रवस्तत्रसर्वसिद्धिप्रदायक : ॥ ९ ॥
उत्कलेनाभिदेशश्चविरजाक्षेत्रमुच्य-
ते । विमलासामहादेवीजगन्नाथस्तु



भैरव : ॥ १० ॥ गण्डक्यांगण्डपात
श्चतत्रसिद्धिर्नसंशय: । तत्रसागण्ड-
कीचण्डीचक्रपाणिस्तुभैरव: ॥ ११ ॥
बहुलायांवामबाहुर्बहुलाख्यातुदेव-
ता । भीरुकोभैरवोदेव : सर्वसिद्धि
प्रदायक : ॥ १२ ॥ उज्जयिन्यांकूर्प
रञ्चमाङ्गल्य : कपिलाम्बर: । भैर
व : सिद्धिद: साक्षाद्देवीमङ्गलच-
ण्डिका ॥ १३ ॥ चट्टलेदक्षबाहुर्मेभै
रवश्चन्द्रशेखर: । व्यक्तरूपाभगवती
भवानीतत्रदेवताविशेषत : कलि-
युगेवसामिचन्द्रशेखरे ॥ १४ ॥ त्रि
पुरायांदक्षपादोदेवतात्रिपुरामता।
भैरवस्त्रिपुरेशश्चसर्वाभीष्टफलप्रद :
॥ १५ ॥ त्रिस्रोतायांवामपादोभ्राम
रीभैरवोम्बर : ॥ १६ ॥ योनिपीठं-
कामगिरौकामाख्यातत्रदेवता । य-
त्रास्तेत्रिगुणातीतारक्तपाषाणरूपि-
णी । यत्रास्तेमाधव : साक्षादुमान
न्दोथभैरव : । सर्वदाविहरेद्देवी-
तत्रमुक्तिर्नसंशय : ॥ तत्रश्रीभैरवी-
देवीतत्रचत्रदेवता।प्रचण्डचण्डि
कातत्रमातङ्गीत्रिपुराम्बिका ॥ बग-
लाकमलातत्रभुवनेशीसुधूमिनी।ए-
तानिवरपीठानिशंसन्तिवरभैरव ॥
एवंतादेवता: सर्वाएवंतेदशभैरवा:
॥ १७ ॥ सर्वत्रविरलाचाहंकामरू-
पेगृहेगृहे ॥ गौरीशिखरमारुह्यपुन
र्जन्मनविद्यते ॥ १८ ॥ करतोयां-

समासाद्यपूर्वच् क्षिखरवासिनी। शतयोजनविस्तीर्णं त्रिकोणं सर्वसिद्धिदम्। देवामरणमिच्छन्तिकिंपुनर्मानवादय:। भूतधात्रीमहामायाभैरव: चीरखण्डकः॥ युगाद्यायां महादेवदचाङ्गुष्ठंपदोमम॥ १६॥ नकुलीश: कालिपीठेदचपादाङ्गुलीषुच। सर्वसिद्धिकरीदेवीकालिकातत्रदेवता॥ २०॥ अङ्गुलीषुचहस्तस्यप्रयागेललिताभव:। जयन्त्यांवामजङ्घाचजयन्तीक्रमदीश्वर:॥ २१॥ भुवनेशीसिद्धिरूपाकिरीटस्थाकिरीटत:। देवताविमलानाम्नीसंवर्त्तोभैरवस्तथा॥ २२॥ वाराणस्यांविशालाचीदेवताकालभैरव:। मणिकर्णीतिविख्याताकुण्डलञ्चममश्रुते:॥ २३॥ कन्याश्रमेचपृष्ठंमेनिमिषोभैरवस्तथा। सर्वाणीदेवतातत्र॥ २४॥ कुरुचेत्रेच-गुल्फत:। स्थाणुर्नाम्न:चसाविचीदेवता॥ २५॥ मणिवेदकेमणिबंधेचगायत्रीसर्वानन्दस्तुभैरव:।२६ श्रीशैलेचममग्रीवा महालक्ष्मीस्तुदेवता। भैरव: शम्बरानन्दोदेशेदेशेव्यवस्थित:॥ २७॥ काञ्चीदेशेच-कङ्कालोभैरवोरुरुनामक:। देवतादेवगर्भाख्या॥ २८॥ नितम्ब: कालमाधवे॥ भैरवश्चासिताङ्गश्चदेवीकालीचमुक्तिदा। दृष्ट्वादृष्ट्वामहादेवंमन्त्रसिद्धिमवाप्नुयात्॥ कुजवारेभूततिथौनिशार्द्धेयस्तुसाधक:। नत्वाप्रदक्षिणीकृत्यमन्त्रसिद्धिमवाप्नुयात्॥ २६॥ शोणाख्याभद्रसेनस्तु। नर्म्मदाख्येनितम्बक:॥ ३०॥ रामगिरौस्तनान्यञ्चशिवानीचण्डभैरव:॥ ३१॥ वृन्दावनेकेशजालेउमानाम्नीचदेवता। भूतेशोभैरवस्तत्रसर्वसिद्धिप्रदायक:॥ ३२॥ संहाराख्यऊर्द्धदन्तेदेवीनारायणीशुची। अधोदन्तेमहारुद्रोवाराहीपञ्चसागरे॥ ३३॥ करतोयातटेतल्पंवामेवामनभैरव:॥ अपर्णादेवतातत्रब्रह्मरूपाकरोद्भवा॥ ३४॥ श्रीपर्वतेदचतल्पंतत्रश्रीसुन्दरीपरा। सर्वसिद्धिकरीसर्वासुन्दरानन्दभैरव:॥ ३५॥ कपालिनीभीमरूपावामगुल्फोविभासके॥ ३६॥ उदरञ्चप्रभासेमेचन्द्रभागायशस्विनी। वक्रतुण्डोभैरव॥ ३७॥ ऊर्द्धोष्ठोभैरवपर्वते। अवन्तीचमहादेवीलम्बकर्णस्तुभैरव:॥ ३८॥ चिबुकेभ्रामरी। देवीविकृताख्योजलस्थले॥ ३६॥ गण्डोगोदावरीतीरेविश्वेशीविश्वमातृका। दण्डपाणिर्भैरवस्तुवामगण्डेतुराकिनी॥ अमायीभैरवोवत्ससर्वशैलात्मकोपरि॥ ४०॥ रत्नावल्यांदचस्कन्ध: कुमारीभैरव: शिव:॥ ४१॥ मिथिलायामुमादेवीवामस्क

व्योमकेश्वर :॥ ४२ ॥ नालाहट्यां नलापातोयोगीशोभैरवस्तथा । तत्र साकालिकादेवी सर्वसिद्धिप्रदायिका ॥ ४३ ॥ कर्णाटैचैवकर्णीस्याभीरुर्नामभैरव : । देवताजयदुर्गाख्या नानाभोगप्रदायिनी ॥ ४४ ॥ वक्रेश्वरेमन : पातश्चक्रनाथस्तुभैरव : । नदीपापहरातत्रदेवीमहिषमर्दिनी ॥ ४५ यशोरेपाणिपद्मञ्चदेवतायशरेश्वरी । चण्डश्चभैरवोयत्रतत्रसिद्धिमवाप्नुयात् ॥ ४६ ॥ अट्टहासेचोष्ठपातोदेवीसाफुल्लरास्मृता । विश्वेशोभैरवस्तत्रसर्वाभीष्टप्रदायक : ॥ ४७ ॥ हारपातोनन्दिपुरेभैरवोनन्दिकेश्वर: । नन्दिनीसामहादेवीतत्रसिद्धिर्नसंशय : ॥ ४८ ॥ लङ्कायांनूपुरञ्चैवभैरवोराक्षसेश्वर: । इन्द्राक्षी देवतातत्रइन्द्रेणोपासितापुरा ॥ ४६ ॥ बिराटदेशमध्येतुपादाङ्गुलिनिपातनम् । भैरवोऽमृताख्यश्चदेवी तत्राम्बिकास्मृता ॥ ५० ॥ मगधे दक्षजङ्घामेव्योमकेशस्तुभैरव : । सर्वानन्दकरीदेवीसर्वकामफलप्रदा ॥ ५१ ॥ एतास्ते कथिता: पुत्रपीठनाथाधिदेवता : ॥ वैनाथेशंविनादेवंपूजयेत्पीठदेवताम् । भैरवोऽह्रियतेसर्वंजपपूजादिसाधनम् ॥ अज्ञात्वाभैरवंपीठंपीठशक्तिञ्चशङ्कर ॥ प्राणनाथनसिध्येतकल्पकोटिजपा दिभि : ॥ नदेयंपरशिष्येभ्योनिन्दकायदुरात्मने । शठायवञ्चकायेदं दत्त्वामृत्युमवाप्नुयात् ॥ दद्यात्शान्तायशिष्यायनैष्ठिकायशुचिप्रिये । साधकायकुलीनायमन्त्रीमन्त्रार्थसिद्धये ॥ ० ॥ इतितन्त्रचूड़ामणौशिवपार्वती संवादेएकपञ्चाशद्विद्योत्पत्तौपीठनिर्णय : समाप्त : ॥ अन्यानिपीठानिकालीपुराणे ॥ १८ । ५० । ६१ । अध्यायेवद्रष्टव्यानि ॥

पीठकलि: । पुं० नायकविशेषे । पीठमर्दे ॥

पीठमर्द : । पुं० नायकविशेषे । नर्मसचिवे ॥ तल्लक्षणं । कुपितस्त्रीप्रसादकइति । अस्योदाहरणं यथा । कोयंकोपविधि : प्रयच्छककरुणा गर्भंवचोजायतांपीयूषद्रवदीर्घिकापरिमलैऽऽरामोदितामेदिनी । आस्तांवास्पृहयाललोचनमिदं व्यावर्तयन्तीमुहुर्यस्मै कुप्यसितस्यसुन्दरितपोवृन्दालिमन्दामहेइति ॥ नाय्योक्त्या नायकप्रिये ॥

पीठसर्पक: । त्रि० ⎫
पीठविसर्पी । खञ्जे ⎬
पीठसर्पी । पांशुरे । पङ्गो ॥ ⎭

पीठस्थानम् । न० देवताविशेषाणांपूजास्थाने ॥

पीठिका । स्त्री० पातनिकायाम् ॥ क्रमे ॥

पीठी । स्त्री० पीठे । आसने । चौंकी

पीढा० पीठी० इत्यादिभाषा ॥
पीडनम् । न० अवमर्द्दे । देशादेरुपद्रवदाने । शस्यादिसम्पन्नदेशस्यपरचक्रेणपीडने ॥ दुःखे ॥ भरणंपोष्यवर्गस्यप्रशस्तं स्वर्गसाधनम् । नरकंपीडनेचास्यतस्माद्यत्नेनतंभरेत् ॥ मर्द्दने । टीपना फींचना भीचना इत्यादिभाषा ॥ यथा । गर्भोभिघातविशमाणनपीडनाद्यैःपक्वंद्रुमादिवफलंपततिचलोनेति ॥ पीडअवगाहने । ल्युट् ॥
पीडा । स्त्री० वाधायाम् । व्यथायाम् दुःखे ॥ पीडयति पीडअवगाहने । चु० । भिदाद्यङ् । णिजभावेगुरोश्च त्य : । टाप् । कृपायाम् ॥ शिरोमालायाम् । उत्तंसे ॥ सरलद्रुमे ॥ इतिमेदिनी ॥
पीडितम् । न० स्त्रीणांकरणे ॥ त्रि० । यन्त्रिते ॥ वाधिते ॥ मर्द्दिते ॥ पीडासञ्जातास्य । ता० इतच् ॥
पीत : । पुं० गौरे । हरिद्राभे । पीला इतिहल्दिया इतिचभाषा ॥ कुसुम्भे ॥ अङ्कोटे ॥ शाखोटे ॥ पुष्पराग ॥ न० पाने ॥ हरिताले ॥ त्रि० पीतवर्णवति ॥ कृतपाने ॥ पिवतिवर्णान्तरम् । औणादिकःक्तः ॥ पीयते चक्षुषायम् । पापाने । क्तः । घुमास्थे तीत्वम् ॥ पीतागावद्दूस्यत्वतु० पीतंपानम्० आसामस्ती तिमत्वर्थीयोऽर्श आद्यजित्यच्प्रत्ययोवोध्य : । यद्दोत्तरपदलोपोवद्रष्टव्य : । पीतोदका : पीता : । अत्रोदकस्यपीतत्वं गोषूपचर्यते ॥
पीतकम् । न० ताले । हरिताले ॥ अगुरुणि ॥ पद्मकाष्ठे ॥ पित्तले ॥ माक्षिके ॥ नन्दीवृक्षे ॥ कुङ्कुमे ॥ हरिद्रुवृक्षे ॥ किङ्किरातद्रुमे ॥ श्योनाके ॥ पीतशाले ॥ त्रि० पीतेनरक्ते ॥ पीतात्कम् ॥ यद्दा । स्वार्थे यावादिभ्य : कन् ॥ पीतचन्दने ॥
पीतकदली । स्त्री० स्वर्णकदल्याम् ॥
पीतकद्रुम : । पुं० हरिद्रुवृक्षे ॥
पीतकन्दम् । न० गर्जरे ॥
पीतकरवीरक : । पुं० पीतवर्णकरवीरपुष्पवृक्षे । पीतप्रसरे । सुगन्धिकुसुमे ॥
पीतकावेरम् । न० कुङ्कुमे ॥ पित्तले ।
पीतकाष्ठम् । न० पीतचन्दने ॥
पीतकीला । स्त्री० आवर्त्तकीलतायाम् ॥
पीतघोषा । स्त्री० पीतपुष्पघोषालतायाम् । धामार्गवे । महाजाल्याम् ॥
पीतचन्दनम् । न० पीतवर्णचन्दने । कालीयके । माधवप्रिये । कालानुसार्य्यके ॥ हरिद्रायाम् ॥
पीतचम्पक : । पुं० प्रदीपे ॥ पीतवर्णचम्पकपुष्पवृक्षे ॥
पीततण्डुल : । पुं० कङ्गन्याम् ॥

पीततण्डुला । स्त्री० बृहतीप्रभेदे । सविकावृत्ते । पुत्रप्रदायाम् । बहुफलायाम् ॥

पीततुण्ड : । पुं० कारण्डवखगे ॥ मुगृहे ॥

पीततैला । स्त्री० महाज्योतिष्मत्याम् ॥ ज्योतिष्मतीलतायाम् ॥

पीतदारु : । न० देवदारुणि ॥ पीतञ्चतद्दारुच ॥ हरिद्रौ ॥ सरले ॥

पीतदुग्धा । स्त्री० हेमक्षीर्याम् ॥ पीतंदुग्धमस्या : ॥ धेनुष्यायाम् ॥

पीतद्रु : । पुं० दारुहरिद्रायाम् ॥ पीतंद्रवति । द्रुगतौ । मितद्वादित्वाट्डु : ॥ पीतश्चासौद्रुश्चवा ॥ सरलवृत्ते ॥

पीतन : । पुं० आम्रातके ॥ प्लक्षे ॥ न० पीतदारुणि ॥ कुङ्कुमे । हरितालै ॥ पीतंकरोति । तत्करोतीति णिच् । बहुलमन्यत्रापीतियुच् । ल्युर्वा ॥ यद्वा । पीयतेऽनेन पीङ्पाने । वा० तनन्० गुणाभावश्च ॥ पीतंवर्णनयतिवा । नयगतौ । पीत्वा । अन्येभ्योपीतिड : ॥

पीतनक : । पुं० आम्रातके ॥

पीतनी । स्त्री० शालपर्ण्याम् ॥

पीतपर्णी । स्त्री० वृश्चिकाल्याम् ॥

पीतपादा । स्त्री० शारिकापक्षिणि ॥ पीतचरणयुक्ते ॥

पीतपुष्प : । पुं० चम्पकवृत्ते ॥ कर्णिकारे ॥ पिण्डीतकप्रभेदे ॥ पीतभिण्ड्याम् ॥ कूष्माण्डे ॥ पीतानि पुष्पाण्यस्य ॥ न० । आहुल्यवृत्ते ॥ हरिद्राभकुसुमे ॥

पीतपुष्पा । आढक्याम् ॥ इन्द्रवारुण्याम् ॥ झिञ्झिरिष्टाक्षुपे ॥ कर्कोटक्याम् ॥

पीतपुष्पी । स्त्री० शङ्खपुष्प्याम् ॥ पीतवाम्लाके ॥ सहदेव्याम् ॥ महाकोशातक्याम् ॥ त्रपुष्याम् । राजकोशातक्याम् ॥

पीतफल: । पुं० शाखोटवृत्ते ॥ कर्मरङ्गवृत्ते ॥ पीतानिफलान्यस्य ॥

पीतफलक : । पुं० शाखोटवृत्ते ॥

पीतवालुका । स्त्री० हरिद्रायाम् ॥ पीतवर्णसिकतायाम् ॥

पीतभद्र : । पुं० किङ्किराते ॥

पीतभृङ्गराज : । पुं० स्वर्णभृङ्गारे । हरिप्रिये ॥

पीतमणि : । पुं० पुष्परागे ॥ गोमेदे ॥

पीतमस्त: । पुं० खगान्तरे । कलिकारे ॥

पीतमाक्षिकम् । न० मधुप्रभेदे ॥

पीतमुण्ड: । खगविशेषे । कलिकारे ॥

पीतमुद्ग : । पुं० वर्णौ । प्रस्तिले । शारदे । सोनामूंगा इ० भा० हू० हि० ॥

पीतमूलकम् । न० गर्जरे ॥ इ० रा० नि० ॥

पीतयूथी । स्त्री० स्वर्णयूथ्याम् । सोनजुही इ० भा० ॥

पीतरक्तः । पुं० पुष्परागमणौ ॥
पीतरत्नम् । न० गोमेदमणौ ॥
पीतरागः । पुं० पीतवर्णे ॥ किञ्जल्के ॥ सिक्थके ॥ त्रि० । पीतवर्णवति
पीतरोहिणी । स्त्री० काश्मर्याम् ॥
पीतलः । पुं० पीतवर्णे ॥ त्रि० तद्वति ॥
पीतलकम् । न० पित्तले ॥ इ० रा० ॥
पीतलोहम् । न० पित्तलभेदे ॥
पीतवासाः । पुं० श्रीकृष्णे ॥ त्रि० पीतवस्त्रवति ॥
पीतवीजा । स्त्री० मेथिकायाम् । पीतानिबीजानियस्याः ॥ त्रि० पीतवर्णबीजयुक्ते ॥
पीतवृक्षः । पुं० श्योनाकप्रभेदे ॥ सरलवृक्षे ॥
पीतशालः । पुं० असनवृक्षे ॥
पीतसारः । पुं० मलयजे ॥ गोमेदकमणौ ॥ तुरुष्के ॥ बीजके ॥ अङ्कोठवृक्षे ॥ न० हरिचन्दने ॥
पीतसारकः । पुं० सर्जकवृक्षे विजयसारइतिख्याते ॥ पीतः सारोऽस्य ॥ निम्बवृक्षे ॥ अङ्कोठवृक्षे ॥ इ० रा० नि० ॥
पीतसारि । न० सौतोञ्जने ॥
पीतसालकः । पुं० सर्जकवृक्षे । असने । बन्धूके । विजयसार० इ० ख्याते ॥ पीतः सारोऽस्य । रलयोरेकत्वम् ॥
पीतस्फटिकः । पुं० पुष्परागमणौ ॥

पीता । स्त्री० हरिद्रायाम् ॥ दारुहरिद्रायाम् ॥ महाज्योतिष्मत्याम् ॥ कपिलशिंशपायाम् ॥ प्रियङ्गौ ॥ गोरोचनायाम् ॥ अतिविषायाम् ॥ पीयतेस्म । पीङ्पाने० पापानेवा । कर्मणिक्तः । घुमास्थे तीत्वम् ॥
पीताङ्गः । पुं० श्योनाकप्रभेदे ॥
पीताब्धिः । पुं० अगस्त्यमुनौ ॥ पीतःअब्धिर्येनसः ॥
पीताभम् । न० कालीयके । हरिचन्दने ॥ पीताआभायस्यतत् ॥ त्रि० । पीतकान्तौ ॥
पीताम्बरः । पुं० अच्युते । विष्णौ ॥ पीतमम्बरंयस्यसः ॥ शैलूषे ॥ न० हरिद्राभवसने ॥ पीतवर्णकौषेयवस्त्रे ॥ त्रि० पीतवस्त्रयुक्ते ॥
पीताम्बरा । स्त्री० बगलादेव्याम् ॥
पीताश्मा । पुं० पुष्परागमणौ ॥
पीतिः । पुं० घोटके । तुरगे ॥ इत्यमरः ॥ पिबति । पापाने । क्तिच् । घुमास्थेतीत्वम् ॥
पीतिः । स्त्री० पाने । द्रवद्रव्यस्यगलाधःकरणे ॥ इतिमेदिनीकरः । पानम् । पा० । स्त्रियांक्तिन् । घुमास्थे तीत्वम् ॥ शुण्डायामिति शब्दचन्द्रिका ॥
पीतिका । स्त्री० पीतयूथ्याम् ॥ दारुहरिद्रायाम् ॥ हरिद्रायाम् ॥
पीतुः । पुं० । सूर्ये ॥ वह्नौ ॥

पिबति । पा० । प : किच्चेति तुन् ॥

पीथ : । पुं० अर्के ॥ अग्नौ ॥ काले ॥ न० । जले ॥ घृते ॥ पिबति । पा० । पातृतुदीत्यादिनाथक् ॥

पीथि : । पुं० घोटके ॥

पीन : । त्रि० स्थूले ॥ प्यायतेस्म । ओप्यायीवृद्धौ । गत्यर्थेतिक्त : । ओदितश्चेतिनत्वम् । प्याय : पीभाव : ॥

पीनस : । पुं० रोगविशेषे । नासास्रावे । प्रतिश्याये ॥ अस्यनिदानम् ॥ यथा । आनह्यतेयस्यविशुष्यतेचप्रक्लिद्यतेधूप्यतिचैवनासा । नवेत्तियोगन्धरसांश्चजन्तुर्जुष्टंव्यवस्येत्खलुपीनसेन ॥ तच्चानिलश्लेष्मभवंविकारंब्रूयात्प्रतिश्यायसमानलिङ्गम् ॥ अस्यौषधम् । यथा । पिप्पलीत्रिफलाचूर्णंमधुसैंधवसंयुतम् । सर्वरोगज्वर श्व.सशोषपीनसहृद्भवेत्इति ॥ पीनंस्यति० सायतिवा । षोअन्तकर्म्मणि० पैञ्च येवा । आतोनुपेतिक : ॥

पीनसा । स्त्री० कर्कट्याम् ॥ इ० रा० नि० ॥

पीनसी । त्रि० पीनसरोगिणि ॥

पीनस्कन्ध : । पुं० महिषे ॥

पीनोघ्नी । स्त्री० पीवरस्तन्याङ्गवि ॥ पीनमूधोऽस्या : । ऊधसोऽनङ् । बहुव्रीहेरूधसोङीष् ॥

पीपरि : । पुं० कृष्णप्लक्षे ॥ इ० रा० नि० ॥

पीयु : । पुं० काले ॥ रवौ ॥ घूके । पेचके ॥ सुवर्णवायसयोरिति दीक्षित : ॥ पिबति । पा० । खरुशङ्कुपीयुनीलङ्गुलिगु० इतिकुप्रत्यय : धातोरोत्त्वंयुगागमश्च ॥

पीयूषम् । न० अमृते ॥ अमृतायाम् । गुडूच्याम् ॥ यथा । पीयूषमोक्षप्रलोचनमालाकरायवा इ० लोलिम्बराज : ॥ दुग्धे ॥ पुं० न० नव्यसूतधेनो : सप्तदिवसावधिक्षीरे । पेयूषे ॥ पीयते० पीयूयते० अनेनवा । पीय इ० सौत्रो धातु : प्रीतौ । पीयेरूषन् ॥

पीयूषमहा : । पुं० चन्द्रे ॥ इ० श० रत्नावली ॥

पीयूषरुचि : । पुं० चन्द्रे ॥ त्रि० । अमृतप्रिये ॥

पीलक : । पुं० पिपीलिकायाम् ॥ इ०हेमचन्द्र : ॥

पीलु : । पुं० प्रसूने ॥ परमाणौ ॥ मतङ्गजे ॥ तालस्यास्थिखण्डे ॥ काण्डे । वाणे ॥ व्रजादिदेशेषु खनाम्नाप्रसिद्धे पादपविशेषे । गुडफले ॥ कृमिविशेषे ॥ पुष्पद्रुमे ॥ पीलयति । पीलप्रतिष्टम्भे । मृगय्वादित्वात्कु : ॥ न० पीलुवृक्ष

स्यफले । पीलु० इ० भा० ॥ पीलु श्लेष्मसमीरघ्नं पित्तलंभेदिगुल्मनुत् । स्वादुतिक्तञ्चयत्पीलुन्नात्युष्णं त्रिदोषहृत् ॥

पीलुकः । पुं० मधूकप्रभेदे ॥

पीलुकुणः । पुं० पीलूनांपाके ॥ तस्य पाकमूलइत्यादिनाकुणप्प्रत्ययः ॥

पीलुनी । स्त्री० मूर्वायाम् ॥

पीलुपत्रः । स्त्री० लताविशेषे । मोरटायाम् ॥

पीलुपर्णी । स्त्री० विम्बिकायाम् ॥ मूर्वायाम् ॥ ओषधिभिदि ॥ पीलोरिवपर्णान्यस्याः ॥ पाककर्णेतिङीष् ॥

पीवा । त्रि० स्थूले ॥ प्यायते । प्यैङ्वृद्धौ । ध्याप्योः सम्प्रसारणं चेतिक्वनिप् ॥

पीवरः । त्रि० स्थूले । मोटा इति भाषा ॥ प्यायते । प्यैङ् । छित्वरछत्वरेतिवरच् प्रत्ययान्तो निपातितः ॥ पुं० कूर्मे ॥

पीवरस्तनी । स्त्री० स्थूलस्तन्यां गवि । पीनोध्न्याम् ॥ पीनस्तनविशिष्टायांनार्याम् ॥ पीवराः स्तनाः पीवरौवास्तनौयस्याः स्वाङ्गाच्चोपसर्जनादितिङीष् ॥

पीवरा । स्त्री० अश्वगन्धायाम् ॥ शतावर्याम् ॥ स्थूलायाम् ॥

पीवरी । स्त्री० शालपर्ण्याम् ॥ शतमू-

-ल्याम् ॥ प्यायती । प्यैङ् । ध्याप्योः सम्प्रसारणञ्चेतिक्वनिप् स्त्रियांव नोरचेतिङीवौ ॥

पुंड्ढ: । पुं० गन्धमृगविशेषे ॥

पुंश्चलः । पुं० व्यभिचारिणि ॥ यथा ॥ ललाटोपमतामेतिस्त्रोरिवास्युःशतव र्षिणाम् । नृपत्वं स्याद्यतस्त्वभिरायुः पश्चनवस्थथ ॥ अरेखिणायुर्नवतिर्विच्छिन्नाभिश्चपुंश्चलः ॥ इ०गरुडपु० ॥

पुंश्चली । स्त्री० व्यभिचारिण्याम् । अतिचञ्चलायाम् । असत्याम् ॥ तस्याश्चरित्रदोषायथा । अहोकोवेद भुवनेदुर्ज्ञेयंपुंश्चलीमनः । पुंश्चल्यां योहिविश्वस्तोविधिनासविडम्बितः ॥ वह्निष्कृतप्रयशसाधर्म्मेणास्वकुलेनच । वाञ्छितं नूतनंप्राप्य विनश्यतिपुरातनम् ॥ सदास्वकर्म्मसाध्यासाकीवातस्याः प्रियोऽप्रियः । दैवेकर्म्मणि पैत्रेचपुत्रेवस्त्रौनभर्त्त-रि । दारुणंपुंश्चलीचित्तं सदाशृङ्गारकर्म्मणि । प्राणाधिकंरतिज्ञंसाऽस्मृतइत्याहिपुंश्चली ॥ रत्नप्रदंरतस्य-विज्ञंविषइत्याहिपश्यति । सर्वेषां-स्थलमस्त्येवपुंश्चलीनांनकुत्रचित् ॥ दारुणापुंश्चली जातिर्नरजातिभ्य-एवच ॥ निष्कृतिः कर्मभोगान्ते-सर्वेषामस्तिनिश्चितम् ॥ नपुंश्चली नाविप्रेन्द्रयावच्चन्द्रदिवाकरौ । अ-न्यासांकामिनीनाञ्चकीटंहन्तुञ्चया

दया । सामास्तिपुंश्चलीमाक्षकान्तं हन्तुंपुरातनम् ॥ रतिसंनूतनंप्रा-प्यविषतुल्यंपुरातनम् । कान्तंदृष्ट्वा ... पृथिव्यांयानि ... भारते । तिष्ठन्तितास्तीमपरा : पा पिष्ठा : सन्निकेचन ॥ (*+*) ॥ पुंश्चलीपरिपक्वान्नंसर्व्वंपातकमिश्रितम् । दैवेकर्म्मणिपैत्रेचदेयंनचत-थाजलम् ॥ अन्नंविष्ठापयोमूत्रंपुंश्चलीनाञ्चनिश्चितम् । दत्वापितृभ्यो देवेभ्योभुक्त्वाचनरकंव्रजेत् ॥ शतव-र्षंकालसूत्रेपचत्येवमुदारुणे । घोरा न्धकारेक्षमयस्तंदशन्तिदिवानिश-म् ॥ पुंश्चल्यन्नञ्चयोभुङ्क्तेदैवाद्य द्विनराधम : । सप्तजन्मकृतंपुण्यंत स्यनश्यतिनिश्चितम् ॥ आयु : श्री-यशसांहानिरिहलोकेपरत्रच । त-स्मात्यत्नात्परित्याज्यंपाकन्नांचंकालचक्र-म् ॥ ( *+*+ ) ॥ पुंश्चलीदर्शने पुण्यंयात्रानिष्फलंभवेद्ध्रुवम । स्पर्शने चमहापापंतीर्थस्नानाद्विशुध्यति ॥ स्नानंदानंव्रतंश्च व्रजपञ्चदेवपूजनम् । निष्फलंपुंश्चलीनाञ्चभारतेजीवनंतृ-था ॥ (*०+०*) ॥ उपस्थितम-कामपुंश्चलीत्यागिदोषोयथारहस्युप स्थितांकामात्पुंश्चलींचजितेन्द्रिय: परित्यजेद्धर्म्मभयाद्धर्मान्नरकंव्रजे त् ॥ (+०*०+) ॥ सर्वदैवतस्था-नपस्विन्यास्यत्वंगर्हितत्वंचयथा । उपस्थिताचयायोषिद्दत्याज्यारागि णामपि । श्रुतौश्रुतमितित्याज्यास र्वदैवतपस्विनाम् ॥ अहोसर्वा : च रित्राश्चाःपुंश्चलीचविशेषत : । ८ नाद : प्राणयज्ञमानानिनीदु : ख दायिनी ॥ स्वकार्यतत्पराजन्यतत्प रकार्यविघातिनी । निष्ठुरानरघा तिन्य : सर्वापद्दीजरूपिणी ॥ विद्यु ह्दीप्तिर्जलेरेखालोभान्नेनीयथाभवे त् । परद्रोहाद्यथासम्पत्कुलटाप्रेम तत्परम् ॥ सर्वेभ्योहिंसजन्तुभ्योवि पद्दीजासदैवसा । योविश्वसितत्तां-सम्मूढोविपत्तस्यपदेपदे ॥ इतिब्र-ह्मवैवर्त्तेश्रीकृष्णजन्मखण्डे २३ । २४ । ७२ अध्याय: ॥ पुंसोभर्त्तु: सकाशात्चलति० पुरुषान्तरंगच्छति । चलगतौ । अच् । गौरादि : ॥

पुंश्चिह्नम् । न० शिश्ने ॥

पुंसवनम् । न० दुग्धे । गर्भे ॥ सं-स्कारविशेषे ॥ द्वितीयेवातृतीयेवा मासिपुंसवनंभवेत् । व्यक्तगर्भेभवे त्कार्यंसीमन्तेनसहाथवा ॥ पुमान् सूयतेऽनेन । पुञ्० । ल्युट् ॥

पुंस्त्वम् । न० रेतसि । शुक्रे ॥ पुरुष-त्वे ॥

पुंस्त्वविग्रह : । पुं० भृङ्गे ॥

पुक्कस : । पुं० श्वपचे ॥ अधमे ॥ पु त्कुत्सितम् पुण्यंवापुमांसंवाकस

ति । कसगतौ । अच् । मू० कोवा ॥ पृ० । निषादाच्छूद्रायांजाते । जातोनिषादाच्छूद्रायांजात्याभवति पुक्कस : ॥

पुक्कसी । स्त्री० कालिकायाम् ॥ नील्याम् ॥

पुङ्ख : । पुं० मङ्गलाचारे ॥ शराङ्गे । बाणमूले ॥ श्येने ॥

पुङ्खानुपुङ्खम् । न० मङ्गलामङ्गले ॥ यथा । पुङ्खात् । इतिप्रयोगस्तत्कम् परोपिधौरोनमुद्योत मुकुन्दपदार विन्दे । सङ्गीतनृत्यगतितालवशंगतापि मौलिस्थकुम्भपरिरक्षणधीर्न टीवति ॥

पुङ्ग : । पुं० न० पुञ्जे ॥ इतिशब्दचन्द्रिका ॥

पुङ्गल : । पुं० आत्मनि ॥ इतिभूरिप्रयोग : ॥

पुङ्गव : । पुं० बलीवर्दे । वृषे ॥ पुमांश्चासौगौश्च । गोरतद्धितलुकीति टच् ॥ औषधमात्रभेदे ॥ उत्तरपदस्थ : श्रेष्ठे ॥ ऋषभोऽर्थे ॥ महोच ॥ पुरुषर्षभे ॥ पुमान्गौरिव । उपमितिसमास: । पूर्ववत्टच् ॥

पुच्छ : । पुं० पश्चात्प्रदेशे ॥ पुं० न० लाङ्गूले ॥ न० कलापे । समूहे । लोमवल्लाङ्गूले ॥ पुच्छति । पुच्छप्रमादे । प० अच् । पृ० । पुच्छभाण्डतिनिपातनाद्वायसाप : ॥

लौचटकानां० इतिभा० ॥

पुच्छटा । स्त्री० । लक्ष्मणाकन्दे ॥ इ० राजनिर्घण्ट : ॥

पुच्छी । पुं० कुक्कुटे ॥ अर्कवृक्षे ॥ त्रि० । लाङ्गूलवति ॥

पुञ्ज : । पुं० राशौ । धान्याद्युच्छितवृन्दे ॥ पिञ्जयति० पिञ्ज्यतेवा । पिजिहिंसा बलादाननिकेतनेषु । अच्० वञ्वा । पृ० । यद्वा । उन्नम्याप्रासंजयति । बाल्यं० ड : ॥

पुञ्जाख्यजी । स्त्री० अप्सरोविशेषे ॥

पुट : । पुं० बालपल्लवे ॥ न० । जातीफले ॥ उपर्यधोभवापन्नसंयुक्तमृदादिकपालद्वयरूपौषधपाकपात्रे ॥ धात्वादिमारणोपयुक्तान्पुटप्रकारानाहरसप्रदीप : । लोहादेरपुनर्भाव स्तद्गुणत्वं गुणाढ्यता । सलिलेतरणञ्चापिततमिद्धि : पुटनाद्भवेत् ॥ गम्भीरेविस्तृतेकुण्डे द्विहस्ते चतुरस्रके । वनोपलसहस्रेणापूरितेपुट मौषधम् । कोष्ठिरुद्धं प्रयत्नेनगोविछोपरिधारयेत् । वनोपलसहस्राद्धं कोष्ठिकोपरिनि : क्षिपेत् ॥ वह्निंविनि : क्षिपेत्तवमहापुटमिति स्मृतम् ॥ १ ॥ कोष्ठंभूषा । गोविष्ठा० गोइठा ॥ ✤ ॥ सपादहस्तमानेनकुण्डे निम्ने तथायते । वनोपलसहस्रेणापूर्णमध्ये विधारयेत् ॥ पुटनद्रव्यसंयुक्ताको

ष्ठिकांमुद्रितांमुखे । अधोर्द्धानिकर गडानिअर्द्धान्यु परिनि : क्षिपेत् ॥ एतद्गजपुटंप्रोक्तंख्या सर्वपुटोत्तमम् । हस्तश्चतुर्विंशत्यङ्गुलप्रमाणः समपादः तेनत्रिंशदङ्गुलप्रमाणेनेत्यर्थः अतएवोक्तम् । साधारणेन राङ्गुल्यात्रिंशदङ्गुलकोगजः । करगडानि० आरण्यागोमयाः । इ० गजपुटम् ॥ २ ॥ ( ++++ )— अरत्निमात्रकेकुण्डेपुटंवाराहमुच्यते ॥ ३ ॥ वितस्तिमात्रके खातकथितंकौकुटंपुटम् ॥ ४ ॥ अरत्निस्तु निष्कनिष्ठेनमुष्टिना । इत्यमरः । निसतकनिष्ठयामुष्ट्योपलक्षितोहस्तोऽरत्निरित्यर्थः ॥ षोड़शाङ्गुलकेखाते कस्यचित्कौकुटंपुटम् ॥ यत्पुटंदीयतेखातेऽष्टसङ्ख्यैर्वनोपलैः । कपोतपुटमेतत्तु कथितंपुटपण्डितैः ॥ ५ ॥ गोष्ठांतर्गोखुरक्षुण्णंशुष्कचूर्णितगोमयम् । गोवरंतत्समाख्यातंवरिष्ठंरससाधने ॥ वृहद्भाण्डस्थितैर्यत्रगोवरैर्दीयते पुटम् । तद्गोवरपुटंप्रोक्तंभिषग्भिः सूतभस्मकृत् ॥ ६ ॥ वृहद्भाण्डेतुषैः पूर्णे मध्ये मूषांविधारयेत् । क्षिप्त्वाग्निंमुद्रयेद्भाण्डं तद्भाण्डपुटमुच्यते ॥ ७ ॥ इति भावप्रकाशः ॥ पुं० । न० । अश्वखुरे । ३ ॥ आच्छादने ॥ पत्रादिरचितेपुष्पाद्याधारे । पुटा०

इति० टीना० इतिभा० । मिश्र: संश्लेषे ॥

पुटकम् । न० पद्मे ॥ इतिशब्द० ॥

पुटकन्दः । पुं० कोलकन्दे ॥

पुटकिनी । स्त्री० पद्मिन्याम् ॥ पुटकानिसन्त्यत्रपुष्करादित्वादिनिः ॥

पुटग्रीवः । पुं० गर्गर्याम् ॥ ताम्रकुम्भे ॥

पुटपाकः । पुं० पुटान्तरितौषधपचने ॥ अस्यविधिर्यथा ॥ पुटपक्वस्यकल्कस्यस्वरसोगृह्यतेयतः । अतस्तुपुटपाकानांयुक्तिरत्रोच्यतेमया ॥ पुटपाकस्यपाकोयं लेपस्याङ्गारवर्णता । लेपञ्चद्व्यङ्गुलं स्थूलं कुर्याद्द्व्यङ्गुलिमात्रकम् । काश्मरीवटजंब्वादिपत्रैर्वेष्टनमुत्तमम् । पलमात्रोरसोग्राह्यः कर्षमात्रंमधुक्षिपेत् । कल्कचूर्णद्रवाद्यास्तुदेयाः कोलमितावुधैः ॥ ०० ॥ अपिच । दे बिल्वे स्निग्धमांसस्यपरंद्रव्यं पलंमतम् । द्रवस्यकुडवोन्मानंसर्वमेकत्रपेषयेत् ॥ तदेकत्रसमालोड्यपत्रैः सुपरिवेष्टितम् । पुटपाकविधानेन तत्पक्त्वातद्रसंवुधः ॥ तर्पणोक्तेन विधिनायथावदवधारयेत् । दृष्टिमध्ये निषिच्यः स्यान्नित्यमुत्तानशायिना ॥ स्नेहनोलेखनश्चैवरोपणश्चेतिसत्रिधा । हितः स्निग्धोविरूढस्यस्निग्ध

स्यसतुलेखन: ॥ दृष्टेर्वलार्थमितर: पित्तास्रग्व्रणवातनुत् । इतरोरोप ण: । स्रे हमांसवसामज्जमेद: स्याद्वीषधै: कृत: ॥ स्नेहन: पुटपाक: स्य द्धार्योद्वे वाकशतेतुस: । वाक्शतंकोटिकाशतम् । जाङ्गलानांयकृन्मांसैर्लेखनद्रव्यसंयुतै: ॥ कृष्णालोहरजस्ताम्रशङ्खविद्रुमसिन्धुजै: । समुद्रफेनकासीस स्रोतोजदधिमस्तुभि: ॥ लेखनोवाक्कृतंतस्य परंधारणमिष्यते । स्तन्यजाङ्गल मधुाज्यतिक्तकद्रव्यभावित: ॥ लेखनात्त्रिगुणोधार्य: पुटपाकस्तुरोपण: । तिक्तकद्रव्याण्याह । निम्बामृतावृषपटोलनिदिग्धिकाभि: स्यात्पञ्चतिक्तकमितिप्रथितोगुणीयम् । आचरेत्तर्पणोक्तान्तुक्रियांव्यापत्तिदर्शने ।व्यापत्तिदर्शने। मिथ्याकृतपुटपाकजनितव्याधिदर्शने। तेजांस्यनिलमाकाशमादर्शंभास्वरांश्च । नेत्रे ततर्पितेनेत्रे यश्चवापुटपाकवान् ॥ इति भावमिश्र: ॥

पुटपाकजम् । न० मांसस्यव्यञ्जनान्तरे ॥ गुरुयन्त्रेणयत्पक्वं तज्ज्ञेयं पुटपाकजम् ॥

पुटभेद: । पुं० नदीवक्रे ॥ पत्तने । नगरे ॥ आतोद्ये ॥ तटिनीमुखे ॥ चक्राकारिजलानामधीयाने ॥ पुटंसंश्लिष्टंभिनत्ति । भिदिर० । कर्मण्यण् ॥ पाषाणविशेषे ॥ पुटै:पुटैर्भेद्यते इ० ॥

पुटभेदक: । पुं० पाषाणविशेषे ॥

पुटभेदनम् । न० पत्तने । स्थानीये । नगरे ॥ पुटानिपात्राणिभिद्यन्तेऽत्र । भिदिर्० । अधिकरणेल्युट् । युज्वा ॥

पुटालु: । पुं० शूकरकन्दे । कोलकन्दे ॥

पुटिका । स्त्री० एलायाम् ॥

पुटितम् । न० अहिपुटे ॥ हस्तपुटे । त्रि० । पाटिते ॥ स्यूते ॥

पुटी । स्त्री० कौपीने ॥ आच्छादने॥ पत्रादिनिर्मितपुष्पाद्याधारे । पुडिया० पुडी० इ० भा० ॥ गौ० ङीष् ॥

पुटोटजम् । न० श्वेतच्छत्रे ॥ इ० त्रिकाण्डशेष: ॥

पुटोदक: । पुं० नारिकेले ॥ इ० हा०

पुण्डरी । पुं० हस्तिनांमनुष्याणाञ्चचक्षुष्ये चुट्रेविटपे । शालपर्णीपत्रसमानपत्रे । पौण्डरीके । चक्षुष्ये । सालपुष्पे ॥ इ० शब्द० ॥

पुण्डरीकम् । न० सिताम्भोजे ॥ सितच्छत्रे ॥ भेषजे ॥ पुं० । व्याघ्रे । अग्निदिङ्नागे ॥ कोषकारान्तरे ॥ सहकारे ॥ गणधरे ॥ राजिलाहौ ॥ गजज्वरे ॥ मदनकवृक्षे ॥ कमण्डलौ ॥ श्वेतकर्णे ॥ शाले

जातिविशेषे ॥ कुष्ठविशेषे ॥ तल्लक्षणम् । सश्वेतं रक्तपर्यन्तं पुण्डरीकदलोपमम् । सोत्सेधञ्च सरागञ्च पुण्डरीकं प्रचक्षते इति० । पुण्डरीकवर्णयोगात् पुण्डरीकः । अर्श आद्यच् ॥ पुण्डयति । मडि भूषायाम् । पुडि च । फर्फरीकादयश्चेत्यरीकन् ॥

पुण्डरीकाक्षः । पुं० विष्णौ । नारायणे । हृत्पुण्डरीके प्रकाशमाने वासुदेवे ॥ तस्य स्मरणादेव शुचिर्भवति । यथा । अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा । यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिरिति स्मृतिः ॥ पुण्डरीकमिवाक्षिणी यस्य । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् । पुण्डरीकेषु अक्षि यस्य वा ॥ पुण्डरीकस्थाने अक्षि यस्येति वा ॥ अयमर्थस्तु हरिस्ते साहस्रमिति पुष्पदन्तस्तोत्रे व्यक्तः ॥ यद्वा पुण्डरीकलोकात्मकमक्षति । अक्षू व्याप्तौ । कर्मण्यण् ॥ तत्क्षायति वा । क्षै क्षये । आतोऽनुपसर्गे इति कः । अन्येषामपीति दीर्घः । आङ्प्रश्लेषो वा । तत्समुपैति मूलविभुजेति कः ॥ न० । पुण्डर्ये ॥

पुण्डरीयकम् । न० प्रपौण्डरीके । स्थलपद्मे ॥

पुण्डर्यम् । न० प्रपौण्डरीके ॥ पुण्डयति । पुडि खण्डने । अच् । पुंडस्यार्य्यः प्रधानम् । शकन्ध्वादिः

पुण्ड्रः । पुं० दैत्यविशेषे ॥ इक्षुप्रभेदे । पौंडा० इ० भा० ॥ अतिमुक्तके चित्रे ॥ क्रमौ ॥ पुण्डरीके ॥ तिलके । पुष्पवृक्षविशेषे ॥ ह्रस्वपत्रे ॥ देशविशेषे तु पुण्ड्राः ॥ न० । जई पुण्ड्रादौ ॥ पुण्डति । पुडि खण्डने । स्फायितञ्चीति रक् ॥

पुण्ड्रकः । पुं० अतिमुक्ते । वासन्त्याम् । माधवीलतायाम् । तिलकवृक्षे । स्थिरपुष्पायाम् ॥ इक्षुप्रभेदे । पौण्डा इ० भा० ॥ पुण्डति० पुण्डते वा । मुडि बन्धने० पुडि च । स्फायीति रक् । स्वार्थे कन् ॥

पुण्ड्रकेलिः । पुं० इभे । हस्तिनि ॥ पुण्ड्रेषु केलिर्यस्य ॥

पुण्यम् । न० धर्मे ॥ सुकृते ॥ यथा । पण्डितेनापि किन्तेन समर्थेन च देहिनाम् । यत्पुण्यं भारमुद्वोढुमशक्तः पारलौकिकमिति ॥ तस्माद्यतेत पुण्येषु य इच्छेन्महतीं श्रियमिति ॥ विधिविहिते ॥ सदाचारे ॥ शोभनकर्मणि ॥ त्रि० । शोभने । मनोरमे । सुन्दरे ॥ पावने ॥ शुद्धे ॥ पुनाति० पूयतेऽनेन वा । पूञ् । पूञो यण्णुग्घ्रस्वश्चेति यत् णुक् ह्रस्वश्च ॥ यद्वा । पुणति । पुण कर्मणि शुभे । इगुपधेति कः । पुणे साधुः । तत्

साधुरितियत् ॥ दयासमं नास्तिपुण्यं पापं हिंसासमं नहीतिदेवीभागवतम् ॥

पुण्यकम् । न० विधिविहितेउपवासकृच्छ्रचान्द्रायणप्राजापत्यनक्तभोजनादिव्रते ॥ पुण्यमेव । संज्ञायांकन् ॥

पुण्यकफलम् । न० ब्रह्मवैवर्तोक्ते । स्त्रीकर्त्तव्येनियमविशेषे ॥

पुण्यकृत् पुं० अश्वमेधादियाजिनि ॥ आश्रमकर्म्मकृति ॥ त्रि० पुण्यकर्त्तरि । धार्मिके ॥ पुण्यंकृतवान् सुकर्मपापमन्त्रपुण्येषुकृञः इतिकृञः क्विप् ह्रस्वस्येतितुक् ॥ पुण्यंकारयतिवा । बहुलमन्यत्रापीतिणिलुक् ॥

पुण्यगन्धः । पुं० चम्पके । पुण्योगन्धोऽस्य ॥

पुण्यजनः । पुं० यक्षे ॥ राक्षसे ॥ मङ्गलादिवर्द्धिकदलक्षणयापुण्यश्चासौजनश्च ॥ धार्मिके ॥ पुण्याश्रयोजनः । मध्यमपदलोपीसमासः ।

पुण्यजनेश्वरः । पुं० कुबेरे । त्र्यम्बकसखे ॥ पुण्यजनाः यक्षाः तेषामीश्वरः ॥

पुण्यतृणम् । न० श्वेतकुशे ॥

पुण्यदर्शनः । पुं० चाषपक्षिणि ॥

पुण्यफलः । पुं० वनविशेषे । लक्ष्म्यारामे ॥ न० । धर्म्मजन्यफले ॥

पुण्यभाक् । त्रि० पुण्यविशिष्टे ॥

पुण्यभूः । स्त्री० आर्यावर्ते ॥ पुण्यस्यभूः । पुण्याचासौभूमिश्चेतिवा ॥

पुण्यभूमिः । स्त्री० आर्यावर्ते ॥ पुण्यस्यभूमिः । पुण्याचासौभूमिश्चेतिवा ॥

पुण्यवान् । त्रि० सुकृतिनि । धन्ये ॥ पुण्यमस्यास्ति । मतुप् । मादुपधायाश्चमतोर्वोऽयवादिभ्यः इतिवत्वम् ॥

पुण्यश्लोकः । पुं० जनार्द्दने । विष्णौ ॥ नलइतिप्रसिद्धेराजनि ॥ युधिष्ठिरे ॥ पुण्यानिपावनानि श्लोकानियशांसियस्य ॥ पुण्यानिकवीनांपद्यानिवायस्मिन् ॥ त्रि० पुण्यचरित्रे

पुण्यश्लोका । स्त्री० द्रौपद्याम् ॥ वैदेह्याम् । सीतायाम् ॥ यथा । पुण्यश्लोकोनलोराजा पुण्यश्लोकोयुधिष्ठिरः । पुण्यश्लोकाचवैदेही पुण्यश्लोकोजनार्द्दनइतिपुराणम् ॥

पुण्या । स्त्री० गङ्गायाम् ॥ तुलस्याम् ॥ पुण्यजनिकायाम् ॥

पुण्यात्मा । त्रि० धर्मशीले ॥ पुण्यआत्माऽस्य ॥

पुण्याहम् । न० शोभनदिवसे ॥ पुण्यञ्चतदहश्च । राजाहः सखिभ्यष्टजितिटच् । उत्तमैकाभ्यामित्यन्हादेशोन । पुण्यसुदिनाभ्यामितिक्लीबत्वम् ॥ मङ्गले ॥ यथा० पुण्याहवाचनम् ॥

पुण्याहवाचनम् । न० दैवादिकर्म्मा

द्दौमङ्गलार्थंपुण्याहमितिशब्दस्यवा
रत्रयकथने ॥ यथा । पुण्याहवाचनं
दैवेब्राह्मणस्यविधीयते । एतदेवनि
रोङ्कारं कुर्य्यात्चत्त्रियवैश्ययोः ॥
सोङ्कारंब्राह्मणेब्रूयात्निरोङ्कारंमही
पतौ । उपांशुचतथावैश्ये शूद्रे स्व
स्तिप्रयोजयेदितियमः ॥

पुत्तलिका । स्त्री० धातुपाषाणादिनि
र्मितमूर्त्तौ । पुतलीइतिभाषा ॥

पुत्तिका । स्त्री० मधुमक्षिकाविशेषे ।
पतङ्गिकायाम् ॥ यतआह । माक्षि
कंतैलवर्णंस्यात्घृतवर्णंतुपौत्तिकम् ।
भ्रामरन्तुभवेच्छुक्लं चौद्रन्तुकपिलंभ
वेत् । इति ॥ पुतंकुत्सितंतायते ।
ताङ्पालनयोः । बाहुलका
त्कः । यलोपः । कणइतिङ्खः ।
। प्रत्ययस्थादितीत्वम् ॥ पिपीलि-
काभेदे । दीमकइतिलोकेइति
चभाषा ॥ यथा । धर्मंशनैः सञ्चि
नुयाद्वल्मीकमिवपुत्तिका । परलो
कसहायार्थंभावन्तं सर्वशरीरिणामि
ति ॥

पुत्र: । पुं० तस्मात्पञ्चमभवने ॥ आ
त्मजे । तनये । सूनौ । सुते । अप
त्ये । पूतइतिभाषा० ॥ अस्यनिरु
क्तिर्यथा । पुन्नाम्नोनरकाद्यस्मात्पि
तरंत्रायतेसुतः । तस्मात्पुत्रइति
प्रोक्तः स्वयमेवस्वयम्भुवेति ॥ सं-
सारिणोयमवश्यमपेक्षितः । अपुत्र

स्यगतिर्नास्तिस्वर्गंगन्तुंपरन्तप । येन
केनाप्युपायेनपुत्रस्यजननंचरेदिति
वचनात् ॥ सचद्वादशविधोयथा ।
पुत्रान्द्वादशयानाहनृणांस्वायम्भुवो
मनुः । तेषांषड्बन्धुदायादाः षड
दायादबान्धवाः ॥ औरसः क्षेत्रज
श्चैवदत्तः कृत्रिमएवच । गूढोत्प
न्नोऽपविद्धश्चदायादाबान्धवाश्चषट् ॥
कानीनश्चसहोढश्चक्रीतः पौनर्भव
स्तथा । स्वयंदत्तश्चशौद्रश्च षडदाया
दबान्धवाः इति ॥ पुत्रिकापुत्रेण
सहत्रयोदशविधोऽपिभवति ॥ ⁝⁝ ॥
जीवतोवाक्यकरणात्क्षयाहेभूरिभो
जनात् । गयायांपिण्डदानाच्च त्रि
भिः पुत्रस्यपुत्रता ॥ ( * ) ॥ चतु
र्विधाः पुत्रायथा । सुमनोवाच ) ।
ऋणसम्बन्धिनः केचित्केचित्न्या
सापहारकाः । रिपवश्चप्रियाश्चे ति
स्वकर्मवशवर्तिनः ॥ भेदैश्चतुर्भिर्जाय
न्ते पुत्रामित्रास्त्रियस्तथा । भार्या
पिताचमाताचभृत्याःस्वजनबान्धवाः
॥ स्वंस्वंनहिजायन्ते सम्बन्धेनम
हीतले । न्यासापहारभावेन यस्यय
स्यकृतंभुवि ॥ न्यासस्वामीभवेत्पु
त्रोगुणवान्रूपवान्भुवि । येनचाप
हृतंन्यासंतस्मगेहेनसंशयः ॥ न्या
सापहारणाद्दुःखंसदत्त्वादारुणंगतः
। न्यासस्वामीसपुत्रोऽभून्न्यासापहार
कस्य च ॥ गुणवान्रूपवांश्चैवसर्वल

पुव :

त्तणसंयुत १। भक्तिश्चदर्शयेत्तसा पुत्रोभूत्वादिनेदिने ॥ प्रियंशाक्यध रोशापिवहुर्स हंप्रदर्शयेत्। स्वीयं द्रव्यंसमुद्राव्यं प्रीतिमुत्पाद्यचातु लाम् ॥ भुक्त्वातुपोषणात्तेनतदादा यपुनर्व्रजेत्। यथातेनप्रदत्तंतथ्या- सापहरणात्पुरा ॥ दु:खमेवंम- हत्कृत्वादारुणंप्राणनाशनम्। ता दृशंतसाद्द्यात् सपुत्रोभूत्वामहागु णै: ॥ अल्पायुषस्तथाभूत्वा मरणं यान्तितथा। दु:खंदत्वाप्रयान्त्ये वंप्रकृत्यैवंपुर्न: पुन: ॥ यदाहपुत्रपु त्रेतिप्रलापंहिकरोतिस:। तदाहा संकरोत्येषक: सपुत्रोहिकसाच ॥ अनेनादिह्लतंन्यासंमदीयंपरिचा रिणा। द्रव्यापहारोपिपितापूर्वमदै वतस्यच॥ पिशाचत्वंमयादत्तमदै वहिदुरात्मन:। द्रव्यापहरणेनापि ममप्राणागता: किल ॥ दु:खिनम हताचैवयथाहंपीडितःपुरा। तदा दु:खंप्रदत्त्वाहंद्रव्यंमुद्राव्यमुत्तमम् ॥ भोगेनसर्वमादायचिरात्तिश्वास्य सौम्यवत्। गतोस्मिस्वगृहंचायक स्याहमुतईदृश: ॥ नचैषोपिपितापू र्वमदैवनचकस्यचित्। पिशाचत्वं मयादत्तमदैवचदुरात्मन: ॥ एव मुक्त्वाप्रयात्येवतंप्रहस्यपुन: पुन:। प्रयात्यनेनमार्गेणदु:खंदत्त्वासुदारु णम् ॥ एवंन्यासस्यमत्वम्भात्पुत्रा:

पुव :

किन्तेभवन्तिवै। संसारेदु:खबहु लादृश्यन्तेयत्रतत्रहि ॥ १ ॥ ऋणसं बन्धिन: पुत्रान् प्रवक्ष्यामितवाग्र त:। ऋणंयस्यगृहीत्वाय: प्रयाति मरणंकिल ॥ अन्नदातासुतोभूत्वा भ्रातावाथपिताप्रिय:। मित्ररूपेण वर्त्ततेअन्तर्दुष्ट: सदैवस: ॥ गुणं नैवप्रपश्यति सक्रूरोनिष्ठुराकृति:। जल्पतेनिष्ठुरंवाक्यंसदैवस्वजने षुच ॥ नित्यंमिष्टंसमश्नातिभोगा न्भुञ्जीतनित्यश:। द्यूतकर्मरतो नित्यंचौरकर्मणिनित्यश: ॥ गृहा दुद्रव्यंवलाद्धर्त्तावार्यमाण: प्रकुप्य- ति। पितरंमातरंचैवकुत्सतेचदिने दिने॥ द्रावकस्रासकश्चैववहुनिष्ठु रजल्पक:। वञ्चयित्वैवमुद्राश्च ह त्वामु:खेनतिष्ठति ॥ जातकर्मादि- भिर्वालो द्रव्यंगृह्णातिदारुण:। पुनर्विवाहसंयोगान्नानाभेदैरनेकधा ॥ एवंसंचीयतेद्रव्यंनैवमेनदृदद्दात्य पि। गृहक्षेत्रादिकंसर्वंममैवहिनसं शय:। पितरंमातरंचैव वदत्येवं दिनेदिने ॥ मुद्गरैर्मुसलैश्चैवकचा घातैस्सुदारुणै:। मृतेतुतस्मिन्पित रितथामातरिनिष्ठुरम् ॥ नि: स्ने होनिर्घृणश्चैवजायतेनात्रसंशय:। शास्त्रकार्याणि दानानिनकरोतिक दाचन। एवंविधास्त्रय:पुत्राभवन्ति चमहीतले ॥ २ ॥ रिपुपुत्रंप्रवक्ष्या

मितवार्य्य मुनिपुङ्गव । बाल्ये वयसि सम्प्राप्ते रिपुवत्वर्त्ततेसदा ॥ पितरंमातरंचैवक्रीडमानोहिताडयेत् ताडयित्वाप्रयात्ये वंप्रहस्यै वपुन : पुन : ॥ पुनरायातितं तत्रपितरं मातरंपुन : । सक्रोधोवर्ततेनित्यं नैवकर्मणिसर्वदा ॥ पितरंमारयित्वातु मातरंचपुन : पुन : । प्रयात्येवंसदुष्टात्मा पूर्ववैरानुभावत : ॥ ३ ॥ अथात : संप्रवक्ष्यामियस्मात्लभ्योभवेत्प्रिय: । जातमात्र: प्रियं कुर्यात्बाल्ये नटनक्रीडनै: ॥ वय: प्राप्यप्रियंकुर्यान्मातापित्रोरनन्तरम् । भक्त्यासन्तोषयेन्नित्यं तावुभौ परिपालयेत् ॥ स्नेहैनवचसाचैवप्रियसम्भाषणेनच । मृतौगुरुसमाज्ञायस्नेहैनरुदतेपुन : ॥ श्राद्धकर्माणि सर्वाणि पिण्डदानादिकांक्रियाम् । करोत्येवंमृदु : खार्त्तस्तेभ्योयात्रां प्रयच्छति ॥ ऋणत्रयान्वित : स्नेहान्निर्यापयतिनिश्चित : । यस्माल्लभ्यं भवेत्कान्तप्रयच्छतिनसंशय: ॥ पुत्रोभूत्वामहाप्राज्ञअनेनविधिनाकिल ॥ ४ ॥ उदासीनंप्रवक्ष्यामितवार्य्य प्रियसाम्प्रतम् । उदासीनेनभावेनसदैवपरिवर्त्तते ॥ ददातिनैवगृह्णातिनक्रुध्यतिनतुष्यति । नैवोपयातिसन्त्यज्य उदासीनोद्विजोत्तम ॥ तवार्य्य कथितंसर्वं पुत्राणांगतिरीदृशी । यथापुत्रास्तथाभार्य्या पितामाताथबान्धवा : ॥ भृत्याश्चान्ये समाख्याता : पशवस्तुरगास्तथा । गजामहिष्योदासाश्चऋणसम्बन्धिन: स्वमी ॥ ०० ॥ सुपुत्रलक्षणानु । वशिष्ठउवाच । पुत्रस्यलक्षणंपुण्यं तवार्य्य प्रवदाम्यहम् । पुण्यप्रसक्तोयम्यात्मासत्यधर्मरत : सदा ॥ बुद्धिमान्ज्ञानसम्पन्नस्तपस्वीवाग्विदाम्वर : । सर्वकर्मसुसद्धीरोवेदाध्ययनतत्पर : । सर्वशास्त्रप्रवक्ताचदेवब्राह्मणपूजक : । याजक : सर्वयज्ञानां दातात्यागी प्रियम्वद : ॥ विष्णुध्यानपरोनित्यं शान्तोदान्त : सुहृत्सदा । पितृमातृपरोनित्यं सर्वस्वजनवत्सल : ॥ कुलस्यतारकोविद्वान् कुलस्यपरितोषक : । एवं गुणै : सुसंयुक्त : सुपुत्र : सुखदायक : ॥ पुत्रस्यजङ्गमतीर्थत्वं यथा । सर्वतीर्थाद्वरंतीर्थंपुत्रतीर्थमुदाहृतम् ॥ यद्दै गोवैष्णवद्वैषीसर्वधर्मबहिष्कृत : । पृथुनापुत्रतीर्थेन पवित्रोऽगात्परंपदम् ॥ सत्पुत्रंपरमंतीर्थंप्राप्य मुच्यन्तिपूर्वजा : । पितापितृऋणमुक्त : स्यात्जातेपुत्रे महात्मनि ॥ वैष्णवपुत्रस्यपूर्वपुरुषत्रातृत्वं यथा । वैष्णवोयदिपुत्र:स्यात्सतारयति पूर्वजान् । पितॄनधस्तनान्वंशांस्तारयत्यतिपावन : ॥ + ॥ कुपुत्रजन

नेपितॄणांनरकगमनंयथा । तथाय- दिकुपुत्रःस्यात्तेनमज्जन्तिपूर्वजा: । सुघोरेनरकेदीना : शपन्तिचमुहुर्मुहुः ॥ यथा जलेकुप्लवेनतरन्मज्जतिमूढधी : । तथापिताकुपुत्रेणातमसान्धे निमज्जति ॥ जातमात्रे कुलेजन्तौसंशेरतेपितामहा : । किमेषोऽधोनयेदस्मात्ऊर्द्ध्वंवावैषावोभवन् ॥ इतिपाद्मे भूमिखण्डे ११ । १२ । १८ । १२० अध्याय : ॥ सप्तविधा : पुत्रा यथा । वरजो वीर्यजश्चैवक्षेत्रज : पालकस्तथा । विद्यामन्त्रसुतानाञ्चगृहीत: सप्तम: सुत : ॥ इतिब्रह्मवैवर्त्ते : ॥ इति ब्रह्मवैवर्तेप्रकृतिखण्डे ५६ अध्याय : पुत्रमुखदर्शने पुण्यंयथा । श्रीपार्वत्युवाच । गृहमागत्यप्राणेशतपसांफलदायकम् । कल्पे कल्पेऽध्यासितेयं तंपश्यागत्यमन्दिरम् ॥ शीघ्रं पुत्रमुखंपश्यपुण्यबीजंमहोत्सवम् । पुन्नामनरकत्राणकारणंभवतारणम् ॥ स्नानञ्चसर्वतीर्थेषुसर्वयज्ञेषुदक्षिणा । पुत्रस्यदर्शनस्यास्यकलांनार्हन्तिषोडशीम्सर्वदानेनयत्पुण्यं यत्पृथिव्या : प्रदक्षिणे पुत्रदर्शनपुण्यस्यकलां नार्हन्तिषोडशीम् सर्वास्तपोभिर्यत्पुण्यं यद्देवानशने : व्रते : । सत्पुत्रोद्भवपुण्यस्यकलानार्हन्तिषोडशीम् ॥ यद्विप्रभोजनै :पुण्यंयदेवसुरसेवने : । सत्पुत्रप्राप्तिपुण्यस्यकलानार्हन्तिषोडशीम् ॥ इति ब्रह्मवैवर्त्ते गणपतिखण्डे ८ऽध्याय : ॥ ०( ††† )० विद्यादिरहितस्यपुत्रस्यनिन्दायथा । कोर्थ : पुत्रेणजातेनयोनविद्वान्नधार्मिक : । तयागवाकिंक्रियते यानदोग्ध्रीनगर्भिणी ॥ सचमध्यमोत्तमाधमभेदात्त्रिविध : । यदुपात्तं यश : पित्रा धनंवीर्यमथापिवा । तन्नह्रापयतेयस्तुसनरोमध्यम:स्मृत : ॥ तद्वीर्याभ्यधिकंयस्तुपुनरन्यत्स्वशक्तित : । निष्पादयतितंप्राज्ञावदन्तिनरमुत्तमम् ॥ य : पित्रासमुपात्तानिधनवीर्ययशांसिच । न्यूनतांनयतिप्राज्ञास्तमाहु : पुरुषाधममितिमार्कण्डेयपुराणम् ) ॥ *†* ॥ जायमानोहरेद्दारान् वर्द्धमानोहरेद्धनम् । म्रियमाणोहरेत्प्राणान् नास्तिपुत्रसमोरिपुरितितुकुपुत्रजन्यं दु : खमनुभवंकुर्वाणस्योक्ति: ॥ संसारिण: सुतंपूर्णेसत्युत्तमुखदर्शनम् । कुपुत्राचरितादु:खंमरणाभ्यधिकंविदु : ॥ ०( *†* )० पुत्रस्यप्रशंसा यथा । धनंनान्यच्चरत्नं वाततसर्वंपुत्रहेतुकम् । नभक्षितंयत्पुत्रेण तत्द्रव्यंनिष्फलंभुवि ॥ शतकूपाधिका वापीशतवापीसमंसर : । सर : शताधिकोयज्ञ :पुत्रोयज्ञशताद्वर:

॥ ततोदानोद्भवंपुण्यं जन्मान्तरमुखप्रदम् । सुखप्रदोपिसत्पुत्र : प्राणिभ्योऽपिसुनिश्चितम् ॥ पुत्रादपिपरोबन्धुर्नभूतोनभविष्यति ॥ † ॥ एष्टव्याबहव: पुत्रायद्येकोपिगयां व्रजेत् । यजेताश्वमेधेन नीलंवा वृषमुत्सृजेत् ॥ पुन्नरकंतस्मात्त्रायते । त्रैङ्पालने । सुपीतिक : ॥ यद्वा । पुनाति० पूयतेवा । पूञ्पवने । पुत्रोहृत्स्वस्ति : ॥ उत्तम श्चिन्तितंकुर्यात्प्रोक्तकारीचमध्यम: । अधमोऽश्रद्धयाकुर्यात् कर्त्तोच्चरितं पितुरितिमहाभारतम् ॥

पुत्रक: । पुं० पुत्रे ॥ शरभे ॥ धूर्त्ते ॥ शैलविशेषे ॥ वृक्षप्रभेदे ॥ अनुकम्पित : पुत्र : । अनुकम्पायामितिक: ॥ पुत्रकृत्रिमे० इतियावादिषुपाठात् कन् ॥

पुत्रकन्दा । स्त्री० लक्ष्मणाकन्दे ॥

पुत्रका । स्त्री० कन्यायाम् । पुत्र्येव । स्वार्थेकन् । सूतकापुत्रिकेतिङीनइत्यस्यपक्षेऽकार : ॥

पुत्रजीव: । पुं० वृक्षविशेषे । श्रीपटापत्रे । जीयापोताइतिभाषा ॥ पुत्रजीवोगुरुर्वृष्योगर्भद: श्लेष्मवातकृत् । सृष्टमूत्रमलोरूक्षोहिम: स्वादु: कटु : पटु : ॥

पुत्रञ्जीवक : । पुं० पुत्रजीववृक्षे ॥

पुत्रदा । स्त्री० लक्ष्मणायाम् ॥ वंध्याकर्कोटक्याम ॥ गर्भदात्रीक्षुपे ॥

पुत्रदात्री । स्त्री० श्वेतपुष्पिकायाम् । हतपत्रायाम् । मालवदेशप्रसिद्ध लतेयम् ॥

पुत्रपत्नी । स्त्री० पुत्रस्यभार्यायाम् । स्नुषायाम् ॥ पुत्र : पतिर्यस्या : । नित्यंसपत्न्यादिष्वितिनान्तादेशेनात्तलक्षणोङीप् ॥

पुत्रपौत्रीण : । त्रि० पुत्रपौत्रानुभवकर्त्तरि ॥ पुत्रपौत्राननुभवति । परोवरेत्यादिनाख : ॥

पुत्रप्रदा । स्त्री० वृहतीप्रभेदे । खविकायाम् ॥

पुत्रभद्रा । स्त्री वृहज्जीवन्त्याम् ॥

पुत्रवान् । पुं० विद्यमानपुत्रे ॥ पुत्रोऽस्त्यस्य । मतुप् ॥

पुत्रवती । स्त्री० विद्यमानपुत्रायाम् ॥ सर्वासामेकपत्नीनामेकाचेत्पुत्रिणीभवेत् । सर्वास्तास्तेनपुत्रेणप्राह पुत्रवतीर्मनु: ॥ पुत्रोस्त्यस्या : । मतुप् ॥

पुत्रवल: । त्रि० पुत्रवति ॥ पुत्रोस्त्यस्य । अन्येभ्योपिदृश्यतइतिवलच् । असंज्ञात्वात्वल इतिनदीर्घ : ॥

पुत्रशृङ्गी । स्त्री० अजशृङ्ग्याम् ॥

पुत्रश्रेणी । स्त्री० प्रत्यक्श्रेण्याम् । मूषिकपर्ण्याम् ॥ पुत्राणांश्रेणिरस्या : ॥

पुत्रसू: । स्त्री० पुत्रजनयित्र्याम् ॥

पुत्राचार्यः । पुं० पुत्रेणाध्यापितेपितरि ॥ मुख्येनपुत्राचार्यत्वाऽसम्भवात् ॥

पुत्रान्नादः । पुं० पुत्रान्नभोजिनि । कुटीचके ॥

पुत्रिका । स्त्री० कन्यायाम् । दुहितरि । तनयायाम् ॥ यथा अपुत्रोनेन विधिनासुतांकुर्वीतपुत्रिकाम् । यदपत्यंभवेदस्यांतन्ममस्यात्स्वधाकरम् ॥ पुत्तलिकायाम् ॥ पाञ्चालिकायाम् । यावतूलके ॥ पुत्रीव । इवेतिकन् । यावादित्वाद्वा । केणइतिह्रस्वः ॥

पुत्रिकाधर्मः । पुं० भ्रातावर्ज्जितकन्यादाने ॥ सचाभ्रातृकायांकन्यायांपुत्रार्थिनएवप्रसिद्धः । यथा । अभ्रातृकांप्रदास्यामितुभ्यंकन्यामलङ्कृताम् ॥ अस्यांयोजायतेपुत्रः समेपुत्रोभवेदिति ॥

पुत्रिकापुत्रः । पुं० पुत्रिकायास्तनये ॥ सचौरससमः ॥

पुत्रिकाप्रसूः । स्त्री० कन्याजनन्याम् ॥

पुत्रिणी । स्त्री० पुत्रवत्याम् ॥

पुत्री । पुं० पुत्रवति ॥ ज्येष्ठेनजातमात्रेणपुत्रीभवतिमानवः ॥

पुत्री । स्त्री० सुतायाम् ॥ वृत्तविशेषे ॥ शार्ङ्गरवादित्वान्ङीन् ॥ यथा । धिक्तस्यजीवितंलोकेयस्यपुत्रीहिकृत्सिता । सर्वपापैस्तुदुःखायपुत्रीभवतिदेहिनामिति ॥

पुत्रीयः । त्रि० पुत्र्ये ॥ पुत्रस्यनिमित्तंसंयोगउत्पातोवापुत्राच्छ्च ॥

पुत्रेष्टिः । स्त्री० ⎫ पुत्रनिमित्तक
पुत्रेष्टिका । स्त्री० ⎭ यागविशेषे ॥ यथा । गृहीत्वापञ्चवर्षीयंपुत्रेष्टिंप्रथमंचरेदितिस्मृतिः ॥

पुत्रेषणा । स्त्री० पुत्रार्थंदारस्वीकारवाञ्छने ॥

पुत्र्यः । त्रि० पुत्रीये ॥ पुत्रस्यनिमित्तंसंयोगउत्पातोवा । पुत्राच्छ्चेतियत् ॥

पुद्गलः । पुं० आत्मनि ॥ देहे । काये ॥ पूर्यतेगलतीतिपुद्गलः वृद्धिह्रासविशिष्टद्रव्यर्थः ॥ त्रि० । सुन्दराकारे । रूपादिमद्द्रव्ये ॥

पुद्गलकाः । पुं० वल्मीके ॥ पुद्गलार्घे ॥

पुद्गलास्तिकायः । पुं० षड्विधरूपादिमद्द्रव्ये ॥ पृथिव्यादिमहाभूतानिचत्वारितृणगुल्मलतादिरूपंस्थावरम् जरायुजाण्डजस्वेदजोद्भिज्जभेदभिन्नंजङ्गमञ्चेतिषड्प्रकारोऽयंपुद्गलास्तिकायः ॥

पुनः । अ० अप्रथमे ॥ अधिकारे ॥ भेदे । विशेषे ॥ पश्चात्तरे ॥ अवधारणे ॥ पनते । पनस्तुतौ । वा० अरः अस्योकारश्च ॥

पुनः पुनः। अ॰ पौनःपुन्ये। वारंवारम्। मुहुः। शश्वत्। अभीक्ष्णम्। असकृदित्यस्यपर्यायाः॥ नित्यवीप्सयोरितिपुनःशब्दस्यद्विर्वचनम्॥

पुनःपुना। स्त्री॰ नदीविशेषे॥ यथा कीकटेषु गयापुण्यापुण्यंराजगृहंवनम्। च्यवनस्याश्रमःपुण्योनदीपुण्यापुनःपुनेतिगयामाहात्म्यम्॥

पुनःसंस्कारः। पुं॰ द्वितीयवारोपनयनादिसंस्कारे॥

पुनरागमनम्। न॰ द्वितीयवारागमने। फिरआवनाइतिभाषा॥ यथा। अधुनागम्यतां विप्रपुनरागमनंकुर्विति॥

पुनरुक्तम्। न॰ शब्दार्थयोः पुनर्वचने॥ यथाहगोत्तमः। शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्॥ ५ अध्याये ५७॥ पुनर्वचनंपुनरुक्तम् तस्यविभागार्थंशब्दार्थयोरिति। तेनशब्दपुनरुक्तमर्थपुनरुक्तञ्च लभ्यते। अनुवादेऽतिव्याप्तिवारणायअन्यत्राऽनुवादादिति। अनुवादान्यत्वे सतीत्यर्थः। निष्प्रयोजनं पुनरभिधानंहिपुनरुक्तम्। अनुवादस्तु व्याख्यारूपः सप्रयोजनकएवेतिभावः। तथाच समानार्थकपूर्वानुपूर्वीकशब्दप्रयोगः शब्दपुनरुक्तम्। समानार्थकभिन्नानुपूर्वीकशब्दस्यनिष्प्रयोजनं पुनरभिधानमर्थपुनरुक्तम्। आद्यंयथाघटोघटइति। द्वितीयं यथा घटः कलसइति। एतच्च प्रमादादिनासम्भवः॥ ५७॥ पुनरुक्तभेदान्तरमाह। अर्थादापन्नस्यस्वशब्देनपुनरभिधानम्॥ ५८॥ पुनरुक्तमित्यनुवर्तते। यस्मिन्नुक्ते यस्यार्थस्यौत्सर्गिकीप्रतिपत्तिर्भवति तस्यतेनरूपेणपुनरभिधानंपुनरुक्तम्। इदमेवचअर्थपुनरुक्तमितिगीयते। यथावह्निरुष्णइतिपूर्वपदाचिप्तोक्तिरियम्। उष्णोवह्निरितिउत्तरपदाचिप्तोक्तिः। एवंवह्निरस्तिगेहेनास्तीतिविध्याचिप्तोक्तिः। जीवन्गेहेनास्तिवह्निरस्तीतिनिषेधाचिप्तोक्तिः। पुनरुक्तत्वेविध्यत्वेदंभाष्यादिसम्मतम्। अन्येतुशब्द पुनरुक्तं द्विविधम्॰ तत्रैवशब्दस्यपुनरभिधानंपर्यायेणाभिधानम्॥ अन्यत्पुनरर्थपुनरुक्तमित्याहुः॥ ५८॥ द्विगुणे॥

पुनरुक्तजन्मा। पुं॰ विप्रे। ब्राह्मणे॥ पुनरुक्तंजन्मास्य।यथा मातुरग्रेधिजननंद्वितीयंमौञ्जिवन्धने। तृतीयंयज्ञदीक्षायांद्विजस्यश्रुतिचोदनात्। इतिमनुः॥

पुनरुक्तिः। स्त्री॰ पुनःकथने। कथितस्यैवकथने॥

पुनर्डीनम्। न॰ सण्डीनएवसामान्य

गमने ॥
पुनर्भवः। पुं० नखे ॥ पुनरभीक्ष्णं नवः॥
पुनर्नवा। स्त्री० साटीइतिप्रसिद्धे शाकविशेषे। शोथघ्न्याम् ॥ सा द्विधा। यथा। पुनर्नवाश्वेतमूला श्वेतरोहीर्घपत्रकः। पुनर्नवापरारक्तावर्षाभूरक्तपुष्पकः॥ पुनर्नवाश्वेतमूलाशोथघ्नीदीर्घपत्रिका। कटुःकषायाऽत्युष्णा:पांडुघ्नदीपनीपरा॥ शोफानिलगरश्लेष्महरीब्रध्नोदरप्रणुत्। पुनर्नवापरारक्ता रक्तपुष्पाशिलाटिका। शोथघ्नीक्षुद्रवर्षाभूर्वर्षकेतुः कठिल्लकः॥ पुनर्नवारुणा तिक्ताकटुपाकाहिमालघुः। वातलाग्राहिणीश्लेष्म पित्तरक्तविनाशिनीतिभावमिश्रः॥ पुनरभीक्ष्णं नवानूयतेवा। कर्तरिप्। क्षुभ्नादिः॥
पुनर्नवाशाकम्। न० पौनर्नवे॥ पौनर्नवंशाकमतीवकोमलंमुखेदितंमुष्टिभिरेवपीडितम्। सम्यक्चितंमिष्टतमन्तुतैलेसंवासितंहिङ्गुकणेनरुच्यम्॥ पौनर्नवंहिचक्षुष्यन्तिक्तरुच्यंकफापहम्। शोफपांडुक्षयश्वासज्वरहृद्रोगनाशनम्॥
पुनर्भवः। पुं० नखे॥ पुनर्भवति। भू० अच्॥ रक्तपुनर्नवायाम्। शरीरान्तरे॥ वि०। पुनर्नवाजाते॥
पुनर्भवी। पुं० आत्मनि॥ ह्र०हेम चन्द्रः॥
पुनर्भूः। स्त्री० दिधिष्वाम्। द्विरूढायाम्। अक्षतयोनित्वाद्विधवा पुनरुह्यते। इत्यसावन्यस्यभूत्वाऽन्यस्यपुनर्भवतिसंस्कृता। भू० क्विप्॥ अक्षताचक्षताचैवपुनर्भूःसंस्कृतापुनरितिस्मृतिः॥ त्रिविधासासमाख्यातानारदेनमहर्षिणा। कन्यैवाक्षतयोनिर्यापाणिग्रहणदूषिता। पुनर्भूःप्रथमासोक्तापुनःसंस्कारकर्मणा॥ १॥ देशधर्मानवेक्ष्यस्त्रीपितृभिर्याप्रदीयते। उत्पन्नसाहसान्यस्मैसा द्वितीयाप्रकीर्तिता॥ उत्पन्नसाहसाउत्पन्नव्यभिचारा॥ २॥ असत्सुदेवरेषुस्त्री बांधवैर्याप्रदीयते। सवर्णायसपिण्डायसातृतीया प्रकीर्तितेतिमिताक्षरा॥ ३॥ त्रि०। पुनर्वारजाते॥
पुनर्वचनम्। न० पुनरुक्ते॥
पुनर्वसुः। पुं० अर्जे। विष्णौ॥ पुनःपुनःशरीरेषुवसतिइतिव्युत्पत्त्या। वस०। उः। पुनःशब्दःपौनःपुन्येवर्त्तते०एकस्यपुनःशब्दस्य लोपोवा॥ कात्यायनमुनौ॥ धनारक्षे॥ शिवे॥ नक्षत्रविशेषेपुनर्वसू द्विवचनान्तः॥ पुनर्वस्वोर्जाते॥ अविष्ठाफाल्गुनीस्यणीलुक्॥ तत्र जातस्यफलम्॥ यथा। प्रभूतमित्रः

कृतशास्त्रयत्न: सद्गत्नकामी वरसूष गाढ्य:। दाताप्रतापीवसुधाधिपो सोपुनर्वसौयस्यभवेत् प्रसूतिरितिज्यो-तिर्विदाभरणम्प्रामाणिकम् ॥

पुनान:। त्रि० पवित्रीकुर्वाणे ॥ पुनाति। पूञ्०शानच्। प्वादीनांह्रस्व: ॥

पुन्नाग:। पुं०सितोत्पले ॥ जातीफले ॥ पाण्डुनागे ॥ स्वनामख्याततरुवृत् पुष्पवृक्षविशेषे। पुरुषे। तुङ्गे। केशरे। देववल्लभे। गुर्जरदेशेसँदेशराड़ इतिख्याते ॥ नरश्रेष्ठे ॥ यथा। मरुन्नार्विरश्चायन्ते घनायन्ते कलिद्रुमा:। नशमीनचपुन्नागोऽस्त्ययस्मिन्संसार कानने ॥ पुमान्नागइव। उपमितसमास:। पुन्नागोनरश्रेष्ठ:प्राधान्यात् मरुव ॥

पुन्नाट:। पुं० चक्रमर्दे ॥

पुन्नाड:। पुं० चक्रमर्दे ॥ पुमांसंनाडयति। नडभ्रंशे। चु०। कर्म्मण्यण्। मस्यानुस्वारपरसवर्णौ ॥

पुन्नामनरक:। पुं० नरकविशेषे ॥ पुन्नामनरकंघोरंविनाशंप्राप्तसर्वत: ॥

पुपूषन्। त्रि० पवितुंसाधयितुंनिर्वर्त्तितुमिच्छतिकर्त्तरि ॥ पुनाते: सन्नन्ताल्लट: शत्रादेश:। सनिग्रहगुहोश्चेतिचकारादिट: प्रतिषेध: ॥

पुप्फुल:। पुं० उदरस्थवायौ ॥ इति भूरिप्रयोग: ॥

पुप्फुस:। पुं० बीजकोषे। पद्मबीजाधारे। वराटके ॥ फोँपडा०फेपडा चइतिख्याते वामपार्श्वस्थमलाशये। रक्तफेनजे ॥ यथा। हृदयाद्दामतोऽधश्चपुप्फुसोरक्तफेनज इति ॥

पुमर्थ:। पुं० धर्मादिषुचतुर्षु। पुरुषार्थे ॥ पुंसोऽस्मात्: पुरुषस्यअर्थ: प्रयोजनंयस्मिन् ॥

पुमान्। पुं० पञ्चजने। पुरुषे। पूरुषे। नरे ॥ पाति। पा०। पातेर्डुम्सुन् ॥ क्वचित्पूञोडुम्सुन्निति पाठ:। तत्रपुनाति। पूञ्पवने ॥ यस्माक्षरलोकसंभोय: पुमान्सप्रकाशते ॥ आत्मनि ॥ देवतिर्यङ्मनुष्येषुपुन्नामाभगवान्हरि:। स्त्रीनाम्नीलक्ष्मीमैत्रेयनानयोर्विद्यतेपरमितिविष्णुपुराणम् ॥ यावन्नविन्दतेजायांतावदर्द्धोभवेत्पुमान्। यन्नबालै: परिवृतंश्मशानमिवतद्गृहम् ॥

पुर्:। स्त्री० पुर्याम्। नगरे। पत्तने। हट्टादिविशिष्टेपुरे ॥ पिपर्त्ति। पॄ०। भ्राजभासेतिक्विप्। उदोष्ठ्यस्य उत्। रपर:। र्वोरितिदीर्घ: ॥ पूर्यते। पुर० संक्विप्वा ॥

पुर:। पुं० गुग्गुलौ ॥ पीतभिण्टायाम् ॥ न०। गेहे ॥ पाटलिपुत्रे ॥ पुष्पादीनांदलावृत्तौ ॥ नागरमुस्तायाम् ॥ चर्म्मणि ॥ गृहोपरिगृहे ॥ देहे। शरीरे ॥ शरीरंहिपुरमिवपुरम्द्वारपालाधिष्ठाद्यनेकपुरोपकरणस

म्यक्तिदर्शनाच्छरीरमपिपुरम्। पुरञ्जसोपकरणं स्वात्मनाऽसंहतस्वतन्त्रस्वाम्यर्थंदृष्टम्। तथेदंपुरसामान्यादनेकोपकरणसहितं शरीरंस्वात्मनाऽसंहत राजस्थानीयस्वाम्यर्थं भवितुमर्हतीत्यनुध्येयम्॥राजनामचिह्नितराजधान्याम्॥ पिपर्त्ति। पॄ०। मू०क:॥ यद्वा। पुरति। पुरअग्रगमने। इगुपधेतिक:॥ न०। स्त्री० हट्टादिविशिष्टस्थाने॥ बहुग्रामीयव्यवहारस्थाने। नगरे। पत्तने। कटके। पट्टे। निगमे॥ अस्यलक्षणंमत्स्यपुराणेराजधर्मेद्रष्टव्यम्॥

पुरःसरः। त्रि० अग्रगे। अग्रेसरे॥ पुरःसरति। सृ०। पुरोग्रतोग्रेषुसर्त्तेरितिटः॥

पुरञ्जनः। पुं० जीवे। कर्म्मणापुरञ्जनयतीतिव्याख्यानात्॥पुरुषंपुरञ्जनंविद्याद् यद्व्यनक्त्यात्मनः पुरम्। एकद्वित्रिचतुष्पादंबहुपादमपादकमितिश्रीभागवतम्॥

पुरञ्जनी। स्त्री० बुद्धौ॥ यथा। नविदामवयंसम्यक् कर्त्तारंपुरुषर्षभ। आत्मनश्चपरस्यापिगोचंनामचयत्कृतम्॥ राजन्नमदीया: सर्वेतेमा माहुश्चपुरञ्जनीमितिभागवतम्॥

पुरञ्जयः। पुं० सूर्य्यवंशीयराजविशेषे। काकुत्स्थे॥ त्रि० पुरजयकर्त्तरि॥

पुरटम्। न० सुवर्णे॥

पुरणः। पुं० समुद्रे॥ पूर्य्यते। पॄ०। कृपॄवृजिमन्दिनिधाञः क्युः॥

पुरतटी। स्त्री० हट्टाम्। हट्टीपुरतटीमतेतिहारावली॥

पुरतः। अ० अग्रतोर्थे॥ प्रथमे॥ पुरति। पुर०। बाहुलकात्चतसुच्॥

पुरद्वारम्। न० गोपुरे॥ पुरस्यद्वारम्॥

पुरद्विट्। पुं० शिवे॥ पुरंद्वेष्टि। द्विष०॥ क्विप्॥

पुरन्दरः। पुं० इन्द्रे। पुरहूते। शक्रे॥ अरीणांपुरोदारयतीतिविग्रहे। पूःसर्वयोर्दारिसहोरितिखिदारणार्थकाद्दृधातोःखच्प्रत्ययेवाचंयमपुरन्दरौचेतिनिपातितः। चौरे॥ यथा। समांसमीनायदिपाकशालासमांसमीनादशधेनवःस्युः पुरन्दरस्याविषयंयदिस्यात्पुरन्दरस्यापिपुरंनयाचे॥ न०। चविके॥

पुरन्दरा। स्त्री० गङ्गायाम्॥ इतिहारावली॥

पुरन्ध्रिः। स्त्री० पुरन्ध्राम्॥

पुरन्ध्री। स्त्री० सपुत्रसधवायाम्। कटुम्बिन्याम्॥ पुरंगेहंधारयति। धृञ्०। स्वार्थण्यन्तः। संज्ञायांभृतॄवृजीतिखच्। मुम्। गौ०ङीष्। पू०॥ सीमान्ते॥

पुरविजयी। पुं० पुराविजेतरिशिवे॥

पुरश्चरणम् । न० मन्त्राणांसाधनायजपहोमादिक्रियायाम् ॥ यथा । जपहोमौतर्पणञ्चाभिषेकोविप्रभोजनम् । पञ्चाङ्गोपासनंलोकेपुरश्चरणमिष्यते ॥

पुरश्छद: । पुं० तृणविशेषे: दर्भे । सोमपत्रे । उलु०इ० गौड़भा० ॥

पुर: । अ० अग्रे ॥ प्रथमे ॥ प्राच्यांदिशि ॥ पूर्वकाले ॥ पूर्वस्मिन्पूर्वस्मात्०पूर्वोवाएवंपूर्वस्याम् पूर्वस्या: पूर्वावावसत्यागतोरमणीयंवा। पूर्वाधरावराणामसि पुरधवश्चैषामितिअसि: पुरआदेशश्च ॥

पुरस्कार: । पुं० पुरस्क्रियायाम् ॥ अभिशापे ॥ अग्रकरणे ॥ पुर: क्रियतेऽनेन । कृञ्० । घञ् ॥

पुरस्कृत: । त्रि० अभिशस्ते ॥ अरिग्रस्त ॥ अग्रेकृते ॥ ॥ पूजिते ॥ स्वीकृते ॥ सिक्ते । अभिषिक्ते । पुरोऽकारि । डुकृञ्० । क्त: । पुरोव्ययमितिगतित्वम् । नमस्पुरसोरितिसत्वम् ॥

पुरस्कृत्य । अ० पुरत: कृत्वेत्यर्थे ॥

पुरस्क्रिया । स्त्री० पुरस्कारे ॥

पुरस्तात् । अ० प्रथमे ॥ प्राच्याम् ॥ अग्रतोर्थे ॥ पुरार्थे ॥ अग्रभागे ॥ पूर्वस्मिन् पूर्वस्यावा पूर्वस्मात् पूर्वस्यावा । पूर्व: पूर्वावा । दिक्शब्देभ्य: सप्तमीपञ्चमीप्रथमाभ्योदिग्देशकालेष्वस्ताति: अस्तातिचेतिपूर्वस्यपुरादेश: ॥

पुरा । अ० पुराणे । निकटे ॥ प्रबन्धे ॥ अतीते ॥ भाविनि ॥ प्रतीपे ॥ पुरति । पुर० । बा० का ॥ अविरते ॥ चिरातीते ॥ भविष्यदासन्ने ॥ गच्छपुरादेवोवर्षिष्यति । समनन्तरंवर्षिष्यतीत्यर्थ: ॥

पुरा । स्त्री० पूर्वदिशि ॥ सुगन्धिद्रव्यविशेषे । दिव्यायाम् । गन्धाढ्यायाम् । गन्धकुट्याम् ॥

पुराकल्प: । पुं० अर्थवादान्तरे । एतिह्यसमाचरिततयाकीर्त्तने । पूर्वपुरुषैराचरितत्वाभिधाने ॥ यथा । पुराकल्पे तुनारीणांमौञ्जीबन्धनमिष्यते । अध्यापनञ्चवेदानां सावित्रीवचनंतथेतियम: ॥ युगान्तरे ॥ यथा । पुराकल्पएतदासीत्०संस्कारकालोत्तरंब्राह्मणाव्याकरणंस्माधीयते । तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्योवैदिका: शब्दाउपदिश्यन्तेतदद्यत्वे नतथा०वेदमधीत्यत्वरितावक्तारोभवन्तीतिमहाभाष्यम् ॥

पुराकृतम् । त्रि० प्रारब्धकर्मणि ॥ पूर्वकालकृतपुण्यादौ ॥

पुराण: । पुं० पणे ॥ षोडशपणे ॥ आत्मनि । सर्वकारणे । अनाद्यात्मनि ॥ सचपुरापिनवएकरूपएवनत्वधुनानूतनांकाञ्चिदवस्थामनुभव

ति। योहिचवयवोपचयदारेणाभिनि र्वर्त्यतेसइदानीन्तनोयथाकुम्भादिः। तद्विपरीतस्त्वात्मापुराणोऽभिवर्णित : ॥ न० सर्वपुराणसामान्ये पञ्च लक्षणे । सर्गश्चप्रतिसर्गश्चवंशोमन्वन्तराणिच । वंशानुचरितञ्चेति पुराणंपञ्चलक्षणम् ॥ *‡**‡*)॥ इतिपञ्चलक्षणलक्षितेषुमत्स्याद्यष्टादशसु ॥ यथा । मद्वयंभद्वयञ्चैवब्रत्रयं वचतुष्टयम् । अनापलिङ्गकूस्कानि पुराणानिपृथक्पृथगिति ॥ पुराभवमित्यस्मिन्नर्थे सायञ्चिरम्प्राह्णेप्रगेव्ययेभ्यष्ट्युट्युलौ । तुट्चेति०ट्यु-ट्युलौ । पूर्वकालैकेतिनिपातितस्तुडभावः॥ पुराणप्रोक्तेषुब्राह्मणकल्पेष्वितिनिपातितोवा ॥ पुं० न० कार्षापणे ॥ त्रि० । प्रत्ने । पुरातने । पुराणा० इ० भा० ॥

पुराणगः । पुं० प्रजापतौ । ब्रह्मणि ॥

पुराणपुरुषः । पुं० विष्णौ ॥ पुराणश्चासौपुरुषश्च ॥

पुराणी । स्त्री० चिरन्तन्याम् ॥ पुराभवा । टित्त्वान्ङीप् ॥ अस्त्रादित्वात्पक्षेङीष्वा ॥

पुरातनः । पुं० परमात्मनि ॥ कालेनापरिच्छिन्नत्वात्पुरापिभवतीति सततयोच्यते ॥ त्रि० । चिरन्तने । पुराणे । प्रतने ॥ अनादिगुरुपरम्परागते ॥ पुराभवः । सायञ्चिरमितिट्युट्युलौ । अव्ययात्पिनिपातनात्रभवन्तीतिपक्षेतुट् ॥

पुरातनी । स्त्री० चिरन्तन्याम् ॥ टित्त्वान्ङीप् ॥

पुराधिपः । पुं० पुरपालके ॥

पुराध्यक्षः । त्रि० नगराधिकृते ॥

पुरारिः । पुं० त्रिपुरान्तके ॥ शिवे ॥

पुरार्द्धविस्तरः । पुं० खेटे ॥ शाखानगरे ॥

पुरोगमः । पुं० भीष्मे । पाण्डवानां पितामहे ॥

पुरावृत्तम् । न० इतिहासे । पूर्वचरिते ॥ पूर्ववृत्तप्रतिपादकव्यासादिप्रणीतग्रन्थे ॥ पुरावृत्तमाचष्टे । पुरावृत्तमाख्यानम् । णयन्तात्पचाद्यच् ॥

पुराश्रुतिः । स्त्री० पुरातन्यांगाथायाम् ॥ अन्तकालेहिस्मृतानिमुच्यन्तीतिपुराश्रुतिः ॥

पुरासिनी । स्त्री० सहदेवीलतायाम् ॥

पुरासुहृत् । पुं० शिवे ॥ इ० हे० ॥

पुरिः । पुं० राजनि ॥ स्त्री० पुर्याम् ॥ नद्याम् ॥ पिपर्त्तिपूर्यतेवा । पॄ० । कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्चेति इः ॥

पुरी । स्त्री० नगर्याम् ॥ नृपावासः पुरीप्रोक्ताशिशपुरमपीष्यते॥ तीर्थविशेषे । अयोध्यामथुरामायाकाशीकाञ्चीअवन्तिका। पुरीद्वारावतीचैव

सर्पैतामोघदर्शिका :॥ तासुवासं प्रकुर्वीमियेमृताबानरा : परम् । लब्धलब्धप्रजन्म मातृगर्भेषुकुत्र चित् ॥ पुं० । दशनामान्तर्गतसन्यासिनि ॥ यथा । ज्ञानरत्नेन सपूर्णः पूर्णतत्त्वपथस्थितिः । परब्रह्मरतोनित्यं पुरीनामासउच्यते ॥ इतिवृहच्छङ्करदिग्विजयः ॥ पुरति । पुर० । इगुपधेति कः । गौरादित्वाज्जातेरितिवा ङीष् ॥

पुरीतत् । पुं० न० अन्त्रे । आंत० इतिभाषा ॥ हृदयपरिच्छिन्ननाडाम् ॥ पुरीशरीरंतनोति । तनु० । क्विप् । गमादीनांक्काविच्यनुनासिकलोपः । तुक् ॥ पुरिंतनोतीति पक्षे० नहिवृतीतिदीर्घः ॥

पुरीमोहः । पुं० धुस्तूरे ॥

पुरीषम् । न० विष्ठायाम् ॥ विपत्ति शरीरम् । पॄ० । कॄतॄभ्यामीषन् । भॄपॄभ्यांकिच्चेति० ईषन्किञ्च । उदोष्ठ्यपूर्वस्य ॥ पङ्के ॥

पुरीषणः । पुं० पुरीषे ॥ इतित्रिकाण्डशेषः ॥

पुरीषमः । पुं० माषे । मूर्खे ॥ इ० त्रिकाण्डशेषः ॥

पुरुः । पुं० देवलोके । स्वर्लोके ॥ नृपवि० । ययातेः कनिष्ठात्मजे ॥ परागे ॥ दैत्यवि० ॥ त्रि० प्राज्ये । प्रचुरे ॥ पिपर्त्ति० पूर्यतेवा । पॄ० । पॄभिदीतिकुः ॥

पुरुः । स्त्री० नदीविशेषे ॥

पुरुकुत्सवः । पुं० इन्द्रादिविशेषे ॥

पुरुदंशकः । पुं० सरःकाके । हंसे ॥

पुरुदंमा । पुं० इन्द्रे । विडौजसि ॥

पुरुधा । अ० बहुप्रकारे ॥

पुरुरवाः । पुं० पुरूरवसि ॥ पुरुरौति । रुशब्दे । पुरुशब्दोपपदेरौतेरसिप्रत्ययः । विद्यात् पुरुरवः शब्दं रुकारस्यापिदीर्घतामितिद्विरूपकोषः ॥

पुरुरूपः । त्रि० बहुरूपे ॥ पुरूणिप्रचुराणिरूपाणियस्य ॥

पुरुवर्पसम् । न० बहुरूपे ॥ इ० वेदभाष्यम् ॥

पुरुशक्तिः । त्रि० बहुशक्तिमति ॥

पुरुषः । पुं० पुन्नागपादपे ॥ तिलकद्रुमे ॥ जीवनविशिष्टे कार्यकारणसङ्घाते । पूरुषे । नरे ॥ अधिकृतवर्णाश्रमादि विशिष्टे शरीराधिष्ठातरि ॥ यथा । आपत्सुमूढोद्यतिमान्यः सम्यक्प्रतिपद्यते । कर्माण्यवश्यकार्याणि तमाहुःपुरुषं बुधाइति॥ हिरण्यगर्भे । समष्टिलिङ्गात्मनि। व्यष्टिसर्वकरणानुग्राहके ॥ अन्तर्यामिरूपेणपूर्णपूर्णे । आत्मनि । पुरेषुपुर्षुवाशयाने । पूर्णत्वात्पुरिपुरिवाशयानेपरमात्मनि ॥ पूरयति-

स्वेनात्मनाजगदितिभाष्यम् ॥ नवद्वारंपुरंपुण्यमेतैर्भावैः समन्वितम् । व्याप्यशेतेमहात्मायस्तस्मात्पुरुषउच्यतेइतिमहाभारतम् ॥ पुरिशेतेयतस्तस्मात्पुरुषोजीवउच्यते । सर्वंपूरयतीत्येवंपुरुषोब्रह्मभण्यते ॥ प्रमाणान्तरे ॥ पञ्चारत्निःपुरुषइतिशुल्वसूत्रम् ॥ ऊर्द्ध्वबाहुपुरुषे ॥ सचविंशत्यधिकशतमङ्गुलंभवति ॥ रवेः पार्श्वगान्तरे ॥ साङ्ख्यतत्त्वज्ञे ॥ नप्रकृतिर्नविकृतिः पुरुषः । अनुभयरूपः ॥ सूक्ष्मशरीरमेवपुरुषः । तदपिहिपुरिस्थूलेशरीरेशेतेसुखदुःखादयः प्राकृताबुद्धिगुणाः तत्कथमेतिचेतनसम्बन्धित्वेनभवन्तीत्युच्यतेपुरुषइति । पुरिलिङ्गेशेतेइतिपुरुषः । लिङ्गंतत्सम्बन्धीतिचेतनोपितत्सम्बन्धीभवतीत्यर्थः ॥ पूर्णमनेनप्रायबुद्ध्यात्मनाजगत्समस्तमितिपुरुषः ॥ पुरिमनुष्यशरीरेउषतिश्लक्ष्णमाकारेणवसतीतिवापुरुषः ॥ पुरतिपुरलोकंप्रतिप्राणादिभ्योऽग्रेगच्छति ॥ तमुत्क्रामन्तंप्राणोनूत्क्रामतीतिश्रुतेः । पुरअग्रगमने । पुरः कुषन् ॥ यद्वा । अव्यक्तंमनइत्याद्युक्तःशरीरंपुरमुच्यते । अव्यक्तेपुरेशेतेपुरुषस्तेनचोच्यते॰इति ॥ यद्वा पुरूणिफलानिमनोभि



लषितानिसमीतिददाति । षणुदाने । डः ॥ पुरूणिभुवनानिसंहारसमयेस्यतिअन्तः करोतिवा । षो-अन्तकर्मणि । कः । प्रकृतिप्रवर्त्तके ॥ ०+० ॥ पञ्चलक्षणलक्षितेमनुजे ॥ यथा । पार्श्वेत्यागीगुणीरागीभोगीपरिजनैः सहाशास्त्रेबोद्धारःयोद्धापुरुषःपञ्चलक्षणइतिप्राचीनाः ॥ जितेन्द्रिये ॥ यथा । सश्रीयानमदंकुर्यात्ससुखीतृष्णयोज्झितः । तन्मित्रंयत्रविश्वासःपुरुषःसजितेन्द्रियइतिगारुडे १६ऽध्यायः

पुरुषकम् । न॰ घोटकोर्द्ध्वस्थितौ । सौधपांवखण्डेपांबङ्॰भा॰ ॥ यथा । पश्चिमाभ्यान्तुपादाभ्यांभुविस्थित्वाग्रपादयोः । ऊर्द्ध्वप्रेरणयास्थानमश्वानांपुरुषःस्मृतः ॥ पुरुषएव । कः ॥

पुरुषकारः । पुं॰ प्रयत्ने ॥ पुरुषस्यकृतौ । चेष्टायाम् । पौरुषे ॥ यथा । मनुरुवाच । दैवेपुरुषकारेचकिंज्यायस्तद्ब्रवीहिमे । अत्रमेसंशयोदेवछेत्तुमर्हस्यशेषतः ॥ मत्स्यउवाच । स्वमेवकर्म्मदैवाख्यंविद्धिदेहान्तरार्जितम् । तस्मात्पौरुषमेवेहश्रेष्ठमाहुर्मनीषिणः ॥ प्रतिकूलंतथादैवंपौरुषेणविहन्यते । मङ्गलाचारयुक्तानांनित्यमुत्थानशीलिनाम् ॥ येषांपूर्वकृतंकर्म्मसात्त्विकं

मनुजोत्तम । पौरुषेणविनानित्यांके- षांचिद्दृश्यते फलम् ॥ कर्म्मणाप्रा प्यतेलोकेराजसस्तथाफलम् ॥ कृ- च्छ्रेणकर्म्मणाविहितामसस्यतथाफ लम् ॥ पौरुषेणाप्यतेराजन्मार्गित व्यंफलंनरैः । दैवमेवविजानन्ति- नराः पौरुषवर्जिताः ॥ तस्मा- त्त्रिकालसंयुक्तंदैवंनसफलंभवेत् । पौ रुषंदैवसम्पत्त्याकालेफलतिपार्थिव॥ दैवंपुरुषकारश्चकालश्चमनुजोत्तम। त्रयमेतन्मानुषस्य पिण्डितंस्यात्- फलावहम् । कृषेर्वृष्टिसमायोगा- द्दृश्यन्तेफलसिद्धयः । तास्तुकाले प्रदृश्यन्तेनैवाकालेकथञ्चन ॥ तस्मा त्सदैवकर्त्तव्यंसधर्म्मंपौरुषंनृभिः॥ एवंतेप्राप्नुवन्तीहपरलोकफलंध्रुव- म् ॥ नालसाः प्राप्नुवन्त्यर्थान्नचदै वपरायणाः । तस्मात्सर्वप्रयत्नेन- पौरुषेयत्नमाचरेत् ॥ त्यक्त्वालसान् दैवपरान्मनुष्यानुत्थानयुक्तान्पुरु षान्हिलक्ष्मीः । अन्विष्ययत्नाद्वृणु तेनृपेन्द्रतस्मात्सदोत्थानवताहिभा व्यम् ॥ इतिमात्स्ये दैवपुरुषका- रकोनाम १९५ अध्यायः ॥ पुरुष स्यकारः कर्म्मषष्ठीतत्पुरुषः ॥

पुरुषघ्नः । त्रि० पुरुषपरिमाणे ॥ पुरुषद्वयसे ॥ प्रमाणेद्वयसज्दघ्नञ् मात्रचइतिपुरुषात्प्रमाणेऽर्थेदघ्नच् ॥

पुरुषदघ्निका । स्त्री० मेदायाम् ॥

पुरुषनाथः । पुं० राज्ञि ॥ सेनापतौ ॥

पुरुषान्नयति । णीञ्० । कर्मण्य- ण् ॥

पुरुषपुण्डरीकः । पुं० नरश्रेष्ठे । पुरुषव्याघ्रे ॥ जिनराजविशेषे ॥

पुरुषर्षभः । पुं० नरश्रेष्ठे । पुरुषकु ञ्जरे ॥ स्युरुत्तरपदेव्याघ्रपुङ्गवर्षभ कुञ्जराः । सिंहशार्दूलनागाद्याः पुंसिश्रेष्ठार्थवाचकाः ॥

पुरुषलक्षणम् । न० पुरुषस्वरूपे । तच्चरूपचिन्तामणावेकाशीतितमे ६६ अ ध्यायम् ॥

पुरुषसारहरः । पुं० ग्रहे ॥ पुरुषा णांसारंविवेकधैर्यक्षमाशान्तिप्रमुखं हरतीतितथा ॥

पुरुषसिंहः । पुं० पुरुषश्रेष्ठे ॥ जि नराजविशेषे । शैवे ॥

पुरुषादः पुं० राक्षसे ॥ निर्दये ॥

पुरुषाद्यः । पुं० आदिनाथनामनि जिने ॥ विष्णौ ॥

पुरुषायुषम् । न० वर्षशते ॥ पुरुष- स्यायुः । अचतुरेतिनिपातनात्सा धुः ॥

पुरुषार्थः । पुं० पुरुषस्यप्रयोजने । चतुर्वर्गे ॥ धर्मार्थकाममोक्षाश्चपुरु षार्थाउदाहृताः ॥ अत्रमनुः । वशेकृत्वेन्द्रियग्रामं संयम्यचमनस्त था । सर्वान्संसाधयेदर्थानक्षिण्वन् योगतस्तनुमिति ॥ पुरुषस्यार्थः ॥

पुरुषार्थत्वम् । न० पुरुषोद्देश्यप्रत्यय फलसाधकत्वे ॥ भावेत्व : ॥

पुरुषार्थसाधनम् । न० चतुर्वर्गोपाये । तेचस्मृतिप्रसिद्धा : । यथा अर्थस्य मूलंनिकृति : क्षमाचकामस्यरूपञ्च वयोवपुश्च । धर्मस्ययागादिदयादम क्षमोक्षस्यसर्वोपरम : क्रियाख्य : ॥ तत्रउत्कृष्टपुरुषार्थलाभसम्भवस्यधर्मकामयमानोमूर्खएव ॥

पुरुषास्थिमाली । पुं० शिवे ॥ पुरुषास्थ्नांमाला०साअस्तिअस्य । व्रीह्यादित्वादिनि : ॥

पुरुषोत्तम : । पुं० विष्णौ । भगवति । वासुदेवे ॥ पुरुषेभ्य : पुरुषेषुवा उत्तम: । ननिर्द्धारणइतिषष्ठीसमासनिषेधात् । पुरुषाणांमध्येउत्तमोवा । ननिर्द्धारणइति निषेधस्तुजात्याद्यनपेक्षयाऽसमर्थत्वान्नप्रवर्त्ततेकर्मधारयेतु सन्महत्परमोत्तमोत्कृष्टा : पूज्यमानैरित्युत्तमपुरुषइतिस्यात् ॥ यस्मात्क्षरमतीतोहमक्षरादपिचोत्तम: । अतोस्मि लोकेवेदेचप्रथित : पुरुषोत्तम : ॥ नृपवि० । दृत्यार्हविशेषे ॥

पुरुसत्तम : । पुं० श्रीहरौ ॥ पुरुर्विश्वरूपश्चासौसत्तमश्च ॥

पुरुस्पृह : । त्रि० बहुभि:स्पृहणीये ॥

पुरु : । त्रि० प्रचुरे ॥ पुरूनृहन्निगच्छति । हन० । अन्येभ्योपीतिड: ॥ यथा । पुरून्नहाति० त्रिलोकेवाक्पातइतिक : ॥

पुरुहूत : । पुं० इन्द्रे ॥ पुरुप्रचुरंहूतमाह्वानंयज्ञेष्वस्य । पुरूणिहूतानिनामान्यस्य । युद्धे पुरुनामाऽसुरेणहूतइतिवा । हूञ : क्त : । सम्प्रसारणम् । हलइतिदीर्घ : ॥ पुरुभूयिष्ठं यथास्यात्तथायज्वभिर्हूयतइतिवा ॥

पुरुहूता । स्त्री० देवीविशेषे ॥ पुरुहूता पुष्कराक्षे० इतिभागवतोक्ते : ॥

पुरूरवा : । पुं० बुधस्यपुत्रे । उर्वशीरमणे । ऐले । बौधे । चन्द्रवंशीयादिराजे । राजर्षौ ॥ विश्वेदेवे ॥ पार्वणश्राद्धदेवे ॥ यथा । पुरूरवामाद्रवाश्चपार्वणेसमुदाहृतौ ॥ पुरुरौति । रुशब्दे । पुरूरवाइति० पुरुशब्दस्यदीर्घोरौतेरसिश्चनिपात्यते ॥

पुरोग : । त्रि० अग्रगे । अग्रसरे ॥ पुरोगच्छति । गमस्त० ॥ अन्येभ्योपीतिड : ॥ प्रधाने ॥

पुरोगति : । पुं० कुक्कुरे ॥ त्रि० अग्रगे ॥

पुरोगम : । त्रि० अग्रगे । पुर:सरे ॥ पुरोगच्छति । गमस्त० । अच्० खच्वा ॥

पुरोगामी । त्रि० पुरोगे । अग्रसरे । प्रष्ठे ॥ पुरोगन्तुंशीलमस्य । सुप्यजातावितिणिनि: ॥

पुरोटि:। पुं॰ पत्रभङ्कारि। रायभाटिवृ॰गो॰भा॰ ॥ पुरोटि:पुरसंस्कारैरितिहारावली ॥

पुरोडाश:। पुं॰ हविर्भेदे। यवचूर्णनिर्मितरोटिकाविशेषे ॥ पिष्टकस्य कमस्याम् ॥ हुतशेषे ॥ सोमरसे ॥ पुरोदाश्यते। दाशृदाने। कर्म्मणिघञ्। पौरोडाशपुरोडाशेस्यच निपातनाद्दस्यडत्वम् ॥

पुरोडाश्यम्। त्रि॰ पुरोडाशीये। हविर्योग्ये ॥

पुरोद्भवा। स्त्री॰ महामेदायाम् ॥

पुरोधा:। पुं॰ पुरोहिते ॥ पुरोऽग्रे धीयते। डुधाञ्॰। पुरसिचेति॰ धाञोऽसि: ॥

पुरोभागी। त्रि॰ दोषैकदृशि। दोषमात्रदर्शिनि ॥ पुर: पूर्वं भजते। भज॰। घिनुण् ॥ दोषैकदृक्‌पुरोभागीतुकथ्यंते ॥ मर्यांशिनि ॥

पुरोहित:। पुं॰ शान्त्यादिकर्त्तरि। पुरोधसि ॥ पुरोदृष्टादृष्टफलेषुकर्मसु॰धीयते आरोप्यते य:। डुधाञ्॰। क्त:। दधातेर्हि: ॥ वक्ष्यामदण्डनीत्याञ्च कुशल:स्यात् पुरोहित:। अथर्वविहितं कुर्यान्नित्यं शान्तिकपौष्टिकम् ॥ तच्चयान्तरं चयथा। वेदवेदाङ्गतत्त्वज्ञोजपहोमपरायण:। आशीर्वादवचोयुक्तएषराज्ञ: पुरोहित इति ॥ वर्जनीयस्तुयथा। कामांश्चक्रमपुत्रंवाऽनभिज्ञमभिमतं स्त्रियम्। नक्षत्रस्याधितंशापिनृप:कुर्यात्पुरोहितमिति ॥

पुर्य्यष्टम्। न॰ पुर्य्यष्टके ॥

पुर्य्यष्टकम्। न॰ ज्ञानेन्द्रियाद्यष्टके ॥ यथा। ज्ञानेन्द्रियाणिपञ्चैवपञ्चकर्मेन्द्रियाणिच। मनोबुद्धिरहङ्कारश्चित्तञ्चेतिचतुष्टयम् ॥ प्राणोपानस्तथाव्यानउदानाख्यस्तथैवच। समानश्चेतिपञ्चैता:कीर्त्तिता:प्राणवृत्तय: ॥ खंवायुस्त्यअरित्यसभूतसूक्ष्माणिपञ्चच। अविद्याकामकर्माणिलिङ्गंपुर्य्यष्टकंविदुरिति। अन्यच्च। भूतेन्द्रियमनोबुद्धिवासनाकर्मदायव:। अविद्याचाष्टकंप्रोक्तं पुर्य्यष्टमृषिसत्तमै: ॥ अपिच। ज्ञानेन्द्रियाणिखलुपञ्च तथापराणि कर्म्मेन्द्रियाणि मनआदिचतुष्टयञ्च। प्राणादिपञ्चकमथो वियदादिपञ्चकामञ्चकर्मचतम: पुनरष्टधापू: ॥ पुरीणामष्टकम् ॥

पुल:। पुं॰ पुलके ॥ त्रि॰ विपुले ॥

पुलक:। पुं॰ कृमिभेदे ॥ प्रस्तरविशेषे ॥ तस्यपरीक्षाम्यत्रद्रष्टव्या ॥ मणिदोषे ॥ रोमाञ्चे। त्वक्‌पुष्पे ॥ हरिताले ॥ गजान्नपिण्डे ॥ गन्धर्वे ॥ गन्धर्वे॰इतिहेमचन्द्रे पाठ: ॥ असुराण्यामितिहेमचन्द्र: ॥ न॰ पर्वती

यम्रत्तिकावि० । कङ्कुष्ठे ॥
पुलकित : । त्रि० हर्षिते ॥ पुलका : सञ्जातोऽस्य । ता० इतच् ॥
पुलकी । पुं० धाराकदम्बे ॥
पुलिन्द्र : । पुं० देशविशेषे ॥ शिलहट्टात्पूर्वभागे कामरूपात्पश्चोत्तरे । पुलिन्द्रिदेशोदेवेशि नरनारायण : पर : ॥
पुलस्ति : । पुं० पुलस्त्यमुनौ ॥
पुलस्त्य : । पुं० ब्रह्मण : कर्णाम्यांजाते सप्तर्षीणांमध्ये ऋषिविशेषे । हविर्भुव : पत्न्यौ ॥
पुलह : । पुं० ब्रह्मणोनाभितोजाते सप्तर्षीणांमध्ये ऋषिविशेषे । गतिस्वामिनि ॥ स्वायम्भुवमनोस्तनये ॥
पुलहाश्रम : । पुं० हरिक्षेत्रे ॥
पुला । स्त्री० प्लुताद्यनेकापरनामनि हयगतिवि० ॥ तदुक्तं हयलीलावत्याम् । प्लुतांप्रवल्गितां माधुर्याधारा पुलनाभिधा । पुनरेनांनलोपान्तां पुलामित्याहदेशिक: ॥ तल्लक्षणश्रुतचैव । चियतिसमविशेषानुत्क्षिपत्यग्रपादान्प्रसरतिपुरतोश्व : सायधारापुलाख्या । विलसतिसमपादोत्क्षेपणाकुञ्चनानां करणमिहगतिज्ञा : प्राहुरन्ये पुलाख्यामिति ॥ पार्ष्णिप्रधानं प्रविधायरागाद्वल्गांश्च शीघ्रस्त्वचरेत्पुलाख्यामित्यादि : ॥
पुलाक : । पुं० तुच्छधान्ये । असारधान्ये ॥ सङ्क्षेपे ॥ भक्तसिक्थके ॥ पोलनम् । पुल० । सं० क्विप् । पुलमकति । अक० । कर्म्मण्यण् ॥ पोलतिश । बलाकादयश्चेतिसाधु : ॥
पुलाकी । पुं० वृक्षे ॥
पुलायितम् । न० अश्वगतौ । विक्रान्तौ ॥ पुलाख्यया अयितंगति : पुलायितम् । अय० । क्त : ॥
पुलिनम् । न० तोयोत्थिततटे । जलाद्चिरोत्थिततटे । खडा० टाप्० इ० भा० ॥ पोलति पुलमहत्वे । पुलि तलिभ्याश्चे तिनन् ॥ द्वीपे ॥
पुलिन्द : । पुं० अरण्यचरेम्लेच्छजात्यन्तरे । शबरे ॥ पोलति । पुल० । कुकिपुल्यो : किन्दच् ॥
पुलोमजा । स्त्री० इन्द्राण्याम् । पुलोम्नोमुनेर्जाता । पञ्चम्यामजाताविति ड : ॥
पुलोमद्विट् । पुं० इन्द्रे ॥
पुलोमा पुं० दानवान्तरे ॥ मुनिविशेषे ॥
पुलोमारि : । पुं० शचीपतौ ॥
पुल्कस : । पुं० पुक्कसे ॥ पृ० ॥
पुषा । स्त्री० लाङ्गलिकोवृक्षे ॥
पुषित : । त्रि० पुष्टे । कृतपोषणेपक्षिमृगादौ ॥ पुष्यतेस्म । पुष० । क्त : । औवादिकत्वादिट् ॥
पुष्कर : । पुं० रोगवि० ॥ नागवि० ॥ सारसपक्षिवि० ॥ नृपवि० । नल

राजभ्रातरि ॥ वरुणपुत्रे ॥ युद्धान्तरे ॥ मेघाधिपविशे० ॥ पुष्करो दुष्करजलः ॥ द्वीपविशे० ॥ न० खे अम्बुनि ॥ पद्मे । शिताम्भोजे । तूर्यवक्त्रे ॥ खड्गफले ॥ हस्तिहस्ताग्रे ॥ काण्डे ॥ कुष्ठौषधे ॥ द्वीपवि० ॥ तीर्थविशे० ॥ यथा । गायत्र्याश्चपरं स्थानं श्रीमत्पुष्करमीरितमिति ॥ तत्तुब्रह्मणः स्थानम् ॥ पुष्यति । पुष्णातिवा पुष्यते० अनेनवा । पुष० । पुष : किदितिकरन्किस्त्वञ्च ॥

पुष्करकः । पुं० चिताभूमेराच्छादनार्थं क्रियमाणेष्टकानिर्मितदेवकुलाकारेगृहे ॥

पुष्करकर्णिका । स्त्री० स्थलपद्मिन्याम् ।

पुष्करजः । पुं० पुष्करमूले ॥ त्रि० । पुष्करोत्पन्ने ॥

पुष्करणी स्त्री० पुष्करद्वीपनद्याम् ॥

पुष्करद्वीपः । पुं० सप्तद्वीपान्तर्गतद्वीपविशेषे ॥ नदीपुष्करणीनामयस्मिन् पुष्करमण्डिता । तयासपुष्करद्वीपः ख्यापितः सुरसेवितः ॥

पुष्करनाडी । स्त्री० स्थलपद्मिन्याम् ॥

पुष्करमूलम् । न० कुष्ठभेदमूले । पौष्करे ॥ पुष्करस्यकुष्ठौषधस्यमूलम् ॥

पुष्करवान् । पुं० हस्तिनि ॥ पुष्करमस्त्यस्य । मतुप् ॥

पुष्करशिफा । स्त्री० पुष्करमूले ॥

पुष्कराक्षः । पुं० विष्णौ ॥ पुष्करेणोपमितेअक्षिणीयस्य । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षजितिषच् ॥ पुष्करंहृदयपुण्डरीकमश्नोतिव्याप्नोत्यन्तर्यामिरूपेणेतिपुष्करोपपदादश्व्याप्ताविति धातोःकर्म्मण्यण् ॥ पुरुहूतादिव्याः स्थाने ॥

पुष्करावर्त्तः । पुं० मेघभेदे ॥

पुष्कराह्वः । पुं० सारसपक्षिणि ॥

पुष्कराह्वयः । पुं० सारसे ॥ न० पुष्करमूले ॥

पुष्करिणी । स्त्री० इभ्याम् । हस्तिन्याम् ॥ सरोजिन्याम् । कमलिन्याम् । कृत्रिमजलाशये ॥ पुष्करमूले ॥ स्थलपद्मिन्याम् ॥ समचतुरस्रखाते । यथा । चतुर्विंशाङ्गुलोहस्तोधनुस्तच्चतुरुत्तरः । शतधन्वन्तरश्चैव तावत्पुष्करिणीमता । एतत्पञ्चगुणःप्रोक्तस्तडागइतिनिश्चयः ॥ तेन चतुर्दिक्षुविंशतिहस्तान्यूनतायांच तुःशतहस्तान्यूनाभ्यन्तरत्वे नपुष्करिणी । एतज्जलाशयाधारपरं नतु उपरितटम् । शतेनधनुर्भिःपुष्करिणी । इतिनव्यवर्द्धमानधृतोवशिष्ठः ॥ पुष्कराणिसन्त्यस्याम् । पुष्करादिभ्योदेशे० इतीनिः ॥

पुष्करी । पुं० हस्तिनि ॥ मत्वर्थीय इनिः ॥

पुष्करेक्षणः । पुं० प्रभासतीर्थाधिष्ठात्र्यां देव्याम् ॥

पुष्कलः । पुं० भरतात्मजे । पुष्कलावत्याधीशे ॥ न० । ग्रासचतुष्टयात्मकभिक्षायाम् ॥ यथा । भिक्षामाहुर्ग्राससमात्रमन्नं तस्माच्चतुर्गुणम् । पुष्कलं हन्तकारन्तु तच्चतुर्गुणमुच्यते ॥ इति ॥ अष्टकुञ्चिपरिमितधान्यमानभेदे ॥ यथा । अष्टमुष्टिर्भवेत्कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम् । पुष्कलानि च चत्वारि आढकः परिकीर्त्तितः ॥ त्रि० परिपूर्णे ॥ श्रेष्ठे ॥ पुष्यति । पुष० । पुषः किदित्यनुवृत्तौ० कलन् इति कलन् कित् ॥ स्त्रियां गौरादित्वात् पुष्कली ॥ सि० लज्वा ॥

पुष्कलकः । पुं० गन्धमृगे ॥ क्षपणे ॥ कीलके ॥

पुष्कसः । पुं० पुक्कसे ॥ पृ० ॥

पुष्टः । त्रि० पालिते । कृतपोषणे । पुषिते ॥ पुष्यतेस्म । पुष० । क्तः । रेधादिकत्वान्नेट् ॥

पुष्टिः । स्त्री० पोषणे ॥ वृद्धौ । अवयवोपचये ॥ अश्वगन्धायाम् ॥ मातृकाविशेषे ॥ यथा । पुष्टिर्गणपतेः पत्नी पूजिता जगतीतले । यया विना परिक्षीणाः पुमांसो योषितोपि चेतिभागवतम् ॥ पोषणम् । पुष० । क्तिन् ॥ व्रतफले० । पुष्टिर्धनजनादीर्घायुर्वृद्धिरित्यभिधीयते ॥

पुष्टिकरः । त्रि० पुष्टिजनके ॥

पुष्टिका । स्त्री० जलशुक्तौ ॥

पुष्टिकान्तः । पुं० श्रीगणेशे । विनायके ॥

पुष्टिदा । स्त्री० अश्वगन्धायाम् ॥ वृद्धौ ॥ पुष्टिदात्र्याम् ॥

पुष्पम् । न० सुमनसु । प्रसूने । कुसुमे ॥ स्नानं कृत्वा तु ये केचित् पुष्पं चिन्वन्ति वै द्विजाः । देवतास्तन्न गृह्णन्ति भस्मीभवति दारुवदिति लघुहारीतः ॥ विकाशे ॥ स्त्रीरजसि ॥ धनदविमाने ॥ नेत्ररुग्भेदे । फूला फूली० इ० भा० प्र० ॥ अस्यौषधं यथा । हरीतकी वचा कुष्ठं पिप्पली मरिचानि च । विभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला ॥ सर्वमेतत् समं कृत्वा छागीक्षीरेण पेषयेत् । नाशयेत्तिमिरं कण्डूं पटलान्यर्बुदानि च ॥ अधिकानि च मांसानि यश्च रात्रौ न पश्यति । अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत् ॥ वर्त्तिश्चन्द्रोदया नाम नृणां दृष्टिप्रसादनी ॥ इति च क्रपाणिदत्तः ॥ पुष्पति पुष्प्यते वा । पुष्प विकसने । पचाद्यच् । घञ् वा ॥

पुष्पकम् । न० रीतिपुष्पे ॥ पुष्पवदाभरणभूते धनदस्य विमाने ॥ पुष्पकोस्त्रीति शब्दार्णवात् पुंल्लिङ्गोपि । नेत्ररोगविशेषे । पुष्पे ॥ रत्नकङ्कणे ॥

रसाञ्जने ॥ लोहकांस्ये ॥ मृदङ्गाग्रकव्याम् ॥ कासीसे ॥ पुष्यति । पुष्य० । क्रन् ॥ पुष्पमिववा । इवेप्रतिकृताविति कन् ॥
पुष्पकरगडकम् । न० उज्जयिन्यामुपवनोद्याने ॥
पुष्पकरगिडनी । स्त्री० अवन्त्याम् । उज्जयिन्याम् ॥
पुष्पकाशीशम् । न० किञ्चित्पीतेकासीसे । कंसके । नेत्रौषधे ॥
पुष्पकीट : । पुं० भ्रमरे । रोलम्बे ॥ कुसुमकृमिमात्रे ॥
पुष्पकेतन : । पुं० कामदेवे ॥
पुष्पकेतु: । पुं० रीतिपुष्पे । कुसुमाञ्जने ॥ पुष्पस्यकेतुरिवनाशकत्वात्
पुष्पघातक : । पुं० वेणुवृक्षे ॥ दमनवृक्षे ॥
पुष्पज : । पुं० पुष्परसे । पुष्पद्रवे ॥
पुष्पद : । पुं० वृक्षे ॥ त्रि० । पुष्पदातरि ॥
पुष्पदन्त: । पुं० वायुकोणस्थदिग्गजे ॥ विद्याधरविशेषे ॥ सुविध्याख्यजिने ॥ पुष्पमिवदन्ता : यस्यस : ॥
पुष्पदन्तक : । पुं० गन्धर्वविशेषे ॥
पुष्पद्रव : । पुं० पुष्पस्वेदे । पुष्पसारे ॥
पुष्पधनु : । पुं० कामदेवे ॥ पुष्पंधनुरस्य । वासंज्ञायामित्यनङ्भावेसान्त : ॥
पुष्पधन्वा । पुं० मदने । कामे ॥ पुष्पं धनुरस्य । वासंज्ञायामित्यनङ् ॥
पुष्पलिह : । पुं० भ्रमरे ॥
पुष्पनिर्यासक : । पुं० पुष्पद्रवे ॥
पुष्पन्धय : । पुं० भ्रमरे ॥ पुष्पाणिधयति । धेट्० । मुञ्जकुलास्यपुष्पेषुधेट : खशितिकिचिदितिखश् । अरुर्द्विषदितिमुम् ॥
पुष्पपथ : । पुं० भगे । योनौ ॥
पुष्पपात्रम् । न० पुष्पाधारे ॥
पुष्पपुरम् । न० पाटलिपुत्रनगरे ॥
पुष्पफल : । पुं० कपित्थे ॥ कुष्माण्डे ॥ पुष्पयुक्तंफलमस्य ॥
पुष्पबलि : । पुं० वास्तुपूजायाम् ॥
पुष्पमास : । पुं० वसन्ते ॥ पुष्पाणांमास : ॥
पुष्पयोग : । पुं० यात्रायोगांतरे ॥ यथा । भौमेस्वराशिगेलग्ने सौम्येकेन्द्रत्रिकोणगे । पुष्पयोगोरिपुविपिनकुठार : सइराङ्मत : ॥
पुष्परक्त : । पुं० सूर्यमणिवृक्षे ॥
पुष्परथ : । पुं० चक्रयाने । युद्धं विना यात्रोत्सवादौ सुखभ्रमणार्थरथे ॥ सुकुमारत्वात्० पुष्पमिवरथ : ॥
पुष्परस : । पुं० मकरन्दे ॥ पुष्पस्यरस : ॥
पुष्परसाह्वयम् । न० मधुनि ॥
पुष्पराग : । पुं० पीतमणौ । वाचस्पतिवल्लभे । पोखराज० इ० भा० ॥ अस्यलक्षणंयथा । सुच्छायपीत

गुरुगात्रसुरङ्गशुद्धं स्निग्धस्वनिर्मल मतीवसुवृत्तशीतम् । यः पुष्पराग मकलंकलयेदमुष्य पुष्णातिकीर्त्ति मतिशौर्यसुखायुरर्थान् ॥ तस्यापल क्षणम्यथा । कृष्णबिन्दुच्छिन्नं रूक्षं धवलंमलिनंलघु । विच्छायंशर्करा गारंपुष्परागंसदोषकं ॥ अस्यपरी क्षालक्षणं यथा । घृष्टोविकाशयेत् पुष्परागमधिकमात्मीयम् । नखलु पुष्परागोजात्यतयापरीक्षकैरक्त :॥

पुष्परेणु : । पुं० परागे ॥

पुष्परोचन : । पुं नागकेशरे ॥

पुष्पलाव : । पुष्पलावी । पुं० } मालाकारे ॥

पुष्पलिट् । पुं भ्रमरे ॥ पुष्पं लेढि । लिह • । क्विप् ॥

पुष्पवटी । स्त्री० फुलौरी० हृ० प्र० खाद्यप्रभेदे ॥

पुष्पवन्तौ । पुं० एकयोक्त्यानित्यद्वि वचनान्तश्चन्द्रसूर्ययो : ॥ चन्द्रा र्कौ० एकयोक्त्यासाधारणवचनं० पुष्पवन्तौ० प्रत्येकंपुष्पवानितिन प्रयोक्तव्यमितिभाव : । पुष्पविकस ने । भावेघञ् । पुष्प : प्रकाशस्त स्तौ ॥

पुष्पवती । स्त्री० रजस्वलायाम् ॥ तीर्थविशेषे ॥ पुष्पं रजोऽस्त्यस्या : । मतुप् ॥ त्रि० पुविशिष्टे ॥

पुष्पवाटिका । स्त्री० पुष्पवाट्याम् ॥

पुष्पवाटी । स्त्री० पुष्पोद्याने । फुल वारी० फुलवरिया० हृ० भा० ॥ पुष्पाणांवाटी ॥

पुष्पवाण : । पुं० मन्मथे । कामदेवे ॥ पुष्पाणिवाणायस्य ॥

पुष्पवाहन : । पुं० पुष्परराजाभिधे नृपे ॥

पुष्पशकटी । स्त्री० आकाशवाण्याम् । दैवप्रश्ने ॥

पुष्पशून्य : । पुं० उदुम्बरे ॥ त्रि० कुसुमरहिते ॥

पुष्पसमय : । पुं० वसन्ते । चैत्रवैशा खयो : ॥ पुष्पाणांसमय : ॥

पुष्पसायक : । पुं० पुष्पधन्वनि । कामदेवे ॥

पुष्पसार : । पुष्पद्रवे ॥ पुष्पस्यसा र : ॥

पुष्पसिता । स्त्री० फूलसक्कर० हृ० भा० प्र० द्रव्ये ॥ भवेत्पुष्पसिता शीतारक्तपित्ताहरीलघु :॥

पुष्पसौरभा । स्त्री० कलिकारीवृक्षे ॥

पुष्पस्वेद : । पुं० पुष्पद्रवे ॥

पुष्पहास : । कुसुमविकासे ॥ पुष्पा णांमुकुलात्मनास्थितानांहासोविका श : पुष्पहास : ॥

पुष्पहासा । स्त्री० रजस्वलायाम् ॥

पुष्पहीना । स्त्री० उदुम्बरे ॥ पिप्पला याम् । रज : शून्यायाम् ॥

पुष्पा । स्त्री० । कर्णपूर्याम् । मालि

न्याम् । भागलपुर० इ० प्र० नगरे ॥
पुष्पाजीव : । पुं मालाकारे ॥
पुष्पाञ्जनम् । न० अञ्जनवि० । कौसुम्भे । पुष्पकेतौ ॥
पुष्पाञ्जलि : । पुं० प्रसूनानामञ्जलौ । कुसुमाञ्जलौ ॥
पुष्पाण्डक : । पुं० शालिजातिविशेषे ॥
पुष्पाम्बुज : । पुं० पुष्पद्रवे ।
पुष्पाश्चार्यो । पुं० मालाकारे ॥
पुष्पासवम् । न० मधुनि ॥ पुं० पुष्पसकरन्दकृतश्वासवे ॥
पुष्पास्त्र : । पुं० कन्दर्पे । मकरध्वजे ॥
पुष्पाह्वा । स्त्री० शतपुष्पायाम् ॥
पुष्पिका । स्त्री० दन्तमले । लिङ्गमले ॥
पुष्पित : । त्रि० जातपुष्पे वृक्षादौ । प्रफुल्ले ॥ पुष्पवति ॥ पुष्पाणिसंजातान्यस्य । ता० इतच् ॥ रमणीये ॥ आपातरमणीये ॥
पुष्पिता । स्त्री० रजस्वलायाम् ॥
पुष्पिताक्ष : । त्रि० बुद्बुददृष्टौ ॥
पुष्पिताग्रा । स्त्री० वर्णवृत्तच्छन्दसमवृत्तप्रभेदे ॥ लक्षणंयथा । अयुजिनयुगरेफतोयकारोयुजितुनजौजरगाश्च पुष्पिताग्रा ॥ य० । करकिसलयशोभयादिभान्तीकुचफलभारविनम्रदेहयष्टि : । स्मितरुचिरविलासपुष्पिताग्राव्रजयुवतिव्रततिर्हरेर्मुदेऽभूत् ॥

पुष्पेषु : । पुं० कामदेवे ॥ पुष्पाणिइषवोऽस्य ॥
पुष्य : । पुं० अष्टमनक्षत्रे । सिध्ये । तिष्ये ॥ पुष्य : सर्वार्थसाधक : ॥ तत्रजातस्यफलंयथा । प्रसन्नगात्र : पितृमातृभक्त : स्वधर्मयुक्तोऽभिगम्याभियुक्त : । भवेन्मनुष्य : खलुपुष्यजन्मासम्मानचामीकरवाहनाढ्य : ॥ पौषमासे ॥ कलियुगे ॥ यथा ॥ सत्सम्प्रदायप्रथनायपुष्येशिष्यैश्चतुर्भि : सहयोवतीर्ण : । उत्तोवृत्तसङ्गमतत्सरराजे श्रीशङ्कराचार्यगुरुं तमीडे ॥ पुष्णातिकार्याणि०पुष्यन्त्यर्थाअस्मिन्निति वा । पुष्यसिध्यौनक्षत्रइतिकर्त्तर्यधिकरणेचक्यप् निपातित : ॥
पुष्यध : । पुं० भूर्जकण्टके । सङ्करजातिविशेषे । आवन्त्ये ॥
पुष्यरथ : । पुं० युद्धंविनासुखभ्रमणार्थे । चक्रयाने ॥ असौपुष्यरथश्चक्रयानंनसमराययत् ॥ पुष्यइवरथ : । पुष्येयात्रोत्सवादौरथोवा ॥
पुष्यस्नानम् । न० पुष्याभिषेके ॥ यथा । मूलंमनुजाधिपति : प्रजातरोस्तदुपघातसंस्कारात् । अशुभंशुभञ्च्च्नो केभवतियतोतोनृपतिचिन्ता ॥ पुष्यस्नानंनृपते : कर्तव्यं दैवविपत्तरोधे भ्याम् । नात : परंपवित्रंसर्वोत्पातान्तकरमस्ति ॥ अस्यविधि :

कालिकापुराणेवाराह्याञ्चद्रष्टव्यः ॥

पुष्या । स्त्री० पुष्यनक्षत्रे ॥

पुस्तम् । न० पुस्तके । लिखितग्रन्थे ॥ यथा । विधायपूजयेन्नित्यं पुस्तपूजोक्तसिद्धये॥ लेप्यादिशिल्पकर्म्मणि॥ आदिनाकाष्ठपुत्तलिकादयोबोध्याः ॥ यथा । मृदावादारुणावाथवस्त्रेणा प्यथचर्म्मणा । लोहरत्नैःकृतंवापिपुस्तमित्यभिधीयते ॥ पुस्यते । पुस्त आदरादौणिच् । एरच् ॥

पुस्तकम् । न० पुस्ते । लिखितग्रन्थे । पोथी इ० भा० ॥ तस्यपरिमाणं यथा । मानंवक्ष्ये पुस्तकस्यशृणुदेविसमासतः । मासेनापिफलंवि न्द्यात्मानेश्रीर्हताभवेत् ॥ हस्तमात्रंमुष्टिमात्रमाबाहुद्वादशाङ्गुलं।दशाङ्गुलंतथाष्टौचततोहीनंनकारयेत्॥ पुस्तकलिखकस्यपूजाफलंयथा। आरम्भेचसमाप्तौच लेखकंप्रतिपूजयेत् हरिद्रागन्धपुष्पाद्यैर्वस्त्रैश्चर्म्मनदोहरैः॥ यावदक्षरसङ्ख्यानंप्रतिपत्रचसुन्दरि । तावद्युगसहस्राणिब्रह्मलोकेवसेच्चिरम् ॥ वेतनग्रहणेलेखकस्यदोषोयथा । वेतनंयस्तुगृह्णीयात्लिखित्वापुस्तकंसतु । यावदक्षरसङ्ख्यानंतावन्नरकेवसेदिति योगिनीतन्त्रे तृतीय ३ भागे ७ पटलः ॥

पुस्तकर्म्मा । पुं० लेप्यादिशिल्पकर्मकारि ॥

पुस्तकशिम्बिका । स्त्री० शिम्बिप्रभेदे ॥ पुस्तशिमृव्याम् ॥

पुस्तशिम्बिः । स्त्री० पुस्तकशिम्बिकायाम् ॥

पूगः । पुं० क्रमुके । गुवाके ॥ वृन्दे । नानाजातीयानामनियतवृत्तीनामर्थकामप्रधानानांसङ्घे ॥ क्रमुकतरु णि ॥ न० गुवाकफले । उद्वेगे ॥ यथा । पूगंगुरुहिमं रूक्षंकषायंकफपित्तहृत् । मोहनन्दीपनंरुच्यमास्यवैरस्यनाशनम् ॥ आर्द्रंतद्गुर्वभिष्यन्दिवह्निदृष्टिहरंस्मृतम् । स्विन्नंदोषत्रयच्छेदिदृढमध्यंतदुत्तमम् ॥ अस्यपाकोयथा । शृङ्गाटकंजीरके द्वे जातीकोषश्चवंशजम् । लवङ्गधान्यकञ्चापिप्रत्येकंकर्षयुग्मकम् ॥ हैयंगवीनंकुडवंसिताचार्द्धतुलोच्चला । धात्रीवरीद्रव्यञ्चलिखपूगस्याष्टपलानिच ॥ उलूखलेचसंकुञ्चचूर्णीराढकान्वितम् । सन्ध्याद्यभक्षितंहन्यात्वासरादीयथोचितम् । ज्वरदाहञ्चपित्तञ्चयक्ष्मशूलगुदाङ्कुरान् ॥ छर्दिंप्रमेहमूत्राणामाघातञ्चविनाशयेत् । बलप्रदश्चगर्भदश्चस्त्रीणाञ्चैतद्रसायनमिति ॥ पुनाति० पवतेवा० पूयतेमुखमनेनवा । पूञ्० । छापूखडिभ्यः । किदिति गन् ॥

पूगकृतः। त्रि० पुञ्जीकृते॥ अपूगः पूगः सम्पद्यमानः कृत इत्यर्थे श्रेण्यादयः कृतादिभिरितिसमासे० श्रेण्यादिषुच्व्यर्थवचनमिति च्व्यर्थता॥

पूगतिथः। त्रि० पूगानांपूरणे॥ बहुपूगेतिडटितिथुगागमविधानादसंख्यात्वेपि डट्॥

पूगपात्रम्। न० पूगपीठे। फलदवके॥

पूगपीठम्। न० काटकोले। पतद्ग्रहे॥

पूगपुष्पिका। स्त्री० कुड्मली। विवाहसम्बन्धिपुष्पताम्बूले॥

पूगफलम्। न० उद्वेगे। चिक्कण्याम्॥

पूगयाजकः। पुं० बहुयाजके॥

पूगरोटः। पुं० हिन्तालवृक्षे॥

पूगिका। स्त्री० क्रमुके॥

पूगिकाफलम्। न० पूगीफले॥

पूगी। स्त्री० पूगे। पूगवृक्षे॥

पूगीफलम्। न० उद्वेगे। पूगफले॥

पूजकः। त्रि० पूजाकर्त्तरि॥

पूजनम्। न० अर्चने। पूजायाम्। यथा॥ शास्त्रप्रणामशुश्रूषादौ॥ पूजपूजायाम्। ल्युट्॥

पूजनीयः। त्रि० श्रुताचाराभिजनादिभिः पूजायोग्ये॥ पूज्ये॥ पूजेरनीयर्॥

पूजा। स्त्री० नमस्यायाम्। अपचितौ॥ सपर्यायाम्॥ पादप्रक्षालनार्चनभजनदानादिरूपायामर्चायाम्॥ देवार्चनायाम्॥ तस्याः सामान्यानुष्ठानंयथा। आदावृष्यादिकन्यासः करशुद्धिस्ततः परम्। अङ्गुलिव्यापकन्यासौहृदादिन्यासएवच॥ तालत्रयञ्चदिग्बन्धः प्राणायामस्ततः परम्। ध्यानंपूजाजपश्चैवसर्वतन्त्रेष्वयंविधिरितियामलवचनम्॥ पूजनम्। पूज०। चितिपूजीत्यङ्॥

पूजार्हः। त्रि० मान्ये। अर्घभाजि॥ कुसुमादिभिरर्चनयोग्ये। पूज्ये॥ पूजामर्हति। अर्हपूजायाम्। अर्हइत्यच्॥ स्त्रियांपूजार्हा॥

पूजितः। त्रि० सत्कृते। अर्चिते॥ पूज्यतेस्म॥ पूज०। क्तः॥ देवे॥ पूजितोयः सुरासुरैरित्यादौभूतेक्तोनतुवर्त्तमाने० तेन तृतीयात्रोपपद्यते। अन्यथाक्तस्यचवर्त्तमानइतिषष्ठीस्यात्॥

पूजितव्यः। त्रि० पूजनीये॥

पूजिलः। पुं० देवतायाम्॥ त्रि० पूज्ये॥

पूज्यः। पुं० श्वशुरे॥ त्रि० वन्द्ये पूजार्हे। प्रतीक्ष्ये॥ पूजार्हा व

या । गुरूणामपिसर्वेषांपूज्या : पञ्चविशेषत : । तेषामाद्यास्त्रय : श्रेष्ठास्तेषांमातासुपूजिता ॥ यो भावयतियासूतेयेनविद्योपदिश्यते ज्येष्ठ : भ्राताचभर्ताचपंचैतेगुर वस्मृताइतिकौर्मे उपरिभागे ११ अध्याय : ॥ पूज्यते । पूज० । । अचोयत् ॥ पूजयितुमर्ह : । पूज० । अर्हेकृत्यतृचश्चेतियत् ॥ सर्वस्यैवहिदानस्यग्रहीतागुरुरुच्य ते । कन्यायाश्चैव विद्याया : प्रदा तापूज्यतेगुरु : ॥

पूज्यपाद : । पुं० भगवच्छङ्कराचार्ये ॥

पूत : । पुं० शङ्खे । श्वेतकुशे ॥ विकङ्कतवृक्षे ॥ न० बहुलीकृते । अपनीततुषधान्ये ॥ सत्यवचने ॥ त्रि० व्रतादिनाशुद्धे । पवित्रे । प्रयते ॥ दधिगोमयादौसामन्यप वित्रे० स्वभावपवित्रे वा । पवित्रे मेध्ये ॥ दृष्टिपूतंन्यसेत्पादंवस्त्र पूतंजलंपिवेत् । सत्यपूतांवदेद्वा चंमन : पूतंसमाचरेत् । शठिते बहुलीकृते ॥ पूयतेस्म । पूङ्० पूञ्० वा । क्त : ॥ पवतेस्मवा । पूङोगत्यर्थेतिक्त : ॥

पूतक्रतायी । स्त्री० इन्द्राण्याम् । शच्याम् ॥ पूतक्रतो : स्त्री० । पूतक्रतोरैचेत्यैकारादेशोङीप् च ॥

पूतक्रतु : । पुं० इन्द्रे ॥ पूता:क्रतवो येन ॥

पूतक्रतु : । स्त्री० देव्याम् ॥ पूता : क्रतवोययासा ॥

पूतगन्ध : । पुं० वर्बरे ॥

पूततृणम् । न० श्वेतकुशे ॥ कुशे ॥ पूतञ्चतत्तृणञ्च ॥

पूतद्रु : । पुं० पलाशवृक्षे ॥

पूतधान्यम् । न० तिले ॥ पूतञ्चतद्धा न्यञ्च ॥

पूतना : स्त्री० हरीतक्याम् ॥ पूतना स्थिमतीसूक्ष्मेतिनिरूपणात् ॥ सिन्धु देशजास्वल्पत्वक्वृहदस्थिहरीतकी लेपनेप्रशस्तेतिराजवल्लभ : ॥ गन्ध मांस्याम् ॥ बालरोगविशेषे ॥ बाल मातृकाविशेषे ॥ दानवीविशेषे । बकासुरभगिन्याम् ॥ अहोबकीयं स्तनकालकूटंजिघांसयापाययिदप्य साध्वी । लेभेगतिंधात्र्युचितांत तोन्यंकंवादयालुंशरणंव्रजेम ॥ पू तंकरोति । तत्करोतीतिणिच् । बहुलमन्यत्रापीतियुच् ॥

पूतनारि : । पुं० बालमुकुन्दे । श्री कृष्णे ॥ पूतनायाअरि : ॥

पूतनासूदन : । पुं० श्रीकृष्णे ॥ पूत नांसूदितवान्०सूदयतिवा । सूद- क्षरणे । नन्द्यादित्वाल्ल्यु : ॥

पूतनाघ्न । पुं० श्रीकृष्णे ॥ पूतनां- हन्ति । हन० । क्विप् ॥

पूतपाप : । त्रि० निरस्तस्वर्गभोगप्रतिबन्धकपापे ॥

पूतफल : । पुं० पनसे ॥

पूता । स्त्री० दूर्वायाम् ॥

पूतात्मा । पुं० ईश्वरे ॥ पूत : शुद्ध: सत्त्वादिगुणसम्बन्धरहित : आत्मा स्वरूपंयस्य ॥ पूतश्चासावात्माचेति वा ॥ शुद्धदेहे ॥ शुद्धान्त : करणे ॥ पूतआत्मायस्य ॥

पूति : । स्त्री० दुर्गन्धे ॥ पवित्रतायाम् ॥ खट्टाशमुष्के ॥ न० गोरिषतृणे ॥

पूतिक : । पुं० पूतिकरञ्जे ॥ पुनाति । पूञ् । तिन्तिडीकादयश्चेति० इकन् ॥ न० विष्टायाम् ॥

पूतिकरज : । पुं० लटाकरञ्जवृक्षे । कलिकारके । कलहनाशने । कण्टवतिकरञ्जे । काँटाकरञ्जइति० भा० ॥ पूतिश्चासौकरजश्च ॥

पूतिकरञ्ज : । पुं० पूतिकरजे ॥

पूतिकर्णक : । पुं० कर्णरोगविशेषे ॥ तल्लक्षणंयथा । कर्णविद्रधिपाकाद्वा जायतेचाम्बुपूरणात् । पूयंस्रवतिवापूतिसज्ञेय: पूतिकर्णक : ॥ अस्यौषधंयथा । निर्गुण्डीसुरसम्लेलंसिन्धुधूमरजोगुड : पूरणात्पूतिकर्णस्यशमनोमधुसंयुत : ॥ अथवा । वरुणाद्रकपित्थाम्रजम्बूपल्लवसाधितम् । पूतिकर्णापहंतैलंजातीपत्ररसेनवेति चक्रपाणिदत्त : ॥

पूतिका । स्त्री० मार्जार्याम् ॥ पोइ इ० प्र० लताशाके । उपोदक्याम् ॥

पूतिकामुख : । शम्बूके ॥

पूतिकाष्ठम् । न० सरलद्रुमे ॥ देवदारुमहीरुहे ॥ पूतिचतत्काष्ठञ्च ॥ पूते : पावनस्यकाष्ठंवा ॥

पूतिकाष्ठकम् । न० पूतिकाष्ठे ॥

पूतिगन्ध : । पुं० गन्धके ॥ हिङ्गुदीवृक्षे ॥ न० रङ्गे ॥ त्रि० दुर्गन्धे ॥

पूतिगन्धि : । } त्रि० दुर्गन्धे ॥
पूतिगन्धिक : }

पूतिगन्धिका । स्त्री० वाकुच्याम् ॥

पूतितैला । स्त्री० ज्योतिष्मत्याम् ॥

पूतिदारु : । न० देवदारुणि ॥

पूतिनस्य : । पुं० नासारोगभेदे ॥ तल्लक्षणंयथा । दोषैर्विदग्धैर्गलतालुमूलेसम्मूर्छितोयस्यसमीरणस्तु । निरेतिपूतिर्मुखनासिकाभ्यांतंपूतिनस्यंप्रवदन्तिरोगम् ॥ औषधन्तु । । व्याघ्रीदन्तीवचाशिग्रुस्वरसव्योषसम्भवै : । पाचितंलावणंतैलंपूतिनासागदंजयेत् ॥ अथवा । त्रिकटुविडङ्गकसैन्धवबृहतीफलशिग्रुस्वरसदन्तीभि : । तैलङ्गोजलसिद्धंनस्यं स्यात्पूतिनस्यस्य ॥

पूतिपत्र : । पुं० श्योनाकविशेषे ॥

पूतिपुष्पिका । स्त्री० मातुलुङ्गायाम् ॥

पूतिफली । स्त्री० वाकुच्याम् । सोम

राज्याम् ॥ पूतिफलेष्वस्या : पाक कर्णेतिङीष् ॥

पूतिमयूरिका । स्त्री० अजगंधायाम् ॥

पूतिमेद : । पुं० अरिमेदे ॥

पूतिवात : । पुं० बिल्ववृक्षे ॥ अधोवायौ ॥

पूतिवृक्ष : । पुं० श्योनाके ॥

पूतिशारिजा । स्त्री० खट्टाश्याम् ॥

पूतिक : । पुं० गंधसार्जारे ॥ घोडाकरञ्ज इ० भा०प्र० करञ्जविशेषे ॥ लताविशेषे ॥

पूतिकरञ्ज : । पुं० लट्वा ख्यकरञ्जे ।

पूतिगण्ड : । पुं० पूतिकीटे ॥

पूतिभाव : । पुं० दौर्गन्ध्ये ॥ क्लेदे ॥

पूत्यण्ड : । पुं० गन्धकीटे ॥ गन्धे बे ॥ यस्यनाभौमृगनाभिर्जायते ॥

पूप : । पुं० अपूपे । पिष्टके । पूआ० इ०भा० ॥ यथा ॥ समितांगुडतोयेनमेलयित्वासुमर्दिताम् । घृतेविस्तार्यसुपचेत्सुवृत्तोमृदुपूपक : ॥ अपूप : पुष्टिदोवल्योहृद्योगुरुतर: स्मृत : । पित्तानिलहरोवृष्य : सुपक्वोरुचिकारक : ॥ पवनंपू : । पूञ्०सं०क्विप् । पुवंपाति०पिबतिवा । पारक्षणे०पानेवा । आतइतिक : ॥

पूपला । स्त्री० पोलिकायाम् ॥

पूपाली । स्त्री० पोल्याम् ॥

पूपाष्टका । स्त्री० आग्रहायणीपूर्णि मायाः परतः कृष्णाष्टम्याम् ॥

पूपिका । स्त्री० पूलिकायाम् ॥

पूयम् । न० पक्वव्रणादिसम्भवघनीभूतशुक्लवर्णविकृतरक्ते । क्षतजे । मलजे । पीप०राध०इ०भाषा ॥

पूयनम् । न० रक्तविकारे । पूये ॥

पूयरक्त : । पुं० नासारोगभेदे ॥ तल्लक्षणम् । दोषैर्विदग्धैरथवापिजन्तोर्ललाटदेशेऽभिहतस्यतैस्तै : । नासास्रवेत्पूयमसृग्विमिश्रं तंपूयरक्तंप्रवदन्तिरोगम् ॥

पूयारि : । पुं० निम्बपादपे

पूयालस : । पुं० सन्धिगतरोगभेदे ॥ लक्षणंयथा । पक्व : शोफ : सन्धिज : संस्रवेद्यः सान्द्रं पूयंपूतिपूयालस : स : ॥ इतिसुश्रुत : ॥

पूयोद : । पुं० नरकान्तरे ॥

पूर : । पुं० जलसमूहे । अम्भसांवृद्धौ ॥ व्रणसंशुद्धौ ॥ खाद्यविशेषे ॥ न०दाहागुरुणि ॥

पूरक : । पुं० प्राणवायौ : शनैर्वामनासापुटेन०दक्षिणनासापुटेनवा:सव्यापमव्यन्यायेनान्त : प्रवेशने ॥ वाह्येनवायुनामुर्त्त :शक्तिसीमप्रपूरणम् । पूरक : सतदभ्यासात्सुगुर्वपिविकर्षयेत् ॥ नासिकोत्कृष्टउच्छ्वासोध्मात : पूरकउच्यते ॥ आत्मानुसन्धाने ॥ ब्रह्मवाह्यो तियावृत्ति: पूरकोवायुरीरित : ॥ पूरीआप्याय;

मे । खल् ॥ बीजपूरे ॥ गुणकाङ्के ॥ पुं॰ प्रेतदेहनिष्पादकाशौचकादेय दशपिण्डे ॥ त्रि॰ पूरणकर्त्तरि ॥

पूरणः । पुं॰ सेतौ ॥ विष्णुतैले ॥ न॰ अङ्कानांगुणने ॥ वृष्टौ ॥ कुटन्नटे ॥ दानतन्तुषु ॥ पिष्टप्रभेदे ॥ हिङ्गुधान्यजलेमांसंसुखिन्नंसूक्ष्मकुट्टितम् । संयुक्तंहिङ्गुजीराद्रंबीजपूरैलसैन्धवैः ॥ घृतेतप्तंपरिभृष्टं-धूपितंमांसपूरणम् ॥ मांसस्यपूरणंरुच्यंहृद्यंपुष्टिकरंपरं । वातपित्तहरंबल्यंमन्दाग्निकफनाशनम् ॥ त्रि॰ पूरके । पूरणकर्त्तरि ॥ पालनकर्त्तरि ॥ पृणाति । पृपालनपूरणयोः । ल्युट् ॥ पूर्य्यतेऽनेन । पूरी॰ । करणेल्युट् ॥

पूरणी । स्त्री॰ शाल्मलिद्रुमे ॥ पटारम्भकसूत्रेषु ॥ पूरणकर्त्र्याम् ॥ पूरयति । पूरी॰ । ल्युट् । ङीप् ॥

पूराम्लम् । न॰ वृक्षाम्ले ॥

पूरिका । स्त्री॰ पूपविभेदे । पूरी॰ कचौरी॰ इ॰ भा॰ ॥ यथा । माषाणांपिष्टिकांयुञ्ज्याल्लवणाद्रकहिङ्गुभिः । तयापिष्टिकयापूर्णासमिताकृतपोलिका ॥ ततस्तैलेविपक्वासापूरिकाकथिताबुधैः । रुच्यास्वाद्वीगुरुः स्निग्धावातपित्तासृग्दूषिका । चक्षुस्तेजोहरीचोष्णापाकेवातविनाशिनी । तथैवघृतपक्वाऽपिचक्षुष्यारक्तपित्तहृत् ॥ बदरचूर्णपूरिकातु । घृतमिश्रकनिक्वायांमिलितंपञ्चमांशकम् । बदरत्वग्भवंचूर्णंजलेनालोड्यपीडयेत् ॥ पूरिकाघृतसंपक्वाखण्डपाकविलेहिता । पूरिकाबदरोत्थाश्चस्निग्धापित्तहराहिमा ॥ मधुरातृड्वातघ्नी सराछर्दिविनाशिनी । एवंविधायखर्जूरप्रभवाःपूरिकारकैः ॥ द्राक्षयावैसुपूर्णास्तुपूरिकाःपूर्ववत्पचेत् ॥

पूरितः । त्रि॰ कृतपूरणे । पूर्णे ॥ पूर्य्यतेस्म । पूरी॰ । क्तः । वाशान्तेति पक्षेइट् ॥ गुणिते ॥

पूरुषः । पुं॰ पुरुषे । नरे ॥ पुंसि ॥ क्षेत्रज्ञे ॥ यथा । यस्माद्विश्वमुदेति यत्ररमतेयस्मिन्पुनर्लीयतेभासायस्यजगद्विभातिसहजानन्दोज्ज्वलंयन्महः । शान्तंशाश्वतमक्रियंयमपुनर्भावायभूतेश्वरम् द्वैतध्वान्तमपास्ययान्तिकृतिनः प्रस्तौमितंपूरुषमिति ॥ पुरति । पुरअग्रगमने । पुरः कुषन् । अन्येषामपीतिदीर्घः । पृषोदरादित्वा ॥ यद्वा । पूरयति पूर्य्यतेवा । पूरी॰वा॰ कुषन् ॥

पूर्णः । त्रि॰ व्याप्ते ॥ पूरिते ॥ पुं॰ शक्ते ॥ समग्रे । सकले ॥ पूर्य्यतेस्म पूरी॰ । कर्त्तरिकर्मणिवाक्तः । वा दान्तेतिसाधुः ॥

ष्ठपदासु ॥ तत्रजातस्यफलं । जितेन्द्रियः सर्वकलासुदक्षोजितारिपक्षः खलुतस्यनित्यम् । भवेन्मनुष्यानुसुतरामपूर्वापूर्वापदाभाद्रपदाप्रसूतौ ॥ पूर्वाचताभाद्रपदाश्च ॥ एकवचनान्तोपि ॥

पूर्वयक्षः । पुं॰ जिनवि॰ । जलेन्द्रे । मणिभद्रे ॥

पूर्वरङ्गः । पुं॰ नाट्यशालायाम् ॥ नाट्योपक्रमे । प्राक्मङ्गले । गुणनिकायाम् ॥ रङ्गप्रधानस्थोरङ्गविघ्नशान्तिकारीनान्दीपाठगीतवादित्राद्यनेकाङ्गविशिष्टोनाट्यादौकर्त्तव्यः कर्म्मविशेषः पूर्वरङ्गः । तदुक्तंवसन्तराजीये । यन्नाट्यवस्तुनः पूर्वरङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्तिपूर्वरङ्गः प्रकीर्त्तितः इति ॥ पूर्वरङ्गंविधायादौसूत्रधारेविनिर्गते । प्रविश्यतद्वदपरःकाव्यमास्थापयेन्नटः ॥ प्रथमंपूर्वरङ्गश्चततः प्रस्तावनेतिच । आरम्भे सर्वनाट्यानामेतत्सामान्यमिष्यते ॥ पूर्वंरज्यतेऽस्मिन् । रञ्ज् घञ् । कुत्वम् ॥

पूर्वरागः । पुं॰ नायिकानायिकयोर्दशाविशेषे ॥ श्रवणाद्दर्शनाद्वापिमिथः संरूढरागयोः । दशाविशेषो योऽप्राप्तौपूर्वरागःसउच्यते ॥ इ॰ ॥

पूर्वरात्रः । पुं॰ रात्रेःपूर्वभागे ॥ राजाद्यंशाः पुंसि ॥

पूर्वरूपम् । न॰ पूर्वलक्षणे ॥ वैद्यके भाविव्याधिबोधकचिह्ने ॥

पूर्ववत् । न॰ अनुमानविशेषे ॥ यथा । दृष्टस्वलक्षणसामान्यविषयंयत्॰ तत्पूर्ववदुच्यते । पूर्वंप्रसिद्धम्दृष्टस्वलक्षणसामान्यमितियावत्॰तदस्याविषयत्वेनास्ति॰अनुमानज्ञानस्येतिपूर्ववत् । यथाधूमाद्वह्नित्वसामान्यविशेषः पर्वतेनुमीयते॰ तस्यवह्नित्वसामान्यस्यस्वलक्षणं वह्निविशेषोदृष्टोरसवत्याम् । वीतावीतभेदात्तद्विविधम् ॥

पूर्ववादी । त्रि॰ प्रागभियोक्तरि । प्रथमविवादिनि ॥

पूर्ववित् । त्रि॰ अतीतज्ञे ॥

पूर्वशैलः । पुं॰ उदयपर्वते ॥

पूर्वसरः । त्रि॰ अग्रगामिनि ॥

पूर्वा । स्त्री॰ पूर्वदिशि । प्राच्याम् ॥ तद्दिग्भववायुगुणाः । पूर्वस्तुमधुरोवातः स्निग्धः कटुरसान्वितः । गुरुर्विदाहशमनोवातदः पित्तनाशनः ॥ इति ॥

पूर्वाद्रिः । पुं॰ उदयाचले । दिनमूर्द्धनि ॥

पूर्वाषाढा । स्त्री॰ अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गतविंशतिसंख्याकनक्षत्रे ॥ तत्रजातस्यफलंयथा । भूयोभूयः स्वप्रमानानुरक्तो भक्तोदेवेष्वमान्योतिदक्षः । पूर्वाषाढाज-

माकालेयदिखादाषाढः स्याद्वैरि
वर्णितास्मम् ॥ पूसादर्शापाषाढाचे ॥
पूर्वाह्णः । पुं॰ द्विधाविभक्तदिनस्य
पूर्वभागे ॥ यथा । आवर्त्तनात्पूर्
वाह्णोह्यपराह्णस्ततः परः । आ
वर्त्तनात्॰वासरस्यच्छायापरिवर्त्तना
त्प्रागितिशेषः ॥ त्रिधाविभक्तदि
नस्यप्रथमभागे ॥ सचत्रिंशद्दण्डदि
नमानेसूर्योदयावधिदशदण्डात्मकः
कालः यथा । पूर्वाह्णोवैदेवानां
मध्यंदिनंमनुष्याणामपराह्णः पि
तृणामितिश्रुतिः ॥ अह्नः पूर्वम्
। पूर्वापराधरेत्येकदेशिसमासः ।
राजाहः सखिभ्यष्टजिटिटच् । अ
ह्नादेशोणत्वम् ॥
पूर्वाह्णतनम् । त्रि॰ पौर्वाह्णिके ॥
पूर्वाह्णेभवः । विभाषापूर्वाह्णा
पराह्णाभ्याम्॰इतिट्युट्युलौतुट्च
। घकालतनेष्विस्यलुक् ॥
पूर्वेद्युः । अ॰ प्रातःकाले । धर्मवा
सरे ॥ पूर्वस्मिन्नहनि ॥ सद्यःपरु
दित्यादिनापूर्वशब्दादेद्युस्प्रत्ययो
निपात्यते ॥
पूषः । पुं॰ ब्रह्मदारुणि । तूत॰इ॰
भा॰ ॥ पूषश्चडौ । इगुपधात्कः ॥
पूषकः । पुं॰ ब्रह्मदारुणि ॥ पूषएव
कः ॥
पूषा । पुं॰ सूर्ये ॥ जगतः पोषणा
त् । पुष्णाति । पुषपुष्टौ । श्वन्नु-
क्षन्पूषन्निति निपातितः ।
पूषभाषा । स्त्री॰ अमरावत्याम् ।
इन्द्रनगर्याम् । सुरपुर्याम् ॥
पूषमुहृत् । पुं॰ शिवे ॥
पूषा । स्त्री॰ पिङ्गलापृष्ठवर्त्तिन्यांना-
ड्याम् ॥ पूषातुपिङ्गलापृष्ठे नील-
जीमूतसन्निभा । याम्यभागस्यनेत्रा-
न्ताद्यावत्पादतलंगता ॥
पृक्का । स्त्री॰ मरुन्मालायाम् । पिशु-
नायामोषधौ । असारक॰इ॰भा॰
। पिडिं॰इ॰गौ॰भा॰स्पृश्यते।स्पृ
शसंपर्शने । वा॰ कक् । पृ॰ ॥
पृक्तम् । न॰ धने ॥ त्रि॰ सचिते ॥
सम्पर्कयुक्ते ॥ पृच्यते । पृची॰ ।
क्तः ॥
पृक्तिः । स्त्री॰ सम्पर्के । स्पृष्टौ ।
स्पर्शे ॥ पर्चनम् । पृचीसम्पर्के ।
क्तिन् ॥
पृच्छा । स्त्री॰ अनुयोगे । प्रश्ने ॥ प्रच्छ
नम् । प्रच्छज्ञीप्सायाम् । गुरोश्चह
लइत्यः । सम्प्रसारणम् ॥
पृच्छितः । पुं॰ प्रश्नलग्ने ॥
पृच्छ्यम् । त्रि॰ प्रष्टव्ये ॥
पृतना । स्त्री॰ सेनामात्रे ॥ सेनावि
शेषे । तिसृषुवाहिनीषु ॥ अत्र भा: ॥
२४३ । रथा: २४३ । अश्वा:७२
९ । पादातिका: १२१५ । समस्तस
ङ्ख्ययाखषिचतुर्विंशतिभिः स्मृ
ता । २४३० ॥ प्रियते । पृङ्व्या-

यामे । वा० तन: गुणाभावश्च ॥
पृतनाषाट् । पुं० इन्द्रे ॥ पृतनांसहते । षहमर्षणे । छन्दसिसहइति० ण्वि: सहेरितिष: ॥
पृथक् । अ० भिन्ने । विनार्थे । अन्तरे च । ऋते ॥ अमरकोषे ॥ नानार्थे ॥ पर्थयति । पृथप्रक्षेपे । वा० कक् ॥
पृथक्त्वम् । न० पृथक्प्रत्ययासाधारणकारणत्वे ॥ यथा । सङ्ख्यावच्चपृथक्त्वंस्यात्पृथक्प्रत्ययकारणम् । अन्योन्याभावतोनास्य चरितार्थत्वमुच्यते ॥ अस्मात्पृथगियंनेतिप्रतीतिर्हिविलक्षणा॥ पृथक्त्वंनिरूपयति सङ्ख्यावदिति । पृथक्प्रत्ययासाधारणकारणंपृथक्त्वम् । तन्नित्यतादिकंसंख्यावत् । यथानित्येष्वेकत्वंनित्यम्०अनित्येअनित्यम्०आश्रयद्वितीयक्षणेचोत्पद्यतेआश्रयनाशान्नश्यति०तथापृथक्त्वमपिद्वित्त्वादिवत्द्विपृथक्त्वादिकमपीत्यर्थ:।हेयोपादेयविवेके ॥ भेदे ॥ भावेत्त्व: ॥ पृथग्भावे । परस्परभिन्नत्त्वे ॥
पृथक्त्वचा । स्त्री० मूर्वायाम् । छर्क्कीला० इ० भा० । देव्याम् । मधुरसायाम् ॥ पृथक्त्वचायस्या: ॥
पृथक्पर्णी । स्त्री० पृश्निपर्ण्याम् । चित्रपर्ण्याम् । पीठवनी० इ० भा० । चाकुल्या० इ० भा० ॥ पृथक्पृथक्पर्णमस्या: । पाककर्णेतिङीष् ॥
पृथगात्मता । स्त्री० विवेके ॥ व्यक्तौ ॥ पृथगात्मायस्य । तस्यभाव: । तल् । तलन्तंस्त्रियाम् ॥
पृथगात्मिका । स्त्री० व्यक्तौ ॥
पृथग्जन: । पुं० मूर्खे ॥ नीचे । अधमे ॥ पृथक्कार्येजन: असंभ्यत्वात्पृथग्जन: । शाकपार्थिवादि: ॥ सज्जनेभ्य: पृथग्भूतोजनोवा ॥ त्रि० पापिनि ॥ भिन्नलोके ॥
पृथग्रूप: । त्रि० बहुविधे ॥ पृथग्रूपमस्य ॥
पृथग्वर्त्मात्मा । पुं० वायौ ॥ पृथक्नानाविधंवर्त्मसञ्चरणमात्मास्वभावोऽस्य ॥
पृथग्वाद: । पुं० द्वैतिनि ॥ पृथक्नानावस्तु०इत्येवंवदनंयस्य ॥
पृथग्विध: । त्रि० नानारूपे ॥ पृथक्धर्माधर्मादिसाधनवैचित्र्येण०परस्परविलक्षणाविधायस्य ॥
पृथग्बीज: । पुं० भल्लातके ॥
पृथक् । भिन्ने । विलक्षणे ॥ प्रथयति । प्रथं० । प्रथ: कित्सम्प्रसारणञ्च स्यजि: ॥
पृथवी । स्त्री० भुवि । पृथिव्याम् ॥ प्रथते । प्रथविस्तारे । प्रथे: षवन् सम्प्रसारणञ्चेत्येवे। षित्वान्ङीष् ॥
पृथा । स्त्री० कुन्त्याम् । वसुदेवस्वसरि । पाण्डो: पत्न्याम् ॥
पृथाजि: । पुं० कुन्तीपुत्रे । युधिष्ठि

रभीमादौ ॥ पृथायाः पृथायांवा जातः जनी० । डः ॥ अर्जुनपादपे ॥

पृथापतिः । पुं० पाण्डुनृपे ॥ पृथायाःपतिः ॥

पृथिका । स्त्री० शतपद्याम् ॥

पृथिवी । स्त्री० गोत्रायाम् । क्ष्मायाम् । भूमौ । शब्दस्पर्शरूपरसतन्मात्रसहितागन्धतन्मात्रादुत्पन्नायांशब्दस्पर्शरूपरसगन्धगुणायाम् ॥ पृथिवीपञ्चमंभूतंघ्राणश्चाध्यात्ममुच्यते । अधिभूतंतथागन्धोवायुस्तत्राधिदैवतम् ॥ न्यायमतेनपृथिवींविभजते । गन्धवतीपृथिवी । साद्विधा । नित्याऽनित्याच । नित्यापरमाणुरूपा । अनित्याकार्यरूपा । पुनस्त्रिविधा । शरीरेन्द्रियविषयभेदात् । शरीरमस्मदादीनाम् । इन्द्रियंगन्धग्राहकंघ्राणंनासाग्रवर्ति । विषयोमृत्पाषाणादिः । इति ॥ प्रथते । प्रथविस्तारे । प्रथेःषिवन्सम्प्रसारणञ्च । षित्वान्ङीष् ॥ प्राणप्रदानात्सपृथुर्यस्माद्भूमेरभूत्पिता । ततस्तुपृथिवीसंज्ञामवापाखिलधारिणी ॥ गन्धोघ्राणेन्द्रियञ्चापिकाठिन्यंगौरवंतथा । वसुन्धरागुणाएतेगदितागुणवेदिभिः ॥ रविचन्द्रमसोर्यावन्मयूखैरवभासते । ससमुद्रसरिच्छैलातावतीपृथिवीस्मृता ॥

पृथिवीचित् । पुं० राजनि ॥ पृथिव्यांचयतिवसति । चि० । क्विप् । तुक् ॥

पृथिवीगीता । स्त्री० विष्णुपुराणोक्तपृथिवीकथायाम् ॥

पृथिवीतीर्थम् । न० तीर्थविशेषे ॥

पृथिवीपतिः । पुं० भूपाले ॥ पृथिव्याःपतिः ॥ नार्कषिः कुरुतेकाव्यंनारुद्रोरुद्रमर्चति । नादेवांशोददात्यन्नंनाविष्णुःपृथिवीपतिः ॥ ऋषभाख्यौषधे ॥ कृतान्ते ॥

पृथिवीपालः । पुं० राज्ञि ॥

पृथिवीशक्रः । पुं० राजनि ॥

पृथुः । पुं० अग्नौ । त्रेतायुगेसूर्यवंशीयपञ्चमनृपे । वेणनृपस्यदक्षिणकरमथनाज्जाते । प्रजारञ्जनादादिराजोपाधिंप्राप्ते ॥ पृथते । प्रथप्रख्याने । प्रथिम्रदीतिकुः सम्प्रसारणञ्च ॥ श्योनाकवि० ॥ स्त्री० त्वक्पत्र्याम् । हिङ्गुपत्र्याम् ॥ कृष्णजीरके अहिफेने० । त्रि० । महति । विस्तीर्णे ॥ स्थूले ॥ निपुणे ॥

पृथुकः । पुं० चिपिटे । चिउड़ा० इ० भा० ॥ यथा । शालयः सतुषाआर्द्राभृष्टाअस्फुटितास्ततः । कुट्टिताश्चिपिटाः प्रोक्तास्तेस्मृतापृथुकाअपि ॥ पृथुकागुरवोवातनाशनाः श्लेष्मलाअपि । सक्षीरावृंहणावृष्याबल्याभिन्नमलाश्चते ॥ पृथु

रेव । संज्ञायांकन् ॥ यद्वा प्रथते ॥ प्रथप्रख्याने । पर्थयति०पथ्य तेवा । पृथुप्रक्षेपे । चु० । अर्भकपृथुकेति पृथेर्वाकुकन्०प्रथ:सम्प्रसारणञ्च ॥ यद्वा । पृथुकायति । कै शब्दे । आतदूतिक: ॥ त्रि० शिशौ । अर्भके ॥

पृथुका । स्त्री० हिङ्गुपत्र्याम् ॥ बालिकायाम् ॥

पृथुकोल: । पुं० राजबदरे ॥

पृथुच्छद: । पुं० दर्भे ॥ त्रि० बृहत्पत्रे ॥

पृथुपत्र: । पुं० रक्तलशुने ॥ हरिद्रे ॥

पृथुपलाशिका । स्त्री० शठ्याम् ॥

पृथुरोमा । पुं० मत्स्ये ॥ पृथूनिमहान्तिरोमाण्यस्य । रोमशब्देनपक्षोर्च्यतिस्वामी । वल्कलमितिसर्वधर: ॥ त्रि० बृहद्रोमयुक्ते ॥

पृथुल: । त्रि० विशाले ॥ पृथुपृथुत्वमस्यास्ति । सि०लच् ॥ पृथु पृथुत्वंलातिवा । क: ॥

पृथुला । स्त्री० हिङ्गुपत्र्याम् ॥ टाप्

पृथुशिम्ब: । पुं० श्योनाकप्रभेदे ॥

पृथुशेखर: । पुं० पर्वते ॥ पृथुर्महान्शेखरोऽस्य ॥

पृथुसेन: । पुं० राज्ञि ॥ पृथ्वीसेनायस्य ॥

...र: । पुं० शूकरे ॥

पृथूदकम् । न० तीर्थविशेषे:प

पृथूदर: । पुं० मेषे ॥ त्रि० बृहत्कुक्षौ ॥

पृथ्वी । स्त्री० भूमौ । अचलायाम् । धरायाम् ॥ म॰ त्वक्पत्र्याम्कपत्र्याम् हिङ्गु॰त्र्याम् ॥ कृष्णजीरके ॥ हस्ति ईन्मातरि ॥ बृहदेलायाम् ॥ पुनर्नवायाम् ॥ प्रथते प्रथविस्तारे० प्रख्यानेवा । प्रथिम्रदिभ्रस्जांसम्प्रसारणमितिकु: । वोतोगुणवचनादितिङीष् ॥ वर्णवृत्तविशेषे । तल्लक्षणं यथा । जसौजसयलावसुग्रहयतिश्चपृथ्वीगुरुरिति । अपिच । पयोधरयुतास्फुरत्कनकयुग्मताटङ्किनीसुवर्णरुचिकङ्कणाललितभावबन्नूपुरा । सुवर्णरुचिरालसत्कुवलय पवत्कुण्डलाभुजङ्गपतिवर्णितारतिचन्तपृथ्वीमम ॥ यथा । यताधरतटीचनखसितमङ्गरागव्ययोदृशोरपिचशोभिमाभवतिकारणादन्यत: । इदंतवपरप्रियानिभृतसङ्गमव्यञ्जकंमुखयदिदमञ्जनंरश्रसिचार्द्धचन्द्रं गले ॥

पृथ्वीका । स्त्री०बृहदेलायाम् ॥ कृष्णजीरके ॥ कलाजाज्याम् ॥ हिङ्गुपत्र्याम् ॥ प्रथते । प्रथप्रख्याने । फर्फरीकादयश्चे तिसाधु: ॥

पृथ्वीकुरबक: । पुं० श्वेतमन्दारे ॥

पृथ्वीजम् । न० गडलवणे ॥

पृदाकुः। पुं० वृश्चिके। व्याघ्रे॥ सर्पे॥ चित्रके॥ पर्दते। पर्द०। पर्देर्नित्सम्प्रसारणमल्लोपश्चेतिकाकुप्रत्ययः॥

पृश्निः। स्त्री० रश्मौ॥ त्रि० अल्पतनौ॥ स्पृशति स्पृश्यतेवा। स्पृशसंस्पर्शे। घृषृश्नीतिसाधुः॥ पृच्छति०पृच्छ्यतेवा। पर्षति०पृष्यतेवा। प्रच्छज्ञीप्सायाम्। पृषुसेचनेवा। पूर्ववत्साधुः॥

पृश्निका। स्त्री० कुम्भिकायाम्॥

पृश्निगर्भः। पुं० गदाग्रजे। श्रीकृष्णे॥

पृश्निपर्णी। स्त्री० पृथक्पर्ण्याम्। अङ्घ्रिवल्लिकायाम्। चक्रीत्०इ० पिठवनि० इ० च० भा०। चाकुलिया० इ० गौ० भा०॥ पृश्निपर्णीत्रिदोषघ्नीवृष्योष्णामधुरासरा। हन्तिदाहज्वरश्वासरक्तातीसारतृड्वमीः॥ पृश्निरल्पंपर्णमस्याः। पाककर्णेतिङीप्॥

पृश्निभद्रः। पुं० श्रीकृष्णे॥

पृश्निशृङ्गः। पुं० विष्णौ॥ गणेशे॥

पृश्नी। स्त्री० वारिपर्ण्याम्॥

पृषत्। पुं० मृगे॥ न० बिन्दौ॥ त्रि श्वेतबिन्दुयुक्ते॥ पर्षति। पृषुसेचने। वर्त्तमानेपृषद्बृहन्महदिति अतिप्रत्ययोगुणाभावश्चनिपात्यते। शतृवदस्यकार्यम्॥

पृषतः। पुं० पृषाकमृगे। चित्रमृगे॥ यथा। पृषतश्चन्द्रबिन्दुःस्याद्वरिणाल्किञ्चिदल्पकः॥ पृषतस्तुभवेत्स्वादुर्ग्राहकःशीतलोलघुः। दीपनोरोचनः श्वासज्वरदोषत्रयास्रजित्॥ इति॥ बिन्दौ॥ त्रि० श्वेतबिन्दुयुक्ते॥ पर्षति। पृषु०। पृषिरञ्जिभ्यांकिदित्यतच्॥ यद्वा। पृषताः बिन्दवः सन्त्यस्य। अर्शआद्यच्॥

पृषताम्पतिः। पुं० वायौ॥

पृषताश्वः। पुं० वायौ। अनिले॥ पृषतोमृगविशेषोऽश्वोवाहनमस्य॥

पृषती। स्त्री० मृग्याम्॥

पृषत्कः। पुं० बाणे। शरे॥ पर्षति पृषु०। लटः शतृ। संज्ञापूर्वकत्वान्नगुणः॥ यद्वा। वर्त्तमाने पृषन्महदितिसाधुः स्वार्थेकन्॥

पृषदश्वः। पुं० गन्धवहे। पवने। वायौ॥ पृषन्मृगभेदोऽश्वोवाहनमस्य॥ पृषतामम्बुकणानामश्ववद्वेतिवा॥

पृषदाज्यम्। न० सदध्याज्ये। दधिमिश्रितघृते॥ पृषच्चतदाज्यञ्च॥ यद्वा। पृषद्भिः सहितमाज्यम्॥

पृषद्वलः। पुं० वायुश्वे॥

पृषन्तिः। पुं० बिन्दौ॥ यथा। पयःपृषन्तिभिः स्पृष्टावांतिवाताः शनैः शनैरितिजाम्बवतीविजयकाव्यम्॥

पृषभाषा। स्त्री० इन्द्रपुर्याम्॥

पृषाकरा । स्त्री० क्षुद्राश्मनि । वटखरा इ०भा० ॥

पृषातकम् । न० सदध्याज्ये ॥

पृष्टम् । न० सामगानांमाध्यन्दिनसवनेगीयमानस्तोत्राणांनामधेये ॥ त्रि० कृतप्रश्ने । उपामन्त्रिते ॥ पृच्छेः क्तः ॥

पृष्टव्य : । त्रि० जिज्ञासिते ॥

पृष्ठम् । न० शरीरपश्चाद्भागे । पार्श्वस्थाने । पीठ०इ०भा० ॥ अस्यशुभाशुभलक्षणंयथा । सुस्निग्धंमांसलंपृष्ठमभग्नञ्चाप्यरोमशम् । मध्यमानांविपर्यस्तंनिर्द्धनानांप्रकीर्त्तितमितिसमुद्रः ॥ चरमसमाचे ॥ पृष्यते । पृषु० । तिथपृष्ठगृथेतिसाधु ॥ स्तोत्रविशेषेपिपृष्ठम् । चित्राधिकरणे० पृष्ठैः स्तुवतइत्यादौतथानिर्णयात् ॥

पृष्ठग्रन्थि : । पुं० गडौ । कुब० इ० भा० ॥

पृष्ठत : । अ० पश्चात् । पृष्ठदेशे ॥ पृष्ठ इति । आद्यादित्वात्तसिः ॥

पृष्ठदृष्टि : । पुं० भल्लूके ॥

पृष्ठमांसाद : । त्रि० परोक्षे दोषाभिधायिनि ॥ वाक्याभिधायिनि ॥ इ० चिकारउभेष : ॥

पृष्ठमांसादनम् । न० परोक्षे दोषकीर्त्तने ॥ त्रि० तद्वति ॥

पृष्ठवंश : । पुं० रीढके । पृष्ठास्थिनि ॥ सतुगर्भमासमाचे सम्भवति ॥

पृष्ठवक्ष : । पुं० पृष्ठपार्श्वे ॥

पृष्ठवास्तु । न० गृहस्योपरिगृहे ॥

पृष्ठवाट्‌०ह् । पुं० युगपार्श्वगवृषे । पष्ठवाहिनि ॥

पृष्ठवाह : । पुं० }
पृष्टवाहक : । पुं० } वृषे ॥

पृष्ठवाह्य : । पुं० भारवाहकवृषे । स्थौरिणि । पृष्ठ्ये ॥

पृष्ठशृङ्ग : । पुं० वनच्छागे ॥

पृष्ठशृङ्गी । पु० शभीरौ । सैरिभे ॥ शंढे । भीमसेने । वृकोदरे ॥

पृष्ठहायन : । पुं० धान्यविशेषे ॥ मतङ्गजे ॥

पृष्ठी । पुं० मत्स्यविशेषे ॥

पृष्ठोदय : । पुं० राशिविशेषे ॥ मेषोवृषःकर्कटश्चधनुर्मकरएवच । पृष्ठोदयाः षडेवैतेमीनश्चापितथैवच ॥

पृष्ठ्य : । पुं० स्थौरिणि । पृष्ठेनभारवहनशीलेघोटके । न० पृष्ठवन्द्रे ॥ यज्ञविषयेऽह : स्मरन्ति ॥ एषानांसमूह : । पृष्ठायन ॥ प्रशस्तमतिप्रयितंपृष्ठनस्य । अन्येष्वोपीतियद्वा

पृष्णि : । पुं० सूर्ये ॥

पृष्णिका } स्त्री० } वारिपर्ण्यां । कुम्भ्याम् ॥
पृष्णी । }

पेचक : । पुं० उलूके । वायसारातौ । कौशिके ॥ घूके ॥ गजलाङ्गूलमूले । तद्गुदाच्छादकमांसपिण्डवि

शेषे ॥ पचति० पच्यते वा । टुःकर्म्म न । ड्रुपचष् ० ॥ पचिनच्योरिश्यो- पधायाश्चेत्वम् । घतइत्त्वम् । पु गन्ते तिगुणःपर्य्यङ्के ० मेघ० । युक्ते ॥

पेचकी । पुं० हस्तिनि ॥

पेचिल : । पुं० गजे । हस्तिनि ॥

पेचु । न० पेचुल्याम् ॥

पेचुकम् । न० नाडीचशाके। पेचुल्या म् ॥ विकाराडगे पेकेचुकमितिपाठ:

पेचुली । स्त्री० पेचुनि । नाडीचशाके

पेट : । पुं० प्रहस्ते । पेटति । पिट० । प० अच् ॥

पेटक : । पुं० न० पिटके । पुस्तका दीनांमञ्जूषायाम् । पिटार० इ० भा० ॥ त्रि० कदम्बके । समूहे ॥ पेटति । पिटशब्दसंघातयो : । ण्वुल् ॥

पेटाक : । पुं० पेडायाम् । पेटके ॥

पेटिका । स्त्री० वृक्षविशेषे० । कुबेरा च्याम् । कृष्णाद्रम्लिकायाम् ॥

पेटी । त्रि० पेटके ॥

पेडा । स्त्री० पेटके । मञ्जूषायाम् । वृहत्पेटाके ॥ पिण्डते । पिडिसं- घाते । प० अच् । अनित्यत्वान्नमु म् ॥

पेत्वम् । न० अमृते ॥ घृते ॥ पीयते । पा० । अन्येभ्योपिदृश्यतइति० इत्वन् ॥

पेपीयमान : । त्रि० अत्यासक्त्यापीय- मानो ॥

पेयम् । न० पयसि । जले ॥ दुग्धे ॥ मद्ये ॥ षड्विधान्नान्तर्गतान्नवि० । यथा। भोज्यंपेयंतथाचूष्यंलेह्यंखाद्यंच चर्वणम् । निर्ष्यं षड्वैवभक्ष्यं स्याद- न्नमष्टविधंस्मृतम् ॥ इ० रा० नि० ॥ त्रि० पानयोग्यद्रव्ये । पातव्ये ॥ पातुंयोग्यम् । पा० । यत् । ईद्यति । गुण : ॥

पेया । स्त्री० आमायाम् ॥ अक्कमण्डे ॥ सिक्थसमन्वितपेयद्रव्ये ॥ पेया विधिर्गुणाश्च । चतुर्द्दशगुणेनीरेरक्त शाल्यादिभि : कृता । द्रवाधिका- स्वल्पसिक्थापेयाप्रोक्ताभिषग्वरै: ॥ सातिलघ्वीग्राहिणीचधातुपुष्टिविधा यिनी : स्वेदाग्निजननीज्ञेयावात- वर्च्चोनुलोमिनी । शुण्ठीसैंधवसंयु क्तादीपनीपाचनीचसा ॥ आमशूल ज्वरीसच्छर्द्यतिसारादिविनाशिनी ॥ पातुंयोग्या । पा० । यत् । ईद्गुणौ । टाप् ॥

पेयूष : । पुं० न० अमृते ॥ नव्यदु- ग्धे । सप्तदिवसावधिक्षीरे ॥ आस प्रसवप्रभवंक्षीरंपेयूषउच्यते ॥ पीय ते० पीयतेऽनेनवा । पीयइतिसौ त्रोधातु: प्रीतौ । पीयेरूषन् । बहु लवचनात्सप्तमीगुणः ॥ अग्निमंदौ- गात्कठिनतांगतेनवप्रसूतायाःगो: क्षीरे ॥ क्षीरंतत्कालसूतायाघनं-

पेयूषमुच्यते ॥ नव्यघृते ॥

पेरु : । पुं० सूर्ये ॥ वह्नौ ॥ समुद्रे ॥ पीयते । पीङ्पाने । निपीभ्यां रु : ॥

पेरोजम् । न० उपरत्नवि० । पेरजे । पिरोजा० इ० भा० ॥ तद्‌द्विविधम् । भस्माङ्गंहरितञ्च । तस्यगुणा : । पिरोजंसुकषायंस्यान्मधुरंदीपमंपरम् । स्थावरंजंगमञ्चैवसंयोगाच्चयथाविषम् ॥ तत्सर्वंनाशयेच्छीघ्रंशूलंभूतादिदोषजम । पाठान्तरम् यथा ॥ पिरोजंसुकषायंस्यान्मधुरंदीपनंद्वयो: । स्थावरादिविषघ्नंस्याद्धरितञ्चापरंशृणु ॥ शीताङ्गंनाशयेच्छीघ्रंशूलंतिमिरभूतजम् ॥ इ० रा० नि० ॥

पेलम् । न० अण्डकोषे ॥

पेलवम् । त्रि० विरले ॥ अत्रसावकाशत्वंप्रकार : ॥ पेलनम् । पिलभेदने । घञ् । पेलोस्यास्ति । अन्येष्वोपीतिव : ॥ कोमले कृशे ॥

पेवलि : । स्त्री० नृत्यविशेषे ॥ यथा । ताण्डवञ्चतथालास्यंद्विविधंनृत्यमुच्यते । पेवलिर्बहुरूपाचताण्डवंद्विविधंमतम् ॥ अङ्गविक्षेपबाहुल्यंतथाभिनयशून्यता । यत्रसापेवलिस्सम्या : संज्ञादेशीतिलोकत : ॥ छेदनंभेदनंयत्रबहुरूपामुखावली ॥ ताण्डवंबहुरूपन्तद्वारुणागलमुद्धतमिति ॥

पेशलम् । न० सौकुमार्ये ॥ त्रि० रुचिरे । रम्ये । चारौ । सुन्दरे ॥ दक्षे । कुशले । चतुरे ॥ कोमले ॥ पिशअवयवे । भावेघञ् । पेशंलाति । ला० । क : ॥ वा० पिशेरलच्वा ॥ पेशोस्यास्ति । सिध्मादित्वाल्लच्वा ॥ धूर्ते ॥ कर्मणामनसावाचावपुषाचशोभनत्वात्० पेशलोविष्णुर्वासुदेव : ॥ तथाविधोन्योपि ॥

पेश : । न० रूपे ॥

पेशस्कृत् । पुं० हस्ते ॥ कीटवि० । किमिरकि० इ० गौ० भा० ॥

पेशि : । पुं० शतकोटौ । वज्रे ॥ स्त्री० अण्डे ॥ पिंशिअवयवे । इपिशिरुह्वितीत्यादिना० इन् ॥ माषविदले ॥

पेशी । स्त्री० सुपक्वकलिके ॥ मांसाम् ॥ अण्डभेदे ॥ कृदिकारादक्तिन इतिङीष् । गौरादिर्वा ॥ पिशाच्याम् ॥ राक्षसीभेदे ॥ नदीविशेषे ॥

पेशीकोष : । पुं० पक्षिडिम्बे । अण्डे ॥ पेशीनांमांसखण्डानां कोषोभाण्डागारइतिस्वामी ॥

पेषणम् । न० चूर्णने । पिष्लसंचूर्णने भावेल्युट् ॥ खले ॥ स्नुहीद्रुमे ॥

पेषणि : । स्त्री० } पेषणशिलायाम् ।
पेषणी : । } दृशदुपलात्मि-

कायाम् । पट्टे । गन्धकच्छपे । सि
ल० दू० भा० ॥
पैषल : । त्रि० पेशले ॥
पैषाक : । पुं० पेषणग्राम ॥
पैक्षुष : । पुं० कर्णे ॥
पैठर : । त्रि० उख्ये । स्थालीपक्कमांसादौ ॥ पिठरे संस्कृतम् । संस्कृतंभक्षा
इत्यण् ॥
पैठीनसि : । पुं० स्मृतिकारकेमुनि
विशेषे ॥
पैण्डिन्यम् । न० भैक्षजीविकायाम् ॥
पैतामहम् । त्रि० पित्र्ये । पितामह
सम्बन्धिधनादौ ॥ पितामहस्येदम्
। तस्येदमित्यण् ॥ स्त्रियांपैतामही
पैतृकम् । त्रि० पितृसम्बन्धिनिधनादौ
॥ सुखिनस्तीयतेयत्रसदेश : स्वल्पपै
तृक : ॥ पितुरागतम् । पितुर्यच्चे
ति चकाराट्ठञ् ॥ ङीपि० पैतृकीवि
द्या ॥
पैतृकभूमि : स्त्री० । पितृसम्बन्धिस्थाने ॥
पैतृष्वसेय : । त्रि० पितुर्भगिनीसन्त
तौ ॥ पितृष्वसुरपत्यम् । ढकिलोप:
। अतएवज्ञापकाड्ढक् ॥ स्त्रियांपैतृ
ष्वसेयी ॥
पैतृष्वस्रीय : । त्रि० पितुर्भागिनेये ।
पैतृष्वसेये ॥ पितृष्वसुरपत्यम् ।
पितृष्वसुश्छण् ॥
पैत्त : । त्रि० पैत्तिके ॥
पैत्तिकम् । त्रि० पित्तजव्याधौ । पि-
त्तसम्भवे ॥ पित्तस्यशमनंकोपनंवा
वातपित्तश्लेष्मभ्य : शमनकोपनयो
रितिठञ् ॥
पैत्रम् । न० पितृतीर्थे । तर्जन्यंगुष्ठयो
र्मध्ये ॥ पितॄणामिदम् । तस्येद
मित्यण् ॥ त्रि० पितृसम्बन्धिनि ॥
पैत्राहोरात्र : । पुं० पितृलोकस्यदि
वारात्रौ । नृणांमासे ॥ कृष्णपक्ष :
पितॄणांदिनम्० शुक्लपक्षोरात्रि : ।
पितॄणामयम्० पैत्र : । पैत्रश्चासा
वहोरात्रश्च ॥
पैल्य : । पुं० दैवसर्गप्रभेदे ॥
पैप्पलम् । त्रि० पिप्पलकाण्डे ॥ पि-
प्पलभस्मनि ॥ पिप्पलस्यावयवोवि
कारोवा । अवयवेचेत्यण् ॥
पैल : । पुं० ऋषिविशेषे । ऋग्वेदद्वा
रकेव्यासशिष्ये ॥ पीलायाअपत्यम्
। पीलायावेत्यण् ॥
पैलेय : । पुं० पैले ॥ पीलायाअपत्य
म् । अणभावे० द्व्यच इति० ढक् ॥
पैशाच : । पुं० अष्टप्रकारविवाहान्त
र्गताष्टमविवाहे ॥ पैशाच : कन्य-
कांछलात् । छलमाहमनु : । सुप्तां
मत्तांप्रमत्तांवारहोयत्रोपगच्छति ।
सपापिष्ठोविवाहानांपैशाचश्चाष्टमो
धम : ॥ पिशाचस्यायम् । अण् ॥
पिशाचएववा । स्वार्थिक : प्रज्ञाद्य
ण् ॥ दैवसर्गविशेषे ॥ त्रि० पिशाच
सम्बन्धिनि ॥

पैशाचिक : । त्रि० पिशाचसम्बन्धिनि ॥

पैशुनम् । न० परस्मै परोक्षपरदोषप्रकाशने ॥ पिशुनस्यकर्मभावोवा । युः । अण्० ॥

पैशुन्यम् । न० अविज्ञातदोषाविष्करणे । पिशुनतायाम् । खलतायाम् ॥ पिशुनस्यदुर्जनस्यकर्मभावोवा । ब्रा० ष्यञ् ॥ परोक्षेपरदूषणकथने ॥ गुरुनृपतिबन्धुभ्रातृमित्त्रसकाशेषु-र्योपघातार्थंदोषोपाख्यानं पैशुन्यमितिवदन्ति ॥

पैष्ट : । त्रि० पिष्टसम्बन्धिनि ॥

पैष्टिकम् । न० मद्यविशेषे ॥ पिष्टानांसमूहे ॥

पैष्टी । स्त्री० विविधधान्यविकारजायांमदिरायाम् । वारुण्याम् ॥ पैष्टीकटुस्तीक्ष्णात्याद्दोषघ्नीडीसमापरा । वातहृत्कफकृत्त्वीषत्पित्तकृन्मोहनीचसा ॥ पिष्टस्येयम् । तस्येदमित्यण् । ङीप्

पोगण्ड : । पुं० बालके ॥ बालआषोडषाद्वर्षात्पोगण्डश्चापिशब्दित : इतिनारद : ॥ दशवर्षीयबालके । त्रि० विकलाङ्गे ॥ पवते०पुनाति वा । विच् । पोर्गण्डएकदेशोस्य ॥

पोट : । पुं० वेश्मभूमौ । वास्तौ ॥

पोटगल: । पुं०नले । नरकट०नरसल० इ० भा० ॥ काशे । इक्षुगन्धायाम् । काँस० इ० भा० ॥ मत्स्यविशेषे ॥ पोटेनसंश्लेषेणगलति । गलअदने०सखणेच । अच् ॥

पोटा । स्त्री० स्त्रीपुंसलक्षणायाम् ॥ स्त्रीपुंसयो : स्तनश्मश्र्वादि चिह्नयुक्तायाम्योषिति ॥ पोटयति । पुट भाषार्थंश्चुरादि : । पचाद्यच् ॥ दासी ॥

पोट्टली । स्त्री० पोट्टलिकायाम् । पोटली० इ० भा० ॥ यथा । शुद्ध्यर्थंत्रिफलाक्वाथेगुडूच्या : क्वाथएववा । दोलायन्त्रे पुर : पाच्य : पोट्टल्यावस्त्रबद्धया ॥

पोडु : । पुं० कपालास्थितले ॥

पोत : । पुं शिशौ ॥ वहित्रे । समुद्रतरणार्थेनौकाविशेषे । समुद्रयाने । वार्बटे । जहाँजा० जहाज० इ० आधुनिकभाषा ॥ यथा । समुद्रयानेरत्नानिमहामौल्यानिसाधुभि : । रत्नपारीक्षकै : सार्द्धमानयिष्येवहूनिच ॥ शुकेनसहसंप्राप्तेमहान्तंलवणार्णवम् । पोतारूढास्तत : सर्वेपोतवाहैरुपामिता : ॥ अपारेदुस्तरेऽगाधेयांतिवेगेननिस्त्वश : । इ० वाराहेगोकर्णमाहात्म्याध्याय : ॥ पोतोदुस्तरवारिराशितरणेदीपोन्धकारागमे इत्यादि ॥ गृहस्थाने । पोता०इ० गौ० भा० ॥ वासे ॥ दशवर्षीयगजे ॥ पुनाति०पूयते

वा । पूञ् । इसिमृग्रिणितितन् ॥ यद्वा । पवते । पुङ् । पूर्ववत्तन् ॥
पोतकी । स्त्री० श्यामायाम् । सोनचिड़ी० इ० भा० ॥ पूतिकायाम् उपोदिकायाम् । मालवे० अमृतवल्लरीतिप्रसिद्धा । पोईशाक इ०भा० ॥ पोतकीशीतलास्निग्धाश्लेष्मलावातपित्तनुत् । अकंठ्यापिच्छलानिद्राशुक्रदारक्तपित्तजित् ॥ बलदारुचिकृत् पथ्या बृंहणी तृप्तिकारिणी ॥
पोतन : । पुं० कुञ्जरादौ ॥
पोतवणिक् । पुं० सांयात्रिके । मावामानावाणिज्यकरे ॥ पोतेनोप्लवचितोवणिक ॥
पोतवणिक्प्रिय : । पुं० वृक्षप्रभेदे ॥ पोतवणिज : प्रियोयस्य : ॥
पोतरक्तक : । पुं० कैनिपाके । पतवार० इ० भा० ॥ इंलि० इ० गौ० भा० ॥
पोतवाह : । पुं० नियामके । गुणवृक्षोपरिस्थितेनाविकावि० ॥ वहित्रवाहके । ढाँडी० इ० गौ० भा० ॥ पोतंवहति । वह० । कर्म्मण्यण् ॥
पोताच्छादनम् । न० वस्त्रकुट्टिमे ॥
पोताधानम् । न० क्षुद्रागडमत्स्यसंघाते । पोना० इ० गौ० भा० ॥ पोतेवहित्रेआधीयन्ते । धाञ: कर्मणिल्युट् ॥ यद्वा । पोतोऽर्भक: आधोयतेऽत्र ॥ अधिकरणेल्युट् ॥
पोतास : । पुं० कर्पूरविशेषे ॥
पोतिका । स्त्री० शतपुष्पायाम् ॥ पूतिकायाम् ॥ मूलपोत्याम् ॥
पोती । स्त्री० पक्षिणांसल्यपत्त्वे ॥ पोतस्यक्षुद्रनौकायाम् ॥ पोतात्वयसिप्रथम इतिङीप् ॥
पोता । पुं० ऋत्विजि ॥ पुनाति । पूञ् । तृन्विधावृत्त्विक्षुचानुपसर्गस्येतितृन् ॥ नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृदुहितृ इति साधु : ॥ विष्णौ ॥
पोत्रम् । न० वस्त्रे ॥ शूकरमुखाग्रे ॥ हलमुखाग्रे । लाङ्गलाग्रे ॥ पूयतेऽनेन । पूञ् । हलसूकरयो: पुवइतिष्ट्रन् ॥ वहित्रे ॥
पोत्रायुध । पुं० शूकरे ॥
पोत्री । पुं० कोले । सूकरे ॥ पोत्रंमुखाग्रमस्त्यस्य । अतइनि : ॥
पोत्रिरथा । स्त्री० जिनशक्तिवि० । विमुखायाम् । बज्रकालिकायाम् । मायादेव्याम् ॥
पोलिका । स्त्री० पिष्टकविशेषे ॥ यथा । कुर्यात्समितयातीवतन्वींपर्पटिकांतत : । स्वेदयेत्तप्तकैतान्तुपोलिकांजगदुर्बुधा : ॥ तांखादेत्रप्सिकायुक्तांतस्यामगडकवद्गुणा : ॥
पोलिन्द : । नौकावयवविशेषे । पाल

रके ॥

पोली । स्त्री० पिष्टकवि० । पूपाल्या म् । चपट्याम् ॥

पोष : । पुं० पोषणे ॥

पोषक : । त्रि० पालनकर्त्तरि ॥

पोषणम् । न० पुष्टौ । पुषपुष्टौ ॥ ल्युट् ॥ धृतौ ॥

पोषयित्नु : । पुं० कोकिले ॥ भर्त्तरि ॥ द्विजे ॥ त्रि० पोषके । पोषणक र्त्तरि ॥ पोषयति । पुष० । स्तनि हृषिपुषीत्यादिना० इत्नुच् ॥

पोटा । पुं० प्रतीके । काँटाकरञ्ज० इ० गौ० भा० ॥ त्रि० पोषणकर्त रि ॥ पुष्णाति । पुष० । तृच् ॥

पोष्टर : । त्रि० पोषकश्रेष्ठे ॥

पोष्य : । त्रि० प्रतिपाल्ये । पोषणी ये । अवश्यसम्वर्धनीये पोष्यवर्गे ॥

पोष्यपुत्र : । पुं० पुत्रप्रतिनिधौपाल नासुतत्वं प्राप्ते ॥

पोष्यवर्ग : । पुं० परिजने । प्रतिपाल नीयगणे ॥ यथा मातापितागुरु : पत्नीत्वपत्यानिसमाश्रिता : । अभ्या गतोऽतिथिश्चाग्नि : पोष्यवर्गाउ- मीनव ॥

अपिच । मातापितागुरुर्भार्याप्रजा: दीना : समाश्रिता : । अभ्यागतो तिथिश्चाग्नि : पोष्यवर्गउदाहृत : ॥ भरणंपोष्यवर्गस्य प्रशस्तं स्वर्गसाधन म् । नरकंपीडनेचास्यतस्माद्यत्नेन

तंभरेत् ॥ पोष्याणांवर्ग : ॥

पौंसवनम् । न० पुंसवनसंस्कारे ॥

पौंस्नम् । न० पुंस्त्वे ॥ पुंसइदम् । स्त्रीपुंसाभ्यांनञ्स्नञौ भवनादिति. स्नञ् ॥ त्रि० पुंसुभवे ॥ स्त्रियांपौं स्नी ॥

पौगण्डम् । न० पञ्चाब्दानन्तरंदशाब्द पर्यन्तायामवस्थायाम् ॥ यथा । कौमारंपञ्चमाब्दान्तंपौगण्डंदशमा वधि । कैशोरमापञ्चदशात्यौवन न्तुतत : परमिति ॥ आचार्यप्रमुखा नांहिपौन : पौन्यं नतेर्मतौ । यतो गण्डावस्थतेनपौगण्ड : सम्मृतोबु धैरित्युक्तेस्तदवस्थावति । त्रि० ॥

पौण्डरीकम् । न० प्रपौण्डरीके ॥ पु- ण्डरीकमिव । शर्करादिभ्योऽण् ॥

पौण्डर्यम् । न० ओषधीभेदे । स्थलप- द्मे । प्रपौण्डरीके ॥ पौण्डर्यंमधुरं तिक्तंकषायंशुक्रलंहिमम् । चक्षुष्यं मधुरंपाकेवर्ण्यंपित्तकफास्रनुत् ॥

पौण्ड्र : । पुं० चंदेरी० इ० प्र० देशे ॥ भीमसेनस्यसङ्ख्ये ॥ पौंडा० इ० प्र० इक्षुविशेषे ॥ पुण्ड्राते । पुडिखण्डने । स्फायीतिरक् । प्र- ज्ञाद्यण् ॥

पौण्ड्रक : । पुं० श्वेतपौंडा० इ० प्र० इक्षौ ॥ वातपित्तप्रशमनोमधुरोर- सपाकयो : । सुशीतोबृंहणोवल्य : पौण्ड्रकोभीरुकस्तथा ॥ पौण्ड्रदेशो

इषेश्चादौर्चविषै पश्चाद्विहितक्रिया लोपादिनाशूद्रत्त्वमापन्ने दस्युपदेशा च्यो जात्यन्तरे ॥ शौण्डिकायामुत्पै- *श्याज्जातेजातिवि० । पुंड्रो० इ० गौ० भा० । पुण्ड्रएव । स्वा० कम् ॥

पौण्ड्रवर्द्धन : । पुं० देश० । विहार० इ० भा० ॥

पौण्ड्रिक : । पुं० पुण्ड्रेक्षौ । सेव्यं । अतिरसे ॥

पौतिमाष्य : । पुं० वेदप्रसिद्धऋषिविशेषे ॥ पूतिमाषस्यगोत्रापत्यम् । गर्गादिभ्योयञ् ॥

पौत्तिकम् । न० घृतवर्णमधुनि ॥ याकृष्णामशकोपमालघुतरा : प्रायोमहापिण्डिकावध्नानास्तरुकोटरा- न्तर्गता : पुष्पासवंकुर्वते । तास्तज् ज्ञैरिहपुत्तिकानिगदितस्ताभि:कृतं सर्पिषातुल्यंयन्मधुतद्वनेचरजनै : संकीर्तितंपौत्तिकम् ॥ पौत्तिकंमधु रूक्षोष्णंपित्तदाहास्रवातकृत् । विदाहिमेहकृच्छ्रघ्नंग्रन्थ्यादिक्षतशोषिषु ॥ पुत्तिकाभि : कृतम् । संज्ञायामित्यण् ॥

पौत्र : । पुं० पुत्रस्यपुत्रे । नप्तरि । पोता० इ० नाती इ० भा० ॥ पुत्रस्य०पुत्र्याश्चापत्यम् । अनृष्यानन्तर्यविदादिभ्योऽञ् ॥ न० पोतुर्भाव कर्मणो : ॥ उद्० अञ् ॥

पौत्रिकेय : । त्रि० पुत्रिकातनये ॥

पौत्री । स्त्री० पुत्रसुतायाम् । नप्त्याम् ॥ पुत्रस्यपुत्र्याश्चस्त्र्यपत्यम् । अञन्तत्वान्ङीन् ॥

पौन : , पुनिक : त्रि० पुन : पुनर्भवे ॥ कालाट्ठञ् ॥

पौन : पुन्यम् । न० आभीक्ष्ण्ये । पुन : पुनरित्यस्मिन्नर्थे ॥ पुन:पुनरित्यस्यभाव : । ष्यञ् , अव्ययानांभमात्रेटिलोपस्य०प्रातिपदिकाद्यर्थ उपसंख्यानमितिटिलोप : ॥

पौनरुक्तिक : । पुं० पुनरुक्तमधीयाने ॥ उ० ठक् ॥

पौनर्नवम् । न० पुनर्नवाशाके ॥

पौनर्भव : । पुं० द्वादशविधपुत्रान्तर्गतपुत्रवि० । पुनर्भूपुत्रे ॥ अपत्येर्थेऽण् । यापत्यावापरित्यक्ताविधवावा स्वयेच्छया । उत्पादयेत्पुनर्भुत्वास-पौनर्भवउच्यते ॥

पौरम् । न० कतृणे । रोहिषतृणे । रामकर्पुर० इ० ख्याते ॥ त्रि० नागरे । पुरोद्भूते ॥ पुरेभवम् । तत्रभवइत्यण् ॥

पौरक : । पुं० गृहबाह्योपवने ॥ निष्कुटस्तुगृहारामोबाह्यारामस्तुपौरक : ॥ इतिहेमचन्द्र : ॥

पौरन्दर : । पुं० पुरन्दरापत्ये ॥ त्रि० पुरन्दरसम्बन्धिनि ॥ अण् ॥

पौरन्दरी । स्त्री०पुरन्दराधिष्ठितदिशि

पौरव : । पुं० दुष्यन्तनृपतौ ॥ पूरोरप

त्यम् । पूरोरण् ॥ पुरुवंशे ॥ य० । द्रुह्योस्तुतनयाभोजा अनोस्तुम्लेच्छजातय : । पुरोस्तुपौरवोवंशोयत्र जातोसिपार्थिवेतिमात्स्ये ३४ऽध्याय : ॥

पौरस्त्य : । त्रि० प्रथमे ॥ पुरोभव : । दक्षिणापश्चात्पुरसस्त्यक् ॥

पौराणिक : । पुं० पुराणज्ञे ॥ पुराणमधीतेवेदवा । आख्यानाख्यायिकेतिहासपुराणेभ्यश्चेतिठक् ॥ लोकविदि ॥ पौराणिकोनिसृष्टिर्वालयोवास्थितिर्वातत्त्वमित्याह । तत्कल्पनामात्रम् । सतोऽसतश्चोत्पत्त्याद्यभावस्यगौडपादैर्निर्णीतत्वात् ॥

पौराणिकी । स्त्री० पुराणोक्तायाम् ॥

पौरुषम् । न० पुरुषस्यभावे ॥ पुरुषस्यकर्मणि ॥ पुरुषस्यतेजसि ॥ आत्मसामर्थ्ये । यत्ने । उद्योगे । केनाप्युपायेनावश्यमिदंसम्पादयामीत्येवंविधोत्साहरूपेनिर्बन्धे ॥ उच्छास्त्रंशास्त्रितञ्चेतिपौरुषंद्विविधंस्मृतम् । तत्रोच्छास्त्रमनर्थायपरमार्थायशास्त्रितम् ॥ उच्छास्त्रंपरस्त्रीगमनपरद्रव्यापहारादि । शास्त्रितंनित्यनैमित्तिकानुष्ठानादि । अनर्थोनरक : । अर्थेषुस्वर्गादिषुपरमोर्थोमोक्ष : ॥ पुरुषस्यकर्मभावोवा । प्राणभृज्जातीत्यञ् । युवादित्वादणवा । क्लीवाद्दैवमेवेकंप्रशंसन्तिनपौरुषम् । दैवंपुरुषकारेणघ्नन्तिशूरा : सदोद्यमा : इत्यग्निपुराणम् ॥ त्रि० ऊर्द्ध्वविस्तृतदो:पाणिनृमाने । पुरुषपरिमाणे । पुरुषा० इ० भा० ॥ दोषौचपाणीचतत्० ऊर्द्ध्वंविस्तृतंदो : पाणियेनस : तादृशोयेनस : तादृशोना० तस्ययन्मानंपरिमाणम् ॥ तेनवापुंसायन्मीयतेतत्र ॥ पुरुषप्रमाणमस्यपुरुषहस्तिभ्यामण्चेत्यण् ॥ पौरुषोनर:० पौरुषीनदी० पौरुषंसर : ॥

पौरुषेय : । पुं० पुरुषसङ्घे ॥ पुरुषस्यवधे ॥ पुरुषस्यपदान्तरे । पुरुषस्यस्थाने ॥ त्रि० आधुनिके । पुरुषेणकृते ॥ पुरुषस्यविकारे ॥ पुरुषस्यहिते ॥ पुरुषाद्वधविकारसमूहतेनकृतेष्वर्थेषु० सर्वपुरुषाभ्यांणढञाविति ठन् ॥

पौरोगव : । त्रि० पाकशालाध्यक्षे । पुरोगा० इ० भा० ॥ पुर : पूजितोगोभूमि : पुरोगवी । गोरतद्धितलुकीतिटच् । तस्याअयम् । तस्येदमित्यण् ॥ यद्वा । पुर : प्रथमंयाच्यवस्तुषुगौर्नेत्रमस्य० पुरोगु : । गोस्त्रियोरितिह्रस्व : । तत : प्रज्ञाद्यण् ॥

पौरोडाश : । पुं० पुरोडाशे । पिष्टपिण्डे ॥ पुरोडाशएव । स्वार्थेऽण् ॥

पौरोडाशिक : । पुं० पुरोडाशिके ॥ पुरोडाशसहचरितोमन्त्र :-

पुरोडाश : । सएवपौरोडाश : । तस्यव्याख्यानस्तत्रभवोवा । पौरोडाशपुरोडाशात्ष्ठन् ॥

पौरोभाग्यम् । न० पुरोभागिन : कर्म्मणि ॥ ष्यञ् ॥

पौरोहित्यम् । न० पुरोहितस्यकर्म्मभावयो : । पत्यन्तपुरोहितादिभ्योयक् ॥

पौर्णमास: । पुं० पौर्णमास्यांक्रियमाणे यागविशेषे ॥ पौर्णमास्यांभव: । सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥

पौर्णमासी । स्त्री० पूर्णिमायाम् ॥ पूर्णमासोयस्याम् । बहुव्रीहौकृते० स्वार्थेण् । सास्मिन्पौर्णमासीतिनिर्द्देशात् ॥ यद्वा । पूर्णमासोऽस्यांवर्त्तते० इति । पूर्णमासादण्वक्तव्य : । इत्यण् । ङीप् ॥

पौर्वदेहिकम् । त्रि० पूर्वदेहभवे ॥

पौर्वपदिक : । त्रि० पूर्वपदग्राहिणि । पूर्वपदंगृह्णाति । पदोत्तरपदंगृह्णातीतिठक् ॥

पौर्वापर्य्यम् न० कार्यकारणभावे ॥ साध्यसाधनभावे ॥

पौर्वाह्णिकम् त्रि० पूर्वाह्णे भव: । विभाषापूर्वाह्णापराह्णाभ्यामिति पक्षे ठञ् ॥

पौलस्त्य: । पुं० कुवेरे ॥ रावणे ॥ विभीषणे ॥ पुलस्तेर्गोत्रापत्यम् । गर्गादिभ्योयञ् ॥ बहुत्वे पुलस्तय: ॥ राक्षसे ॥

पौलि: । पुं० आपक्वे । भर्जितेहरित यवादौ ॥ पोलति । पुलमत्त्वे । ज्वलादित्वाण्ण: । पौलेननिर्वृत्त : । सुतङ्गमादित्वादिञ् ॥

पौलुषि: । पुं० सत्ययज्ञे ॥ पुलुषस्यापत्यम् । इञ् ॥

पौलोमी । स्त्री० इन्द्राण्याम् ॥ पुलोमोमुनेरपत्यंस्त्री । तस्यापत्यमित्यण् । गोत्रत्वेनजातित्वान्ङीष्॥

पौष : । पुं० तैषे । सहस्ये । हैमने । तत्रजातफलम् । निगूढमन्त्र : सुकृषाङ्गयष्टि : परोपकारीपिटविचक्षेन : । कष्टान्वितार्थं व्ययकृद्दिधिज्ञ : पौष : प्रसूत : पुरुष : सुधीर : ॥ पौषीपौर्णमास्यस्मिन् । सास्मिन्पौर्णमासीत्यण् ॥ न० महे ॥ युद्धे पुष्ययुक्तेन्हि ॥

पौषी । स्त्री० पुष्ययुक्त पौर्णमास्याम् ॥ पुष्येणयुक्तापौर्णमासी । नक्षत्रेणयुक्त : कालइत्यण् । तिष्यपुष्ययोर्नक्षत्राणियलोप : । ङीप् ॥ पुष्येणयुक्तायांरात्रौ ॥

पौष्करम् । न० पुष्करमूले ॥ पौष्करंकटुकंतिक्तमुष्णंवातकफज्वरान् । हन्तिशोथ,रुचिश्वासान्विशेषात् पार्श्वशूलनुत् ॥

पौष्करिणी । स्त्री० पुष्करिण्याम् ॥

पौष्टिकम् । न० पुष्ट्युत्पादककर्म्मणि

॥ चौरसमर्थेगा चाच्छादनवस्त्रवि शेषे । कादाङ्० द्र० गौ० भा० ॥

पौष्णा : । पुं० सूर्यपुत्रे ॥ न० रेवती नक्षत्रे ॥

पौष्यम् । वि ० पुष्यनिर्मिते ॥

पौष्कम् । न० धातुप्रभेदे । रीति पुष्पे ॥ पुष्यस्यप्रतिकृति : । इवे प्रतिकृताविति कन् । ततः स्वार्थे० अण् ॥

पौष्पी । स्त्री० पुष्पपुरे । पटना० द्र० भा० ॥

प्याट् अ० ॥ भोः । सम्बोधने ॥ प्यायते । प्यैङ्वृद्धौ टप्रत्यय :

प्र । अ० प्रकर्षे ॥ गतार्थे ॥ प्रआदि कर्म दीर्घशभृशसम्भवतृप्तिषु । वियो गशुद्धिशक्तीच्छाशान्तिपूजाग्रदर्शने ॥ यथा आदिकर्मणिक्त:० प्रयात: । दीर्घे० प्रवजामूषका : । ईशे ० प्रभुर्देशस्य । भृशार्थप्रवर्द्धन्तिदाया दा : । सम्भवे ० हिमवतोगङ्गाप्रभ वति । तृप्तौ० प्रभुक्तमन्नम् । वि योगे ० प्रोषित : शुद्धौप्रसन्नमुदक म् । शक्तौ० प्रशक्तोविग्रय । इ च्छायाम् ० प्रार्थयते कन्याम् । शान्तौ० प्रशान्तोग्नि : । पूजाया म्० प्राञ्जलि : स्थित : अग्रे ० प्र वालम् । दर्शने प्रलोकयति । इत्यर्थ : ॥

प्रकट : । त्रि० व्यक्ते । नि:सन्दिग्ध भातीतिव्यवहारगोचरे । स्पष्टे ॥ उद्भूते ॥ सम्प्रोदश्चेतिप्रशब्दात् स्वार्थेकटच् प्रत्यय : ॥

प्रकटित : । वि० प्रकाशिते ।

प्रकटोदितम् । न० विस्पष्टवाक्ये ॥

प्रकण्व : । पुं० देशविशेषे ॥

प्रकथनम् । न० प्रकर्षेणप्रतिपादने ॥ यथागाथा : प्रकुरुते । प्रकथयती त्यर्थ : । गन्धनावक्षेपणे तिप्रकथने चात्मनेपदम् ॥

प्रकम्पन : । पुं० वायौ ॥ नरकविशे षे ॥ न० कम्पातिशये ॥

प्रकर : । पुं० संहतौ । सङ्घे ॥ विकीर्णकुसुमादिषु । न० जोङ्गके ॥ प्रकीर्यते कृविक्षेपे । ऋदोरप् ॥

प्रकरणम् । न० प्रस्तावे ॥ यथा । भोजनप्रकरणे सैन्धवमानयेतिलव णे प्रतीतिगमनप्रकरणे तत्त्वश्वे प्रतीतिर्भवतीति ॥ रूपकभेदे । अभिनेयप्रकारे ॥विश्रामे॥ ग्रन्थ सन्धौ । ग्रन्थस्यविच्छेदे ॥ तल्लक्षणं यथा । शास्त्रैकदेशसम्बद्धं शास्त्र कार्यान्तरेस्थितम् । आहु : प्रकर णं नामग्रन्थभेदंविपश्चित : ॥ अथ मीमांसका : ॥ विनियोगविधे : सहकारिभूतं षुषट्सुप्रमाणे षुचतु र्थंप्रमाणं ॥ उभयाकांक्षाप्रकरणम् । यथा । प्रयाजादिषुसमिधोयजती

स्यादिवाक्ये फलविशेषस्यानिर्देशात् समिद्यागेनभावयेदितिबोधानन्तरंकिमित्यस्य्युपकार्याकाङ्क्षा० दर्शपूर्णमासाँवाक्ये पिदर्शपूर्णमासाभ्यांस्वर्गंभावयेदितिबोधानन्तरंकथमित्यस्य्युपकारकाकाङ्क्षा । इत्थंचोभयाकाङ्क्षयाप्रयाजादीनांदर्शपूर्णमासाङ्गत्त्वम् । तच्चप्रकरणंद्विविधम्० महाप्रकरणमवान्तरप्रकरणञ्चेति । तत्रमुख्यभावनासम्बन्धिप्रकरणंमहाप्रकरणम्० तेनचप्रयाजादीनांदर्शपूर्णमासाङ्गत्त्वम् । एतच्चप्रकृतावेवोभयाकाङ्क्षायाः सम्भवात् । नतुविकृतौ० तत्रप्रकृतिवद्विकृतिः कर्त्तव्येत्यतिदेशेनकथम्भावाकाङ्क्षायाउपशयेनापूर्वाङ्गानामप्युभयाकाङ्क्षयाविनियोगासम्भवात् । तस्मादपूर्वाङ्गानांस्थानादेवविकृत्यर्थत्वमिति । अङ्गभावनासम्बन्धिप्रकरणमवान्तरप्रकरणम् । तेनचाभिक्रमणादीनांप्रयाजाद्यङ्गत्वम् । तच्चसन्दंशेनैवज्ञायते० तदभावेचाविशेषात्सर्वेषांफलभावनाकथम्भावेनग्रहणप्रसङ्गेनप्रधानाङ्गत्वापत्तेः । एकाङ्गानुवादेनविधीयमानयोरप्यङ्गयोरन्तरालेविहितत्वंसन्दंशः । यथा० अभिक्रमणं० तद्भिसमानयतउपभृतस्तेजोवाइत्यादिनाप्रयाजानुवादेन० किञ्चिदङ्गं-



विधायविधीयते० तदनन्तरमपिप्रयाजानुवादेनप्रयाजत्वम्० यस्यैवंविदुषः प्रयाजाइज्यन्ते० प्रैभ्योलोकेभ्योभ्रातृव्यान्नुदते० अभिक्रामंजुहोत्यभिजित्यै इतितदनन्तरमपिप्रयाजानुवादेनयोवैप्रजानांमिथुनंवेदेत्यादिनाकिञ्चिदङ्गंविधीयते । अतःप्रयाजाङ्गमध्येऽभिहितमभिक्रमणंतदङ्गं प्रयाजैरपूर्वंकृत्वायागोपकारंभावयेदितिज्ञाते० कथमेभिरपूर्वंकर्त्तव्यमिति० कथम्भावाकाङ्क्षायाः सत्वात् । साचसन्दंशपतितैरभिः क्रमणादिभिः शाम्यति । नचाङ्गभावनायांकथम्भावाकाङ्क्षाभावः । भावनासाम्येनतत्रापितत्सम्भवात् । यदिदंप्रकरणंतत्क्रियायाएवसाक्षाद्विनियोजकंद्रव्यगुणयोस्तुतद्द्वारा । तथाहि० यजेतस्वर्गकामइत्यत्रफलभवनायां कथम्भावाकाङ्क्षायाःसन्निधपठितमश्रूयमाणफलकंक्रिया- जातमुपकार्याकाङ्क्षयेतिकर्त्तव्यतात्वेनाऽन्वेति० (*) क्रियायाएवलोकेकथम्भावाकाङ्क्षायामन्वयदर्शनात् । नहिकुठारेणच्छिन्द्यादित्यत्रकथम्भावाकाङ्क्षायामनुच्चार्यमाणोपिहस्तोऽन्वेति० किन्तुहस्तेनो दाम्यनिपात्येत्युद्यमननिपातनेनएव० हस्तस्तुतद्द्वारैवान्वेतीतिसार्वजनीनमेतत् । इदंचस्थाना

द्भिन्योबलवत् । अतएवाचैर्दीव्यति राजन्यमितिविदेवनाद्ययोधर्मा अभिषेचनीयसन्निधौपठितासपिस्थाना न्नतदङ्गम्० किन्तुप्रकरणाद्राजसूयाङ्गमितिमीमांसका : ॥

प्रकरणसम: । पुं० नैयायिकानांपदार्थान्तरविशेषे ॥ तंलक्षयति । यस्मात्प्रकरणचिन्तासनिर्णयार्थमपदिष्ट : प्रकरणसम : ॥ ४७ ॥ सद्धेतु: स्वसाध्यस्यपरसाध्याभावस्यवा० निर्णयार्थमपदिष्ट : प्रयुक्त : प्रकरणसमउच्यते । भक्त: इत्याकाङ्क्षया माह । यस्मात्प्रकरण पक्षप्रतिपक्षाविति भाष्यम् । साध्यतदभाववन्ताविति तदर्थ: । तथाचनिर्णयार्थम् प्रयुक्तोहेतुर्यं चनिर्णयंजनयितुमशक्तस्तुल्यबलेनपरेणप्रतिबन्धात्० किन्तुधर्मिण:साध्यवत्त्वंतदभाववत्त्वम्वेति चिन्तांजिज्ञासांप्रवर्तयतिसप्रकरणसम : । यद्वा प्रकृष्टंकरणंलिङ्गंपरामर्शोवा० कोहेतुरनयो ; साधक: ० एतयो :क : परामर्श : प्रमेतिवा यत्रजिज्ञासाभवतीत्यर्थ : । यस्माद्दित्यादितुवस्तुस्थितिमात्रम् । लक्षणन्तुतुल्यबलविरोधिपरामर्शकालीनपरामर्शविषयत्वंस्वसाध्यपरामर्शकालीनतुल्यबलविरोधिपरामर्शोवा । विरोधिपरामर्शस्यचहेतुनिष्ठत्वमेकज्ञानविषयत्वसम्बन्धेन । अ-न्यथाहेतोर्दुष्टत्वंनस्यात् । अयञ्चदृशाविशिष्टोपलक्षित : सद् तार्थपि विरोधिपरामर्शकालिदुष्टत्वमिदमेवे त्यवधेयम् ॥ ४७ ॥ ।

प्रकरी । स्त्री० नाट्याङ्गे ॥ चत्वरभूमौ ॥

प्रकर्ष: । पुं० विशेषे । अधिके ॥ उत्कर्षे ॥ यथा । गुणप्रकर्षेणजनोनुरज्यतेजनानुरागप्रभवाहिसम्पद: ॥ प्रकर्षणम् । कृष० । घञ् ॥

प्रकाण्ड: पुं० न० विटपे ॥ तरोर्मूलशाखान्तरे । मूलादारभ्यशाखावधिदृषे । स्कन्धे ॥ त्रि० प्रशस्ते ॥ प्रगत :काण्डोऽधमोयस्मात् । प्रशस्तोगौ : गोप्रकाण्ड । प्रकाण्डस्य रूढिशब्दत्वात्प्रशंसावचनैश्चेतिसमास : ॥ प्रकाण्डति । कडिभेदने । चु० । एरच् । पृ० ॥ प्रकाश्यते । कम्० विङ् । वरगडादयश्चेतिडोवा ॥

प्रकाण्डर : । पुं० द्रुमे ॥

प्रकामम् । अ० अतिशये ॥

प्रकामम् । त्रि० निकामे । यथेप्सिते ॥ प्रकमनम् । कमु० । घञ् ॥

प्रकार : । पुं० भेदे ॥ सामान्यस्यभेदकेविशेषे ॥ सादृश्ये ॥ प्रकरणम् । कृञोघञ् ॥

प्रकाश : । पुं० दीप्तौ । आतपे ॥ स्फुटे । प्रकटे । उल्वणे । व्यक्ते ॥ प्रहासे ॥ बुद्धिपरिणामविशेषेविषयाकारे० दीपवत् । स्वविषयावरण

विरोधिनिसत्वकार्ये ॥ प्रभाते॥ न० कांस्ये ॥ त्रि० व्यक्ते । प्रकाशनम् प्रकाशतेवा । काशृदीप्तौ । घञ्० पचाद्यच्वा ॥ अतिप्रसिद्धे ॥

प्रकाशकः । पुं० सूर्यादिवदन्यावभासकेपरमात्मनि ॥ सूर्यादिषु ॥ त्रि० व्यञ्जके । अवभासके । प्रकाशकर्तरि ॥ प्रकाशयति । काशृ० । ण्वुल् ॥

प्रकाशकज्ञाता । पुं० कुक्कुटे ॥ त्रि० प्रकाशज्ञातरि ॥

प्रकाशनः । पुं० प्रकाशके ॥ प्रकाशयति । काशृ० ल्युः ॥

प्रकाशमानः । त्रि० भासमाने ॥ विश्वोपलब्धात्मनासदाप्रकाशमानमेवब्रह्मेतियथा ॥

प्रकाशात्मा । पुं० दिवाकरे । सूर्ये ॥ प्रकाशआत्मास्वरूपंयस्य ॥ त्रि० व्यक्तस्वभावे ॥

प्रकाशितः । त्रि० व्यक्तीकृते । दर्शिते । आविष्कृते । प्रकटिते । सञ्जातप्रकाशे ॥ ता० इतच् ॥

प्रकाशी । त्रि० दीप्तिजनके ॥

प्रकीर्णः । पुं० पूतिकरञ्जे ॥ न० ग्रन्थविच्छेदे ॥ चामरे ॥ त्रि०असङ्गते ॥ नानाप्रकारमिश्रिते ॥ यथा । प्रकीर्णः पुष्पाणांहरिचरणयोरञ्जलिरयमितिवेणीसंहारः ॥ विस्तृते । विक्षिप्ते ॥ य० । प्रकीर्णभागडमनवेच्यकारिणींसदैवभर्तुः प्रतिकूलवादिनीम् । परस्यवेश्माभिरतामलज्जामेवंविधांस्त्रींपरिवर्जयामीतिलक्ष्मीचरित्रम् ॥ प्रकीर्यतेस्म। कृविक्षेपे । क्तः ॥

प्रकीर्णकः । पुं०अश्वे ॥ न० चामरे ॥ विस्तारे । ग्रन्थविभेदे ॥ पापवि० ॥ यदनुक्तंतत्प्रकीर्णकम् । अनुक्तम०अनुक्तनिष्कृतिकम् । प्रकीर्णपातकेज्ञात्वागुरुत्वमथलाघवम् । प्रायश्चित्तंबुधः कुर्यात्ब्राह्मणानुमतेसदा ॥ विवादपदे ॥ नष्टं यत्रपूर्वेषुसर्वंतत्स्यात्प्रकीर्णकम् ॥ संज्ञायांकन् ॥

प्रकीर्त्तितः । त्रि० कथिते ॥ प्रकर्षकीर्त्तितः ॥ यथा । प्रभूतमल्पंकार्यंवायोनरः कर्त्तुमिच्छति । सर्वारम्भेणतत्कुर्य्यात् सिंहादेकंप्रकीर्त्तितम् ॥

प्रकीर्य्यः पुं० पूतिकरञ्जे । कलिकारके । कठकरञ्ज०इ०भा० । नाटाकरञ्ज०इ० गौ०भा० ॥ पूतकरञ्जे ॥ रौठाकरञ्जे ॥ त्रि०विप्रकीर्ये ॥ प्रकीर्यते । क्त । अघ्न्यादित्वात्यक् ॥

प्रकृतः त्रि०प्रस्तुते । प्रकरणप्राप्ते ॥ यथा । प्रकृतमनुसरामः ॥ प्रकर्षकृते ॥ अविकृते ॥ प्रक्रियतेस्म । कृञ् क्तः ॥

प्रकृतार्थ: त्रि० प्रकरणप्राप्तस्याऽभिधेये

प्रकृति : । स्त्री० अमात्यादिषु ॥ तेच । यथा । स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानिच । राज्याङ्गानिप्रकृतय : । इति ॥ प्रकृते : प्रभावस्तु कोदेवीभागवतेइन्द्रंप्रतिहरिश्चन्द्र नृपेण यथा । भुङ्क्तेशक्रनृपोराज्यं प्रभावात्प्रकृतेर्ध्रुवम् । यजतेचमहायज्ञै : कर्मपूर्तंकरोतिचेति ॥ प्रकृष्टंकरोतिराज्यमिति । क्तिच् ॥ स्वभावे ॥ सांसिद्धिकीस्वाभाविकी सहजाप्रकृताचया । प्रकृति:सेति विज्ञेयास्वभावंनजहातिया ॥ जातौ ॥ लिङ्गे ॥ लिङ्गम्० व्यक्तम् । स्त्री पुन्नपुंसकञ्चेतिस्वामी । यथा० त्रुतीयाप्रकृति: शरढ: ॥ पौरवर्गे । पौराणांश्रेणिषु ॥ शिल्पिनि ॥ शक्तौ ॥ सापञ्चविधायथा । सापञ्चविधायथा । गणेशजननीदुर्गाराधा लक्ष्मीसरस्वती । सावित्रीचसृष्टिविधौप्रकृति:पञ्चमीस्मृतेति ॥ निरुक्तिस्तु । प्रकृष्टवाचक: प्रश्चकृतिश्चसृष्टिवाचक :। सृष्टौप्रकृष्टायादेवीप्रकृति : साप्रकीर्तिता ॥ गुणे प्रकृष्टे सत्त्वे चप्रशब्दोवर्ततेश्रुतौ । मध्यमे वर्ततेप्रश्चकृतिश्चसृष्टिवाचक: सृष्टेराद्याचयादेवीप्रकृति : साप्रकीर्तितेति ॥ योषिति ॥ परमात्मनि ॥ प्रत्ययात्पूर्विकायाम् । प्रत्ययात्प्रथमे ॥ साद्विधा । धातु : प्रातिपदिकञ्च ॥ पञ्चमहाभूतेषु ॥ करणे ॥ गुह्ये ॥ जन्तौ ॥ एकविंशत्यक्षरायांछन्दोवृत्तौ ॥ एकविंशतिस्त्यङ्के ॥ मातरि । जनन्याम् ॥ स्वास्थ्ये ॥ योनौ । उपादानकारणे । मूलप्रकृतौ । सत्वरजस्तमसांसाम्यावस्थायाम् ॥ यथा । सत्वंरजस्तमश्चैवगुणत्रयमुदाहृतम् । साम्यावस्थितिरेतेषांप्रकृति:परिकीर्तिता ॥ केचित्प्रधानमित्याहुरव्यक्तमपरेजगु: । एतदेवजगत्सृष्टिंकरोतिविकरोतिच ॥ मूलप्रकृतिरविकृति : । प्रकरोतीतिप्रकृति: । साअविकृति: प्रकृतिरेवेत्यर्थ: । कस्मात्० इत्यत उक्तंमूलेति । मूलञ्चासौप्रकृतिश्चेति० मूलप्रकृति: । विश्वस्यकार्यकलापस्यसामूलंनत्वस्यामूलान्तरम्० अनवस्थाप्रसङ्गात् । नचानवस्थायामस्तिप्रमाणमितिभाव : । इति साङ्ख्यविद : ॥ अविद्यायाम् ॥ प्रकृतिर्नाममाया । साचसत्वरजस्तमोगुणमयीअघटनघटनापटीयसीमिथ्याज्ञानात्मिका पारमेश्वरीशक्ति: ॥ प्राग्जन्मकृतधर्माधर्मज्ञानेच्छादिसंस्कारेवर्तमानजन्मन्यभिव्यक्ते० सर्वत्रबलवति ॥ पुरुषार्थभ्रंसहेतुभूतायामनिर्वचनीयस्वभावायां त्रिगुणात्मिकायांसर्वविकारकारण

भूतायांभगवन्मायायाम् ॥ मायान्तु प्रकृतिंविद्यात् । प्रक्रियतेऽनयेति- प्रकृतिरुपादानकारणं विद्यामानी- यादिस्त्वर्थ ; ॥ पराऽपरभेदेनप्रकृ तिर्द्विधा । पराचेतनलक्षणा॰अप राचेतनलक्षणा । यथा । भूमिरापो ऽनलोवायु : खंमनोबुद्धिरेवच । अ- हङ्कारइतीयंमेभिन्नाःप्रकृतिरष्टधा । अपरेयमितस्त्वन्यांप्रकृतिंविद्धिमे पराम् । जीवभूतांमहाबाहोययेदं धार्यतेजगत् । इति । समग्राङ्गोप देशे ॥ यत्रसमग्राङ्गोपदेश : साप्रकृ ति : । यथादर्शपौर्णमासादि : । तत्प्रकरणेसर्वाङ्गपाठात् ॥ प्रकृति वद्विकृति : कर्तव्ये तिमीमांसका- नांव्यवस्था । तत्रयस्मिन्यागे॰इति कर्तव्यतोपदिष्टा यागान्तरेणोपजी व्यतेसाप्रकृति : । येनचोपजीव्यते साप्रकृतिरितितदर्थ : ॥ प्रकरणम् । डुकृञ्॰ । क्तिन् ॥ प्रकुरुते । क्ति च् ॥

प्रकृतिज: । त्रि॰ स्वभावप्रभवे । प्रकृ तेरभिव्यक्तेरागद्वेषादौ ॥ प्रकृतेर्जा त : । जनी॰ । ड : ॥

प्रकृतित्त्वम् । न॰ तत्त्वान्तरोपादाने ॥ तदेवप्रकृतित्वंसाङ्ख्यनयेऽभिमत- म् । अतोयद्यपिपृथिव्यादीनामपि गोघट वृक्षादयोविकारा : सन्ति॰ एवंतद्विकारभेदानांपयोबीजादीनां दध्यङ्कुरादय : ॰ तथापिगवादयो बीजादयोवापृथिव्यादिभ्यस्तत्त्वान्त रम् । सर्वेषांगोघटादीनांस्थूलत्त्व- मिन्द्रियग्राह्यत्त्वञ्चसममितिनतत्त्वा न्तरम् ॥

प्रकृतिदान्त : । त्रि॰ स्वभावतएवोप- शान्ते ॥ प्रकृत्यादान्त : ॥

प्रकृतिलय : । पुं॰ प्रधानलये । प्रकृ- तौसंश्लेषे ॥ पुरुषतत्त्वानभिज्ञस्य॰ वैराग्यमात्रात्प्रकृतिलय : । प्रकृ- तिग्रहणात्प्रकृति महदहङ्कारभूत न्द्रियाणिगृह्यन्ते । तेष्वात्मबुध्योपा स्यमानेषुलय : । वैराग्यात्प्रकृति लय: ॥

प्रकृतिविकृति : । स्त्री॰ महदादिसप्त सु ॥ महदाद्या : प्रकृतिविकृतय : सप्त । प्रकृतयश्चविकृतयश्चताइति- प्रकृतिविकृतय : सप्त । तथाहि । महत्तत्वमहङ्कारस्यप्रकृतिर्विकृतिश्च मूलप्रकृते : । एवमहङ्कारतत्वंतन्मा त्राणामिन्द्रियाणाञ्चप्रकृतिर्विकृति श्चमहत : । एवंपञ्चतन्मात्राणित त्वानिभूतानामाकाशदीनांप्रकृत योविकृतयश्चाहङ्कारस्य ॥

प्रकृतिविरूपम् । न॰ गगनादौ ॥ तत्व विभाजकोपाध्यवच्छिन्नाजनकत्वा- त् ॥ विरुद्धंरूपंविरूपम् । प्रकृते- र्विरूपम् ॥ त्रि॰ प्रकृतेरसमानरूपे ॥

प्रकृतिसरूपम् । न॰ महदादिसप्तके ॥

तत्त्वविभाजकोपाध्यवच्छिन्नजनक-त्वात् ॥ समानं रूपं सरूपम् । प्रकृतिः समानरूपे ॥

प्रकृतिस्थ : । त्रि० आगतस्वप्रभोगज-नककर्मक्षयेप्राकृतावस्थानैरुपस्थरूपे-णास्थिते । स्वभावस्थे ॥ प्रकृतौतिष्ठति । स्था० । सुपिस्थइतिकः ॥ विकारशून्ये ॥ प्रकृतौसाम्यावस्थायांतिष्ठतीतितथा ॥

प्रकृत्याख्या । स्त्री० अम्भः पट्वाख्यायांतुष्टौ ॥ प्रकृतिराख्यायस्याः ॥

प्रकृष्ट : । त्रि० प्रधाने । अग्रे ॥ उत्तमे ॥ प्रकृष्यतेऽयम् । कृष० । कर्मणिक्तः ॥

प्रकेत : । पुं० चिह्नभृते ॥ प्रकृष्टः केतः ॥

प्रकेतनम् । न० गृहे ॥ प्रकृष्टं केतनम्

प्रकोष्ठ : । पुं० अपकक्षान्तरे ॥ विस्तृतकरेहस्त ॥ मणिबन्धकूर्परयोरन्तरे ॥ प्रकुष्यतेऽनेन । कुषनिष्कर्षे । उषिकुषिगर्तिभ्यस्थन् ॥ प्रकृष्टः कोष्ठं कुमूलंवा । अत्यादयइतिसमासः ॥ भुजे ॥

प्रक्खर : । पुं० अश्वकवचे । प्रखरे । पाखर० इ० भा० ॥ हृ० ग०भा० ॥

प्रक्रान्ता । त्रि० उपक्रमकर्तरि । आरम्भकर्तरि ॥

प्रक्रम : । पुं० प्रथमारम्भे । उपक्रमे ॥ अवसरे ॥ क्रमे ॥ प्रक्रमणम् । क्रमु० । घञ् ॥ मन्त्रनिर्वचनार्थिक्रमपाठे ॥

प्रक्रान्त : । त्रि० प्रस्तुते प्रकरणस्थे ॥ आरब्धे ॥ प्रक्रामतिस्म । क्रमु० । क्तः ॥

प्रक्रिया : । स्त्री० नृपादीनांचामरधूननच्छत्रधारणादिव्यापारे । अधिकारे । उत्पादने । साधने ॥ प्रकारे ॥ औषधिप्रयोगे ॥ प्रकर्षायकरणम् । डुकृञ्० । कृञः शचेतिशः । रिङ् । इयङ् । टाप् । प्रकृष्टकार्ये ॥

प्रक्रीडित : । त्रि० क्रीडाकरे ॥ प्रक्रीडति । क्रीड० । कर्तरिक्तः ॥

प्रक्लिन्न : । त्रि० प्रकर्षेणक्लेदयुक्ते ॥ तृप्ते ॥

प्रक्वाण : । पुं० प्रक्वाणे । वीणायाः ध्वनिते ॥ क्वणशब्दे । क्वणोवीणायाञ्चेत्यप् ॥

प्रक्वाण : । पुं० प्रक्वणे । वीणाशब्दे ॥ क्वणोवीणायाञ्चेतिपाक्षिकोघञ् ॥

प्रखर : । पुं० अश्वसन्नाहे । प्रखरे । पाखर इ० भा० ॥ हृ० ह० चं० ॥

प्रक्षालनम् । न० धावने । मार्जने ॥

प्रक्षालित : । त्रि० धौतेमार्जिते ॥

प्रक्षिप्त : । त्रि० कृतप्रक्षेपे ॥ प्रक्षिप्यतेस्म । क्षिप० । क्तः ॥

प्रक्षेप : । पुं० औषधादिषुक्षेपणीयद्रव्ये ॥ विक्षेपे ॥

प्रक्षेपणम् । निक्षेपणे ॥ प्रकर्षेणक्षेपणम् ॥

प्रचोभ : । पुं॰ प्रकृष्टक्षोभे । न॰ चल ने ।

प्रखुडन : । पुं॰ सर्वलोहमयशरे । ना राचे । प्रकर्षेणखुडति । खिद्युदा व्यक्तशब्दे । ल्यु : । पृ॰ ।

प्रखुदन : । पुं॰ प्रखुडने । नाराचे ।

प्रखर : । पुं॰ हयसन्नाहे । पाखर॰ इ॰ भा॰ ॥ कुक्कुरे ॥ अश्वतरे ॥ वेसरे ॥ त्रि॰ अत्यन्तखरे ॥ अत्यु ये ॥

प्रख्य : । त्रि॰ उत्तरपदेतुल्यार्थवाचके । यथा । स्य,तरपदेप्रख्यः प्रकार : प्रतिमोनिभ इतिहेमचन्द्र : ॥ म- हन्मन : प्रख्यरय : सरस्वतेतितुल्यम् ॥

प्रख्या । स्त्री॰ कान्तौ । प्रख्यानम् । ख्या॰ । चक्षिङादेशोवा । आतश्चो पसर्गेइत्यङ् । टाप् ॥

प्रख्यात : । त्रि॰ प्रसिद्धे । प्रकृष्टख्याति युक्ते । विख्याते ॥ प्रकर्षेणआख्या यि । ख्याप्रकथने । चक्षिङःख्याञ्वा । क्त : ॥

प्रख्यातपितृक : । पुं॰ प्रख्यातवप्तृके । विख्यातपितृके । आमुष्यायणे ॥ प्रख्यात : पितायस्य । कप् ।

प्रख्याति : । स्त्री॰ प्रकृष्टायाम् । प्रकृ ष्टायांकीर्तौ । विख्यातौ ॥

प्रख्यानम् । न॰ प्रतीतौ ॥

प्रगण्ड : । पुं॰ कूर्परोपरिकक्षपर्यन्त भागे । भुजमध्योपरिभागे ॥ प्रत्या सन्नोगण्ड : काण्डोऽस्य ॥

प्रगण्डी । स्त्री॰ वहि : प्राकारे ॥ दुर्ग प्राकारभित्तौ शूराणामुपवेशनस्था ने ॥

प्रगतजानु : । त्रि॰ प्रगतजानुके ॥

प्रगतजानुक : । त्रि॰ प्रज्ञौ । वाता- दिनाविरलजानुके ॥ प्रगतेविरले- जानुनीयस्य । कप् ॥

प्रगन्ध : । पुं॰ पर्पटे ॥

प्रगल्भ : । त्रि॰ प्रतिभान्विते । प्रष्ट व्यावसरे अक्षीणप्रतिपत्त्याद्य योगवति । प्रत्युत्पन्नमतौ । प्रगल् भते । गल्भधार्ष्ट्ये । पचाद्यच् । धृष्टे ॥ प्रौढे ॥ वाग्मिनि ॥

प्रगल्भगी : । स्त्री॰ उद्धारवचसि ॥ त्रि॰ तद्वति ॥

प्रगल्भता । स्त्री॰ ज्ञानोत्कर्षे ॥ प्रग ल्भभावे । उत्साहे । उद्यमे ॥ जि: गद्गलं प्रयोगेषुबुधै दक्षाप्रगल्भता

प्रगल्भा । स्त्री॰ नायिकाभेदे ॥

प्रगाढ : । त्रि॰ कृच्छ्रे ॥ दृढे ॥ प्रगा ढ्यतेस्म । गाहू॰ । क्त : । यस्यवि- भाषेतिनेट् ॥ भृशे ॥

प्रगाता । त्रि॰ उत्तमगायके ॥

प्रगाथ : । पुं॰ चतुर्थषष्ठौपादौयाहते प्रगाथंपुनरभ्यासित्वोत्तरयोरचर्य दित्ये वमादिवचनाद्यवदयोर्ऋचौ- स्तिस: क्रियन्ते सप्रगाथइत्युच्यते ॥

प्रकर्षेणागानं यत्र । यद्वा । प्रयच्छति । यम्य० । अकर्त्तरिचकारकइति कर्मणिघञ् । पृषोदरादित्वाद्गम नकारयोर्लोप : । उक्तेर्यैरूढश्चायम् ॥

प्रगुण : । त्रि० ऋजौ ॥ प्रकृष्टागुणा यस्य ॥ प्रकृष्टलाघवादिगुणवति ॥

प्रगृह्य : । पुं० प्रातिशाख्यादिप्रसिद्धे पदविशेषे ॥ स्वरोहितत्र्नसन्धीयते यस्मपूर्वाचार्यै : प्रगृह्यसंज्ञाविहिता प्रगृह्यते । ग्रहउपादाने । असन्नि कर्षेणग्रहैरर्थ : । पदास्वैरिबाह्या पच्चर्ये षुचेतिक्यप् । ग्रहिज्ये तिसम्प्र सारणम् ॥

प्रगे । अ० प्रात : काले ॥ प्रगीयतेऽत्र वा । गैशब्दे । केप्रत्यय : ॥

प्रगेतन : । त्रि० प्रस्तने । प्रातस्तने ॥ ॥ प्रगेभव : । सायश्चिरमितिस्युत्यु लौ ॥

प्रग्रह : । पुं० तुलासूत्रे ॥ बन्द्याम् । आकृष्टमनुष्यादौ ॥ नियमने ॥ भुजे ॥ हयादिरश्मौ ॥ रश्मौ सुव र्णालुमहीरुहे ॥ रशनायाम् ॥ क- र्णिकारवृक्षे ॥ प्रकृष्टाभिनिवेशे ॥ बन्धने ॥ प्रकृतिभावाद्यकाद्यभावे परस्परमवोरसन्निकर्षे ॥ प्रगृह्यते । ग्रहउपादाने । प्रेवणिजाम् । रश्मौचेतिघञभावापक्षे० ग्रहवृद्रि श्चप् ॥

प्रग्राह : । पुं० तुलासूत्रे ॥ अप्यादौ नांवभ्रने ॥ अभीषौ ॥ प्रग्रहे । प्रगृह्यते । ग्रह० । प्रेवणिजां रश्मौचेतिघञ् ॥ यद्वा । प्रग्र हणम् ॥ ग्रह० । प्रेलिप्सायामितिघञ् ॥ यथा । पात्रप्रग्राहेणच रतिभिक्षु : । भिक्षापात्रोपादानेन पात्रंगृहीत्वेतियावत् ॥

प्रघटावित् । त्रि० शास्त्रगण्डे ॥

प्रघण : । पुं० ताम्रकुम्भे ॥ लोहमुद्गरे बहिर्द्वारप्रकोष्ठके । अलिन्दे ॥ प्रव शन्ति : पादै : प्रहन्यते । हन० । अगारैकदेशेप्रघण : प्रघाणश्चेति साधु : । द्वारदेशेद्वौप्रकोष्ठौ । आ- भ्यन्तरोबाह्यश्च । तत्रबाह्यप्रकोष्ठे निपातनम् ॥

प्रघस : । पुं० असुरे ॥ दैत्यप्रभेदे ॥ प्रकर्षेणअत्ति । अद० पचाद्यच् । घस्लृभावे अच्यपसङ्ख्यानम् । उपसर्गेऽदइत्युपि० घञपोश्चेति घस्लादेश : ॥

प्रघाण : । पुं० ताम्रकुम्भ ॥ लोहमुद्ग रे ॥ अलिन्दे । बहिर्द्वारप्रकोष्ठके ॥ प्रविशन्ति : पादै : प्रहन्यते । हन० । अगारैकदेशेप्रघण : प्रघाणश्चेति साधु : । बाह्यप्रकोष्ठेनिपातनमि दम् ॥

प्रघात : । पुं० अभिसम्पाते । युद्धे ॥ प्रकर्षेणहननम्० हन्यतेवा । हन० । घञ् ॥

प्रघूर्ण: । पुं० अतिथौ ॥ त्रि० प्रकृष्ट घूर्णयुक्ते ॥

प्रचक्रम् । न० प्रस्थितायां सेनायां ॥ प्रस्थितं चक्रं सैन्यम् ॥

प्रचचा: । पुं० वृहस्पतौ ॥

प्रचण्ड: । पुं० श्वेतकरवीरे ॥ त्रि० दुर्वहे । दुर्द्धर्षे ॥ प्रतापिनि ॥

प्रचण्डमूर्त्ति: । पुं० वरुणद्रुमे ॥ त्रि० प्रतापयुक्तशरीरे ॥ प्रचण्डा मूर्त्तिर्यस्य ॥

प्रचण्डा । स्त्री० देवीविशेषे ॥ अस्या: स्थानं छगलण्ड: ॥ श्वेतदूर्वायाम् ॥

प्रचय: । पुं० समूहे ॥ प्रसङ्गे ॥ पुष्पावचये ॥ शिथिलाख्यसंयोगे ॥ अयं स्वपरिमाणजनक: । यथा । सङ्ख्यात: परिमाणाच्च प्रचयादपि जायते । प्रचय: शिथिलाख्योय: संयोगस्तेन जन्यते ॥ परिमाणं तूलकादीनाशस्त्वाश्रयनाशत: ॥ इ० भा० प० ॥ प्रचीयते । चिञ् एरच् ॥

प्रचयगमनम् । न० बाहुल्येन प्रसरणे ॥ प्रचयेन गमनम् ॥

प्रचर: । पुं० पथि ॥

प्रचरद्रूप: । त्रि० व्यक्तरूपे ॥

प्रचलकी । पुं० प्रचलाकिनि ॥

प्रचलाक: । पुं० शराघाते ॥ शिखण्डे । भुजङ्गमे ॥

प्रचलाकी । पुं० मयूरे ॥ भुजङ्गे ॥

प्रचलायित: । त्रि० निद्रादिना घूर्णिते ॥ प्रचलद्दवाचरति । कर्त्तु: क्यङ्सलोपश्चेति० सन्नतात्कर्त्तरि क्त: ॥ प्रचलाया जातास्येतिवा । प्रचलायते स्म । गत्यर्थेति क्तोवा ॥

प्रचलित: । त्रि० प्रस्थिते ॥

प्रचार: । त्रि० सततव्यवहारे ॥ व्यक्तौ । प्रकाशे ॥ प्रचरणम् । चर० । घञ् ॥

प्रचित: । त्रि० परिवृंहिते ॥ प्रचीयते स्म । चिञ० । क्त: ॥

प्रचितकम् । न० दण्डकविभेदे ॥ य० । प्रचितकसमभिधोधीरधीभि: स्मृतोदण्डकोनद्वयादुत्तरै: सप्तभिर्यै: ॥ यथा मुरहरयदुकुलाम्बोधिचन्द्रप्रभोदेवकीगर्भरत्नचिन्तामणे लोकनाथ० प्रचितकपटसुरारिव्रजोद्दामदन्तावलस्तोमविद्रावणैकेशरीन्द्र । चरणनखरसुधांशुच्छटोन्मेषनि: शेषितध्यायिचेतोनिविष्टान्धकार० प्रणतजनपरितापोग्रदावानलोच्छेदमेघप्रसीदप्रसीदप्रसीद ॥

प्रचीयमान: । त्रि० पुष्यमाणे ॥

प्रचुर: । त्रि० प्रभूते । प्राज्ये । बहुले ॥ प्रचोरयति । चुर० । इगुपधेति क: । चुरादीनां णिजवैकल्पिक: ॥ प्रगतश्चुरायाइतिवा ॥

प्रचुरपुरुष: । पुं० चौरे ॥ बहुनरे ॥

प्रचेताः। पुं॰ वरुणे। अप्पतौ॥ मुनिविशेषे॥ प्राचीनबर्हिषस्तनयेषु॥ प्राचीनबर्हिषः पुत्राः शतद्रुत्यां दशाभवन्। तुल्यनामव्रताः सर्वे धर्मस्नाताः प्रचेतसः॥ त्रि॰ प्रकृष्टहृदि॥ प्रकृष्टं चेतोऽस्य॥ प्रचेतयति वा। चिती॰। असुन्॥

प्रचेतसी। स्त्री॰ कट्फले॥

प्रचेताः। पुं॰ सारथौ॥

प्रचेलम्। न॰ पीतकाष्ठे॥

पचेलकः। पुं अश्वे॥

प्रचोदनी। स्त्री॰ कण्टकार्य्याम्॥ प्रचोदयति। चुदसञ्चोदने। ल्युट्॥

प्रचोदितः। त्रि॰ प्रेरिते॥

प्रच्छदः। पुं॰ आच्छादने॥

प्रच्छदपटः। पुं निचोले। येनतूलशय्यादिप्रच्छाद्यते तस्मिन्वस्त्रे इति स्वामी॥ डोलिकाद्यावरणपट॰ इत्येके॥ स्त्रीपरिधानपट॰ बुरका॰ इतिख्याते इत्यपरे॥ आस्तरणपटे॥ पिच्छौडा॰ पिच्छौडी नाम वाससि॥ प्रच्छदति॰ प्रच्छाद्यते अनेनवा। चुरादिण्यन्तात् घः। छादेर्घेद्व्युपसर्गस्य इति ह्रस्वः। प्रच्छदश्चासौपटश्च॥

प्रच्छना। स्त्री॰ आमन्त्रणायाम्॥

प्रच्छन्नम्। न॰ अन्तर्द्वारे प्रकोष्ठी-यगृहान्तर्द्वारि॥ प्रकर्षेणच्छन्नम्। कुगती तत्समासः त्रि॰ गूढे॥ आच्छन्ने॥

प्रच्छन्नतस्करः। पुं॰ कितवकुशीलवादौ यथा॥ कितवान्कुशीलवान्क्रूरान्पाषण्डस्थांश्च मानवान्। विकर्मस्थान्शौण्डिकांश्च क्षिप्रं निर्वासयेत्पुरात्॥ एते राष्ट्रे वर्त्तमाना राज्ञः प्रच्छन्नतस्कराः। विकर्मक्रियया नित्यं बाधन्ते भद्रिकाः प्रजाः इति मानवे नवमोऽध्यायः॥

प्रच्छन्नहृदयः। त्रि॰ गूढाभिप्राये॥ प्रच्छन्नं हृदयं यस्य॥

प्रच्छर्द्दिका। स्त्री॰ वमिरोगे॥ प्रच्छर्द्दनम्। छर्द्दवमने। रोगाख्याते। ण्वुल्॥

प्रच्छादनम्। न॰ उत्तरीयवस्त्रे प्रावरणे॥

प्रच्छादितः। त्रि॰ आच्छादिते॥

प्रजनः। पुं॰ पशूनां गर्भग्रहणकाले॥ उपसरे। प्रथमगर्भग्रहे॥ स्त्रीगव्यादिषु पुंगवादीनां प्रथमगर्भाधानाय मैथुनाभियोगे॥ गर्भधारणप्रजननम्। जनी॰। घञ्। जनिबध्योरिति न वृद्धिः॥ यद्वा ण्यन्तादच्। प्रशब्दो धात्वर्थं विपरीतयति। प्रादुर्भावस्य वैपरीत्यञ्च गर्भग्रहणम्। तच्च प्रथमं द्वितीयादिकं वेत्यवचनाग्रह इत्येके। हरदत्तस्वरसोऽप्येवम्। वृत्तौ तु प्रथमगर्भग्रहणमिति व्याख्यातम्॥

प्रजननम् । न० योनौ ॥ जन्मनि ॥ प्रगते ॥ पुत्रोत्पत्तौ ॥ ॥

प्रजनिका । स्त्री० मातरि ॥

प्रजनिष्णुः । त्रि० प्रजनशीले ॥ प्रपूर्वाज्जनीप्रादुर्भावइत्यस्मादलङ्कृञनिराकृञित्यादिना० इष्णुच् ॥

प्रजल्पः । पुं० वाक्यवि० । य० । असूयेर्ष्यामदयुजायोऽवधीरणमुद्रया। प्रियस्यकौशलोद्गारः प्रजल्पः सतु कथ्यते । इत्युज्ज्वलनीलमणिः ॥

प्रजवः । पुं० प्रकृष्टवेगे ॥

प्रजवी । त्रि० वेगिनि । प्रकृष्टवेगयुक्ते ॥ प्रजवति । जुः सौत्रोवेगेगतौच । प्रजोरिनिः ॥

प्रजा । स्त्री० लोके । जने ॥ सन्ताने ॥ यथा । येप्रजामीशिरेधीरास्तेश्मशानानिभेजिरे । येप्रजांनेशिरेधीरास्तेऽमृतत्त्वंहिभेजिरे ॥ इति ॥ प्रकर्षेणबीजयोन्योः सङ्गाज्जायते । जनी० । उपसर्गेचसंज्ञायामिति डः ॥ यथाहुः । नशङ्खाङ्कंनचक्राङ्कंनपद्माङ्कमिदंजगत् । लिङ्गाङ्कञ्चभगाङ्कञ्चतस्मान्माहेश्वरीप्रजेति ॥

प्रजागरः । पुं० प्रकर्षेणजागरणे ॥ राजानंकामिनंचौरंप्रविशन्तिप्रजागराः ॥ प्रकर्षेणजागर्त्ति । जागृ० । पचाद्यच् ॥

प्रजाता । स्त्री० जातापत्यायाम् । प्रसूतायाम् । प्रजायतेस्म । अन्तर्भावितण्यर्थोचजनिः । गत्यर्थेतिक्तः ॥

प्रजातिः । स्त्री० प्रकृष्टेजन्मनि । उपनयने ॥

प्रजातीर्थम् । न० पुत्रोत्पत्तिपुण्यकाले ॥ पुत्रेजातेव्यतीपातेदत्तंभवतिचाक्षयम् ॥

प्रजात्यानन्दः । पुं० सन्तानार्थसम्भोगे ॥

प्रजादा । स्त्री० गर्भदात्रीक्षुपे ॥ त्रि० प्रजादातरि ॥

प्रजादानम् । न० रजते ॥

प्रजाध्यक्षः । पुं० दक्षादौ ॥ प्रजानामध्यक्षः ॥

प्रजानन्ती । स्त्री० पण्डितायाम् । प्राज्ञ्याम् ॥

प्रजापः । पुं० राजनि ॥ ॥

प्रजापतिः पुं० विधातरि । हिरण्यगर्भे । चतुरानने ॥ कश्यपे ॥ दिवाकरे ॥ वह्नौ ॥ त्वष्टरि ॥ जामातरि ॥ महीपाले । राज्ञि ॥ दक्षादौ ॥ दशप्रजापतयोयथा । मरीचिमत्र्यङ्गिरसौपुलस्त्यंपुलहंक्रतुम् । प्रचेतसंवशिष्ठञ्चभृगुंनारदमेवचेति ॥ एकविंशतिर्यथा । ब्रह्मास्थाणुर्मनुर्दक्षोभृगुर्धर्मस्तथायमः । मरीचिरङ्गिराअत्रिश्चपुलस्त्यः पुलहः क्रतुः ॥ वशिष्ठः परमेष्ठीचविवस्वान्सोमएवच । कर्दमश्चापियः प्रोक्तः क्रोधो

र्वाक्क्रौतएवच ॥ एकविंशतिरत्य न्नास्तेप्रजापतय : स्मृता: । इति महाभारतेमोक्षधर्म्म : ॥ प्रजानां पति : ॥ कौटवि० ॥

प्रजापतितीर्थम् । न० कनिष्टामूले ॥

प्रजापतिपति : । पुं० ब्रह्मणि । पितामहे ॥ प्रजापतीनांदक्षादीनांपति : ॥

प्रजापाल : । पुं० वायौ ॥ यथा । शीतांशु : क्लेदयत्युर्वीं विवस्वान् शोषयत्यपि । तावुभावपिसंश्रित्य वायु : पालयतिप्रजा : ॥ तत्रदक्षिणायनम् वर्षाशरद्धेमन्ता : । तेषु भगवानाप्यायतेसोमोऽम्ललवणमधुरास्त्ररसावलवन्तोभवन्ति । उत्तरोत्तरञ्चसर्वप्राणिनांवलमभिवर्द्धते । उत्तरायणञ्चशिशिरवसन्तग्रीष्मा : । तेषुभगवानाप्यायतेऽर्कस्तिक्तकषायकटुकाश्चरसावलवन्तोभवन्ति । उत्तरोत्तरञ्चसर्वप्राणिनांवलमपचीयते ॥

प्रजापालनम् ।न० लोकानांसंरक्षणात्मकेभूपतेर्धर्मे ॥ यथा । चाटचारणचौरेभ्योवधवन्धभयादिभि : । पीडामाना : प्रजारक्षेत्कायस्थेभ्यो विशेषत इतिवह्निपुराणम् ॥

प्रजावती । स्त्री० भ्रातृजायायाम् ॥ प्रजाऽस्त्यस्या: । तदस्यास्तीतिमतुप् ॥ सन्तानविशिष्टायाम् ॥

प्रजाहितम् । न० जले ॥ प्रजाभ्योहितम् ॥ त्रि० प्रजोपकारे ॥

प्रजिन : । पुं० वायौ ॥

प्रजुष्ट : । त्रि० प्रसक्ते ॥

प्रजेश्वर : । पुं० नृपे । राज्ञि ॥ प्रजानामीश्वर : ॥

प्रज्झटिका । स्त्री० मात्रावृत्तान्तरे ॥ य० । चत्वारिचतुष्कलकानिधेहि तत्रापिजगणमन्ते विधेहि । भणिता फणिनायकपिङ्गलेनप्रज्झटिकासा षोडशकलेन ॥ यथा ॥ रमतेनमन : परितापधारिनमनागपिविरमतिनयनवारि । यदवधिहरिणीदृक्पथमगामितदवधिवाधाशतमनुभवामि ॥

प्रज्ञ : । त्रि० पण्डिते ॥ प्रजानाति । ज्ञअवबोधने । आतश्चोपसर्गइति क : ॥ प्रज्ञप्रज्ञौविरलजानुके० इतिहेमचन्द्र : ॥

प्रज्ञप्ति : । स्त्री० प्रज्ञाने ॥ शब्दादिप्रतीतौ ॥ सङ्केते ॥

प्रज्ञप्ती । स्त्री० जिनविद्यादेवीविशेषे

प्रज्ञा । स्त्री० शेमुष्याम् । बुद्धौ ॥ यथा । प्रज्ञाहीनस्यपठनमन्धस्यदर्पणंयथा । देवीभक्तावत:शास्त्रं तत्त्वज्ञानस्यसाधनमिति ॥ अतीतानुस्मृतिर्मेधातत्कालग्राहिणीमति:॥ शुभाशुभविचारज्ञाधीरेरुदाहृता । इतिविशेष : ॥ प्रज्ञयाम् ॥ अप

रोत्तानुभवपर्य्यन्तविचारे ॥ चेतनायांजीवनधर्मे ॥ प्रज्ञानाति ' प्रज्ञायतेऽनयावा । ज्ञा० । आतश्चोपसर्ग इतिकः

प्रज्ञाकायः। पुं० मञ्जुघोषे ॥ प्रज्ञैवकायोऽस्य ॥

प्रज्ञाचक्षुः । त्रि अन्धे ॥ प्रज्ञाचक्षुर्यस्य ॥

प्रज्ञातः । त्रि० प्रत्यक्षे ॥ सकलप्रमाणश्रेष्ठतयाप्रत्यक्षगोचरः प्रज्ञातइत्युच्यते । प्रकर्षेणज्ञातः ॥

प्रज्ञानम् । न० बुद्धौ ॥ चिन्हे ॥ प्रज्ञायतेऽनेनवा । भावकर्मकरणादौल्युट् ॥ प्रज्ञायाम् ॥ ब्रह्मविज्ञाने ॥ ब्रह्मणि ॥ प्रकृष्टंजन्मादिविक्रियाविरहितंकूटस्थंज्ञानंज्ञप्तिरूपंवस्तु० प्रज्ञानंतच्चब्रह्मप्रज्ञानंश्रुतेःयेनेक्षते शृणोतीदंजिघ्रतिव्याकरोतिच। स्वाद्वस्वादूविजानाति तत्प्रज्ञानमुदीरितम् । चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु । चैतन्यमेकंब्रह्मातः प्रज्ञानंब्रह्ममय्यपीति विदुषामनुभवाच्च । त्रि० पण्डिते ॥

प्रज्ञानघनः। त्रि० प्रज्ञैकरसेप्राज्ञे॥ स्वप्नजाग्रन्मनः स्पन्दनानिघनीभूतानीव । यथारात्रौनैशेन तमसाऽविभज्यमानं सर्वंघनमिवतद्वत् ॥

प्रज्ञामात्रा । स्त्री० शब्दादिबुद्धिषु श्रव्यादिज्ञानकेन्द्रियेषु ॥

प्रज्ञावान् । पुं० धीरे । प्रज्ञिले ॥ प्रज्ञाअस्ति अस्य । मतुप् ॥

प्रज्ञावादः । पुं० प्राज्ञैर्वक्तुमनुचितेशब्दे ॥ प्रज्ञानामवादः ।' प्रज्ञावतांपण्डितानांवादे ॥

प्रज्ञिलः । त्रि० पण्डिते।। प्रज्ञास्त्यस्य पिच्छादित्वादिलच् ॥

प्रज्ञुः । त्रि० प्रगतजानौ ॥ प्रगतेविरलेजानुनीअस्य । प्रसंभ्यांजानुनोर्ज्ञुः ॥

प्रज्वरः । पुं० मारकेवैशाखज्वरे ॥

प्रज्वलः । त्रि० उज्ज्वले ॥ प्रज्वलति । ज्वलदीप्तौ । अच् ॥

प्रज्वलितः । त्रि० उज्ज्वलिते ।। दीप्ते । दह्यमाने ॥

प्रडीनम् । न० पक्षिणांगतिवि० । उड्डायकमवर्ष्णे ।। प्रथमंडयनम् । डीङ्विहायसागतौ। नपुंसकेभावेक्तः । श्वीदयओदितइतिओदित्वान्निष्ठानत्वम् ॥ पतनवेगवत्तायामितिकर्णपर्वे ।। अधः पतनेवेगवत्तायाम् ॥

प्रणः । त्रि० पूर्वे । पुरातने ॥ नश्चपुराणप्रादितिनप्रत्ययः ॥

प्रणतः । त्रि० प्रह्वीभूते ॥ नमस्कृते । प्रणमतिस्म । णमप्रह्वत्वे । क्तः । कर्मणिक्तोवा ॥ प्रकर्षेणनतोवा ॥

प्रणतिः । स्त्री० प्रणामे ॥ प्रणिपा

ते । अनुनये । नमस्कारे ॥ प्रकृष्टा नतिः ॥ ईश्वरोजीवकलयाप्रविष्टोभगवानिति । प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम् ॥

प्रणतोदरः । त्रि० प्रनतोदरे ॥

प्रणयः । त्रि० प्रसरे । प्रश्रये । प्रीत्या प्रार्थने ।। प्रेम्णि । स्नेहे ॥ याञ्चायाम् ॥ विश्रम्भे ॥ निर्वाणे । मोक्षे ।। सान्त्वनायाम् ॥ परिचये ॥ प्रणयनम् : णीञ्० एरच् ॥ त्रि० ॥

प्रणयनम् । न० प्रापणे ॥ प्रणीयते । णीञ्प्रापणे । ल्युट् ॥

प्रणयवान् । त्रि० प्रेमविशिष्टे ॥

प्रणयी । पुं० स्वामिनि ॥ त्रि०स्नेहवति ॥ प्रणयोस्यास्ति । इनिः ॥ अर्थिनि ॥

प्रणयिनी । स्त्री० भार्यायाम् ॥

प्रणवः । पुं० तारे । मन्त्रादौ । वेदादौ । ब्रह्मणि ॥ प्रणवाद्यास्तयावेदाः प्रणवेचप्रतिष्ठिताः । वाङ्मयं प्रणवः सर्वंतस्मात्प्रणवमभ्यसेत् ॥ प्रणमन्तिहयं वेदास्तस्मात् प्रणव उच्यतेइतिसनत्कुमारवचनम् ॥ प्रणम्यते इतिप्रणवः ॥ नमेः कर्मणिघञ् संज्ञापूर्वकत्वादवृद्ध्यभावः । पृषोदरादित्वाम्मस्यवः । प्रणूयतेस्तूयते । णुस्तुतौ । ऋदोरप ॥ यद्वा प्रणौतिप्रकर्षेणस्तौतिपरमेश्वरम् । णु० । पचाद्यच् । उपसर्गादितिणत्वम् ॥

प्रणष्टः । त्रि० प्रकर्षेणनाशयुक्ते ॥

प्रणादः । पुं० तारशब्दे ॥ श्रवणामये । कर्णनादे । यथा । कर्णस्रोतः स्थितेवातेशृणोतिविविधान्स्वरान् । भेरीमृदङ्गशङ्खानांकर्णनादः सउच्यते ॥ अनुरागजेशब्दे । प्रीतिजनितेमुखकण्ठादिशब्दे । प्रीतिविशेषकृतशीत्कृतशब्दे ॥ अनुरागकृतेशब्दे प्रणादःशीत्कृतंनृणामितिशब्दार्णवः । प्रणदनम् । णदअव्यक्तेशब्दे । घञ् । उपसर्गादसमासेपीतिणत्वं ॥

प्रणामः । पुं० प्रणतौ प्रणिपाते । भक्तिश्रद्धातिशययुक्तनमस्कारे । स्वापकर्षबोधकव्यापारविशेषे । अष्टाङ्गपञ्चाङ्गादिभेदभिन्ने ॥ यथा । दोर्भ्यांपद्भ्यांचजानुभ्या मुरसाशिरसादृशा । मनसावचसाचेति प्रणामोष्टाङ्गईरितः ॥ बाहुभ्याञ्चैवजानुभ्यां शिरसावचसादृशा । पञ्चाङ्गोयंप्रणामः स्यात्पूजासुप्रवराविमौ ॥ एकहस्तप्रणामश्चएकंवापिप्रदक्षिणम् । अकालेदर्शनं विष्णोर्हन्तिपुण्यं पुराकृतम् ॥ प्रणमनम् । णमप्रह्वत्वे । घञ् ॥ यः शूद्रेणार्चितंलिङ्गंविष्णुंवाप्रणमेद्द्विजः । निष्कृतिस्तस्यनास्त्येवप्रायश्चित्तायुतैरपि ॥

प्रणाय्यः । त्रि० अभिलाषविवर्जिते ॥ असम्मते ॥ प्रणीयते । णीञ० ।

प्रणाय्योसम्मताविति साधुः॥ प्रणाय्यः साध्वनिन्दितइतित्रिकाण्डशेषः॥

प्रणालः। पुं० कृत्रिमजलनिःसरणमार्गे। पयनाला० पनाला० इ० भा० ॥ नल्यते। णलबन्धने। कर्मणिघञ्। उपसर्गादितिणत्वम्॥

प्रणाली। स्त्री० आनुपूर्व्याम्॥ कृत्रिमाम्बुनिःसरणमार्गे। पयनाली-पनाली० इ० भा० ॥ गौ० ङीष्॥

प्रणिदानम्। न० विनिमये॥ अत्यर्पणे॥

प्रणिधानम्। न० प्रयत्ने॥ प्रवेशने। अभियोगे॥ समाधौ। मनसोविषयान्तरवारणे। चित्तैकाग्र्ये॥

प्रणिधिः। पुं० अनुचरे॥ गूढपुरुषे। चरे॥ प्रार्थने। याचने॥ अवधाने॥ प्रणिधानम्०प्रणिधीयतेवा। डुधाञ्०। उपसर्गेघोःकिः प्रकर्षेणनिधीयतेऽनेनयमत्रवा॥

प्रणिपातः। पुं० अनुनये। प्रणतौ। प्रकर्षेणभक्तिश्रद्धातिशयेननीचैःपतने। दीर्घनमस्कारे॥ दण्डवत्पतने॥ प्रकृष्टोनिपातः॥

प्रणिहितः। त्रि० निश्चले। समाहिते॥ सम्प्राप्ते॥ न्यस्ते। स्थापिते। निहिते॥ प्रणिधीयतेस्म। डुधाञ्०। क्तः। दधातेर्हिः। अत्यन्तासे॥ प्रणिधिकर्मणानियुक्ते॥

प्रणीतः। पुं० संस्कृताग्नौ॥ प्रकर्षेणनीतः॥ त्रि० क्षिप्ते॥ उपसम्पन्ने। पाकेनसंस्कृतेव्यञ्जनादौ॥ विहिते। कृते॥ प्रवेशिते॥ प्रणीयतेस्म। णीञ्०। कर्मणिक्तः॥ उत्पन्ने॥

प्रणीतमनाः। त्रि० हृष्टचित्ते॥

प्रणीता। स्त्री० यज्ञपात्रविशेषे। विष्णोरासनार्थं वारिपूरितेचमसे॥ टाप्॥

प्रणुतः। त्रि० स्तुते॥ प्रणूयतेस्म। णुस्तुतौ। क्तः॥

प्रणुन्नः। त्रि० कम्पिते॥ प्रकर्षेणनुन्नः॥

प्रणेता। त्रि० कर्त्तरि॥ यथा। सर्वासामपिविद्यानांप्रणेताभगवान्शिवइति॥

प्रणेयः। त्रि० वशीभूते। वश्ये॥ प्रकर्षेणनेतुंशक्यः। णीञ्०। अचोयत्॥

प्रणोद्यः। त्रि० प्रत्याख्येये॥

प्रततः। त्रि० अभिव्यक्ते॥ निरन्तरे॥

प्रततिः। स्त्री० विस्तृतौ॥ वल्ल्याम्॥ प्रतनोति। तनुविस्तारे। क्तिच्क्तौ चसंज्ञायाम्॥

प्रतती। स्त्री० लतायाम्॥ विस्तारे॥ कृतिकारादितिङीष्॥

प्रतनः। त्रि० पुरातने॥ नवपुराणेप्रादितिचशब्दात्तनप्प्रत्ययः॥

प्रतनुः। त्रि० उत्कृष्टे॥

प्रतमकः । पुं० तमकप्रभेदे ॥ पित्तानुबन्धज्वरादियोगेनतमकस्यैवप्रतमकसंज्ञा । यथा ॥ ज्वरमूर्च्छापरीतस्यविद्यात्प्रतमकन्तुतम् । उदावर्त्तराजोऽजीर्णक्लिन्नकायनिरोधतः ॥ तमसावर्द्धतेऽत्यर्थंशीतैश्चाशुप्रशाम्यति । मग्नतमसमीवास्यविद्यात्प्रतमकन्तुतदिति ॥

प्रतर्कणम् । न० वितर्के । ऊहे ॥

प्रतर्द्दनः । पुं० भगवति ॥ प्रलयेभूतानिप्रकर्षेणतर्द्दतिहिनस्ति । तर्द्दहिंसायाम् । नन्द्यादित्वाल्ल्युः ॥ ऋषिविशेषे । दिवोदासात्मजेकाशिराजे ॥ प्रकर्षेणतर्द्दयत्यभिभवतिस्वशत्रून्० इति ॥

प्रतलः । पुं० चपटे । तताङ्गुलिकरे । घाप० इ० भा० ॥ न० पातालवि० ॥ प्रतलति । तलप्रतिष्ठायाम् । अच् ॥ सप्ततले ॥ प्रततप्रश्लिष्टं तलेश्च ॥

प्रतान् । अ० विस्तारे ॥ प्रताम्यति । तमुकाङ्क्षायाम् । क्विप् । अनुनासिकस्ये तिदीर्घः । मोनोधातोः ॥

प्रतानः । पुं० तन्तुसंयुक्तेषुचपुशाल्लावृप्रभृतिषु ॥ शाखापत्रप्रचये ॥ विस्तारे ॥ प्रतननम्० प्रतन्यतेवा । तनु० । घञ् ॥ कुटिलतन्त्रौ ॥ अपतानकाख्येवायुरोगविशेषे ॥

प्रतानिनी । स्त्री० प्रतानवत्याम् ॥ शाखापत्रप्रचयः प्रतानः कुटिलतन्तुर्वा ॥ सोऽस्त्यस्याः । इन्नन्तान्ङीप् ॥ प्रसारण्याम् ॥

प्रतापः । पुं० तापे ॥ तेजसि । कोषदण्डजेतेजसि ॥ कोषोधनम्० दण्डोदमः तद्धेतुत्वात्सैन्यमपिदण्डः । ताभ्यांयत्तेजो जायतेतस्मिन्निति यावत् ॥ प्रतापयति० अनेन । तप० । ण्यन्त । पुंसीतिघः प्रतपनंवा । भावेघञ् ॥ अर्कवृक्षे ॥ प्रतापौपौरुषालपावितियादवः ॥

प्रतापकः । पुं० रवेः पार्श्वगान्तरे ॥

प्रतापनः । पुं० नरकविशेषे । कुंभीपाके ॥ न० पीडने ॥ प्रतापयति । तपदाहे । ल्युः ॥

प्रतापवान् । त्रि० अवःतार्थेशत्रुविदारकत्वे नप्रशस्तपौरुषे ॥

प्रतापसः । पुं० अलर्के । शुक्लार्कवृक्षे ॥ प्रतापंचतुर्स्तेजः स्यति । षो० । कः ॥ प्रकृतास्तापसायेनवा ॥

प्रतापान्वितः । त्रि० शौर्ययुक्ते ॥

प्रतापी । त्रि० शत्रुतापके ॥ प्रतापयितुंशीलमस्य । ताच्छील्येणिनिः ॥ तेजस्विनो ॥ अतइनिठनावितीनिः ॥

प्रताम् । अ० ग्लानौ ॥

प्रतारकः । त्रि० वञ्चके ॥ प्रतारयति । तॄ० । ण्वुल् ॥

प्रतारणम् । न० वञ्चने ॥

प्रतारणा । स्त्री० वञ्चनायाम् ॥ यदो च्छसितशोकार्त्तं जगदेनकर्णा । उपास्यतांकलौकल्पलतादेवीप्रतारणेति० धूर्त्तजल्पितम् ॥

प्रतारणीय : । त्रि० वञ्चनीये ॥

प्रतारित : । त्रि० व्यंसित । वञ्चिते कृतप्रतारणे ॥

प्रति । अ० प्रतिनिधौ ॥ इत्थम्भूताख्याने ॥ आभिमुख्ये ॥ मात्रार्थे । स्तोके ॥ भागे ॥ वीप्सायाम् ॥ लक्षणे ॥ प्रतिदाने ॥ व्याप्ते ॥ निश्चये ॥ प्राति० प्रथतेवा । बाहुलकाड्डति : ॥ व्यावृत्तौ ॥ प्रशान्तौ ॥ विरोधे ॥ समाधौ स्वभावे ॥

प्रतिक : । त्रि० कार्षापणिके ॥ कार्षापणं नक्रीत: । कार्षापणाट्टिठन् वक्तव्य : ० प्रतिरादेशश्चवा ॥ऽऽ प्रतिकी ॥ स्त्री ॥

प्रतिकर्म । न० प्रसाधने । वेशे । कृतशोभायाम् ॥ प्रत्यङ्गंप्रतिस्थातं वाकर्म । शाकपार्थिवादि ॥ वमनादिपञ्चकर्मखितिभिषज : ॥

प्रतिकार : । पुं० प्रतीकारे ॥ रुमि० । भटि० । प्रतिकरणम् ॥ कृञोघञ् ॥

प्रतिकूप : । पुं० परिखायाम् ॥

प्रतिकूल : । त्रि० अननुकूले । प्रसव्ये । अपसव्ये । प्रतीपे । विरुद्धार्थे ॥ प्रतीपंकूलात् । प्रतिकूलशब्दोहिलक्षणयाविरुद्धे वर्त्तते० प्रतिलोमवत् ॥ आत्मन : प्रतिकूलानिपरेषांनसमाचरेत् ॥

प्रतिकृति : । स्त्री० अर्चायाम् ॥ प्रतिनिधौ । तृणचर्म्मकाष्ठादिनिर्मितेप्रतिमापर्यायेवस्तुनि ॥ प्रतीकारे ॥ प्रकृष्टाकृति : । प्रतिनिधि : कृतिर्वा ॥

प्रतिकृष्ट : । त्रि० गुह्ये ॥ द्विराकृष्याकर्षिते ॥ प्रतिकृष्यतेस्म ॥ कृष० । क्त : ॥

प्रतिक्रिया । स्त्री० प्रतीकारे ॥ प्रतिकरणम् । कृञ् : शच ॥

प्रतिक्षणम् । अ० पौन : पुन्ये ॥

प्रतिचय : । पुं० रचने ॥

प्रतिक्षिप्त : । त्रि० वारिते । प्रतिहते ॥ प्रेषिते ॥ आह्वयप्रेषितोयस्तुप्रतिक्षिप्त : सउच्यते ॥ भेषजे ॥ कृताधिक्षेपे ॥ अधिक्षिप्ते ॥ अधिक्षिप्यतेस्म । क्षिप प्रेरणे । क्त : ॥

प्रतिक्षेप : । पुं० प्रत्याख्याने ॥

प्रतिगतम् । न० प्रतिलोमि ॥ पक्षिगतिविशेषे ॥ त्रि० प्रतियाते ॥

प्रतिगमनम् । न० प्रतिप्रयाणे ॥

प्रतिग्रह : । पुं० स्वीकरणे । स्वीकृतौ ॥ सैन्यपृष्ठे । सैन्यस्यपश्चा

छिन्नसङ्घातेऽमीके ॥ प्रतिगृह्य तेऽनेन । ग्रहहद्रित्यप् ॥ पतद्ग्रहे ॥ द्विजेभ्योविधिवद्देये ॥ दान द्रव्यग्रहे ॥ ग्रहविशेषे ॥ क्रिया कारे ॥ प्रतिगृह्णाति । ग्रहउपादाने । विभाषाग्रह इतिपक्षेऽच् ब्राह्मणस्यार्थः प्रतिग्रहार्जितः । यथा । प्रतिग्रहार्जिताविप्रे क्षत्रियेशस्त्रनिर्जिताः । वैश्ये न्यायार्जितास्चार्थाः शूद्रे शुश्रूषयार्जिताः ॥ अयाचितप्रतिग्रहेदोषाभावोयथा । अयाचितोपपन्नेतुनास्ति दोषः प्रतिग्रहे । अमृतंतंविदुर्देवास्तस्मात्तन्नैवनिर्णुदेत् ॥

प्रतिग्राह: । पुं० पतद्ग्रहे । आचमनके । पीकदे ॥ प्रतिगृह्णाति । ग्रह । विभाषाग्रहइतिपक्षेणः ॥ प्रतिग्रहणे ॥

प्रतिग्राहित: । त्रि० स्वीकारिते ॥

प्रतिघ: । पुं० प्रतिघाते ॥ क्रोधे ॥

प्रतिहननम् । हन० । अन्यत्रापिदृश्यतइतिडन्यङ्क्वादित्वात् कुत्वम् ॥ मूर्च्छायाम् ॥

प्रतिघात: । पुं० प्रतिबन्धे ॥ प्रतिहननम् । हन० । घञ्० । हनस्तोऽचिण्णलो: । होहन्तेरितिकुत्वम् ॥

प्रतिघातनम् । न० मारणे ॥ हन्तेः स्वार्थण्यन्ताल्ल्युट् ॥

प्रतिघ्नम् । न० अङ्गे ॥

प्रतिच्छन्द: । न० प्रतिरूपे ॥

प्रतिच्छाया । स्त्री० प्रतिबिम्बे ॥ प्रकृष्टाच्छाया ॥

प्रतिजङ्घा । स्त्री० अग्रजङ्घायाम् ॥

प्रतिजल्प: । पुं० वाक्यविशेषे ॥

प्रतिजागर: । पुं० अवेक्षायाम् । प्रत्यवेक्षणे ॥

गृहमवेक्षस्वेत्यादिनियोगे ॥ प्रतिजागरणम् । जागृ० । घञ् । जागोऽवीतिगुणः ॥

प्रतिजिह्वा । स्त्री० उपजिह्वायाम् । रसनकाङ्गे । आलजिव० इ० गी०

प्रतिजिह्विका । स्त्री० तालुमूलस्थक्षुद्रजिह्वायाम् । प्रतिजिह्वायाम् ॥ घण्टिकायाम् ॥

प्रतिज्ञा । स्त्री० अङ्गीकृतौ । अङ्गीकारे । साध्याभिधायिकायांवाचि ॥ नृपाणांप्रतिज्ञापरिपालनंस्वर्गसाधनमितिवृद्धाः ॥ कर्तव्यत्वप्रकारकज्ञानानुकूलव्यापारे । इत्यनुमितौ गदाधरौ ॥ साध्यनिर्देशः प्रतिज्ञा ॥ इ० गौतमसूत्रम् ॥ ३३ ॥ साधनीयस्यार्थस्य योनिर्देशः सप्रतिज्ञा ॥ साधनीयश्चवह्निमत्त्वादिनापर्वतादिः । —— (+*+) —— तथाचपक्षतावच्छेदकविशिष्टपक्षसाध्यतावच्छेदक विशिष्टवैशिष्ट्यबोधकशब्दत्वमर्थः । निगमनवारणायच साध्यांशे० साध्यतावच्छेदकातिरि

ज्ञाप्रकारकत्वं वाच्यम्। तदर्थश्च साध्यतावच्छेदकप्रकारक विलक्षणप्रकारताशून्यत्वम्। तेन प्रमेयवतः साध्यत्वेनासिद्धिः उदासीनवाक्यवारणाय च न्यायान्तर्गतत्वे सति प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यविषयता विलक्षणविषयताकप्रबोधाजनकत्वे सति प्रकृतपक्षप्रकृतसाध्यबोधजनकत्वं तत् प्रतिज्ञात्वावयवत्वादिकं परिभाषाविशेषविषयत्वरूपम् तत्तद्व्यक्तित्वरूपञ्चेत्यपि वदन्ति॥ प्रतिज्ञायते० इति॥ प्रतिपूर्व्वाज्ज्ञानातेरातश्चोपसर्ग इत्यङ्। टाप्॥

प्रतिज्ञातः। त्रि० अङ्गीकृते॥ प्रतिज्ञायते स्म। क्तः॥ प्रतिज्ञातश्चरामेण तदा वालिवधं प्रतीति रामायणम्॥

प्रतिज्ञानम्। न० अङ्गीकारे। प्रतिज्ञायाम्॥ प्रतिपूर्वकज्ञानातेः ल्युट्॥

प्रतिज्ञान्तरम्। न० निग्रहस्थानवि० प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरम्॥ ४६॥ प्रतिज्ञातस्यार्थस्य प्रतिषेधे कृते तद्दूषणोद्दिधीर्षया धर्मस्य धर्मान्तरस्य विशिष्टः कल्पो विकल्पस्तस्मात् विशेषणान्तरविशिष्टतया प्रतिज्ञातार्थस्य कथनमिति फलितार्थः। प्रतिषेध इत्यनेन न स्फटिति संवरणे विलम्बे नापि स्वयं दूषणाविभाव्य विशेषणेन दोष इत्युक्तम्। प्रतिज्ञातार्थस्येत्युपलक्षणम्॥ हेत्वतिरिक्तार्थस्येति तत्त्वम्। तेन उदाहरणान्तरमुपनयान्तरञ्च प्रतिज्ञान्तरत्वेन सङ्गृहीतं भवति। इदञ्च पक्षसाध्यविशेषणभेदात् प्रत्येकं द्विविधम्। यथा शब्दोऽनित्य इत्युक्ते ध्वनौ बाधेन परेण प्रत्युक्ते वर्णात्मकः शब्दः पक्ष इति प्रतिज्ञान्तरम्। न चेदमर्थान्तरम्० प्रकृतोपयोगात्। न चेयं प्रतिज्ञाहानिः पूर्वोक्तस्यापरित्यागात्। एवं पर्वतो वह्निमान् सुरभिमलिनधूमवत्त्वादित्युक्ते० कृष्णागुरुप्रभववह्निमानित्यत्र० एवं तादृशवह्नौ साध्ये यः सुरभिमलिनधूमवान् सवह्निमानित्युदाहरणे न्यूनत्वेन प्रत्युक्ते० सतादृशवह्निमानित्यत्र० एवमन्यदप्यूह्यम्॥

प्रतिज्ञाविरोधः। पुं० निग्रहस्थानविशेष। प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः॥ ४७॥ अत्र च प्रतिज्ञाहेतुपदे कथाकालीनवाक्यपरे। तथा च कथायां स्ववचनार्थविरोधः। यद्यपि काञ्चनमयः पर्वतो वह्निमान् ह्रदो वह्निमान् ह्रदत्वात् पर्वतो व

ह्निमान् काञ्चनमयधूमादित्यादौ हेत्वाभासान्तरसाङ्कर्य्यम्। तथापि उपधेयसङ्करेऽप्युपाधेरसाङ्कर्य्यान्न दोषः। न चासङ्कीर्णस्थलाभावः॥ पर्व्वतो वह्निमान् धूमात् यो यो धूमवान् स निरग्निरित्युदाहरणे निरग्निश्चायमित्युपनये च तत्सत्वात्॥ एवं निगमनेऽपि बोध्यम्॥ ४७॥

प्रतिज्ञासन्न्यासः। पुं० निग्रहस्थानविशेषे। पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः॥ ४८॥ पक्षस्य स्वाभिहितस्य परेण प्रतिषेधे कृते सति तत्परोजिहीर्षया प्रतिज्ञातार्थस्य अपनयनं सपलापः इत्यर्थः॥ यथा। शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते सामान्ये व्यभिचारेण परेण प्रत्युक्ते क एवमाह शब्दो नित्य इति॥ ४८॥

प्रतिज्ञाहानिः। स्त्री० निग्रहस्थानविशेषे॥ प्रतिदृष्टान्तधर्म्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः॥ ४५॥ प्रतिकूलो दृष्टान्तो यस्य स प्रतिदृष्टान्तः परपक्षः स्वः स्वीयः दृष्टान्तो यस्य स स्वदृष्टान्तः स्वपक्षः। तथा च स्वपक्षे परपक्षधर्म्माभ्यनुज्ञा प्रतिज्ञाहानिः स्वयं विशिष्याभिहितपरित्याग इति फलितार्थः। सिद्धान्तस्तु स्वयं विशिष्य नाभिधीयते इति नापसिद्धान्तसाङ्कर्य्यम्। स्वयं पक्षहेतुदृष्टान्त साध्यत इत्यन्यहानिभेदात् पञ्चधा भवति। यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते प्रत्यभिज्ञया बाधितविषयोऽयमित्युत्तरिते अस्तु तर्हि घट एव पक्ष इति। एवं तत्रैव ऐन्द्रियकत्वादिति हेतोरनैकान्तिकत्वमिति प्रत्युक्ते अस्तु कृतकत्वादिति हेतुरिति। एवं पर्व्वतो वह्निमान् धूमात् अयोगोलकवदित्युक्ते दृष्टान्तः साधनविकल इति प्रत्युक्ते अस्तु तर्हि महानसवदिति। एवमत्रैव सिद्धसाधने च प्रत्युक्ते अस्तु तर्हि इन्धनवानिति। अन्या हानिस्तु विशेषणहान्यादिः। यथा तत्रैव नीलधूमादित्युक्ते असमर्थविशेषणत्वेन प्रत्युक्ते अस्तु तर्हि धूमादिति हेतुरित्यादि॥ ४५॥

प्रतिज्ञेयः। त्रि० प्रतिज्ञातुं योग्ये॥ पुं० स्तुतिपाठके॥

प्रतितन्त्रसिद्धान्तः। पुं० सिद्धान्तविशेषे॥ समानतन्त्रासिद्धः॥ २९॥ समाशब्द एकार्थः तेन एकतन्त्रसिद्ध इत्यर्थः। स्वतन्त्रसिद्ध इति पर्य्यवसितोऽर्थः। तथा वादिप्रतिवादिनोः कतरमात्राभ्युपगतस्तदेकतरस्य प्रतितन्त्रसिद्धान्तः इति फलितार्थः। यथा मीमांसकानां शब्दनित्यत्वम्॥ २९॥

प्रतितालः। पुं० तालविशेषे॥ यथा। कान्तारः समरोत्सवश्च वैकुण्ठो वाञ्छितस्तथा। कथिताः शङ्करेणैव चत्वा

र : प्रतितालका : ॥

प्रतिताली । स्त्री० तालकोद्घाटनंय-न्त्रे । तालौ० इ० भा० ॥

प्रतिदानम् । न० विनिमये । नैमेये ॥ स्वामिनेन्यस्तस्यार्पणे । दत्तस्यप्रति निर्यातने ॥ प्रतिकृत्यदानम् । प्रती पंवादानम् ॥

प्रतिदारणम् । न० आजौ । युद्धे ॥

प्रतिदिनम् । न० प्रत्यहम् ॥

प्रतिदिवा । पुं० सूर्ये ॥ प्रतिदीव्यति । दिव० । कनिन्युवृषितक्षिराजि धन्विद्युप्रतिदिवइतिकनिन् ॥ दिवसे ॥ प्रतिदीव्यन्त्यस्मिन्निल्यधि-करणेकनिन् ॥

प्रतिदृष्टान्त : । पुं० परपक्षे । प्रतिकू लदृष्टान्ते ॥

प्रतिदेयम् । त्रि० क्रीतद्रव्यस्यदुष्क्रीत बुध्यापरावृत्त्यदाने ॥ यथा । क्रीत्वा मूलेनय:पण्यंदुष्क्रीतंमन्यतेक्रयी । विक्रेतुंप्रतिदेयं तत्तस्मिन्नेवाह्ना विक्षतम् ॥ इतिमिताक्षरा ॥

प्रतिद्वन्द्वी । त्रि० प्रतिस्पर्द्धिनि ॥ विरोधिनि ॥ तत्तेद्वन्द्वं स्वतान्यत्वेत्व न्नाइन्ते परस्परम् । प्रतिद्वन्द्वितया लोकेप्रसिद्धेनात्रसंशय : ॥

प्रतिध्वनि : । पुं० प्रतिरवे । प्रतिश-ब्दे ॥

प्रतिध्वान : । पुं० प्रतिश्रुति । प्रतिश ब्दे ॥

प्रतिनन्दनम् । न० वन्दने ॥ आशीर्वा दादिभि : सम्भावने ॥

प्रतिनप्ता । पुं० प्रपौत्रे । पुत्रस्यपौत्रे ॥

प्रतिनव : । त्रि० नूतने ॥ प्रतिनूयते नु० । स्वदेरप् ॥

प्रतिनिधि : । पुं० मुख्यसदृशे ॥ ॥ मुख्यस्याभावेतत्सदृशोयउपादी यतेसप्रतिनिधिरुच्यते ॥ यथा व्रता दावत्यन्तासामर्थ्ये सति० पुत्रंवावि नयोपेतंभगिनींभ्रातरं तथा । एषा मभावएवान्यंब्राह्मणंविनियोजयेदि ति गरुड़पुराणम् ॥ काम्ये प्रतिनि-धिर्नास्तिनित्य नैमित्तिकेहिस : । काम्य पूपक्रमादूर्ध्वमन्येप्रतिनि-धिंविदुरिति ॥ कालमाधवीयवच नान्नित्यनैमित्तिकेकर्मण्येवप्रतिनि धि: कार्य: ॥ विश्वैश्चदेवै : साध्यै श्चब्राह्मणैश्चमहर्षिभि: । आपत्सुम रणाद्भीतैर्विधि:प्रतिनिधि: कृतइति मनु: । मुख्यस्यविधे सोमादेर्नेश्वान यादि : प्रतिनिधिर्विश्वप्रतिपदेवा दिभिरनुष्ठितोऽतोसौमुख्यासम्भवे-कार्योनतुमुख्यसम्भवेकार्यइत्यर्थ: ॥ प्रतिमायाम् ॥ प्रतिनिधीयते० सदृ शीक्रियते । डु- धाञ्० । उपसर्गे घो : कि: ॥

प्रतिनिनद : । पुं० प्रतिध्वाने ॥

प्रतिनियम : । पुं० व्यवस्थायाम ॥

प्रतिनिर्द्देश : । पुं० प्रतिपाद्यतयाविधे॥

यतयावाकीर्तने ॥
प्रतिपच्च : । पुं० अरौ । शत्रौ ॥ विपरीतसाधकत्वे नाभिमते ॥ अन्तराये ॥ सादृश्ये ॥
प्रतिपत्तव्य : । त्रि० अवगन्तव्ये ॥
प्रतिपत्ति : । स्त्री० प्रवृत्तौ ॥ प्रागल्भ्ये ॥ गौरवे ॥ सम्प्राप्तौ ॥ प्रबोधे सम्यग्ज्ञाने । पदप्राप्तौ ॥ सत्यवचने ॥ साध्यस्यसत्यवचनंप्रतिपत्तिरुदाहृता ॥ प्रतिपदनमनयावा । पद० । क्तिन् ॥ मीमांसकमतेफलशून्यकर्माङ्गे ॥ कर्तव्यज्ञाने ॥
प्रतिपत्तिपटह : । पुं० लम्पापटहे । नगारा० इ० भा० ॥ प्रतिपत्तेः पटहः ॥
प्रतिपत्तूर्यम् । न० ढगडवाद्ये ॥
प्रतिपत्त्यभिसन्धि: । पुं० प्राप्तिसङ्कल्पे ॥ प्रतिपत्तेः अभिसन्धिः ॥
प्रतिपत्त्रफला । स्त्री० चुद्रकारवेल्याम् ।
प्रतिपत्त्रसिरा । स्त्री० हरीतक्याम् ॥
प्रतिपथिक : । त्रि० प्रतिपथप्राप्ते प्रातिपथिके ॥ प्रतिपथमेति । ठन् ॥
प्रतिपत्० द् । स्त्री० तिथिवि० । पत्तौ ॥ साचन्द्रस्यप्रथमकलाक्रियारूपा । वृद्धिरूपाचेच्छुक्ला । ह्रासरूपाचेत्कृष्णा ॥ तत्रजातस्यफलम् । मणिकनकविभूषा संयुतश्चारुकान्तिर्निजकुलकमलोद्घाटमार्तण्डबिम्ब: । प्रतिपदिशशिपूर्णेलब्धजन्मा प्रतापीभवतिविमलवेशश्चारुकेशःप्रजेशः ॥ मतौ । संविदि । चेतनायाम् ॥ ढगडवाद्ये ॥ उप प्रतिपद्यतेक्रम्यतेऽनया । पदगतौ । सम्पदादित्वात्क्विप् ॥ प्रतिपदनम् । करणेवाक्विप् ॥ तिथीनांप्रवरायस्मात् ब्रह्मणासमुदीरिता । प्रतिपाद्यापदेपूर्वेप्रतिपत्तेनसोच्यते ॥ अत्रचन्द्रदर्शनकारणंयथा । अमावास्याघटीशोध्याषष्ठ्याद्दर्शानसंयुता । सूर्यराहुघटीभ्यश्चेदधिकादृश्यतेशशीति ज्योतिषम् ॥
प्रतिपद्यमान : । पुं० भजमाने ॥
प्रतिपन्न : । त्रि० अवगते । विदिते ॥ अङ्गीकृते ॥ विक्रान्ते ॥ प्राप्ते ॥ प्रतिपद्यतेस्म । पद० । क्त : ॥
प्रतिपर्णशिफा । स्त्री० द्रवन्त्याम् ॥
प्रतिपादक : । त्रि० प्रतिपत्तिजनके । बोधके । ज्ञापके । प्रमाणे ॥
प्रतिपादनम् । न० दाने ॥ प्रतिपत्तौ ॥ बोधके ॥ पद० । ण्यन्त : । भावे ल्युट् ॥
प्रतिपादयिता । त्रि० समर्थयितरि ॥
प्रतिपादित : । त्रि० बोधिते ॥
प्रतिपादुक : । त्रि० प्रतिपद्यमाने ॥ लषपतपदेत्यादिना० उकञ् ॥
प्रतिपाद्य : । त्रि० बोद्धव्ये ॥ वक्तव्ये ॥
प्रतिपालक : । त्रि० पालनकर्त्तरि ॥ प्रतिपालयति । पारत्तणे । ण्वुल् ॥

प्रतिपालनम् । न० पोषणे ॥ रक्षणे ॥
प्रतिपालित : । त्रि० रक्षिते ॥
प्रतिपाल्य : । त्रि० प्रतिपालनीये ॥
प्रतिपिपादयिषा । स्त्री० प्रतिपादयितुमिच्छायाम् ॥
प्रतिप्रयाणम् । न० प्रतिगमने ॥ यथा प्रतिप्रयाणेप्यमृतायमानामिति ॥
प्रतिप्रयात : । त्रि० प्रतिनिवृत्यगते । मिलकीलोटे० इ० भा० ॥
प्रतिप्रसव: । पुं० निषिद्धस्यपुनर्विधाने ॥
प्रतिप्रसूत : । त्रि० प्रतिप्रसवविशिष्टे ॥ सामान्यशास्त्रविहितं क्वचिच्छास्त्रेणप्रतिषिद्धंपुनर्विधीयमानंहिप्रतिप्रसूतमुच्यते ॥ पुन:सम्भाविते ॥
प्रतिप्रस्तोता । पुं० ऋत्विग्विशेषे ॥
प्रतिप्रियम् । न० प्रत्युपकारे ॥
प्रतिफलनम् । न० प्रतिबिम्बे ॥ त्रि० तुल्यफले ॥
प्रतिफलम् । न० प्रतिबिम्बे ॥
प्रतिफुल्ल : । } पुं० प्रफुल्ले ॥
प्रतिफुल्लक : । }
प्रतिबद्ध : । त्रि० गृहीते ॥ मनोहरे ॥ प्रतिबध्यतेस्म । बन्धबन्धने । क्त : ॥ प्रतिबन्धविशिष्टे ॥
प्रतिबध्य : । त्रि० प्रतियन्धनीये । प्रतिबंधार्हे ॥
प्रतिबन्ध : । पुं० प्रतिष्टम्भे । कार्यप्रतिघाते । प्रतिबन्धनम् । बन्ध० । घञ् ॥

प्रतिबन्धक : । त्रि० प्रतिरोधके । बाधके ॥
प्रतिबन्धि : । पुं० अनिष्टान्तरप्रसञ्जकेवाक्यविशेषे । प्रतिबन्धे ॥ प्रतिबन्धेरनुत्तरत्वम् ॥
प्रतिबल : । त्रि० समानबले ॥ शक्ते । समर्थे ॥
प्रतिबोध : । पुं० स्फुटने ॥ निद्रापगमे ॥ गुरूपदेशे ॥
प्रतिबोधम् । अ० बोधंबोधंप्रतीत्यर्थे ॥ अव्ययंविभक्तीत्यादिनायथार्थेऽव्ययीभाव : ॥ बोधाभिमुखे ॥
प्रतिभयम् । न० भये ॥ त्रि० घोरे । भयङ्करे ॥ प्रतिगतंभयंयेन । प्रादिसमास : प्रतिगतंभयमस्मिन् । प्रादिभ्योधातुजस्येतिवा ॥
प्रतिभयाकार : । त्रि० भयङ्कररूपे ॥ प्रतिभयमाकारोयस्य ॥
प्रतिभा । स्त्री० उपस्थितायांबुद्धौ ॥ ज्ञानबीजभूतेसंस्कारविशेषे ॥ नवनवोन्मेषशालिन्यांबुद्धौ ॥ प्रज्ञानवनवोन्मेषशालिनोप्रतिभामता ॥ पञ्चमगृहे ॥ प्रतिभानम् । भा० । आतश्चेत्यङ् ॥
प्रतिभाग: । पुं० राज्ञाप्रतिदिनग्राह्ये फलकुसुमशाकतृणाद्युपायने ॥
प्रतिभानम् । न० प्रतिभायाम् ॥ जन्मान्तरागतसंस्कारविशेष : कवित्वबीजंप्रतिभानमिति वामन

सूत्रम् ॥

प्रतिभानवान् । त्रि० प्रतिभाविशिष्टे ॥ प्रतिभैवप्रतिभानम् । प्रतिभानमस्त्यस्य । मतुप् ॥ तात्कालिकबुद्धिमति ॥

प्रतिभान्वित: । त्रि० प्रगल्भ ॥ प्रतिभयाअन्वित : ॥

प्रतिभामुख : । त्रि० प्रगल्भे ॥

प्रतिभार्गव: । पुं० प्रतिशुक्रे ॥ यद्दिग्गत : समुदयेद्विचरेद्यत्रगोलके । यद्द्वारभेषुविचरेत्त्रिविध : प्रतिभार्गव : ॥ एकग्रामेचतु : शालेदुर्भिक्षे राष्ट्रविप्लवे । पतिनानीयमानाया : पुर : शुक्रोनदुष्यतीति नवबध्वागमनेदीपिका ॥

प्रतिभास : । पुं० प्रतीतौ ॥

प्रतिभाहानि : । स्त्री० बुद्धिनाशे ॥

प्रतिभू : । पुं० लग्नके । धनिकाधमर्णयोर्मध्यस्थे । जामनइ० पारसीयभाषा ॥ सत्रिविध : एकोदर्शनप्रतिभू : । द्वितीयोदानप्रतिभू : । अपर : प्रत्ययप्रति भूरिति ॥ प्रति० प्रतिनिधिर्भवति । भू० । भुव : संज्ञान्तरयोरितिक्विप् ॥ निर्णेतरि ॥

प्रतिम : । त्रि० उत्तरपदस्थोयंस्तसदृशे ॥ प्रतिमीयते । माङ् । आत इत्यङ् ॥

प्रतिमा । स्त्री० गजदन्तस्यवर्म्मे ॥ अनुकृतौ । मूर्त्तिसदृशमृच्छिलादिनिर्मितप्रतिरूपके । प्रतिमाने । प्रतिबिम्बे ॥ प्रतिमीयतेऽनया । माङ्माने । आतश्चोपसर्ग इत्यङ् ॥ उपमायाम् ॥

प्रतिमानम् । न० प्रतिच्छायायाम् । प्रतिबिम्बे ॥ प्रतिकृत्यामीयतेऽनेन । माङ्माने । ल्युट् ॥ गजकुम्भान्तराले ॥ गजदन्तद्वयान्तरे ॥ दन्तयोरुभयोर्मध्यं प्रतिमानमिति स्मृतम् । वाहित्थाधोभागे ॥ प्रतिमीयतेऽनेन । मीञ्हिंसायाम् । करणेल्युट् । मीनातिमीनोतीत्यात्त्वम् ॥

प्रतिमार्गक : । पुं० पुरविशेषे ॥ उद्रङ्के ॥

प्रतिमुक्त: । त्रि० आमुक्ते । परिहितकञ्चुकादौ भटे ॥ प्रतिमुच्यतेस्म । मुच्लृ० । क्त : ॥

प्रतिमुख : । पुं० नाटकसन्ध्यन्तरे ॥ अभिमुखे ॥ विमुखे ॥

प्रतियत्न : । पुं० गुणाधाने । संस्कारे ॥ लिप्सायाम् ॥ उपग्रहणे ॥ त्रि० यत्नवति ॥ प्रतियत्नम्० प्रतियत्यतेवा । यतीप्रयत्ने० निकारोवा । यजयाचेतिनङ् ॥

प्रतियातना । स्त्री० प्रतिकृतौ । प्रतिबिम्बे । प्रतिमायाम् ॥ प्रतियात्यतेऽनया । यतनिकारोपस्कारयो:

। च० । ण्यासश्रन्थोयुच् ॥ तुल्यया तनायाम् ॥

प्रतियोग : । पुं० विरोधे ॥ प्रतियुज्यते । घञ् ॥ सम्बन्धे ॥

प्रतियोगी । त्रि० विरोधिनि ॥ यथा रागप्रतियोगीविराग : ॥ सत्प्रतिपक्षे ॥ यथा ॥ प्रतियोगिनं दृष्ट्वाप्रतियोगीनिवर्त्तते ॥ तुल्यशक्तिमति ॥ निरूपिते ॥ यथा । सम्भावप्रतियोगिकम् । विद्यमानवस्तुमात्रनिरूपित मित्यर्थ : ॥

प्रतिरथ : । त्रि० प्रतिपक्षे ॥

प्रतिरव : । पुं० प्रतिलक्षे ॥

प्रतिरुद्ध : । त्रि प्रत्याहृते ॥

प्रतिरूप : । त्रि० सदृशे ॥ न० । प्रतिमायाम् ॥ प्रतिमदृशंरूपं यस्य ॥

प्रतिरूपकम् । न० प्रतिरूपे ॥ स्वा० क : ॥

प्रतिरोद्धा । त्रि० प्रतिकूलाचरणशीले ॥

प्रतिरोध : । पुं० तिरस्कारे ॥ चौर्ये ॥ सत्प्रतिपक्षे ॥

प्रतिरोधक: । पुं० चौरे । प्रतिबंधके ॥

प्रतिरोधी । पुं० चौरे । प्रतिरोद्धुं शीलमस्य । रुधिर० । सुपीतिणिनि : ॥

प्रतिरोपणम् । न० उत्खायपुनारोपणे ॥

प्रतिलक्ष : । पुं० लाभे । लम्भने ॥

प्रतिलोम : । त्रि० वामे ॥ विलोमे ॥ अचप्रत्यन्ववेत्यच् ॥

प्रतिलोमज : । त्रि० प्रतिलोमजाते ॥ उत्तमवर्णायामधमवर्णाज्जाते ।

प्रतिवचनम् । न० उत्तरे । प्रतिवाक्ये ॥

प्रतिवच : । न० प्रत्युत्तरे ॥

प्रतिवन्दी । स्त्री० स्वस्वीकृतदोषसाम्ये ॥

प्रतिवसथ : । पुं० ग्रामे ॥

प्रतिवस्तूपमा । स्त्री० अलङ्कारवि०॥

प्रतिवाक्यम् । न० उत्तरे ॥ प्रतिवचनम् ॥ ण्यत् ॥

प्रतिवाणि : । स्त्री० प्रतिवाक्ये ॥

प्रतिवात : । पुं० वायुवि० ॥ योगुरुदेशाच्छिष्यदेशमागच्छतिवायु : स प्रतिवातइत्युच्यते ॥

प्रतिवाद : । पुं० प्रत्याख्याने ॥ प्रतिवदनम् । वद० । घञ् ॥ विरोधे ॥

प्रतिवादी । त्रि० विरोधिनि ॥ प्रतिवादोऽस्यास्ति । इनि : ॥ प्रतिपक्षे ॥ यथा । यदात्त्वेवंविध : पक्ष: कल्पित : पूर्ववादिना । दद्यात् तत्पक्षसंबन्धंप्रतिवादीतदोत्तरम् ॥ इतिवृहस्पति : ॥

प्रतिवाप : । पुं० प्रतिवापे ॥

प्रतिवासर : । पुं० प्रतिदिने ॥

प्रतिवासी । त्रि० आसन्नगृहवासिनि । प्रतिवेशवासिनि । प्रतीसी० इ० भा० ॥ प्रतिवसति । वस० । ग्रह्यादित्वात् णिनिः ॥

प्रतिविधानम् । न० प्रतियत्ने ॥

प्रतिविधिः । पुं० प्रतीकारे ॥

प्रतिबिम्बम् । न० प्रतिरूपे । प्रतिमायाम् ॥ तत्तदुपाधिषु बिम्बाकारैश्चित्तपरिणामे ॥ प्रतिकृतिर्बिम्बस्य । कुगतीतिसमासः ॥

प्रतिविषा । स्त्री० अतिविषायाम् । अतीस० इ० भा० ॥ प्रतीपं विषं यस्याः ॥

प्रतिविष्णुकः । पुं० मुचुकुन्दवृक्षे । मुचुकुन्दपुष्प० इ० प्रसिद्धे ॥

प्रतिविहितः । त्रि० सज्जिते ॥

प्रतिवेशः । पुं० प्रतिवासिगृहे ॥ प्रतिवासिनि ॥ प्रतिविशेर्घञ् ॥

प्रतिवेशवासी । त्रि० प्रतिवासिनि ॥

प्रतिवेशी । त्रि० प्रतिवासिनि ॥

प्रतिशब्दः । पुं० प्रतिध्वाने । मुख्यसदृशध्वन्यन्तरे ॥

प्रतिशरणम् । न० प्रतिगृहे ॥

प्रतिशासनम् । न० आहूयभृत्यादीनां कार्यप्रेरणे ॥ प्रतिपूर्वात् शासु अनुशिष्टावित्यस्माल्ल्युट् ॥

प्रतिशिष्टः । त्रि० प्रहिते । प्रेरिते ॥ प्रत्याख्याते ॥

प्रतिशीर्षकम् । न० निष्क्रये ॥

प्रतिशुक्रः । पुं० प्रतिभार्गवे ॥

प्रतिश्या । स्त्री० पीनसे ॥ प्रतिश्यायते नयाश्यैङ् गतौ । आतश्चोपसर्गे इत्यङ्० । टाप् ॥

प्रतिश्यायः । पुं० पीनसे । नासास्रावरोगे ॥ प्रतिक्षणं श्यायते । श्यैङ् । श्याद्व्यधेति णः ॥

प्रतिश्रयः । पुं० सभायाम् ॥ आश्रये । आश्रये ॥ निवासे ॥ यज्ञगृहे ॥ प्रतिश्रयणम् अनया । श्रिञ्० । एरच्० घोषा ॥

प्रतिश्रवः । पुं० अङ्गीकारे । अभ्युपगमे ॥ प्रतिपूर्वाच्छृणोतेः ऋदोरप् ॥

प्रतिश्रवणम् । न० आज्ञाङ्गीकरणे ॥

प्रतिश्रुत् । स्त्री० प्रतिध्वाने ॥ श्रु श्रवणे । सम्पदादित्वात् क्विप् प्रतिप्रथमशब्दं लक्षी कृत्य श्रूयते० इ० प्रतिश्रुत् ॥

प्रतिश्रुतः । त्रि० स्वीकृते । अङ्गीकृते ॥ प्रतिश्रूयते स्म । श्रु० । क्तः ॥

प्रतिषिद्धः । त्रि० निषिद्धे । प्रतिषेधविषये ॥ अप्रतिषिद्धमनुमतं भवतीति यथा ॥

प्रतिषेद्धा । त्रि० निषेधके । माशब्दिके । प्रतिषेधकर्त्तरि ॥

प्रतिषेधः । पुं० निषेधे ॥ यथा । प्राधान्यन्तु विधेर्यत्र प्रतिषेधे प्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदे

ननञ् ॥ इ० ॥ पर्युदास : सदृशग्राही प्रतिषेधोनिवर्तक: । इति च ॥

प्रतिषेधक : । त्रि० निषेधकर्त्तरि ॥

प्रतिषेध्य : । त्रि० प्रतिषेधकर्त्तुर्योग्ये ॥

प्रतिष्कश : । त्रि० सहाये ॥ वार्त्ताहरे ॥ पुरोगे ॥ कशगतिशासनयो : । प्रतिपूर्वोऽस्मात्पचाद्यच्०प्रतिष्कशश्चकशे रितिसुट्षत्वञ्चनिपात्यते ॥

प्रतिष्काष : । पुं० चर्म्मरज्जौ ॥

प्रतिष्टम्भ : । पुं० प्रतिघाते । प्रतिबन्धे । रोधे । प्रतिष्टम्भनम् । ष्टम्भुरोधे । घञ् ॥

प्रतिष्ठ : । पुं० सुपार्श्वनामकार्हत्तात् पितरि ॥ त्रि० प्रतिष्ठायुक्ते ॥

प्रतिष्ठा । स्त्री० गौरवे ॥ गौरवरूपाप्रतिष्ठाचपुण्यस्यपत्नी । यथा । पुण्यपत्नी प्रतिष्ठासापूजिता पुण्यदासदा । ययाविनाजगत्सर्वंजीवन्मृतसमंमुने० तिभागवतम् ॥ ++) चितौ ॥ स्थाने ॥ स्थितौ ॥ आत्मयापनायस्थाने । आस्पदे । आश्रये ॥ अनिकेताह्यनाहारायेचसायंगृहागता : । तेषांगृहस्थ: सर्वेषांप्रतिष्ठायोनिरेवचेतिविष्णुपुराणम् । योनिरन्नादिदानेनजीवनहेतु: ॥ यागनिष्पत्तौ ॥ योगसिद्धौ ॥ संस्कारविशेषे ॥ तत्र • यथाशक्तिस्नपनादिपूर्वक प्रतिमाहृदयेतन्मूलमन्त्रविन्यासेनदेवतायाविशेषसन्निधि : प्रतिष्ठेत्यायातम् । यथोक्तं भविष्यपुराणे । स्नपनादियथाशक्तिकृत्वातन्मूलमन्त्रकम् । विन्यसेद्हृदयाम्भोजेप्रतिमासुक्रताभवेदिति ॥ महाकपिलपञ्चरात्रे । प्रतिष्ठाशब्दसंसिद्धि : प्रतिपूर्वाच्चतिष्ठते : । बहर्थत्वान्निपातानांसंस्कारादौप्रति: स्थिति : ॥ अर्थस्तद्यमेतस्यगीयते शाब्दिकैर्जनै: । विशेषसन्निधिर्यातु क्रियतेव्यापकस्यतु ॥ सन्मूर्त्तौभावनामन्त्रै : प्रतिष्ठासाभिधीयते ॥ इति ॥ अकल्पिते ॥ प्रतितिष्ठत्यनेतिकल्पितरूपरहितमकल्पितमुच्यते ॥ स्थानादप्रच्युतौ । प्रतिपूर्वात्तिष्ठतेरातश्चोपसर्गेइत्यङ् । उपसर्गात्सुनोतीतिषत्वम् ॥ चतुरक्षरपद्ये ॥ यथा । भास्वत्कन्या० सैकाधन्या । यस्या : कूले० कृष्णोऽखेलत् ॥

प्रतिष्ठानम् । न० नगरवि० । चक्रवर्त्तिन : पुरूरवसोराजधान्याम् । ब्रह्मावर्त्त० इ० बिठूर० इ० च यस्य प्रसिद्धि : ॥

प्रतिष्ठापित : । त्रि० विनिवेशिते ॥

प्रतिष्ठित : । त्रि० तात्पर्येणस्थिते । संस्थिते ॥ निष्पन्नयागे ॥ संस्कृते ॥ प्रतिपूर्व :ष्ठा० । गत्यर्थेति-

क्तः । प्रतिस्थतीतीत्वम् । उपसर्गात् सुनोतीतिषत्वम् ॥ प्रतिष्ठांगते । गौरवान्विते ॥ इतच् ॥ प्रतिष्ठितानांचाकीर्त्तिर्मरणादतिरिच्यते ॥

प्रतिष्ठितप्रज्ञः । त्रि० परमार्थनिष्ठे ॥ यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्यशुभाशुभम् ॥ नाभिनन्दतिनद्वेष्टितस्यप्रज्ञाप्रतिष्ठिता ॥ यदासंहरतेचायंकूर्मोङ्गानीवसर्वशः । इन्द्रियाणीन्द्रियार्थेभ्यस्तस्यप्रज्ञाप्रतिष्ठिता ॥

प्रतिसंरुध्यमानः । त्रि० अविभागमापद्यमाने ॥

प्रतिसंक्रमः । पुं० महाप्रलये ॥

प्रतिसञ्चरः । पुं० महाप्रलये ॥ सर्वेषामेवभूतानांत्रिविधः प्रतिसञ्चरः । नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिकोमतः ॥ ब्राह्मोनैमित्तिकस्तेषांकल्पान्ते प्रतिसञ्चरः । आत्यन्तिकश्चमोचाख्यः प्राकृतोद्विपरार्द्धिकः ॥

प्रतिसन्धानम् । न० अनुसन्धाने ॥ प्रतिसन्धीयते । डुधाञ्० । ल्युट् ॥

प्रतिसरः । पुं० मन्त्रभेदे ॥ माल्ये । सर्जे ॥ कङ्कणे ॥ व्रणशुद्धौ ॥ चमूपृष्ठे ॥ प्रातःकाले ॥ पुं० न० मण्डने ॥ आरक्षे ॥ करसूत्रे । अँगणा० इ० भा० ॥ त्रि० नियोज्ये ॥ प्रतिसरति सृ० पचाद्यच् ॥

प्रतिसरा । स्त्री० कङ्कणिकायाम् ॥

प्रतिसर्गः । पुं० पुराणलक्षणविभेदे । अनुसर्गे । ब्रह्मणः सृष्ट्यनन्तरंरुद्रादीनांसृष्टौ ॥ रुद्रोविराड्मनुर्दक्षोमरीच्याद्यास्तुमानसाः । यंयंसर्गंपृथक्चक्रुः प्रतिसर्गः स सम्भृतः ॥ प्रतिसर्ज्जनम् । प्रतिसृज्यतेवा । सृजेर्घञ् ॥ प्रलये ॥

प्रतिसव्यः । त्रि० प्रतिकूले ॥

प्रतिसाख्यानिकः । पुं० मागधे । स्तुतिपाठके ॥

प्रतिसारणम् । न० दन्तादीनामङ्गुल्याघर्षणे ॥ दन्तजिह्वामुखानांयच्चूर्णकल्कावलेहकैः । शनैर्घर्षणमङ्गुल्यातदुक्तंप्रतिसारणम् ॥

प्रतिसीरा । स्त्री० जवनिकायाम् । व्यवधानपट्याम् । कनात० चिक्० इ० भा० ॥ प्रतिसिनोति । प्रतिसीयतेवा । पिञ्बन्धने । शुसिचिमीनांदीर्घश्चेतिक्रन् ॥

प्रतिसूर्यः । पुं० कृकलासे ॥ द्वितीयसूर्ये ॥

प्रतिसूर्य्यकः । पुं० कृकलासे ॥ उपसूर्य्यकमण्डले ॥ द्वितीयार्के ॥ अस्यलक्षणं यथा । प्रतिसूर्य्यकः प्रशस्तो

द्दिवसकृद्दतुवर्णसप्रभ : स्निग्ध : ॥ वैदूर्यनिभ : स्वच्छ : शुक्लश्चेमसौभिक्ष : ॥ पीतोव्याधिंजनयति श्रशोकरुग्शस्त्रकोपाय । प्रतिसूर्या गांमालादस्य भयातङ्कनृपद्दर्वी ॥ द्दिवसकृत : प्रतिसूर्योजलदकृदुद गुट्टञ्जिगोस्थितोऽनिलकृत् । उभयस्थ : सलिलभयं नृपमुपरिनिहन्त्य धोजनहा ॥ इति ॥

प्रतिसृष्ट : । त्रि॰प्रत्याख्याते ॥ प्रे षिते ॥ दत्ते ॥ प्रहिते ॥

प्रतिसोमा । स्त्री॰ मद्दिषवल्ल्याम् ॥

प्रतिस्पर्द्धा । स्त्री॰ स्पर्धायाम् ॥

प्रतिस्पर्द्धी । त्रि॰ स्पर्द्धाविशिष्टे ॥ प्रतिगर्जिते ॥

प्रतिहत : । त्रि॰ द्विष्टे प्रतिस्खलिते ॥ रुद्धे ॥ बद्धे ॥ प्रतिबद्धे ॥ प्रतिहन्यतेस्म । क्त : ॥

प्रतिहति : । पुं॰ विनाशे ॥ प्रतिघाते ॥

प्रतिहन्ता । त्रि॰ विनाशके ॥ प्रतिहन्ति । हन॰ । बहुलमन्यत्रापीति तृन् ॥

प्रतिहरणम् । न॰ इतस्ततोनयने ॥

प्रतिहर्ता । पुं॰ ऋत्विग्विशेषे ॥ प्रतिहरति । हृञ्॰ । बहुलमन्यत्रापीतितृन् ॥ त्रि॰ वारयितरि ॥ प्रतिहर्त्तात्विमापद्दाम् ॥

प्रतिहार : । पुं॰ द्वारि । द्वारे ॥ द्वास्थे । द्वारपाले ॥ प्रतिह्रियतेऽनेनावा । हृञ्॰ । घञ्॰ । उपसर्गस्येतिघाञिकोदीर्घाभाव : ॥ प्रतिहरणम् । भावेघञ् । प्रतिहारोजनवारणमस्त्यस्य । अर्शआद्यच् ॥ सामभक्त्यन्तरे ॥ पाञ्चभक्तिकस्यसाम्नस्तुर्यभक्तौ ॥

प्रतिहारक : । पुं॰ मायाकारे ॥ इन्द्रजालादिकारके ॥

प्रतिहास : । पुं॰ करवीरे ॥ प्रतीपोहासोऽस्य ॥ हासकंप्रतिहासश्च ॥

प्रतीक : । पुं॰ अङ्गे । अवयवे ॥ त्रि॰ प्रतिकूले । प्रतीपे । विलोमे । प्रतिगताईर्ल्क्ष्मीर्येनवा । नद्यृतश्चेति कप् ॥ प्रत्येति॰ प्रतीयतेवा । इण्गतौ । अलीकादयश्चेतिसाधुर्वा ॥

प्रतीकार : । पुं॰ कृतापकारस्यप्रत्यपकारे । वैरशुद्धौ ॥ स्वप्राणादित्राणायव्यापारे ॥ प्रतिकरणम् । कृञ्॰ । घञ् । उपसर्गस्य तिदीर्घ: ॥ उपाये ॥ चिकित्सायाम् ॥

प्रतीकाश : । पुं॰ उपमायायाम् । उत्तरपदस्थित्यास्सदृशवचने ॥ प्रतिकाशते । काशृदीप्तौ । पचाद्यच् । इक : काशइत्युपसर्गस्यदीर्घ : ॥

प्रतीक्षणम् । न॰ प्रतीक्षायाम् ॥ ईक्ष॰ । ल्युट् ॥

प्रतीक्षा । स्त्री॰ प्रतीक्षणे । निर्ज्ञातप्राप्तीष्टार्थप्रतीक्षणे ॥ ईक्षणम् । ईक्ष

दर्शनाङ्कनयोः। गुरोश्च ल्यः। टाप्॥

प्रतीच्यः। त्रि० पूज्ये॥ प्रतिप्राल्ये॥ प्रतीचगोये॥ प्रतीच्यते। ईच०। ऋहलोण्यत्॥

प्रतिघातः। पुं० प्रतिघाते॥

प्रतीची। स्त्री० पश्चिमदिशि॥ प्रतिपश्चाद्दिनान्ते अञ्चति सूर्यम्। अञ्चु गतिपूजनयोः। ऋत्विगादिनाक्विन्। उगितश्च ङीप्॥

प्रतीचीनः। त्रि० प्राग्भवे॥ प्रत्यक्॥ विभाषाञ्चेरदिक्स्त्रियामिति खः॥

प्रतीच्छकः। त्रि० ग्राहके॥

प्रतीच्छितः। त्रि० इष्टे॥ गृहीते॥

प्रतीच्यः। त्रि० प्रतीचिभवे॥ द्युप्रागितिशेषिकोयत्॥

प्रतीतः। त्रि० सादरे॥ ज्ञाते॥ हृष्टे॥ प्रख्याते॥ प्राप्ते॥ प्रस्थिते॥ प्रत्यं कमगात्। प्रतीयतेस्मेति वा। इण्०। गत्यर्थत्वात्० कर्तरि० कर्मणिवाक्तः॥

प्रतीतिः। स्त्री० प्रत्यये॥ ज्ञाने॥ सिद्धौ। भाने॥

प्रतीपः। पुं० चन्द्रवंशीयनृपराजपूर्वे। शान्तनुराजपितरि॥ त्रि० प्रतिकूले। पराङ्मुखे॥ न० वामे॥ अलङ्कारविशेषे॥ यथा। प्रतीपमुपमानस्यउपमेयत्वकल्पनम्। त्वल्लो

चनसमंपद्मं त्वद्वक्त्रसदृशोविधुः॥ प्रसिद्धोपमानोपमेयप्रातिलोम्यात् प्रतीपम्॥ यथावा। यत्त्वन्नेत्रसमानकान्तिसलिलेमग्नन्तदिन्दीवरंमेघैरन्तरितः प्रियेतवमुखच्छायानुकारीशशी। येपित्वद्गमनानुकारिगतयस्ते राजहंसागतास्त्वत्सादृश्यविनोदमात्रमपिमेदैवेननक्षम्यते॥ अन्योपमेयलाभेनवर्ण्यस्यानादरश्चतत्। अलङ्गर्वेणतेवक्त्रकान्त्याचन्द्रोपितादृशः॥ अत्युत्कृष्टगुणतयावर्ण्यमानस्य० अन्यत्रसमादृश्यममहमानस्यउपमेयंकिञ्चित्प्रदर्श्य तावतावर्ण्यस्य तिरस्कारोद्वितीयं प्रतीपं। पूर्वस्मादपिविच्छित्तिविशेषशालि। यथा। गर्वमसम्भाव्यमिमंलोचनयुगलेनकिंवहसिभद्रे॥ सन्तीदृशानिदिशिदिशिसरस्सुननुनीलनलिनानि॥ वर्ण्योपमेयलाभेन तथान्यस्याप्यनादरः। कःक्रौर्यदर्पस्ते मृत्योस्त्वत्तुल्याः सन्तिहिस्त्रियः॥ अत्युत्कृष्टगुणतयाक्वचिदप्युपमानभावमसहमानस्यावर्ण्यस्य वर्ण्यमुपमेयंपरिकल्प्यतावतातस्यापितिरस्कारः पूर्वप्रतीपवैपरीत्येनतृतीयंप्रतीपम्॥ यथावा। अहमेवगुरुः सुदारुणानामितिहालाहलमास्मतातदृप्यः। ननुसन्तिभवादृशानिभूयोभुवनेस्मिन्वचनानि

दुर्जनानाम् ॥ वर्ण्येनान्यस्योपमाया अनिष्पत्तिवचश्च तत् ॥ मुधाऽपवादो मुग्धाक्षि त्वन्मुखाभं किलाम्बुजम् ॥ अवर्ण्येवर्ण्योयमित्यनिष्पत्तिश्च नंपूर्वेभ्यउत्कर्षशालि चतुर्थं प्रतीपं । उदाहरणे मुधापवाद इत्युक्त्या उपमित्यनिष्पत्तिरुद्घाटिता । यथावा । आकर्णय सरोजाक्षि वचनीयमिदं भुवि । शशांकस्तव वक्त्रेण पामरैरुपमीयते ॥ प्रतीपमुपमानस्यकैमर्थ्यमपि मन्वते । दृष्टञ्चेद्वदनं तस्याः किं पद्मेन किमिन्दुना । उपमेयस्यैवोपमानप्रातिलोम्यात् पञ्चमं प्रतीपम् । यथावा । तद्वोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदायदा । तनोति भानोः परिवेश कैतवात् तदा विधिः कुण्डलनां विधोरपि । केचिदनन्वयोपमेयोपमाप्रतीपानामुपमाविशेषत्वेन तद्दलंभावं मन्यन्ते । अन्ये तु पञ्चमं प्रतीपप्रकारमुपमानाक्षेपरूपत्वात् आक्षेपालङ्कारमाहुः ॥ प्रतिकूलाश्रापोऽस्मिन् । ऋक्पूरब्धूरिति अप्रत्ययः । द्व्यन्तरुपसर्गेभ्य इतीत्वम् ॥

प्रतीपगः । त्रि० यत आगतस्तत्रैव गते ॥ प्रतिकूलगामिनि ॥

प्रतीपदर्शिनी । स्त्री० स्त्रीमात्रे । प्रतीपं द्रष्टुं शीलमस्याः अपाङ्गनिरीक्षणात् । सुप्यजातावितिणिनिः ॥

प्रतीमाजम् । न० प्रस्थद्रोणादिमानविशेषे ॥

प्रतीयमानः । ज्ञायमाने । प्रमाणस्य विषये ॥

प्रतीरम् । न० तटे । तीरे । तीरयति । पारतीरकर्मसमाप्तौ । पचाद्यच् । प्रान्योपसर्गनिवृत्तये ॥

प्रतीवापः । पुं० दुग्धादौ दध्यादिभावार्थं तक्रादिप्रक्षेपे ॥ निक्षेपे ॥ स्वर्णादिद्रुतस्य द्रव्यान्तरेणावचूर्णन इति स्वामी ॥ पार्णीयौषधविशेषे ॥

प्रतीविशः । पुं० प्रतिवेशे ॥ उपसर्गस्य घञ्यमनुष्ये बहुलमिति दीर्घः ॥

प्रतीसरः । पुं० कङ्कणे ॥

प्रतीहारः । पुं० द्वारि ॥ द्वाःस्थे ॥ प्रतीहारो जनवारणसम्बन्धस्य । अर्थे आदाय ॥ अस्य लक्षणं यथा । इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः । अप्रमादी सदा दक्षः प्रतीहारः स उच्यते ॥ अपिच । प्रांशुः सुरूपो दक्षश्च प्रियवादी न चोद्धतः । चित्तग्राही च सर्वेषां प्रतीहारो विधीयते ॥ इति ॥ वृद्धौ ॥ सन्धिविशेषे सवास्योपकृतं पूर्वं मयाऽप्युपकरिष्यति । इति यः क्रियते सन्धिः प्रतीहारः स उच्यते ॥ प्रतिहरणम् ० प्रतिह्रियतेऽनेनावा । हृञ् । घञ् । उपसर्गस्येति दीर्घः ॥

प्रतीहारी । त्रि० द्वारिणि ॥ द्वारार्थे

कप्रतीहारशब्दोद्दस्त्यर्थेइति : ॥

प्रतीहारी । स्त्री० द्वा:स्थितायाम् । द्वारपालकर्मकर्त्र्याम् ॥ गौ० ङीष्

प्रतीहास : । पुं० करवीरे । शतप्रा शे । हयमारके ॥

प्रतुद : । पुं० हारीतादिपक्षिगणे ॥ यथा । हारीतोधवल : पाण्डुश्चित्र पत्रोवृहच्छुक : । पारावत : खञ्ज रीट : पिकाद्या:प्रतुदा : स्मृता : ॥ अवमुख्यपाठस्त्वयम् । कालक-गठकहारीतकपोतशतपत्रिका : । सारिकाखञ्जरीटश्चपिकाद्या : प्रतु दा : स्मृता : ॥ इति । भावप्रका शीयव्याख्यानुरोधात् ॥ प्रतुदा मधुरापित्तकफघ्नास्तुवराहिमा : । लघवोवद्धवर्चस्का : किञ्चिद्वातक रा : स्मृता : ॥ अपिच । लावा द्याविष्किरोवर्ग : प्रतुदाजाङ्गला : मृगा : । लघव : शीतमधुरा : क षायाश्चहितानृणाम् ॥ इति ॥

प्रतोद : । पुं० प्राजने । लोहप्रोता ग्रेवृषभादिप्रेरणदण्डे ॥

प्रतोरणम् । न० वहिर्द्वारे ॥

प्रतोली । स्त्री० ग्राममध्यमार्गे । रथ्या याम् । विशिखायाम् ॥ प्रतोलय-ति । तुलउन्माने । चु० । अच् । गौ० ङीष् ॥

प्रत्त : । त्रि० दत्ते ॥ प्रदीयतेस्म ॥ डुदाञ्दाने । क्त : । अचउपसर्गा त्तइतितादेश : ॥

प्रत्न : । त्रि० पुरातने ॥ नश्चपुराणे प्रादितिचेनसमुच्चितम्लप्प्रत्यय: ॥

प्रत्यक्चेतन : । पुं० स्वम्प्रदृलक्ष्ये ॥

प्रत्यक्त्वम् । न० सर्वान्तरत्वे ॥

प्रत्यक्पर्णी । अपामार्गे ॥ द्रवन्त्याम् ॥ प्रत्यञ्चिपर्णान्यस्या : सा । पाकक र्णेतिङीष् ॥

प्रत्यक्पुष्पी । स्त्री० अपामार्गे ॥ प्रत्य ञ्चिपुष्पाण्यस्या : पाककर्णेतिङीष् ॥

प्रत्यक्श्रेणी । स्त्री० द्रन्त्याम् ॥ मूषि कपर्ण्याम् । सुतश्रेण्याम् ॥ प्रती चीश्रेणीयस्या : । समासान्तस्या नित्यत्वान्नकप् ॥

प्रत्यक्षम् । अ० प्रत्यक्षे ॥ अक्षिअक्षिप्र तीतिवीप्सायाम् यथार्थत्वे नसमा स : । अक्ष्णोराभिमुख्यमित्यर्थे०लक्ष णेनाभिप्रतीतिवाव्ययीभाव : प्रति परसमनुभ्योक्ष्णइतिटच् ॥

प्रत्यक्षम् । त्रि० प्रमाणविशेषे । श्रुतौ ॥ प्रामाण्यंप्रत्यक्षपिचत्त्वात् ॥ इन्द्रि यग्राह्ये । ऐन्द्रियके ॥ इन्द्रियार्थ सन्निकर्षजन्यार्थाकाराश्रया० इन्द्रि याश्रितवृत्ति : प्रत्यक्षंप्रमाणम् ॥ प्रत्यक्षज्ञानकरणंप्रत्यक्षम् । इन्द्रि यार्थसन्निकर्षजन्यंज्ञानंप्रत्यक्षम् ॥ तद्द्विविधम् । निर्विकल्पकं०सविक ल्पकञ्चेति । तत्रनिष्प्रकारकंज्ञा नंनिर्विकल्पकम् । सप्रकारकंज्ञा

नं० सविकल्पकम् । यथा० डित्थो
यम्० ब्राह्मणोयं०श्यामोयमिति ।
प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्ष:
षड्विध: । संयोग: संयुक्तसमवाय:
संयुक्तसमवेतसमवाय: समवेत
समवाय: विशेषणविशेष्यभावश्चे
ति । तत्रचक्षुषाघटप्रत्यक्षजनने०
संयोगसन्निकर्ष: (॥ + १ + ॥)
घटरूपप्रत्यक्षे०संयुक्तसमवाय: च-
क्षुस्संयुक्तेघटे रूपस्यसमवायात्२रूप
त्वसामान्यप्रत्यक्षेसंयुक्तसमवेतसम
वाय:चक्षु:संयुक्तेघटेरूपंसमवेतम्त
त्ररूपत्वस्यसमवायात् ॥३॥ श्रोत्रेण
शब्दसाक्षात्कारे०समवाय: सन्नि
कर्ष: कर्णविवरवर्त्याकाशस्यश्रोत्र
त्वात्०शब्दस्याकाशगुणत्वात्०गुण
गुणिनोश्चसमवायात् ॥ ४ ॥ शब्द
त्वसाक्षात्कारे० समवेतसमवाय:
सन्निकर्ष: श्रोत्रसमवेतेशब्दे०शब्द
त्वस्यसमवायात् ॥ ५ ॥ अभावप्रत्यक्षे
विशेषणविशेष्यभाव: सन्निकर्ष:
घटाभाववद्भूतलमित्यत्र०चक्षुस्सं-
युक्तेभूतले०घटाभावस्यविशेषणत्वा
त् ॥ ६ ॥ एवंसन्निकर्षषट्कजन्यं
ज्ञानंप्रत्यक्षम् । तत्करणमिन्द्रियम्
। तस्मात्०इन्द्रियंप्रत्यक्षप्रमाणमि
तिसिद्धम् ॥ इन्द्रियार्थसन्निकर्षोत्प
न्नंज्ञानमव्यपदेश्यमव्यभिचारिव्यव
सायात्मकंप्रत्यक्षम् ॥ प्रतिगतोऽक्ष.

प्रत्यक्षम्

म् । अत्यादयइतिसमास: ॥ अनु
भवविशेषे ॥ तत्षड्विधम् । घ्राण-
जम् १ रासनम् २ श्रावणम् ३ चा
क्षुषम् ४ स्पार्शनम् ५ मानसम् ६
निर्विकल्पकसविकल्पकभेदेनप्रत्य
क्षंद्विविधम् । निर्विकल्पकन्त्वती
न्द्रियम् । सविकल्पकंमनोग्राह्यम् ।
षड्विधप्रत्यक्षे०आश्रयस्यमहत्त्वंका
रणम् । इन्द्रियंकारणम् । विषयेणस
ह०इन्द्रियसन्निकर्षोस्यव्यापार: ।
यथा । घ्राणजादिप्रभेदेनप्रत्यक्षंष-
ड्विधंमतम् । घ्राणस्यगोचरोगन्धो
गन्धत्वादिरपिस्मृत: ॥ तथारसो
रसज्ञायास्तथाशब्दोपिचश्रुते: ।
उद्भूतरूपंनयनस्यगोचरोद्रव्याणितद्व
न्तिपृथक्त्वसङ्ख्ये । विभागसंयो
गपरापरत्वस्नेहद्रवत्वंपरिमाणयुक्त
म् । क्रियांजातिंयोग्यवृत्तिंसमवा-
यञ्चतादृशम् । गृह्णातिचक्षु: स-
म्बन्धादालोकोद्भूतरूपयो: ॥ उद्भू
तस्पर्शवद्द्रव्यंगोचर: सोपिचत्व
च: । रूपान्यच्चक्षुषोयोग्यंरूपमत्रा
पिकारणम् ॥ द्रव्याध्यक्षेत्वचोयोगो
मनसाज्ञानकारणम् । मनोग्राह्यं
सुखंदु:खमिच्छाद्वेषोमति: कृ
ति: ॥ ज्ञानंयन्निर्विकल्पाख्यं तद
तीन्द्रियमिष्यते । महत्त्वंषड्विधेहे
तुरिन्द्रियंकरणंमतम् ॥ विषयेन्द्रि
यसम्बन्धोव्यापार: सोपिषड्विध:

॥ इतिभाषापरिच्छेदः ॥

प्रत्यक्षत्वम्। न० अविलम्बितप्रतीतिकत्वे ॥

प्रत्यक्षदर्शनः। त्रि० साक्षिणि ॥ प्रत्यक्षंदर्शनम्। यस्यसः ॥

प्रत्यक्षदर्शी। त्रि० साक्षिणि ॥

प्रत्यक्षदेवः। पुं० ब्राह्मणे ॥

प्रत्यक्षवादी। पुं० बौद्धे ॥

प्रत्यक्षी। त्रि० व्यक्तदृष्टार्थे ॥

प्रत्यगात्मा। पुं० अहंशब्दप्रत्ययालम्बने० आत्मनि ॥ जडानृताहङ्कारादिभ्यः सत्यज्ञानानन्दादिरूपतया प्रतिअञ्चतिइतिप्रत्यक्। सचासावात्माच ॥

प्रत्यगाशापतिः। पुं० वरुणे ॥

प्रत्यग्धृतः। त्रि० अन्तर्मुखीकृते ॥

प्रत्यग्रः। अभिनवे। नूतने ॥ शोधिते ॥ प्रतिनवमग्रमस्य ॥

प्रत्यग्रथः। पुं० अहिच्छत्रदेशे ॥

प्रत्यङ्गम्। न० कर्णाद्यवयवे ॥ यथा। प्रत्यङ्गंकर्णनासाक्षिलिङ्गाङ्गानिकरादिकम्। इति ॥

प्रत्यङ्गिरा। स्त्री० देवीविशेषे ॥

प्रत्यक्। अ० दिशि ॥ देशे ॥ काले ॥ प्रतीच्यांदिशि०प्रतीच्यादिशः प्रतीचीदिश्वा। दिक्शब्देभ्य. सप्तमीपञ्चमीप्रथमाभ्योदिग्देशकालेष्वस्तातिः। अञ्चेर्लुक्। लुक्तद्धितलुकि ॥ ॥ एवंदेशकालेच ॥

प्रत्यक्। त्रि० दिशि ॥ देशे ॥ काले ॥ प्राग्भवे ॥ सर्वान्तरेदृश्यादन्यस्मिन् कीदृक्तत्प्रत्यगितिचेत्०तादृगीदृगितिद्वयम्। यत्रनप्रसरेत्त्वेतत्प्रत्यगित्यवधार्यताम् ॥ निर्विशेषापरोक्षे ॥ जडानृताहङ्कारादिभ्यः सत्यज्ञानानन्दादिरूपतया प्रतिअञ्चतीति तथा। क्विन् ॥

प्रत्यञ्चितः। त्रि० पूजिते ॥

प्रत्यनन्तरः। त्रि० प्रत्यासन्ने ॥

प्रत्यनीकः। पुं० अरौ। शत्रौ। विरोधिनि ॥ परपक्षसैन्ये ॥ न० अलङ्कारवि० ॥ यथा। प्रतिपक्षमशक्तेनप्रतिकर्तुंतिरस्क्रिया। यातदीयस्यतत्स्तुत्यैप्रत्यनीकंतदुच्यते ॥ न्यक्कृतिपरमपिविपक्षं साक्षान्निरसितुमशक्तेनकेनापियत्तमेवप्रतिपक्षमुत्कर्षयितुंतदाश्रितस्य तिरस्करणम् तदनीकप्रतिनिधितुल्यत्वात्०प्रत्यनीकमभिधीयते। यथानीकेऽभियोज्ये तत्प्रतिनिधिभूतमपरंमूढतयाकेनचिदभियुज्यते०तथेहप्रतियोगिनिविजेयेतदीयोन्यो विजीयतइत्यर्थः। उदाहरणम्। त्वंविनिर्जितमनोभवरूपः साचसुन्दरभवत्यनुरक्ता। पञ्चभिर्युगपदेवशरैस्तांतापयत्यनुशयादिवकामः ॥ यथा। यस्यकिञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः। कान्तवक्त्रसदृशाकृ

तिक्ततोराहुरिन्दुमधुनापिबाधते ॥ इन्दोरचतदीयतासम्बन्धिमुखमम्बस्मात् ॥

प्रत्यन्त : । पुं० म्लेच्छदेशे ॥ प्रतिगतोऽन्तम् । अत्यादय : क्रान्ताद्यर्थे० द्वि० स० ॥ त्रि० सन्निकृष्टे ॥

प्रत्यन्तपर्वत : । पुं० पादे । प्रधानाऽद्रिसमीपस्थक्षुद्राद्रौ ॥ प्रत्यन्तो० महाद्रे : समीपे [illegible] त : ॥

प्रत्यभिज्ञा । स्त्री० [illegible] आमित्याद्यभिज्ञाने ॥ [illegible] जानाति । प्रत्यभिपूर्वाज्ज्ञाधातो रातश्चोपसर्ग इत्यङ् । टाप् ॥

प्रत्यभिज्ञानम् । न० इन्द्रियजज्ञाने ॥ प्रत्यभिज्ञानंनामपूर्वमनुभूतस्य कालान्तरेपूमाणेनतत्वेनिश्चयपूर्वकंज्ञानम् । तथाहि । आत्माहियोहंबाल्ये पितरावन्वभूवंसएवेदानीं स्थाविरेनप्तूननुभवामीति । योहं सुप्त:स्वप्नमद्राक्षंसएवेदानींजागर्मीतिचबाल्याद्यवस्थासुच०प्रत्यभिज्ञायते । प्रतिपूर्वाज्ज्ञानातेल्युँट् ॥

प्रत्यभियोग : । पुं० प्रत्यपराधे ॥

प्रत्यभिवाद : । पुं० अभिवाद्यस्यगुरोराशीर्वचने ॥ अभिवादयित्रेआशीर्वाद : प्रत्यभिवादइतिव्याख्यानात् ॥ यचोक्तंपतञ्जलिना । अविद्वांस: प्रत्यभिवादेनाम्नोयेनप्लुतिंविदु : । कामन्तं पुतुविप्रोष्यस्त्रीष्विवायमहंवदेत् । स्त्रीवन्माभूमेत्यर्थ्यं व्याकरणमिति ॥ स्त्रीष्विवेति । प्रत्यभिवादेहिगुरुणाप्लुत : कार्य : । प्लुतं कर्तुंनजानातिमस्त्रीवद्वक्तव्य : अयमहमिति । नत्वभिवादयेदेवदत्तोहमित्यादिनासंस्कृतप्रयोगैर्नतिष्ठेयट : ॥

प्रत्यभिवादनम् । न० प्रत्यभिवादे ॥

प्रत्यय : । पुं० अधीने ॥ शपथे ॥ ज्ञाने ॥ विश्वासे ॥ उदयतिचपरिस्मिन्प्रत्ययेशास्त्रयोनौ०गतवतिविलयञ्चप्राकृतेपिप्रपञ्चे । सपदिपदमुदीतंकेवलंप्रत्ययोयत् तदियदितिमिमीतेकोद्दृढ़ापण्डितोपि ॥ निश्चये ॥ हेतौ ॥ कार्यंप्रत्ययते०जनकत्वेनगच्छति०इतिव्युत्पत्त्याप्रत्ययशब्द: कारणवचनइत्याहु: ॥ प्रतीयतेस्मात् कार्यमितिव्युत्पत्तेश्च ॥ रन्ध्रे ॥ शब्दे ॥ प्रथितत्वे ॥ तृतीयाध्यायमारभ्यपञ्चमाध्यायपर्यन्तं प्रकृते : परतोविहितेपुसन्नादिकवर्णेपु ॥ प्रकृतिपरएवप्रत्यय : प्रयोक्तव्य : । प्रत्ययपरैवप्रकृतिरितिभाष्यम् ॥ नकेवला प्रकृति:प्रयोक्तव्यानापिकेवल: प्रत्यय : इतिच ॥ आचारे ॥ प्रत्ययनम्०प्रतीयतेऽनेनवा । प्रत्येतीतिवा । इण्गतौ । एरच्पुंसीतिघोवा०पचाद्यज्वा ॥ प्रतिविषयमय-

तिगच्छतीतिवाविग्रहे । अच० । अच् ॥ प्रत्यया: सहकारिणइतिचि काण्डशेष: ॥

प्रत्ययकारिणी । स्त्री० मुद्रायाम् । छाप० मोरछाप० इ० भा० ॥ अभिज्ञाने ॥ प्रत्ययस्यनिश्चयस्यकारिणी ॥

प्रत्ययित: त्रि० । आप्ते । विश्वस्ते ॥ प्रत्ययोविश्वास: सञ्जातोऽस्य । तदस्यसञ्जातमितीतच् ॥

प्रत्ययी । त्रि० विश्वासिनि ॥ प्रत्ययोऽस्त्यस्य । इनि: ॥

प्रत्यरि: । पुं० पञ्चमतारायाम् ॥

प्रत्यर्थी । त्रि० शत्रौ ॥ प्रतिकूलमर्थयितुंशील: । अर्थयाच्ञायाम् । सुपीतिणिनि: ॥ प्रतिवादिनि ॥ अर्थिप्रतिपक्षे ॥ यथा । प्रत्यर्थिनोऽग्रतोलेख्यंयथावेदितमर्थिना । समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥ अर्थ्यतेइत्यर्थ: साध्य: सोऽस्यास्तीत्यर्थी० तत्प्रतिपक्ष: प्रत्यर्थी ॥

प्रत्यर्पणम् । न० निर्यातने । न्यासार्पणे ॥

प्रत्यर्पित: । त्रि० प्रतिदत्ते ॥ प्रत्यवकर्षणम् न० कृशत्वकरे ॥ निवर्त्तके ॥

प्रत्यवर: । त्रि० निकृष्टे ॥

प्रत्यवसानम् । न० भक्षणे ॥भोजने ॥

प्रत्यवसितम् । त्रि० भक्षिते ॥ प्रत्यवसीयतेस्म । षोऽन्तकर्मणि । क्त: ॥

प्रत्यवस्कन्द: । पुं० प्रत्यवस्कन्दने

प्रत्यवस्कन्दनम् । न० व्यवहारोत्तरप्रभेदे ॥ यथा । प्रत्यवस्कन्दनंनाम सत्यंगृहीतम्०प्रतिदत्तंप्रतिग्रहलब्धमितिवा । यथाहनारद: । अर्थिनालेखितोयोऽर्थ: प्रत्यर्थीयदितंतथा । प्रपद्यकारणंब्रूयात्प्रत्यवस्कन्दनंस्मृतमिति ॥ बृहस्पतिरपि । अर्थिनाभिहितोयोऽर्थ:प्रत्यर्थीयदितंतथा । प्रपद्यकारणंब्रूयात्प्रत्यवस्कन्दनंहितदिति ॥

प्रत्यवस्थाता । पुं० शत्रौ ॥

प्रत्यवस्थानम् । न०दूषणाभिधाने ॥

प्रत्यवहार: । पुं० प्रलये ॥ प्रत्यवह्रियन्तेप्राणिनोऽस्मिन् । हृञ्० । अवहाराधारेतिघञ् ॥

प्रत्यवाय: । पुं० अङ्गवैगुण्यनिबन्धनेपापे ॥ प्रत्यवाय्यते । प्रत्यवपूर्वादयतेर्घञ् ॥

प्रत्यवेक्ष्य: । त्रि० एतावत्कृतमेतावत्कर्तव्यमित्यनु सन्धानेनविचारणीये ॥

प्रत्यश्मा । पुं० गैरिके । गिरिमृदि ॥

प्रत्यस्त: । त्रि० प्रक्षिप्ते ॥

प्रत्यहम् । अ० प्रतिदिने ॥ अह: अह: प्रति० यथार्थेऽव्ययीभावेन पुंसकादन्यतरस्यामितिसमासान्तष्टच् । टिलोप: ॥

प्रत्याकार : । पुं० खड्गकोषे ॥

प्रत्याख्यात : । पुं० दूरीकृते । निराकृते ॥ प्रत्याख्यायतेस्म । ख्याप्रकथने०चक्षिङादेशोवा । क्त : ॥

प्रत्याख्यानम् । न० निराकरणे । निरसने ॥ ख्या० चक्षिङादेशोवा । ल्युट् ॥

प्रत्याख्येय : । त्रि० प्रणोद्ये । प्रत्याख्यातुंयोग्ये॥ अचोयत् । ईत् ॥ कुशा : शाकंपयोमत्स्या : प्रत्याख्येयंनवारिच । अयाचिताहृतंग्राह्यमपिदुष्कृतकर्मण : ॥ अन्यत्रकुलटाषण्ढपतितेभ्योद्विषस्तथेतिगरुड पुराणे अध्याय : ॥

प्रत्यागत : । त्रि० पुनरागते ॥ सन्निवृत्ते ॥

प्रत्यागम : । पुं० प्रत्यागमने । फिरकेआवना० इ० भा० ॥

प्रत्यागमनम् । न० पुनरागमने । प्रत्यागमे ॥

प्रत्यादिष्ट : । त्रि० आच्छिद्यगृहीतु मिच्छौ ॥

प्रत्यादिष्ट : । पुं० निराकृते । निरस्ते । मात्रागच्छेत्याद्युक्ते । प्रतिरुद्धे ॥ प्रत्याख्याते ॥ प्रत्यादिश्यतेस्म । दिशअतिसर्जने । क्त : ॥

प्रत्यादेश : । पुं० निराकृतौ । प्रत्याऽऽख्याते ॥ प्रसङ्गनिवारणे ॥ भक्तंप्रतिदेवतायाउपदेशे ॥ प्रत्यादेशनम् । दिश० । घञ् ॥

प्रत्याय : । पुं० विश्वासे ॥

प्रत्यायक : । त्रि० प्रतीतिजनके ॥ यथा । वर्णसमूहरूपतयाशब्दोऽर्थस्यप्रत्यायकइति ॥ यथावाब्रह्मिरादेजित्यत्रवृद्धिशब्दस्यप्रत्यायकत्त्वमादेचांप्रत्याय्यत्त्वम् ॥

प्रत्यायनम् । न० प्रतीतावानयने ॥ बोधजनने ॥

प्रत्यायित : । त्रि० विश्वसनीये ॥ प्रत्ययएवप्रत्याय : तंप्राप्त : ॥

प्रत्यालीढम् । न० धन्विनांयुद्धकाले चरणन्यासभेदे । ऊर्द्ध्वस्यस्यवामपादप्रसारितदक्षिणपादसङ्कोचे ॥ त्रि० अशिते ॥ प्रत्यालेहनम् । लिह० । नपुंसकेभावेक्त : ॥

प्रत्याशा । स्त्री० अभिलाषे ॥

प्रत्यासत्ति : । पुं० सामीप्ये ॥

प्रत्यासन्न : । त्रि० निकटवर्त्तिनि ॥

प्रत्यासर : । पुं० सैन्यपृष्ठे ॥

प्रत्यासार : । पुं० व्यूहस्यपश्चाद्भागे । व्यूहस्यपश्चाद्व्यूहान्तरे । व्यूहपार्ष्णौ ॥ प्रतीपमासारयतिभग्नान् । सृ० । ण्यन्त : । अच् ॥

प्रत्याहत : । त्रि० कुण्ठिते ॥

प्रत्याहरणम् । न० प्रत्याहारे ॥

प्रत्याहार : । पुं० उपादाने । स्वस्वविषयेभ्यइन्द्रियाणांप्रत्याहरणे ॥ स्वस्वविषयासम्प्रयोगेचित्तस्यस्वरू

पानुकारएवेन्द्रियाणामितिपातञ्जला : । विषयेभ्योनिगृहीतानीन्द्रियाणिचित्तरूपाण्येवभवन्ति । ततश्चविक्षेपाभावात्चित्तधारणादिकंनिर्वहतीत्यर्थ : ॥ सर्वाणीन्द्रियाणिस्वस्वविषयेभ्य : प्रत्याहरतीतितथा ॥ विषयेभ्यात्मतांदृष्ट्वामनसश्चित्तमञ्जनम् । प्रत्याहार : सविज्ञेयोभ्यसनीयोमुमुक्षुभि : ॥ प्रत्याहरणम् । हृञ्० । घञ् ॥ अक्षरसमाम्नाये । अल्पेनबहूनांग्रहणे । व्याकरणप्रसिद्धे प्वज्भलादिषु ॥ प्रत्याह्रियन्तेसङ्क्षिप्यन्तेवर्णायत्र । करणाधिकरणयोश्चेतिल्युटिप्राप्तेकृत्यल्युटोबहुलमितिबहुलोक्तेरधिकरणे घञ् ॥ प्रतिकार्यमाक्रियन्तेवा ॥

प्रत्याहारयोग : । पुं० श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषुजुह्वतीति विहिते ॥

प्रत्युक्त : । त्रि० दत्तोत्तरे । प्रतिवाक्ये ॥

प्रत्युक्ति : । स्त्री० प्रत्युत्तरे ॥

प्रत्युत्क्रम: । पुं० प्रयोगार्थे । कर्मारम्भे प्रथमप्रयोगे ॥ प्रत्युत्क्रमणम् । घञ् ॥

प्रत्युत्क्रान्ति : । स्त्री० प्रत्युत्क्रमे ॥

प्रत्युत्तरम् । न० प्रतिवचने । उत्तरे ॥ उत्तरंप्रति० उत्तरे ॥ यथा । ममेयं भूमि:क्रमागतत्वात्०इतिवाद्युक्तौ० ममेयंभूमिर्दशवर्षोपभुज्यमानत्वात् इतिप्रत्युत्तरं ॥

प्रत्युत्थानम् । न० अभ्युत्थाने । गात्रोत्थानपूर्वकसन्माने । प्रत्युत्थीयतेऽत्र । ष्ठा० । ल्युट् ॥

प्रत्युत्पन्न : । त्रि० उत्पत्तिविशिष्टे ॥ प्रत्युत्पद्यतेस्म । पद० । क्त : ॥

प्रत्युत्पन्नमति : । त्रि० प्रगल्भे । प्रतिभायुक्ते ॥ सूक्ष्मबुद्धियुक्ते । कुशाग्रीयमतौ ॥ कार्यावसरएवप्रत्युत्पन्नामतिर्यस्यस : ॥

प्रत्युद्गत : । त्रि० प्रत्युदिते ॥ प्रत्युद्गम्यतेस्म । गम्लृ० । क्त : ॥

प्रत्युद्गम : । पुं० आगच्छतोगुर्वादे : सन्मुखगमने । अभ्युत्थाने ॥ प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधुमिथ : सुमध्यमे । प्राज्ञै : परस्मै पुरुषायचेतसागुहाशयायैवदेहमानिने ॥

प्रत्युद्गमनम् । न० प्रत्युद्गमे ॥

प्रत्युद्गमनीयम् । न० धौतांशुकद्वये ॥ त्रि० उपस्थेये । समुपस्थानयोग्ये प्रजनीये ॥

प्रत्युद्घात : । पुं० प्रत्युद्गते ॥

प्रत्युद्यत : । त्रि० निवेदिते ॥

प्रत्युपकार : । पुं० उपकारंप्रतिउपकारे । प्रतिप्रिये ॥ प्रतिकर्त्तुमशक्तस्यजीवितान्मरणंवरम् ॥

प्रत्युपवेशनम् । न० निरोधने ॥

प्रत्युप्त : । त्रि० खचिते ॥

प्रत्युष : । न० प्रभाते ॥ प्रत्योषत्यन्ध कारम् । उषदाहे । उष : किदि त्यसि: अन्योपसर्गनिवृत्तयेप्रतीति ॥

प्रत्यूढ : । त्रि० हृते । वहिष्कृते ॥

प्रत्यूष : । पुं० अहर्मुखे । प्रभाते ॥ वसौ ॥ प्रत्यूषति० रुजतिकामुका न् । उषरुजायाम् । इगुपधेतिकः ॥

प्रत्यूष : । न० प्रत्यूषे ॥

प्रत्यूह : । पुं० विघ्ने ॥ प्रत्यूहनम् । ऊह० । घञ् ॥

प्रत्येकम् । न० एकमेकम्प्रतीत्यर्थे ॥

प्रत्येना : । त्रि० चौर्यादिशिक्षके ॥ प्रत्येनस : शिक्षका : स्युश्चौर्यादी तत्सदेनसि ॥

प्रथनम् । न० विस्तारे ॥

प्रथम : । त्रि० आदौ ॥ प्रधाने । मुख्ये ॥ प्रथते । प्रथप्रख्याने विस्तारे वा । प्रथेरमच् । प्रथमचरमेति सर्वनामत्वात्पक्षे०जस : शी । प्रथमे प्रथमा : ॥

प्रथमा । स्त्री० सु० औ० जस् इति त्रिके ॥

प्रथयन् । त्रि० विस्तारयति ॥

प्रथा । स्त्री० ख्यातौ । प्रसिद्धक्रियायाम् ॥ प्रथनम् ॥ प्रथ० । भिदाद्यङ् ॥

प्रथित : । त्रि० विख्याते ॥ प्रथतेस्म । प्रथ० । अकर्मकत्वात्कर्त्तरिक्तः इट् ॥

प्रथिति : । स्त्री० ख्यातौ ॥ प्रथते प्रथ० । पदिप्रथिभ्यांनिद्दितितिः ॥ तितुत्रेष्वग्रहादीनामितीट् ॥

प्रथिमा । पुं० पार्थवे । पृथुत्वे ॥ पृथोर्भाव : । पृथ्वादिभ्यइमनिज्वेति इमनिच् । रऋतोरितिरआदेश : । टेरितिटिलोप : ॥

प्रथिष्ठ : । त्रि० अतिशयेनप्रथौ । अतिशयेति ॥

प्रथीयान् । त्रि० पृथुतरे ॥ ईयसुनि० रऋतोहलादेरितिरेफादेश : ॥

प्रद : । त्रि० प्रदातरि । प्रकर्षेणददाति । डुदाञ्० । क : ॥ प्रदाञ्च इतिकर्मण्युपपदेविधानान्नक : तस्मादसाधुरेवायम् ॥

प्रदक्षिण: । पुं० न० दक्षिणावर्तेनदेवतामुद्दिश्यभ्रमणे ॥ यथा । एकंदेव्यांरवौसप्त त्रीणिकुर्याद्विनायके । चत्वारिकेशवेकुर्यात् शिवेचार्द्धप्रदक्षिणम् ॥ सर्वदेवतुष्टिदप्रदप्रदक्षिणम् यथा । प्रसार्यदक्षिणंहस्तं स्वयंनम्रशिरा : पुना : । दक्षिणंदर्शयन्पार्श्वं मनसापिचदक्षिणः ॥ सकृत्त्रिर्वावेष्टयेत्तादेव्याप्रीति : प्रजायते । सचप्रदक्षिणोज्ञेयः सर्वदेवौघतुष्टिदः ॥ अष्टोत्तरशतंयस्तुदेव्याः कुर्यात्प्रदक्षिणंसर्वान्कामान्समासाद्यपश्चान्मोक्षमवाप्नुयात् ॥ मन-

सापिचयोदद्याद्दिव्यैभक्त्याप्रदक्षिणम् । प्रदक्षिणाद्यमगृहैनरकाक्षिनपश्यति ॥ अपिच । दक्षिणाद्दाय वींगत्वादिशंतस्याश्वशाम्भवीम् । ततश्चदक्षिणांगत्वानमस्कारक्षिकीणवत् ॥ अर्द्धचन्द्रंमहेशस्यपृष्टतश्चसमीरितम् । शिवप्रदक्षिणेमन्त्रीअर्द्धचन्द्रक्रमेणतु ॥ सव्यासव्यक्रमेणैवसोमसूत्रंनलङ्घयेत् ॥ प्रसार्यदक्षिणांहस्तंस्वयंनम्रशिरा : पुन : । दर्शयेद्दक्षिणंपार्श्वंमनसापिचदक्षिण : ॥ त्रिधाचवेष्टयेत्सम्यक्देवताया : प्रदक्षिणम् ॥ एकहस्तप्रमाणश्चएकंवापिप्रदक्षिणम् । अकालेदर्शनंविष्णोर्हन्तिपुण्यंपुराकृतम् ॥ प्रगतोदक्षिणम् । तिष्ठद्गुप्रभृतीनिचइत्यव्ययीभाव : ॥

प्रदत्त : । त्रि० प्रकर्षेणदत्ते ॥

प्रदर : । पुं० विदीर्णभूभागे । विदारे ॥ शरे । वाणे ॥ भङ्गे ॥ नारीरुग्भेदे । असृग्दरे । तत्तुफलितयोन्यारक्तादिधातुक्षरणं ॥ अस्यनिदानं यथा । विरुद्धमद्याध्यशनादजीर्णादगर्भप्रपातादतिमैथुनाच्च । यानाध्वशोकादतिकर्षणाच्चभाराभिघाताच्छयनाद्दिवाच ॥ असृग्दरंभवेत्सर्वंसाङ्गमर्दंसवेदनम् ॥ तस्यातिवृद्धौदौर्बल्यंश्रमोमूर्च्छामदस्तृषा । दाह : प्रलाप : पाण्डुत्वंतन्द्रारोगाश्चवातजा : ॥ सचतुर्विधउक्तोयथा । तंश्लेष्मपित्तानिलसन्निपातैश्चतु : प्रकारंप्रवदन्तिबुद्धाइति ॥ प्रदीर्यते०प्रदरणमनेनवा । दृविदारणे । ऋदोरप् ॥ गर्त्ते ॥ प्रकृष्टभये । त्रि० तद्वति ॥

प्रदर्शनम् । न० संदर्शने ॥ दिङ्मात्रदर्शने ॥ प्रदृश्यते । दृशिर् । ल्युट्

प्रदर्शित : । त्रि० आलोकिते ॥

प्रदल : । पुं० वाणे ॥

प्रदानम् । न० दाने ॥ प्रदीयमाने ॥ डुदाञ्० । प्रपूर्व : । प्रकृष्टदाने ॥

प्रदानोचित : । त्रि० दानपात्रे ॥

प्रदिग्धम् । न० मांसव्यञ्जनभेदे ॥ यथा । मांसंवहुघृतैर्भृष्टंसिक्त्वाचोष्णाम्बुनामुहु : । जीरकाद्यै:समायुक्तंपरिशुष्कंतदुच्यते ॥ तदेवघृततक्राढ्यंप्रदिग्धं सन्निजातकम् ॥ त्रिप्रकर्षेणलिप्ते ॥

प्रदिक् । स्त्री० विदिशि ॥ दिग्भ्य : प्रगता । शान्ता ॥

प्रदिष्ट : । त्रि० निर्द्दिष्टे । प्रदर्शिते ॥

प्रदीप : । पुं० गृहमणौ । दशेन्धने । कज्जलध्वजे । दीपे । दीवा० इ० भा० ॥ दीपवृक्षाश्चकर्त्तव्यास्तैजसादीश्चभैरव । वृक्षेचदीपोदातव्योनतुभूमौकदाचन ॥ सर्वंसहावसुमती सहतेनत्विदंद्वयम् । अकार्य्यपाद घातञ्चदीपतापंतथैवच ॥ प्रदीप्यते

ऽनेनवादीपयतिप्रकाशयतिवा । दीपीदीप्तौ । इगुपधत्वात्क । घञ्वा । अज्वा । प्रोन्योपसर्ग निवृत्त्यर्थः ॥

प्रदीपन : । पुं० स्थावरविषभेदे ॥ तल्लक्षणंयथा । वर्णतोलोहितोयः स्याद्दीप्तिमानदहन : प्रभ : । महादाहकर : पूर्वैःकथित : सप्रदीपन : ॥ अपिच । प्रदीपनस्तुदहनोरक्तवर्णोऽनादिज : ॥ क्ली० ॥ त्रि० प्रकाशके ॥ प्रकर्षेणदीपयति । णिज न्ताद्दीपेर्ल्युः ॥

प्रदीप्त : । त्रि० प्रज्वलिते । दह्यमाने ॥

प्रदीप्ता । स्त्री० रवियुक्तदिशि ॥

प्रदूषित : । त्रि० उपहते ॥

प्रदेय : । त्रि० पारितोषिके ॥

प्रदेश : । पुं० देशमात्रे । स्थितौ । आस्थाने । अवकाशे ॥ तर्जन्यङ्गुष्ठसम्मिते ॥ भित्तौ ॥ एकदेशे ॥ प्रदिश्यते । दिश० । हलश्चेतिघञ् । उपसर्गस्यघञीतिपाक्षिकोदीर्घाभाव ॥

प्रदेशनम् । न० प्राभृते । उपायने । उपहारे ॥ प्रदिश्यते । दिश० । कृत्यल्युट् ॥

प्रदेशनी । स्त्री० तर्जन्याम् ॥ प्रदिश्यतेऽनया । दिश० । करणेल्युट् ॥

प्रदेशिनी । स्त्री० तर्ज्जन्याम् ॥ प्रदिशति । दिश० । सुपीतिणिनि : प्रदेशोस्त्यस्यावा । इनि० ॥

प्रदेह : । पुं० आलेपभेदे । प्रलेपे ॥ आर्द्रोघनस्तथोष्ण : स्यात्प्रदेह : श्लेष्मवातहा ॥ अनुलेपनाभ्यङ्गादौ ॥

प्रदोष : । पुं० रजनीमुखे ॥ त्रिमुहूर्त्त : प्रदोषस्याद्रवावस्तंगतेसतीत्येके ॥ प्रदोषोऽस्तमयादूर्ध्वंघटिकाद्वयमिष्यतइत्यन्ये ॥ प्रकृष्टदोषे ॥ दुष्यति । दुष० । अच् । टाप् । प्रारब्धोदोषायाः प्रादिसमास : । प्रारब्धादोषायस्मिन्वा । गोस्त्रियोरितिह्रस्व : ॥

प्रदोषव्रतम् । न० प्रदोषदिनेक्रियमाणे व्रतानुष्ठाने ॥ यथा । यत्रदेवोमहादेवोदेवींसंस्थाप्यविष्टरे । नृत्यंकरोतिपुरत:सार्धंदेव्यानिशामुखे । तत्रोपोष्यरजन्यादौ प्रदोषेपूजयेच्छिवाम् । प्रतिपक्षंविशेषेणतद्देवीप्रीतिकारकमितिश्रीदेवीभागवतेश्रीदेवीगीता० ॥

प्रद्युम्न : । पुं० कामदेवे । कन्दर्पे । बुद्ध्यधिष्ठातरि । वासुदेवांशवि० । यथा । अनिरुद्ध : स्वयंब्रह्माप्रद्युम्न : कामएवच । बलदेव : स्वयंशेष : कृष्णस्यप्रकृते : पर : ॥ प्रकृष्टंद्युम्नंबलमस्य ॥

प्रद्योत : । पुं० आतपे । प्रकाशे ॥ प्रकृष्टोद्योत : ॥ रश्मौ ॥

प्रद्योतन : । पुं० सूर्ये ॥ कृप्रष्टोद्योत-

न : ॥ न० द्युतौ ॥
प्रद्रावक : । त्रि० कुत्सितामवस्थांप्रा
प्ते । अन्नाभावादन्यावस्थांप्राप्ते ॥
प्रद्राव : । पुं० पलायने । अपक्रमे ॥
प्रद्रवणम् । द्रु० । प्रद्रुस्तुस्रुव-
इतिघञ् ॥
प्रधनम् । न० युधि । रणे । दारणे ।
डुधाञ्० । कृपृवृजीतिक्यु: ॥
प्रधर्षणम् । न० अभिभवे ॥
प्रधानम् । न० प्रकृतौ । गुणसाम्याव-
स्थायाम् ॥ परमात्मनि ॥ बुद्धौ ॥
प्रधत्ते सर्वमात्मनि । अन्यत्रापी-
तियुच् ॥ त्रि० उत्तमे ॥ प्रदधा-
ति । डुधाञ्० । ल्युट्०युज्वा ।
प्रधत्ते ०प्रधीयतेऽनेनास्मिन्वा । क
र्तृकरणादौल्युट् ॥ पुं०न० महा-
मात्रे । सैनापत्यादौ ॥ प्रधीयते।
कृत्यल्युटइतिकर्मणिल्युट् ॥ प्र
धानानुयायिनोजनव्यवहाराभवन्ति
॥ प्रधानस्यप्रधानेन सहनिरोधो-
नतुदुर्बलेन ॥
प्रधानात्मा । पुं० जगत्प्रकृतौ । मा-
यायाम् ॥
प्रधावन : । पुं० वायौ ॥ त्रि० प्रकृ-
ष्टगमनविशिष्टे ॥ प्रकृष्टंधावनंयस्य॥
प्रधि : । पुं० रथस्यचक्रान्तेभूमिस्प-
र्शिभागे । नेम्याम् ॥ प्रधीयतेऽनेन।
डुधाञ्० । उपसर्गेघो : कि : ॥
प्रधी : । त्रि० उत्कृष्टबुद्धियुक्ते ॥ प्रकृ-
ष्टंध्यायति । ध्यै० । ध्यायते : स-
म्प्रसारणञ्चेतिक्विप् । हलश्चेतिदी
र्घ : । नित्यस्त्रीत्वाभावान्ननदी-
त्वम् । प्रकृष्टाधीर्यस्येतिविग्रहेतुन
दीत्वम् ॥ स्त्री०प्रकृष्टबुद्धौ०तद्यु-
क्तायाञ्च ॥ प्रकृष्टाधी : प्रकृष्टा-
धीर्यस्यावा ॥
प्रधूपित : । त्रि० प्रकर्षेणतप्ते । दीप्ते
च ॥ क्लेशिते ॥ प्रकर्षेणधूपित : ॥
प्रधूपिता । स्त्री० क्लेशितायाम् ॥ रवि
गन्तव्यदिशि ॥
प्रधूमित : । त्रि० सञ्जातधूमे ॥ ता०
स्त्री० सूर्यगन्तव्यदिशि ॥ प्रकर्षेण
धूम : संजातोस्यता० इतच् ॥
प्रध्वंस : । पुं० विनाशे । प्रकृष्टो
ध्वंस : ॥
प्रध्वंसाभाव : पुं० अभावविशेषे ॥
सच० सादिरनन्त : प्रध्वंस : उत्प
त्तेरनन्तरम्कार्यस्य । घटादावति
व्याप्तिवारणायानन्तइति । आका
शादावतिव्याप्तिवारणायसादिरि
ति ॥ प्रध्वंसश्चासावभावश्च ॥
कपालेषुघटादेर्विद्यमानस्यैवाभाव:
प्रध्वंसाभावस्तिरोभावजनकइति
सत्कार्यवादिन : ॥
प्रनतोदर : । त्रि० विस्तृतोदरे । स्थू
लोदरे ॥ प्रकर्षेणनतंनम्रमुदरंयस्य
॥ रौस्त्री० ॥ युवादित्वान्नण : ॥
प्रनिघातनम् । न० प्रणिघातने ।

वधे ॥

प्रपञ्च : । पुं० सञ्चये ॥ विस्तारे ॥ प्रतारणे । विप्रलम्भने ॥ विपर्यासे ॥ विपर्यासो ॥ वैपरीत्यं भ्रमो वामायेतिस्वामी ॥ संसारे । नामरूपलक्षणेद्वैतभेदविस्तारे । आकाशादिदेहान्तेजगद्विस्तारे ॥ प्रपंचते । पचिव्यक्तीकरणे । पचाद्यच् ॥ अध्यारोपापवादाभ्यांनिष्प्रपंचंप्रपंचते । अतःप्रपंचोनवास्तव : । यथाहुर्गौडपादाचार्या : । प्रपंचो यदिविद्येतनिवर्त्तेतनसंशय : । मायामात्रमिदंद्वैतमद्वैतंपरमार्थत: । विकल्पोविनिवर्त्तेतकल्पितो यदिकेनचित् । उपदेशादयंवादो ज्ञातेद्वैतंनविद्यते ॥ प्रपंचस्य किंकारणंकिंस्वरूपमित्यादितर्कजालंचनकर्त्तव्यंतस्यमायामयत्वादित्याहुराचार्यायथा ॥ किमिदंकिमस्यरूपं कथमिदमभूदमुष्यकोहेतु : । इतिनकदापिविचिन्त्यंचिन्त्यंमायेतिधीमताविश्वम् ॥ दंतिनिदारुविकारेदारुतिरोभव । तिसोपितत्रैव । जगतितथापरमात्मापरमात्मन्यपिजगत्तिरोधत्ते ॥ आत्ममयेमहतिपटेविविधजगच्चित्रमात्मनालिखितम् । स्वयमेवकेवलमसौपश्यन्प्रमुदंप्रयातिपरमात्मा ॥ तथा चोक्तंयोगिनीहृदये । जगच्चित्रंसमालिख्यस्वेच्छातूलिकयात्मनि । स्वयमेवसमालोक्यप्रीणातिभगवान्शिवइति ॥

प्रपञ्चितम् । त्रि० विस्तारिते ॥

प्रपञ्चोपशम : । पुं० आत्मनि ॥ प्रपञ्चस्यउपशमोयस्मिन् ॥ चिन्मात्रममलमक्षयमद्वयमानन्दमनुभवारूढम् । ब्रह्मैवास्तितदन्यन्नकिञ्चिदस्तीतिनिश्चयोविदुषाम् ॥

प्रपथ : । त्रि० शिथिले ॥

प्रपथ्या । स्त्री० हरीतक्याम् ॥ प्रकर्षेणपथ्या ॥

प्रपदम् । न० पादाग्रे ॥ प्रकृष्टंप्रारब्धं०प्रगतंवापदम् । प्रादयोगताद्यर्थेप्रथमयेतिसमास : ॥

प्रपदनम् । त्रि० प्राप्तिसाधने ॥ प्रपद्यतेऽनेन । पद० । ल्युट ॥ शरणंगमने ॥

प्रपद्यमान : । त्रि० मन्यमाने ॥

प्रपन्न : । त्रि० शरणागते ॥ सकृदेव प्रपन्नायतवास्मीतिचयाचते । अभयं सर्वथातस्मैददाम्येतद्व्रतंमम ॥ प्रपद्यतेस्म । पद० । क्त : । आगते ॥ प्राप्ते ॥

प्रपन्नाड : । पुं० एडगजे । चक्रमर्दके ॥

प्रपा । स्त्री० पानीयशालिकायाम् ॥ प्रपिबन्त्यस्याम् । पापाने । आतश्चोपसर्गे इत्यङ् ॥

प्रपाठक : । पुं० सामवेदाध्याये ॥

प्रपाणि : । पुं० करसाग्राधोदेशे । पाणितले ॥

प्रपात : । पुं० अतटे । भृगौ । निरवलम्बनपर्वतपार्श्वे । यस्मात्पतनेऽवस्थानक्रियाविशेषोनास्ति० तस्मिन् । प्रपतन्त्यस्मात् । पतॢ० । अकर्त्तरीतिघञ् ॥ निर्झरे ॥ अभ्यवस्कन्दे ॥ कूले० । इतिहेमचन्द्रः पतनप्रदेशे । यत्रपततितत्र ॥ प्रपतत्यस्मिन् ॥

प्रपान : । पुं० अश्वस्योत्तरोष्ठतले ॥

प्रपायी । त्रि० पानकर्त्तरि ॥ रक्षणकर्त्तरि ॥

प्रपावनम् । न० वनान्तरे । कामारण्ये ॥ त्रि० प्रकर्षेणशुद्धिजनके ॥

प्रपितामह : । पुं० पितृपितामहे । पितामहपितरि ॥ विधातरि । ब्रह्मणि ॥ हिरण्यगर्भस्यापिपितरिवासुदेवे ॥ प्रकर्षेणपितामह : । प्रादयइति समास : ॥

प्रपितामही । स्त्री० पितृपितामह्याम् ॥ प्रपितामहपत्न्याम् ॥ स्वेनभर्त्तासहश्राद्धं माताभुङ्क्ते स्वधामयम् ॥ पितामहीचस्वे नैवस्वे नैवप्रपितामही ॥ प्रकर्षेणपितामही ॥

प्रपित्सु : । त्रि० प्राप्तुमिच्छौ ॥ पतते : सन्नन्तादु : प्रत्यय : । । सनिमीमेत्यादिना० इसादेश : अत्रलोपोऽभ्यासस्येत्यभ्यासलोप:

प्रपुन्नाट : । पुं० चक्रमर्दे ॥

प्रपुंनाड : । पुं० एडगजे । प्रपुन्नाटे द्विपत्रजातंप्रपुन्नाडशाकंसुस्विन्नं पिण्डितवाढवाढं । संसैन्धवंराजिकयासुदिग्धं विमर्द्यसेव्यंक्वथितं हिपाच्यम् ॥ प्रपुंनाडोलघु : स्वादुर्वातघ्नः पित्तहर : पर : तिक्त : कफापह : श्वासकासकुष्ठक्रमीन्जयेत् ॥ पुमांसंनाडयति । नडभ्रंशे । चु० । कर्म्मण्यण् । मस्यानुस्वारपरसवर्णौप्रकृष्ट : प्रगतोवापुन्नाड :

प्रपूरिका । स्त्री० कण्टकार्याम् ॥

प्रपूरित : । त्रि० दग्धे । पूरिते ॥

प्रपौण्डरीकम् । न० पुण्डर्य्ये । इस्तिनामनुष्याणाञ्चचक्षुष्ये क्षुद्रविटपे । शालपर्णीपत्रतुल्यच्छदे । चक्षुष्ये पुण्डरिया इति गौ० भा० प्र० । स्थलपद्मेतिप्र० ॥ पुण्डरीकेणसदृशम् । शेषि० इत्यण् । प्रकृष्टं पौण्डरीकम् । यद्वास्वार्थेऽण् ॥

प्रपौत्र : । पुं० पुत्रस्यपौत्रे । पौत्रस्यपुत्रे । प्रतिनप्तरि ॥

प्रपौत्री । स्त्री० पौत्रस्यपुत्र्याम् ॥

प्रफुल्ल: । त्रि० उत्फुल्ले । सम्फुल्ले । फुल्लोविकसिते ॥ फलति । त्रिफला० । ञीत:क्त : । आदितश्चेतीडभाव : । तिचेत्युत्वम् । अनुपसर्गात्फुल्लक्षीवेतिनिष्ठातस्यल : । प्रादिस

मास : ॥ प्रफुल्लतिवा । फुल्लविक सने । प० अच् ॥

प्रबन्ध : । पुं० सन्दर्भे रचनायाम् ॥ काव्यादिग्रथने ॥ पूर्वापरसङ्गतौ ॥ प्रबाहे ॥ प्रकृष्टोबन्ध :

प्रबन्धकल्पना । स्त्री० कथायाम् ॥ प्रबन्धेनकल्पना ॥ प्रबन्धस्यअभिधेयकल्पनास्वयंरचनावा ॥ प्रबन्धकल्पनांस्तोकसत्यांप्राज्ञा : कथांविदु: । परस्पराश्रयायाम्यात्सामताख्यायिकाक्वचित् ॥ इतिकोलाहलाचार्य : ॥

प्रबल : । पुं० पल्लवे ॥ त्रि०प्रकृष्टबलसंयुक्ते ॥ प्रकृष्टंबलमस्य न० प्रकृष्टबले ॥

प्रबला । स्त्री० प्रसारिण्याम् प्रकृष्टंबलमस्या : अर्शआदित्वाद्वा ॥ प्रकृष्टबलयुक्तायाम् ॥

प्रवाल : । पुं० न० अभिनवपल्लवे । किसलये ॥ वीणादण्डे । अङ्गारकमणौ । विद्रुमे । लतामणौ । रक्तवर्णवर्तुलाकाररत्नवि० । मूंगा० इ० भा० ॥ तस्यशुभाऽशुभलक्षणं यथा । शुद्धंघनंदृढंवृत्तंस्निग्धंगात्रसुरङ्गकम् । समंगुरुसिराहीनंप्रवालंधारयेच्छुभम् ॥ गौररङ्गजलाक्रान्तंवक्रंसूक्ष्मंसकोटरम् । रूक्षकृष्णंलघुश्वेतंप्रवालमशुभंत्यजेत् ॥ विशेषोयुक्तकल्पतरोरनुसन्धेय : ॥ प्रकर्षेणवल्यतेसंव्रियते । वलसंवरणे । घञ् ॥ यद्वा । प्रवलति । वलप्राणने । ज्वलतीतिण : ॥ यद्वा० ज्वलादिभ्यो णः । वात्पचाद्यच् ॥ जीवशाके ॥

प्रवालक : । पुं० जीवशाके जीवन्ते ॥

प्रवालफलम् । न० रक्तचन्दने ॥

प्रवाह्लिका । अ० समकाले ॥ ऊर्ध्वार्थे ॥

प्रवाहु : । पुं० कुर्परस्याधोभागे ॥

प्रवाहुकम् । अ० समकाले ॥ ऊर्ध्वार्थे प्रवाहुकंगृह्णीयात् ॥

प्रबुद्ध : । त्रि० निद्रोत्थिते ॥ प्रफुल्ले । विकसिते ॥ ऊहापोहकुशले । पण्डिते ॥ आत्मबोधयुक्ते । नि : सन्देहापरोक्षज्ञानिनि ॥ प्रकर्षेण०अस म्भावनादिरहिततत्वेनबुद्ध : ॥

प्रबोध : । पुं० विनिद्रत्वे ॥ ज्ञाने ॥ यथार्थज्ञाने ॥ चैतन्यप्रधाने । ब्रह्माकारान्त : करणवृत्त्युपहितज्ञनावृत चैतन्ये ॥ प्रकृष्टोबोध : ॥

प्रबोधनम् । न० अनुबोधे । गतगन्धस्यप्रयत्नेनोद्बोधने ॥ यथाकस्तूरिकादेर्मद्यादिनाप्रवृत्ति : । बुधअवगमने । भावेल्युट् ॥ विबोधने ॥

प्रबोधनी । स्त्री० दुरालभायाम् । कार्त्तिकशुक्लैकादश्याम् । देवउठनी० इ० भा० ॥

प्रबोधित : । त्रि० सञ्जातप्रबोधे ॥ प्रकर्षेणज्ञापिते ॥

प्रबोधिता । स्त्री० अतिजगतिप्रभेदे

॥ यथा । सज्जसाजगौचभवतिप्रबोधिता ॥ यथाशयितामृषाचटुलमाननिद्रया०रतिकेलिकुञ्जनिलयेविलासिनी । मुरवैरिणावदनचुम्बनास्मितमाततानसपदिप्रबोधिता ॥

प्रबोधिनी । स्त्री० उत्थानैकादश्याम् । प्रबोधन्याम् ॥

प्रभक्षण : । त्रि० असञ्चयशीले । खा उइतिख्याते ॥

प्रभञ्जन : । पुं० वायौ ॥ प्रकृष्टंभनक्ति । भञ्जोआमर्दने । युच् ॥

प्रभद्र : । पुं० निम्बे ॥ त्रि० श्रेष्ठे ॥

प्रभद्रा । स्त्री० प्रसारिण्याम् ॥

प्रभव : । पुं० जलमूले ॥ जन्महेतौ पित्रादौ । पराक्रमे ॥ आद्यस्थाने ॥ 'प्रथमज्ञानार्थेस्थाने ॥ मुनिविशेषे ॥ जन्मनि ॥ उपादाने निमित्ते ॥ प्रभवत्यस्मात् । अकर्त्तरिचकारकइत्यधिकारादपादानार्थेभुवऋदोरप् ॥ अन्यत्र : शिवस्य प्रथममुपलम्भे ॥ विष्णौप्रकृष्टोभवोजन्मास्य ॥ यथा । प्रकर्षेणभवन्तिजायन्ते महाभूतान्यस्मात्पूर्वपदम् ॥ गुरोर्मासिगपष्ठिवत्सराणामादिमेवत्सरे ॥ तत्फलंयथा । बहुतोयास्तथामेघाबहुशस्याचमेदिनी । बहुक्षीरास्तथागावो व्याधिरोगविवर्जिताः ॥ प्रथमान्यापर्जिताश्चैवप्रभवेपरिकीर्त्तिता : ॥ १ ॥ तीर्थविशेषे

प्रभविष्णु : । पुं० उत्पत्तिकालेसर्वस्यप्रभवनशीले ॥ प्रपूर्वाद्भवतेर्भुवश्चेतिइष्णुच्०यद्यपिभुवश्चेतिछन्दसि०इष्णुजिष्यते०तथापि०जगत्प्रभोरप्रभविष्णुवैष्णवम्मितिलोकेपिप्रयोगदर्शनात् । यत्निरङ्कुशा : कवयइतिसमाधानमकारिभट्टोजितीक्षितेन ॥ प्रभौ ॥ यथा । नभर्त्तानैवचसुतोनपितामातरोनच । आदानेवाविसर्गेवास्त्रीधनेप्रभविष्णव : । इ० ॥ त्रि० प्रकर्षेणभवनशीले ॥

प्रभा । स्त्री० रुचि । त्विषि दीप्तौ । प्रकाशे ॥ तेजसोभार्येयम् यथा । प्रभाचछायिकाचैवद्वेभार्येतेजस : स्मृते । याभ्यांविनाजगत्स्रष्टुंविधातुञ्चनचेश्वर: इति ॥ ग्रहाणांप इविधायांकाथायाम् ॥ यथाहस्थपिपुत्र: । याचछायाप्रभासैवपड्विधा सापूकीर्त्तिता । स्वच्छास्निग्धा प्रसन्नाचकान्ता दीप्ताविद्येयमेतीति कुबेरपुर्याम् ॥ जगतीछन्द : प्रभेदे । मन्दाकिन्याम् । लक्षणंयथा । स्वरशरविरतिननौरौप्रभेति । य० । पनिदमनविधौबभौसङ्गतापदजलहरिश्वमन्दाकिनी । सुरनिकृतसिताम्बुजसङ्गिभाहरतुजगदघंमपीताम्बर : ॥ प्रभाति । भादीप्तौ । आतश्चोपसर्गेइक : ॥ दुर्गायाम्

॥ सूर्यपत्न्या ॥ गोपीविशेषे ॥
प्रभाकरः । पुं० अग्नौ ॥ सूर्ये प्रभां करोति । दिवाविभेतिटः अर्कवृत्ते ॥ चन्द्रे ॥ समुद्रे ॥ मीमांसैकदेशिनि ॥
प्रभाकीटः । पुं० खद्योते ॥
प्रभाञ्जनः । पुं० शोभाञ्जने ॥ प्रभामनक्ति । अञ्जू० । कर्त्तरिल्युट् ॥ बहुलमन्यत्रापीतियुज्वा ॥
प्रभातम् । न० प्रातःकाले । दिनादौ । प्रत्यूषे । उषसि ॥ भातुंप्रवृत्तम् आदिकर्मणिक्तः ॥ वैद्यःपुरोहितोमन्त्रीदैवज्ञोथचतुर्थकः । प्रभातकालेद्रष्टव्योनित्यंलक्ष्मिमिच्छता ॥
प्रभावः । पुं० शक्तौ ॥ नीतिवेदिनां प्रभावोत्साहमन्त्रजासुशक्तिषु ॥ कोशदण्डजतेजसि ॥ प्रतापे ॥ महिमनि ॥ भवत्यनेन । भू० । श्रिणीभुवोनुपसर्गेइ० घञ् ॥ भवनंभावः ॥ प्रकृष्टोभावः ॥ प्रभुत्वशक्त्यतिशये ॥
प्रभावान् । त्रि० प्रभायुक्ते ॥
प्रभावती । स्त्री० मालिकानामकोनविंशवृत्तार्हन्मातरि ॥ गणानांवीणायाम् ॥ छन्दोभेदे ॥ यथा । एतेक्रमात्तभसजसंज्ञका गणागश्चान्तोयदिनिहितोमहीपते । वेदैर्ग्रहैर्भवतियतिंस्वशोभनानागाधिपोवदतितदाप्रभावतीम् ॥

प्रभावनः । त्रि० सम्पादयितरि ॥ प्रभावयति । कर्त्तरिल्युट् ॥ ङीपिप्रभावनी ॥
प्रभावी । त्रि० महानुभावे ॥ प्रभावोस्यास्य । इनिः ॥
प्रभाषः । पुं वसुविशेषे ॥
प्रभाषितम् । न० वचने ॥ प्रकृष्टंभाषितम् ॥
प्रभासः । सोमतीर्थे ॥ पुष्करेत्तगादेव्याः स्थाने ॥ प्रभासेसोमतीर्थेसोदेवीचपुष्करेत्तगेत्यागमात् ॥ जैनगणाधिपविशेषे ॥
प्रभिन्नः । पुं० मत्तहस्तिनि । गलिते । मत्ते ॥ त्रि० विदीर्णे ॥ प्रकृष्टभेदविशिष्टे ॥ प्रकर्षेणभिद्यतेस्म । भिदिर्० क्तः ॥
प्रभुः । पुं० ईश्वरे ॥ आत्मनि ॥ पारदे ॥ शब्दे ॥ त्रि० निग्रहानुग्रहसमर्थे । स्वामिनि । मदीयोयमितिस्वीकर्त्तरि । अधिभुवि । नायके ॥ नित्ये ॥ शक्ते ॥ प्रभवति । भू० । विप्रसम्भ्वड्० डु ॥ परमेश्वरे ॥ प्रभवति० सृष्टिस्थितिसंहारप्रवेशप्रशासनेषु० इतिप्रभुः
प्रभुता । स्त्री० विभुतायाम् ॥
प्रभुत्वम् । न० ऐश्वर्ये ॥ स्वाम्ये ॥
प्रभुभक्तः । पुं० उत्तमाश्वे ॥ त्रि० स्वामिन्यनुरक्ते ॥ प्रभोर्भक्तः ॥
प्रभुशक्तिः । स्त्री० कोशदण्डबले ॥

प्रभो : पत्न्याम् ॥ प्रभोःशक्ति : ॥
प्रभूतम् । त्रि० उद्गते ॥ प्रचुरे । प्राज्ये ॥ पुं० ज्ञानैश्वर्यादिगुणै: संपन्ने भगवति ॥ प्रभवतिस्म । भू० । गत्यर्थेतिक्त : ॥ प्रकृष्टेषुमहाभूतेषु
प्रभूष्णु : । त्रि० शमे । शक्ते ॥
प्रभृति : । अ० तदादौतत : प्रभृति पितर : पिण्डसंज्ञान्लेभिरे ॥ इतितिथ्यादितत्वम् ॥
प्रभृति : । पुं० तदादौ ॥
प्रभेद : । पुं० भेदे । प्रकारे । विशेषे । भिदायाम् । अन्तरे ॥ प्रकृष्टोभेद : ॥
प्रभ्रष्टकम् । न० चूडालम्बिमाल्ये । शिखातोलम्बमानमाल्ये ॥ प्रभ्रंशितंप्रवृत्तम् । आदिकर्मणिक्त : ० कर्तरिच । स्वार्थेकन् ॥
प्रमत्त : । त्रि० अनवहिते । अनवधानतायुक्ते । प्रमादिनि । व्यसनासक्ते ॥ शीलसंरक्षणेनरहिते ॥ यथा । सन्ध्यापूजाविहीनश्चप्रमत्त : पतित : स्मृत : इतिमत्वराज्ञानाज्ञा नयितव्योयथा । मत्तोन्मत्तप्रमत्ता. र्त्तभृत्याज्ञाज्ञानयेन्नृप : ॥ प्रमाद्यतिस्म । मदी० । गत्यर्थेतिक्त : । नध्याख्येतिनत्वाभाव : ॥
प्रमथ : । पुं० षट्त्रिंशत्कोटिसङ्ख्याके हरपारिषदे ॥ दुष्टान्प्रकर्षेणमथयति । मथि० । प० अच् ॥ भूतविशेषे ॥ प्रमथ्यतेमन्त्रादिना । खनोघचेतिघ : ॥ घोटके ॥
प्रमथनम् । न० वधे । मारणे ॥ मथहिंसायाम् । ल्युट् ॥
प्रमथनाथ : । पुं० महाभैरवे ॥ प्रमथानांनाथ : ॥ यथा । भवद्भवनदेहली प्रकटचण्डदण्डाहतस्फुटन्मुकुट कोटिभिर्मघवदादिभिर्भूयते । व्रजामिभवदन्तिकंप्रकृतिमेत्यपैशाचिकीं किमित्यमरसम्पदं प्रमथनाथनाथामहे ॥
प्रमथा । स्त्री० हरीतक्याम् ॥
प्रमथाधिप : । पुं० शिवे ॥ प्रमथानां योगिविशेषगणानामधिप: ॥ ते गणा यथा । षट्त्रिंशत्सहस्राणि प्रमथाद्विजसत्तमा : । तत्रैकत्र सहस्राणिभागेषोडशसंस्थिता : ॥ नानारूपधरायैवैजटाचन्द्रार्द्धमंडिता : । तेसर्वेसकलैश्वर्ययुक्ताध्यानपरायणा : ॥ योगिनोमदमात्सर्यदम्भाहङ्कारवर्ज्जिता : । क्षीणपापा महाभागा : शम्भो : प्रीतिकरा : परा : ॥ नतेपरिग्रहंरागंकाङ्क्षन्ति स्मकदाचन । संसारविमुखा: सर्वे यतयोयोगतत्परा : ॥ ध्यानावस्थं महादेवं परिवार्यधृतव्रता : । कृत्वा परिषदंतस्यातिष्ठन्तिविगतक्लमा : ॥ यदेवपरमंज्योतिश्चिन्तयन्त्यम्बिकापति : । तदेवतेपारिषदा : स

र्वसंवेष्टयन्तितम् ॥ तेषोडशसमा ख्याता : कोटयोयेधृतव्रता : । सि द्ध्याद्यादिसारूप्याग्णिमादि समायुता :" ॥ इत्यादिकालिका पुराणपाठोद्रष्टव्य : ॥

प्रमथितम् । न० निर्जलतक्रे ॥ त्रि० तुन्ने ॥ प्रकर्षेणमथितम् ॥

प्रमथ्या । स्त्री० पेयद्रव्यान्तरे ॥ तस्या : विधिर्गुणाश्चयथा । प्रमथ्या प्रोच्यतेद्रव्यपलात्कल्कीकृताच्छृतात् । तोयेष्टगुणितेतस्या : पान माहु:पलद्वयम् ॥ द्रव्यं० पाच्यद्रव्यम् । तस्या : पलद्वयशेषाया : ॥ गुणे : प्रमथ्यापेयाचततोलघ्वीविशेषत : ॥

प्रमद : । पुं० सम्मदे । हर्षे । मुदि । प्रीतौ ॥ धत्तूरफले ॥ त्रि० मत्ते ॥ मदोहर्षे ॥ प्रमदसम्मदौहर्षेइत्यप् ॥

प्रमदकाननम् । न० प्रमदवने ॥

प्रमदनम् । न० प्रमादे ॥

प्रमदवनम् । न० राज्ञोन्त : पुरोचितवने । यत्रसस्त्रीकोराजाक्रीडति० तस्मिन्नुद्याने ॥ प्रमदानां वनम् । ङ्यापोरितिह्रस्व : ॥

प्रमदा । स्त्री० उत्तम योषिति ॥ प्रमदोहर्षोऽस्त्यस्या: ॥ यद्वा । प्रमदयतिपुरुषम् । मदी० । अच् । टाप् ॥

प्रमदाकाननम् । न० प्रमदवने ॥

प्रमदावनम् । न० प्रमदवने ॥ प्रमदानांवनम् ॥

प्रमना : । त्रि० हृष्टमानसे ॥ प्रकृष्टं मनोयस्य ॥

प्रमय : । पुं० वधे ॥

प्रमा । स्त्री० यथार्थानुभवे । प्रमितौ । बोधे । ज्ञाने ॥ यथाहु : साङ्ख्यविद : । असन्दिग्धाऽविपरीताऽनधिगतविषयाचित्तवृत्तिर्बोधश्च पौरुषेय : फलंप्रमेति । असन्दिग्धेत्यादिप्रमेत्यत्रान्वेति । स्मृतिसाधारणेत्वनधिगतपदं नदेयम् । अविपरीतोऽबाधित : । साङ्ख्यसिद्धान्ते० चक्षुरादे : करणत्वाभावादाह०चित्तवृत्तिरिति । प्रमास्वरूपमाह०बोध : पौरुषेयइति० चैतन्यप्रकाशरूपइत्यर्थ : । ननु चैतन्यप्रकाशस्यनित्यत्वात्कथं प्रमाणफलत्वव्यवहारइत्यतआह०फलं प्रमेति । तथाचैतन्यप्रकाशस्यनित्यत्वेपितत्तदर्थोपरक्तवृत्तिप्रतिबिम्बाश्रयत्वे नप्रमाणकार्यत्वादित्यर्थ : ॥ प्रमीयते । माङ् माने । आतश्चोपसर्गइत्यङ् । टाप् ॥ अनधिगताबाधितार्थानुभवरूपाप्रमेतिव्याख्यातार : । सा चप्रत्यक्षानुमित्युपमितिशाब्दार्थापत्त्येनुपलब्धिभेदेनषोढा ॥

प्रमाणम्

न्यायमते० तद्वतितत्प्रकारकज्ञाने । भ्रमभिन्नज्ञाने ॥ अस्याः कारणंगुणः । सचप्रत्यक्षे० विशेष्ये विशेषणस्यसम्बन्धः । अनुमितौ० साध्यविशिष्टपक्षेपरामर्शः । शाब्दबोधे० योग्यतायाःतात्पर्यस्यवायथार्थज्ञानम् । उपमितौ० शक्ये साहश्यबुद्धिः । यथा । दोषोऽप्रमाया जनकःप्रमायास्तुगुणोभवेत् । प्रत्यक्षे तुविशेष्ये णविशेषणवतासमम्- ॥ सन्निकर्षोगुणस्तुस्यादथत्वनुमितौपुनः । पक्षेसाध्यविशिष्टे चपरामर्शोगुणोभवेत् ॥ शक्ये साहश्यबुद्धिस्तुभवे दुपमितौगुणः । शाब्दबोधेयोग्यतायास्तात्पर्यस्याथवाप्रमा ॥ गुणः स्याद्भ्रमभिन्नन्तुज्ञानमत्रोच्यते प्रमा । अथवातत्प्रकारंयज्ज्ञानंस्यात्तद्विशेष्यकम् ॥ इति॥ प्रमाणमप्रमाणञ्चप्रमाभासस्तथैवच । कुर्वन्त्येवप्रमांयत्रतदसम्भावनाकृतः ॥

प्रमाणम् । न० नित्ये । शाश्वते ॥ शास्त्रे ॥ सत्यवादिनि ॥ इयत्तायाम् । परिच्छेदे ॥ यथा । कियत्प्रमाणमुदकम् ॥ मर्यादायाम् । अवधौ- ॥ यथा । राजानं माञ्चप्रमाणं कृत्वा० अवधिं कृत्वेत्यर्थः ॥ हेतौ । ज्ञप्तिनिमित्ते ॥ यथा । अग्नौप्रमाणंधूमः ॥ प्रमातरि ॥

प्रमाणम्

यथा ॥ अत्रार्थेप्रभुः प्रमाणम् ॥ नित्यक्लीवैकत्ववानयंशब्दः । यथा ॥ वेदाः प्रमाणंस्मृतयः प्रमाणमित्यादि ॥ बहुवचनान्तमपि । यथा । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति ॥ प्रमाकरणे ॥ प्रमातायेनार्थंप्रमिणोतितत्प्रमाणम् । प्रमीयतेऽनेनेतिनिर्वचनात्प्रमांप्रतिकरणत्वंगम्यते । असन्दिग्धाविपरीतानधिगतविषयाचित्तवृत्तिर्बोधश्चपौरुषेयफलंप्रमा० तत्साधनंप्रमाणमिति । एतेन० संशयविपर्ययस्मृतिसाधनेष्वप्रसङ्गः ॥ * ॥ प्रत्यक्षानुमानशास्त्रोपमानार्थापत्त्यभावाख्यानि० षट्प्रमाणानीतिवैदिकाः । प्रत्यक्षानुमानागमाः प्रमाणानित्रीणीतियोगाः । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीतिनैय्यायिकाः । अत्रतद्वतितत्प्रकारकत्वरूपप्रकर्षविशिष्टज्ञानं० प्रशब्दविशिष्टेनमाधातुनाप्रत्याय्यते० तत्करणत्वंप्रमाणत्वम् । ज्ञानञ्चात्रानुभवोविवक्षितः । तेनस्मृतिकरणेनातिव्याप्तिः । लक्षितानांप्रमाणानांविभागः प्रत्यक्षानुमानोपमानशब्दाइति० विभागस्त्वोद्देश एवान्तर्भूतत्वादयंविशेषोद्देशः ॥ प्रत्येकलक्षणन्तुयथास्थानेद्रष्टम् ॥ एषांचान्तर्भावबहिर्भावाभ्यांसङ्कोच

विकाशोद्रष्टव्यौ ॥ + ॥ प्रमितिसाधने ॥ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याश्च०प्रमाणानि । श्रुतिर्द्वितीयाश्रुमताचलिङ्गंवाक्यंपदान्येवतुसंहतानि । साप्रक्रियायाकथमित्यपेक्षास्थानंक्रमोयोगवलंसमाख्या ॥ लक्षणायाम् ॥ वोधके ॥ बाधकज्ञानरहितमगृहीतग्राहिज्ञानंप्रमाणम् ॥ आयामस्तुप्रमाणंस्यादितिवार्त्तिकायेतु०आयामोदैर्घ्यम् यथेनमीयते तत्प्रमाणम् । तच्चक्कचित्तिर्यगवस्थितस्यवस्तुनः । यथा । वस्त्रादेर्हस्तादिः । क्कचिदूर्ध्वाधरदिगवस्थितस्य । हारितमुदकम्० जरुद्वयसमुदकमित्युक्तम् ॥ प्रमीयते०प्रमिमीतेऽनेनवा । करणे०कर्त्तरि०भावेचल्युट् ॥ प्रत्यक्षमेकंचार्वाकाःकणादसुगतौपुनः । अनुमानञ्चतच्चापिसाङ्ख्याःशब्दञ्चतेअपि ॥ न्यायैकदेशिनोप्येवमुपमानञ्चकेचन । अर्थापत्त्यासमेतानिचत्वार्याहुःप्रभाकराः॥अभावषष्ठान्येतानिभट्टावेदान्तिनस्तथा । सम्भवैतिह्ययुक्तानितानिपौराणिकाजगुः ॥ प्रभाकरोमीमांसकैकदेशी । वेदान्तिनोपिव्यवहारकालेश्राहुरितिसम्बन्धः ॥ वेदोऽनादितयावायद्वापरमेश्वरप्रणीततया । भवतिपरमंप्रमाणंबोधोनास्तिस्वतस्यपरतोवा ॥ नापेक्षतेयदन्यद्दपेक्षन्तेऽखिलानिमानानि । वाक्यंतन्निगमानांमानंब्रह्माद्यतीन्द्रियावगतौ ॥ मानंप्रबोधयन्तंवोधंमानेनयेवुभुत्सन्ते । एधोभिरेवदहनंदग्धंवाञ्छन्तितेमहात्मानः ॥ वेदोऽनादिरमुष्यव्यञ्जकईशः स्वयंप्रकाशात्मा । तदभिव्यक्तिमुदीच्यप्रोक्तोसौसूरिभिः प्रमाणमिति ॥ रूपाणामवलोकेचक्षुरिवान्यन्नकारणंदृष्टं । तद्वद्दृष्टावगतौ वेदवदन्योनवेदकोहेतुः ॥ निगमेषुनिश्चितार्थंतन्त्रेकश्चिद्यदिप्रकाशयति । तदिदमनुवादमात्रंप्रामाण्यंतस्यसिद्धातिनंकिञ्चित् ॥ अनुभूतौप्रमाणानांपरिनिष्ठासमाप्यते । ततस्तयैवयाप्तिः किन्त्वान्यंप्रमान्तरैः ॥

**प्रमाणवाधितार्थकः ।** तर्कविशेषे । आत्माश्रयादिचतुष्कान्यप्रसङ्गत्वञ्चतस्यलक्षणम् । सद्विविधः । व्याप्तिग्राहकोविषयपरिशोधकश्चतत्राद्यो यथा । धूमोयदिवह्निव्यभिचारीस्यात्तदावह्निजन्योनस्यात् । द्वितीयस्तु० पर्वतोयदिनिर्वह्निः स्यात्निर्धूमः स्यात् ॥

**प्रमाणभूतः ।** त्रि० प्रामाण्यंप्राप्ते ॥

**प्रमाणमूलः ।** पुं० परमात्मनि । चक्षुरादीनांचक्षुरादिरूपे ॥

**प्रमाणविषयः ।** त्रि० अविज्ञातवस्तुनि ॥ अविज्ञातः प्रमाणानांविष

योवादिनांमत : ॥
प्रमाणसामान्यम् । न० त्रिविधप्रमाणे ॥ दृष्टमनुमानमाप्तवचनञ्चसर्वप्रमाणसिद्धत्वात् । त्रिविधंप्रमाणमिष्टंप्रमेयसिद्धि : प्रमाणाद्धि ॥
प्रमाणिका । स्त्री० अनुष्टुभ : प्रभेदे ॥ यथा । प्रमाणिकाजरौलगौ । यथा । पुनातुभक्तिरच्युतासदाऽच्युताङ्घ्रिपद्मयो : । श्रुतिस्मृतिप्रमाणिकाभवाम्बुराशितारिका ॥
प्रमातामह : । पुं० मातामहपितरि ॥ प्रकृष्टोमातामह : । प्रादिसमास: ॥
प्रमातामही । स्त्री० मातामहजनन्याम् ॥ प्रकृष्टामातामही । प्रादिस० ॥
प्रमाता । पुं० वृत्तिमदन्त : करणोपहिते० प्रमाणव्यापाराश्रये० बुद्धिप्रतिबिम्बितेचिदात्मनि ॥ लौकिकवैदिकव्यवहारेष्वभ्रान्तेजीवे ॥ प्रमाणैर्यौर्थंप्रमिणोति० सचचेतनोजीवउच्यते ॥ प्रकृष्टोमाता ॥ प्रमातारम् विनाशास्त्रंकस्यस्वार्थावबोधकृत् । प्रमातापिविनाशास्त्रंकेनार्थमवबुध्यते ॥ स्मृतिनिश्चयसन्देहरागद्वेषादिवृत्तिषु । अन्तरूपेणयोन्वेतिसप्रमातास्यनिश्चचित् ॥ वृत्तिमदन्त : करणावच्छिन्नाचित्प्रमातेति ॥ स्मराम्यहंनिश्चिनोमिसंशयेरागवानिति । अहंरूपान्वय : स्पष्ट : कर्त्ताभोक्ताप्यसौभवेत् ॥ प्रकृष्टोमाता ॥
प्रमाथ : । पुं० प्रमथने । बलाद्धरणे ॥
प्रमाथी । त्रि० प्रमथनशीले । देहेन्द्रियक्षोभके । व्याकुलत्वकारणे ॥ अतिबलीयसि । उपमर्दनक्षमे ॥ शरीरमिन्द्रियाणिचप्रमथितुंक्षोभयितुंशीलमस्यतस्मिन् ॥ मथेविलोडने । प्रिलपेत्यादिनातच्छीलादिषुविनुण् ॥
॥ पुं० वत्सरविशेषे ॥ राष्ट्रभङ्गश्चदुर्भिक्षंतस्करैश्चोपपीडनम् । जानीयाद्विग्रहंघोरंप्रमाथिनिवरानने ॥ १३॥ निष्पत्ति : सर्वशस्यानां सुभिक्षंभवतिप्रिये । प्रमाथिनिजलोद्गारीजलदोमोदतेप्रजा ॥ ४७ ॥ वानरान्तरे
प्रमाद : । पुं० अविमृष्टकृत्ये । अनवधानतायाम् ॥ यथा० समाधिसाधनानुष्ठानसामर्थ्येऽपि अनुष्ठानशीलता० विषयान्तरव्यावृत्ततयायोगसाधनेष्वौदासीन्यमितियावत् ॥ वस्तुविवेकासामर्थ्ये ॥ चित्तविक्षेपे ॥ सत्त्वकार्यप्रकाशविरोधिनि ॥ तत्कालकर्त्तव्यत्वेनप्राप्तस्यार्थस्यानुसन्धानाभावे । पूर्वंकर्त्तव्यतयानिश्चितेप्यकर्त्तव्यताबुद्धौ ॥ मदीहर्षे । भावेघञ् । प्रकृष्टोमाद : ॥ स्वाभाविकब्रह्मभावात्प्रच्युतौ ॥
प्रमादवान् । त्रि० ज्ञान्ते । प्रमादयुक्ते ॥ प्रमादोऽस्त्यस्यास्मिन्वा । मतुप् ॥

प्रमादिका । स्त्री० दूषितायांकन्यायाम् । संवेटायाम् ॥

प्रमादी । त्रि० प्रमादवति । अनवधानतायुक्ते ॥ यथा । कुरङ्गमातङ्गपतङ्गभृङ्गमीनाहताः पञ्चभिरेवपञ्च । एकः प्रमादीसकथंनहन्यतेयः सेवतेपञ्चभिरेवपञ्च ॥ मद्दीहर्षे । सत्त्वीलादिषु० णमित्यष्टाभ्योपिनुण् ॥ अनात्ममात्प्रवणे । मुमुक्षा‌दिप्रयोजनेष्वासक्तान्तर्मसि ॥ यथा । प्रत्यक्षगोचरं देवलोकस्यातिप्रमादिनम् । दृष्ट्वाश्रुतिः शिरस्ताडमनुक्रोशतिदुःखिता ॥ स्वप्नेपरीचितेद्रष्टादेहादभिन्नेः स्वयम्प्रभः । सुविवेचस्तथाप्येतं परीक्षन्तेनपामराः ॥ अपिच । प्रमादिनोबहिश्चित्ताः पिशुनाः कलहोत्सुकाः । संन्यासिनोपिदृश्यन्ते दैवसन्दूषिताशयाः ॥

प्रमापकः । त्रि० प्रमाजनके ॥

प्रमापणम् । न० निबर्हणे । मारणे । वधे ॥ मीञ्हिंसायाम् । स्वार्थण्यन्तः । भावेल्युट् ॥

प्रमायुकः । त्रि० प्रमरणशीले ॥

प्रमितः । त्रि० ज्ञाते ॥ माङ्माने । आदिकर्मणिक्तः कर्त्तरिचेतिक्तः । द्यतिस्यतीतीत्त्वम् ॥

प्रमिताचरा । स्त्री० जगतीछन्दोभेदे ॥ य० । प्रमिताचरामजसमैः कथिता । यथा । अमृतस्यशीकरमिशोद्भिरतीरदमौक्तिकांशुलहरीकुरिता । प्रमिताचरामुररिपोर्भणितिर्व्रजसुभ्रुवामभिजहाररमनः ॥ त्रि०प्रकर्षेणमिताचरे ॥

प्रमितिः । स्त्री० यथार्थज्ञाने । प्रमायाम् ॥ प्रमाणम् । डुमिञ्० । क्तिन् ॥

प्रमीढः । त्रि० मूत्रिते ॥ घने ॥

प्रमीतः । त्रि० प्रोक्षिते । यज्ञार्थहतपशौ ॥ मृते ॥ प्रमीयतेस्म । मीञ्० । गत्यर्थेतिकर्त्तरिकर्मणिक्तः ॥

प्रमीला । स्त्री० तन्द्र्याम् । अत्यन्तश्रमादिनेन्द्रियापटुत्वे । विषयाज्ञाने ॥ प्रमीलनम् । मीलनिमेषणे । गुरोश्चेत्यः ॥

प्रमुखः । पुं० पुन्नागवृक्षे ॥ न० तदात्वे । तत्काले ॥ त्रि०प्रथमे ॥ श्रेष्ठे । मुख्ये ॥ प्रकृष्टंमुखमस्य ॥

प्रमुखतः । अ० सम्मुखे ॥

प्रमुद्०त् । त्रि० हृष्टे ॥ आनन्दे ॥ यथा । आत्मन्यैमहतिपटे विविधजगच्चित्रमात्मनालिखितम् । स्वयमेवकेवलमसौपश्यन्प्रमुदंप्रयातिपरमात्मा ॥

प्रमुदितः । त्रि० हृष्टे ॥ प्रमोदतेस्म । मुदहर्षे । क्तः ॥

प्रमृतम् । न० कर्षणाख्यवृत्तौ ॥ प्रमृ

संकर्षणं स्मृतमितिमनुः। कर्षणाद्भूमिगतप्रचुरप्राणिमरणनिमित्तत्वाद्दुःखफलकम्॥ त्रि॰ प्रकर्षेणस्मृते॥

प्रमृष्टः। त्रि॰ व्यामृष्टे॥

प्रमेयः। त्रि॰ प्रमाविषये। प्रत्यक्षादिप्रमाणैः परिच्छेद्ये॥ यत्प्रमीयतेतत्प्रमेयम्। यथाजीवब्रह्मैक्यम् शुद्धचैतन्यं वेदान्तानांप्रमेयम्॥ आत्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्॥ इ॰ गोतमसूत्रम्। ९॥ प्रकृष्टंमेयम्॥ प्रमीयते। माङ्॰। अचोयत्। ईद्यति। गुणः॥ प्रमातुंयोग्योवा॥ प्रमाणाधीनाप्रमेयसिद्धिः॥ प्रमाणमप्रमाणञ्चप्रमेयोनिश्चितिस्तथा। यस्मान्निध्यात्प्रसिध्यंतितत्सिद्ध्यैकिमपेच्यते॥

प्रमेयत्वम्। न॰ अज्ञातत्वे। प्रमाविषयत्वे॥ भावे॰ त्वः॥

प्रमेहः। पुं॰ शुक्रघटितरोगविशेषे। मूत्रदोषे। मेहे॥ प्रकृष्टोमेहः॥ अस्यनिदानम्। आस्यामुखंस्वप्नसुखंदधीनिग्राम्यौदकानूपरसाः पयांसि। नवान्नपानं गुडवैकृतञ्चप्रमेहहेतुः कफकृच्चसर्वम्॥

प्रमोदकः। पुं॰ मोचने॥ प्रकर्षेणमुच्यते। मुच्लृ॰। कर्मणिघञ्॥

प्रमोचनः। त्रि॰ प्रमोचणे॥ प्रकृष्टमोचनकर्तरि॥

प्रमोचनी। स्त्री॰ गवाच्याम्। गोडुम्बायाम्॥

प्रमोदः। पुं॰ हर्षे॥ मुद॰। घञ्। प्रकृष्टोमोदः॥ वत्सरवि॰। उन्मत्तञ्चजगत्सर्वंवनधान्यसमाकुलम्। नित्योत्सवः प्रजावृद्धिः प्रमोदेजायतेप्रिये॥ ४॥

प्रमोदनः। पुं॰ विष्णौ॥ प्रमोदतेहृष्यतिस्वरूपानन्दानुभवात्॰। मुद॰। अनुदात्तेतश्चहलादेरितियुच्॥ ध्यायिनोयोगिनः प्रमोदयतिहर्षयति। मुदेःप्रपूर्वाण्णिजन्तात्कर्त्तरिल्युट्॰ औणादिकोयुज्वा॥

प्रमोदितः। पुं॰ कुवेरे॥ मुद॰। क्तः। उदुपधादितिवाकित्॥ त्रि॰ प्रमोदयुक्ते॥

प्रमोदी। त्रि॰ प्रकृष्टहर्षयुक्ते॥

प्रमोदिनी। स्त्री॰ जिङ्गिनीवृक्षे॥

प्रम्लोचा। स्त्री॰ अप्सरोविशेषे॥

प्रयन्। त्रि॰ गच्छति॥ प्रैति। इणः शतरि॰ यणादेशः॥

प्रयतः। त्रि॰ पवित्रे॥ अहिंसारते॥ प्रयच्छतिस्म। यम॰। अकर्मकत्वात्कर्तरिक्तः। मलोपः॥ यद्वा। प्रयतते। यतीप्रयत्ने। अच्॥

प्रयतनम्। न॰ साधने॥ प्रपूर्वाद्यततेर्नपुंसकेभावेल्युट्॥

प्रयतात्मा। त्रि॰ शुद्धबुद्धौ॥ प्रयतआ

त्मायस्य : ॥
यत्ता । चि॰ संस्कृते ।
यत्न : । पुं॰ पुरुषकारे । कृतौ ।
प्रयासे । करण॰करणे॰द्र॰भा॰॥
सर्वमेवेह हिसदा संसारे रघुनन्दन
। सम्यक्प्रयत्नात्सर्वेण पौरुषात्स
मवाप्यते ॥ प्रयतनम्॰ प्रयत्यतेऽने
नवा । यतीप्रयत्ने । यजयाचेतिन
ङ् ॥ व्यायमतेसचत्रिविधो यथा ।
प्रवृत्तिश्चनिवृत्तिश्चतथाजीवनकार-
णम् । एवंप्रयत्नत्रैविध्यं तान्त्रिकैःप
रिदर्शितम् ॥ चिकीर्षाकृतिसाध्ये
ष्टसाधनत्वमतिस्तथा । उपादानस्य
चाध्यक्षंप्रवृत्तौजनकोभवेत् ॥ नि
वृत्तिस्तुभवेद्द्वेषा द्विष्टसाधनता
धिय : । यत्नोजीवनयोनिस्तुसर्वदा
तीन्द्रियोभवेत् ॥ शरीरप्राणसञ्चारे
कारणंपरिकीर्त्तितम् । इ॰ भा॰
प॰ ॥ वैयाकरणरीत्यातुवर्णानांकर
णान्तरे । सचाभ्यन्तरबाह्याभ्यांभेदा
भ्यांद्विविधोमत : ॥ तत्राद्यश्चतुर्धा
। स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदा
त् । तत्रस्पृष्टंप्रयतनंस्पर्शानाम् ई
षत्स्पृष्टमन्तस्थानाम् ॥ विवृतमूष्म
णाम्स्वराणाञ्च । ह्रस्वावर्णप्रयोगेसं
वृतम् । प्रक्रियादशायान्तुविवृतमे
व । एतेषामाभ्यन्तरत्वम्वर्णोत्पत्ति
प्रागभाविकत्वात् । तथाहि । नाभि
प्रदेशात्प्रयत्नप्रेरितोवायु : प्राणो-
नाम॰ ऊर्ध्वमाक्रामन्नुर : प्रभृतीनि
स्थानान्याहन्ति॰ ततोवर्णस्य॰तद
भिव्यञ्जकसाधुर्नर्वा॰उत्पत्ति : । त
चोत्पत्तेः प्राग्यदाजिह्वाग्रोपाग्रम
ध्यमूलानि॰तत्तद्वर्णोत्पत्तिस्थानंता
ल्वादिसम्यक्स्पृशन्ति॰तदास्पृष्टता
। ईषद्यदास्पृशन्तितदेषत्स्पृष्टता
। समीपावस्थानमात्रेसंवृतता । दू
रत्वेचविवृतता । अतएवइचुयशा
नांतालव्यत्वाविशेषेपि॰तालुस्थाने
नसहजिह्वाग्रादीनां॰चवर्गोच्चारणे
कर्तव्येसम्यक्स्पर्शः शकारेकारयो
स्तुदूरेऽवस्थितिरित्याद्यनुभवं शिक्षाका
रोक्तिश्चानुसृत्यविवेचनीयम् ॥ वा
ह्यस्त्वेकादशधा । विवारः संवारः
श्वासो॰नादोघोषोऽघोषोल्पप्राणो
महाप्राण॰उदात्तोऽनुदात्तः स्वरित
श्चेति । वर्गेष्वाद्यानाञ्चतुर्णां पञ्च
मेपरे मध्ये यमोनामपूर्वसदृशोवर्ण :
प्रातिशाख्ये प्रसिद्ध : २० । यथापलि
क्क्नी॰चख्खनुतु : अग्ग्निः॰ घ्घ्न
न्ति॰इत्यत्रक्रमेण॰कखगघेभ्य: परे
तत्सदृशाएवयमा : । तथाच॰खफ
छठथचटतकपा : एतद्या : ᳵक
ᳶपौ॰विसर्ग : शषसा : २६ ए
षांविवारश्वासघोषा : । (०)०)०)
हयवरलञमङणनझभघढधजबगा
डदा : ॰ एतद्यमा : ॰ स्वरानुस्वा
रा : ४० एषांसंवारनादघोषा : ।

कचटतपगजडदबङञणनमाः०तद्य सा : यरलवाः० स्वराः ३८ एषो मल्पप्राणाः। खछठथफघझढधभाः एतद्यमा : शषसहाः० अनुस्वार विसर्ग ᳲ क ᳳ पाः १८एषांमहाप्राणाः। अइउऋलृएऐओऔ ९ एषामुदात्तानुदात्तस्वरिताः॥ विवारमंवाराद्यस्तु० वर्णोत्पत्तेः पश्चान्मूर्द्धिप्रतिहते निवृत्ते प्राणाख्ये वायावुत्पद्यन्ते० इतिबाह्योद्गत्यच्यन्ते। गलबिलस्यसङ्कोचात्संवारः। तस्यैवविकाशाद्विवारः। एतौत्वसंवृतविवृतरूपाभ्यन्तराभ्यांभिन्नावेव। तयो [illegible]रावस्थानात्मकत्वादित्यवधेयम्॥

प्रयत्नवान्। त्रि० प्रतियत्ने। प्रकृष्टयत्नविशिष्टे॥ प्रयत्नोस्यास्ति। मतुप्॥

प्रयत : । त्रि० सुसंस्कृते। द्रुतचतुर्यातादिद्रव्यान्तरसंपर्कप्रयत्नात्संस्कृते पक्वव्यञ्जनादौ प्रयस्यतेस्म। यमुप्रदाने। दानर्थ्यिक्तः॥

प्रयाग : । पुं० तीर्थविशेषे। भास्करक्षेत्रे॥ अत्रमुण्डनंकर्त्तव्यम्। मुण्डनञ्चोपवासश्चसर्वतीर्थेष्वयंविधि :। वर्जयित्वागयांगङ्गांविशालांविरजांतथा॥ प्रयागेतीर्थयात्रायांपितृमातृवियोगतः। कचानांवपनंकुर्याद्वृथानविकचोभवेत्॥ गङ्गायांभास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ। आधानेसोमपानेचवपनंसप्तसुस्मृतमितिस्मृतिसमुच्चयलिखितवचनं प्रयागावच्छिन्नगङ्गायविधायकम्। गङ्गायांभास्करक्षेत्रे मुण्डनंयोनकारयेत्। सकोटिकुलसंयुक्तआकल्पंरौरवेवसेत्॥ यज्ञे॥ शतमखे। शक्रे॥ अश्वे॥

प्रयागभय : । पुं० इन्द्रे॥

प्रयाज : । पुं० यज्ञाङ्गे॥ दशप्रयाजाः। यजेर्घञि०प्रयाजानुयाजौयज्ञाङ्गइतिकुत्वाभावोनिपात्यते॥

प्रयाणम्। न० प्रस्थाने। गमने॥ प्रपूर्वायातेर्ल्युट्॥ उद्घाटितेनवद्वारेपञ्जरेविहगोऽनिलः। यत्तिष्ठतितदाश्चर्यंप्रयाणेविस्मयः कुतः॥

प्रयाणकाल : । पुं० अन्तसमये॥ मौक्षिकेवेदितगमनसमये॥ प्रयाणस्यकालः॥

प्रयात्। त्रि० धावति॥ यातेर्लट्ः शत्रादेशः॥

प्रयात : । पुं० सौप्तिके। रात्रियुद्धे॥ भृगौ॥ न० गमने॥ त्रि० गतेऽस्थिते। गया० इ० भा०॥ प्रकर्षेणयातः॥ यातेः कर्मणि क्तोवा॥

प्रयाम : । पुं० नीवाके। महार्घ्यत्वेतोधान्यसंचये॥ आयादरे॥ प्रयम

णम् । यमेर्घञ् ॥
प्रयास : । पुं० आयासे । क्रमे । श्रमे॥ यसनम् । यसुप्रयत्ने । घञ् । प्रकृष्टोयास : ॥
प्रयुक्त : । त्रि० प्रेरिते । निरूपिते ॥ कृतप्रयोगे ॥ युज्यतेस्म । युजिर्० । क्त :॥ प्रकर्षेणयुक्ते ॥ य० । गुण प्रयुक्ता : परमर्मभेदिन : शराइवा वंशभवाभवन्तिहि । तथाविधाये तुविशुद्धवंशजा व्रजन्तिचापाइव तेऽतिनम्रताम् ॥ प्रकर्षेणमिलिते ॥
प्रयुक्ति : । स्त्री० प्रयोजने ॥ प्रकृष्ट युक्तौ ॥
प्रयुतम् । न० नियुते । दशलक्षे ॥ १०००००० ॥
प्रयोक्ता । त्रि० उत्तमर्णे ॥ प्रवर्त्तके ॥ अनुष्ठातरि ॥ महाक्रतोर्विश्वजित : प्रयोक्तेतिरघु: ॥
प्रयोग : । पुं० कार्मणे ॥ प्रयुक्तौ ॥ निदर्शने ॥ वशीकृतौ ॥ अश्वे ॥ अनुष्ठाने ॥ प्रकृष्टोयोग : ॥ शब्दे ॥ प्रयुज्यते प्रयोजनंवा ॥ युजिर्० घञ् ॥
प्रयोगविधि : । पुं० प्रयोगप्राशुभाव बोधकेविधौ ॥ सचाङ्गवाक्यैकवाक्यतापन्न : प्रधानविधिरेव । सहि साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावादविलम्बापरपर्यायंप्रयोगप्राशुभावंविधत्ते । यथा०वेदं कृत्वावेदिंकरोतीत्यादि । नचतदविलम्बेपिप्रमाणाभावइतिवाच्यम् । विलम्बे ह्यङ्गप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्ति : । विलम्बेनक्रियमाणयो : पदार्थयोरिदमनेनसहकृतमितिसाहित्यव्यवहाराभावात् । सचाविलम्बोनियते क्रमआश्रीयमाणेभवति । अन्यथाहि किमेतदनन्तरमेतत्कर्त्तव्यम्०एतदनन्तरंवेतिप्रयोगविक्षेपापत्ते : । अत : प्रयोगविधिरेवस्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थंनियतंक्रममपिपदार्थविशेषणतयाविधत्ते । अतएवाङ्गानांक्रमबोधकोविधि : प्रयोगविधिरित्यपिलक्षणम् । तत्रक्रमोनाम वितति विशेष : पौर्वापर्यरूपोवा । तत्रश्रुत्यर्थपाठादीनिषट्प्रमाणानि भवन्ति ॥
प्रयोगार्थ : । पुं० प्रत्युत्क्रमे । प्रधानप्रयोगानुकूलेप्रयोजनानुष्ठाने ॥ प्रयोजनम् । युजिर्० । घञ् । प्रयोगोर्थोस्य ॥ प्रयोगशब्दैतौ ॥
प्रयोगी । त्रि० प्रयोगवति ॥ प्रयोगोऽस्त्यस्य । अतइनिठनौ ॥ प्रयोक्तरि । ऋत्विजे ॥
प्रयोग्य : । त्रि० अश्वादौ ॥ प्रयुज्यते । युजिर्० । ऋहलोर्ण्यत् ॥
प्रयोजक : । त्रि० प्रयोगकर्त्तरि । नि

योगकर्त्तरि । य: कर्त्तारंकारयति तस्मिन् ॥ प्रेरके । कर्त्तुर्व्यापारानुकूलव्यापारवति ॥ प्रयोजयति । युज्० । ण्वुल् ॥

प्रयोजनम् । न० कार्ये ॥ हेतौ ॥ सर्वस्यैवहिशास्त्रस्यकर्मणोवापिकस्यचित् । यावत्प्रयोजनंनोक्तंतावत्तत्केनगृह्यते ॥ सिद्धार्थंसिद्धसम्बन्धंश्रोतुंश्रोताप्रवर्त्तते । ग्रन्थादौतेनवक्तव्य:सम्बन्ध:सप्रयोजन: ॥ फले ॥ यथा । वेदान्तानांप्रत्यग्ब्रह्मणोरैक्यप्रमेयगताज्ञाननिवृत्तिस्तत्स्वरूपानन्दावाप्तिश्चेतिप्रयोजनम् ॥ प्रयोजनमनुद्दिश्यनमन्दोपिप्रवर्त्तते ॥ युजिर्० । ल्युट् ॥ प्रयोजनंलक्षयति गोतम : । यमर्थमधिकृत्यप्रवर्त्ततेतत्प्रयोजनम् ॥ २४ ॥ अधिकृत्य० उद्दिश्य । तथाच० प्रवृत्तिरिच्छाविषयत्वंप्रयोजनत्वम् । विषयत्वं साध्यताख्यविषयताविशेष : ॥ कारणव्युत्पत्त्याप्रयोजके ॥

प्रयोजयिता । त्रि० नियोजयितरि ॥

प्रयोज्य : । त्रि० भृत्ये । प्रयोक्तुंशक्ये ॥ प्रपूर्वाद्युजेर्ण्यत् । प्रयोज्यनियोज्यावित्यि० कवर्गाभावोनिपातनात् ॥ न० मूलधने ॥

प्ररूढ : । पुं० जठरे ॥ त्रि० वद्धमूले ॥ वृद्धे ॥ प्रकर्षेणरूढ : ॥ जाते ॥

प्ररोह : । पुं० उद्गमे । अङ्कुरे ॥ प्रजन्यग्रोधादौशाखावलम्बिन्यधोमूलेऽङ्कुरे ॥ प्रकृष्टोरोह : ॥

प्ररोही । पुं० नन्दीवृक्षे ॥

प्रलपनम् । न० प्रलापे ॥

प्रलपित : । त्रि० कथिते ॥ प्रपूर्वाल्लपे: कर्मणिक्त : ॥

प्रलब्ध : । त्रि० वञ्चिते ॥

प्रलम्ब : । पुं० दैत्यभेदे ॥ सचमनुष्यवध्य : । यथा । एकाचक्रपभोरिष्ट : प्रलम्बनरकौतथा । इन्द्रवाधनकेशीचपर : शङ्कोथधनुक : ॥ गवेष्टिकोगवाक्षश्चतालकेतुश्चवीर्यवान् । एतमनुष्यवध्यास्तुदनो:पुत्रान्वया : स्मृता : ॥ त्रपुषे ॥ पयोधरे ॥ तालाङ्कुरे ॥ शाखायाम् ॥ हारप्रभेदे ॥ प्रलम्बने ॥ त्रि० लम्बमाने ॥

प्रलम्बघ्न : । पुं० रामे । वलदेवे ॥ प्रलम्बंहतवान् । मू० क : ॥

प्रलम्बभित् । पुं० वलभद्रे ॥ प्रलम्बंभिनत्ति । भिदिर्० । क्विप् ॥

प्रलम्बाण्ड : । पुं० दीर्घाण्डकोषिणि ॥ प्रलम्ब : अण्डोयस्यस : ॥

प्रलम्बित : । त्रि० प्रकर्षेणलम्बमाने माल्यादौ ॥

प्रलम्भनम् । न० मिथ्याफलाख्याने ॥ वञ्चने ॥

प्रलय : । पुं० मरणे ॥ मृत्यौ ॥ प्रकर्षेणालीयन्तेऽस्मिन्नितिव्युत्पत्त्यासंहर्त्त

रि ॥ मूर्च्छायाम् । नष्टचेष्टत्वे । सात्त्विकभावे ॥ प्रलय : सात्त्विकोभावइत्युक्त : ॥ क्षये ॥ तिरोभावे ॥ सत्कार्यवादेह्निकपालेपुविद्यमानस्यैकघटादेस्तिरोभावप्रलयोयथातथैवकारणात्मनाविद्यमानानां तत्त्वानांतिरोभावएव:लयोविवक्षित : ॥ कल्पान्ते । संवर्त्ते । नये ॥ सचतुर्विधोयथा । नैमित्तिक : प्राकृतिकस्तथैवात्यन्तिकोद्विज । नित्यश्चसर्वभूतानांप्रलयोऽयंचतुर्विध: ॥ ब्राह्मोनैमित्तिकस्तत्रयच्छेतेजगत:पति: । प्रयातिप्राकृतेचैवब्रह्माण्डंप्रकृतौलयम् ॥ ज्ञानादात्यन्तिक : प्रोक्तोयोगिन:परमात्मनि । नित्यंसदैवजातानांयोनिनाशोदिवाऽनिशमिति॥ पश्चान्यत्रदैनंदिनप्रलयं॥ प्रलयनम्०प्रलीयन्ते पदार्थाअत्र । लोङ्० । एरच् ॥

प्रलयान्त : त्रि० यावज्जीवमनुवर्त्तमाने ॥ प्रलय : अन्तोयस्य ॥

प्रलाप: । पुं० अनर्थकेवचसि । प्रयोजनशून्ये उन्मत्तादिवचने ॥ रोगाणामुपसर्गोयम् । स्वहेतुकुपितादातादसम्बद्धंनिरर्थकम् । वचनंयन्नरोब्रूतेसप्रलाप: प्रकीर्तित : इत्युक्त: ॥ प्रलपनम् । लपव्यक्तायांवाचि । घञ् ॥

प्रलापघ्न । पुं० कुलत्थाञ्जने ॥

प्रलीन : । त्रि० निगूढे ॥

प्रलीनता । स्त्री० प्रलये । इन्द्रियस्वापे । चेष्टानाशे ॥

प्रलेप : । पुं० लेपे ॥ प्रलेपनम् । लिप० । घञ् ॥ शीतस्तनुविशोषोचप्रलेप : पित्तहृन्मत : ॥

प्रलेपनम् । न० लेपे ॥ लिपेर्ल्युट् ॥

प्रलेह : । पुं० मांसस्यप्रकारविशेषे ॥ यथा । स्थूलानिमांसखण्डानिक्षालितानिचवारिणा । तत्सर्वंहैविनि : क्षिप्यद्रव्यमिश्रालयनपचेत् ॥ तत्रं तत्रविनि:क्षिप्यजलावकंजलमल्पकम् । पचेत्पटपटाशब्दंतस्मिन्मांसेप्रकुर्वति ॥ प्रक्षिपेद्दाडिमीनीरंवहुलेनपचेत्पुन : । मांसपिण्डेसुसिद्धे तुदेयाशुण्ठीसजीरका ॥ ततश्चोत्तार्यतन्मांसं पृथक्कुर्यात्प्रलेहत: । प्रलेहंवाससापूतंस्थापयेदन्यभाजने ॥ हिङ्गुनाघृतयुक्तेनधूपेन तत्प्रधूपयेत् ॥ गौडदेशीयप्रलेहस्तु । हिङ्ग्वार्द्रवीजपूरैला लवणै : सम्भृतेनतु । कुट्टितामिषपिष्टेनतच दाडिमवीजत: ॥ सम्प्रणाविसवारात्स्यात्प्रलेहोगौडदेशज : ॥ प्रलेहोरुचिदोवल्य : कफानिलरुजापह : । सङ्ग्राहीपित्तकृत् किञ्चिच्छिनाधुसानगदानुजयेत् ॥ पूर्णप्रलेहस्तु । मांसपूरणयोगेन कोष्ठाकारंविधायच । स्विन्नंकृत्वाघृतेभृष्टं प्रलेहविधि

नापचेत् ॥ पूरणस्यप्रलेहोयंविज्ञेयो वातनाशन : । अम्लकारकश्चैव मुखवैरस्यहृद्गुरु : ॥ शुक्लवर्णः प्रलेह : । घृतेवेसरधान्याकहिङ्गुभृङ्गिसंयुते । वस्त्रपूतेऽर्द्धसम्पक्कंखिन्नंमांसंविनि : क्षिपेत् ॥ पीतवर्णस्तु । प्रलेह : पीतवर्णोपिकार्य: शुक्लप्रलेहवत् । विशेषोत्रहरिद्राया : संसर्ग : कुङ्कुमस्यवा ॥ रक्तवर्णोपि । तप्तस्ने हेक्षिपेद्धिङ्गु संयुतंकासमर्दकम् । धान्यकंलवणाजाजीधौतंमांसञ्चतत्क्षिपेत्॥ ततोऽस्फुटितेमांसेदाड़िमोबीजसंयुते । सपक्वेचातिमृदुलेतक्रं शुण्ठींचनि : क्षिपेत् ॥ ततउत्तार्यवस्त्रेण गालयेद्भूपयेदपि ! रक्तवर्णप्रलेहस्य संसिद्धार्थंविनिक्षिपेत् । करमर्द्दंदाडिमस्यस्थानेशेषन्तुपूर्ववत् ॥ हरितवर्णस्तु । मेथिकाकासमर्दाम्लकल्केनचक्रालिते । घृतेमांसंविनि : क्षिप्यपचेच्छुष्कप्रलेहवत् ॥ सिद्धेचगालयेद्वस्त्रे कृत्वा वर्णप्रयोजनम् । ताम्बूलंकष्टजङ्गारंदेयंहरितहेतुना ॥ अरुचौरुचिद: सयोनानावर्णप्रसाधित : । प्रलेह: कफवातघ्न : किञ्चित्पित्तकरोलघु : ॥ वटकप्रलेहोपि । माषस्यपिष्टिकासूक्ष्मा वेसवारेणसंयुता । वहुधाक्रियतेतस्यावटिकावटकादिकम् ॥ आमविम्बीफलाकारंलड्डु-

काबटकादिकम् । शृङ्गाटकफलाकारंयथाबुद्धिप्रकारजम् ॥ कृत्वाहिबहुधाधारेस्वेदितंघृतभाजितम् । सवेसवारजेतक्रे क्वथितेचमनोरमे ॥ नि : क्षिप्यचालयेदीषदुत्तार्येलादिवासिते । एवन्तुवहुधाकार्यो-माषमुद्गप्रलेहक : ॥ प्रलेहोवातजिद्बल्य : शुक्रमांसप्रदोरस : । प्रीणन : प्राणयुक्तानांशुक्रद : चीणरेतसाम् ॥ मत्स्यप्रलेहस्तु । मांसप्रलेहवत्कार्य : प्रलेहोमत्स्यसम्भव : । आदौतैलेपरंपक्कंसर्वमन्यत्तुपूर्ववत् ॥ वर्णस्यकरणेदेयंपूर्वोक्तंद्रव्यकंहियत् । उद्धूलनंसुगन्धायदातव्यंपूर्वसम्भवम् ॥ मत्स्यखण्डप्रलेहस्तु । सम्यक्प्रचालितंमत्स्यं वेसवारेणवेष्टितम् । तप्ततैलेचिपेतखण्डंहिङ्गुसैन्धवमिश्रितम् ॥ प्रलेहविधिवत्साध्योमत्स्यखण्डप्रलेहक : ॥

प्रवक्ता । त्रि० वाग्मिनि । वावदूके ॥ वेदादिवाचके ॥ यथा । जातिमात्रोपजीवीवाकामंस्याद्ब्राह्मणब्रुव : । धर्मप्रवक्ता नृपते र्नतुशूद्रकदाचनेति ॥ उपदेष्टरि ॥ प्रकृष्टोवक्ता ॥

प्रवचनम् । न० आगमे । वेदे ॥ न० प्रकृष्टवचने ॥ प्रोच्यते । वच० । ल्युट् ॥ अनेकवेदस्वीकरणे ॥ शिक्षादिवेदाङ्गेषु ॥ अध्यापने ॥ ब्राह्मणस्यैवप्रवचनेऽधिकारोनक्षत्रियादे-

ब्राह्मणात्मनासमस्तानांवेदानांप्रवचनंकुर्वन्वेदस्यायमितिब्राह्मणइति ब्राह्मणनामार्थभाष्यम् ॥ प्रकर्षेण उच्यतेवेदार्थएभिरितितथा ॥ त्रि० प्रकृष्टवक्तरि ॥ यथा । अपिचकृ : प्रवचनमेकंशुश्रूषवोऽपरे ॥

प्रवचनीय : । त्रि० प्रक्तरि ॥ प्रवाच्ये ॥ प्रवक्ति० प्रोच्यतेवा । वच ० । अनीयर् । भव्यगेयप्रवचनीयेतिसाधु : । प्रवचनीयोगुरु: स्वाध्यायस्य० । प्रवचनीय : स्वाध्यायोगुरुणा ॥

प्रवञ्चनम् । न० प्रतारणे ॥ वञ्चु० प्र,पृ९ : ल्युट् ।

प्रवण : । पुं० चतुष्पथे ॥ क्षणे ॥ आवर्त्ते ॥ त्रि० क्रमनिम्नमहीभागे ॥ उदारे ॥ प्रह्वे ॥ प्रगुणे ॥ आयत्ते ॥ क्षीणे ॥ प्रवन्त्यनेनात्र वा । प्रुङ्गतौ ' ल्युट् ।

प्रवत्स्यन् । त्रि० प्रवासंकरिष्यति ॥

प्रवत्स्यत्पतिका । स्त्री० नायिकाप्रभेदे ॥

प्रवयणम् । न० प्रवतोदे ॥ प्रवीयतेऽनेन । अजगतिक्षेपणयो : । ल्युट् ॥ वायाविति पाक्षिकोवि : कृत्यचइतिणत्वम् ॥

प्रवया : । त्रि० स्थविरे । वृद्धे ॥ प्रगतंवयोऽस्य ॥

प्रवर : । पुं० सन्ततौ ॥ गोत्रप्रवर्त्तक मुनिव्यावर्त्तके मुनिगणे ॥ तथा

चयमदग्निगोत्रस्यप्रवरा : ० यमदग्न्यौर्ववशिष्ठा : ३ । भरद्वाजगोत्रस्य० भरद्वाजाङ्गिरसवार्हस्पत्या: ३ विश्वामित्रगोत्रस्य० विश्वामित्रमरीचिकौशिका : ३ । अत्रिगोत्रस्य ४ अत्र्यात्रेयशातातपा : ३ । गोतमगोत्रस्य ५ गोतमवशिष्ठवार्हस्पत्या : ३ । वशिष्ठगोत्रस्य ६ वशिष्ठ: १ । केषाञ्चित्वशिष्ठात्रिसाङ्कृतय : ३ । काश्यप गोत्रस्य ७ काश्यपाप्सारनैध्रुवा: ३ । अगस्त्यगोत्रस्य ८ अगस्ति दधीचिजैमिनय : ३ । सौकालिनगोत्रस्य ९ सौकालिनाङ्गिरस वार्हस्पत्याप्सारनैध्रुवा: ५ । मौद्गल गोत्रस्य १ । और्वच्यवनभार्गवजामदग्न्याप्रवरा : ५ । पराशर गोत्रस्य ११ पराशरशक्तिवशिष्ठा: ३ । वृहस्पतिगोत्रस्य १२ वृहस्पति कपिलपार्वणा : ३ । फाल्गुनगोत्रस्य १३ अश्वत्थदेवलदेवराजा : ३ विष्णुगोत्रस्य १४ विष्णुवृद्धि कौरवा : ३ । कौशिक गोत्रस्य १५ कौशिकात्रिजमदग्नय : ३ । कात्यायनगोत्रस्य १६ अत्रिभृगुवशिष्ठा: ३ । आत्रेयगोत्रस्य १७ आत्रेय शातातपसाङ्ख्या : ३ । कान्व गोत्रस्य १८ काणवाश्वत्थदेवला: ३ । कृष्णात्रेयगोत्रस्य १९ कृष्णात्रेयात्रेयावासा : ३ साङ्कृतिगो

त्रस्य २० श्व्याहाराचिसाङ्कृत य: ३। कौण्डिन्यगोत्रस्य २१ कौण्डिन्यस्तिमिककौत्सा : ३ । गर्गगोत्रस्य २२ गार्ग्यकौस्तुभ माण्डव्या: । ३ । श्राङ्गिरसवशिष्ट बार्हस्पत्या : ३ । श्रनावृकाख्य गोत्रस्य २४ गार्ग्यगौतमवशिष्टा: ३ । श्रव्यगोत्रस्य २५ श्रव्यवलि सारस्वता : ३ । जैमिनिगोत्रस्य २६ जैमिन्युतथ्यसाङ्कृतय : ३ । हरिगोत्रस्य २७ कुरुवद्धाङ्गि रोवार्हस्पत्या : ३ ॥ शाण्डि गोत्रस्य २८ शाण्डिल्यासितदे वला : ३ । वात्स्यगोत्रसावर्णगो त्रो : २९ ३० श्रौर्वच्यवनभार्गव जामदग्न्याप्रुवत : ५ । श्रालंबा यन गोत्रस्य ३१ श्रालंवायनशा लङ्कायन शाकटायना : ३ । वैया घ्रपद्यगोत्रस्य ३२ साङ्कृति : १ । घृतकौशिकगोत्रस्य ३३ कुशिक कौशिकघृतकौशिका : ३ कैषाश्वित् कुशिककौशिकबन्धुला: ३ । शक्ति गोत्रस्य ३४ शक्तिपराशरवशिष्ठा: ३ काण्वयनगोत्रस्य ३५ का ण्वायनाङ्गिरसवार्हस्पत्यभरद्वाजा- जमीढा: ५ । वासुकिगोत्रस्य ३६ श्रक्षोभ्यानन्तवाभुकय : ३ । गोतमगोत्रस्य ३७ गौतमाप्सारा ङ्गिरसवार्हस्पत्यनैध्रुवा : ५ कै षाश्वित्गौतमाङ्गिरसाशासा : ३ । शुनकगो० ३८ शुनकशौनकगृत्स मदा : ३ । सौपायनगोत्रस्य ३९ श्रौर्वच्यवनभार्गवजामदग्न्याप्रुव- त : ५ । प्रवरा : ॥ इतिधनञ्जय कृतधर्म्मप्रदीपेगोत्रप्रवरविवेक : ॥ न० गोत्रे ॥ श्रगुरुणि ॥ त्रि० श्रे ष्ठे ॥ प्रव्रियते० शेत्रधूर्युभ्यामुत्० कौर्त्यते । वृञ्० । यद्ववृद्रित्यप् ॥ प्रवरणंवा ॥

प्रवरललितम् । न० श्रष्टिप्रभेदे ॥ य- था । यमौनस्रौगश्चप्रवरललितंनाम वृत्तम् ॥ भुजोत्क्षेप : शून्येचलव- लयझङ्कारयुक्तश्चलत्पादन्यास : प्रकटिततुलाकोटिनाद: । स्मितंव क्त्रेऽकस्माद्दृशिपटुकटाक्षोर्मिलीला हरीजीयादीदृक्प्रवरललितंवल्लवी नम् ॥

प्रवर्ग : । पुं० होमाग्नौ ॥

प्रवर्ग्य : । पुं० वैदिककर्मविशेषे ॥ म- हावीरे ॥

प्रवर्त्तक: । त्रि० प्रेरके । प्रवर्त्तनका रिणि ॥ प्रवृत्तिजनके ॥ यथा । प्र- वर्त्तकंवाक्यमुवाचचोदनांनिवर्त्तकं नैत्रमुवाचभाष्यकृत् । ततश्चविध्यो- नहिचोदनास्तिसाप्रवर्त्तिकायानभ वेदितिस्थिति: ॥ इतिसङ्क्षेपशा रीरकं ॥

प्रवर्त्तकत्वम् । न० प्रवृत्तिजनकत्वे ॥

प्राय : प्रवर्त्तकत्वं विधिवचसांलो-
कवेदयोरिष्टम् । सिद्धं बोधयतोर्थं
यमेतद्भवतितत्त्वमस्यादेः ॥ ३८ ॥
विधिरेवनप्रवृत्तिं जनयत्यभिलषित
वस्तुबोधोपि । राजाभवतिसुतोभू-
दितिबोधेनप्रवर्त्ततेलोकः ॥

प्रवर्त्तनम् । न० प्रेरणे । आज्ञा
पने । प्रवृत्तौ । आरम्भे ।

प्रवर्त्तना । स्त्री० पर्य्येषणायाम् । उत्
कृष्टस्यनिकृष्टं प्रत्याज्ञायाम् ॥ प्र-
वृत्तिजनकत्वे । प्रवृत्तिहेतुव्यापा-
रे । प्रवर्त्तकराजादिनिष्ठायाम् ॥
लिङर्थे ॥ सर्वानुगतं प्रवर्त्तनासा-
मान्यं लिङोर्थः । प्रेषणादयोवि-
शेषास्तु० अर्थप्रकरणादिगम्या-
इतिबोध्यम् ।

प्रवर्त्तयिता । त्रि० कर्त्तरि ।

प्रवर्त्तितः । त्रि० जाते ॥ उत्पादि-
ते । यथा । प्रवर्त्तितोदीपइवप्र-
दीपादितिरघुः ।

प्रवर्द्धनम् । न० विवर्द्धने ।

प्रवर्षणः । पुं० अद्रिविशेषे । न०प्र-
कृष्टवर्षणे । तत्रलक्षणमाहवराहा
चार्यः । ज्येष्ठांनासमतीत्यपूर्वा
षाढादिसंवृष्टेनशुभमशुभंवावाच्यं
परिमाणंचाम्भसस्तज्ज्ञैः ॥ जलप्र
माणार्थमाह । हस्तविशालंकुण्डक
मधिकृत्याम्बुप्रमाणनिर्देशः ॥ प
ञ्चाशत्पलमाढकमानेनमिनुयाज्-
जलंपतितम् ॥ प्रवर्षणप्रमाणमा
ह । येनधरित्रीमुद्राजनितावाबिन्दु
वस्तृणाग्रेषु । वृष्टेनतेनवाच्यंपरि
माणंवारिणः प्रथमम् ॥ मुद्राजनि
ता०विगतधूलिजाता । मतान्तरमा
ह । केचिद्यथाभिवृष्टंदशयोजनम-
ण्डलंवदन्त्यन्ये । गर्गवशिष्ठपराशर
मतमेतद्द्वादशान्नपरम् ॥ येषुचभेष्व
भिवृष्टंभूयस्तेष्वेववर्षतिप्रायः ।
यदिनाप्यादिषुवृष्टंसर्वेषुतदात्वना
वृष्टिः ॥ नक्षत्राणांवृष्टिप्रमाणमा-
ह । हस्ताप्यसौम्यचित्रापौष्णधनि-
ष्ठासुषोडशद्रोणाः । शतभिषगैन्द्र
स्वातिषुचत्वारःकृत्तिकासुदश ॥
श्रवणमघानुराधाभरणीमूलेषुदशच
तुर्युक्ताः । फाल्गुन्यांपञ्चकृतिः पु
नर्वसौविंशतिर्द्रोणाः ॥ ऐन्द्राग्न्याख्य
वैश्वे विंशतिःसार्पेभेदशत्यधिकाः
॥ आहिर्बुध्न्यार्य्यमणप्राजापत्येषु
पञ्चकृतिः । पञ्चदशाजेपुष्ये चकी
र्त्तितावाजिभेदशद्वौच ॥ रौद्रे षो-
डशकथितान्द्रोणानिरुपद्रुतेष्वेते ॥
अत्रविशेषमाह । रविरविसुतकेतुपी
डितेभेक्षितितनयत्रिविधाद्भुताहते
च । भवतिचनशिवंनचापिवृष्टिः शु
भसहितेनिरुपद्रवेशिवञ्चेति ॥

प्रवलाकी । पुं० भुजङ्गे । चित्रमेख-
लके ॥

प्रवर्हः । त्रि० प्रधाने । श्रेष्ठे । प्रव-

र्हति । ब्रहह्ली । पचाद्यच् ॥

प्रवह : । पुं० वहिर्यात्रायाम् । पुराद्वहिर्गमने ॥ वायुमात्रे ॥ सप्तवायून्तर्गतवायुविशेषे ॥ सतु० आवहवायोरूर्ध्वस्थित : ॥ सनित्यं प्रत्यग्गति : तस्यतुमध्यसंस्था : । नक्षत्रकक्षा : खचरै : समेतायस्मादतस्तेनसमाहृतोयम् । भपञ्जर : खेचरचक्रयुक्तोभ्रमत्यजस्रं प्रवहानिलेनेतिशितिरोमणि: ॥ यस्माज्ज्योतींषिवहतिप्रवहस्तेनसस्मृत : ॥ * ॥ अस्यार्थ : ॥ यस्माज्ज्योतींषिप्रकर्षेण वहतितेनसवायु:प्रवह: स्मृत : ॥ प्रवहस्यैवभेदा : सर्वेवायुस्कन्धा : ॥ इतिविष्णुपुराणेद्वितीयेंशे १२ अध्याय : ॥ वायोर्द्वितीयस्कन्धे ॥ ऋतुजित्सत्यजित्सेनजिद्मित्रावमित्रजित् । भूरिमित्रसुषेणौचेत्याभानो : प्रवहोगण : ॥ प्रकृष्टोवह : । गोचरसञ्चरेतिसाधु : ॥ पुरतोगच्छन्प्रवहोवायु : ॥

प्रवहणम् । न० कर्णीरथे । डयने । स्त्रियोहनाययानविशेषे । चौडोला० इ० भा० । अधुना० पीनसखर्खरिया० इ० प्र० ॥ प्रोह्यतेऽनेनवा । वहप्रापणे । ल्युट् ॥

प्रवह्लिका । स्त्री० प्रहेलिकायाम् । पहेली० इ० भा० ॥ प्रवह्लते० आच्छादयति । वर्ह्वल्हुपरिभाषणहिंप्रादानेषु । क्वुन्शिल्पिसंज्ञयो : ॥ दुर्विज्ञानार्थप्रश्नादिवाक्यरूपाहिसा

प्रवाक् । त्रि० वाग्मिनि ॥

प्रवाचक: । त्रि० प्रकृष्टवक्तरि ॥

प्रवाच्य : । पुं० पाठविशेषोपलक्षिते ग्रन्थविशेषे ॥ प्रोच्यते । वच० । ॥ ण्यत् । यजयाचेतिनकुत्वम् ॥

प्रवाणी । स्त्री० तन्तुवायशलाकायाम् प्रकर्षेणऊयतेअस्याम् । प्रपूर्वाद्वयते ल्युट् ॥

प्रवाद : । पुं० परस्परवाक्ये ॥ जनरवे ॥ वादविशेषे ॥ प्रकृष्टोवाद : ॥

प्रवादित : । त्रि० शब्दिते ॥

प्रवारणम् । न० निषेधे ॥ काम्यदाने ॥ महादाने ॥ प्रव्रियते । वृञ्० चु० ॥ ल्युट् ॥

प्रवास : । पुं० स्वगृहाद्दूरगमने । विदेशस्थितौ ॥ विदेशे ॥ प्रवसन्त्यस्मिन् । वस० । हलश्चेतिघञ् ॥

प्रवासनम् । न० वधे । मारणे ॥ वासच्छेदे । चु० । प्रपूर्वाद्वासेर्ल्युट् ॥ प्रवासनायाम् ॥

प्रवासी । त्रि० प्रवासविशिष्टे । प्रोषिते । पथिके ॥ वसं० । प्रपूर्वादस्मात् प्रे लपसद्रुमथवदवस : इतितच्छीलादिषुघिनुण् ॥

प्रवाह : । पुं० प्रवृत्तौ ॥ व्यवहारे ॥ अम्बुवेगे । जलस्यस्रोतसि ॥ अविच्छिन्नसन्ततौ । अविच्छेदेनजलादि

प्रवृत्तौ ॥ प्रवहणम । वह० । घञ् ॥ प्रकृष्टाश्वे ॥

प्रवाहक : । पुं० राक्षसे ॥ त्रि० प्रकृष्टवहनकर्तरि ॥

प्रवाहण : । पुं० जीवलस्यराज्ञोपत्ये । वेदप्रसिद्धे राजर्षिविशेषे ॥

प्रवाहिका । स्त्री० ग्रहण्याम् । सङ्ग्रहणीरोगे ॥ वायु : प्रवृद्धोनिचितंवलासं नुदत्यधस्तादहिताशनस्य । प्रवाहतोल्पंवहुशोमलाक्तंप्रवाहिकांतांप्रवदन्तितज्ज्ञा: ॥ प्रवाहत: कण्ठहृद्वलेनसशब्दंवायुमपानमार्गेणत्यजत : ॥ प्रवहति । वह० । ण्वुल् ॥ प्रवहणम्० प्रवाहयति० मुहुर्मुहु: प्रवर्त्तयतिवा । रोगाख्यायांण्वुल् ॥

प्रवाही । स्त्री० वालुकायाम् ॥

प्रविख्याति : । स्त्री० विश्रावे । अतिप्रसिद्धौ ॥ प्रविख्यानम् । ख्या० क्तिन् ॥

प्रवितत : । त्रि० विस्तृते ॥

प्रविदारणम् । न० सम्पराये । युद्धे ॥ अवदारणे ॥ दूविदारणे । ण्य-न्तादूभावेल्युट् ॥

प्रविर : । पुं० पीतकाष्ठे ॥

प्रविरल : । त्रि० घनेतरे ॥ प्रकर्षेण विरल : ॥

प्रविविक्षु: । त्रि० गृहादौप्रवेष्टुमिच्छौ ॥ यथा । कारयेद्वनशोधनमादौ मातुरन्तिकमपिप्रविविक्षु: । आत्मशस्त्र्यनुगत : प्रविशेद्वासङ्कटेचगहनेचनतिष्ठेदिति राजनीतौकामन्दक : ॥

प्रविवत्सन् । त्रि० प्रवासंकर्तुमिच्छति । वसे : सन्नन्ताच्छट : शत्रादेश : ॥

प्रविश्लेष : । पुं० विधुरे । प्रकृष्टविश्लेषे ॥ प्रविश्लेषणम् । श्लिषआलिङ्गे । घञ् ॥

प्रविषा । स्त्री० अतिविषायाम् ॥

प्रविष्ठ : । त्रि० कृतप्रवेशे ॥ प्रविश० । क्त : ॥ निविष्टे ॥

प्रवीण : । त्रि० निपुणे । विज्ञे । निष्णाते । शिक्षिते ॥ प्रकृष्टावीणाऽस्य ॥ यद्वा । वीणयाप्रगायति० प्रगीयतेवा । सत्यापेतिणिजन्तात्० पचाद्यच्० कर्मणिघञ्वा ॥

प्रवीर : । पुं० योद्धृपुरुषे । सुभटे ॥ त्रि० उत्तमे ॥ प्रकृष्टोवीर : ॥

प्रवुद्ध : । त्रि० पण्डिते ॥ प्रकर्षेणवुद्ध : ॥ सुप्तादितरस्मिन् ॥

प्रवृत्त : । त्रि० आरब्धे ॥ प्रवृत्तिविशिष्टे ॥ प्रकृष्टवर्त्तनविशिष्टे ॥ जाते ॥ प्रवर्त्तेस्म । वृतु : क्त : ॥

प्रवृत्ति : । स्त्री० प्रवाहे । अविच्छिन्नसन्ततौ । उदन्ते । वार्तायाम् ॥ प्रवर्त्तने । वृत्तौ ॥ अन्त : करणवृत्तिर्न्यांप्रयत्नलक्षणायाम् ॥ अवन्त्यादिदेशे ॥ हस्तिमदे ॥ कर्मणांमार्गे ।

नितरांप्रयतमानतायाम्। रजः कार्ये आरम्भे॥ गतौ॥ प्रवर्त्तते व्याप्नोति० प्रवर्तनंवा। वृतु०। क्तिच्०। क्तिन्वा। न्यायमतेयत्नवि शेषे॥ अस्याःकारणम्। चिकीर्षा कृतिसाध्यताज्ञानम्० इष्टसाधन ताज्ञानं०उपादानप्रत्यक्षम्। यथा प्रवृत्तिश्चनिवृत्तिश्चतथाजीवनकारणम्। एवंप्रयत्नत्रैविध्यंतान्त्रिकैः परिदर्शितम्॥ चिकीर्षाकृतिसाध्ये साधनत्वमतिस्तथा। उपादानस्य चाध्यक्षंप्रवृत्तौजनकंभवेत्॥ इति॥ प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः। इति गोतमसूत्रम्॥ १७॥ यद्ज्ञानात् प्रवृत्तिःस्यात् तज्ज्ञानात्साकृतौ भवेत्॥

प्रवृत्तिक्रमः। पुं० श्रुत्यादिभ्योदुर्बले प्रवृत्तःक्रमे॥ तथाहि। सहप्रयुज्यमानेषुप्रधानेषुसन्निपातिनामङ्गानामावृत्त्याऽनुष्ठानेकर्तव्येहि० द्वितीयादिपदार्थानांप्रथमानुष्ठितपदार्थानांप्रथमानुष्ठितपदार्थक्रमाद्यःक्रमः। यथा० प्राजापत्यपश्वङ्गेषु० प्राजापत्यान्हिवैश्वदेवींकृत्वाप्राजापत्यैश्चरन्तीतिवाक्येनहतीयानिर्देशात्सैतिकर्तव्यताकाएककालत्वेनविहिताः। अतस्तेषांतदङ्गानाञ्चोपाकरणनियोजनप्रभृतीनांसाहित्यंसम्पाद्यम्। तत्रप्राजापत्यपशूनांसम्प्रतिपन्नदेवताकत्वेनयुगपदनुष्ठानादुपपद्यते। तदङ्गानाञ्चोपाकरणादीनांयुगपदनुष्ठानमशक्यम्० अतस्तेषांसाहित्यमव्यवहितानुष्ठानात्सम्पाद्यम्। तत्रैकस्योपाकरणं विधायापरस्योपाकरणंविधेयम्० एवंनियोजनादिकमपि। तथाच प्राजापत्येषुअस्मात्त्वपशोरारभ्यः एकंसर्वत्रानुष्ठायद्वितीयादिःपदार्थस्तेनैवक्रमेणानुष्ठेयः सप्रवृत्तिक्रमः॥ प्रवृत्तेःक्रमः॥

प्रवृत्तिजनकः। त्रि० प्रवर्त्तके॥

प्रवृत्तिज्ञः। पुं० चारभेदे। वार्त्तिके। वार्त्तायने॥ त्रि० प्रवृत्तिज्ञानविशिष्टे॥

प्रवृद्धः। त्रि० प्रौढे। एधिते। वृद्धियुक्ते॥ प्रसारिते। प्रसृते॥ प्रवर्द्धतेस्म। वृधुवृद्धौ। गत्यर्थेतिक्तः॥

प्रवृष्टः। त्रि० प्रवृष्टवति॥

प्रवेकः। उत्तमे। प्रधाने। प्रमुखे॥ प्रविच्यते। विचिर्पृथग्भावे। घञ्॥

प्रवेटः। पुं० शितशूके। यवे॥

प्रवेणिः। स्त्री० कुथायाम्॥ वेण्याम् प्रोषितभर्तृकादिधार्यकेशरचनाविशेषे॥ वेणति। वेणृनिशामनवादित्रादानगमनज्ञानचिन्तासु। इन्। प्रउपसर्गोस्तरव्यावृत्त्यर्थः॥

प्रवेणी । स्त्री० कुथायाम् । परिस्तोमे । गजपृष्ठस्थचित्रकम्बले ॥ वेण्याम् ॥ प्रकर्षेणवीयतेऽस्याम् । वीणत्यादिषु । वीज्याज्वरिभ्योनिः । कृदिकारादक्तिनइतिपाक्षिकोङीष् ॥

प्रवेलः । पुं० पीतमुद्गे । सोनामूंगा इ० भा० ॥

प्रवेशः । पुं० अन्तर्विगाहने । गृहाद्यन्तर्गमने ॥ प्रवेशश्चतुर्द्धा । अपूर्वप्रवेशः सुपूर्वप्रवेशः द्वन्द्वाभयप्रवेशः वधूप्रवेशः इतिभेदात् । तत्र वधूप्रवेशस्यान्वर्थसंज्ञकत्वात्० तदन्येषांलक्षणान्युच्यन्ते । यथा । अपूर्वसंज्ञः प्रथमः प्रवेशोयात्रावसानेतुसुपूर्वसंज्ञः । द्वन्द्वाभयस्त्वग्निभयादिजातस्त्वेवंप्रवेशस्त्रिविधः प्रदिष्टः ॥ भूरिपुष्पनिकरंसतोरणंतोयपूर्णकलशोपशोभितम् । धूपगन्ध बलिपूजितामरं ब्राह्मणध्वनियुतंविशेद्गृहम् ॥ प्र० विश० । हलश्चेतिघञ् ॥

प्रवेशनम् । न० प्रवेशे ॥ सिंहद्वारे ॥ प्रविश० । ल्युट् ॥

प्रवेश्यः । त्रि० प्रवेशयितव्ये । प्रवेशनीये ॥

प्रवेष्टः । पुं० भुजे । बाहौ ॥ प्रवेष्टते । वेष्टवेष्टने । पचाद्यच् ॥ हस्तिदन्तमांसे ॥ गजपृष्ठतल्पने ॥

प्रव्यक्तः । त्रि० उल्वणे । स्पष्टे । स्फुटे ॥ प्रव्यज्यतेस्म । अञ्ज्व्यक्त्यादौ । क्तः ॥ प्रव्यच्यतेस्मवा । व्यच् विशेषणे । क्तः ॥

प्रव्यथितः । त्रि० प्रपीडिते ॥ व्याकुलीकृते ॥ अतिभीते ॥

प्रव्रजन् । त्रि० संन्यस्यगच्छति ॥

प्रव्रजितः । पुं० प्रव्रज्याश्रमविशिष्टे । बुद्धभिक्षुशिष्ये । चेलुके । श्रामणेरे ॥ त्रि० निष्क्रान्ते ॥

प्रव्रजिता । स्त्री० मांस्याम् ॥ मुण्डीर्याम् ॥ तापस्याम् ॥

प्रव्रज्या । स्त्री० वैरवाद्यरक्तपटादौ ॥ प्रव्रजनम् । व्रज० । व्रजयजोर्भावेक्यप् ॥ सन्यासे ॥

प्रव्रज्यावसितः । पुं० सन्यासभ्रष्टे ॥

प्रव्राजी । पुं० प्रव्रजनशीले । सन्यासिनि ॥ ताच्छील्ये वैराग्यातिशयशालित्वम् ॥

प्रशंसनीयः । त्रि० प्रशंसितुंयोग्ये ॥ शंसु० । अनीयर् ॥

प्रशंसा । स्त्री० प्रशंसने । वर्णनायाम् ॥ ईडायाम् । स्तवे ॥ परोक्षस्तुतौ ॥ द्विप्रकाराहिप्रशंसाभवति । वस्तुनिविद्यमानगुणोत्कर्षएकः प्रकारः । स्तावकेनशब्देनसम्पादितोगुणोत्कर्षः परः प्रकारइति ॥

प्रशत्वा । पुं० समुद्रे ॥ प्रशीयते । शशद्लृशातने । प्रद्वरशदोस्तुट्चेति क्वनिप् ॥

प्रशस्वरी । स्त्री० नद्याम् ॥ ङीब्नौ ॥

प्रशम : । पुं० उपशान्तौ ॥ प्रशमनम् । शम० । भावेघञ् ॥

प्रशमनम् । न० मारणे । वधे ॥ शमतायाम् । प्रशान्तौ ॥ प्रशमयति । शम० । णिजन्ताल्ल्युःभावेल्युड्वा ॥

प्रशमित: । त्रि० अपाकृते । राज्ञ : कर्तव्ये ॥ रक्षापौरजनस्य०देशनगरग्रामेषुगुप्तिस्तथा० योधानामपिसङ्ग्रहश्च०तुलयामानव्यवस्थापनम् , साम्यंसन्धिषु०दानवृत्तिकरणेत्याग : समानार्चनम्०कार्याण्येवमहीभुजां प्रशमनान्येतानिराज्येनव ॥

प्रशस्तम् । न० मङ्गले ॥ त्रि० क्षेमे । शुभे ॥ प्रशंसनीये । अतिश्रेष्ठे । उत्तमे ॥ प्रशस्यतेस्म । शंसु० । क्तः । प्रकर्षेणशस्तोवा ॥

प्रशस्ति: । स्त्री० पत्रलेखनप्रक्रियायां ॥

प्रशान्त : । त्रि० प्रकृष्टशमताविशिष्टे । परहिंसारहिते ॥ सर्वत्रसमबुद्ध्या रागद्वेषशून्ये । निर्विकारे ॥ स्वल्पलाभेनापिसन्तुष्टे ॥ तमोरजसो : क्षयाल्लयविक्षेपशून्यत्वेनशुद्धसत्त्वरूपे चित्ते ॥ प्रकर्षेणशान्त: ॥ प्रत्यस्तमितक्लेशे ॥

प्रशान्तचित्त : । त्रि० शान्ते । उपरतदर्पादिदोषे । समाहितमनसि ॥ प्रशान्तंचित्तंयस्यस : ॥

प्रशान्तवाहिता । स्त्री० तमोरजसो : क्षयाल्लयविक्षेपशून्यत्वेनशुद्धसत्त्वरूपं चित्तंप्रशान्तं । पूर्वपूर्वप्रशमसंस्कारपाटवेनतादृशचित्तस्याधिक्यंप्रशान्तवाहितेत्यर्थ : ॥

प्रशान्तात्मा । त्रि० प्रशान्तचित्ते ॥

प्रशान् । अ० समानार्थे ॥

प्रशान् । त्रि० शांते ॥ प्रकर्षेणशाम्यति । शम० । क्विप् । अनुनासिकस्यक्विझलोरितिदीर्घ : । मोनोधातो : ॥

प्रशासनम् । न० प्रकृष्टाज्ञायाम् ॥ शासु० । ल्युट् ॥

प्रशासिता । त्रि० प्रकृष्टशासनकृति ॥ ईश्वरे ॥ यथा । प्रशासितारंसर्वेषामणीयांसमणोरपि । रुक्माभंस्वप्रधीगम्यंविद्यात्तंपुरुषंपरम् ॥ देवतायागकर्त्तारंपितर : श्राद्धकारिणाम् । नाप्नुयुर्हव्यकव्यार्थंयदिनस्यात्प्रशासिता ॥

प्रशास्ता । पुं० ऋत्विजि ॥ मित्रे ॥ त्रि० शासनकर्तरि ॥ प्रशास्ति । शासु० । तृच् । अप्तृन्निति दीर्घ : ॥

प्रश्न : । पुं० अनुयोगे । पृच्छायाम् ॥ प्रच्छनम् । प्रच्छ० । यजयाचेतिनङ् । क्ङितिश : । प्रश्नेचेतिलिङ्गान्नसम्प्रसारणम् ॥

प्रश्नदूती । स्त्री० प्रहेलिकायाम् ॥

प्रश्नी । स्त्री० कुम्भिकायाम् । वारिपर्ण्याम् ॥

प्रश्रय:। पुं० प्रणये। प्रीत्याप्रार्थने॥ प्रश्रयणम्। श्रिञ्अएरच्॥
प्रश्रवम्। न० प्रवाहे॥
प्रश्रित:। त्रिं विनीते॥ प्रणमंगुणे रश्रायि। श्रिञ्०। क्त:॥
प्रश्लथ:। त्रि० शिथिले॥
प्रश्लिष्ट:। त्रि० प्रकर्षेणमिलिते॥
प्रश्लेष:। पुं० संयोगे॥ प्रश्लेषणम्। श्लिष्०। घञ्॥
प्रश्वास:। पुं० प्राणेनकोष्ठस्थवायो र्बहिर्निस्सारणे। समाध्यङ्गपूरकविरोधिनि॥ श्वासप्यविशेषे॥ प्रश्वसनम्। श्वस०। घञ्०॥ श्रमापनये॥
प्रष्टव्य:। त्रि० प्रश्ने॥
प्रष्टा। त्रि० कथङ्कथिके। प्रश्नकर्तरि। पृच्छति। प्रच्छ०। तृच्। व्रश्चेतिकृत्षष:॥
प्रष्ठ:। त्रि० अग्रगे॥ श्रेष्ठे। चाण्डालिकौषधौ॥ प्रतिष्ठते० गच्छति। ष्ठा०। आतश्चोपसर्गइतिक:। सुपिस्थइतिकोवा। प्रष्ठोग्रगामिनीतिष:। ष्टुत्वम्॥
प्रष्ठवाट्। पुं० युगपार्श्वगे। दमनकालिकस्कन्धारोपितकाष्ठवाहे॥ प्रष्ठमग्रगामिनंवहति। वहश्चेतिण्वि:॥ स्वामीतु०पश्चमंपष्ठंवावर्षंवहतीतिविगृह्यरेफरहितंपठति०तत्रपृषोदरादित्वंबोध्यम्॥

प्रष्ठी। स्त्री० प्रष्ठभार्यायाम्॥
प्रष्ठौही। स्त्री० बालगर्भिण्याङ्गवि। प्रथमगर्भधृतवत्याम्॥ प्रष्ठंवहति। वहश्चेतिण्वि:। वाहऊठितिङीप्॥
प्रसक्त:। त्रि० आसक्ते॥ तद्वति। सर्वघातदेकपरे॥ न०। सतते॥ प्रासञ्जि। षञ्ज०। कर्मणिक्त:॥
प्रसक्ति:। स्त्री० प्रसङ्गे॥ प्रवृत्तौ॥ अनुमितौ॥ आपत्तौ॥ प्र० षञ्ज०। स्त्रियांक्तिन्॥ आसक्तौ॥
प्रसङ्ग:। पुं० प्रसक्तौ। अन्योद्देशेनाऽन्यदीयस्यापिसद्धानुष्ठाने॥ अन्योद्देशेनप्रवृत्तावन्यस्यापिसिद्धौ॥ यथा। दृष्टातुहरतेपापं स्पृष्टातुत्रिदिवंनयेत्। प्रसङ्गेनापियागङ्गामोक्षदात्ववगाहिता॥ गीतवादित्रवादौ॥ प्रसज्यतेपुरुषोयत्र। षञ्ज०। घञ्॥ नेहेतार्थान्प्रसङ्गेननविरुद्धेनकर्मणा। नविद्यमानेष्वर्थेषुनार्त्यामपियतस्तत:॥ यतस्तत: पतितादे:॥ प्रस्तावे॥ प्रस्तावे॥ य०। यत्राच्युतोदारकथाप्रसङ्ग:॥ पुन: पुन: प्रवृत्तौ॥ प्रकृष्टसम्बन्धे॥ सङ्गतिविशेषे॥ स्मृतत्वेसत्युपोद्घातादिपञ्चकभिन्नत्वमितितस्यलक्षणम्। स्मृतस्योपेक्षानर्हत्वंप्रसगत्त्वम्। तदर्थस्तुस्मृतिविषयतापन्नत्वेसतिद्वेषविषयतानापन्नत्वमित्यनुमितिग्रन्थे गदाधरभट्टाचार्य:॥प्रकृष्ट.सङ्ग:॥

मैथुने ॥

प्रसङ्गत्वम् । न० स्मृतस्योपेक्षाऽनर्हत्वे। स्मृतविषयतापन्नत्वेसति०इ षविषयतानापन्नत्वमितितदर्थः ॥

प्रसङ्ख्यानम् । न० आवृत्तौ ॥ आवृत्तिर्हिप्रसङ्ख्यानमित्युक्तेः ॥

प्रसज्यः । पुं० प्रसज्यप्रतिषेधे ॥ पर्युदासः सदृग्ग्राहीप्रसज्यस्तुनिषेधकृत् ॥

प्रसज्यप्रतिषेधः । पुं० निषेधान्तरे ॥ अप्रधान्यं विधेर्यत्र प्रतिषेधेविधानता । प्रसज्यप्रतिषेधोयंक्रियया सह यत्रनञ् ॥

प्रसञ्जनम् । न० प्रसङ्गे ॥

प्रसत्तिः । स्त्री० नैर्मल्ये । प्रसादे । प्रसन्नतायाम् ॥

प्रसत्वा । पुं० प्रजापतौ ॥ धर्मे ॥ मूढे ॥ प्रसीदति । षद्लृ० । प्रङ्गरसदोस्तुट्चेति०दशपादीपाठात्सदेरपि क्वनिप् ॥

प्रसत्वरी । स्त्री० प्रतिपत्तौ ॥ वनोरचेतिङीब्रौ ॥

प्रसन्नः । त्रि० अच्छे । स्वच्छे । निर्मले । अच्छा० अच्छी० इ० भा० ॥ सन्तुष्टे ॥ प्रसन्नयातुष्टे ॥ प्रसादवति ॥ प्रसादत् । प्रसीदति स्मवा ॥ षद्लृ० गत्यर्थेतिक्तः ॥

प्रसन्नता । स्त्री० नैर्मल्ये । प्रसादे ॥ प्रसन्नस्यभावः । तल् ॥

प्रसन्ना । स्त्री० सुरायाम् ॥ मद्यप्रभेदे ॥ प्रसन्नागुल्मवातार्शोविबन्धानाहनाशिनी । शूलप्रवाहिकाटोपकफवातार्शसांहिता ॥ प्रसादविशिष्टायाम् ॥

प्रसन्नात्मा । पुं० शमदमाद्यभ्यासाच्छुद्धचित्ते ॥ प्रसन्नःरजस्तमोभ्यामकलुषितः आत्मान्तःकरणमस्य ॥ विष्णौ ॥ अवाप्तसर्वकामत्वात्प्रसन्नआत्मा स्वभावोऽस्य ॥

प्रसभः । पुं० न० बलात्कारे ॥ प्रगता सभाअस्मात् । सभायाःप्रगतोवा ॥

प्रसरः । पुं० प्रणये ॥ वेगे । जवे ॥ सङ्गरे । युद्धे ॥ विसर्पणे ॥ प्रसरं न लभन्ते हियावत्क्वचनमर्कटाः । नाभिद्रवन्तितेतावत्पिशाचावास्वगोचरे ॥ प्रसरणम् । सृगतौ । वा० अप् ॥ अधिकरणेपुंसिसंज्ञायामितिघोवा ॥ प्रकर्षे ॥ समूहे ॥

प्रसरकः । पुं० पियाले ॥ अत्रप्रसवकइत्यपिपाठः शब्दमालायाम् ॥

प्रसरणम् । न० आसारे । सैन्यानांसर्वतोव्याप्तौ ॥ तृणकाष्ठादिहेतवेसैन्यानामितस्ततोगमने ॥ सर्वतोगमने । पसर्नां०फैलना० इ० भा० ॥ सृ० । ल्युट् ॥

प्रसरणी । स्त्री० प्रसरणार्थे ॥ प्रसरति । सृ० । अर्तिसृधृम्यनिः । कृदिकारादितिङीष् ॥

प्रसर्पणम् । न० गमने ॥ प्रसरणे ॥

प्रसव: । पुं० उत्पादे ॥ अपत्ये । फले । कुसुमे । गर्भमोचने । गर्भाद्बालकनिसृतौ । प्रसूतौ ॥ अस्यमासनियमो यथा । नवमेदशमेमासिनारीगर्भंप्रसूयते । एकादशेद्वादशेवाततोऽन्यविकारत: ॥ इति । अस्यौषधं यथा । पीतंसुकाञ्जिकंरुद्रक्वाथितंश्वपुङ्खया । हिङ्गुसैन्धवसंयुक्तंशीघ्रंस्त्रीणांप्रसूतिकृत् ॥ मातुलुङ्गस्यवैमूलंकटिबद्धंप्रसूतिकृत् । अपामार्गस्यवैमूलंयोनिस्थञ्चप्रसूतिकृत् ॥ आमार्गस्यवैमूलेगर्भवत्यास्तुनामत: । उत्पन्नमात्रेसकलेपुत्र: स्यादन्यथासुता ॥ अपामार्गस्यवैमूलेनारीणांशिरसिस्थिते । गर्भशूलंविनश्येत्तनात्रकार्याविचारणा । इति गारुडे १९६ अध्याय: ॥ अभ्यनुज्ञाने ॥ प्रसवनम् । प्रसूयतेवा । षूङ् । प्राणिप्रसवे । षूप्रेरणेवा । ऋदोरप् । पचाद्यज्वा ॥

प्रसवक: । पुं० पियालवृक्षे ॥

प्रसवनम् । न० प्रसवे ॥

प्रसवबन्धनम् । न० वृन्ते ॥ प्रसूयते । षुप्रसवे । ऋदोरप् । बध्यतेनेन । वधबंधने । करणेल्युट् । प्रसवस्य पुष्पफलपत्रस्यबन्धनम् ॥

प्रसवस्थली । स्त्री० मातरि ॥

प्रसविता । पुं० ताते । पितरि ॥

प्रसवित्री । स्त्री० जनयित्र्याम् ॥

प्रसव्य: । त्रि० प्रतिकूले ॥ अनुकूले ॥ प्रगतंसव्यात् । सव्यशब्दस्याच्छब्दवत्वामदक्षिणोभयार्थ: ॥

प्रसह: । पुं० काकगृध्रादिषु । तेच । काकोगृध्रउलूकश्च चिल्लश्चशशघातक: । चाषोभासश्चकुररइत्याद्या: प्रसहा: स्मृता: ॥ प्रसहा: कीर्त्तितास्तेप्रसह्याच्छाद्यभक्षणात् । प्रसहा: खलुवीर्योष्णास्तन्मांसंभक्षयन्तिये । तेशोषभस्मकोन्मादै: शुक्रक्षीणाभवन्तिहि ॥

प्रसहन: । पुं० हिंस्रपशौ ॥ यथा । शार्दूलसिंहशरभर्क्षतरक्षुमुख्यायेन्यानृप्रसह्यविनिहत्य निवर्त्तयन्ते । तेकीर्त्तिता: प्रसहना: पललंतदीयमर्शःप्रमेहजठरामयजाड्यहारि ॥ इति० राजनिर्घण्ट: ॥ न० क्षमायाम् । सहने ॥ त्रि० तद्वति अभिभवे ॥ आलिङ्गने ॥

प्रसहा । स्त्री० वृहतिकायाम् ॥

प्रसहिष्णु: । त्रि० अभिभावके ॥ अलङ्घनीतीक्ष्णु च ॥

प्रसह्य । अ० हठादर्थे । बलात्कारार्थे ॥ प्रकर्षेणसोढ्वा । अत्यमर्षणे । क्त्वा० ल्यप् ॥

प्रसह्यचौर: । पुं० हठाच्चौर्यकारिणि । माचले । चिल्लाभे । डाकादूत० दौडा० लुटेरा० इत्यादिभाषा ॥

प्रसातिका । स्त्री० सूक्ष्मधान्ये ॥
प्रसादः । पुं० अनुग्रहे । तुष्टिदाने । प्रीतिदाने ॥ यथा । सत्कीर्त्तिर्विमलंयशःसुकवितापाण्डित्यमारोग्यता०वादेवाक्पटुताकुलेन्दुरता गाम्भीर्यमचोभ्यता । प्रागल्भंप्रभुतागुणे निपुणता यस्यप्रसादाद्भवेत् तंवन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदर्मिति ॥ स्वास्थ्ये । आरोग्ये ॥ सौम्यतायाम् ॥ प्रसत्तौ । प्रसन्नतायाम् । नैर्मल्ये ॥ चित्तस्यप्रसन्नतायाम् । चित्तस्वच्छतायाम् ॥ देवनिवेदितद्रव्ये ॥ गुरूणां भुक्तावशेषे ॥ प्रसदनम् । षद्लृ० । भावेघञ् ॥ वैदर्भीरीतियुक्तकाव्यगुणे । ग्राम्यशब्दभिन्नप्रसिद्धार्थपदत्वे ॥ यथा । ओजः प्रसादमाधुर्यगुणत्रितयभेदतः । गौडवैदर्भपाञ्चालारीतयः परिकीर्त्तिताः ॥ तत्र० व्यक्तार्थपदमग्राम्यंप्रसादः परिकीर्त्तितः । इतिलक्षणम् ॥ अपिच । शुष्केन्धनाद्दिवत्स्वच्छजलवत्सहसैवयः । व्याप्नोत्यन्यत्प्रसादोसौसर्वत्रविहितस्थितिः ॥ अन्यत्इति० व्याप्यमत्रचित्तम् । सर्वत्रेतिसर्वेषुरसेषु० सर्वासुरचनासुच । गुणवृत्त्यापुनस्तेषांवृत्तिः शब्दार्थयोर्मता ॥ गुणवृत्त्याउपचारेण । तेषाम्० ओजआदिगुणानाम् ।

आकारेणौर्येस्त्रेव ॥
प्रसादनः । पुं० भक्तकारे ॥ न० अन्ने ॥ त्रि० प्रसन्नताकारके ॥
प्रसादना । स्त्री० परिचर्यायाम् । सेवायाम् ॥
प्रसादितः । त्रि० प्रार्थिते । सौमनस्यङ्गमिते ॥
प्रसादी । त्रि० अनुग्रहशीले । प्रसादगुणयुक्ते ॥ शीलेणिनिः । अस्य घेंद्रनिर्वा ॥
प्रसाधनम् । न० वेशे । अलङ्काररचनादिकृतशोभायाम् ॥ प्रसाध्यतेऽनेनाङ्गम् । षाध० । करणे ल्युट् ॥ प्रकृष्टनिष्पत्तौ ॥
प्रसाधनी । स्त्री० कङ्कतिकायायाम् ॥ सिद्धौ । ङीप्
प्रसाधिका । स्त्री० नीवारे । वेशकारिण्याम् । अलङ्कर्त्र्याम् ॥
प्रसाधितः । त्रि० अलङ्कृते । भूषिते ॥ प्रसाध्यतेस्म । षाधसंसिद्धौ । स्वार्थण्यन्तः । क्तः ॥ प्रकृष्टनिष्पन्ने । निष्पादिते ॥
प्रसारः । पुं० प्रसरणे ॥ प्रसरणम् । सृ० । घञ् ॥ तृणकाष्ठादेः प्रवेशे ॥
प्रसारणम् । न० पञ्चविधकर्मान्तर्गतविस्ताररूपेकर्मणि । यथा । उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा । प्रसारणञ्चगमनं कर्माण्येतानि

पञ्चच ॥

प्रसारणी । स्त्री० गंधालिकायाम् । सरणायाम् । कुब्जप्रसारणीतिख्यातायाम् । गन्धभादालिया ० द्र० गौ० भा० ॥ प्रसारणीगुरुर्वृष्यावलसन्धानकृत्सरा । वीर्योष्णावात हृत्तिक्तावातरक्तकफापहा ॥ वीणानांस्वविरागाद्य वातसङ्कोचितात्मनाम् । प्रसारयेद्यतोऽङ्गानितदुक्ता प्रसारणी ॥ प्रसार्यतेरूपमनया । करणेतिल्युट् ॥

प्रसारिणी । स्त्री० लज्जालुलतायाम् ॥ प्रसारण्याम् ॥

प्रसारित : । त्रि० तते । विस्तारिते ॥

प्रसारी । त्रि० प्रसरणशीले । विसृत्वरे ॥ प्रसरति० तच्छील : । सृगतौ । प्रे लपसृदुमथवदवस इतिविनुण् ॥ आयते ॥ व्याप्ते ॥

प्रसितम् । न० पूये । त्रि० तत्परे । आसक्ते ॥ प्रासायि । षिञ्बन्धने । कर्म्मणिक्त : ॥

प्रसिति : । स्त्री० बन्धने ॥ बन्धनसाधनरज्जुनिगडादौ ॥ प्रसयनम् । षिञ्० । क्तिन् ॥

प्रसिद्ध : । त्रि० भूषिते ॥ ख्याते ॥ प्रसिद्ध्यति० प्रसिध्यतेस्मवा । षिधुसंराद्धौगत्यांवा । कर्त्तरि० कर्म्मणिवाक्त : ॥

प्रसिद्धि: । स्त्री० टङ्कारे । ख्यातौ ॥ उत्कृष्टसिद्धौ ॥ प्रकृष्टासिद्धि : ॥

प्रसुप्त : । त्रि० निद्रिते ॥ प्रकर्षेण सुप्त : ॥

प्रसू : । स्त्री० अश्वायाम् ॥ जनन्याम् ॥ कन्दल्याम् ॥ वीरुधि । प्रसूते० प्रसूयतेवा । षूङ्प्रसवे । सत्स्विति क्विप् ॥

प्रसूका । स्त्री० वाजिन्याम् । वडवायाम् ॥

प्रसूतम् । न० कुसुमे । पुष्पे ॥ त्रि० सञ्जाते ॥ सूते ॥ प्रासविष्ट । षूङ्० । क्त : ॥

प्रसूता । स्त्री० जातसन्तानायाम् । जातापत्यायाम् । प्रजातायाम् ॥ टाप् ॥

प्रसूति : । स्त्री० प्रसवे । उद्भवे ॥ तनये ॥ दुहितरि ॥ स्वायम्भुवमनो : पुत्र्याम् ॥ प्रसवनम् । प्रसूयतेवा । षूङ् । क्तिन् ॥ कारणे ॥ प्रकर्षेणसूतिर्जन्मयस्मात् ॥

प्रसूतिका । स्त्री० प्रसूतायाम् ॥ प्रासविष्ट । षूङ्० । गत्यर्थेतिक्त : । स्वार्थेकन् । सूतिकापुत्रिकेतीत्वम् ॥

प्रसूतिजनम् । न० दु : खे । पीडामात्रे ॥ प्रसूतेर्जातम् । पञ्चम्याम जातावितिड : ॥

प्रसूनम् । न० फले ॥ पुष्पे ॥ त्रि०

जाते ॥ प्रसूयते । षुञ् अभिषवे । सुञोदीर्घश्चेतिन: ॥ यद्वा । प्रसूयतेस्म । षूङ् । क्त । ओदितश्चेतिनिष्ठानत्वम् ॥ स्वादयओदित: ॥

प्रसूनेषु: । पुं० कन्दर्पे । कामे ॥ प्रसूनानि इषवोयस्य ॥

प्रसृत: । पुं० । अर्द्धाञ्जलौ । निकुब्जपाणौ । पसर् ० इ० भा० ॥ न० पलद्वये ॥ त्रि० सुप्रसारे । तते ॥ विनीते ॥ वेगिते ॥ निसृते ॥ प्रकृष्टंसृतमस्य ॥ प्रसरतिस्म । सृ० । गत्यर्थेतिक्त: ॥

प्रसृता । स्त्री० जङ्घायाम् ॥ प्रसरतिस्म० प्रस्रियतेस्मवा । सृ० । गत्यर्थेति० कर्मणिवाक्त: ॥ प्रकृष्टंसृतंगमनमनयावा ॥

प्रसृति: । स्त्री० आकुञ्चितपाणौ ॥ अर्द्धाञ्जलौ । प्रसृते ॥ प्रकृष्टासृतिरस्य ॥

प्रसृष्ट: । त्रि० प्रेषिते ॥ अनुज्ञाते ॥

प्रसेक: । पुं० सेचने ॥ स्रुतौ ॥ चरणे ॥ प्रसेचनम् । षिच० घञ् ॥

प्रसेदिका । स्त्री० क्षुद्रोपवने । बगीची० इ० भा० ॥

प्रसेदिवान् । त्रि० प्रसन्ने ॥ सदेर्भाषायांसदवसश्रुवइतिलिट: क्वसुरादेश: लिटिधातोरितिद्वित्वम् । अत

एकहल्मध्यइत्येत्वाभ्यासलोपौ । वस्वेकाजाद्घसामितीडागम: । उगित्वान्नुम् । सान्तेतिदीर्घ: ॥

प्रसेव: । पुं० वीणाङ्गे ॥ स्यूते । वस्त्रशणादिनिर्मितेथैला०इतिख्याते ॥ सूत्ररचितभाण्डविशेषे । धोकडा० इ०गौड़०भा० ॥ इतौ ॥ प्रसीव्यतेस्म । षिवु० । अकर्त्तरिचेतिघञ् ॥

प्रसेवक: । पुं० वीणाग्रान्तवक्रकाष्ठे । दण्डाध: शब्दगाम्भीर्यार्थकाष्ठभाण्डे । ० वीणास्थितालावुफले । ० ककुभे ॥ सूत्रनिर्मितभाण्डे । धौतकटे । स्यूते । धोकडा०इ०गौड भाषा० ॥ प्रसेव्यते । षेवृसेवने । क्वुन् ॥

प्रस्कण्व: । पुं० ऋषिविशेषे ॥ प्रस्कण्वहरिश्चन्द्रावृषीइतिसाधु: ॥

प्रस्कन्दनम् । न० विरेके ॥

प्रस्कन्नम् । त्रि० अपगते ॥ पतिते ॥ प्रकर्षेणस्कन्न: ॥

प्रस्तर: । पुं० पाषाणे । ग्रावणि । पत्थर०इ०भा० ॥ मणौ ॥ प्रस्तृणाति । स्तृञ् ० । पचाद्यच् ॥ दर्भमुष्टौ ०इ०कर्ममीमांसका: ॥ पल्लवाद्यैर्विरचितेतल्पे ॥ प्रस्तारे ॥

प्रस्तरिणी । स्त्री०गोलोमिकायाम् ॥

प्रस्तार: । पुं० पत्ररचिततल्पे ॥ तृणवने ॥ अध्यायाम् ॥ छन्द: प्रभृ

तीनांप्रभेदस्त्रापक्किसङ्केतविशेषे ॥
प्रस्तीर्यते । स्तृञ् । प्रेस्त्रोऽयज्ञे
इतिघञ् । भावेवा ॥

प्रस्तारितः । त्रि० प्रकीर्णे । विक्षिप्ते ॥

प्रस्तार्य्यर्म्म । न० नेत्ररोगभेदे ॥ त-
स्यलक्षणम् । प्रस्तार्यर्मतनुस्तीर्णंश्यो
वंरक्तनिभंसिते । इतिमाधवकरः ॥
अपिच । समन्ताद्विस्तृत : श्यावो-
रक्तोवामांससंश्रय : । सन्निपातेन-
दोषाणांप्रस्तार्यर्मतदुच्यते ॥ तस्यौ
षधंयथा । कतकस्यफलंशङ्खं-
त्र्यूषणंसैन्धवान्वितम् । फेनोरसा
ञ्जनंक्षौद्रंविडङ्गस्त्वमन : शिला ॥
कुक्कुटाण्डकलापानिवर्तिरेषाव्यपो
हति । तिमिरंपटलंकाचमर्मशुक्रं
तथैवच ॥ कण्डुक्लेदार्वुदंहन्तिमल-
माशुसुखावतीति ॥

प्रस्ताव : । पुं० प्रसङ्गे ॥ प्रकरणे ॥ अ
वसरे ॥ प्रस्तवनम् । ष्टुञ् । प्रेद्रुस्तु
स्रुवंइतिघञ् ॥ पाञ्चभक्तिकस्यसा-
म्नोद्वितीयभक्तौ ॥ प्रारम्भे ॥

प्रस्तावना । स्त्री० आरम्भे ॥ प्रतिपा
द्यशार्थस्याकथायाम् । सूत्रधारेणस-
हनटीविदूषकाणांपरस्परविचित्रभा
षणे ॥ तस्यालक्षणंयथा । नटीवि-
दूषकोवापिपारिपार्श्विकएववा ।
सूत्रधारेणसहिता : संलापंयत्रकु-
र्वते ॥ चित्रैर्वाक्यै : स्वकार्योत्थै :
प्रस्तुताक्षेपिभिर्मिथ : । आमुखंत
त्तुविज्ञेयंनाम्नाप्रस्तावनापिसेतिसा
हित्यदर्पण : ॥

प्रस्तर : । पुं० पल्लवादिरचितशय्या
याम् ॥

प्रस्तीत : । त्रि० } ध्वनिते ॥
प्रस्तीम : । त्रि० } संहते ॥ स्त्यैष्टैशब्द
सङ्घातयो : । क्त : । आत्वेकृ-
ते० संयोगादेरित्यस्यासिद्धत्वात्०-
पूर्वं० स्त्य : प्रपूर्वस्येतिसम्प्रसारणे
पूर्वरूपेचकृतेहलइतिदीर्घ: : । प-
श्चादण्वत्त्वात्तत्त्वयोर्विरहान्ननत्व-
म् । प्रस्त्योन्यतरस्यामिति० निष्ठा
तस्यपाक्षिकोम : ॥

प्रस्तुत : । त्रि० उपस्थिते ॥ प्रति
पन्ने ॥ प्रकरणप्राप्ते । प्राकरणिके ।
प्रासङ्गिके ॥ निष्पन्ने ॥ प्रकर्षस्तुति-
युक्ते ॥

प्रस्तुति : । स्त्री० प्रत्यक्षस्तुतौ ॥

प्रस्तृत : । त्रि० अन्तरिते ॥

प्रस्तोता । पुं० ऋत्विग्विशेषे ॥ प्रस्तौ-
ति । ष्टुञ् । बहुलमन्यत्रापीति-
तृन् ॥

प्रस्तोभ : । पुं० परिहासे ॥ प्रोत्साहे ॥

प्रस्तोभित : । त्रि० उपहसिते ॥

प्रस्थ : । पुं० न० चतुष्कुडवरूपेधान्य
मानभेदे ॥ चत्वार : कुडवा : प्र-
स्थ : ॥ आढकचतुर्थभागे । पर्वते
कदेशे । सानौ ॥ उन्नितवस्तुनि ॥
द्विशरावपरिमाणे ॥ इ० वै० प० ।

समनेचविरेकेचतथाशोणितमोत्त-णे । अष्टचयोदशपलंप्रस्थमाहुर्मनीषिण: ॥ अष्टचयोदशपलंसार्द्धषट्कम् ॥ विस्तारे ॥ यथा। दीर्घप्रस्थे समानञ्चनकुर्यान्मन्दिरंबुधइति ॥ प्रकर्षेणतिष्ठति । ष्ठा० । आतश्चोपसर्ग इ०क : प्रतिष्ठन्तेऽस्मिन्नऽनेन वा । घञर्थेकोवा ॥ प्रकर्षस्थितिविशिष्टे ॥

प्रस्थपुष्प: । पुं० स्वल्पपत्र तुलस्याम् । मरुवके । मरुया० इ० भा० ॥ प्रस्थेसानौपुष्पति । पुष्प० । अच् ॥

प्रस्थानम् । न० विजिगीषो:प्रयाणे । यात्रायाम् । व्रज्यायाम् । अभिनिर्याणे ॥ गमनमात्रे ॥ प्रपूर्वात्तिष्ठतेर्ल्युट् ॥

प्रस्थानविघ्न : । पुं० गमनव्याघाते ॥

प्रस्थापित: । त्रि०प्रतिशिष्टे । प्रेरिते । पठाया० इ० भा० ॥ प्रकर्षेण स्थापिते ॥

प्रस्थायी । त्रि० प्रस्थास्यतितस्मिन् ॥ ष्ठा० । प्रेस्थइति इनिर्णित् ॥

प्रस्थिका । स्त्री० अम्बष्ठायाम् ॥

प्रस्थित : । त्रि० कृतप्रस्थाने ॥ प्रष्ठा० । क्त : । द्यतिस्यतीतीत्वम् ॥ निर्गच्छति ॥

प्रस्न : । पुं० स्नानार्थकटाहविशेषे ॥ प्रस्नान्त्यस्मिन् । स्ना० । घञर्थेकविधानंस्थास्नापाव्यधिहनियुद्धार्थम् ॥

प्रस्फुट: । त्रि० प्रफुल्ले ॥ प्रकर्षेणस्फुट : ॥

प्रस्फुटित : । त्रि० विकसिते । प्रकर्षेणस्फुटित : ॥

प्रस्फुरित : । त्रि० प्रचलिते ॥ प्रोल्लसिते ॥

प्रस्फोटनम् । न० शूर्पे ॥ ताडने ॥ विकाशने ॥ प्रस्फोट्यतेऽनेन । स्फुट् । करणेल्युट् ॥ पचने ॥

प्रस्रव : । पुं० प्रवाहे ॥ स्रवणंस्रव : । स्रुगतौ ॥ ऋदोरप् । प्रकृष्ट : स्रव : ॥ चीरादेर्द्रवद्रव्यस्यत्तरणे ॥

प्रस्रवण : । पुं० किष्किन्धासमीपवर्तिनिगिरिविशेषे ॥ माल्यवत्पर्वते ॥ स्वेदे ॥ न० पर्वतस्थानभेदे स्रवज्जलस्थितौ०पर्वतमूलाद्वहि : स्रवज्जलेवा । उत्से । झर्ना० इ० भा० ॥ तज्जलगुणायथा । प्रस्रवणजलंस्वच्छंलघुमधुरंरोचनञ्चदीपनकृदितिराजनिर्घण्ट: ॥ स्रवन्त्यापोऽस्मात् । स्रु० । भीमादयइ०कृत्यल्युटवा०अपादानेल्युट् ॥ प्रकर्षेणत्तरणे ॥

प्रस्राव : । पुं० मूत्रे । पिसाब० इ० भा० ॥ प्रस्रूयते । स्रुप्रस्रावे । प्रेद्रुस्तुस्रुवइतिघञ् ॥

प्रस्रुत : । त्रि० वहति ॥

प्रस्वान : । पुं० उच्चै:शब्दे ॥ प्रकृष्ट : स्वान : ॥

प्रस्वेद : । पुं० अतिशयघर्मे ॥ तदौ

मर्धंयथा । चन्दनंकुङ्कुमंमांसीकर्पूरोजातिपत्रिका । जातीकक्कोलमृगानांलवङ्गस्यफलानिच ॥ अगुरुशीरकाश्मर्यः कुष्ठंतगरनालिका गोरोचनाप्रियङ्गुश्च बोलंमदनकंनखम् । सरलः सप्तपर्णश्चलाचाचामलकीतथा । कर्पूरकःपद्मकश्चएतैस्तैलंप्रसाधितम् । पुंस्त्वेदमलदौर्गन्ध्यकण्डूकुष्ठहरंपरम् । पुमान्युवास्याच्छ्क्राख्यः स्त्रीणांचात्यन्तवल्लभः ॥ स्त्रीशतंगच्छतेरुद्रवन्ध्यापिलभतेसुतम् ॥ इतिगारुडे १९८ अध्यायः ॥

प्रहतः । त्रि० वितते ॥ क्षुण्णे ॥ प्र हन्यतेस्म । हन० । क्तः ॥ प्रकर्षेणहिंसिते० गते० च ॥

प्रहरः । पुं० दिवसस्यचतुर्थांशे । अहोरात्रस्याष्टभागैकभागे । यामे । पहर० इ० भा० ॥ प्रह्रियतेढक्कादिरस्मिन् । हृञ् । पुंसिसंज्ञायामितिघः ॥

प्रहरकुटवी । स्त्री० कुटुम्बिनीक्षुपे ॥

प्रहरणम् । न० शस्त्रमात्रे । आयुधे ॥ प्रह्रियतेऽनेन । हृञ् । करणेतिल्युट् ॥ अन्नीप्रक्षेपेइतिकर्ममीमांसकाः ॥ युद्धे ॥ प्रहारे ॥ सगणे ॥ ऽः ॥

प्रहरकलिका । स्त्री० शर्करीप्रभेदे ॥ ननभनलगितिप्रहरणकलिका ॥ यथा । व्यथयतिकुसुमप्रहरणकलिकाप्रमदवनभवातवधनुषितता । विरहविपदिमिशरणमिहततोमधुमथनगुरुस्मरणमविरतम् ॥

प्रहरी । त्रि० प्रहरवति । पहरेवारो० इ० भा० ॥

प्रहर्त्ता । त्रि० प्रहारकर्त्तरि । मारके ॥ प्रहरति । प्रहृअस्तृच् ॥

प्रहर्षः । पुं० प्रमोदे ॥ प्रकृष्टोहर्षः ॥

प्रहर्षणः । पुं० एकदेशे । बुधग्रहे ॥ त्रि० हर्षविशिष्टे ॥ हर्षकारके ॥

प्रहर्षणी । स्त्री० अतिजगतीप्रभेदे ॥ तस्यालक्षणंतथा । म्नौज्रौगस्त्रिदशयतिः प्रहर्षणीयम् । अपिच । त्र्याशाभिर्मनजरगाः प्रहर्षणीयम् । इ० ॥ लक्ष्यंयथा । गोपीनामधरसुधारसस्यपानैरुत्तुङ्गस्तनकलसोपगूहनैश्च । आश्चर्यैरपिरतिविभ्रमैर्मुरारेः संसारेमतिरभवत्प्रहर्षणीह ॥ हरिद्रायाम् ॥

प्रहसनम् । प्रहासे ॥ आक्षेपे ॥ रूपकान्तरे ॥ हसे० । ल्युट् ॥

प्रहसन्ती । स्त्री० यूथ्याम् ॥ वासन्त्याम् ॥ प्रहसति । हसेहसने । लटःशतृ । उगित्वान्ङीप् । शप्श्यनोरितिनुम् ॥ प्रकर्षेणहसन्त्याम् ॥

प्रहस्तः । पुं० चपेटे । प्रतले ॥ प्रसृतोहस्तः । प्रादयोगतेतिसमासः ॥ रावणस्यसेनापतौ ॥

प्रहाणः । पुं० क्षये ॥ कृत्यचइ० णत्व

म् ॥
प्रहारः । आघाते । चोट॰फट॰इभा॰ ॥ प्रहरणम् । हृञ्॰ ॥ घञ्॰ ॥ आन्तं भीतेत्यक्तशस्त्रे पतितेबालके तथा । प्रहरन्तिनवीरास्तेधर्मएषसनातनः ॥
प्रहारवल्ली । स्त्री॰ मांसरोहिण्याम् ॥
प्रहासः । पुं॰ अट्टहासे । शिवे ॥ नटे ॥ सोमतीर्थे ॥ अत्यर्थहासे । अनुचिताचरणप्रकाशनेनलज्जोत्पादने ॥ प्रहसनम् । हसे॰ । घञ्॰ ॥
प्रहासी । पुं॰ वासन्तिके । विदूषके । प्रीतदे । भाण्ड॰ इ॰ भा॰ ॥ प्रकृष्टं हासयति॰ हसतिवा । णिनिः ॥ प्रहासोऽस्यास्तिवा । इनिः ॥
प्रहिः । पुं॰ कूपे ॥ प्रह्रियते । प्रेहरतेः कूपेइति॰ इनि॰ ॥
प्रहितम् । न॰ सूपे ॥ त्रि॰ प्रक्षिप्ते ॥ प्रेरिते ॥ प्रधीयतेस्म । डुधाञ्॰ क्तः । दधातेर्हिः ॥
प्रहीणः । त्रि॰ विगते । परित्यक्ते । । विहीने ॥ ओहाक्॰ । क्तः ॥ घुमास्थेतीत्वम् । ओदितश्चेतिनिष्ठातस्यनः ॥
प्रहीणदोषः । त्रि॰ नितान्तनिर्मलस्वान्त ॥ प्रहीणाः दोषारागादयो यस्य ॥
प्रहुतः । पुं॰ पञ्चमहायज्ञान्तर्गतभूतयज्ञे ॥ प्रकर्षेणहूयते । हु॰ । क्तः

प्रहृष्टः । त्रि॰ सम्हृष्टे ॥ प्रकर्षेणहृष्टे ॥
प्रहेणकम् ) न॰ पिष्टकविशेषे । वाय
प्रहेलकम् ) नें । वाचनके । अवलोपायने । वायना॰ इ॰ भा॰ ॥
प्रहेलिका । स्त्री॰ प्रवह्लिकायाम् । प्रश्नदूत्याम् । दुर्विज्ञानार्थप्रश्ने । पहेली॰ इ॰ भा॰ ॥ लक्षणंयथा । व्यक्तीकृत्यकमप्यर्थंस्वरूपार्थस्यगोपनात् । यत्रबाह्यान्तरावर्थौकथ्येते साप्रहेलिका ॥ साद्विधार्थीचशाब्दीचप्रख्याताप्रश्नशासने । आर्थीस्यादर्थविज्ञानाच्छाब्दीशब्दविभागतः ॥ आर्थीयथा । तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः । गुरूणांसन्निधानेपिकः कूजतिमुहुर्मुहुः ॥ पानीयकुम्भइति ॥ शाब्दीयथा । सदारिमध्यापिनवैरियुक्तानितान्तरक्ताप्यसितैवनित्यम् । यथोक्तवादिन्यपिनैवदूतीकानामकान्तेतिनिवेदयाशु ॥ सारिका । इति ॥ एवम्॰ सोदर्यैवर्येणनितान्तमादौ सम्भाविततोनिर्गतभीः सभीमः । राजन्भवद्बाहुबलेनतुल्यो निगूढनामाचकविर्ब्रवीति ॥ अस्यार्थः । आदौमोत्॰ उकारसहितः । भीमोनिर्गतभीः मकारः । अर्थश्चर्येणस्वामिवाचकेनपतिशब्देनसम्भावितः पश्चाद्युक्तः । भवद्बाहुबलेनतुल्यो

दीर्घ : । तथाच० उमापतिरितिक वेर्नामात्रनिगूढम् । प्रहेलिकायाम् मैयार्थत्वदूरान्वयादिनदूषणमिति ज्ञेयम् ॥ प्रहेलयति० अभिप्रायंसूच ति । हिलभावकरणे । क्वुन्शिल्पि संज्ञयोरितिक्वुन् ॥

प्रह्लन्न : । त्रि० हृष्टे । प्रमुदिते । प्री ते ॥ प्रह्लादयतिस्म । ह्लादीसुखे च क्त : । रदाभ्यामितिनत्वम् । ह्लादो निष्ठायामितिह्रस्व : ॥

प्रह्लाद: । पुं० निनदे । शब्दे ॥ हर्षे । प्रमो दे ॥ प्रह्लादे । परमभागवतेहिरण्य कशिपो : पुत्रे ॥ प्रकर्षेणह्लादय- ति० आनन्दयति० परमसात्त्विकत्वे नसर्वान्० इति प्रह्लादोदैत्यानांमध्ये भगवतोविभूति : ॥

प्रह्व : । त्रि० प्रवणे । नम्रे । नते । नम नशीले ॥ अनुकूले । प्रह्वयति । ह्वेञ्स्पर्द्धायांशब्दे च । कविधौसर्व त्रप्रसारणिभ्योडइतिड : ॥ प्रह्वयतेऽ सौ । ह्वेञ् । सर्वनिघृष्वेतिसा धु : । आकारवकारयोर्लोप : । ज हातेर्वा ॥ आसक्तौ ॥ शिरसानम्रे ॥ महति ॥ यथा । तदाप्रह्वा:सर्व कार्यविघ्नानघ्यन्तुमेशिवे० इतिदेवीभा गवतम् ।

प्रह्वत्वम् । न० शिरसानतौ ॥

प्रह्वीभूत: । त्रि० प्रणते । शिरसानम्रे । नमस्कृतवति ॥

प्रांशु : । त्रि० उच्चे । उन्नते । तुङ्गे ॥ प्रकृष्टाअंशवोऽस्य ॥ जगतत्रयंक्रम माणेभगवतित्रामने ॥ तोयेतुपति तेहस्ते वामनोभूदवामन :। सर्वदेव- मयंरूपंदर्शयामासवैविभु : ॥ भू: पादौ०द्यौ : शिरश्चास्यचन्द्रादित्यौ चचक्षुषी । इत्यादिविश्वरूपंदर्शयि त्वा० तस्यविक्रमतोभूमिं० चन्द्रादि त्यौस्तनान्तरे । नभ : प्रक्रममाणस्य नाभ्यान्तौसमवस्थितौ ॥ दिवमाक्र ममाणस्यजानुमूलेव्यवस्थिताविति प्रांशुत्वंदर्शितं० ह० वं० ॥

प्राकरणिक : । त्रि० प्रकरणागते ॥

प्राकषिक : । पुं० षिड्गे । मायान- र्तके ॥ परदारोपजीविनि ॥ प्राक षति । कषहिंसायाम् । प्राङ्पिर्णा कष इतिकिकन् ॥

प्राकाम्यम् , न० महादेवस्याष्टविधैश्व र्यान्तर्गतैश्वर्यविशेषे ॥ स्वच्छन्दानु मतौ । अवसर्गे । स्वाच्छन्द्यानुमन ने ॥ प्राकाम्यमिच्छानभिघात : । यतोभूमावुन्मज्जति० निमज्जतिच० यथोदके ॥ प्रकामस्यभाव: । ष्यञ्॥

प्राकार : । पुं० वरणे ॥ साले । व- प्रोपर्यन्यरचिता० इष्टकादिरचितवेष्ट ने ॥ अस्यपरिमाणं यथा । ऊर्द्ध विंशतिहस्तेभ्योनैवकुर्याद्गृहंगृही। ऊर्द्ध विंशतिहस्तेभ्य : प्राकारंनशु भप्रदम् ॥ तस्यद्वारमानम् । प्रस्थेह

स्तदयात्पूर्वंदीर्घंह्रस्वञ्चयंतथा । गृ हिणांशुभदंद्वारंप्राकारस्यगृहस्य च । नमध्यदेशेकर्तव्यंकिञ्चिन्न्यूनाधिकेशुभमिति । व्र० पु० ॥ प्रक्रियते । डुकृञ्० । कर्मणिघञ् । उपसर्गस्यघञीतिदीर्घः ॥

प्राकृतः । त्रि० नीचे । प्रकृष्टमकृतमकार्यमस्य ॥ स्वाभाविके ॥ शास्त्रासंस्कृतबुद्धौ । बालसमे ॥ संस्कृतेतरभाषायाम् ॥ संस्कृतप्रकृतिके । भाषाप्रभेदे ॥ प्रकृतौसंस्कृतेभवः ततआगतोवा । तत्रभवः ततआगतइतिवाऽण् ॥ पुं०प्रलयविशेषे ।प्रकृतौसंस्थितंव्यक्तमतीतप्रलयेतुयत् । तस्मात्प्राकृतसंज्ञोयमुच्यतेप्रतिसञ्चरः ॥ प्रकृत्यासिद्धः ॥ पुं० प्रकृतिप्रवर्त्तकेभगवति ॥ गुणविशेषे ॥ यथाशैवानांमतेधर्मज्ञानवैराग्यादयोषुविगुणाभावसंज्ञया विज्ञाताः तेचसांसिद्धिकाः वैनयिकाः प्राकृताश्चेतित्रिधाभवन्ति । तत्रप्राकृतोदेहसंयोगेव्यक्तः स्वप्नादिबोधवत् । यः स्वप्नमदमूर्च्छाप्रबुद्धस्य० यथाप्रसुप्तसंस्कारइवदेहसंयोगएव व्यज्यतेनदेहापायेपिसप्राकृतोनामगुणोविज्ञेयः । इतिशैवाः ॥ त्रि० प्रकृतिसम्बन्धिनि ॥

प्राकृतज्वरः । पुं० ऋतुज्वरे ॥ यथा । वर्षाशरद्वसन्तेषुतिष्वृतुषुक्रमेणवातपित्तकफजज्वराः । यथा । वर्षाशरद्वसन्तेषुवाताद्यैः प्राकृतक्रमात् । इति ।

प्राकृतदोषः । पुं० वर्षाशरद्वसन्तेषुक्रमेणकुपितेषुवातपित्तकफेषु ॥ यथा । चयप्रकोपप्रशमाःपित्तस्यप्राहृडादिषु । श्लेष्मणः शिशिराद्येषुवायोर्घर्मादिषुत्रिषु ॥ इतिरक्षितः ॥

प्राकृतप्रलयः । पुं० प्रकृतेर्लये ॥ य० निर्गुणस्यचनित्यस्य वाद्यन्तरस्थितस्यच । निमेषाणांसहस्रेणप्रकृतेर्दण्डउच्यते ॥ षष्टिदण्डात्मकस्तस्यवासरस्प्रकीर्तितः । मासस्त्रिंशद्दिवाराचैर्वर्षंद्वादशमासकैः ॥ एवञ्चतेशताब्देचशौकृष्णे प्रकृतेर्लयः ॥ प्रकृत्यांचप्रलीनायांतदैवप्राकृतोलयः । सर्वाः संहृत्यसाचैकामहाविष्णोः प्रसूश्चया । कृष्णावक्षसिलीनाचमूलप्रकृतिरीश्वरी ॥ कृ०ब्र० ॥ अपिच का० पु० ॥ प्रकृतौसंस्थितोयस्मात्सर्वस्तन्मात्रसंश्रयः । अहङ्कारमहत्तत्त्व गतोयत्प्राकृतोलयः ॥ प्रकृतौसंस्थितोव्यक्तमतीतप्रलयस्तुयत् । तस्मात्प्राकृतसंज्ञोयमुच्यतेप्रतिसञ्चरः ॥ कू० ॥

प्राकृतमानुषः । पुं० सामान्यमनुष्ये ॥ यथा । एकादशचमूनाथंभीमपादेनमास्पृश । पञ्चानामपियोभर्त्ता नासौप्राकृतमानुषः ॥

प्राकृतमित्रम् । न० स्वदेशव्यवहितदेशावस्थितेराज्ञि ॥

प्राकृतशत्रुः । पुं० एकविषयाभिनिवेशिनिनृपादौ ॥

प्राकृतिकः । पुं० बन्धविशेषे ॥ सच-प्रकृतावात्मज्ञानात्० येप्रकृतिमुपासतेतेषांभवति । योवायुपुराणे०प्रकृतिलयादित्युच्यते । पूर्णंशतसहस्रन्तुतिष्ठन्त्यव्यक्तचिन्तकाइति ॥ त्रि०प्रकृतिविकारे । प्रकृतिसम्बन्धिनि ॥

प्राक्कूलः । त्रि० प्रागग्रे ॥

प्राक्तनः । त्रि० प्राग्भवे ॥ कालवाचिनोऽव्ययात्त्युट्युलौ ॥

प्राक्तनकर्म्म । न० अदृष्टे । भाग्ये ॥ पुराकृतकार्य्ये ॥

प्राक्फलः । पुं० पनसे ॥

प्राक्फल्गुनी । स्त्री० पूर्वफल्गुन्याम् ॥

प्राक्फल्गुनीभवः । प्राक्फाल्गुनः । प्राक्फाल्गुनेयः । } पुं० बृहस्पतौ । जीवे । चित्रशिखण्डिजे ॥ तीक्ष्णतायाम् । प्रखरत्वे ॥

प्रागभावः । पुं० कार्य्यस्योत्पत्तेः पूर्व्ववर्त्तिनि०अभावविशेषे ॥ सच०अनादिः सान्तः । आकाशादावतिव्याप्तिवारणायसान्तइति । घटादावतिव्याप्तिवारणायानादिरितितार्किकाः ॥ विद्यमानस्येवघटस्यमृत्पिण्डेप्यभावः प्रागभावः आविर्भावजनकइतिसत्कार्य्यवादिनः ॥

प्रागल्भ्यम् । न० प्रगल्भतायाम् । प्रतिभातिशये ॥ यथा । प्रागल्भ्यहीनस्यनरस्यविद्या०शस्त्रंयथाकापुरुषस्यहस्ते । नटप्रमुत्यादयसेशरीरेद्वस्यदाराइवदर्शनीयाः ॥ इ० ॥ स्त्रीणामयत्नजेभावविशेषे ॥ य० । प्रागल्भ्यौदार्य्यमाधुर्य्यशोभाधीरत्वकान्तयः । दीप्तिश्चा०यत्नजा०भावहावहेलास्त्रयोङ्गजाः ॥ इ० ॥ प्रगल्भस्यभावः । ष्यञ् । प्रागल्भ्यंपराभिभवसामर्थ्यमितिगीताभाष्यटीका ॥

प्रागुदीची । स्त्री० पूर्वोत्तरदिशि ॥

प्राग्गमनम् । न० अग्रतोनिस्सरणे ॥

प्राग्ज्योतिषः । पुं० कामरूपे । नरकासुरपुरे ॥ अत्रैवहिस्थितोब्रह्माप्राङ्नक्षत्रंससर्ज्जह । ततः प्राग्ज्योतिषाख्येयंपुरीशक्रपुरीसमा ॥

प्राग्भद्रपदा । स्त्री० पूर्वभाद्रपदनक्षत्रे ॥

प्राग्भागः । पुं० पर्वतादेरग्रभागे ॥

प्राग्भारः । पुं० प्राकृतिविशेषे ॥ पर्वताग्रभागे ॥ तटे ॥

प्राग्रहरः । त्रि० प्रधाने । श्रेष्ठे ॥ प्रकृष्टमग्रम् । प्राग्रंहरति । हरतेरनुद्यमनेच् ॥

प्राणाटम् । न० चक्रमीदधनि ॥

प्राग्रा : । त्रि० चमेग्र । श्रेष्ठे ॥ प्रकृष्टोग्रा : ॥

प्राग्वंश : । पुं० घृताधारगृहात्पूर्वगृहे । पत्नीशालाख्ये । हवि : शालाया : पूर्वभागेयजमानादीनांस्थित्यर्थेगेहे ॥ प्राग्वति । अव्यु० । ऋत्विगादिनाक्विन् । प्राग्० वंश : गोवंस्थूणावाऽत्र ॥ यज्ञशालाया:पूर्वपश्चिमस्तम्भयोरर्पितेपूर्वपश्चिमायते काष्ठे ॥

प्राघात : । पुं० युद्धे ॥ प्रकृष्टआघातीयस्मिन् ॥

प्राघार: । पुं० घृतादिक्षरणे । क्षेपाते ॥ प्राघरणम् । घृक्षरणादीप्त्योः । घञ् । उपसर्गस्यघञीतिदीर्घ : ॥

प्राघुण : । ) पुं० अतिप्राघुणिक : । ) पुं० थौ ॥

प्राघूर्ण : । पुं० ) पुं० अतिप्राघूर्णिक : । ) थौ ॥

प्राङ्क : । ) पुं० पणवप्राङ्ग : । ) पुं० वाद्ये ॥

प्राङ्गणम् । न० अङ्गने । चत्वरे । अजिरे । अंगना० आंगन० इ० भा० ॥ सूर्यविम्बस्तस्यदोषोयया । अभद्रदंसूर्यवेधंप्राङ्गणस्तथैवचेति ॥ अभिव्यक्तिस्थाने । गृहाद्बहिस्थले ॥ पणववाद्ये ॥ प्रकृष्टमङ्गनम् ॥

प्राङ्न्याय : । पुं० चतुर्थोत्तरान्तर्गतो त्तरविशेषे ॥ यत्राभियुक्तएवंब्रूयात् । अस्मिन्नर्थेऽनेनाहमभियुक्तस्तत्राचायंव्यवहारमार्गेपराजित इति । उक्तस्तुकात्यायनेन । आचारेणावसन्नोपिपुनर्लेखयतेयदि । सोभिधेयोजित : पूर्वंप्राङ्न्यायस्तुसउच्यते ॥ इ० ॥

प्राक् । अ० पूर्वदिशि ॥ पूर्वदेशे ॥ पूर्वकाले ॥ प्राचिदेशे० प्राचोदेशात्०-प्राङ्देशोवा । दिक्शब्देभ्य : सप्तमीपञ्चमीप्रथमाभ्योर्दिग्देशकालिष्वस्तातिरिति० अस्ताति : । अञ्चेर्लुक् । एवंदिशि० कालेच ॥ इहकस्मान्नभवति० पूर्वस्मिन्देशेवसतीति । नैषदोष: । देशविशेषणमेतत् । इ० भाष्यम् ॥ योहिदेशेनविशेष्यमाणोदेशोभवतितत : प्रत्ययो० नविशेषणादित्यर्थ : ॥ पूर्वस्मिन् ॥ अवान्तरे ॥ अग्रे ॥ प्रभाते ॥ अतीते ॥

प्राङ् । त्रि० पूर्वदिशि ॥ पूर्वदेशे ॥ पूर्वकाले ॥ प्रकर्षेणाञ्चति । सुप्युपपदेअञ्चु ऋत्विगादिनाक्विन् । अनिदितामितिनलोप : । उगिदचामितिनुम् । संयोगान्तस्यलोप: । नुमोनस्य० क्विन्प्रत्ययस्ये तिकुत्वे-मङ्कार : ॥

प्राचिका । स्त्री० दंशी । डांस० इ० भा० ॥ पक्षिविशेषे ॥ प्राञ्चति । अञ्चु० । क्वन् । इत्वम् ॥

प्राची । स्त्री० पूर्वस्यांदिशि । पूज्य पूजकयोरग्रे ॥ यत्रैवभानुस्तुवि यत्युदेतिप्राचीतितांविदुर्विद्दोवद न्ति ; तथा पुर : पूजकपूज्ययोस्त सदागमज्ञा : प्रवदन्तितन्वे ॥ प्रा थम्येऽत्रप्रशब्द : । प्रथममञ्चतिप्रा प्नोतिसूर्यम् । अञ्चु० । ऋत्वि गादिनाक्विन् । उगितश्चेङीप् ॥

प्राचीनम् । न० हती । प्राचीरे ॥ त्रि० प्राग्भवे । पूर्वदिग्देशका लभवे ॥ प्राचि ॥ प्रागेव । विभा षाञ्चेरदिक् स्त्रियामिति० ख : ॥

प्राचीनपनस : । पुं० विल्वे । गोह रीतक्याम् ॥

प्राचीनयोग्य : । पुं० वेदप्रसिद्धे सत्य योग्याख्यमुनौ ॥ प्राचीनयोगस्य गोत्रापत्यम् । गर्गादित्वाद्यञ् । बहुत्वे प्राचीनयोगा : ॥

प्राचीनवंश : । पुं० कर्ममीमांसाप्र सिद्धे । मण्डपविशेषे ; यस्य मण्डपविशेषस्योपरिवंशा : प्राग ग्राभवन्ति सप्राचीनवंश इत्युच्य ते ॥

प्राचीनबर्हि : । पुं० इन्द्रे ॥ पृथो : प्रपौत्रे० प्रचेतसांपितरि० राज र्षिविशेषे ॥ प्राचीनाग्रा : कुशा स्तस्यपृथिव्यांविश्रुतामुने । प्राची नबर्हिरभवत्ख्यातो भुविमहाब ल : ॥

प्राचीनशाल : । पुं० वेदप्रसिद्धे मुनि विशेषे । औपमन्यवे ॥

प्राचीना । स्त्री० वनतिक्तिकायाम् । पाठायाम् । भावप्रकाशादि० कु०गौ० भा० ॥ नाकुल्याम् । रास्नायाम् ॥ प्राचिभवा । विभाषाञ्चेरदिक् ख : । टाप् ॥ प्राग्भवायाम् ॥

प्राचीनामलकम् । न० वारिबदरे । पानीयामलके ॥ प्राचीनामलकं दोषत्रयजिद्गरघातिच ॥

प्राचीनावीतम् । न० अपसव्ये । श्राद्धादौवामकरेवहिष्कृते सति० दक्षिणस्कन्धार्पितयज्ञसूत्रे । विप रीतधृतयज्ञोपवीते ॥ तथाहि । सव्यंबाहुंसमुद्धृत्यदक्षिणे तुधृतं द्विजा : । प्राचीनावीतमित्युक्तं पित्र्येकर्मणियोजयेत् ॥ प्राची नं प्रदक्षिणमावीयतेस्म । अज० । अजेर्व्यघञपो : ॥ वीगत्यादि षुवा । क्त : ॥ यद्वा । प्राचीनं प्रदक्षिणरूपाजतिस्म० आवेतिस्मवा गत्यर्थेतिक्त : ॥

प्राचीनावीती । पुं० अपसव्यवतिद्विजे ॥ वामपाणावुद्धृतेदक्षिणस्कन्धस्थि ते वामकक्षावलम्बे यज्ञसूत्रे वस्त्रे वाप्राचीनावीतीद्विजोभण्यते ॥ प्राचीनावीतमस्यास्ति । अतइनि ठनावितीनि : ॥

प्राचीपति : । पुं० इन्द्रे ॥

प्राचीरम्। न० प्रान्ततोवृतौ। ग्रामादेरन्तेकण्टकादिवेष्टने॥ दुर्गार्थंनगरादेः प्रान्तभागेवेणुकण्टकवेचादिमयीवृत्तिर्वेष्टनिकेतिकश्चिद्भरतः॥ मृन्मय्यामपिवृतौप्राचीरमुपचारादितिस्वाम्याद्य:॥ प्राचीयते। प्राङ्पूर्वश्चिञ्चयने। शुसिचिमीनांदीर्घश्चेतिक्रन्दीर्घौ॥

प्राचेतस:। पुं० प्राचीनबर्हिराजपुत्रेषु॥ सान्तनित्यबहुवचनान्तोऽयम्॥

प्राचेतस:। पुं० वाल्मीकिमुनौ। रामायणप्रवक्तरि॥ प्रचेतसोऽपत्यम्। अण्॥

प्राच्य:। पुं० शरावत्यानद्यामर्यादाया: प्राग्दक्षिणदेशे॥ देशान्तरे॥ यथा। अङ्गावङ्गामद्गुरकाअन्तर्गिरिवहिर्गिरा:। तत: प्लवङ्गामातङ्गामलयामलवर्त्तका:॥ सुह्मोत्तरा: प्रविजयाभार्गवाङ्गेयमालवा:। प्राग्ज्योतिषाश्च पुण्ड्राश्चविदेहास्ताम्रलिप्तका:॥ साल्वामागधगोनर्दा: प्राच्याजनपदा: स्मृता:॥ इ० मत्स्यपुराणम्॥ त्रि० पूर्वदेशीये॥ प्राच्यांभव:। द्युप्रागितियत्॥

प्राट्। पुं० प्रश्नकर्तरि॥

प्राजक:। पुं० सारथौ। सूते॥

प्राजनम्। न० तोदने। वृषभादिप्रेरणदण्डे॥ प्रवीयतेऽनेन। अज०। ल्युट्। वायाविति वी न॥

प्राजापत्य:। पुं० प्रयागे॥ जैनराजभेदे। त्रिपृष्ठे॥ प्रजापतेरपत्ये। देवे॥ असुरे॥ विवाहविशेषे। काये॥ सहोभौचरतांधर्ममितिवाचानुभाष्यच। कन्याप्रदानमभ्यर्च्यप्राजापत्योविधि: स्मृत:॥ पञ्चमवत्सरे॥ नीरोगाश्चनिराबाधामानवाविगतद्विष:। बहुक्षीरास्तथा: गाव: प्राजापत्येवरानने॥ ५॥ दैवसर्गान्तरे॥ प्रजापतेरपत्यम्। प्रजापतिर्देवताऽस्य। प्रजापतेरिवायंवेत्यादर्थे। दित्यदित्यादित्यपत्युत्तरपदाण्ण्य:॥ न० तपसि॥ पुं० न० द्वादशाहसाध्येव्रतविशेषे॥ यथा। त्र्यहंप्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितम्। त्र्यहंपरञ्चनाश्नीयात्प्राजापत्यंचरन्द्विज:॥ अत्रग्रासपरिमाणापेक्षायामाहपराशर:। सायंद्वाविंशतिर्ग्रासा: प्रात: षड्विंशतिस्तथा। अयाचितेचतुर्विंश: परंचानशनंस्मृतम्॥ कुक्कुटाण्डप्रमाणस्ययावान्वाप्रविशेन्मुखम्। एतंग्रासंविजानीयाच्छुद्ध्यर्थंकायशोधनम्॥ इतिप्ब्यस्यान्नमश्नीयाद्यथाराश्नीतथादिवा। चौरस्त्रीघ्नहानिशास्त्रीयान्ग्रासान्सङ्ख्याकृतान्यथा॥ अयाचितं

तथैवाथ्यादुपवासमुल्यसृंभवेदिति ॥
पुं० रोहिणीनक्षत्रे ॥ त्रि० प्रजा
पतिसम्बन्धिनि ॥
प्राजापत्या । स्त्री० यजुर्वेदीयोपाख्या
नयज्ञविशेषायाम् । संन्यासग्रहणपूर्वं
कर्त्तव्यप्रजापतिदेवताकसर्वस्वदक्षि
णायामिष्टौ ॥ यथा । प्राजापत्यांनिरू
प्येष्टिं सर्ववेदसदक्षिणाम् । आत्मन्य
ग्नीन्समारोप्यब्राह्मण : प्रव्रजेद्गृ
हादिति ॥
प्राजिता । पुं० सारथौ । यन्तरि ।
सूते ॥ प्राजति । अज० । तृच् ।
अन्तर्भावितण्यर्थोवा । वलादा-
वार्द्धधातुकेविभाषेतिवीभावाभावः ॥
प्राज्ञ : । पुं० कल्किदेवस्यज्येष्ठभ्रात
रि ॥ परमात्मनि ॥ विदितवेदित
दुपकरणार्थे० विवेकिनि ॥ प्रज्ञाश्र
विनाशिस्वरूपानुभवरूपायस्यसप्रज्ञ:
। प्रज्ञएवप्राज्ञ: । प्रज्ञाद्यण् ॥ पक्षि:
विशेषे । राजशुके । शतपत्रे । रा-
जसूआ० इ० भा० ॥ कारणशरी
राऽभिमानिनिजीवे । मलिनसत्त्वप्र
धानाविद्योपाधिकेजीवे ॥ भूतभविष्य
तिचविषयेज्ञातृत्वंतथासर्वस्मिन्नपि
वर्तमानेविषयेज्ञातृत्वमस्यैवेतिप्रक
र्षेणजानातीति० प्रज्ञ: । सएवप्राज्ञ:
॥ सुषुप्तोपिपिभूतपूर्वगत्याप्राज्ञउ
च्यते ॥ प्रायेणाज्ञ : त्रि० प-
ण्डिते ॥ पण्डितेचगुणा:सर्वेमूर्खे
दोषाश्चकेवलम् । तस्मान्मूर्खसह
स्रेषुप्राज्ञएकोविशिष्यतइतिविष्णु
शर्मा ॥ दक्षे ॥
प्राज्ञता । स्त्री० विदग्धत्वे ॥ यथा । पदं
पदार्द्धमेकंवाश्रोतव्यंसुभाषितम् ।
मूर्खोपिप्राज्ञतांयातिनदीभि: सा
गरोयथा इति ॥
प्राज्ञमानी । त्रि० पण्डिताभिमानिनि ॥
प्राज्ञा । स्त्री० बुद्धिमत्याम् । धीमत्या
म् ॥ प्रज्ञाऽस्त्यस्या: । प्रज्ञाश्रद्धार्चा
भ्योण : । टाप् ॥
प्राज्ञी । स्त्री० स्वयंज्ञात्याम् । प्राज्ञा
याम् ॥ प्रजानाति । ज्ञा० आतश्चोप
सर्गइतिक : ॥ प्र० अण् ॥
प्राज्य: । त्रि० प्रचुरे । प्रभूते । अदभ्रे
॥ प्रवीयते । अज० ण्यत् । वा० वी
भावाभावः ॥ आज्यसम्पन्ने ॥ प्रभूतमा
ज्यं यस्यस : ॥
प्राञ्जल: । त्रि० सरले ॥
प्राञ्जलि : । त्रि० बद्धाञ्जलौ । कृतस
म्पुटकरयुगले ॥ भक्तिनम्रे ॥
प्रकृष्टोमुद्रितोकृतोऽञ्जलिर्येन० यस्य
वा । प्रबद्ध : अञ्जलिर्येनवा ॥
प्राड्विवाक: । पुं० अक्षदर्शके । विचारा
र्थेराजनियुक्तपुरुषे । व्यवहारद्रष्टरि
। ऋणादानादीन्यष्टादशविवादपदा
निव्यवहारा : तेषांनिर्णेतरि । ज-
ज० इति अङ्गरेजीभाषा ॥ प्रच्छनं
। प्रच्छन्नोपायाम् । क्विप्वचिप्रच्छि

श्रिस्रुद्रुकटप्रुञ्चांदीर्घोऽसम्प्रसार णाश्र्वेत्युणादिसूत्रेणक्विब्दीर्घो० सम्प्र सारणाभावश्च । विवचनम् । घञ् । प्राट्चविवाकश्चप्राड्विवाकौ० प्रश्न विवेकावश्यस्त : । अर्शआद्यच् । प्रश्नविचारयो : कुशलइत्यर्थ : ॥ यद्वा । पृच्छतिवादिप्रातिवादिवा क्यम्प्राट् । च्छ्वो : शूडनुनासिकेचे ति० शादेश: । विविच्यवक्तीतिवि वाक : । घञ् । प्राट्चासौविवा कश्चेति० प्राड्विवाक : ॥ यथा- हु : । विवादानुगतंपृष्ट्वापूर्वंवा क्यंप्रयत्नत : । विचारयतियेना सौप्राड्विवाकस्तत : स्मृत : इति ॥ अपिच । अर्थिप्रत्यर्थिनौपृच्छती तिप्राट् । तयोर्वचनंविरुद्धाविरुद्ध श्चसभ्यै : सहविविनक्तिविवेचयति वेतिविवाक : । प्राट्चासौविवाक श्चेतिप्राट्विवाक:॥ उक्तञ्च । विवा दानुगतंपृष्ट्वा ससभ्यस्तंप्रयत्नत : । विचारयतियेनासौप्राड्विवाकस्त त : स्मृत : ॥ इति ॥

प्राण : । पुं० प्राग्गमनवति० नासाग्र स्थानवर्तिनिवायौ ॥ नासाग्रे प्रत्य क्षमुपलभ्यमानत्वात् । प्रागनिती तिव्युत्पत्तेश्च ॥ तस्यकर्मबहिर्गम नम् । तस्यरूपम्० इन्द्रनीलप्रतीका शंप्राणरूपंप्रकीर्तितम् । तस्यस्थाना नि० आस्यनासिकानाभिमध्येवर्ततेनाभि मध्यगे । प्राणालयइतिप्राहु : पादा ङ्गुष्ठेपिकेचनेतियोगार्णव : ॥ शरी- रान्त : सञ्चारिणिवायौ ॥ सचैको प्युपाधिभेदात्प्राणापानादिकांसं- ज्ञांलभते ॥ इन्द्रियेषु ॥ प्राज्ञे० वी जात्मनि ॥ समष्टिलिङ्गशरीराभिमा निनिचैतन्ये० क्रियाशक्तिप्रधाने० हिरण्यगर्भे ॥ हंसरथे । ब्रह्मणि ॥ हृन्मारुते ॥ बोले । गन्धरसे ॥ का व्यजीवे ॥ बले ॥ धातु : पुंवे ॥ प्रा णितिअनेनवा । अच्० घञ्वा । अनितेरितिणत्वम् ॥ प्रसरणेन० अ नितिवा ॥ यस्मिन्सतिजीवनम्० यदपगमेचनभवति० सचवायुविशे षोलोकेरूढ : प्राणइति ॥ निश्वासो च्छ्वासकासैस्तुप्राणोजीवसमाश्रित: । प्रयाणंकुरुतेयस्मात् तस्मात्प्राण : प्रकीर्तित : ॥ त्रि० पूरिते ॥

प्राणा : । पुं० भूम्नि० असुषु ॥ अस व : प्राणाइति० असुप्राणशब्दाभ्यां बहुवचनान्ताभ्यांपञ्चप्राणादयउच्य न्ते पुनरेकैकाभिधानेबहुवचनम् । अतएव० प्राणोऽपानइत्युक्तम्० हृदि प्राणोगुदेपानइत्यादिचदृश्यते ॥ अ स्योत्पत्तिर्यथा । मिलितैस्तैस्तुप्राणो भवतिपञ्चधेति । मिलितै : पञ्चभू तानांरजोंशै : प्राणापानादिपञ्च वृत्त्यात्मक : प्राणोभवतीत्यर्थ : ॥ शरीरस्थपञ्चप्राणायथा । प्राणोपान:

समानश्चोदानव्यानौचवायव : । श
रीरस्थाइमे०इत्यमर : । इमेप्राणा
दयपञ्चवायव: शरीरेतिष्ठन्तितेचनि
यतस्थानस्था: । यदाहु: । हृदिप्राणो
गुदेपान : समानोनाभिसंस्थित : ।
उदान : कण्ठदेशेचव्यान : सर्व-
शरीरगइति ॥ तेषांव्यापाराश्च-
यथा । अन्नप्रवेशनं०मूत्राद्युत्सर्गो
ऽन्नविपाचनम् । भाषणादि०निमे
षादि०तद्व्यापारा : क्रमादमी ॥
इति ॥

प्राणक : । पुं० सत्त्वजातीये । प्राणि
मात्रे ॥ जीवकद्रुमे ॥ चोले । व-
स्त्रविशेषे ॥ बोले ॥

प्राणथ: । पुं० वायौ ॥ तीर्थे ॥ प्रजा
पतौ ॥ बलवति ॥ प्राणिति । अन०
। शीङ्शपिरुगमिवञ्चिजीविप्राणि
भ्योऽथ : ॥

प्राणद : । पुं० जीवकद्रुमे ॥ भगवति
॥ न० जले ॥ रक्ते ॥ प्राणान्ददा
ति०चेष्टयति । प्राणान्कालात्मना
द्यति०खण्डयतिवा । प्राणान्दापय
ति०शोधयतिवा । प्राणान्दातिलु-
नातिवा । आतइतिक : ॥

प्राणदा । स्त्री० हरीतक्याम् ॥ ऋद्धि-
वृद्धे ॥ टाप् ॥

प्राणधारणा । स्त्री० असूनांधृत्यर्थमा
हारे ॥ यथा । अयंप्रदायभूतेभ्य :
सीताथवरवर्णिनी । तयोरप्यददा
द्भक्ष्याचोर्मधुमांसञ्चसम्भृतम् ॥ तयो
स्तृप्तिमथोत्पाद्यवीरयो : कृतशौच
योः । विधिवज्ज्ञानकीपश्चाच्चक्रे
साप्राणधारणामित्यार्षेरामायणे०
अयोध्याकाण्डेऽष्टम् ॥

प्राणनम् । न० जीवने ॥ पुं० गले ॥
त्रि० आप्यायनकरे ॥

प्राणनाथ : । पुं० पत्यौ ॥ यमे ॥ त्रि०
प्राणाधिपे ॥ प्राणानांनाथ: ॥

प्राणन्त : । पुं० रसाञ्जने ॥ वायौ ॥
प्राणात् । अन० । रुहिनन्दिजीवि
प्राणिभ्य : षिदाशिषीतिझच् ॥

प्राणन्ती । स्त्री० हिक्कायाम् ॥ चुति ।
हिक्कायाम् ॥ षित्त्वान्ङीष् ॥

प्राणपण : । पुं० अतिप्रयासे ॥ प्राणा:
पणोयस्मिन् ॥

प्राणप्रतिष्ठा । स्त्री० प्रतिमायांजीवन्या
से ॥ प्राणानांप्रतिष्ठा ॥

प्राणप्रद : । त्रि० प्राणदातरि ॥

प्राणप्रदा । स्त्री० ऋद्धिनामकौषधौ ॥
प्राणांप्रददाति । डुदाञ्० । क : ॥

प्राणभास्वान् । पुं० अब्धौ । समुद्रे ॥

प्राणभृत् । पुं० जीवे ॥ प्राणान्बिभ
र्ति । डुभृञ्० । क्विप । तुक् ॥

प्राणमय : । पुं० द्वितीयकोषे । कर्मे
न्द्रियै : सहितेप्राणादिपञ्चके : क्रि
याशक्तिमतिकार्यरूपे ॥ अस्यक्रिया
त्मकत्वे नरजोंशकार्यत्वम् ॥ स्थूल-
समष्टिकारणीभूतेऽपंचीकृतपंचमहा

भूततत्कार्यात्मकेहिरण्यगर्भेसूत्रेऽ-मूर्तिर । शौसूक्ष्मसमष्टौ ॥ पूर्णादिहे बलंयच्छन्नत्राणायांय : प्रवर्तक : । वायु : प्राणमयोनासावात्माचैतन्य वर्जनात् ॥

प्राणरोध : । पुं० नरकान्तरे ॥

प्राणलय : । पुं० मरणे ॥ परमात्मनि । प्राणानांलये ॥ प्राणलयेजाते०स ङ्कल्पविकल्पावपिमनसोनाशासेन लीनौभवतएव० प्राणमनसोर्दुग्धा म्बुवन्मिलितत्वात् । तदुक्तम् । दुग्धाम्बुवत्सम्मिलितावुभौतौतु ल्यक्रियौमानसमारुतौतौ । तत्रैक नाशाद्परस्यनाशस्तत्रैकवृत्त्यपर प्रवृत्तिरिति ॥ प्राणलयेसङ्कल्पविक ल्पलयेचसमाधिर्भवति ॥

प्राणवान् । पुं० जीवे ॥ प्राणोस्यास्त्य स्मिन्वा । मतुप् ॥

प्राणवित् । पुं० हैरण्यगर्भादिषु ॥

प्राणसंयम : । पुं० प्राणायामे ॥

प्राणसमा । स्त्री० पत्न्याम् ॥

प्राणस्पन्दनिरोध : । पुं० चित्तशान् त्युपाये ॥ यस्तुवासनानामतिप्राब ल्यात्०तास्त्यक्तुंनशक्नोति० तस्यप्रा णस्पन्दनिरोधएवोपाय : । प्राणस्प न्दवासनयोश्चित्तप्रेरकत्वात्० तयो र्निरोधेचित्तस्यशान्तिरुपपद्यते ॥

प्राणहार : । पुं० ) वत्स नाभे ॥ त्रि०

प्राणहारकम् । न० ) असुनाशके ॥



प्राणा । स्त्री० विहगी विशेषे ॥ साचा स्वाणगरुडयो : श्वश्रू : ॥

प्राणाचार्य्य : । पुं० वैद्ये ॥

प्राणात्यय : । पुं० आपत्काले ॥ प्रा णानामत्ययोयस्मिन्स : ॥०

प्राणादिपञ्चकम् । न० प्राणापानव्या नोदानसमानात्मके ॥

प्राणाधिनाथ : । पुं० पत्यौ ॥ प्राणा नामधिनाथ : ॥

प्राणाधिप : । पुं० प्रिये । पत्यौ ॥

प्राणान्त : । पुं० प्राणावसाने ॥

प्राणापानौ । पुं० अश्विनीकुमारयो: ॥

प्राणायाम : । पुं० प्राणसंयमे । रेचक पूरककुम्भकलक्षणेप्राणनिग्रहोपाये ॥ तथाचयोगसूत्रम् । तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदलक्षण: प्राणायामइति । तस्मिन्नासनस्थैर्ये सतीत्यर्थ : ॥ प्राण : प्रागुदितोवा युरायामोस्यप्रखेदनम् । प्रेरणाकृ ष्टिसंरोधलक्षण : क्रतुदोषनुत् ॥ यवीयान्मध्यमोज्येष्ठ : सतालैर्द्वा दशादिभि: ॥ उक्तंच । तालद्वाद- शकोर्द्ध्य : प्राणायामस्तुकन्यस: । मध्यश्चतुर्भिर्विंशत्याश्रेष्ठस्तद्द्विगुणो भवेत् ॥ सोपिध्यानतपोपेत : सग र्भोऽन्यस्तदुज्झित : । यथासगर्भ स्थैर्यायमनसोन तथेतर : ॥अपिच । सव्याहृतिंसप्रणवांगायत्रीं शिर सासह । त्रि : पठेदायतप्राण:प्राण

यामःसउच्यते ॥ सर्वपापहरं प्रोक्तं प्राणायामंद्विजन्मनाम् । ततस्त्व भ्यधिकंनास्तितप: परमपावनम् ॥ अत्रविशेषोदेवीगीतायाम् । इड याकर्षयेद्वायुंवाह्यंषोडशमात्रया । धारयेत्पूरितंयोगीचतु: षष्टातु-मात्रया ॥ सुषुम्णामध्यगंसम्यक्द्वा त्रिंशन्मात्रयाशनै: । नाड्यापिंगल यावैवरेचयेद्योगवित्तम : ॥ प्राणा-याममिमंप्राहुर्योगशास्त्रविशारदा: । भूयोभूय: क्रमात्तस्यवाह्यमेवंस-माचरेत् ॥ मात्रावृद्धिक्रमेणैवसम्य-क्द्वादशषोडश । जपध्यानादिभि: सार्द्धंसगर्भंतंविदुर्बुधा : ॥ तदपे तंविगर्भंचप्राणायामंपरेविदु : । क्रमादभ्यसत : पुंसोदेहेस्वेदोद्गमो धम : ॥ मध्यम : कम्पसंयुक्तोभू-मित्याग : परोमत: । उत्तमस्यगु-णावाप्तिर्यावच्छीलनमिष्यतइति ॥ अध्यात्मविदस्त्वाहु : । चित्तादिस र्वभावेषुब्रह्मत्वेनैवभावनात् । नि-रोध : सर्ववृत्तीनांप्राणायाम : स उच्यते ॥ इति ॥ प्राणस्यवायुविशेष स्यायामोरोध : ॥

प्राणायामयज्ञ : । पुं० अपानेजुह्वति-प्राणंप्राणेऽपानंतथापरे । प्राणापा नगतीरुद्ध्वाप्राणायामपरायणा : ॥ अपरेनियताहारा:प्राणान्प्राणेषु जुह्वतीतिभगद्वक्तं : ॥

प्राणिद्यूतम् । न० समाह्वये । पणपू-र्वकमादिप्राणिसंयुगे ॥ प्राणिभिर्मेष कुक्कुटादिभि : कृतंद्यूतं ॥

प्राणी । पुं० प्राणविशिष्टमनुष्यादौ ॥ चेतने । जन्मनि । जन्तौ । शरी-रिणि ॥ अत्रवैनाशिकमते०अस्यगु णायथा । बुद्ध्यादिषट्कंसङ्ख्या दिपञ्चकंभावनातथा । धर्माधर्मौ-गुणाएतेआत्मन : स्युश्चतुर्दशेति ॥ अयमिन्द्रियायाद्यधिष्ठाता०पुण्यपा पाश्रय: । ज्ञानसुखादियोगतोमान सप्रत्यचविषय : । परदेहादौप्रवृ-त्त्यादिनाऽनुमेय: । अहमित्याकार-प्रत्ययाश्रय: । मनोमात्रस्यगोचर: । विभु : परममहत्त्ववान् ॥ इति-भाषापरिच्छेद : ॥ प्राणा : सन्त्य-स्य । अतइनिठनाविति०इनि : ॥

प्राणिमाता । स्त्री० गर्भदात्रीक्षुपे ॥

प्राणिहित : । त्रि० लोकहितकारि-णि ॥

प्राणिहिता । स्त्री० पादुकायाम् । पन हिया०इ०भा० ॥

प्राणीत्यम् । न० ऋणे ॥

प्राणेश: । पुं० पत्यौ ॥

प्राणेशा । स्त्री० भार्यायाम् ॥

प्राण्यङ्गोद्भव : । पुं० गन्धविशेषे ॥ यथा । मृगनाभिसमुद्भूतस्तत्कोषो द्भवएववा । गन्ध : प्राण्यङ्गज : प्रो क्तोमोदद:स्वर्गवासिनामिति ॥

प्रात : सवनम् । न० गायत्रच्छन्दस्के प्रात : कालोपलक्षितेकर्मणि ॥

प्रात : । अ० प्रगे । प्रभाते । पञ्चधाविभक्तस्यदिनस्यप्रथमेभागे । प्रातति । अत० । प्राततेररन्निति०-अरन्प्रत्यय : ॥ सार्द्धप्रहरे । यथाव्यासाग्रय : । ललाटसम्मितेभानौप्रथम : प्रहर : स्मृत : । सएवाध्यर्द्धसंयुक्त : प्रातरित्यभिधीयत इति । पञ्चपञ्चउष : काल : सप्तपञ्चारुणोदय : । अष्टपञ्चभवेत् प्रात : शेष : सूर्योदय : स्मृत : इतिदेवीभागवतम् । श्रोत्रियंशुभगांगाञ्चअग्निमग्निचित्तं तथा । प्रातरुत्थायय : पश्येदापद्भ्य : सविमुच्यते ॥ तथा । पापिष्ठंदुर्भगांमद्यं नग्नमुत्कृत्तनासिकम् । प्रातरुत्थायय : पश्येत्ततत्कलेरुपलक्षणमितिच्छन्दोगपरिशिष्टम् ॥

प्रातरनुवाक : । पुं० ग्रन्थे ॥ यत्प्रात : कालेपठ्यतेयाज्ञिकै : ॥

प्रातराश : । पुं० प्रात : कालीनभोजने । कल्यावर्त्ते । कलेउ०इ०-भा० ॥

प्रातर्गेय : । पुं० स्तुतिपाठके । स्तुतिव्रते । वन्दिनि । भाट०इ०भा० । प्रात : कालेगेयईश्वरादिर्येन । अचर्मुखेगातव्ये गीतानामसहस्रादौ ।

प्रातर्भोक्ता । पुं० काके । प्रात : भुङ्क्ते । भुज०तृच् । त्रि०प्रभातेभोजनकर्त्तरि ॥

प्रातर्भोजनम् । न० कल्यावर्त्ते ॥

प्राति : । स्त्री० पूर्त्तौ । प्रादेशे ।

प्रातिका । स्त्री० जवायाम् ॥

प्रातिकूलिक : । त्रि० प्रतिकूलचारिणि । प्रतिकूले ॥ प्रतिकूलं वर्त्तते । तत्प्रत्यनुपूर्वमीपलोमकूलमितिठक् ॥

प्रातिजनीन : । त्रि० जनेजनेसाधौ ॥ जनञ्जनम्०इति० प्रतिजनम् । वीप्सायामव्ययीभाव : । प्रतिजने साधु : । प्रतिजनादिभ्य : खञ् ।

प्रातिपथिक : । त्रि० प्रतिपथिके ॥ प्रतिपथमेति । प्रतिपथमेतिठंश्चेतिपथेठक् ॥

प्रातिपदिक : । पुं० अग्नौ । शिखावति । न० । अर्थवद्धातुरप्रत्यय : प्रातिपदिकम्०कृत्तद्धितसमासाश्चेति सूत्राभ्यांलक्षिते० नामनि । प्रतिपदंभवम् । ठक् । घोर : कोदृग्व घोरत्रितकोरोगीकश्चनास्तिक : । कोदृक्चन्द्रं नपश्यन्तितत्सूत्रपाणिनेर्वद ॥

प्रातिभम् । न० प्रतिभाविशेषे । ज्ञानप्रभावविशेषे ॥ प्रतिभैव०प्रतिभायां भवंवा । स्वार्थे०भवार्थेवा अण् ॥

प्रातिभाव्यम् । न० प्रतिभूत्वेनदेयधने ॥

प्रतिभूशोभावे । जामिमीः सू॰ भा॰ ॥ यथा। साचित्वंप्रातिभाव्यञ्च दानंग्रहणमेवच । विभक्ताभ्रातरः कुर्युर्नाविभक्ताः परस्परम् ॥ सू॰ ॥

प्रातिभासिकः । त्रि॰ प्रतिभासमात्र कालसिद्धे । नपुरस्तान्नपश्चात्स्थिते ॥ यथाशुक्तिकायांरूप्यं रज्जौवासर्पः॥

प्रातिलोमिकः । त्रि॰ प्रतिकूले ॥ प्रतिलोमंवर्तते । तत्प्रत्यनुपूर्वमीपलोमकूलमितिठक् ॥

प्रातिवेश्यः । पुं॰ निरन्तरगृहवासिनि । परीसी॰ सूतिभा॰ ॥ प्रतिवेशभवः यत् ॥

प्रातिशाख्यम् । न॰ वेदभाष्ये ॥ प्रतिशाखंभवम् अव्ययीभावात्त्वेतिञः॥

प्रातिष्ठितम् । न॰ आवेशिकेस्वीये ॥

प्रातिस्विकः । त्रि॰ असाधारणे । आवेशिके । स्वीये ॥

प्रातिहारिकः । पुं॰ मायाकारे । ऐन्द्रजालिके ॥ प्रतिहरणम् । हृञ्॰ । भावेघञ् । प्रतिहारोव्याजः प्रयोजनमस्य । प्रयोजनमितिठक् ॥

प्रातीपः । पुं॰ प्रतीपपुत्रे । महाभीष्मे । शान्तनुराजे ॥

प्रातीपिकः । त्रि॰ प्रतिकूलेप्रतीपं वर्तते । तत्प्रत्यनुपूर्वमीपलोमकूलमितिठक् ॥

प्राथमकल्पिकः । पुं॰ शैक्षे । प्रथमारम्भवेदे ॥ प्रथमकल्पआद्यारम्भः प्रयोजनमस्य । प्रयोजनमितिठञ् ॥ यद्वा । प्रथमकल्पमधीते । विद्यालक्षणकल्पान्ताच्चेतिवक्तव्यमितिठक् ।

प्राथमिकः । त्रि॰ प्रथमभवे ॥ प्रथमस्यव्याख्यानः प्रथमेभवोवाद्व्यजृद्वाह्मणक् प्रथमाध्वरपुरश्चरणनामाख्याताट्टक् ॥

प्राथम्यम् । त्रि॰ प्रथमस्यभावे ॥

प्रादुर्भावः । पुं॰ प्राकट्ये आविर्भावे ॥

प्रादुष्कृतः । त्रि॰ प्रकटिते ॥

प्रादुः । अ॰ नामनि ॥ विष्णोर्दशप्रादुर्भावाः । दशनामानीत्यर्थः ॥ प्रकाशे ॥ प्राकाश्ये । स्फुटतायाम् । आविर्थे ॥ सम्भाव्ये ॥ द्रुतौ प्रान्दति । अदिवमयने । वा॰ उस् । आगमशास्त्रस्यानित्यत्वान्ननुम् । प्राप्तिवा अदभक्षणे ॥

प्रादेशः । पुं॰ तर्जन्यङ्गुष्ठसम्मिते । तर्जनीसहितविस्तृताङ्गुष्ठे ॥ प्रदिश्यते । दिश॰ । हलश्चेतिघञ् । उपसर्गस्यघञीतिपाक्षिकोदीर्घः ।

प्रादेशनम् । न॰ दाने ॥ दिशअतिसर्जने । प्राङ्पूर्वः । भावेल्युट् ।

प्रादेशिकः । पुं॰ अव्याप्यवृत्तौ ॥

प्रादोषः त्रि॰ प्रदोषसम्बन्धिनि ॥ निशाप्रदोषाभ्यांचेतिशैषिकोर्थेठञ् । पक्षेऽण् ।
प्रादोषिकः त्रि॰ प्रदोषसम्बन्धिनि

प्राद्युम्निः । पुं॰ अनिरुद्धे ॥

प्राधान्यम् । न० प्रधानतायाम् ॥ अ गुणीभावे ॥ भावेष्यञ् ॥

प्राधीत : । त्रि० प्रक्रान्ताध्ययने ॥

प्राध्ययनम् । न० प्रकृष्टाध्ययने ॥

प्राध्वम् । त्रि० दूरपथे ॥ प्रह्वे । प्रणते ॥ बन्धने ॥ प्राध्वनति । ध्वनशब्दे । डम्प्रत्यय : ॥

प्राध्वङ्कृत्य । अ० बन्धनेनानुकूलङ्कृत्वेत्यर्थे ॥ प्राध्वम्बन्धने० इतिगतिसंज्ञा । कुगतीतिसमास : ॥

प्राध्वम् । अ० नम्रार्थे ॥ अनुकूले ॥ प्राध्वनति । ध्वन० डम् ॥

प्रान्त: । पुं० चरमे । अन्तभागे । शेष सीमायाम् । उपान्ते ॥ यथा । प्रान्तच्छायाविनिर्मुक्तानमनोज्ञाजलाश्रया: । तस्मादधीजलप्रान्तेष्वारामान्विनिवेशयेदिति ॥

प्रान्तत : । अ० प्रान्तभागे ॥

प्रान्तरम् । न० ग्रामस्यदूरे० वृक्षलतादिशून्येवर्त्मनि । दूरशून्यपथे ॥ विपिने । अरण्ये ॥ कोटरे ॥ प्रकृष्टमन्तरम्० व्यवधानमवकाशोवायत्र । प्रादिभ्यइतिबहुव्रीहि : ॥

प्रान्तशून्यम् । न० छायादिरहिते० दूरशून्येऽध्वनि ॥

प्रान्त्य : । त्रि० प्रान्तभवे ॥

प्रापणम् । न० नयने । प्राप्तौ ॥ प्रकर्षेणव्यापने ॥

प्रापणिक : । पुं० पण्यविक्रयिणि । प्रापणाय्यते । पण० । आङ्पणिकघइतिकिकन् ॥ प्रपणोव्यवहार: प्रयोजनमस्यवा । तदस्यप्रयोजनमितिठञ् ॥

प्रापणीय : । त्रि० फलमात्रे ॥ प्राप्ये ॥ प्राप्यतेयत् । प्रपूर्वापधातो : कर्म्मण्यनीयर् ॥

प्रापय्य । अ० गमयित्वेत्यर्थे ॥

प्रापित : । त्रि० निवेशिते ॥ नीते प्रकर्षेणआपित : ॥

प्रापिपयिषु : । त्रि० प्रापयितुमिच्छौ ॥ प्रापयते : सन्नन्तादुप्रत्यय: ॥

प्रापिय : । पुं० गन्धर्वगणविशेषे । यथा प्रवाच्यजनयत् पुत्रान्दिव्यान् वैगायनोत्सुकान् ॥ चतुर्दश देवगन्धर्वा : प्रापेया : परिकीर्तिता : ॥

प्राप्त : । त्रि० स्थापिते । प्रणिहिते ॥ विन्ने । लब्धे ॥ यथा । प्राप्तं कर्म्मविनाऽनेकोविधातुंशक्यते गुण : । अप्राप्तेतुविधीयन्तेबहवोप्येकयत्नतइतिन्याय : ॥ समञ्जसे ॥ प्राप्यतेस्म ॥ आप्लृ० । गत्यर्थाकर्मकेतिक्त : ॥ कर्त्तरिक्त इति स्वामी ॥

प्राप्तपञ्चत्वम् । त्रि० मृते ॥ प्राप्तं पञ्चत्वमनेन ॥

प्राप्तपात : । पुं० चर्ड़ांशो : पारिपा

श्रिवके ॥

प्राप्तभाव : । पुं० जातौघे ॥ त्रि० लब्धसत्तादौ ॥ मनोहरे ॥ पण्डिते ॥

प्राप्तरूप : । त्रि० प्राज्ञे ॥ रम्ये ॥ प्राप्तोरूपम् । प्राप्तापन्ने चद्वितीय येतिसमास : ।। प्राप्तं रूपं येन वा ॥

प्राप्तव्य : । त्रि० प्राप्ये ॥ प्राप्यतेय त् । प्रपूर्वापधातो : कर्म्मणित व्यप्रत्यय : ॥

प्राप्ति : । स्त्री० महोदये । धनादि वृद्धौ ॥ अधिगमे । लाभे ॥ भ्युत्थरे । अणिमाद्यष्टैश्वर्यान्तग तैश्वर्यविशेषे ॥ यतोऽङ्गुल्यग्रे णास्पृशतिचन्द्रमसम् ॥ प्रापणम् आपलृ० । स्त्रियाबादिभ्य : ॥ ल ग्नादेकादशे ॥

प्राप्ता । त्रि० प्राप्तवति ॥ प्राप्नोति । तृच् ॥

प्राप्य : । त्रि० गम्ये । समासाद्ये । प्राप्तव्ये । आप्तुंशक्ये ॥ प्राप्यते । आपलृ० । ऋहलोर्ण्यत् ॥

प्राबोधिक : । पुं० उष : काले ॥ प्राबोधकोपिपाठ : शब्दमालाया- म् ॥

प्राभञ्जनम् । न० स्वातिनक्षत्रे ॥ त्रि० प्रभञ्जनसम्बन्धिनि ॥

प्राभवम् । न० श्रेष्ठत्वे ॥

प्राभवत्यम् । न० प्रभवतोभावे ॥ ष्यञ् ॥

प्राभाकर : । पुं० आत्मनोचिद्रूपवा दिनि० मीमांसकविशेषे ॥ प्रा भाकरास्तार्किकाश्चआहुरस्याचि दात्मताम् । आकाशवद्द्रव्यमात्माश ब्दवत्तद्गुणश्चिति : ॥

प्राभूतिक : । त्रि० प्रभूतवादिनि ॥ प्रभूतमाह । आहौप्रभूतादिभ्य- इतिठक् ॥

प्राभृतम् । न० उपढौकने । प्रदेशने । देवताभ्योमित्रादिभ्यश्चदीयमाने भेट० इ० भा० ॥ प्राभ्रियतेस्म । भृञ्भरणे० डुभृञ्धारणपोषणयो र्वा । क्त : ॥

प्राभृतकम् । न० कौशलिकायाम् । प्राभृते ॥

प्रामाणिक : । त्रि० प्रमाणलब्धे ॥ प्रमाणादागत : । ठक् ॥

प्रामाण्यम् । न० प्रमाणत्वे ॥ काल त्रयाबाधितार्थविषयत्वम् प्रामाण्य मितिव्याख्यातार : ॥ संवादाधी नंप्रामाण्यमितितार्किका : ॥ स्वत : प्रामाण्य मितिमीमांसका: ॥ प्रमाणस्यभाव : ष्यञ् ॥

प्रामाण्यवाद : । पुं० प्रमाकरणता कथने ॥ तद्वतितत्प्रकारकत्वरूप प्रमात्वकथने । चिन्तामणिन्याय ग्रन्थविशेषे ॥

प्रामादिकम् । त्रि० प्रमादादवगते ॥
प्रामाद्य: । पुं० वासके । अटरूषे ॥
प्रामीत्यम् । न० ऋणे ॥ मृतत्वे ॥
प्राय: । पुं० सन्न्यासवति०मरणायानशने ॥ प्रायोपविष्टं गङ्गायामिति लक्ष्यम् ॥ बाहुल्ये ॥ यथा । प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जनः । इति ॥ मृत्यौ । मरणे ॥ तुल्ये ॥ वयसि ॥ प्रायणम् । अय० । घञ् ॥ प्रकृष्टमयनम् । इण् । एरच्वा ॥
प्रायत्यम् । न० पवित्रतायाम् ॥ प्रयतस्यभाव: । ष्यञ् ॥
प्रायश्चित्तम् । न० शुद्धिसम्पादककर्मविशेषे । अशुद्धत्वनिरसनेनशुद्धेरापादके०पापक्षयसाधनेकर्मणि ॥ प्राय: पापंविनिर्दिष्टं चित्तं तस्यविशोधनमितिस्मृतेर्व्युत्पत्तिः ॥ अपिचाङ्गिरा: । प्रायोनामतप: प्रोक्तंचित्तं निश्चयउच्यते । तपोनिश्चयसंयुक्तं प्रायश्चित्तमितिस्मृतम् ॥ निश्चयसंयुक्तंपापक्षयसाधनत्वेननिश्चितमित्यर्थ: ॥ प्रायस्यचित्तम् । पारस्करादित्वात्साधु ॥ प्रायश्चित्तकर्माणितु०पापक्षयसाधनानिचान्द्रायणादीनि । विहिताऽकरणप्रतिषिद्धसेवारूपनिमित्तविशेषानुबन्धीनि० प्रायश्चित्तकर्माणि । पापक्षयमात्रोद्देशेनविहितानीतिवा ॥ पापानामनुरूपाणिप्रायश्चित्तानिकृद्यथा । यथा तथैवसंस्मृत्यप्रोक्तानिपरमर्षिभि: ॥ पापेगुरुणिगुरूणिस्वल्पान्यल्पेच तद्विद: । प्रायश्चित्तानिमैत्रेयजगु: स्वायम्भुवादय: ॥ प्रायश्चित्तान्यशेषाणितप: कर्मात्मकानिवै । यानितेषामशेषाणांकृष्णानुस्मरणंपरमितिपराशर: ॥ प्रायश्चित्तन्तुपापानांश्रीदेवीनामसंस्मृतिरितिभागवतेव्यास: ॥
प्रायश्चित्तीय: । त्रि० प्रायश्चित्तयोग्ये । प्रायश्चित्तसाधनत्वेनभव: । प्रायश्चित्तायपापशोधनायश्रुतिस्मृतिविहितायकर्मणेहितोवा । वृद्धाच्छ: ॥
प्राय: । अ० भूम्नि । बाहुल्यार्थे ॥ प्रायनम् । अय० । असुन् ॥
प्रायिक: । त्रि० प्रायोभवे ॥
प्रायुद्वेषी । पुं० घोटके ॥
प्रायोज्यम् । त्रि० प्रयोजनार्हे ॥ यथा । प्रायोज्यंनविभज्यते । यद्यस्यप्रयोजनार्हंपुस्तकादितन्मुखै: सहनविभजनीयम् ॥ इति दायभाग: ॥
प्रायोपविष्ट: । त्रि० प्रायोपवेशविशिष्टे ॥ प्रायेणमृत्युपर्यन्तानशनेन उपविष्ट: ॥ अनादित्यपुराणम् ॥ य० । समायुक्तोभवेद्यस्तुपातकैर्महदादिभि: । उच्चिकित्स्यैर्महारोगै: पीडितोवाभवेत्तु य: ॥

स्वयंदेहविनाशस्यकालेप्राप्ते महा गतिः। आब्रह्माणस्वर्गादिमहा फलजिगीषया॥ प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनं तथा। एतेषा मधिकारोस्तिनान्येषांसर्ववस्तुषु॥ नराणामपिनारीणां सर्ववर्णेषुस र्वदा॥ इति॥

प्रायोपवेशः। पुं० सन्न्यासपूर्वकाऽनशनस्थितौ॥

प्रारब्धम्। न० वर्त्तमानदेहारम्भके कर्म्मणि॥ कर्म्मजन्मान्तरीयंयत् प्रारब्धमितिकीर्त्तितम्। दुर्बलं सबलंचेतिप्रारब्धंद्विविधंविदुः॥ दुर्बलस्यप्रतीकारः सनास्तिसब लस्यतु॥ अवश्यंभाविभावानां प्रतीकारोभवेद्यदि। तदादुःखै र्नलिप्येरन् नलरामयुधिष्ठिराः॥ आत्मानंसततंजानन्कालंनय महामते। प्रारब्धमखिलंभुञ्जन् नोद्वेगंकर्त्तुमर्हसि॥ इच्छाप्रार ब्धंपरेच्छाप्रारब्धमनिच्छाप्रारब्धमि तिभेदात्तत्त्रिविधं। तत्रस्वेच्छा- कृतंभिक्षाटनादि० समाध्यवस्थायां शिष्यादिभिर्दीयमानंपरेच्छाकृतम् समाध्यवस्थायांव्युत्थानदशायांवा आकाशफलपातवदकस्मात्स्नायमा नंपाषाणपतनंकण्टकवेधादिकञ्चा निच्छाकृतंप्रारब्धमितिविवेकः॥ त्रि० प्रकर्षेणआरब्धे॥

प्रारब्धिः। स्त्री० गजबन्धनरज्जौ॥

प्रारम्भः। पुं० प्रकृष्टारम्भे॥ प्रक- र्षेणआरम्भः॥ प्रारम्भेकर्मणांविप्रः पुण्डरीकंस्मरेद्धरिम्॥

प्रारिप्सितः। त्रि० प्रकर्षेणआरब्धुमी प्सिते॥

प्रार्थनम्। न० प्रकर्षेणयाचने। प्रार्थ नायाम्॥

प्रार्थना। स्त्री० याच्ञायाम्। अर्थना याम्। याचनायाम्॥ प्रकृष्टाअर्थ ना॥ अभियाते॥

प्रार्थनीयम्। न० द्वापरयुगे॥ त्रि० प्रार्थनाविषये॥

प्रार्थितः। त्रि० याचिते॥ शत्रुसंरुद्धे॥ अभिहिते॥ प्रार्थ्यतेस्म। अर्थया च्ञायाम्। क्तः॥

प्रार्थ्यमानः। त्रि० याच्यमाने॥

प्रालम्बः। पुं० पयोधरे॥ त्रपुषे॥ न० कण्ठाद्दृज्वस्पृगुलम्बमानमाल्ये॥ प्रालम्बते। लविअवस्रंसने। पचा द्यच्॥

प्रालम्बिका। स्त्री० हेमविरचितेनाभि लम्बिनिमाल्ये॥ प्रालम्बते। लवि। ण्वुल्॥

प्रालेयम्। न० मिहिकायाम्। हि- मे॥ प्रलीयन्ते पदार्थाअत्रेति०प्रल योहिमाद्रिः। ततआगतम्। अण्। केकयमित्रयुप्रलयानांयादेरियइ तियस्येयादेशः॥ उदके॥

प्रालेयांशु:। पुं० हिमांशौ। चन्द्रे ॥ प्रालेयानि० हिमानि० अंशवोयस्य ॥

प्रालेयाचल:। पुं० हिमालये। मेनाधवे ॥

प्रावट:। पुं० यवे ॥

प्रावर:। पुं० प्राचीरे ॥

प्रावरणम्। न० संव्याने। उत्तरीयवस्त्रे ॥

प्रावादुक:। त्रि० शुष्कतर्कजल्पनशीले ॥

प्रावार:। पुं० उत्तरासङ्गे। उपरिवस्त्रे ॥ उत्तरीये ॥ प्रव्रियतेऽनेन। वृञ्०। वृञोतिराच्छादने० इ० घञ्। उपसर्गस्यघञोतिदीर्घ:॥

प्रावारकीट:। पुं० कीटविशेषे ॥

प्रावृडत्यय:। पुं० शरदृतौ ॥

प्रावृत:। त्रि० निवीते। परिहितेवस्त्रे ॥ आव्रियतेस्म: वृञ्०। क्त:।

प्रावृति:। स्त्री० प्राचीरे ॥ शैवानांमते० स्वाभाविक्यामशुद्धौ। मले। प्रथमराशि ॥ प्रावृणोति०प्रकर्षेणआच्छादयतिआत्मनांदृक्क्रिये० इ० प्रावृति:॥

प्रावृट्। स्त्री० वर्षाकाले। श्रावणभाद्रयो:॥ वर्षणम्०वृट्। वृषुसेचने। सम्पदादित्वात्क्विप्। प्रकृष्टावृडत्र। नहिवृतिवृषिव्यधिरुचिसहितनिषुक्काविति दीर्घ:॥ प्रवर्षतीति-वा ॥

प्रावृषा। स्त्री० वर्षाकाले। जलार्णवे ॥

प्रावृषायणी। स्त्री० कपिकच्छ्वाम्। शूकशिम्बायाम् ॥ प्रावृषामेति०अयतेवा। कर्त्तरिल्युट्। कृत्यचइतिणत्वम्। ङीप् ॥

प्रावृषिक:। पुं० मयूरे ॥ त्रि० प्रावृषिजाते ॥ प्रावृषठप् ॥

प्रावृषिज:। त्रि० प्रावृषिजाते ॥ प्रावृट्शरत्कालदिवांजे० इत्यलुक् ॥

प्रावृषेण्य:। पुं० नीपे। कदम्बवृक्षे ॥ कुटजवृक्षे ॥ धाराकदम्बे ॥ त्रि० प्रावृट्कालभवे ॥ प्रावृट्देवतास्य०प्रावृषिभवोवा। कालेभ्योभववत्०इति० प्रावृषएण्य: ॥ प्राचुर्ये

प्रावृषेण्या। स्त्री० रक्तपुनर्नवायाम् ॥ कपिकच्छ्वाम् ॥ प्रावृषिभवा। प्रावृषएण्य:। टाप् ॥

प्रावृष्य:। पुं० कुटजे ॥ धाराकदम्बे ॥ विकण्टके ॥ न० ॥ वैदूर्यमणौ ॥

प्राट्। पुं० प्रश्नकर्त्तरि ॥ प्रश्ने ॥ पृच्छति। प्रच्छनंवा। प्रच्छज्ञीप्सायाम्। क्विब्वचिप्रच्छीतिक्विब्दीर्घावसम्प्रसारणञ्च। च्छ्वो:शूडितिश: ॥ प्राशौ०प्राश: प्राड्भ्यामित्यादि ॥

प्राश:। पुं० अवलेहे ॥

प्राशस्त्यम्। न० उत्तमत्वे ॥ बलवदनिष्टाननुबन्धित्वे ॥

प्राशितम्। न० पितृयज्ञे। नित्य-श्राद्धे॥ त्रि० भक्षिते॥

प्राश्निक:। पुं० सभ्ये॥ त्रि० प्रश्नकर्त्तरि॥

प्रास:। पुं० कुन्तास्त्रे। माला०इ०भा०॥ कौ०च०इ०गौ०भा०॥ प्रास्यते। असु०। हलश्चेतिघञ्। प्रायोहस्तस्थितिप्रेशल्यैइ०खामी॥

प्रासङ्ग:। पुं० युगे। वत्सानांशिक्षार्थंकाष्ठवि०। वत्सानांदमनकालेस्कन्धे यत्काष्ठमासज्यतेतत्र॥ प्रसज्यते। षञ्जसङ्गे। घञ्। उपसर्गस्येतिदीर्घ:॥

प्रासङ्ग्य:। पुं० युगवोढरिवृषे। युग्ये॥ प्रासङ्गंवहति। तद्वहतिरथयुगप्रासङ्गमितियत्॥

प्रासाद:। पुं० देवमन्दिरे॥ राजगृहे॥ प्रसीदन्त्यस्मिन्मनांसि। हलश्चेतिघञ्। उपसर्गस्यघञ्मनीतिदीर्घ:॥ आङ्श। क्रत्वाप्रभूतंसलिलमारामाणिनिवेश्यच। देवतायतनंकुर्याद्यशोधर्माभिवृद्धये॥

प्रासादकुक्कुट:। पुं० पारावते॥

प्रासिक:। पुं० कौन्तिके॥ प्रास: प्रहरणमस्य। प्रहरणमितिठक्॥

प्रास्त:। त्रि० प्रक्षिप्ते॥ निरस्ते॥ प्रास्यतेस्म। असु०। क्त:॥

प्रास्तारिक:। त्रि० प्रस्तारव्यवहर्त्तरि॥ प्रस्तारेव्यवहरति। कठिनान्तप्रस्तारसंस्थानेषुव्यवहरति० इतिठक्॥

प्रास्थानिकम्। त्रि० प्रस्थानकालोचिते॥ प्रस्थानेभवम्। कालाट्ठञ्॥ प्रस्थानशब्दस्यगुणवृत्त्याकथञ्चित्कालेवर्त्तमानत्वात्॥

प्रास्थिकम्। न० प्रस्थपरिमितव्रीह्यादिवापयोग्ये क्षेत्रे। प्रस्थस्यवाप:। तस्यवापइतिठञ्। त्रि० कटाहादिपात्रान्तरे॥ प्रस्थंसम्भवति०स्मिन्ममावेशयति० अवहरति० पचतिवा। सम्भवत्यवहरतीत्यादिनाठञ्। टिड्ढेति-ङीपि० प्रास्थिकीब्राह्मणी। प्रस्थमुपसंहरति०पचतिवेत्यर्थ:॥ प्रस्थेनक्रीते॥ ठञ्॥ प्रस्थंपरिमाणमस्य। प्रास्थिकोराशि:। तदस्यपरिमाणमितिठञ्॥

प्राह्ण:। पुं० नृत्योपदेशे॥

प्राह्ण:। पुं० पूर्वाह्णे॥ प्रथमञ्चतदहश्चप्राह्ण:। राजाह:सखिभ्यष्टच्। अह्नोऽह्नएतेभ्यइत्यह्नादेश:। अह्नोदन्तादितिणत्वम्॥

प्राह्णे। अ० पूर्वाह्णे॥

प्राह्णेतन:। त्रि० पूर्वाह्णसम्बन्धिनि॥ सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौतुट्च॥

प्रिय:। पुं०धवे। पत्यौ॥ वृद्धिनामौषधौ॥ जीवकौषधे॥ प्रीतिविषये। आत्मनि॥ यथा। प्रियोह्या

त्मैवसर्वेषांनात्मनोऽस्त्यपरंप्रियम् । लोकेस्मिन्नात्मसम्बन्धाद्भवन्त्यन्ये प्रियाः शिवे ॥ प्राणबुद्धिमनःस्वात्मदाराऽपत्यधनादयः । यत्सम्पर्कात्प्रियाश्चासंस्ततःकोन्वपरःप्रियः ॥ प्रीणाति । प्रीञ् तर्पणे । इगुपधेतिकः ॥ न० श्रोतुस्तत्कालश्रुतिसुखेवाक्ये ॥ त्रि० हृद्ये । इष्टे । प्रीतिविषये । स्नेहपात्रेपुत्रादौ ॥ प्रीतिकरे ॥ सर्वः प्रियः खलुभवत्यनुरूपचेष्टः ॥ भृत्ये ॥ प्रीणयति शुश्रूषादिनास्वामिनम् ॥ प्रियोऽप्रियस्वकार्यवशाद्भवति । यथा । नहिकस्यप्रियःकोवाविप्रियोवाजगत्त्रये । कालेकार्यवशात्सर्वेभवन्त्येवाऽप्रियाःप्रियाः ॥

प्रियंवदः । पुं० खेचरे । गंधर्वविशेषे ॥ त्रि० प्रियवाचि ॥ प्रियंवदति । वदव्यक्तायांवाचि । प्रियवशेवदः खच् । मुम् ॥

प्रियंवदा स्त्री० स्वर्वेश्यायाम् ॥

प्रियकः । पुं० पीतसालतरौ । जीवके । असनकुसुमे । विजयसार० इ० भा० ॥ नीपे । धाराकदम्बे ॥ चित्रमृगे । कम्बलप्रकृतौमृगविशेषे ॥ प्रियकोरोमनिर्युक्तोमृदुत्वमसृणोघनैः रितिवैजयंती ॥ अलौ । चञ्चरीके ॥ प्रियङ्गौ ॥ कुङ्कुमे । काश्मीरजन्मनि ॥ प्रीणाति । प्रीञ० । क्वुन्शिल्पिसंज्ञयोरितिक्वुन् ॥ यद्वा । प्रीणाति० प्रीयतेवा । इगुपधेतिकः । स्वार्थेकन् ॥

प्रियकारः । त्रि० प्रियङ्करे । प्रियंकरोति । डुकृञ्० । कर्मण्यण् ॥

प्रियकृत् । पुं० नारायणे । भजतांप्रियंकरोति । क्विप् ॥ त्रि० प्रियकारिणि ॥

प्रियङ्करः । त्रि० हितकारिणि । प्रियकारके ॥ प्रियङ्करोति । क्षेमप्रियमद्रेऽण्चेतिपक्षेखच् ॥

प्रियङ्करी । स्त्री० वृहज्जीवन्त्याम् ॥ श्वेतकण्टकार्याम् ॥ अश्वगन्धायाम् ॥

प्रियङ्गुः । स्त्री० राजिकायाम् । राजसर्षपे ॥ कणायाम् । पिप्पल्याम् ॥ कङ्गुसस्ये ॥ स्वनामख्यातसुगन्धिवृक्षविशेषे । प्रियके । श्यामायाम् । लतायाम् । फलिन्याम् ॥ प्रियङ्गुः शीतलातिक्ता तुवरानिलपित्तहृत् । रक्तातियोगदौर्गन्ध्यस्वेददाहज्वरापहा ॥ गुल्मतृड्विषमोहघ्नीतद्वद्गन्धप्रियङ्गुका । तत्फलंमधुरंरूक्षं कषायमशीतलंगुरु । विबन्धाध्मानबलकृत्सङ्ग्राहिकफपित्तजित् ॥ प्रियंगच्छति । मृगय्वादौनिपात

सिद्ध: ॥ मित० दूर्वा ॥ प्रियमङ्गतिवा । अगिगतौ । ख्यन्तोवा । कु: पूर्वत् । शकन्ध्वादि: ॥ काटूक्याम् ।

प्रियचिकीर्षु: । त्रि० प्रियङ्कर्त्तुमिच्छौ ॥

प्रियजन: । पुं० हृद्यलोके ॥ प्रौढभावत्ते ॥ यथा ॥ प्रौढभावानुविज्ञेय स्तस्यप्रियजनोत्तस: ॥

प्रियजीव: । पुं० श्योनाकवृत्ते ॥

प्रियतम: । पुं० मयूरशिखावृत्ते ॥ आत्मनि ॥ यथा । वित्तात्पुत्र: प्रिय: पुत्रात् पिण्ड: पिण्डात्तथेन्द्रियम् । इन्द्रियेभ्य: प्रिय: प्राणआत्माप्रियतमस्तत: ॥ त्रि० प्रेष्ठे ॥ अतिशयेनप्रिये ॥

प्रियता । स्त्री० हार्दे । प्रेम्णि । स्नेहे ॥ प्रीणातीतिप्रिय: । तस्य भाव: । तल् ॥

प्रियतोषण: । पुं० षोडशबन्धातिरिक्तरतिबन्धविशेषे ॥ यथा । नारीपादौस्वहस्तेनधारयेत्स्वघनोपरि । स्तनापीडकर: कामीकामयेत् प्रियतोषण: ॥ त्रि० प्रियस्यतुष्टिकारिणि ।

प्रियत्वम् । न० प्रियतायाम् ॥ प्रियस्यभाव: । त्व: ॥ प्रीतिकरणे ॥

प्रियदर्शन: । पुं० कीरे । शुकविहङ्गमे ॥ क्षीरिकाद्रुमे ॥ त्रि० चक्षुष्ये । सुदर्शने ॥ प्रियंदर्शनमस्य ॥

प्रियप्रायम् । न० चटुनि । चाटुनि । प्रियवाक्ये ॥ इतिहेमचन्द्र: ॥

प्रियप्रेप्सु: । त्रि० इष्टार्थोद्युक्ते । उत्सुके ॥

प्रियमधु: । पुं० एककुण्डले । बलदेवे । अच्युताग्रजे ॥ प्रियंमधु मद्यंयस्य ॥

प्रियरूप: । पुं० कामे ॥ न० अप्सर: प्रभृतीनांरूपे ॥ त्रि० मनोहररूपवति ॥

प्रियवर्णी । स्त्री० श्यामायाम् । गुन्द्रायाम् । प्रियङ्गौ ॥

प्रियवल्ली । स्त्री० प्रियङ्गौ ॥

प्रियवादी । त्रि० तत्कालमधुरवाक्यवक्तरि ॥ मनोज्ञवक्तरि ॥ यथा । कोतिभार: समर्थानांकिन्दूरंव्यवसायिनाम् । कोविदेश: सुविद्यानांक: पर: प्रियवादिनामिति ॥

प्रियव्रत: । पुं० स्वायम्भुवमनो: पुत्रे । यथा । प्रियव्रतोत्तानपादौमनोस्वायम्भुवस्यतु द्वौपुत्रौसुमहावीर्यौ धर्मज्ञौकथितौतव ॥

प्रियश्रवा: । पुं० भगवतिवासुदेवे ॥ प्रियंश्रवोयस्यस: ॥

प्रियसख : । पुं० खदिरे ॥

प्रियसत्यम् । न० सूनृतवाक्ये ॥

प्रियसन्देश : । पुं० चम्पकवृक्षे ॥ प्रिय संवादे ॥

प्रियसालक : । पुं० असनवृक्षे । विज यसार० इ० भा० ॥

प्रिया । स्त्री० भार्यायाम् ॥ नार्याम् । एलायाम् ॥ मदिरायाम् । मल्लिका याम् ॥ वार्त्तायाम् ॥ प्रियङ्गौ ॥ मध्यावृत्तिप्रभेदे ॥ यथा । जोहलंह ग्यते । साप्रियाकथ्यते ॥ यथा । नौमिगोपालकम् । देवकीबालकम् ॥ मृगीतिनामान्तरम् । रोमृगीति लक्षणात् ॥ सुप्रतिष्ठाप्रभेदेपि । स लगे : प्रिया : । यथा । व्रजसुभ्रुवो विलसत्कला : । अभवन्प्रियामुरवै रिण : ॥

प्रियाम्बु : । पुं० आम्रवृक्षे ॥ न० आ म्रफले ॥ इत्यजजे ॥

प्रियार्ह : । पुं० नारायणे ॥ स्वेष्टदेवे प्रियाणीष्टान्यर्हतिअर्पयितुंयोग्योभ वतीतितथा । कर्मण्यण् ॥ यथा० यद्यदिष्टतमंलोकेयच्चास्यदयितंगृहे । तत्तद्गुणवतेदेयंतदेवाक्षयमिच्छता ॥ इतिमार्कण्डेयपु० ॥ अपिच । यद्य दात्मप्रियंद्रव्यंतत्तदिष्टायकल्पयेत् ॥

प्रियाल : । पुं० राजादने । पियाले ॥ चारस्यचफलंपक्वं वृष्यंगौल्याम्लकं गुरु । तद्बीजंमधुरंवृष्यंपित्तदाहार्ति नाशनम् ॥ प्रीणाति । प्रीञ्० । बा० कालन् ॥

प्रियाला । स्त्री० द्राक्षायाम् ॥

प्रियोदितम् । न० प्रियवाक्ये ॥ प्रियञ्च तत्उदितञ्च ॥ त्रि० प्रियवाक्यविष ये ॥

प्रीण : । त्रि० पुरातने । प्रतने ॥ नञ्च पुराणेप्रादिति०चेनसमुच्चित : ख : ॥ प्रीते ॥

प्रीणनम् । न० तर्पणे । तृप्तौ ॥ प्रीञ् । स्वार्थण्यन्तात्ल्युट्०धूञ्प्रीञो- रितिनुक् ॥

प्रीणयत् । त्रि० तर्पयति ॥ प्रीञोण्य न्ताल्लट : शतृशानचावित्यादिनाल ट : शत्रादेश०धूञ्प्रीञोर्नुग्वक्तव्य इतिनुगागम : ॥

प्रीणास : । पुं० गण्डके ॥

प्रीत : । त्रि० हृष्टे । मत्ते । तृप्ते ॥ नर्मणि ॥ प्रीयतेस्म । प्रीङ्प्रीणने । क्त : ॥

प्रीति: । स्त्री० मुदि । प्रमदे । हर्षे । सुखे ॥ इष्टदर्शनजन्ये सुखे ॥ भोज नकालेऽनभिरुचिराहित्ये । इच्छौ- त्कण्ठे ॥ विष्कम्भादिषुद्वितीययो गे ॥ तत्रजातस्यफलंयथा । प्रसूति कालेयदिप्रीतियोगोनरोह्यरोग : सु खवान्प्रमोदी । रक्तानुरक्तोविदुषां प्रपन्न : सम्प्रार्थितोयच्छतिवित्तमेव ॥ रम्या : सपत्न्यांस्मरपत्न्याम् ॥

प्रेम्णि ॥ यथा । याप्रीतिरविवेकानांविषयेष्वनपायिनी । त्वामनुस्मरतः सामेहृदयान्मापसर्पतु ॥ मा पं०ईश्रीपते । मापसर्पतुवा ॥ प्रेमलक्षणाप्रीतिर्ह्यात्मनिमुख्यान्यत्रगौणी । तथाचोक्तंवार्तिकसारे । स्वात्मभोगस्यहेतुत्वात्प्राणादौप्रीतिरिष्यते । नस्वतोतोनसामुख्याह्यात्मप्रीतिर्यथातथा ॥ प्रतीचिनिर्निमित्तैवसर्वावस्थासुवोच्यते । प्रीतिरस्मैात्मात्तुतस्मान्मुख्यासाविति गम्यताम् ॥ सर्वान्तरतरत्वेनयुज्यतेनिर्निमित्तता । बाह्येषुसनिमित्तत्वंप्रीतेः स्पष्टंगवादिषु ॥ व्याध्याद्युपद्रुतो लोकेमृतिमप्यभिवाञ्छति । निर्निमित्तप्रियत्वेतुदेहादेस्तन्नयुज्यते ॥ इति ॥ प्रीञ्तर्पणे । भावेक्तिन् ॥ यदीच्छेद्विपुलांप्रीतिंचीणितजनकारयेत् । वाग्विवादोर्थसम्बन्धः परोक्षेदारभाषणम् ॥

प्रीतिजुषा । स्त्री० उषायाम् । अनिरुद्धपत्न्याम् ॥

प्रीतिदः । पुं० वासन्तिके । कैलिकिले । विदूषके । भांड० द्व० भा० ॥ कामुके ॥ त्रि० सुखप्रेमदातरि ॥

प्रीतिदत्तम् । त्रि० प्रीत्यादत्तवस्तुनि । यथा । प्रीत्यादत्तन्तुयत्किञ्चिच्छ्वश्र्वाश्वशुरेणवा । पादवन्दनिकञ्चैव प्रीतिदत्तंतदुच्यते ॥ प्रीतिदाने ॥ भावेक्तः ॥

प्रीतिदानम् । न० प्रसादे ॥

प्रीतिभोज्यम् । न० प्रीत्याभक्षणीयेऽन्नादौ ॥ यथा । अन्नानिप्रीतिभोज्यानिआपद्भोज्यानिवापुनः । नचसम्प्रीयसेराजन्नचैवापद्गतावयम् ॥

प्रीतयुक् । त्रि० स्निग्धे ॥

प्रीत्यात्मकः । पुं० सत्त्वगुणे ॥ प्रीतिः सुखमात्मायस्य सः ॥

प्रुचिः । पुं० प्रुष्णी ॥

प्रुटः । त्रि० दग्धे । प्रुष्यतेस्म । प्रुष्दहे । क्तः । यस्येतिमेट् ॥

प्रुष्वः । पुं० ऋतौ ॥ सूर्ये ॥ प्रोषति । प्रुष० । अशुप्रुषिलटीतिक्वन् ॥

प्रुष्वा । स्त्री० जलकणिकायाम् । टाप् ॥

प्रेक्षणम् । न० चक्षुषि ॥ दर्शने ॥

प्रेक्षणकूटः । पुं० चक्षुर्गोलके ॥

प्रेक्षणीयः । त्रि० दर्शनीये ॥

प्रेक्षा । स्त्री० उपलब्धौ । बुद्धौ ॥ नृत्यक्षणे ॥ ईक्षणे ॥ प्रकृष्टमीक्षणमनयावा । ईक्ष० । गुरोश्चहलः । टाप् ॥ वृक्षशाखायाम् ॥

प्रेङ्खन् । त्रि० चलनविशिष्टे ॥ संसक्तिविशिष्टे ॥

प्रेङ्खा । स्त्री० पर्यटने ॥ अश्वगतौ ॥ भ्रंवेशनान्तरे ॥ नृत्ये ॥ दोलायाम् ॥ प्रेङ्ख्यते । इखिगतौ ॥ घञ् । टाप् ॥

प्रेङ्खित: । त्रि० कम्पिते ॥ प्रेङ्खतिस्म । इखि० । क्त: ॥

प्रेङ्खोलनम् । न० दोलायाम् । दोलने ॥

प्रेङ्खोलित: । त्रि० दोलिते । तरलिते । लुलिते ॥ न० रतबन्धान्तरे ॥ सर्वत: कटिपरिभ्रमोयद्दिप्रेङ्खपूर्वमिदमुक्तमारतम् ॥

प्रेत: । पुं० मरकस्थप्राणिनि ॥ भूतप्रभेदे ॥ स्वधर्मात्प्रच्युतोविप्रोदेहपातादूर्ध्वंवायवीयंदेहमापन्नउल्कामुखकटभूतनादिसंज्ञ: प्रेतउच्यते । यथा । वान्ताश्युल्कामुख: प्रेतो विप्रोधर्मात्स्वकाच्च्युत: । इति ॥ भूतप्रेतपिशाचानांलोकायथा । शरीरेचरायेचभूतप्रेतपिशाचका: । वर्जयित्वारुद्रगणांस्तेतचैवचरन्तिहि ॥ नोर्द्ध्वंविक्रमणेशक्तास्तेषांसम्भूतपाप्मनाम् । अतऊर्ध्वंहिविप्रेन्द्रराघ्रसायेकृतैनस: ॥ तेतुसूर्यादध: सर्वेविहरन्त्यूर्ध्ववर्जिता: । इतिपाद्मे स्वर्गखण्ड: ॥ वैदिकविधानेनौर्द्ध्वदैहिकाभावात्विष्णुदेपाद्यबहुनरकभोगान्ते प्रेतशरीरंभवतीति पुराणप्रसिद्धमस्ति ॥ त्रि० मृते ॥ अर्वाकसपिण्डीकरणात्प्रेतोभवति वैमृत: ॥ प्रैति । इण्० । गत्यर्थेति क्त: ॥

प्रेतकार्य्यम् । न० मृतस्यदाहादिसपिण्डीकरणान्तकर्मणि ॥ यथा । अकृत्वाप्रेतकार्य्याणिप्रेतस्यधनहारक: । वर्णानांयद्वधेप्रोक्तं तद्व्रतंनियतश्चरेत् ॥ इति ॥

प्रेतकृत्या । स्त्री० पितृपकारार्थायांक्रियायाम् ॥ प्रकर्षेणइत: प्रेत: पितृलोकस्थएवोच्यते ॥

प्रेतगृहम् । न० श्मशाने ॥

प्रेततर्पणम् । न० मरणावधिसपिण्डीकरणपर्यन्तंप्रेतशब्दोल्लेखेनजलदाने ॥

प्रेतनदी । स्त्री० वैतरिण्याम् ॥ प्रेतानांमरकस्थप्राणिनांनदी ॥

प्रेतपटह: । पुं० भयरुदि । मृत्युभङ्गरके । मृत्युकालेवादनीयवाद्यविशेषे । भीरु० इ० भा० ।

प्रेतपति: । पुं० यमे । प्रेतराजि ॥ प्रेतानांपति: ॥

प्रेतपिण्ड: । पुं० मरणावधिसपिण्डीकरणपर्यन्तं प्रेतसम्प्रदानकपिण्डाकारान्ने ॥ यथा । नस्वधास्वप्रयुञ्जीतप्रेतपिण्डे दशाह्निके । भाषितेतश्चदैपिंडंयच्चदत्तस्यपूरकम् ॥ प्रेतपिण्डानदीयन्ते यस्तस्यविमोक्षणम् । श्माशानिकेभ्यो देवेभ्यश्चाकल्पनैव विद्यते ॥

प्रेतपुरम् । न० यमालये ॥

प्रेतमाता । स्त्री० काल्यादिषु ॥ कालीकरालीभद्राचभीमाचैवभयोत्कटा । साधारणीदुराधर्षासम्प्रेता:

प्रेतमातर: ॥

प्रेतराक्षसी । स्त्री० तुलस्याम् ॥

प्रेतवनम् । न० श्मशाने ॥

प्रेतवाहित: । त्रि० भूताविष्टे ॥

प्रेतशिला । स्त्री० पिण्डदानार्थगयास्थितप्रस्तरविशेषे ॥ यथा । येयंप्रेतशिलाख्यातागयायांसात्रिधास्थिता । प्रभासेप्रेतकुण्डेचगयामुरशिरस्यपि ॥

प्रेतशौचम् । न० मृतसंस्काराद्दौ ॥

प्रेता । स्त्री० वैतरणीनद्याम् ॥ मृतायाम् ॥ प्रेतभावापन्नायाम् ॥

प्रेत्य । अ० अमुत्र । जन्मान्तरे ॥ देहत्यक्त्वात्यर्थे ॥ प्रकर्षेणइत्वा । इण्० क्त्वाप्रत्यय: । समासेइतिल्यप् । तुक् ॥ व्यावर्त्यत्यर्थे ॥

प्रेत्यभाव: । पुं० पुनरुत्पत्तौ ॥ तथाचगौतमसूत्रम् । पुनरुत्पत्ति: प्रेत्यभाव: ॥ १८ ॥ प्रेत्यमृत्वाभावोजननं०प्रेत्यभाव: । तत्रपुनरित्यनेनाभ्यासकथनात्० प्रागुत्पत्तिस्ततोमरणंततउत्पत्तिरिति । प्रेत्यभावोजननादिरपवर्गान्त: । एतज्ज्ञानञ्चवैराग्यउपयुज्यते०इति०प्रेत्येतिनव्यर्थम् । तदीयमरणञ्चतदीयजीवनादृष्टनाशस्तदीयचरमप्राणसंयोगध्वंसस्तदीयप्राणध्वंसोवा । तदीयोपत्तिस्तु०तदीयविजातीयशरीराद्यप्राणसंयोगइति ॥

प्रेत्वा । पुं० वासवे ॥ वाते ॥ प्राणिषु ॥

प्रेत्वरी । स्त्री० पुरि ॥

प्रेमा । पुं० न० प्रियतायाम् । हार्दे । स्नेहे ॥ हर्षे ॥ नर्मणि ॥ रम्यपुदिह्वायाम् ॥ प्रियस्यभाव: पृथ्वादित्वादिमनिच् । प्रियस्थिरेतिप्रादेश: ॥ प्रथमम् । प्रीङ्तर्पणे । मनिन्वा ॥ नपुंसकलिङ्गम् ॥ गुणतन्त्रा: प्रेमाणोनपरिचयतन्त्रा: । पुंस्त्वमपि ॥ स्नेहवाचकशब्दलक्षणंयथा । सर्वथाध्वंसरहितंसत्यपिध्वंसकारणे । यद्भावबन्धनंयूनो: सप्रेमापरिकीर्तित: ॥ इत्युज्ज्वलनीलमणि: ॥

प्रेमपरिप्लुत: । त्रि० प्रेमरससमन्ने ॥

प्रेमपातनम् । न० नेत्रजले ॥

प्रेमालिङ्गनम् । न० स्नेहेनपरिष्वङ्गे ॥ नायकानायिकयोरालिङ्गनविशेषे ॥ तल्लक्षणंयथा । नायककटिंनायिकयैकपादेनवेष्टयित्वाद्वितीयंपादंतस्यजङ्घो परिस्थापयित्वायदालिङ्गनंतदितिकामशास्त्रम् ॥

प्रेयान् । पुं० पत्यौ । प्रिये । दयिते । कान्ते ॥ कान्ते ॥ त्रि० प्रियतरे । पशुपुत्रादिलक्षणे ॥ अयमनयोरतिशयेनप्रिय: । ईयसुन् । प्रियस्थिरेतिप्रादेश: ॥ न० सर्वान्तरे०ब्रह्मात्मनि ॥

प्रेयसी । स्त्री० प्रियतमायांभार्याम् । दयितायाम् । कान्तायाम् ॥ वल्लभायाम् ॥ ङीप् ॥

प्रेरक: । पुं० राजादौ ॥ प्रयोजके ॥ विधौ ॥ प्रेरणामेवकुर्वन्प्रेरकोविधि: ॥ प्रेरयति । प्रोपपदादीरतेर्हेतुमण्णिजन्तात्०कर्त्तरि० ण्वुल् ॥

प्रेरणम् । न० प्रेषणे । पठावना० इ० भा० ॥ आज्ञापने । स्वस्वकार्येषुनियोजने ॥ अश्वानांषड्विधप्रेरणंयथा। वाहनंप्रतिवाहनांषड्विधंप्रेरणंविदु: । रागावल्गाकशापार्ष्णिप्रतोदरवभेदतइति ॥ प्रकृष्टम् ईरणम् ॥

प्रेरणा । स्त्री० चोदनायाम् । विधौ ॥

प्रेरित: । त्रि० चोदिते । नियोजिते । प्रेषिते ॥

प्रेङ्खा । पुं० सागरे । समुद्रे ॥ प्रेरयति । ईरक्षेपे प्रईरगदीस्फुटच्चेति क्रिनिप्॥

प्रेङ्खरी । स्त्री० नद्याम् ॥ वनोरचेति ङीप् ॥

प्रेर्य: । त्रि० प्रेरकायोग्ये ॥

प्रेष: । पुं० प्रेषणे ॥ पीडायाम् ॥ प्रेष्ये ॥

प्रेषणम् । न० प्रेरणे ॥ जानीयात् प्रेषणेभृत्यान्बान्धवान्व्यसनागमे । मित्रञ्चापदिकालेचभार्याञ्चविभवक्षये ॥

प्रेषणा । स्त्री० भृत्यादेर्निकृष्टस्यप्रवर्त्तनायाम् । आज्ञायाम् ॥

प्रेषित: । त्रि० प्रसृते । प्रेरिते । प्रस्थापिते । प्रतिशिष्टे । पठाया० इति भा० ॥

प्रेष्ठ: । त्रि० प्रियतमे । अयमेषामतिशयेनप्रिय: । प्रियस्थिरेत्यादिनेष्ठनिसाधु: ॥

प्रेष्ठा । स्त्री० प्रेयस्याम् ॥ प्रसृतायाम् ॥

प्रेष्य: । त्रि० दासे । सेवके । भृत्ये ॥ प्रेष्यते । ईषगत्यादिषुवा ण्यत् । गुण: ॥

प्रैयङ्गवीनम् । न० प्रियङ्गुक्षेत्रे । प्रियङ्गूणांभवनंक्षेत्रम् । धान्यानांभवनेक्षेत्रेखञ् ॥

प्रैष: । क्लेशे ॥ मर्दने ॥ उन्मादे ॥ विधौ ॥ प्रेषणे ॥ प्रेषणम् । इषेर्भावेघञ् । प्रादूहेतिवृद्धि: ।

प्रैष्य: । त्रि० प्रेष्ये ॥ प्रेष्यते । इषु इच्छायाम् । इषगतौ०आभीक्ष्ण्येच । ण्यत् । प्रादूहेतिवृद्धि: ॥

प्रोक्त: । त्रि० कथिते ॥ प्रकर्षेण०अध्यापनेन०अर्थव्याख्यानेनवाउक्त: प्रकाशित: ॥

प्रोक्षणम् । न० सेचने ॥ वधे । यज्ञार्थपशुहिंसने ॥ प्रकृष्टमुक्षणम् । उक्षसेचने । ल्युट् ॥

प्रोक्षणी । स्त्री० जलक्रीडाविशेषे । क्रीडाखेलना० इ० भा० ॥ प्रोक्षणी

भिक्षदे जितात्मद्रतिप्रयोगात् ॥

प्रोक्षित: । त्रि० निहते । यज्ञे हतपशौ । उपसम्पन्ने । यज्ञार्थमन्त्रै : संस्कृतमांसादौ ॥ यथा । भक्षयेत् प्रोक्षितंमांसं सकृद्ब्राह्मणकाम्यया । दैवेनियुक्त : श्राद्धेवानियमेतुविवर्जयेत् । आरण्यामामिदानींतनप्रोक्षणापिचानास्तीत्युक्तमहाभारते । यथा । आरण्या: सर्वदेवत्या : प्रोक्षिता : सर्वशोमृगा: । अगस्त्येनपुराराजन्मृगयायेनपूज्यतेऽइति । सिक्ते ॥ प्रोक्षतेस्म। उक्ष० । क्त : । मन्त्रसंस्कृते ॥

प्रोच्छलत् । त्रि० उद्गच्छति । उच्छल्ता०इ०भा० ॥

प्रोञ्छनम् । न० प्रवर्ज्जने । लोपने । पृञ्छना०इ०भा० ॥

प्रोज्जासनम् । न० मारणे ॥

प्रोज्झित : । त्रि० त्यक्ते ॥

प्रोणठ: । पुं० कटकोलि । पतद्ग्रहे ॥

प्रोतम् । न० वस्त्रे । वाससि ॥ त्रि० खचिते । व्याप्ते ॥ गुम्फिते । ग्रथिते ॥ स्यूते । प्रविष्टे ॥ प्रगते । प्रतिष्ठिते ॥ प्रक्षिप्ते ॥ पटेतिर्यक्तन्तौ ॥ वहिर्व्याप्तौ ॥ प्रपूर्वाद्वेञ : कर्मणिक्त: । यजादित्वात्सम्प्रसारणम् ॥

प्रोतोत्सादनम् । न० छत्रे । वस्त्रकुट्टिमे ॥

प्रोत्फल : । पुं० सिंहलाख्या । तालवृक्षसदृशवृक्षविशेषे । कुडी०कुडा०इ०गौ०भा० ॥

प्रोत्फुल्ल : । त्रि०विकसिते ॥

प्रोत्साह : । पुं० प्रकृष्टोद्यमे ॥

प्रोथ: । पुं० कट्याम् ॥ स्फिचये । शाटकौ । स्त्रीगर्भे ॥ छागलेवस्ते ॥ गह्वरे ॥ पुं०न०घोणायाम् । अश्वनासिकायाम् ॥ त्रि०अध्वगे ॥ प्रथिते ॥ प्रोथति । प्रोथृपर्याप्तौ । पुंसीतिघ : । प्रवतेवा । प्रुङ्गतौ । तिथपृष्ठगूथयूथप्रोथा० : इ०थक् । निपातनाद्गुण : ॥

प्रोद्यत : । त्रि० सोद्यमे ॥

प्रोष : । पुं० सन्तापे

प्रोषित : । त्रि० प्रवासगते । विदेशस्थे ॥ अपगते ॥

प्रोषितभर्तृका । स्त्री० विदेशस्थभर्तृकायाम् ॥ हास्यंपरगृहेयानंसमाजोत्सवदर्शनम् । क्रीडांशरीरसंस्कारंत्यजेत्प्रोषितभर्तृका ॥ प्रोषितोभर्त्तायस्या : ॥ स्त्रीयादिनायिकाभेदे ॥ देशान्तरेगतेपत्यौसन्तापाकुलाप्रोषितभर्तृकेतिलक्षणम् ॥

प्रोष्ठ : । पुं० गवि ॥ शफर्याम् । प्रोष्ठीमत्स्ये ॥ प्रकृष्टओष्ठोऽस्य । ओत्वोष्ठयो : समासेवा ॥

प्रोष्ठपद : । पुं० भाद्रमासे ॥

प्रोष्ठपदा । स्त्री० पूर्वभाद्रपदोत्तरभाद्रपदयो : ॥ प्रोष्ठोगौस्तस्येवपादा यासाम् सुप्रातसुश्वसुदिवशारिकुचीत्यादिनाबहुव्रीहावच् ०पक्षात्वनिपातित : ॥

प्रोष्ठपदी । स्त्री० भाद्राम्पूर्णिमायाम् ॥

प्रोष्ठपाद : । पुं० प्रोष्ठपदासुजाते ॥ सन्धिवेलेत्यादिनाऽण् । जे प्रोष्ठपदानामित्युत्तरपदस्याचामादेरचीवृद्धि : ॥

प्रोष्ठी । स्त्री० शफरे । शफर्याम् । वैवरीमत्स्यौ०सफरी०पोठी०पूठी०. इ०भा०पु०मत्स्ये ॥ प्रोष्ठीतिक्ताकटु : स्वादु : शुक्रघ्नीकफवातजित् । स्निग्धास्यकण्ठरोगघ्नीरोचनीचलघु:स्मृता ॥ प्रकृष्टऔष्ठोस्या: । ओत्वोष्ठयो : समासेवा । नासिकोदरोष्ठेति०जातेरितिवाङीष् ॥

प्रोष्य । अ० देशान्तरेउषित्वेत्यर्थे ॥

प्रोह : । पुं०गजाङ्घ्रौ । हस्तिपादे ॥ पर्वणि । गजचरणपर्वणि ॥ प्रोह-श्चरणपर्वणीतित्रिकाण्डशेष: ॥ त्रि ०निपुणे ०तर्के ।

प्रौढ : । पुं० वत्सरे ॥ त्रि० प्रगल्भे । प्रवृद्धे । वर्द्धिते । एधिते ॥ निपुणे । प्रोढतेस्म । वह० । क्त : सम्प्रसारणम् । प्रादूहेतिवृद्धि : ॥

प्रौढपाद : । पुं० आसनारोपितपादतले । आसनोपरिपादतलद्वयसंयोगपूर्वकोपवेष्टरि ॥ वस्त्रादिनाकृतपृष्ठजानुजङ्घाबन्धे । वस्त्रादिद्वारापृष्ठजानुजङ्घाद्वयदृढबन्धनपूर्वकोपवेष्टरि यथा । आसनारूढपादस्तुजानुनोर्जङ्घयोस्तथा- । कृतावसक्थिकोयस्तुप्रौढपाद : सउच्यते ॥ स्नानमाचमनंहोमंभोजनंदेवताऽर्चनम् । प्रौढपादोनकुर्वीतस्वाध्यायंपितृतर्पणम् ॥ इतिकात्यायन : ॥ अनेकोद्धाच्चेदारुशिलेभूमिसमेइष्टकाश्वसङ्कीर्णेभूतादृतिबौधायनवचनात्तथाविधेआरूढपादोपिकुर्यात् । इत्याह्निकतत्त्वम् ॥

प्रौढा । स्त्री० नायिकाभेदे । चिरंस्याम् । श्यामायाम् ॥ यथा । बालातुतरुणीप्रौढावृद्धाभवतिनायिका । गुणयोगेनरन्तव्या नारीवश्याभवेत्तदा ॥ त्रिंशद्वर्षादूर्ध्वम्पञ्चपञ्चाशद्वर्षपर्यन्तंप्रौढावस्था । यथा । आषोडशीभवेद्बालातरुणीत्रिंशतामता । पञ्चपञ्चाशतोप्रौढा भवेद्वृद्धाततःपरम् ॥ आसांवशत्वकारणंयथा । अलङ्कारादिभिर्बाला तरुणीरतियोगत : । प्रेमदानादिभि : प्रौढा वृद्धाचदृढताडनात् ॥ आसांरमणेगुणदोषायथा । बालातुप्राणदाप्रो

प्लक्षः

क्षातरुणीप्राणहारिणी । मीठाकरो तिष्ठत्वंमहामरणदाभवेत् ॥ मुग्धा दित्रिविधान्तर्गतप्रगल्भायांनायि- कायाम् ॥ स्मरमन्दीकृतव्रीडाप्रौ ढासंपूर्णयौवना ॥

प्रौढि : । स्त्री० उत्साहे । प्रगल्भता याम् ॥ उद्यमे । उद्योगे । कियदे तिकायाम् ॥ सामर्थ्ये ॥

प्रौष्ठपद : । पुं० भाद्रमासे । प्रौष्ठप दीपौर्णमास्यस्मिन् । सास्मिन्पौ र्णमासोत्यण् ॥

प्रौष्ठपदिक : । पुं० प्रोष्ठपददेवताके ॥ प्रोष्ठपदोदेवतास्य । महाराजप्रोष्ठप दाट्ठञ् ॥

प्रौष्ठपदी । स्त्री० भाद्रपौर्णमास्याम् ॥ प्रौष्ठपदाभि : पूर्वभाद्रपदोत्तरभाद्र पदाभिर्युक्तापौर्णमासी । नक्षत्रे णयुक्त : कालइत्यण् । ङीप् ॥

प्रौह : । पुं० प्रोहे ॥ प्रकर्षेणऊह : । तर्क : ॥

प्लक्ष : । पुं० जटिनि । पर्कव्याम् । पाखर० इ० प्र० वृक्षे ॥ प्लक्ष : क षाय : शिशिरोव्रणयोनिगदापह : । दाहपित्तकफास्रघ्न : शोथहारक्त- पित्तहृत् ॥ गर्दभाण्डे । कन्दराले । गैंडो० इ० वृक्षे ॥ कुञ्जराशने । अश्वत्थे ॥ पत्तके । सर्पान्तरे० । प्लक्ष्यति । प्लक्ष० । प्लक्षेरच्चोपधाया इतिस : ॥ प्रक्षरति० वा० । क्षर-

प्लव :

सञ्चलने । अन्यत्रापीतिड : । कपि त्थकादि : ॥ यद्वा । प्लक्ष्यते । प्लक्ष भक्षणे । कर्मणिघञ् । प्लक्षत्यधोग च्छति वा । अच् ॥ द्वीपविशेषे ॥ जम्बुद्वीपस्यविस्ताराद्विगुणेनसम- न्तत : । संवेष्टयित्वाक्षीरोदंप्लक्षद्वी पोव्यवस्थित : ॥ प्लक्षद्वीपेचविप्रे न्द्रा : सप्तासन्कुलपर्वता : । ऋ- ज्वायता : सुपर्वाण : सिद्धसङ्घनि षेविता : ॥ गोमेदइत्यस्यैवनामा न्तरम् ॥

प्लक्षसरस्वती । स्त्री० तीर्थविशेषे ॥

प्लक्षोदुम्बर : । पुं० तीर्थविशेषे ॥

प्लव : । पुं० प्लवने । प्लुतौ ॥ भेले । भेलके । डोंगा० इ० प्र० जलतर णसाधने ॥ भेके । दर्दुरे ॥ अवौ ॥ श्वपचे । चांडाले । कपौ । मर्क- टे ॥ जलकाके कुलके ॥ प्रवणे । क्रमनिम्नमहीभागे पर्कटीद्रुमे । कारण्डवखगे ॥ शब्दे ॥ प्रतिगतौ ॥ म्लेच्छजातौ ॥ जलान्तरे ॥ जलकु क्कुटे । हंसादिजलचरपक्षिषु ॥ तेयथा । हंससारसकाद्म्बवकक्रौ ञ्चशरारिका : नन्दीमुखीसकाट म्बाबलाकाद्या : प्लवा : स्मृता : ॥ प्लवन्ते सलिलेयस्मा देतेतस्मात्प्ल वा : स्मृता : ॥ प्लवा : पित्तहरा स्निग्धामधुरागुरवोहिमा : । वात श्लेष्मप्रदाश्चापिबलशुक्रकरा : सरा :

॥ ३५ इत्यमरवि० । दुर्भिक्षंजाय तेसर्वामेदिनीपुष्यतिप्रियं । प्लवेप्ल वन्तितोयानि पीडितामानवाभुवि ॥ ३५ न० कैवर्तीमुस्तके गन्धतृणे ॥ प्लवते प्लुङ् । अच् ॥ यद्वा । प्ल वनम् प्लुङ्गतौ । ऋदोरप् । प्लयतेऽनेनवा ॥

प्लवक : । पुं० खड्गधारादिनर्त्तके । कीलके ॥ चण्डाले ॥ प्लक्षे ॥ भेके ॥

प्लवग : । पुं० कपौ । वानरे ॥ भेके ॥ मण्डूके ॥ सूर्यस्यसारथौ ॥ शिरीष वृक्षे ॥ सुमतिमाम्नोर्हद्विशेषस्यध्वजे ॥ प्लवेनगच्छति । गम्लृ० अन्ये भ्योपीत्यन्ये ष्वपीतिवाड : ॥

प्लवगति : । पुं० भेके । मण्डूके ॥

प्लवङ्ग :। पुं० प्लवगे ; शाखामृगे ॥ प्लक्षवृक्षे ॥ ४१ ॥ इत्यमरे ॥ तृणधा न्यानिपीडान्तेग्रीष्मे वर्षतिवासव: प्लवङ्गपीडिता : सर्वा :.प्रजाइमुर वन्दिते ॥ ४१ ॥ प्लवनम्०प्लव : । प्लुङोप् । प्लवेनगच्छति । गम्लृ० : अन्ये भ्योपीत्यन्ये ष्वपीतिवाड : । गमश्चेतिखच् । खच्चडिद्वा । मुमा गम : ॥ मृगे ॥

प्लवङ्गम : । पुं० मण्डूके ॥ शाखामृगे प्लवेनप्लुत्यागच्छति । गम्लृ० । गमश्चेतिखच् । मुमागम : ॥ मा त्रावृत्तान्तरे ॥ यथा षट्कलमादि गुरुं प्रथमङ्कुरुसन्ततम्० पञ्चकल मततोपिचतुष्कलसङ्गतम् । नायक मथचतुर्थमितोगुरुमन्तके०एकाधिं कविंशति : प्लवङ्गमवृत्तके ॥ यथा । विष्णुविरञ्चिदिवाकरवासवव न्दितम् ० विस्मृतविषयविषादक मुनिजनसेवितम् । चञ्चलयातुलि तञ्चसुखंनहिकामये० शङ्करपाद सरोजरज : परिभावये ॥ इति ॥

प्लवन : । त्रि० प्रवणे । क्रमनिम्नभू मौ ।

प्लवमान : । त्रि० तरति ॥ तैरत० तैरता० इ० भा० ॥

प्लविक : । त्रि० भेलेनतरमाणे ॥ प्लवेनतरतिनौद्व्यचष्टन् ।

प्लाक्षम् । न० प्लक्षफले ॥ प्लक्षस्यफलम् । प्लक्षादिभ्योण् । विधानसामर्थ्यात् तस्यफलेनलुक् ॥

प्लावनम् । न० द्रवद्रव्यस्योर्द्ध्वप्रापणे । उफ्कलना ० उबटाना० इ० भा ० ॥ य० । तापनंघृततैलानांप्ला वनंगोरसस्यच । तन्मात्रमुद्धृतंशु ध्येत्कठिनन्तुपयोदधि ॥ मज्जने । बहुतरजलसंयोगे ॥

प्लावित : । त्रि० जलादिमग्नस्थाना दौ ॥ सिक्ते ॥

प्लिहा । पुं० प्लीहरोगे । गुल्मे ॥ यथा । यकृत्प्लिहाम्लाणिमुखादि वक्षिपप्लितिवैद्यकम् ॥

प्लीहघ्न : । पुं० रोहिणि रोहितके

प्लुत :                                    फञ्जिका

। दाडिमपुष्पके । रोहडागाच्छ० इ० गौ० भा० प्र०वृच्चे ॥

प्लीहा । पुं० गुल्मे । कुक्षिवामपार्श्वस्थमांसखण्डे । पिल्ली० तापतिल्ली ०इ०भा० ॥ शोणिताज्जायते प्लीहा वामतोहृदयादध : । रक्तवाहि शिराणांसमूलंख्यातोमहर्षिभि : ॥ विदाह्यभिष्यन्दिरतस्यजन्तो : प्रदुष्टमत्यर्थमसृक्कफश्च । प्लीहाभिवृद्धिंकुरुत: प्रवृद्धौ तंप्लीहसंज्ञं गदमामनन्ति । प्लेहते । प्लिहगतौ । श्वन्नुक्षन् पूषन् प्लीहन्नित्यादि नासाधु : ॥

प्लीहशत्रु : । पुं० दाडिमपुष्पके । रोहितकद्रुमे ॥ स्वल्पफलाम्बुपायाम् ॥ शरपुङ्खे ॥ प्लीह्न : शत्रु: ॥ विभीतके कोकिलाक्षे० ।

प्लीहघ्नी । स्त्री० अश्वत्थफलायाम् । इक्षुधायाम् ॥

प्लीहा । स्त्री० प्लीहरोगे ॥ यकृत् प्लीहेचसम्बन्धे० इतिप्रयोगात् ॥

प्लीहारि : । पुं० अश्वत्थवृक्षे ॥ प्लीहायाचरि : ॥

प्लीहाशत्रु : । पुं० प्लीहघ्ने ॥ कोकिलाक्षे० ॥

प्लुषि : । पुं० अग्नौ । प्लोषति प्लुष० । प्लुषिकुषिशुषिभ्य : क्सि : ॥

प्लुत : । पुं० त्रिमात्रवर्णे ॥ न० अश्वगतिविशेषे ॥ त्वरयाभम्पेनाश्वगतौ ॥ उत्पतने ॥ तिर्य्यग्गतौ । त्रि० आप्लुते ॥ प्रसृते ॥ झम्पगतियुक्ते प्लवनम् । प्लुङ्गतौ ॥ भावेक्त: ॥

प्लुति । स्त्री० प्लवने ॥

प्लुष : । पुं० दहने ।

प्लुषि : । पुं० पुत्तिकायाम् । अल्पमशके ॥

प्लुष्ट: । त्रि० दग्धे ॥ प्लुष्यतेस्म । प्लुष दाहे । क्त : यस्येतिनेट् ॥

प्लोष : । पुं० शोषे दाहे ॥ प्लोषणम् प्लुष० । घञ् ॥

प्सा । स्त्री० भक्षणे ॥

प्सातम् । त्रि० भक्षिते ॥ प्सायतेस्म । प्सा भक्षणे । क्त : ।

प्सानम् । न० भोजने ॥

०*—‡—*०

फ : । पुं० पवर्गद्वितीयाक्षरे ॥ यक्षसाधने ॥ स्फाने ॥ झञ्झावाते ॥ वर्द्धके ॥ जंभायाम् ॥ स्फुटे ॥ फलप्राप्तौ । न० रूक्षोक्तौ ॥ फूत्कृतौ ॥ निष्फलभाषणे ॥

फक्किका । स्त्री० पूर्वपक्षे । असद्व्यवहारे । चौर्ये । फांकी० इ० भा० ॥ न्यायसम्बन्धिव्याख्याविशेषे ॥

फञ्जिका । स्त्री० भार्ग्याम् । ब्राह्मणयष्टिकायाम् ॥ भनक्तिरोगान् । भञ्जो आमर्दने ॥ ण्वुल् । पृषोदरादि : देवताडे ॥ दुरालभायाम् ॥

फञ्जिपत्रिका । स्त्री॰ आखुपर्ण्याम् ॥

फञ्जी । स्त्री॰ भार्ग्याम् ॥ भनक्तिरोगान् । भञ्जो॰ । अच् । पृ॰ गौ॰ ङीष् ॥

फट् । अ॰ अनुकरणशब्दे ॥ विघ्ननिराकृतौमन्त्रे ॥

फटा स्त्री॰ फणे ॥ दम्भे ॥ स्फुटति । स्फुटविकसने । चु॰ । णिज भावे॰ पचाद्यच् । पृषोदरादि : ॥

फडिङ्गा । स्त्री॰ झिल्लिकायाम् ॥

फण : । पुं॰ फणायाम् ॥ फणति । फणगतौ । पचाद्यच् ॥ फटायान्तु फणाद्वयोरित्यमर : । शशोर्णं कारयं फणमितिक्लीबकाण्डे चन्द्रगोमी ॥

फणकर : । पुं॰ भुजङ्गे ॥

फणधर : । पुं॰ सर्पे ॥

फणधरधर : । पुं॰ शिवे ॥

फणभारी । फणाभृति ॥

फणभृत् ।
फणवान् । } पुं॰ ) सर्पे ॥

फणा । स्त्री॰ सर्पविस्तृतमस्तके फटायाम् ॥ फणति । फण॰ अच् । टाप् ॥

फणाकर : । पुं॰ सर्पे । भुजङ्गमे ॥ फणाकरोऽस्य ॥

फणाधर: ) पुं॰ सर्पकुम्भीनसे ।
फणाभर: ) हिरसने ॥

फणावान् । पुं॰ श्वसनाशने । विषाऽऽश्ये । सर्पे ॥ फणास्त्यस्य । मतुप् ॥

फणिकेसर : । पुं॰ नागकेशरे ॥ फणिसंज्ञक : केसर : ।

फणिखेल : । पुं॰ भारतीपक्षिणि गरुद्योधनि । भार॰ इ॰गौ॰भा॰ ॥

फणिजिह्वा । स्त्री॰ महाशतावर्याम् ॥ महासमङ्गायाम् ॥ सारिकायाम् ॥

फणिज्झक : । पुं॰ प्रस्थपुष्पे । मरुवा॰ इ॰ भा॰ फणिजातीऽस्मात्॰फणाभपत्रपुष्पत्वात् । फणीउज्झकोवर्जकोऽस्येतिकेचित् ॥ उभयत्रपृषोदरादि : ॥ स्त्री॰ रामदूत्याम् ॥

फणी । पुं॰ सर्पे ॥ फणाऽस्ति । व्रीह्यादित्वादिनि : ॥ सर्पिण्यामोषधौ ॥

फणिप्रिय : । पुं॰ वायौ ॥

फणिफेन : । पुं॰ अहिफेने ॥

फणिभुवनम् । न॰ पाताले ॥

फणिवल्ली । स्त्री॰ नागवल्ल्याम् ॥

फणिहन्त्री । स्त्री॰ रास्नायाम् । गन्धनाकुल्याम् ॥

फणिहृत् । स्त्री॰ क्षुद्रदुरालभायाम् ॥

फणीश्वर : । पुं॰ अनन्ते ॥ फणिनामीश्वर : ॥

फण्ड : । पुं॰ जठरे ॥

फत्कारी । पुं॰ पक्षिमात्रे ॥

फरम् । न॰ फलके ॥

फरुवकम् । न॰ पूगपात्रे ॥

फर्फरीकः। पुं० चपेटायाम्। न० मार्दवे॥

फर्फरीका। स्त्री० पादुकायाम्॥

फलः। पुं० कुटजवृक्षे॥

फलम्। न० जातीफले॥ सस्ये। वृक्षादीनांफले॥ फलेषुपरिपक्वंयद्गुणवत्तदुदाहृतम्। बिल्वादन्यत्रविज्ञेयमामंतद्धिगुणाधिकम्॥ फलेषुसरसंयत्स्याद्गुणवत्तदुदाहृतम्। द्राक्षाबिल्वशिवादीनांफलंशुष्कंगुणाधिकम्॥ फलतुल्यगुणंसर्वंमज्जानमपिनिर्दिशेत्। फलंहिमाग्निदुर्वातव्यालकूटादिदूषितम्। अकालजंकुभूमीजंपाकातीतंनभक्षयेत्। पाकमतिक्रम्यशटितम्॥ व्युष्टौ॥ लाभे॥ यथा। अग्निहोत्रफलावेदादत्तभुक्तफलंधनम्। रतिपुत्रफलादाराःशीलवृत्तफलंश्रुतमितिवह्निपुराणेऽग्निवाक्यम्॥ त्रिफलायाम्॥ कक्कोले॥ शस्त्राग्रे। वाणाग्रे॥ फलके॥ निरीषे। फाले॥ दाने॥ मुष्के॥ यथा। अफलोभुज्यतेमेषःसफलस्तुनभुज्यते। इतिरामायणम्॥ हेतुकृते। हेतूत्थे। साधननिष्पाद्ये-काम्ये०स्वर्गादौ। अभिसन्धीयमाने० शरीरग्रहणे। मायामये॥ फलात्तयालयमदर्शनंगच्छतीतिनिरुक्तः॥ तच्चफलंकर्मणस्त्रिविधत्वात्त्रिविधम्। पापस्यानिष्टंफलंनारकतिर्यगादिलक्षणम्॥ २॥ पुण्यस्येष्टंफलंदेवादिलक्षणम्॥ १॥ मिश्रस्यतुपापपुण्ययुगलस्यमिश्रम्० इष्टानिष्टसंयुक्तम्मानुष्यलक्षणम्३ कर्माधीनेपुत्रपशुस्वर्गादिलक्षणेविनश्वरे॥ जीवःकर्मफलंभुङ्क्ते आत्मानिर्लिप्तएव। आत्मनःप्रतिबिम्बस्वदेहेजीवःसएवच॥ षड्विधलिङ्गेषुचतुर्थलिङ्गे। प्रकरणप्रतिपाद्यात्मज्ञानस्यतदनुष्ठानस्यवतत्रतत्रश्रूयमाणेप्रयोजने॥ यथाछान्दोग्येषष्ठेप्रपाठके० आचार्यवान्इत्यादिवाक्येन० अद्वितीयवस्तुज्ञानस्यतत्प्राप्तिःप्रयोजनंश्रूयते०इति॥ प्रवृत्तिदोषजनितार्थःफलम्॥ २०॥ इतिगोतमः। अत्रचमुख्यंफलंसुखदुःखोपभोगः। तथाचभाष्यम्। सुखदुःखसंवेदनंफलम्। तत्रचधर्माधर्मावृत्तेःप्रयोजकत्वात्०तत्रचदोषस्यहेतुत्वात्० प्रवृत्तिदोषजनितेत्युक्तम्। लक्षणन्तुसुखदुःखान्यतरसाक्षात्कारइति। गौणफलन्तुशरीरादिकंसर्वमेव। तथाचभाष्यम्। तत्पुनर्देहेन्द्रियबुद्धिषुसतीषुभवतीति। सहदेहेन्द्रियादिभिःफलमभिप्रेतम्। तथाहि। प्रवृत्तिदोषजनितोर्थःफलमेतत्सर्वंभवतीति। इत्यञ्जजन्यत्वमेवफलत्वम्। प्रवृत्तिदोषजनितइतितुनिर्वेदोपयो

गादुक्तम् २० ॥ नियतोत्तरभाविनि ॥ फलति । फलनिष्पत्तौ० ञि फलाविशरणेवा । पचाद्यच् ॥ फलं द्विविधम् । सातिशयंनिरतिशयञ्च । तत्रसातिशयंस्वर्गादि० निरतिशयं मोक्षः सचपरमानन्दस्वरूपः ब्रह्मणस्तद्रूपत्वात् ॥ फलंफलेधनेबीजे निष्पत्तौभोगलाभयोः । सस्यइति केशवः ॥ फलेच्छासाधनंसंक्रामति ।

फलकः । पुं० न० चर्मणि । फले । ढाल० इ० भा० ॥ फलति । ञिफला० । छत्रादिभ्योवुन् ॥ पुं० दारुघटितदीर्घासने । फला० पट्टा० पटडा० इ० भा० ॥ काष्ठादिपट्टके ॥ यथा । पाण्डुलिखितफलकेभूमौ वाप्रथमंलिखेत् । ऊनाधिकलुसं शोध्यंपश्चात्पत्रे निवेशयेत् ॥ इति ॥ अस्थिखण्डे ॥ नागकेसरे ॥ रजकाष्ठपट्टे ॥ शाल्मलिफलकेश्लक्ष्णनिज्याद्वासांसिनेजकः । नचवासांसि वासोभिर्निर्हरेन्नचवासयेत् ॥

फलकपाणिः । त्रि० चर्मिणि । फलकधारिणि । ढलैत० इ० भा० ॥ फलकंपाणौयस्य ॥

फलकी । पुं० फलु इ० गौ० प्र० मत्स्ये ॥ त्रि० फलकान्विते ॥

फलकीतीर्थम् । न० तीर्थविशेषे ॥

फलकृष्णः । पुं० पानीयामलके ॥

फलकेशरः । पुं० नारिकेलवृक्षे ॥

फलकोषकः । पुं० अण्डकोषे ॥

फलग्राही । पुं० वृक्षे । त्रि० फलग्रहणकर्त्तरि ॥

फलचमसः पुं० दधिमिश्रितवटत्वक्चूर्णे ।

फलचोरकः । पुं० चोरकनामगन्धद्रव्ये ॥

फलत्रयम् । न० द्राक्षापरूषकाश्मरीषु ॥ त्रिफलायाम् ॥ फलानांत्रये ॥

फलत्रिकम् । न० त्रिफलायाम् ॥ हरीतक्यादित्रये ॥ फलानांत्रिकम् ॥

फलदः । पुं० ईश्वरे ॥ वृक्षे । त्रि० फलदातरि ।

फलपञ्चाम्लम् । न० अम्लपञ्चफले ॥

फलपाकः । पुं० पानीयामलके ॥ करमर्द्दके ॥

फलपाकान्ता । स्त्री० धान्यकदल्याद्योषधौ ॥ फलपाकइवान्तोयस्याः ॥

फलपाकी । पुं० गर्दभाण्डे ॥

फलपुच्छः । पुं० वरण्डालौ ॥

फलपुष्पा । स्त्री० पिण्डखर्ज्जूर्याम् ॥ द्रोणपुष्प्याम् । गुम्मा० इ० भा० ॥

फलपूरः । पुं० बीजपूरे । बिजौरा० इ० भा० । फलेनपूर्य्यते । पूरी० । इगुपधेतिकः ॥ कर्म्मणिवञ्वा ॥

फलपूरकः । पुं० कोलङ्गे । बीजपूरे ॥

फलप्रदः । पुं० ईश्वरे ॥ धनेदानेन नष्टेपितत्फलप्रदईश्वरः । यतोस्तितेनदातारंतंप्रशंसन्तिवैदिकाः

॥ नापूर्वंफलदंतस्मिन्मानाभावा-
त्फलंपुनः । ईशादप्युपपन्नत्त्वा-
न्नैवापूर्वस्य कल्पकम् । सेव्यादा-
त्तः फलप्राप्तिर्दृश्यतेनत्त्वपूर्व्वतः ।
दानादिक्रियया सेव्यादीशात्तद्वत्-
फलंभवेत् ॥

फलप्रिया । स्त्री० प्रियङ्गौ ॥

फलभूमिः । स्त्री० कर्मफलभोगस्था-
ने ॥ यथा । भरतान्यैरावतानिवि
देहाश्चकुरून्विताः । वर्षाणिकर्म्म
भूम्यः स्युः शेषाणिफलभूमयइति
हेमचन्द्रः ॥

फलमुख्या । स्त्री० पिण्डखर्जूरे ॥ अज
मोदायाम् ।

फलमुद्गरिका । स्त्री० पिण्डखर्जूरे ॥

फललक्षणा । स्त्री० प्रयोजनवत्यांलक्ष
णायाम् ॥ यथा व्यङ्ग्यस्यगूढागूढ
त्वाद्द्विधास्युः फललक्षणाः इति
साहित्यदर्पणः ॥

फलवान् । त्रि० फलिनि । फलमस्ति
वृक्षे ॥ फलिनि ॥ फलवत् सन्निधा
धावफलंतदङ्गम् ॥ फलान्यस्यसन्ति
। मतुप् ॥

फलवर्त्तुलम् । न० कालिङ्गे ॥

फलविषयः । त्रि० फलव्याप्ये ॥ घना
त्मनि ॥

फलवृक्षकः । पुं० पनसे ॥

फलव्याप्यत्वम् । न० वाह्येन्द्रियसन्निकृ
ष्टार्थाकारवाह्यधीपरिणामावच्छिन्न
चिदंशकृतेःप्राकट्याश्रयत्वं ॥ फलव्या
प्तिप्रतिबिम्बितचिदाभासव्याप्य
त्वमित्यर्थः ॥

फलशाकम् । न० षड्विधशाकान्तर्ग
तफलरूपशाके ॥

फलश्रेष्ठः । पुं० आम्रे ॥ फलेषुश्रे
ष्ठः ॥ तद्वृत्ते ॥

फलषाडवः । पुं० दाडिमे ॥

फलशैशिरः । पुं० वदरवृक्षे ॥

फलश्रुतिः । स्त्री० कर्म्मप्रवृत्तिनिमि
त्तप्रलोभजनकवाक्ये । कर्मफलश्र
वणे । यथा । फलश्रुतिरियंनृणां-
श्रेयोरोचनंपरम् । श्रेयोविवक्षया-
प्रोक्तंयथाभैषज्यरोचनम् ॥ अपिच ।
वेदोक्तमेवकुर्वाणोनिःसङ्गोर्पितमी
श्वरे । नैष्कर्म्यंलभतेसिद्धिंरोचना
र्थाफलश्रुतिः ॥

फलस्नेहः । पुं० अक्षोटवृक्षे ॥

फलहारी । स्त्री० काल्याम् ॥

फला । स्त्री० भिञ्जिरिष्टाक्षुपे ॥

फलाढ्या । स्त्री० काष्ठकदल्याम् ॥

फलाध्यक्षः । पुं० राजादने । क्षीरि
कायाम् । खिरणी० इ० भा० ॥
फलानामध्यक्षः ॥

फलादनः । पुं० शुके । कीरे । सूआ
० इ० प्र०पक्षिणि । त्रि०फलंफला
निवाअदनंयस्य तस्मिन् ॥

फलाम्लः । पुं० वंशे ॥ फलेनफलैर्वा
अम्लोयस्य ॥

फलाम्ल : । पुं॰ अम्लवेतसे ॥ न॰ वृचाम्ले ॥

फलाशन : । पुं॰ शुकपचिणि ॥ त्रि॰ फलभचके ॥

फलासव : । पुं॰ फलरसविकृतौसुराप्रभेदे ॥

फलि : । पुं॰ फलुइ इ॰ प्र॰ मत्स्ये ॥

फलिका । स्त्री॰ निष्पाव्याम् ॥

फलित : । पुं॰ वृचे ॥ न॰ शैलेये । शिलापुष्पे ॥ त्रि॰ सफले । सञ्जातफले ॥ फलानिसञ्जातान्यस्य । तारकादित्वादितच् ॥

फलितार्थ: । त्रि॰ निष्कृष्टार्थे ॥ फलितश्चासावर्थश्च ॥

फली । त्रि॰ फलवति ॥ फलान्यस्यसन्ति । अतइनि : ॥

फलिन : । त्रि॰ फलवति ॥ विद्यमानफले । फलान्यस्य सन्ति । फलबर्हाभ्यामिनच् ॥ पुं॰ पनसे फलवति वृचेच ॥ इतिराजनिर्घण्ट : ॥

फलिनी । स्त्री॰ प्रियङ्गुवृक्षे । अग्निशिखावृक्षे ॥ नान्तलचणोङीप् ॥

फली । स्त्री॰ प्रियङ्गुवृचे ॥ गौरादित्वान्ङीष् फलिनस्त्री ॥

फलीकरणम् । न॰ तुषे ॥

फलीश : । पुं॰ पारिशे ॥

फलूष : । पुं॰ लताप्रभेदे ॥

फलेग्रहि : । पुं॰ यथाकालफलधरे । अवन्ध्यवृचे । त्रि॰ फलग्रहणकर्त्तरि ॥ फलानिगृह्णाति । ग्रह॰ । फलेग्रहिरात्मम्भरिश्चेति उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्चनिपात्यते ॥

फलेन्द्र: । पुं॰ राजजम्ब्वाम् । फरेंदा॰ इ॰भा॰ ॥

फलेपुष्पा । स्त्री॰ द्रोणपुष्प्याम् ॥

फलेप्सु: । त्रि॰ सकामेजने ॥ फलंप्राप्तुमिच्छतीतितथा ॥

फलेरुहा । स्त्री॰ पाटलायाम् । पाटलिवृचे । फलेरोहति । इगुपधेतिकृ : क : । तत्पुरुषेकृतीत्यलुक् ॥

फलोत्तमा । स्त्री॰ काकलीद्राचायाम । निर्बीजायाम् । किस्मिस॰इ॰भा॰ ॥

फलोत्पत्ति: । पुं॰ आम्रवृचे ॥

फलोदय : । पुं॰ लाभे ॥ त्रि॰ दिवेशालये ॥ फलस्यउदय : अस्मिन्वा ॥

फल्क : पुं॰ विसारिताङ्गे ॥

फल्गु : स्त्री॰ गयास्थनद्याम् मलव्याम् । काकोदुम्बरिकावृचे ॥ गुलाल॰फाग॰इ॰प्र॰रंग प्रभेदे ॥ मिथ्यावाक्ये ॥ त्रि॰तुच्छे । असारे ॥ यथा । लगमातजगति लगुजगदेतद्‍तिफल्गु । धनलोभमपहायनमपञ्चनयनाय ॥ फलतिअफलाविशरणे ॰फलनिष्पत्तौवा । फलिपाटीतिसाधु : ॥

फलगुतीर्थम् । न० गयानद्याम् ॥ सार्द्धक्रोशद्वयमानं गयायांपरिकीर्त्तितम् । पंचक्रोशंगयाक्षेत्रं क्रोशमेकंगयाशिर : ॥ तत्रपिण्डप्रदानेन तृप्तिर्भवतिशाश्वती ॥ नागाज्जनार्दनाच्चैवकूपाच्चोत्तरमानसात् ॥ एतद्गयाशिर : प्रोक्तं फल्गुतीर्थंतदुच्यते । तत्रपिण्डप्रदानेनपितॄणांपरमागति : ॥ पृथिव्यांयानितीर्थानियेसमुद्रा : सरांसिच। फल्गुतीर्थंगमिष्यंतिवारमेकंदिने दिने ॥

फल्गुदा । स्त्री० गयानद्याम् ॥

फल्गुन : । पुं० अर्ज्जुनपाण्डवे ॥ अर्जुनपादपे॥ फलंतिनिष्पादयति फल० फलेर्गुक्चेत्युनन्० गुगागमश्च ॥ त्रि० फल्गुन्यांजाते ॥ श्रविष्ठाफलगुनीत्यषोलुक्। लुक्तद्धितलुकि ॥

फल्गुनी । स्त्री० नक्षत्रविशेषे । पूर्वफल्गुन्यौ : ॥ काकोदुम्बरिकायाम् ॥ फल्गुन्यांजातायाम् ॥ श्रविष्ठाफलगुनीत्यषोलुकि० लुक्तद्धितलुकीतिस्त्रीप्रत्ययस्यचलुकि० फल्गुन्यषाढामितिट : ॥ टित्वान् ङीप् ॥

फल्गुवाटिका । स्त्री० काकोदुम्बरिकायाम् ॥

फल्गुवृन्तक : । पुं० श्योनाकप्रभेदे ॥

फल्गूत्सव : । पुं० दोलयात्रायाम् ॥

फल्यम् । न० कुसुमे ॥

फल्यकी । स्त्री० फलिमत्स्ये ॥

फलफल : । पुं० सूर्पजवाते ॥

फा: । पुं० वृद्धौ ॥ वर्द्धके ॥ सन्तापे ॥ निष्फलभाषणे ॥

फाटकी । स्त्री०स्फटिकायाम् । फटकिरी इ० भा० ॥

फाणि: । स्त्री० गुडे ॥ करंभे ॥

फाणितम् । न० मत्स्यण्डाम् । राव० इ० भा० यथा । इक्षोरसस्तुय : पक्व : किञ्चिद्गाढोबहुद्रव : । सएवेक्षुविकारेषुख्यात : फाणितसंज्ञया ॥ फाणितंगुर्वभिष्यन्दिबृंहणं कफशुक्रकृत् । वातपित्तश्रमान्हन्ति मूत्रबस्तिविशोधनम् ॥ फण्यते । फाणगतौ । घ्यन्त:क्त : ।

फाणट : । त्रि० अनायासकृते ॥ पुं० न० कषायविशेषे ॥ जुष्टमौषधजातमुष्णोदकेप्रक्षिप्य सद्योभिषुत्यपूत्वायत्पीयतेतत्फाण्टमित्याहु : ॥ यथा । क्षिप्त्वोष्णतोयेमृदित : फाण्टइत्यभिधीयते ॥ अपिच । क्षुण्णद्रव्यपलेसम्यक्जलमुष्णं विनि:क्षिपेत् पात्रेचतुष्पलंमितेततस्स्रावयेज्जलम् ॥ सोयंचूर्णद्रव : फाण्टोभिषग्भिरभिधीयते ॥ इति वै० प० ॥

फण्यतेस्म । फण० । क्त : । चुभ्रस्वान्तेतिसाधु : ॥ नवनीतभावात्प्रागवस्थापन्ने द्रव्ये ॥

फालः । पुं॰ महादेवे ॥ बलदेवे ॥ उ त्प्लुतौ ॥ पुं॰ न॰ कृषिके । सीरोपकरणे ॥ नवविधदिव्यान्तर्गताष्टमदिव्ये ॥ यथा । आयसंद्वादशपलवटितंफालमुच्यते । अष्टाङ्गुलंभवेद्दीर्घं चतुरङ्गुलविस्तरम् ॥ अग्निवर्णंततश्चौरोजिह्वयालेहयेत्सकृत् । नदग्धश्चेच्छुद्धिमियादन्यथातुसहीयते ॥ चौरोऽत्रगोचौरः । गोचौरस्यप्रदातव्यं तप्तफालावलेहनमितिस्मृतिः ॥ त्रि॰ कार्पासवाससि ॥ फालयति । त्रिफला॰ । ण्यन्तात् पचाद्यच् ॥ फलविकारः । तस्यविकारइत्यण् ॥

फालवह्नः । पुं॰ हले ॥

फाल्गुनः । पुं॰ गुडाकेशे । पार्थे । अर्जुने ॥ नदीभेदे ॥ अर्जुनभूरुहे ॥ तपस्ये॰ मासि । फागन॰ इ॰ भा॰ ॥ तत्रजातस्यफलम् । प्रियंवदः सज्जनबलभश्चपरोपकारीविमलाशयश्च । दातानितान्तं प्रमदाभिलाषीस्यात्फाल्गुनेयस्यजनस्यजन्म । अनन्तपुरे ॥ फलतिनिष्पादयति । फल॰ । फलेर्गुक्चेतिउनन्॰ गुगागमश्च । ततः प्रज्ञाद्यण् ॥ यद्वा । फाल्गुनीपौर्णिमास्यस्मिन् विभाषाफाल्गुनीतिपक्षे॰अण् ॥

फाल्गुनानुजः । पुं॰ सुरभौ । वसन्तकाले ॥ अर्जुनस्यकनिष्ठभ्रातरि ॥

फाल्गुनिकः । पुं॰ तपस्यमासे । फाल्गुने ॥ फाल्गुनीपौर्णमास्यस्मिन् । विभाषाफाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः इतिठक् । ठस्येकः ॥

फाल्गुनी । स्त्री॰ तपस्यपूर्णिमायाम् । अत्रगौड़देशीयादोलायात्रांकुर्वन्ति । नरोदोलागतंदृष्ट्वागोविन्दं पुरुषोत्तमम् । फाल्गुन्यांसंयतोभूत्वा गोविन्दस्यपुरंव्रजेत् ॥ अपिच । फाल्गुन्यांक्रीडनंकुर्याद्दोलायांममभूपते इति ॥ पूर्वफल्गुन्याम् ॥ उत्तरफल्गुन्याम् ॥ फल्गुनीभिर्युक्तापौर्णमासी ॥ नक्षत्रेणयुक्तेत्यण् । ततोङीप् ॥

फिः । पुं॰ पापे । निष्फलवाक्ये ॥ कोपे ॥

फिङ्गकः । पुं॰ कलिङ्गे । भृङ्गे । भूम्याटविहगे । फिङ्गा॰ इ॰गौ॰ भा॰ प्र॰ खगे ॥

फिरङ्गः । पुं॰ रोगान्तरे ॥ द्वीपान्तरे कश्चीपविशेषे ॥ तत्रत्यजने ॥ यथा । पूर्वाम्नायेनवशतंषडशीतिः प्रकीर्तिताः । फिरङ्गभाषयामन्त्रास्तेषांसंसाधनात्कलौ ॥ अधिपामण्डलानाञ्चसङ्ग्रामेष्वपराजिताः । इङ्गरेजानवषट् पञ्चलण्ड्रजाश्चापिभाविनः । इतिमेरुतन्त्रे २३ प्रकाशः ॥

फुः । पुं॰ मन्त्रके ॥ तुच्छवाक्ये ॥

फुक :। पुं० पक्षिणि ॥
फुट :। वि० सर्पफणायाम् ॥
फुत्। अ० अनुकरणशब्दे ॥
फुत्कर :। पुं० अग्नौ ॥
फुत्कार : पुं० फुत्करणे । फूंक० इ० भा० ॥
फुत्कृति :। स्त्री० फूत्कारे ॥
फुप्फुस :। पुं० पुप्फुसे । कोष्ठविशेषे ॥ सचहृदयनाडिकासंलग्नाशयविशेष : । फोंपडा० अस० इ० भा० ॥ यथा । स्थानान्यामाग्निपक्वानांमूत्रस्यरुधिरस्यच । हृदुण्डक: फुप्फुसश्चकोष्ठइत्यभिधीयते ॥ अस्यार्थ : । आमस्यस्थानमामाशयोनाभिरूर्द्धम् । अग्ने : स्थानंपच्यमानाशयोनाभिमध्यम् । पक्वस्यस्थानं पक्वाशयोनाभेरध :। मूत्रस्यस्थानं वस्ति :। रुधिरस्यस्थानंयकृत्प्लीहानौ । हृत्हृदयं । इक्षुरसपाकमलवद्य : शोणितमलस्तज्ज : उण्डुक: सचान्त्रदेशेव्यवस्थित : पुरीषाधानम् । फुप्फुस : हृदयस्यवामपार्श्वे फुप्फुण्ड इतिख्यातइतिविजयरक्षित : ॥
फुल्ति :। स्त्री० फलने ॥
फुल्ल :। त्रि० विकसिते ॥ पुष्पे ॥ यथा । श्रीपञ्चम्यांश्रियंदेवींफुल्लै : सम्पूजयेत्सदा ॥ फलति । ञिफला । ञीत: क्त :। आदितश्चेतीडभाव :। तिचेष्युत्वम् । अनुपसर्गात् फुल्लक्षीवेति० तस्यल : ॥
फुल्लदाम । न० छन्दोभेदे ॥ यथा । मोगौनौतौगौ० शरहयतुरगै : फुल्लदामप्रसिद्धम् ॥ यथोदाहरणम् । शश्वल्लोकानांप्रकटितकदमसंध्वस्तमालोकयकंसंहृष्यन्तेतोभिस्त्रिदिववसतिभिर्व्योमसंस्थैर्विमुक्तम् । मुग्धामोदैनस्थगितदशदिशाभोगमाहूतभृङ्गंमौलौदैत्यारेर्न्यपतदनुपमंस्वस्तरो : फुल्लदाम ॥ पुष्पमालायाम् ॥
फुल्लदृक् । त्रि० विकसितनयने ॥
फुल्लफाल :। पुं० शूर्पवाते ॥ इ० त्रिशेष : ॥
फुल्ललोचन :। त्रि० विकसितनेत्रवति ॥
फुल्लीक :। पुं० देशे ॥ सर्पे ॥
फूत्कार :। पुं० श्वासनिर्गमे । श्वसिते ॥ फूत्कारणम् । कृञ्० । घञ् ॥
फेत्कारिणी । स्त्री० तन्त्रविशेषे ॥
फेन :। पुं० डिण्डीरे । अब्धिकफे । समुद्रफेने ॥ तरलद्रव्योपर्युत्थितवुद्बुदाकारवस्तुनि । फाग० इ० भा० ॥ स्फायते । स्फायी० फेनमीनाविति निपातनात्साधु : ॥
फेनक :। पुं० फेने ॥ पिष्टविशेषे ॥
फेनका । स्त्री० जलपक्वतण्डुलचूर्णे ॥
फेनदुग्धा । स्त्री० दुग्धफेनीक्षुपे ॥
फेनल :। त्रि० फेनवति । फेनिले ॥

फेनोऽस्मिन्नस्ति । फेनादिलच्चेतिचकारात्लच् ।

फेनवान् । त्रि० फेनले ॥ फेनोऽस्मिन्नस्ति । फेनादिलच्चेत्यत्रान्यतरस्यामित्यनुवृत्तेः पक्षेमतुप् ॥

फेना । स्त्री० क्षुपविशेषे । सातलायाम् ॥

फेनाग्रम् । न० बुद्बुदे ॥

फेनायमानः । त्रि० फेनमुद्वमति ॥ फेनाच्चेतिवक्तव्यमितिक्यञ् ॥

फेनवाही । पुं० वस्त्रे ॥

फेनाशनिः । पुं० इन्द्रे ॥

फेनिका । स्त्री० पक्वान्नविशेषे फेनी इ० भा० ॥ यथा समितायाघृताढ्यायावर्त्तीर्दीर्घाः समाचरेत् । तास्तुसन्निहितादीर्घाःपीठस्योपरिधारयेत् ॥ वेल्लयेद्वल्लनेनैतायथैकापर्पटीभवेत् । ततश्छुरिकयातान्तुसंलग्नामेवकर्त्तयेत् ॥ ततस्तुवेल्लयेद्भूयः शट्टकेनचलेपयेत् ततः संवृततांलोप्त्रींविद्धीतपृथक्पृथक् ॥ पुनस्तांवेल्लयेल्लोप्त्रींयथास्यान्मण्डलाकृतिः । ततस्तांसुपचेदाज्येभवेयुश्चपुटाः स्फुटाः ॥ सुगन्धयाशर्करयातदुद्धूलनमाचरेत् । सिद्धैषाफेनिकानाम्नीमठकेनसमागुणैः ॥ ततः किञ्चिल्लघुरियम्विशेषोयमुदाहृतः ॥

फेनिलः । अरिष्टभूरुहे । रीठा० इ० भा० ॥ बदरवृक्षे ॥ न० मदनफले ॥ बदरफले ॥ त्रि० सफेने ॥ फेनोऽस्ति । फेनादिलच्चेतिइलच् ॥

फेरः । पुं० शृगाले ॥

फेरण्डः । पुं० शृगाले ॥

फेरवः । पुं० शृगाले । असुरे । राक्षसे ॥ फे० इति० अव्यक्तोरवोऽस्य ॥ त्रि० धूर्त्ते ॥ हिंस्रे ॥

फेरुः । पुं० जम्बुके । शृगाले । फे० इत्यव्यक्तंरौति रुशब्दे । मितद्र्वादित्वात् डुः ॥

फेलम् । न० [illegible] भुक्तसमुज्झिते । उच्छिष्टे ॥

फेलकः । पुं० [illegible]

फेला । स्त्री० भुक्तोज्झिते ॥ फेल्यते । फेलृगतौ । गुरोश्चेत्यः ।

फेलिः । [illegible] भुक्तोज्झिते ।

फेलिका । स्त्री० [illegible] उच्छिष्टे । अ[illegible]

फेली । [illegible] ट० । इ० भा०

—:०(—)०:—

बवयोरैक्यमभेददर्शनात् ॥

बः । पुं० पवर्गस्यतृतीयाक्षरे ॥ वरुणे ॥ सिन्धौ ॥ भगे ॥ तोये ॥ वपने ॥

बंहिमा । पुं० बहुलतायाम् ॥ बहुलस्यभावः । पृथ्वादित्वादिमनिच् । प्रियस्थिरेतिबहुलस्यबंहिआदेशः ।

बंहिष्ठः । त्रि० अत्यन्तबहुले ॥ अयमेषामतिशयेनबहुलः । अतिशायने

तमविष्ठनाविनीष्ठन् । प्रियस्थिरेति बंहिष्ठादेश : ॥

बंहीयान् त्रि० बहुलतरे ॥ अयमनयोरतिशयेनबहुल : । द्विवचनविभज्योपपदेतरबीयसुनावितीयसुनिप्रियस्थिरेतिबंह्यादेश : ॥

बक : पुं० कङ्के । बगला० इ० प्र० पच्चिणि ॥ अस्यमांसगुणास्तु : शरारिबककाकाश्च दात्यूहा : पवनापहा : ॥ इ० ॥ बकपुष्पे । शिवमल्ल्याम् । अगस्तिद्रुमे । यथा । सितपीतनीललोहितकुसुमभेदाच्चतुर्विधोऽगस्ति : मधुरशिशिरदोषशमकासविनाशनश्चभूतघ्न : । तथाचराजनिर्घण्ट : । अगस्तिशिशिरंगौल्यं त्रिदोषघ्नंश्रमापहम् । बलासकासवैवर्ण्यभूतघ्नञ्चबलावहमिति ॥ श्रीदे । कुबेरे ॥ रक्षोविशेषे । योभीमेनहत: ॥ असुरविशेषे ॥ सचश्रीकृष्णेनहत : ॥ वङ्कते । व-क्रिकौटिल्येगतौच । अच् । आगमशास्त्रस्यानित्यत्वान्ननुम् । बवयोरैक्यम् ॥ यद्वा वाति, वायतिवा । वागतिगन्धनयो: । औणेशोषणेवा कन् । आतोलोप : ॥ वेति० वा-यति३ा । मूलविभुजादित्वात्क: वतिज्ञा । वचेरच् । न्यङ्क्वादि : ॥

बकचिञ्चिका । स्त्री० मत्स्यविशेषे० । बकाच्याम् ॥

बकजित् । पुं० भीमसेने ॥ श्रीकृष्णे ॥

बकनिसूदन : । पुं० श्रीकृष्णे । भीमसेने ॥

बकपुष्प : । पुं० वकवृत्ते ॥ न० अगस्तिकुसुमे ॥

बकवृत्ति : । पुं० बकसमानवृत्तनविशिष्ठे यथा । पाषण्डिनोविकर्मस्थान्वैडालव्रतिकान्शठान् । हैतुकान्बकवृत्तींश्चवाङ्मात्रेणापिनार्चयेत् ॥

बकवरी । पुं० श्रीकृष्णे ॥ भीमसेने ॥

बकव्रतचर : । पुं० बकव्रतिनि ॥ बकव्रतंचरतीति० तथा । चरेष्ट : । बकोहिप्रायेणमीनहननरुचितयामिथ्याविनीत : सन्नेवंशीलोभवतीति गौणोबकव्रतशब्द : तल्लक्षणन्तु । अधोदृष्टिर्नैकृतिक : स्वार्थसाधनतत्पर : । शठोमिथ्याविनीतश्चवकव्रतचरोद्विज : ॥ इ० ॥

बकव्रती । पुं० वकव्रतचरे । वकव्रतवति ॥

बकाची । स्त्री० बकचिञ्चिकायाम् ॥

बकारि : । पुं० श्रीकृष्णे ।

बकुल : । पुं० शीधुगन्धे । सिंहकेशरे । मौलसरीति० प्र० वृत्ते ॥ बङ्कते वक्रिगत्यर्थे । वा० उलच् । आगमशास्त्रस्यानित्यत्वान्ननुम् । बकुलस्तुवरोऽनुष्ण : कटुपाकरसोगुरु : । कफपित्तविषश्वित्रक्रमिदन्तगदापह-

ह : ॥ पश्चवम् ।
बकुला । स्त्री० कटुकायाम् ॥
बकुली । स्त्री० काकोल्याम् ॥
बकूल : । पुं० बकुले ॥
बकेरुका । स्त्री० बलाकाभिदि ॥ वातावञ्जितशाखायाम् ॥
बकोट : । पुं० शुक्लवायसे । बके ॥
बठर : । पुं० अम्बष्ठे शठे ॥
बणिग्बन्धु : । पुं० नीलीवृक्षे ॥
बणिग्भाव : । पुं० सत्यानृते । वाणिज्ये ॥ बणिजोभाव : । ष्यञ् ॥
बणिग्वह : । पुं० उष्ट्रे ॥
बणिक्०ग् । पुं० वाणिजके । वाणिज्यकर्त्तरि । क्रयविक्रयकर्त्तरि । वैदेहके सार्थवाहे । नैगमे । क्रयविक्रयके । वाणिज्ये ॥ करणान्तरे ॥ पणते । पण० । पणेरिज्यादेश्चव: ॥ वैश्ये ॥
बणिक् । स्त्री० बणिज्यायाम् ॥
बणिज : । पुं० बवादिकादशकरणान्तर्गतषष्ठकरणे । तज्जातफलंयथा । प्राज्ञ : कृतज्ञोगुणवान्गुणज्ञोबणिग्जनप्राप्तमनोरथ : स्यात् । यस्यप्रसूतौबणिजाभिधानंभाण्डप्रधानंद्रविणंहितस्येति ॥ बणिजि ॥
बणिज्यम् । न० वाणिज्ये । ग्रन्थान्तरे ॥ बणिजांकर्मभावोवा । दूतवणिग्भ्याश्चेति०य : इतिकाशिका । भाष्ये तु०दूतवणिग्भ्याश्चेतिनास्त्येव ॥
बणिज्या । स्त्री० वाणिज्ये ॥ ग्रन्थान्तरे बणिजांभाव : । दूतवणिग्भ्याश्चेतिय : बणिज्याशब्द : स्वभावात्स्त्रीलिङ्ग : ० भावएवायप्रत्ययोनतुकर्मणीतिमाधव: । भाष्ये तुवार्त्तिकमेवनास्ति ॥ बणिक्कर्मणि ॥
बण्ठ : । पुं० असहायगमने ॥ अकृतोद्वाहे ॥ खर्वे ॥ कुन्तायुधे ॥ भृत्ये । बांठ० इ० भा० ॥ बण्ठते । बठि । अच् ॥
बण्ड : । त्रि० विकृतलाङ्गूले ॥ बाँडा इ० भा० ॥
बदर : । पुं० कोलिपादपे ॥ बदरस्य पत्रलेपोज्वरदाहविनाशन : । त्वचा विस्फोटशमनीवीजंनेत्रामयापहम् ॥ बदतिस्थिरीभवति०छिन्नस्यापि पुन : प्ररोहणात् । बदस्थैर्ये । वा० अर : ॥ देवसर्षपेवृक्षे ॥ कार्पासस्यास्थ्नि । विनौला० कपासिया०वाड वा० इ०भा० ॥ न० कोलिफले ॥ कार्पासीफले ॥ बदर्या : फलम् । फलेलुगितिविकारावयवप्रत्ययस्यलुक् ॥ लुक्तद्धितलुकीति० स्त्रीप्रत्ययस्यलुक् ॥ सेविफले ॥ क्षुद्रबदरे । झाडीबेर इ० झडबेरी० इ० भा० ॥ गोपगोण्टायाम् ॥ बदरमात्रे । कर्कन्धौ । बदर्याम् ॥
बदरफली । स्त्री० भूबदर्याम् ॥

बदरवल्ली । स्त्री० ) भूबदर्याम् ॥

बदरा । स्त्री० गृष्टौ । वराहक्रान्ताया-मोषधौ ॥ कार्पास्याम् ॥ एलापर्ण्याम् ॥ विष्णुक्रान्तायाम् । टाप् ॥

बदरामलकम् । न० प्राचीनामलके ॥

बदरि : । स्त्री० कोलिवृत्ते ।

बदरिकम् । न० तीर्थविशेषे ॥

बदरिकाश्रम : । पुं० न०तीर्थविशेषे । नारायणाश्रमे । व्यासाश्रमे ॥

बदरी । स्त्री० कोलवृत्ते । कपिकच्छ्वाम् ॥ कार्पास्याम् ॥ गौरादित्त्वान्ङीष् ॥ बदरीफले ॥ बदर्या : फलम् हरीतक्यादिभ्यश्चेति०विकारार्थस्य लुप् ॥

बदरीखण्ड : । पुं० बदरीणां समूहे ॥ वृत्तादिभ्य : खण्ड : ॥

बदरीच्छदा स्त्री० शङ्खनख्याम् ॥ हस्तिकोलिवृत्ते ॥

बदरीपत्रकम् । न० नखीनामगन्धद्रव्ये ॥

बदरीपाचनम् । न० तीर्थविशेषे ॥ तत्रवशिष्ठाश्रम : ॥

बदरीफला । स्त्री० नीलशेफालिकायाम् ॥

बदरीशैल : । पुं० अलकनन्दाया : पश्चिमतीरेहिमाचलैकदेशे ॥

बदरीषण्ड : । पुं० बदरीखण्डे ॥ बदरीणांषण्ड : समूह : ॥

बदर्याश्रम : । पुं० नारायणाश्रमे ॥

बद्ध : । त्रि० कीलिते । संयते । कारागारादौनिगडिते ॥ बध्यते स्म । वधबन्धने । क्त : ॥ मोहाद्यावृते० सुखदु:खादिधर्मवति० पाशाष्टकेनयंत्रितेसंसारिजीवेपशौ॥

बद्धगुदम् । न० उदरामयविशेषे । तन्निदानंयथा । यस्यान्त्रमन्नैरुपलेपिभिर्वालाश्मभिर्वापिहितंयथावत् । सञ्चीयतेतस्यमल : सदोषात्शनै: शनै : शङ्करवच्चनाडाम् ॥ निरुध्यतेतस्यगुदेपुरीषंनिरेतिकृच्छ्रादपिचाल्पमल्पम् । हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरंबद्धगुदंवदन्ति ॥

बद्धफल : । पुं० करञ्जवृत्ते ॥

बद्धमुष्टि : । त्रि० कृपणे ॥

बद्धमूल : । त्रि० दृढमूले । उत्पाटनानर्हमूले । बद्धोमूलोयस्य स : ॥

बद्धमौन : । त्रि० नि : शब्दे ॥

बद्धरसाल : । पुं० त्रिविधराजाम्रान्तर्गताम्रस्य समाम्रे । मध्वाम्रे । मन्मथानन्दे ॥

बद्धशिख : त्रि० शिशौ । बाले ॥ संयतचूडेनरे ॥ यथा । सटोपवीतिनाभाव्यं सदाबद्धशिखेन तु । विशिखोव्युपवीतश्चयत्करोतिन तत्कृतमिति ॥ बद्धाशिखायस्य ॥

बद्धशिखा । स्त्री॰ उच्चटौषधौ ॥

बध : । पुं॰ प्राणवियोगफलकव्यापारे । प्रमापणे । मारणे ॥ हननम् । हन॰ । हनश्चवधश्चत्यप् ॥ पुण्यप्रद बधस्तुयथा । एकस्ययत्रनिधनेप्राप्ते दुष्टकारिणाम् । बहूनांभवति क्षेमं तस्यपुण्यप्रदोवध: ॥ एकस्तेयीसुरापश्चब्रह्महागुरुतल्पग : । आत्मानं घातयेद्यस्तुतस्यपुण्यप्रदोवध: ॥ इति ॥ अपिच , नैकस्यार्थेबहून्हन्यादितिशास्त्रेषुनिश्चय: एकंहन्याद्बहूनांहिनपापीतेन जायते ॥ इति वामनपुराणे ५५ अध्याय : । पारिभाषिकबधस्तु । बदनं द्रविणादानं स्थानान्निर्यापणं तथा । एषहिब्रह्मबन्धूनांबधोनान्योस्तिदैहिक : ॥ इ॰ ॥ करचरणादिच्छेदनादिरूपे ताडने ॥ सप्तम तारायाम् ॥

बधक . पुं॰ व्याधे । मृत्यौ ॥ बध कर्त्तरि । बद्धक॰ इ॰ भा॰ ॥ त्रि॰ हिंस्रे ॥ हन्ति । हन॰ । गवुल् । बहुलं तणीतिग्रवुलिबधादेश : ॥ बधहिंसायांवा । तदा॰ जनिवध्योर्श्चे तिवृद्धिनिषेध : ॥

बधत्रम् । न॰ आयुधे ॥ वध्यतेऽनेन । बध॰ । अमिनक्षियजिबधिपतिभ्योऽत्रन् ॥

बधस्थली । स्त्री॰ बधस्थाने ॥

बधस्थानम् । न॰ आघातने । सूनायाम् ॥ बधस्यस्थानम् ॥

बधाङ्ककम् । न॰ कारावेश्मनि ॥

बधार्ह : । त्रि॰ हननयोग्ये ॥ बध्ये ॥

बधी । त्रि॰ बधकर्त्तरि ॥

बधिर : । त्रि॰ एडे । श्रवणशक्तिहीने बहरा॰ इ॰ भा॰ ॥ बाधिर्यनिदानन्तु । यदाशब्दवहंवायु: स्रोतश्चावृत्यतिष्ठति । शुद्धश्श्लेष्मान्वितोवापिबाधिर्यन्तेनजायते ॥ औषधं यथा॰ । कर्णशूलेकर्णनादेबाधिर्येक्ष्वेडएवच । चतुर्ष्वपिचरोगेषुसामान्यं भेषजंस्मृतम् ॥ शृङ्गवेरञ्च मधुचसैन्धवं तैलमेवच। कटूष्णं कर्णयोर्धार्यमेतत्स्यादिदनापहम् ॥ इ॰ ॥ बाधिर्यंबालवृद्धोत्थं चिरोत्थञ्चविवर्ज्जयेत् । बध्नाति कर्णरन्ध्रं॰ बध्यतेवा बन्धबन्धने । इषिमदिमुदातिकिरच् ॥ भिक्षुकन्यायाम् ॥ हितंमितंमनोरम्यं वच : श्रोत्रापरच्छयत् । श्रुत्वायो नगृह्णातिबधिर : सप्रकीर्त्तित : ।

बधोद्यत : । त्रि॰ परबधायोद्युक्ते । सन्नद्धे । आततायिनि ॥

बध्य : । त्रि॰ बधार्हे । शीर्षच्छेद्ये किन्त्वयानश्रुतंलोकेऽवध्या : प्रमदा योषित: । हीनवर्णोपभुक्तायात्याज्या

बध्यापिबाभवेत् ॥ अवध्याययथा । गोब्राह्मणांश्चमथापिसुप्तं बालंस्वबन्धुं ललनांसुदुष्टाम् । कृतापराधान पिनैवबध्याचार्यमुख्यादाागुरवस्तथैवेति ॥

बध्यपाल : । पुं० कारागृहरक्षके ॥

बध्रम् । न० नागे । सीसके सीसा० इ०भा० ॥ बध्यतेऽनेन । सर्वधातुभ्य ष्ट्रन् ॥

बध्री । स्त्री० वध्र्याम् । वरत्रायाम् । चर्मरज्जौ । वरत० लाव० इ० भा० ॥ बध्यतेऽनया । ष्ट्रनःषित्वान्ङीष्

बन्ध : । पुं० भाटी ॥ बन्धने ॥ बन्ध : करणाशुद्धिरूपेज्ञानप्रतिबन्धे । कर्तृत्वाद्यभिमाने ॥ विपर्ययादिष्यते बन्ध : । विपर्ययात्०अतत्त्वज्ञानात् सच०प्राकृतिकवैकारिकदाक्षिणिकभेदात्त्रिविधइत्यत्तत्त्वव्याख्यानतोऽवगन्तव्य: ॥ पुनर्बन्धोद्विविध: । तीव्रोमृदुश्चेति । तत्रसुरसम्पत्०साक्षादेवकर्मणइहेतुत्वात्तीव्रोबन्ध : । द्वैतमात्रप्रतीतिस्तुक्षयमकर्मणरूपत्वान्मृदुबन्धइति ॥ वध्यतेऽनेनवा । ज्ञ्य०। हलश्चेतिघञ् ॥ गृहादिवेष्टने ॥ शरीरे ॥ निगडादिबन्धने ॥ अनैकान्तवादिमतेतु० नानानिरयसंसरणकारणं मोहादिरष्टविधोग ण: स्वातन्त्र्यविघातहेतुत्वाद्बन्ध: । उक्तञ्च । मोहादिर्योगपश्च बबन्धो

जीवस्यकल्पित : । लोहपञ्जरसम्बद्धं यथाचिप्तं जलाशये । अलाबुकमधोयातितद्वज्जीव: सबंधनइति ॥ जालंधरोड्डीयनमूलबंधानृजल्पन्तिकण्ठोदरपायुमूले । बंधत्रयेस्मिन् परिचीनमानेबंध : कुतोदारुणकालपाशे : ॥ इतियोगविद : ॥ षोडशप्रकारैरतिबंधे ॥ तेयथा । पद्मासनोनागपदोलताविष्टोऽर्द्धसंपुट: । कुलिशंसुन्दरश्चैवतथाकेशरएवच हिल्लोलोनरसिंहो पिविपरीतस्तथापर : । चुम्बोवैधेनुकश्चैवसमुत्कण्ठस्तत : परम् ॥ सिंहासनोरतिनागोविद्याधरस्तुषोडश इतिरतिमञ्जरी । एतेषांलक्षणानितत्तच्छब्दे द्रष्टव्यानि ॥ संज्ञाप्रभेदेनान्येऽपिबंधा: सन्ति । यथा कामप्रदोविपरीतोनागरोरतिपाशक: । केयूर: प्रियतोषश्चतत : समप्रदस्तथा । ततश्चैकपदोत्तिय : सम्पुटश्चोर्ध्वसम्पुट : । ततस्तनभरश्चैवततोऽरतिसुन्दर : ॥ ऊरूपीडस्मरस्तत्ताततस्योत्क्रम : स्मृत : । देहकोर्हत कीलस्तुततोलीलासनस्तथा ॥ अष्टादशक्रमाद्बंधा.स्त्रीणांबहुसुखप्रदा:॥ पं सांकराश्चैवकथितासुक्रमातत: ॥

बंधक: । पुं० विनिमये ॥ आधौ ॥ रतहिएडके ॥ सत्यङ्कारे ॥ न० आधौ । यदुंतमर्णायभूम्याद्याधीयततद्ध ॥

ऋणग्रहणायस्थापितेवस्तुनि ॥ बध्नाति । बंध० । ण्वुल् ॥

बंधकी स्त्री० पुंश्चल्याम् ॥ हस्तिन्याम् बध्नातिमनोयच । बंधबंधने ॥ ण्वुल् । गौ० ङीष् ॥ पञ्चपुरुषगामिन्याम् ॥

बंधनम् । न० बधे ।, बंधनक्रियायाम् । । उद्दाने । बधे । बांधना० इ० भा० ॥ निमित्ते ॥ यथा । नप्रकाशेऽहमित्युक्तिर्यत्प्रकाशैकबंधना । स्वप्रकाशंतमात्मानमप्रकाश : कथंस्पृशेत् ॥ अहंनप्रकाशे० नभामीत्युक्तिर्वचनं० यत्प्रकाशैकबंधना० द स्यप्रकाशस्वरूप प्रकाशएकएवबंधनं निमित्तंयस्या : सातथोक्ता ॥ नप्रकाशइतिव्यवहारस्यप्रकाशानुभवनिमित्तत्वादित्यर्थः । तंप्रकाशंस्वयमेवभासमानमात्मानमप्रकाशोऽज्ञानंकथस्पृशेत् आवृणुयात्नकथंचिदित्यर्थः ॥ त्रि० प्रसित्याम् । बंधनसाधनेरज्जुनिगडादौ ॥ यथा । बंधनानिकिलसन्तिबहूनिप्रेमरज्जुकृतबंधनमन्यत् । दारुभेदनिपुणोपिषडङ्घ्रिर्निष्क्रियोभवतिपङ्कजबद्धइति ॥ वध्यतेऽनेनास्मिन्वा । बंध० । ल्युट् ॥

बंधनवेश्म । न० कारागारे ॥

बंधनालय : । पुं० कारायाम् । बंधनागारे ॥ बंधनस्यआलय : ॥

बंधस्तम्भ : । पुं० आलाने । हस्तिबंधनस्तम्भे ॥ बंधस्यबंधनस्यस्तम्भः ॥

बंधित्रम् । न० कामदेवे ॥ चर्मव्यजने ॥

बंधु: । पुं० बंधूके । बंधुजीवके ॥ मित्रे । सन्यागासहने । भ्रातरि ॥ सगोत्रे । बांधवे । ज्ञातौ ॥ हितकारिणि ॥ संसारबंधनान्मोचनहेतुरात्मैवबन्धुर्नान्य : ॥ सम्बन्धेनोपकर्त्तरि ॥ बध्नातिस्नेहेनमनोय : बध्यतेऽस्मिन्नजातिरितिवा । बंध० । शृस्वृस्निहीत्यु : ॥ लग्नाच्चतुर्थभवने वर्गोद्रुत्तान्तरे ॥ भवयशोभितसङ्गतकर्णा : शुद्धसुसङ्गतपङ्क्तिकवर्णा : । पन्नगराजनिवेदितबंधू राजतिभूपतिमन्दिरबंधु : ॥ यथा । भज्जितवासरनायकचन्द्र : कामिसमूहसमाहिततन्द्रः । दर्शितलोलतडित्करवाल : सोयमुपैतिघनाघनकाल : ॥

बंधुजीव : । पुं० बंधूकवृक्षे । माध्याह्निके । दुपहरिया० फूल० इ० भा० ॥ बंधुरिवजीवंजलमस्य ॥

बंधुजीवक : । पुं० बंधूके ॥ स्वार्थेक:

बंधुता । स्त्री० बंधुसङ्घे ॥ बंधूनांसमूह : । ग्रामजनबंधुभ्यस्तल् ॥

बंधुर : । पुं० स्त्रीचिह्ने ॥ तैलकल्के ॥ बंधूके ॥ बधिरे ॥ हंसे ॥ विडङ्गे ॥ ऋषभौषधौ ॥ न० मुकुटे ॥ बंधने ॥

॥ त्रि० उन्नतानते ॥ रम्ये ॥ नम्रे ॥ बध्नाति । बंध० । मद्गुरादयश्चेतिसाधु : ॥

बंधुरः । पुं० भूमिं०सक्तुपु ॥

बंधुरा । स्त्री० पण्ययोषायाम् ॥

बंधुल : । पुं० असतीपुत्रे ॥ बंधून्लाति । आतश्चेतिकः ॥ त्रि० नम्रे ॥ सुन्दरे ॥

बंधूक : । पुं० पीतसालके । सर्जके । प्रियके । विजयसार०इ०भा० ॥ पेयासाल०इ०गौ०भा० ॥ न० पुष्पवृक्षवि० । रक्तके । बंधुजीवके । दोपहरिया०मझनिया० इ० भा० ॥ बाँदुली० इ० गौ० भा० ॥ बंधूक : कफकृद्ग्राहीवातपित्तहरोलघु : ॥ बध्नातिचित्तम् । बंध० । उलूकादयश्चेत्यूक : ॥ खधूपे । बन्धूक०इ०भा० । यथा । बंधूकोबंधुजीवेस्यात्खधूपेस्यान्नपुंसकमितिहट्टचन्द्र : ॥

बन्धूकपुष्प : । पुं० पीतसाले । जीवकतरौ । विजयसार० इ० भा० ॥ बन्धूकस्येवपुष्पाण्यस्य ॥ बीजके ॥

बंधूर : । पुं० विवरे ॥ त्रि० शोभने ॥ नम्रे ॥ बध्नाति । बंध० । खर्जूरादित्वादूर : ॥ उन्नतानते ॥ बंधूरबंधुरौरम्ये नम्रे हंसेतुबंधुरइतिरभस: ॥

बन्ध्य : । त्रि० अफले । अवकेशिनि । निष्फले । ऋतुप्राप्तावपिफलरहिते वृक्षादौ ॥ बंधेसाधु : । तत्रसाधुरितियत् ॥ बंधनीये ॥

बन्ध्या । स्त्री० अप्रजस्त्रियाम् । बांझ इ० भा० ॥ अपत्यशून्यायांगवि । वशायाम् ॥ वृषलीविशेषे ॥ यथा । वन्ध्याचवृषलीज्ञेयावृषलीचमृतप्रजा । अपराव्रृषलीज्ञेयाकुमारीयारजस्वला ॥ वलाख्यगंधद्रव्ये । वान्ध्यालके ॥ बध्नाति । बंध० । यत् । अघ्न्यादित्वाद्यग्वा ॥ योनिरोगविशेषे ॥

बन्ध्याकन्द : । पुं० वन्ध्याकर्कोटक्याम् । बांझखखसा० इ० भा० ॥

वन्ध्याकर्कोटकी । स्त्री० विषकण्टकिन्यामोषधौ । ककोडी०खखसा० इ० भा० ॥ वन्ध्याकर्कोटकीलघ्वीकफनुद्व्रणशोधनी । सर्पसर्पहरीतीक्ष्णाविसर्पविषहारिणी ॥

बभस : । त्रि० भक्षणशीले ॥

बभ्रु : । पुं० वैश्वानरे । अग्नौ ॥ शूलपाणौ । शिवे ॥ गरुडध्वजे विष्णौ ॥ विशाले ॥ नकुले स्थूलपृष्ठोरक्तनेत्रोबभ्रुर्भेद : सनाकुल : ॥ मुनिभेदे ॥ देशभेदे ॥ यादवविशेषे ॥ सितावरशाके ॥ त्रि० पिङ्गले । पिङ्गलवर्णवति ॥ बिभर्ति० भरतिवा । डुभृञ्० भृञ्०वा । कुर्भ्रश्चेति०कुर्द्वित्वञ्च ॥ खलतौ ॥

बभ्रुज : । पुं० ब्राह्मणे ॥

बभ्रुधातु : । पुं० सुवर्णगैरिके ॥

वर : । पुं० जामातरि ॥ वृतौ ॥ देवतादेरभीप्सिते ॥ षिड्गे ॥ न० कुङ्कुमे ॥ त्वचे ॥ बालके ॥ आर्द्रके ॥ ईषदिष्टे ॥ मनागिष्टे वरंक्लीवेकेचिदाहुस्तदव्ययम् ॥ त्रि० । श्रेष्ठे ॥

वरा । स्त्री० फलत्रिके ॥ गुडूच्याम् ॥ मेदायाम् ॥ ब्राह्म्याम् ॥ विडङ्गे ॥ पाठायाम् ॥ हरिद्रायाम् ॥

वरी । स्त्री० शतावर्याम् ॥

वहापक : । पुं० पांशुचामरे ॥

वर्ब्बट : । पुं० राजमाषे ॥

वर्वटी । स्त्री० पण्ययोषायाम् ॥ व्रीहिभेदे ॥

वर्वणा । स्त्री० वृहन्मक्षिकायाम् । नीलायाम् ॥ पश्यान्तस्यादिवर्वणाम् ॥

वर्ह : । पुं० न० मयूरपिच्छे ॥ दले । पत्रे ॥ परिवारे ॥ वर्हति । वृहवृद्धौ ॥ पचाद्यच् ॥ वर्हतेवा । वर्ह-हिंसायाम् । घञ् ॥

बल : । पुं० हलायुधे । बलदेवे ॥ दैत्यप्रभेदे ॥ मयपुत्रे ॥ अस्यस्थान मतलं । यथा । प्रथमेविवरेविप्रस्तलाख्ये मनोरमे । मयपुत्रोबलोनामवर्ततेऽखर्वगर्वकृत् । षण्णवत्योये नसृष्टामायासर्वार्थसाधिकाः । मायाविनोयाश्चसद्योधारयंतिचकाश्चनेति० दे० भा० ॥ वायसे ॥ वरुण



द्रुमे ॥ न० गंधरसे ॥ रूपे ॥ शौर्ये । स्थामनि । शुष्मे । शक्तौ । पराक्रमे ॥ बाहुबलमनोबलोपायबलबंधुबलेषुचतुर्षु ॥ सामादिषु ॥ स्थौल्ये ॥ सैन्ये ॥ ततषड्विधम् । मौलंभृत्यंसुहृत्श्रेणीद्विषदाटविकंबलमितिभेदात् । तत्र० मित्राटवीबलंचैवमौलंभृत्यबलंतथा । सर्वमेतद्बलंग्राह्यं वर्ज्यं यित्वाद्विषद्बलम् ॥ इतिनीति : ॥ देहसामर्थ्ये ॥ परपरिभव निमित्त शरीरगतसामर्थ्य विशेषे ॥ अवश्यमिदंसाधयिष्यामीत्याग्रहे । स्वोचितेकार्येश्रमाभावप्रयोजकेदार्ढ्ये । कर्मेन्द्रियपाटवे ॥ स्वधर्मानुष्ठानायदेहेन्द्रियादिधारणसामर्थ्ये ॥ रसादिशुक्रपर्यन्तपुष्टधातुनिमित्तकम् । चेष्टासुपाटवंयत्तुबलंतदभिधीयते ॥ शुक्रे ॥ त्रि० बलयुक्ते ॥ बलमस्यास्ति । अर्श आद्यच् । बलते० बलतिवा० बल्यतेवा० अनेन । बलसम्वरणे० बलप्राणनेवा । पचाद्यच्० कर्मणिघञ्वा । संज्ञापूर्वकत्वाद्वृद्ध्यभाव : । पुंसीति०घोवा ॥ बलतेऽनेन । खनोघचेतिघोवा ॥ पारिभाविकबलानियथा । विद्याभिजनमित्राणिवृद्धिसत्त्वधनानिच । तप : सहायवीर्याणिदैवञ्चदशमंबलम् ॥ अपिच । अबलस्यबलंरा

आबालस्यरुदितंबलम् । बलंमूर्खस्य मौनन्तुतस्करस्याऽनृतंबलम् । अ-पिच० व्र० । क्षत्रियाणांबलंयुद्धंव्यापारस्तु बलंविशाम् । भिक्षाबलंभिक्षुकाणांशूद्राणांविप्रसेवनम् ॥ हरौ भक्तिर्हरेर्दास्यं वैष्णवानांबलंहरिः । हिंसाबलंखलानाञ्च तपस्याचतपस्विनाम् ॥ बलंवेशश्चवेश्यानांयोषितांयौवनंबलम् । बलंप्रतापोभूपानां बालानांरुदितंबलम् ॥ सतांसत्यंबलंमिथ्याबलमेवासतांसदा । अनुगानामनुगमः स्वल्पस्वानाञ्चसञ्चयः ॥ विद्याबलंपण्डितानांवाणिज्यंवणिजांबलम् । शश्वत्सुकर्मशीलानांगाम्भीर्यंसाहसंबलम् ॥ धनंबलञ्चधनिनांशुचीनाञ्चविशेषतः । बलंविवेकः शान्तानांगुणिनांबलमेकता ॥ गुणोबलञ्चगुणिनांचौराणांचौर्यमेवच । विप्रवाक्यञ्चकापथ्यमधर्मणिनांबलम् ॥ हिंसाचहिंस्रजन्तूनांसतीनांपतिसेवनम् । वर-शापौसुराणाञ्चशिष्याणांगुरुसेवनम् ॥ बलंधर्मोगृहस्थानांभृत्यानांराजसेवनम् । बलंस्तवःस्तावकानांब्रह्मचब्रह्मचारिणाम् ॥ यतीनाञ्चसदाचारोन्यासः सन्यासिनांबलम् । पापंबलंपातकिनांसुभक्तानांहरिर्बलम् ॥ पुण्यंबलंपुण्यवतांप्रजानांनृपतिर्बलम् । फलंबलञ्चवृक्षाणांजलधीनांजलंबलम् ॥ जलबलञ्चसस्यानांमत्स्यानांचजलंबलम् । शान्तिर्बलञ्चभूपानांविप्राणाञ्चविशेषतः ॥ इ० ॥

बलक्ष : । पुं० शुक्लवर्णे ॥ त्रि० तद्वति ॥

बलक्षगु : । पुं० चन्द्रे ॥

बलजम् । न० गोपुरे ॥ क्षेत्रे ॥ सस्ये । सङ्गरे ॥ धान्यराशौ ॥ बलेजातम् । जनी० । ड : ॥ त्रि० भद्राकृतौ । सदाकारे ॥ बलजन्ये ॥

बलजा : । स्त्री० वक्षुदर्शनायाम् । वरयोषायाम् ॥ यूथ्याम् ॥ पृथिव्याम् ॥

बलद : । पुं० जीवके ॥ पौष्टिककर्माङ्गहोमाग्नौ ॥ त्रि० बलदातरि ॥

बलदा । स्त्री० अश्वगन्धायाम् ॥

बलदीनता । स्त्री० ग्लानौ ॥

बलदेव : । पुं० बलभद्रे । प्रलम्बघ्ने । अच्युताग्रजे ॥ अस्यध्यानंयथा । बलदेवंद्विबाहुञ्चशङ्खकुन्देन्दुसन्निभम् । वामेहलायुधधरंदक्षिणेमुसलंकरे ॥ हालालोलंनीलवस्त्रंहेलावन्तंस्मरेत्परमिति ॥ वाते । वायौ ॥ बलेनदीव्यति । दिवु० । अच् ॥

बलदेवा । स्त्री० त्रायमाणायामोषधौ ॥

बलप्रसू : । स्त्री० रोहिण्याम् । बलराममातरि ॥ बलस्यप्रसूः ॥

बलभद्र : । पुं० सौरिणि । हलायुधे ॥ बलशालिनि ॥ लोध्रे ॥ गवये ॥ बलंभद्रंश्रेष्ठमस्य । बलेनभद्रइतिवा ।

॥ भगणे ॥

बलभद्रा । स्त्री० त्रायमाणौषधौ ॥ कुमार्याम् ॥ बलेनभद्रा ॥

बलभद्रिका । स्त्री० त्रायमाणौषधौ ॥ बलेनभद्रा । स्वार्थेकन् ॥ माषरोटिकायाम् ॥ चमसीरचितारोटी कथ्यतेबलभद्रिका । कृष्णोष्णावातला बल्यादीप्ताग्नीनांप्रपूजिता ॥

बलभित् । पुं० इन्द्रे ॥ बलंदैत्यविशेषंभिनत्ति । भिदिर्० । क्विप् ॥

बलभी । स्त्री० वडभ्याम् ॥ कूटागारे॥

बलराम : । पुं० बलदेवे ॥

बलल : । पुं० बलदेवे ॥ बलंलाति । ला० । क : ॥

बलवत् । अ० अतिशये । निर्भरे ॥ बलमस्यास्ति । मतुप् ॥

बलवान् । त्रि० मांसले । अंसले । बलयुक्ते बलमस्यास्ति । मतुप् ॥ प्रबले ।

बलवर्द्धिनी । स्त्री० जीवकौषधौ ॥

बलवल्लभा । स्त्री० वारुण्याम् ॥

बलविन्यास : । पुं० व्यूहे । बलस्य सेनायायुद्धार्थं देशविशेषे०विन्यासो टुर्लेङ्ध्यत्वनिमित्तं विभज्यस्थापनम् ॥

बलसूदन : । पुं० इन्द्रे ॥ बलनामानमसुरंसूदितवान्० सूदयति । सूद् चरणे । नन्द्यादित्वाल्ल्यु : ॥

बलस्थिति : । स्त्री० शिविरे ॥ बलस्य स्थिति : । बलस्यस्थितिर्यस्मिन्वा ॥

बलहा । पुं० श्लेष्मणि । कफे ॥

बला । स्त्री० वाट्यालके । बाडियाला० इ० गौ० भा० ॥ बलाचतुष्टयस्यनामादियथा । बलावाट्यालिकावाट्याश्चैववाट्यालकोपिच । महाबलापीतपुष्पासहदेवीचसास्मृता ॥ ततोन्यातिबलाऋष्यप्रोक्ताकङ्कतिकासहा । गाङ्गेरुकीनागबलाझषा ह्रस्वगवेधुका ॥ बलाचतुष्टयंशीतं-मधुरंबलकान्तिकृत् । स्निग्धं ग्राहि समीरास्रपित्तास्रक्षतनाशनम् ॥ बलामूलत्वचश्चूर्णं पीतंसक्षीरशर्करम् । मूत्रातिसारंहरतिदृष्टमेतन्नसंशय : ॥ हरेन्महाबलाकृच्छ्रं०भवेद्वातानुलोमिनी । हन्यादतिबलामेहंपयसासितयासह ॥ अपिच । वाट्यालकोवाट्यपुष्पोसंमांसाविललावला । श्वेतवाडियाला० इ० गौ० भा० ऋष्यप्रोक्तात्वतिबला पीतपुष्पीमहाबला । पीतवाडियाला० इ०गौ०। भा० ॥ स्निग्धायुष्याबलावृष्याग्राहिणीवातपित्तजित् ॥ बलति । बलसंवरणे । पचाद्यच् । बलमस्त्यस्या : अर्शआद्यच् ॥ रामायविश्वामित्रेणदत्तायांविद्यायाम् ॥ यथा । क्षुत्पिपासेनतेरामभविष्येतेनरोत्तम । बलामतिबलाञ्चैवपठत : पथिराघवेत्यार्षरामायणम् ॥ शारीरं

बलाधिक्यस्वबलाया : फलम् ।
अतिवलायास्तुफलंभन : गङ्कल्प
मात्रेणालौकिकार्थसाधनमित्यन
. योविशेष : ।।
बलाका स्त्री० बकजातिविशेषे ।
विसकण्ठिकायाम् । वगुली० इ०
भा० । जातिवाच्यायांस्त्रियामेव
सर्वदानियत: ।। बलते । बलसंव
रणेसंचरणेच । बलाकादयश्चेतिसा
धु : ।। बलेनअकतिवा । अकक्
टिलायांगतौ । अच् । बला
का:कम्ङ्क्षीस्याद्बलाकाशब्दकीपु
च । सारसहंसबलाकाचक्राङ्गी चा
द्योजलेम्नवनात् । प्लवसंज्ञा :
कथितास्तेतन्मांसंगुरूष्णंचवलदा
यि ।। अन्येबकबलाकाद्यागुरव :
प्राणिभक्षणात् ।।
बलाकी । त्रि० बलाकावति ।। बलाका
अस्तिअस्यअस्मिन्वा । व्री०इनि: ।।
बलांचिता । स्त्री० रामवीणायाम् ।।
बलाट : । पुं० मुद्गे ।।
बलात् । अ० हठादर्थे । यथा । बला
त्मन्द्वपयेद्यस्तुपरभार्यांनर : क्व
चित् । वधदण्डोभवेत्तस्यनापराधो
भवेत्स्त्रिया : ।।
बलात्कार : । पुं० प्रसभे । हठे ।।
बलादितिनिपातोहठे ० इ० स्वामी
।। बलात्करणम् । भावेघञ् ।।
बद्ध्वाखण्डहमानीयताडनाद्यैरूप
क्रमे : । ऋणिकोदाप्यतेयत्रबला
त्कार : प्रकीर्तित : ।।
बलात्मिका । स्त्री० हस्तिशुण्डाम् ।।
बलाद्या । स्त्री० बलायाम् ।।
बलाध्यक्ष : । पुं० सेनापतिदशकस्यै
कस्मिन्सेनानायके ।।
बलानुज : । पुं० श्रीकृष्णे ।।
बलामोटा । स्त्री० नागदमन्याम् । वि
षापहायाम् ।। बलामोटाकटुस्ति
क्तालघुपित्तकफापहा । मूत्रकृच्छ्
व्रणान्रक्षोनाशयेज्जालगर्दभान् ।।
सर्वग्रहप्रशमनीनि : शेषविषनाशि
नी । जयंसर्वत्रकुरुतेधनदासुमति
प्रदा ।
बलाय : । पुं० वरुणद्रुमे ।।
बलाराति : । पुं० शचीपतौ । इन्द्रे
।। बलस्यासुरस्यअराति : शत्रु : ।।
बलालक : । पुं० पानीयामलके ।।
बलाश : । पुं० ) श्लेष्मणि ।।
बलाशक: । पुं० ) इतिहेमचन्द्र : ।।
बलास : । पुं० कफे ।।
बलाहक : । पुं० मेघे । अम्बुदे ।।
वारिवाहकोबलाहक : । पृषोदरा
दित्वात्पूर्वपदस्याव : उत्तरपदादे
श्चलत्वम् ।। बलाकाभिर्हीयतेगम्य
ते । ओहाङ्० गतौ० पृ० ।। बले
नहीयतेवा । क्वुन् ।। गिरौ ।। दैत्य
विशेषे ।। नागविशेषे ।। मुस्तके ।।
श्रीकृष्णस्यन्दनाश्वे ।। रमागर्भोद्भव

कल्किदेवपुत्रे ॥
बलाह्वकन्द : । पुं० गुलञ्चकन्दे ॥
बलि: पुं० दैत्यप्रभेदे । विरोचनात्मजे ॥ करे । राजग्राह्यभागे ॥ चामरदण्डे ॥ उपहारे । उपायने । भेट० इ० भा० ॥ पूजासामग्र्याम् ॥ नियोज्योपजीव्ये ॥ पञ्चमहायज्ञान्तर्गतभूतयज्ञे ॥ तिर्यग्भिक्षुकादिदाने ॥ ययातिवंशोद्भवसुतपोराजपुत्रे ॥ वलिवैश्वनामकपंचयज्ञान्तर्गतयज्ञविशेषे ॥ बलते० बल्यते वा । बलप्राणने० बलसंवरणे संचरणे च । सर्वधातुभ्यइन् ॥ वलनम् । बलदाने । वलते वा । खनिकषीति० इर्वा ॥ यद्वा । वर्णि : सौत्र : । अस्य० वर्णो वलिश्चाहिरण्ये० इतिवलिरादेश : ॥
वलि : । स्त्री० जरयाश्लथचर्मणि ॥ चर्म्मतरङ्गे ॥ गृहदारुप्रभेदे ॥ जठरावयवे ॥ यथा । एकवलि : शस्त्रमृत्यु : स्त्रीभोगीद्विवलि: स्मृत : । त्रिभिराचार्यइत्याहुश्चतुर्भि:स्याद्वहुप्रज : ॥ अवलिस्तुनृप: प्रोक्तोयज्वादानैक तत्पर : । विषमावलयोयेषुते चागम्याभिगामिन: ॥ ऋज्व्यस्तुवलयोयेषुते नरा: सुखभागिन : ॥ इति ॥ गम्धर्क ॥ गुदाङ्कुर ॥

वलिकम् । न० पटलप्रान्ते ॥
वलिकर : । त्रि० वलिकर्त्तरि ॥ वलिंकरोति । दिवाविभेतिट : ॥
वलिका । स्त्री० अतिवलायाम् ॥
वलिक्रिया । स्त्री० इष्टदेवतापूजाविधौ ॥
वलित : । त्रि० वेष्टिते ॥
वलिदानम् । न० देवोद्देशेनयथाविधिपूजोपहारत्यागे ॥ देवतोद्देशेन सङ्कल्पपूर्व्वकच्छागादिपशुघातने ॥ वलिदानेनसततंजयेच्छत्रून्नृपान्नृप ॥
वलिध्वंसी । पुं० विष्णौ ॥ वलिमसुरविशेषंध्वंसितुंशीलमस्य । ताच्छील्येणिनि : ॥ बलिनापूजादिना०अविद्यांध्वंसितुंशीलमस्येतिवा ॥
बली । पुं० वलदेवे ॥ माषे ॥ वृषभे ॥ महिषे ॥ उष्ट्रे ॥ शूकरे ॥ कफे ॥ कंदवृत्ते ॥ त्रि०बलवति । उपचिते । मांसले ॥ वलमस्यास्ति । वलादिभ्योमतुवन्यतरस्यामितिपक्षे-इनि : ॥
वलिन : । त्रि० बलिभे । श्लथचर्म्मवति ॥ वलिश्चर्मसङ्कोचोस्यास्ति । पामादित्वान्न : ॥
वलिनन्दन : । पुं० वाणासुरे ॥
वलिनी । स्त्री० वलायाम् । वाल्यालके ॥ वलमस्यस्याम् । बलादिभ्योम

तुवन्यतरस्यामितिपचेदूनि : ॥
बलिपुष्ट : । पुं० काके ॥ बलिनापुष्ट : ॥
बलिपोदकी । स्त्री० उपोदक्याम् ॥
बलिप्रिय : । पुं० लोध्रवृक्ते ॥
बलिभ : । त्रि० बलिने । जरयाश्लथचर्मणि ॥ बलिश्चर्मसङ्कोचोस्यास्ति । तुन्दिबलिवटेर्भ : ॥
बलिभुक् । पुं० वायसे ॥ बलिंभुङ्क्ते । भुजपालनाभ्यवहारयो : । क्विप् ॥
बलिमन्दिरम् । न० पाताले ॥ बलेर्मंदिरमत्र ॥
बलिमुख : पुं० बलिमुखे ॥
बलिशम् । न० बडिशे । मत्स्यवेधने ॥ बलिनोमत्स्यान्० श्यति । शोतनूकरणे । आतोनुपेतिक : ॥
बलिष्ठ: । त्रि० बलवत्तमे ॥ अतिशयेनबलवान् । बलशब्दान्मतुबन्तादिष्ठन्प्रत्यय : । विन्मतोर्लुगितिमतुपोलुक् ॥ प्रायश्चित्तंविनापूतात्त्वमेवशुद्धमानसा । अकामायाबलिष्ठेननस्त्रीजारेणदुष्यति ॥
बलिष्णु : । त्रि० अपमानिते ॥
बलिसद्म । न० रसातले । पाताले । बले : सद्म ॥
बलिहा । पुं० विष्णौ ॥
बली । स्त्री० वली । त्वगूर्मौ । चर्मतरङ्गे ॥
बलीकम् । न० नीध्रे । पटलप्रान्ते । छाँचौ० इ०गौ०भा० । परावलौ०इ०भा० ॥ बलति । आवृणोतिभित्त्यादि । बलसंवरणे । अलीकादयश्चेतिकीकन् ॥
बलीमुख : । पुं. वानरे ॥ वलीयुक्तंमुखमस्य ॥
बलीयान् । त्रि० अतिशयेनबलयुक्ते ॥
बलीवर्द : । पुं० वृषे । बैल०बरध०बर्धा०इ०भा ॥ वरणम् । वरईप्सायाम् । सम्पदादित्वात्क्विप् । ईश्वरश्च०ईवरी । तौददाति आतइतिक : । अतिशयितंबलमस्य । अतइनि: । बलीचासौ०ईवर्दश्च ॥ तीर्थयात्रायांतदारूढस्यदोषोयथामात्स्ये । बलीवर्दसमारूढ: शृणुतस्यापियत्फलम् । नरकेवसतेघोरेगवांक्रोधेहिदारुणे । सलिलञ्चनगृह्णन्तिपितरस्तस्यदेहिनइति ॥
बलु : । स्त्री० हस्तिदन्तालिकायाम् ॥
बलूक : । पुं० पद्ममूले । पक्षिविशेषे ॥ बलते । बल० । बलेरूक : ॥
बलूल: त्रि० बलवति ॥ बलंनसहते । बलाटूल : ॥
बल्मिक : । पुं० न०बल्मीके ॥
बल्मीकि : । पुं० न०बल्मीके ॥
बल्मीक : । पुं० न०वामलूरे । नाकौ । पिपीलिकादिकीटविशेषकृतेमृत्स्तूपे । बावो०इ०भा० ॥ न० रोग

विशेषे । अस्यलक्षणं । यथा । ग्रीवांसकक्षाकरपाददेशेसन्धौगलेवा-चिभिर्विद्धीयै : । ग्रन्थि : सवल्मीकवदुक्रियाणांजात : क्रमेणवगतप्रवृद्धि : ॥ मुखैरनेकै : स्रुतितोदवद्भिर्विसर्पवत्सर्पतिचोन्नताग्रै : । वल्मीकमाहुर्भिषजोविकारंनिष्प्रत्यनीकंचिरजंविशेषात् ॥ वाल्मीनिमुनौ ॥ वलन्तेप्राणिनोऽत्र । अलीकादयश्चे ति कीकन्नन्तोनिपातित : ॥

वल्मीकशीर्षम् । न० स्रोतोऽञ्जने ॥

वल्मीकि : । पुं० वल्मीकि ॥

वल्मीकूटम् । न० वल्मीकि ॥

वल्य : । पुं० वृक्षभित्तौ । अमणे ॥ न० प्रधानधातौ । रेतसि ॥ त्रि० वलकरे ॥

वल्या । स्त्री० अतिवलायाम् ॥ अश्वगन्धायाम् ॥ शिमृडीस्रुपे ॥ प्रसारिण्याम् ॥

वल्ल : । पुं० गुञ्जात्रयपरिमाणे । द्विगुञ्जपरिमाणे ॥ सार्द्धगुञ्जायाम् ॥ वल्लते । वल्लसंवरणे सञ्चरणे च । प० अच् ॥

वल्लक : । पुं० निष्पावे । राजशिम्ब्याम् ॥

वल्लकी । स्त्री० वीणायाम् । विपञ्च्याम् ॥ वल्लते । वल्ल० । क्वुन् । गौरादित्वान्ङीष् । सल्लकीवृक्षे ॥

वल्लभ : । त्रि० दयिते । प्रिये ॥ अध्यक्षे ॥ न० कुलीनाश्वे । सल्लक्षणतुरङ्गमे ॥ अध्यक्षोऽत्रगवाध्यक्ष इति-स्वामी ॥ वल्लते०वल्ल्यतेवा । वल्ल० । रासिवल्लिभ्यांचेत्यभच् ॥

वल्लभपाल : | पुं० | उत्तमाश्वपाले ॥ अश्वरक्षके ॥
वल्लभपालक : | | 

वल्लभा । स्त्री० प्रियायाम् । प्रेयस्याम् ॥

वल्लरम् । न० वल्लरे ॥

वल्लरि : । स्त्री० मञ्जर्याम् ॥

वष्काय : । पुं० तरुणवत्से । वष्का० इ० भा० ॥ वष्कते । वष्कगतौ । वा० अयन् ॥

वष्कयणी । स्त्री० वष्कयिण्याम् ॥

वष्कयिणी । स्त्री० तरुणवत्सायाङ्गवि० वाचस्पति इ० भा० ॥ वष्कयस्तरुणवत्स : ० सास्त्यस्या : । अतइनिठनावितीनि : । अट्कुप्वाङिति णत्वम् । ङीप् ॥

वहि : । अ० वाह्ये ॥ वहति । वह० इस् ॥ ववयोरभेद : ॥

वहु । त्रि० त्र्यादिसङ्ख्यासु ॥ विपुले । भूयसि ॥ वंहते । वहिवृधी ॥ लङ्घिवंह्योर्नलोपश्च त्यु : ॥ स्त्रियां० वह्वादित्वात्०पाक्षिकोङीषभाव : । ङीष्पक्षे० वह्वी ॥

वहुक : । पुं० कर्कटे ॥ अर्के ॥ दात्यू

हे । अलखातके ॥ त्रि० बहुभिःक्रीते ॥ सङ्ख्यायाअतिशदन्तायाः कन् ।

बहुकण्टकः । पुं० क्षुद्रगोक्षुरे । यवासे । हिन्ताले ।

बहुकण्टका । स्त्री० कण्टकार्याम् ।

बहुकण्टा । स्त्री० कण्टकार्याम् ॥

बहुकन्दः । पुं० शूरणे ॥

बहुकन्दा । स्त्री० कर्कट्याम् ॥

बहुकरः । पुं० वक्रग्रीवे । उष्ट्रे ॥ त्रि० खलपू ॥ स्त्रियांबहुकरा ॥ बहुकार्यकर्तरि । बहुकरोतिभुवंमार्ष्टि । किंयत्तद्बहुषुकृञोऽज्विधानमित्यच् ।

बहुकरी । स्त्री० बहुकरभार्यायाम् ॥ पुंयोगलक्षणोङीष् । सम्मार्जन्याम् ॥

बहुकर्णिका । स्त्री० आखुकर्ण्याम् ।

बहुकूर्चः । पुं० मधुनालिकेरके ॥

बहुक्षमः । पुं० बुद्धे ॥ बहुक्षमते । क्षमूष० । इगुपधज्ञाप्रीकिरःकः । ईचिक्षमिभ्यामितिणः ।

बहुगन्धम् । न० त्वचे । पुं०कुन्दुरुके॥

बहुगन्धदा । स्त्री० कस्तूर्याम् ॥

बहुगन्धा । स्त्री० चम्पककलिकायाम् । यूथिकायाम् ॥ कृष्णजीरके ॥

बहुगर्ह्यवाक् । त्रि० कुत्सितबहुवादिनि । जल्पाके । बहुगर्ह्यावागस्य ।

बहुग्रन्थिः । पुं० झाबुके ॥ बहवोग्रन्थयोयस्मिन् ।

बहुच् । पुं० प्रत्ययविशेषे । सचप्रकृतेः पूर्वंभवति । प्रकृतेर्लिङ्गंचभजते । स्यादीषदसमाप्तौतुबहुच्प्रकृतिलिङ्गकः ॥

बहुच्छिन्ना । स्त्री० कन्दगुडूच्याम् ॥

बहुतन्त्रीः । त्रि० बहुतन्त्रीविशिष्टे ॥ यथा । बहुतन्त्रीःकायः । बहुतन्त्रीर्ग्रीवा । बहुतन्त्रिशरीरम् । बह्व्यस्तन्त्र्योयस्मिन् । नाडीतन्त्र्योःस्वाङ्गे० इ० नकप् ॥

बहुतन्त्रीकः । पुं० बहुतन्त्रविशिष्टे । यथा । बहुतन्त्रीकः पटः । बहुतन्त्रीकावीणा । बहुतन्त्रीकंवासः । बह्व्यस्तन्त्र्योयस्मिन्नकप् ॥

बहुतरकणिशः । पुं० रागीधान्ये ॥

बहुता । स्त्री० बहुत्वे ॥

बहुतिक्ता । स्त्री० काकमाच्याम् ॥

बहुतिथः । त्रि० बहुसङ्ख्याके । बहूनांपूरणः । तस्यपूरणेडट् । बहुपूगगणसङ्घस्यतिथुक् ॥

बहुतृणम् । न० तृणकल्पे ॥ ईषदसमाप्तं तृणम् । विभाषासुपोबहुच्पुरस्तात् ।

बहुत्वम् । न० बहुतायाम् । बहोर्भावः । तस्यभावस्त्वतलौ ।

बहुत्वक्कः ।<br>बहुत्वक् । पुं० भूर्जद्रुमे ।

बहुदुग्धः । पुं० गोधूमे ।

बहुदुग्धा । स्त्री० वन्ध्यायाम् । बहुक्षीरायांगवि । बहुदुग्धंयस्याम् ॥

बहुदुग्धिका । स्त्री० स्नुहीवृक्षे ॥

बहुधा । अ० अनेकप्रकारे ॥ बहव : प्रकारा:। सङ्ख्यायाविधार्थेधावा ॥ बहा । बहुवारान्०इति० क्रियाभ्या वृत्तिगणने०विभाषावहोर्धाऽविप्रकृष्टकालइतिधा । बहुधावहुकृत्वोवा दिवसस्यभुङ्क्ते ॥

बहुधान्य : । पुं० वत्सरविशेषे ॥ सुभिक्षंक्षेममारोग्यंप्रशान्ता : पार्थिवा : प्रिये । तस्करोपहृतंवित्तंबहुधान्येवरानने ॥ १२ ॥ अतिशय धान्यविशिष्टे ॥

बहुधारम् । न० वज्रे ॥

बहुनाडि : । त्रि० काये ॥ नाडीतन्त्र्यो : स्वाङ्गइतिनकप् ॥

बहुनाडीक : । त्रि० स्तम्भे ॥ दिवसे ॥ बह्वोनाड्योयस्मिन् । कप ॥

बहुनाद : । पुं० शङ्खे ॥

बहुनामा । पुं० असङ्ख्याततनामनि परमेश्वरे ॥ बहूनिनामानियस्य ॥ सर्वाख्येतानिनामानिपरस्यब्रह्मणो हरेरितिपुराणोक्ते : ॥

बहुपट् । त्रि० ईषदूनेपटौ ॥ बहुषु कर्मसुदक्षे ॥

बहुपत्र : पुं० पलाण्डौ न० अभ्रके ॥ त्रि० अनेकपत्रयुक्ते ॥

बहुपत्रा । स्त्री० तरुणीपुष्पे ॥

बहुपत्रिका । स्त्री० भूम्यामलक्याम् ॥ मेथिकायाम ॥ महाशतावर्याम् ॥

बहुपत्री । स्त्री० खिङ्गिन्याम् ॥ गृहकन्यायाम् ॥ तुलस्याम् ॥ जतुकायाम् ॥ वृहत्याम् ॥ गोरक्षदुग्धायाम् ॥

बहुपर्ण : । पुं० सप्तच्छदवृक्षे ॥ त्रि० अनेकपत्रयुक्ते ॥

बहुपर्णिका । स्त्री० आखुकर्ण्याम् ॥

बहुपर्णी । स्त्री० मेथिकायाम् ॥

बहुपात् । पुं० वटवृक्षे ॥ ॥ बहव : पादाअस्य । सङ्ख्यासुपूर्वस्य ॥

बहुपाद : । पुं० वटवृक्षे ।

बहुपुत्र : । त्रि० अनेकसुतविशिष्टे ॥

बहुपुत्रा । स्त्री० भूम्यामलक्याम् ॥

बहुपुत्री । स्त्री० शतमूल्याम् ॥

बहुपुष्प : । पुं० पारिभद्रवृक्षे ॥

बहुपुष्पिका । स्त्री० धातक्याम् ॥
बहुपुष्पी ।

बहुप्रज : । पुं० मुञ्जतृणे ॥ शूकरे ॥ त्रि० अनेकसन्तानयुक्ते ॥

बहुप्रतिज्ञ : । पुं० अनेकपदसङ्कीर्णपूर्वपक्षविशिष्टव्यवहारे ॥ त्रि० अनेकप्रतिज्ञायुक्ते ॥

बहुप्रद : । त्रि० अतिदातरि । वदान्ये । दानशौण्डे । बहुप्रददाति । प्रदाञ्इतिक : ॥

बहुप्रसू : । स्त्री० कुमिल्लायाम् । बहुसन्तानप्रसवकारिण्याम् ॥

बहुफल : । पुं० कदम्बे । नीपे ॥ वि

कङ्कते ॥ तेज : फले ॥

बहुफला । स्त्री० भूम्यामलकाम् ॥ चविकायाम् ॥ माषपर्ण्याम् ॥ काकमाच्याम् ॥ चपुष्याम् ॥

बहुफलिका । स्त्री० भूवटर्याम् ॥

बहुफली । स्त्री० आमलक्याम् ॥ मृगेर्वारौ ॥

बहुफेना । स्त्री० सातलायाम् ॥

बहुबल : । पुं० सिंहे ॥ त्रि० अतिशय बलयुक्ते ॥

बहुमञ्जरी । स्त्री० तुलस्याम् ॥

बहुमत : । त्रि० बहूनांसम्मते॥ नात्यन्तं संस्कृतेनैवनात्यन्तं देशभाषया । कथांगोष्ठीषुकथयँल्लोकेबहुमतोभवेत् ॥

बहुमल : । पुं० सीसके ॥ त्रि० अनेकमलयुक्ते ॥

बहुमार्ग : । पुं० न० चत्वरे ॥ बहूनां मार्ग : समाहारोवा । त्रि० अनेक पथयुक्ते ॥

बहुमूर्ति : । स्त्री० वनकार्पासे ॥ त्रि० नानाकारे ॥

बहुमूर्द्धा । पुं० विष्णौ ॥

बहुमूल : । पुं० इक्कटे ॥ शियौ ॥ स्थूलशरे ॥ त्रि० अनेकमूलयुक्ते ॥

बहुमूलक : । पुं० इक्कटे ॥ न० उशीरे ॥

बहुमूला । स्त्री० शतावर्याम् ॥

बहुमूली । स्त्री० माकन्द्याम् ॥

बहुमूल्य : । त्रि० महाधने । महार्घवस्तुनि ।

बहुयाज्य : । पुं० अनेकयजमाने ॥ बहवोभूयांसोयाज्यायाजनीयायस्य ॥

बहुरश्मिका । स्त्री० मेदायाम् ॥

बहुरसा । स्त्री० महाज्योतिष्मत्याम् ॥

बहुरुहा । स्त्री० कन्दगुडूच्याम् ॥

बहुरूप : । पुं० शिवे ॥ विष्णौ ॥ धूनके । सर्जरसे ॥ सरटे ॥ स्मरे । कामदेवे ॥ ब्रह्मणि ॥ कुन्तले । केशे ॥ बुद्धप्रभेदे ॥ बालयुवादिरूपे देवनरादिरूपेजीवे ॥ बहुरूपइवा भातिमाययाबहुरूपया । रममाणो गुणेष्वस्याममाहमितिलभ्यते ॥ नानाकृतिगम्यत्वात्० बहूनिरूपाण्यस्य ॥ त्रि० नानारूपयुक्ते ॥

बहुरूपक : । पुं० जाहकजन्तौ ॥

बहुरूपा । स्त्री० दुर्गायाम् ॥

बहुरेखा। स्त्री० प्रचुरदीर्घचिह्नायाम्॥ बहुरेखाकृशकायाःस्त्रियादोषोयथा । रेखाभिर्बहुभि : क्लेशंस्वल्पाभिर्धनहीनताम् । रक्ताभि : सुखमाप्नोतिकृष्णाभि:प्रेष्यतांव्रजेत् ॥

बहुरेता: । पुं० ब्रह्मणि ॥

बहुरोमा । पुं० मेषे ॥ त्रि० लोमशे ॥

बहुल : । पुं० अग्नौ ॥ कृष्णपक्षे ॥ न० विहायसि । आकाशे ॥ सित मरिचे ॥ त्रि० प्राज्ये ॥ कृष्णवर्णे ॥ बहूनर्थान्लाति । ला० । आतो

नुपेतिक्त : ॥ बहूनिवीजानिसन्ति वा ॥

बहुलगन्धा । पुं॰ एलायाम् ॥

बहुलच्छद : । पुं॰ रक्तशिग्रौ ॥

बहुलवणम् । न॰ औषरके ॥

बहुलवल्कल : । पुं॰ भूर्जे ॥ चारे पियालि ॥

बहुला । स्त्री॰ नीलिकायाम् ॥ एलायाम् ॥ गवि । धेनौ ॥ देवीविशेषे ॥ टाप् ॥

बहुला : । स्त्री॰ भूम्नि॰कृत्तिकासु ॥

बहुलिमा । पुं॰ । बहुलत्वे ॥ बहुलस्यभाव : । इमनिच् ॥

बहुलीकृतम् त्रि॰ अपनीततुच्छधान्यधान्यादौ । पूते ॥ अबहुलंबहुलमकारि । अभूततद्भावेच्वि : । च्च्वौ ॥

बहुवचनम् । न॰ येनबहवोर्थाउच्यन्तेतस्मिन् ॥ बहूनामर्थानांवचनम् । वचे : करणेल्युट् । कर्मणिषष्ठ्यासमास : ॥

बहुवल्क : । पुं॰ प्रियाले ॥

बहुवल्ली । स्त्री॰ डोडिक्षुपे ॥

बहुवार : । पुं॰ उद्दाले । श्लेष्मे । श्लेष्मातके । लसोडा॰ इ॰ भा॰ ॥ बहुवारोविषस्फोटव्रणवीसर्पकुष्ठनुत् । मधुरस्तुवरस्तिक्त: केश्यश्चकफपित्तहृत् ॥ फलमामन्तुविष्टम्भिरूक्षंपित्तकफास्रजित् । तत्पक्वं मधुरंस्निग्धंश्लेष्मलंशीतलंगुरु ॥

बहुवारक : । पुं॰ श्लेष्मातके । बहुवारे ॥ बहून्वारयति । वृञ्॰ । णिच् । अण् : । अन्शिल्पिसंज्ञयोरपूर्वस्यापि ॥

बहुविध : । त्रि॰ विविधे । नानारूपे । पृथग्विधे ॥ बह्वोविधायस्य ॥

बहुविस्तीर्णा । स्त्री॰ कुञ्चितायाम् ॥

बहुबीजम् । न॰ गण्डगात्रे । आढ्ये ॥

बहुवीर्य : । पुं॰ बिभीतके । तण्डुलीयशाके । शाल्मलिवृक्षे ॥ मरुवे ॥

बहुवीर्या । स्त्री॰ भूम्यामलक्याम् ॥

बहुव्रीहि : । पुं॰ प्रायोन्यपदार्थप्रधानेसमासविशेषे ॥ सचसप्तधा । द्विपद: । बहुपद: संख्योत्तर:॰संख्योभयपद:॰दिगन्तरालक्षण: व्यतिहारलक्षण : सहपूर्वपदश्चेतिभेदात् । त्रि॰ प्रचुरधान्ययुक्ते ॥

बहुशत्रु : । पुं॰ चटके ॥

बहुशल्य : । पुं॰ रक्तखदिरे ॥ त्रि॰ अनेकशल्ययुक्ते ॥

बहुश : । अ॰ भूरिशब्दार्थे ॥ बहूनि । बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥

बहुशाख : । त्रि॰ अनेकभेदे ॥

बहुशाल : । पुं॰ स्नुह्याम् ॥

बहुशिखा । स्त्री॰ जलपिप्पल्याम् ॥

बहुश्रवा । स्त्री॰ शल्लकीतरौ ॥

बहुसन्तति : । पुं॰ त्वक्सारप्रभेदे ।

वेडुर्यांसः इ० गौ० भा० ॥ त्रि० अनेकसन्तानवति ॥

बहुसम्पुटः । पुं० विष्णुकन्दे ॥

बहुसारः । पुं० खदिरे ।

बहुसुता । स्त्री० शतमूल्याम् ॥

बहुसूः । स्त्री० शूकर्याम् ॥ बहुप्रसवायाम् ॥

बहुसूतिः स्त्री० परेष्टुकायाम् । बहु पत्यायांगवि ॥ बह्वीसूतिर्यस्याः ॥ बहुसन्तानप्रसवायाम् ॥

बहुस्रवा । स्त्री० शल्लकीवृक्षे ॥ नाना चरणशीलायाम् ॥

बहुस्वनः । पुं० पेचके ॥ त्रि० अनेक शब्दयुक्ते ॥

बह्वपत्यः । पुं० शूकरे ॥ मूषके ॥ त्रि० बहुसन्तानयुक्ते ॥

बह्वाशी । त्रि० बहुभोजनशीले ॥ बह्वा शाविशिष्टे ॥

बह्वी । स्त्री० बह्वर्थे । बह्वादित्वान् ङीष् ॥

बह्वृक् । स्त्री० ऋग्वेदे ॥ न० सूक्त विशेषे ॥

बह्वृचः । पुं० ऋग्वेदिनिब्राह्मणे ॥ बह्वाऋचोऽध्येतव्यायेन । ऋक् पूरित्यः ॥

बह्वृची । स्त्री० अध्वर्य्याम् । अध्व र्युशाखाध्येत्र्याम् ॥ बह्वाऋचो- ध्येतव्यायया सतितिविग्रहः । अनृच बह्वृचावध्येतर्य्येवेतिवचनात् ० ऋक्पूरित्यप्रत्ययः समासान्तः ।

यद्यपि० स्त्रीणांस्वाध्यायाध्ययनं प्रतिषिद्धम् ० तथापिपुराकल्पे ष्वेतदासीत् । यथा । पुराकल्पे षु नारीणांमौञ्जीबन्धनमिष्यते । अध्यापनञ्च वेदानां सावित्रीवच नंतथेतियमवचनात् ॥ गोत्रञ्च चरणैः सहेतिजातित्वान् ङीष् ॥

वा । स्त्री० गतौ ॥ गन्धने ॥ तन्तुसं ताने ॥

वाढम् । न० दृढे ॥ प्रतिज्ञायाम् ॥ भृशे । अतिशये ॥ वाहृतं । वाहृ प्रयत्ने । क्षोभादिः । गत्यर्थेति क्तप्रत्यये० क्षुब्धस्वान्तेतिनिपातित म् । त्रि० अतिशायिनि ॥ क्रिया विशेषणेऽस्यक्लीवत्वम् । द्रव्यविशे षणत्वे तद्वाच्यलिङ्गत्वम् ॥

वाणः । पुं० पश्चाद्यवर्गे ।

वाणिः । स्त्री० वस्त्रादीनांवपनक्रिया याम् । व्यूतौ ॥

वाणिजः । पुं० वणिजि ॥ वाडवाऽ ग्नौ ॥ पणते । पण० । पणरित्वा देशव । स्वार्थेप्रज्ञाद्यण् ।

वाणिजकः । पुं० वणिजि । वाडवा ग्नौ । धूर्त्ते ॥

वाणिज्यम् । न० सत्यानृताख्यवैश्य वृत्तौ । वणिज्यायाम् । क्रयविक्रया दिलक्षणे वणिजकर्म्मणि । वणि जांकर्म्मभावोवा । ब्राह्मणादित्वा

तष्यञ् ॥
बाणिनी । स्त्री॰ नर्त्तक्याम् ॥ छेका याम् । मत्तयोषायाम् ॥ विदग्ध वनितायाम् । अवश्यं वणति । वणशब्दे । आवश्यकेति॰ णश्चादि त्वाद्दाणिनि : । बवयोरैक्यं ॥
बाणी । स्त्री॰ वाण्याम् ॥
बाध : । पुं॰ प्रतिवन्धके । व्याघाते ॥ अन्वयानुपपत्तौ ॥ अतिदिष्टपदार्थ निवृत्तौ ॥ ज्ञानान्तरेणविषयासत्त्व प्रतीतौ ॥ न्यायमते साध्याभाव वत्पक्षे ॥ य॰ । हृदोबह्निमा न् ॥
बाधक : । पुं॰ प्रतिबंधके ॥ आधिक्यं बाधकत्वे हेतु : । बाधते । बाधृ॰ । ण्वुल् ॥ स्त्रीणांरोगविशेषे ॥ यथा । रक्तमाद्रीतथाषष्ठीचाङ्कुरो जलकुमारक : । चतुर्विधोबाधक: स्यात् स्त्रीणांमुनिविभाषित : ॥ तेषांस्वभावंवक्ष्यामियथाशास्त्रं वि धानत : । एतेषांपूजनंकार्यंज नै : सन्तानकाङ्क्षिभि : ॥ नि: सारणंस्थापनञ्चबलिदानंजपस्तथा कर्त्तव्यो गुरुवाक्येन यथाशास्त्रं विचक्षणै : ॥ चतुर्विधोबाधक स्तुजायते ऋतुकालत : ॥ तस्य लक्षणंयथा । व्यथाकट्यांतथानाभेर ध : पार्श्वे स्तनेऽपिच । रक्तमाद्री प्रदोषेणजायतेफलहीनता ॥ मास मेकंद्वयंवापिऋतुयोगोभवेद्यदि । रक्तमाद्रीप्रदोषेणफलहीनातदाभवेत् ॥ इतिरक्तमाद्या: ॥ नेत्रेहस्ते भवेज्ज्वा लायोनौचैवविशेषत : । लालासंयु तरक्तञ्चषष्ठीबाधकयोगत : ॥ मासै केनभवेद्यस्याऋतुस्नानंद्वयंतथा । मलिना रक्तयोनि:स्यात् षष्ठीबा धकयोगत : ॥ इतिषष्ठ्या : ॥ उद्वे गोगुरुतादेहेरक्तस्रावोभवेद्बहु । ना भेरधोभवेच्छूलंचाङ्कुर : सतुबाधक: ॥ ऋतुहीनाचतुर्मासंत्रिमासंवाभवे द्यदि । कृशाङ्गीकरपादेचज्वालाचा ङ्कुरयोगत : ॥ इतिचाङ्कुर : ॥ स शूलाचसगर्भाचशुद्धदेहाल्परक्तिका । जलकुमारस्यदोषेणजायते बलहीन ता ॥ याकृशाङ्गीभवेत्स्थूलाबहुका लऋतुस्तथा । गुरुस्तनीस्वल्परक्ता जलकुमारस्यदूषणात् ॥ इतिजलकु मारस्य ॥ इतिवैद्यकम् ॥ त्रि॰ बा धाजनके ॥
बाधनम् । न॰ पीडायाम् ॥ प्रतिबंध के ॥
बाधा । स्त्री॰ दु:खे । पीडायाम् ॥ नि षेधे ॥ बाधृलोडने । गुरोश्चेत्य : ॥
बाधित: । पुं॰ हेत्वाभासविशेषे ॥ यस्य साध्याभाव : प्रमाणेननिश्चित : स बाधित : । यथा । वह्निरनुष्णोद्रव्य त्वादिति । अत्रानुष्णत्वसाध्याभाव: । उष्णत्वंस्पर्शनप्रत्यक्षेणगृह्यते॰इ-

तिबाधितत्वम् ॥ त्रि० बाधायुक्ते ॥ पीडिते ॥ तारकादित्वादितच् । निवृत्ते ।

बाधिर्य्यम् । न० बधिरत्वे ॥ बधिरस्य भाव : । ष्यञ् ॥ कर्णरोगविशेषे । तस्यनिदानम् बधिरेऽवलोकनीयम् । औषधन्तु । शुष्कमूलकशुण्ठीनां चारोहिङ्गुलनागरम् । शुक्तं चतुर्गुणंदत्वातैलमेतैर्विपाचयेत् ॥ बाधिर्यकर्णशूलञ्चपूयस्रावश्चकर्णयो : । क्रमयश्चविनश्यन्ति तैलस्यास्यप्रपूरणात् ॥

बाध्य : । त्रि० निराकरणयोग्ये । बाधितव्ये । बाधनीये ॥ न्यूनत्वं बाध्यत्वे हेतु : ॥

बांधकिनेय : । पुं० बंधुले । असतीसुते ॥ कौलटेये. ॥ बंधक्याअपत्यम् । स्त्रीभ्याढक्ि कल्याण्यादित्वादिनङादेशश्च ॥

बांधव : । पुं० मित्रे । सुहृदि ॥ सगोत्रे । बंधौ । ज्ञातौ । स्वजने ॥ बांधवास्त्रिविधा: । आत्मबांधवा:० पितृबांधवा:० मातृबांधवाश्चेति । यथोक्तम् । आत्मपितृष्वसु : पुत्राआत्ममातृष्वसु : सुता : । आत्ममातुलपुत्राश्चविज्ञेयाह्यात्मबांधवा : ॥ पितु : पितृष्वसु : पुत्रा : पितुर्मातृष्वसु : सुता : । पितुर्मातुलपुत्राश्चविज्ञेया : पितृबांधवा : ॥ मातु : पितृष्वसु : पुत्रामातुर्मातृष्वसु: सुता : । मातुर्मातुलपुत्राश्चविज्ञेया मातृबांधवा: ॥ इति ॥ बंधुरेव । प्रज्ञाद्यण् ॥

बाभ्रवी । स्त्री० दुर्गायाम् ॥ पश्यवाभ्रवीम् ॥

बारक : । पुं० अश्वगतौ ॥ त्रि० निषेधके ॥

बारकी । पुं० शत्रौ ॥ चित्राश्वे ॥ पर्णाजीविनि ॥ पयोधौ ॥

बारकीर : । पुं० द्वारपालिनि ॥ वाडवे ॥ यूकायाम् ॥ वेणिवेधिन्याम् ॥ नीराजितहये ॥

बारण : । पुं० मतङ्गजे ॥ न० प्रतिषेधे ॥

बारबाण : । पुं० कञ्चुके ॥

बार्बटीर : । पुं० रङ्गे । चपुणि ॥ आमास्थ्नि ॥ अङ्कुरे ॥ गणिकासुते ॥

वाल: । पुं० कुन्तले । चिकुरे । कचे ॥ ॥ अश्वस्यबालके । किशोरे ॥ अश्वस्य बालधौ । हूभपुच्छे ॥ नारिकेले ॥ पञ्चवर्षीयहस्तिनि ॥ य० । पञ्चवर्षो गजोबाल: स्यात्पोतोदशवर्षक: । इति ॥ पुच्छे । मत्स्यविशेषे ॥ पुं० न० ह्रीबेरे । वर्हिष्ठे । उदीच्ये । बाला० इ० प्र० गन्धद्रव्ये । सुगन्धिबाला० इ० च० भा० ॥ त्रि० मूर्खे ॥ अविवेकिनि । शास्त्रार्थविवेकज्ञानशून्ये । अल्पप्रज्ञे ॥ अर्भ

के । माणवके ॥ अप्राप्तव्यवहारे । पञ्चदशवर्षादनधिकवयस्के इति कश्चित् । षोडशवर्षपर्यन्तप्रथमवयस्के । यथा । आषोडशाद्भवेद्बालो यावत्क्षीरनिवर्त्तकः । इ० । अत्र सुश्रुतः । ऊनषोडशवर्षस्तु नरो बालो निगद्यते त्रिविधः सोपि दुग्धाशी दुग्धान्नाशी तथान्नभुक् दुग्धाशी वर्षपर्यन्तं दुग्धान्नाशी शरद्द्वयम् । तदुत्तरं स्यादन्नाशी एवं बालस्त्रिधा मतः इति ॥ अन्यच्चाप्युक्तम् । आषोडशाद्भवेद्बालस्तरुणस्तत उच्यते वृद्धः स्यात् सप्ततेरूर्द्ध्वं वर्षीयान्नवतेः परम् ॥ इ० । अनाथबालस्य रक्षिकाः सर्वदेवताः ॥ अथ बालपरिचर्याविधिः । बालमङ्के सुखं दद्यान्नचैनं तर्ज्जयेत् क्वचित् । सहसा बोधयेन्नैव नायोग्यमुपवेशयेत् ॥ अयोग्यमुपवेशनासमर्थम् । नाकाण्डस्थापयेत् क्रीडेनं क्षिप्रं शयने क्वचित् । रोदयेन्न क्वचित् कार्यविधिमावश्यकं विना ॥ आवश्यकोविधिर्भेषजदानतैलाभ्यङ्गोद्वर्त्तनादिः । तच्चित्तमनुवर्त्तेत तं सदैवानुमोदयेत् । संसेवितमनाएवं नित्यमेवाभिवर्द्धयेत् ॥ वाताऽऽतपतडिद्वृष्टिधूमानलजलादितः । निम्नोच्चस्थानतश्चापि रक्षेद्बालं प्रयत्नतः ॥ बालस्य स्वभावहितान्याह । अभ्यङ्गो दर्शनं स्नानं नेत्रयोरञ्जनं तथा । वस

नं मृदुयत्तत्तथा सद्वनुलेपनम् ॥ जन्मप्रभृतिपथ्यानि बालस्यैतानि सर्वथा ॥ बालस्य कवलादेः समयमाह । कवलः पञ्चमाद्वर्षाद्विंशतेश्च मैथुनमिति ॥ बलति । बलप्राणने । ज्वलितीतिणः । बाडते । बाडृ आप्लाव्ये । पचाद्यच् वा ॥ यद्वा । बल्यते । बलसंवरणे । कर्मणि घञ् । बालयति अस्मात् पचाद्यच् वा ॥ ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य च । चरेद् गुरुः सुहृद्वापि प्रायश्चित्तं विशुद्धये ॥ ततोन्यूनतरस्याथ नापराधो न पातकम् । न चास्य राजदण्डोपि प्रायश्चित्तं न विद्यते इत्यङ्गिराः ॥

बालकः । पुं० शिशौ । अज्ञे । हयबालधौ । हस्तिपुच्छे ॥ अङ्गुरीयके । ह्रीवेरे । सुगन्धिबाला० इ० प्र० ॥ बालकं शीतलं रूक्षं लघु दीपनपाचनम् । हृल्लासारुचिवीसर्पहृद्रोगस्त्वतिसारहृत् । वलये । केशे । निर्वले० ॥

बालकप्रिया । स्त्री० इन्द्रवारुण्याम् ॥ कदल्याम् ॥

बालक्रमिः । पुं० केशकीटे ॥

बालक्रीडनम् । न० बालकखेलायाम् ॥

बालक्रीडनकः । पुं० कपर्दके ॥

बालखिल्यः । पुं० तपोविशेषलब्ध-

संसक्तेतापसान्तरे । नवान्नलब्धेपूर्वसच्चितत्यागिनि ॥ मुनिविशेषेषु ॥ केशजातावालखिल्याः ॥ येके शास्तेवालखिल्या इतिश्रुतेः ॥

बालगर्भिणी । स्त्री० प्रथमगर्भवत्यां गवि । प्रष्ठौह्याम् ॥ बालाचासौगर्भिणीच ॥

बालगोपालः । पुं० श्रीकृष्णमूर्त्तिविशेषे ॥

बालग्रहः । पुं० बालकानांग्रहविशेषे ॥ यथा बालग्रहाअनाचारात्पीडयन्तिशिशुंयतः । तस्मात्तदुपसर्गेभ्योरक्षेद्बालंप्रयत्नतः ॥ ग्रहतेषांनामानि । स्कन्दग्रहस्तुप्रथमः स्कन्दापस्मारएवच । शकुनीरेवती चैवपूतनागन्धपूतना । पूतनाशीतपूर्वाचतथैवमुखमण्डिका । नव मोनैगमेयश्चप्रोक्ताबालग्रहाश्चमी ॥

बालचर्य्यः । पुं० सिद्धसेने ॥ कार्तिकेये ॥

बालजीवनम् । न० क्षीरे । दुग्धे ॥

बालतनयः । पुं० खदिरे ॥ बालाः तनयाः पत्राण्यस्य ॥ बालकपुत्रे ॥

बालतन्त्रम् । न० कुमारभृत्यायाम् । गर्भिण्यादिपोषणे । बालचिकित्सायाम् ॥

बालतृणम् । न० शष्पे । नवतृणे ॥ बालंतृणम् ॥

बालधिः । पुं० केशसंयुते०लाङ्गूले ॥ बालाधीयन्तेऽत्र । करणाधिकरणे तिक्तिः ॥

बालपत्रः । पुं० खदिरे ॥ यवासे ॥ दुरालभायाम् ॥ न० नूतनपर्णे ॥

बालपत्रकः । पुं० खदिरवृक्षे ॥

बालपाश्या । स्त्री० पारितथ्यायाम् । सीमन्तस्थितायांस्वर्णादिपट्टिकायाम् ॥ वन्दी० वेणी० इ० भा० । सिंति० इ० गौ० भा० ॥ बालपाशे ॥ केशसमूहेसाधुः । तत्रसाधुरितियत् ॥ बालेषुपाश्यापाशसमूहोवा ॥

बालपुष्पिका । बालपुष्पी । स्त्री० यूथिकायाम् ॥

बालभद्रः । बालभद्रकः । पुं० विषभेदे । शाम्बे ॥

बालभैषज्यम् । न० रसाञ्जने ॥ बालस्यौषधे ॥

बालभोज्यः । पुं० चणके ॥ त्रि० बालकभक्षणीये ॥

बालमुकुन्दः । पुं० श्रीविष्णोर्मूर्त्यन्तरे ॥ यथा । करारविन्देनपदारविन्दं मुखारविन्देविनिवेशयन्तम् । वटस्यपत्रस्यपुटेशयानंबालंमुकुन्दंमनसास्मरामि ॥

बालमूलकम् । न० लघुमूलके ॥ मूलकंबालकंरुच्यंसर्वेषांपाचनंलघु । दोषत्रयज्वरश्वासनासाकण्ठाक्षिरोगनुत् ॥ महत्तदेवरूक्षोष्णंगुरुदोषत्रयप्रदम् । स्नेहसिद्धंतदेवस्याद्दोषत्रयविनाशनम् ॥

बालमूषिका । स्त्री० गिरिकायाम् ॥ बालाचासौमूषिकाच ॥

बालयज्ञोपवीतम् । न० उपवीतविशेषे । उरस्कटे । पद्मवटे ॥

बालयज्ञोपवीतकम् । न० बालयज्ञोपवीते ॥

बालराजम् । न० वैदूर्यमणौ ॥ पुं० बालकश्रेष्ठे ॥

बालरोग : पुं० बालकस्यव्याधौ ॥

बालवाय: । पुं० वैदूर्यप्रभवे० देशविशेषे ।

बालवायजम् । न० वैदूर्यमणौ ॥

बालवास : । न० केशरचितवस्त्रे ॥ त्रि० तद्वति ॥

बालवाह्य : । पुं० वनच्छागे ॥ त्रि० बालकावहनीये ॥

बालव्यजनम् । न० चामरे । रोमगुच्छे । प्रकीर्णके ॥ बालव्यजनमोजस्यं मक्षिकादीन्व्यपोहति बालकस्यव्यजने ॥

बालव्रत : । पुं० पद्मचौरे सिंहकेलौ । मञ्जुघोषे । पूर्वजिने ॥

बालसंध्याभ : । पुं० अरुणवर्णे ॥ त्रि० तद्वति ॥

बालसूर्य : । पुं० उदितमात्रेऽर्के ॥ न० वैदूर्यमणौ ॥

बालहस्त: । पुं० केशयुक्तलाङ्गूलमात्रे । बालधौ ॥ बाल : ० हस्तइव० दंशादिवारकत्वात् ॥

बाला । स्त्री० पृथ्व्याम् ॥ योषायाम् ॥ हरिद्रायाम् ॥ मल्लिकाप्रभेदे ॥ च स्वष्टायाम् ॥ नीलझिण्याम् ॥ एकवर्षवयस्कायांगवि ॥ यथा वर्षमात्रतुबालास्यादितिबालाद्विवार्षिकी ॥ षोडशवर्षीयायांस्त्रियाम् ॥ बालाषोडशवार्षिकीत्युक्ते : ॥ शरदिग्रीष्मकालेचबालायस्याचहर्षदा ॥ देवताविशेषे ॥ वयसिप्रथमेऽपि प्राप्ते • अजादित्वाट्टाप् ॥ घृतकुमार्याम् ॥ ह्रीवेरे ॥ कन्यायाम् ॥

बालाची । स्त्री० केशपुष्टा० इ० गौ० भा० प्र० वृत्ते । दुर्गपुष्पाम् ॥

बालातप : । पुं० प्रथमोदितादित्यतापे ॥ कन्यार्कातपे ॥

बालार्क: । पुं० प्रातःकालिकेसूर्ये ॥ कन्याराशिस्थेसूर्ये ॥ यथा । शुष्कमांसंस्त्रियोवृद्धाबालार्कस्तरुणंदधि प्रभातेमैथुनंनिद्रासद्य : प्राणहराणिषट् ॥

बालि : । पुं० ऐन्द्रे । सुग्रीववानरभ्रातरि ॥

बालिका । स्त्री० बालायाम् । कन्यायाम् ॥ बालुकायाम ॥ पत्रकाङ्कलायाम् । दिक्षोलायाम् ॥ कर्णभूषणे । बाली० इति० श० ॥

बालिखिल्य : । पुं० ऋषिविशेषेषु ॥ पुलस्त्यकन्यायांसन्नत्यां० क्रतो : पष्टिसहस्रसङ्ख्याकपुत्रेषु ॥ तेचाङ्गुष्ठपरिमाणा : ॥

वाली । पुं॰ ऐन्द्रे । इन्द्रपुत्रे वानरराजविशेषे सुग्रीवभ्रातरि ॥ नमसङ्कुचितः पन्थायेनबालीहतोगतः । समयेतिष्ठसुग्रीवमावालिपथमन्वगाः ॥ त्रि॰ वालविशिष्टे ॥

वालिनी । स्त्री॰ अश्विनीनक्षत्रे ॥

वालिपुत्रः । पुं॰ अङ्गदे । तारेये ॥

वालिमा । पुं॰ बालतायाम् । बालस्वभावः । पृ॰ इमनिच् ॥

वालिशः । त्रि॰ शिशौ । मूर्खे ॥ वालिशस्यमत्स्यवेधनस्यायमधिकारी मूर्खत्वादपूज्यत्वात् । तस्येदमित्यण् ॥ वाडनम् । वाडृ॰ । इन् ।

वालिश्यति । धा॰ चातोनुपेतिकः ॥

वालिश्यम् । न॰ मूर्खत्वे ॥ वालिशस्यकर्मभावोवा । ब्रा॰ ष्यञ् ॥

वालिहन्ता । पुं॰ श्रीरामचन्द्रे ॥

वाली । स्त्री॰ मध्ये ॥ स्वनाम्नाप्रसिद्धे॰ अलङ्कारविशेषे ॥

वालीशः । पुं॰ मूत्रकृच्छ्ररोगे ॥

वालुः । स्त्री॰ एलवालुकनाम्निगंधद्रव्ये ॥

वालुकम् । न॰ एलवालुके ॥ वलते । वलप्राणने । वा॰ उण् । स्वार्थेकन् ॥ पुं॰ पानीयामलके ॥

वालुका । स्त्री॰ सिकतासु । वालू॰ इ॰ भा॰ ॥ वालुकालेखनीशीता व्रणोरः क्षतनाशिनी ॥ टाप् ॥ कर्पूरे ॥ कर्कट्याम् ॥ यन्त्रविशेषे ॥

वालुकागडः । पुं॰ वालियामच्॰ इ॰ गौ॰ प्र॰ मत्स्ये । सिताङ्गे ॥

वालुकात्मिका । स्त्री॰ शर्करायाम् ॥ त्रि॰ वालुकामये ॥

वालुकाप्रभा । स्त्री॰ नरकविशेषे ॥

वालुकामयः । त्रि॰ सैकते ॥

वालुकायन्त्रम् । न॰ औषधपाकार्थयन्त्रविशेषे । यथा । भाण्डे वितस्तिगम्भीरेमध्येनिहितकूपके । कूपिकाकण्ठपर्यन्तं वालुकाभिश्चपूरिते ॥ भेषजंकूपिकासंस्थंवह्निनायत्रपच्यते । वालुकायन्त्रमेतद्धियन्त्रतन्त्रबुधैःस्मृतम् ॥ इतिभावप्रकाशः ॥

वालुकास्वेदः । पुं॰ तप्तवालुकाभिस्तापने ॥ यथा । वालुकाः प्रकृतेस्वेदान्कारयेद्रूक्षनिर्मितान् । स्निग्धःस्नेहैर्निषिद्धोऽपविनाकेवलवातजान् ॥ खर्परभृष्टपटस्थितकाञ्जिकसंसिक्तवालुकास्वेदः । शमयतिवातकफामयमस्तकशूलाङ्गभङ्गादीन् ॥ स्रोतमांसार्दवंकृत्वानीत्वापावकमाशयम् । हत्वावातकफस्तम्भंस्वेदोज्वरमपोहति ॥ इ॰ भा॰ प्र॰ ॥

वालुकी । स्त्री॰ कर्कटीभेदे । बहुफलायाम् । स्निग्धफलायाम् ॥ वालुकीवातशमनीशीतादृग्याश्रमापहा । पित्तास्रशमनीरुच्याकुरुतेकासपीनसौ ॥ स्याद्वालुकीशरदिवर्षजदोषकर्त्रीहैमन्तजाचखलुपित्तहराचरुच्या

क्षिप्रं करोति खलु पीनसमङ्गपक्वा पक्वात्वतीव मधुराफलकारिणी च ॥
इ० रा० नि० ॥

वालुका । वालुङ्की । स्त्री०) इर्वारौ । कर्कट्याम् ॥

वालूक : । पुं० विषप्रभेदे ।

वालेय : । पुं० गर्दभे ॥ रासभे ॥ अङ्गारवल्ल्याम् ॥ दैत्यविशेषे ॥ चाणक्यमूलके ॥ त्रि० मृदौ । कोमले ॥ बलिक्षिते । बल्यर्थे । पूजायोग्ये बलये उपहाराय हितम् । छदिरुपधिबलेर्ढञ् ॥ बलेरपत्यं वा । गृष्ट्यादित्वात् ० ढञ् ॥

वालेयशाक : । पुं० अङ्गारवल्ल्याम् । बर्बरे भार्ग्याम् ॥ वालेयस्य शाक: । गर्दभभक्ष्यशाकत्वात् ॥

वालेष्ट : । पुं० बदरे ॥ त्रि० बालकाभिलषिते ॥

वालोपवीतम् । न० बालकपरिधानवस्त्रे । पट्टावटे ॥

वाल्मीकि : । पुं० मुनिविशेषे । रामायणकर्त्तरि ॥ वल्मीकस्य नाकोरपत्यम् । वल्मीकप्रभवोयस्मात्तस्माद्वाल्मीकिरित्यसाविति व्यासवैवर्त्तोक्ते वल्मीकप्रभवत्वेन गौणपुत्रादिवद्गौणमस्य वल्मीकापत्यत्वं गृहीत्वैव साधुरपत्यार्थ : ॥ यद्वा । वल्मीक इति० ऋषिविशेषस्य संज्ञेत्य।हु : ॥

वाल्मीकीय : । त्रि० वाल्मीकिसम्बन्धिनि । तस्येदमित्यर्थे । वृद्धाच्छ : ॥

वाल्यम् । न० अवस्थाविशेषे । शैशवे ॥ तिथिवर्षमतं वाल्यमित्युक्ते : पञ्चदशवर्षपर्यन्तावस्थायामित्यर्थ : ॥ चापल्ये ॥ ज्ञानिनोवस्थाविशेषे । ज्ञानमनाविष्कुर्वन्नगर्वितत्वे । दम्भदर्पाहङ्कारादिराहित्ये । युक्तित: श्रुतार्थानुसन्धानकुशलत्वे ॥ बालस्य भाव : कर्म वा । । ब्राह्मणादित्वात् ष्यञ् । पुरोहितादित्वाद्यग्वा ॥

वाष्प : । पुं० न० नेत्रजले ॥ ऊष्मणि ॥ बाधते नेत्रम् । बाध् ० । खष्पशिल्पशष्पवाष्परूपपर्यतल्पा : । इति पप्रत्यय : ॥ धातो : षादेशश्च निपात्यते ॥ वाष्पमूष्माश्रु० इत्यमर: ॥

वाहु : । पुं० स्त्री० कक्षादङ्गुल्यग्रपर्यन्तावयवविशेषे । भुजे । प्रवेष्टे । दोष्णि । वांह० इ० भा० ॥ अस्य शुभाशुभलक्षणं यथा । उद्बद्धबाहु : पुरुषो वधबन्धमवाप्नुयात् । दीर्घबाहुर्भवेद्राजा समुद्रवचनं यथा ॥ प्रलम्बबाहुरैश्वर्यं प्राप्नुयाद्गुणसंयुतम् । ह्रस्वबाहुर्भवेद्दास : परप्रेष्यकरस्तथा । वामावर्त्तभुजा ये तु ये च दीर्घभुजा नर : ॥ संपूर्णबाहवो ये तु राजानस्ते प्रकीर्तिता इति० ॥ कूर्परस्योर्द्ध्वभागे ॥ वाधते । बाध् ० । अर्जिदृशिकम्यमिपशिबाधामृजिपशितुक्

धुक्दीर्घइकारान्तेतिकुईस्याऽनृस्य स्य ॥ सगणे० पुं० ॥ रवेः पार्श्वगे ॥

बाहुकः । पुं० नलाभिधनृपे । पुण्यश्लोके । अश्वविदि । नैषधे ॥ त्रि० वाहुभ्यांतरतियभस्मिन् ॥ गौदृव्यचवृन् । स्त्रियाम् ० । बाहुका ॥

बाहुकुण्ठः । त्रि० कुण्ठितबाहुयुक्ते । कुम्मे । टोगैडी ॥

बाहुकुन्थः । पुं० गरुति । पक्षे । पतत्रे । पङ्ख० ह० भा० ॥

बाहुजः । पुं० क्षत्रिये । कोरे ॥ स्वयञ्जाततिले ॥ त्रि० बाहुजाते ॥ बाहुभ्यांजातः । पञ्चम्यामजातावितिडः ॥ बाह्वोर्जातोवा । सप्तम्यांजनेर्डः ॥

बाहुत्राणम् । न० अस्त्राघातवारणार्थंबाहुवद्धलौहादौ । बाहुले ॥

बाहुदन्ती । पुं० इन्द्रे ।

बाहुदा । स्त्री० तीर्थविशेषे ॥ सैतवाहिन्यांनद्याम् ॥ कदाचिल्लिखितस्तर्षे भ्रातुः शून्याश्रमेफलभक्षणाद्राज्ञाबाहुच्छिन्नौ०तौचास्यांतपस्यतस्तस्यजाताविच्यतः ०बाहु० छिन्नौदत्तवतीलिखितस्यर्षेः । डुदाञ्० ; आतोनुपेतिकः ॥ यद्वा । बहुदस्यकार्त्तवीर्यस्येयम् । तेनावतारितत्वात् । तस्येदमित्यण् ॥

बाहुभूषा । स्त्री० केयूरे ॥ बाहुभूषणमात्रे ॥

बाहुमूलम् । न० कक्षे । काख० इ० भा० ॥ बाह्वोर्मूलम् ॥

बाहुयुद्धम् । न० नियुद्धे । दोर्भ्याम् सङ्ग्रामे । बाहुभियुद्धम् ॥

बाहुलः । पुं० कार्त्तिकमासे । अग्नौ ॥ बहुलाकृत्तिका० तयायुक्तापौर्णमासी० बाहुली । बाहुलीपौर्णमाऽस्मिन् । सास्मिन्पौर्णमासीत्यण् ॥ अग्नौ ॥ शाक्यमुनेः भर्ते । यशोधरये ॥ न० बाहुत्राणे ॥

बाहुलकम् । न० प्राचुर्ये ॥ यथा । क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव । विधेर्विधानम् बहुधासमीक्ष्य चतुर्विधंबाहुलकंवदन्ति ॥ बहुलस्यभावः । द्वन्द्वमनोज्ञादिभ्यश्चेतिवुञ् ॥

बाहुलेयः । पुं० कार्त्तिकेये । गुहे । स्कन्दे ॥ बहुलानां कृत्तिकानाम पत्यम् । स्त्रीभ्योढक् ॥

बाहुल्यम् । न० बहुत्वे ॥ बहुलस्य भावः । ष्यञ् ॥

बाहुशर्द्धी । पुं० चन्द्रे ॥ बाह्वोस्त्रीययोरेवशर्द्धोबलंयस्य ॥

बाहुसहस्रभृत् । पुं० कार्तवीर्यार्जुने ॥बाहूनांसहस्रम् ० बिभर्त्ति ।

डुभृञ् । क्विप् । तुक् ॥
बाहूबाहवि । अ० बाहुयुद्धे ॥ बाहुभ्यांबाहुभ्यांप्रहृत्य इदं युद्धं प्रवृत्तम् । तत्रते मेदमितिसरूपे ० इतिबहुव्रीहौ० इच् कर्म्म व्यतिहारइतीच् समासान्त :। अन्येषामपिदृश्यत इतिदीर्घ :। योगुण :। अव् । तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावा दव्ययत्वम् ॥
बिदूर : । पुं० देशविशेषे ॥ यत्रबाल वायज : संस्क्रियते ॥
बिभित्सा । स्त्री० भेत्तुमिच्छायाम् ॥ भिदिर्० । सन् हलन्ताच्चेति कित्वाद्गुणाभाव : । अप्रत्ययादि त्यकारप्रत्यये० टाप् ॥
बिभ्यत् । त्रि० वेपमाने ॥ बिभीते: शतरि० नाभ्यस्ताच्छतुरितिनुमभाव : ॥
बिभ्राण : । त्रि० दधाने ॥ भृञ : कर्त्तरिशानच् ॥
बीभत्स: । पुं० अर्जुने । पार्थे ॥ त्रि० क्रूरे ॥ घृणात्मनि ॥ विकृते ॥ रसविशेषे ॥ जुगुप्सास्थायिभावस्तुवीभत्स:कथ्यतेरस: । नीलवर्णोमहाकालदैवतोयमुदाहृत : ॥ वधेर्निन्दायांसन् । भावे ०घञ् ॥ यद्वा । अप्रत्ययात् । बीभत्साऽस्त्यच । अर्शआद्यच् ॥ यद्वा । बीभत्सते० बीभत्स्यतेवाऽनेनवा । बधबन्धने । सन्नन्त :। मान्बधेत्यभ्यासदीर्घ : । पचाद्यच् ०घञ् ०घोवा ॥
बीभत्सा । स्त्री० बीभत्से ॥
बीभत्सु: । पुं० अर्जुने । विजये ॥
बुक : । पुं० बुकि ॥
बुक्क : । पुं० छागे ॥ न० अग्रमांसे । बुक्कायाम् ॥ बुक्यते । स्वादुत्वान् मृग्यते । बुक्कभषणे । घञ् ॥ हृदये ॥ पुं० स्त्री० समये० इतिभरत : ॥
बुक्कनम् । न० भषणे । श्वरवे ॥
बुक्का । स्त्री० बुक्के । हृदयान्तर्गतमांसविशेषे ॥ मेद : शोणितयो : सारा द्बुक्कयोर्युगलं भवेत् । तौतुपुष्टिकरौप्रोक्तौजठरस्थस्यमेदस : ॥ हृदये ॥
बुक्कार : । पुं० सिंहनादे केशरिध्वनौ ॥
बुक्की । स्त्री० बुक्के ॥
बुडिल : । पुं० ऋषिविशेषे । आश्वतराश्वौ ॥
बुद्ध : । पुं० लब्धवर्णे । विचक्षणे । विदुषि । पण्डिते ॥ परमार्थदर्शिनि । ब्रह्मविदि ॥ विष्णोरवतारविशेषे । सर्वज्ञे । सुगते । धर्म्मराजे । जिने । अजिनसुते । मुनीन्द्रे ॥ यथा । तत : कलौसंप्रवृत्ते सम्मोहायसुरद्विषाम् । बुद्धोनाम्नाऽजिनसुत : कीकटेषुभविष्यति ॥

ईश्वरनिरूपणे बुद्धविशेषाणांमतमाह । सर्वज्ञइतिसौगता : । निरावरणइतिदिगम्बरा : । लोकव्यवहारसिद्धइतिचार्वाकाः । शरीरारम्भवच्चेतनानि०गौरोहंजानामीत्यादिज्ञानेन०गौरवत्वज्ञ नवत्वयो : सामानाधिकरण्यानुभवादितिचार्वाकाणांमतञ्च । तेषांमतेजगत : क्षणभङ्गुरत्वम् । नन्वस्तुक्षणभङ्ग : पूर्वपुञ्जाच्चोत्तरपुञ्जोत्पत्ति : तथाच पुञ्जविश्वकुर्वद्रयाख्यजातिविशेषःस्मरणजनकतावच्छेदकइतिनदोषइति कुसुमाञ्जलिप्रथमस्तवकटीकायांरामभद्रः ॥ बुद्धानांदशविधमतभेदमाह । वह्निपुत्रआत्मेति १ दृढप्राकृतबुध्य : । देहआत्मेति २ चार्वाका०इन्द्रियाण्यपरे ३ चते ॥ तेऽन्येप्राण ४ स्ततोन्येतेमनआत्मेति ५ वादिन: । बुद्धिरात्मेति ६ बौद्धाबे०शून्यमात्मेति ७ तेऽपरे ॥ याज्ञिकायज्ञपुरुष सर्वज्ञं ८ सौगताविदु : । निरावरणमाहुर्यं दिगम्बरमतानुगा : ॥ चार्वाकाश्चापिलोकानांव्यवहारप्रसिद्धकम् १० । इत्यात्मप्रकाश: ॥ त्रि० बुधिते । ज्ञाते । विदिते । प्रशस्ताबुद्धिरस्य । अर्शआद्यच् । प्राशस्त्यञ्चसुगतिसाधकत्वात् । यद्वा । बुद्ध्यतेस्म । बुध अवगमने । क्त : । दिवादिरनि-

ट् ॥ प्राबुद्धे ॥

बुद्धद्रव्यम् । न० स्तौपिके । श्रोधा० इ०भा० ॥

बुद्धवान् । त्रि० ज्ञातवति । ज्ञानिनि ॥

बुद्धान्त : । पुं० जागरे ॥

बुद्धि : । स्त्री० आत्मगुणे ॥ सर्वव्यवहारहेतुर्ज्ञानं बुद्धि : । साद्विधा । अनुभूति : स्मृतिश्च । यथा । विभुर्बुद्ध्यादिगुणवान्बुद्धिस्तुद्विविधामता । अनुभूति : स्मृतिश्चस्यादनुभूतिश्चतुर्विधा । प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ॥ इतिनैयायिकमतेबुद्धेर्विभागईरित: । अध्यवसायलक्षणायांमनीषायाम् । धिषणायाम् । धियि ॥ अध्यवसायोबुद्धि: क्रियाक्रियावतोरभेदविवक्षया । सर्वोव्यवहर्त्ता०आलोच्य०मत्वा०अहमत्राधिकृतइत्यभिमत्य०कर्त्तव्यमेतन्मयेत्यध्यवस्यति० (‡) ततश्चप्रवर्ततइतिलोकसिद्धम् । तत्रकर्त्तव्यमितियोयंनिश्चयश्चितिसन्निधापन्नचैतन्यायाबुद्धे:सोध्यवसायोऽसाधारणव्यापार : तदभेदाबुद्धि: सचबुद्धेर्लक्षणम् । समानासमानजातीयव्यवच्छेदकत्वात् ॥ तत्त्वातत्त्वविवेकसामर्थ्ये । महत्तत्त्वे ॥ अन्त : करणे ॥ निश्चयात्मिकायामन्त : करणवृत्तौ ॥ बुद्धिरुपलब्धि

ज्ञानमित्यनर्थान्तरम् । नतुसाङ्ख्या
नामिव॰बुद्धितत्त्वस्य॰महत्तत्वापर
पर्यायस्यपरिणामविशेषोज्ञानम् ।
तथाच॰बुद्ध्यादिपदवाच्यत्वमनुभव
सिद्धज्ञानत्वजातिरेववा॰लक्षणम्
ज्ञानस्यभार्यायाम् । पश्यमेधा
म् । मतौ । शेमुष्याम् ॥ अध्यात्मं
बुद्धिरित्याहु:षडिन्द्रियविचारिणी
। अधिभूतस्वमन्तव्यं ब्रह्मातत्राधि
दैवतम् ॥ इत्याश्वमेधिकपर्व । स-
त्त्वादिगुणभेदेनबुद्धेस्त्रैविध्यमीरित
म् । गीतायांवासुदेवेनअर्जुनायानु
पृच्छते । यथा । प्रवृत्तिनिवृत्तिञ्च
कार्याकार्येभयाभये । बन्धंमोक्षञ्च
यावेत्तिबुद्धि : सापार्थसात्त्विकी ।
१ ॥ ययाधर्ममधर्मञ्चकार्यञ्चाकार्य
मेवच । अयथावत्प्रजानातिबुद्धि:
सापार्थराजसी ॥ २ ॥ अधर्मंधर्म
मितियामन्यतेतमसावृता । सर्वा
र्थान्विपरीतांश्चबुद्धि:सापार्थताम
सीति ॥ ३ ॥ भारतेमोक्षधर्मेस्यागु
णा : पञ्चप्रकीर्तिता : । यथा । इ
ष्टानिष्टविपत्तिश्चव्यवसाय : समा
धिता । संशय: प्रतिपत्तिश्चबुद्धे:प
ञ्चगुणान्विदुरिति ॥ इष्टानिष्टानां
वृत्तिविशेषाणां॰विपत्तिर्नाश : ॰
निद्रारूपावृत्तिरित्यर्थ : । व्यवसाय:
उत्साह : । समाधिता॰ चित्तवृत्ति
निरोधइत्यर्थ : । संशय :॰ कोटि

द्वयस्पृक्ज्ञानम् । प्रतिपत्ति : प्रत्य
क्षादिप्रमाणवृत्ति : ॥ इतितट्टीका
॥ अस्या:सप्तगुणायथा । शुश्रूषाश्रव
णञ्चैवग्रहणंधारणन्तथा । ऊहापो
होर्थविज्ञानंतत्त्वज्ञानञ्चधीगुणा: ॥
इति ॥ अस्यावृत्तय:पञ्च । यथा । प्र
माणविपर्ययविकल्पनिद्रास्मृतयइ
ति ॥ बुध्यतेऽनया । बुध॰ । क्तिन् ॥
बुद्धितत्त्वम् न॰ बुद्धिस्वभावे ॥ तच्च
प्राकृतत्वादचेतनमिति॰तदीयोध्य
वसायोप्यचेतनोघटादिवत् । एवं
बुद्धितत्वस्य॰सुखादयोपिपरिणाम
भेदाअचेतना:॰पुरुषस्तुसुखाद्यन
नुषङ्गीचेतन: । सोयंबुद्धितत्ववर्ति
नाज्ञानसुखादिनातत्प्रतिविम्बित
स्तच्छायापत्त्या ज्ञानसुखादिमानिव
भवतीतिचेतनोनुगृह्यते॰ चिच्छा
यापत्त्याच॰अचेतनापिहिबुद्धिस्त
दध्यवसायश्चचेतनइवभवति । उक्त
ञ्च । तस्मात्तत्संयोगादचेतनं चे
तनावदिवलिङ्गम् । गुणकर्तृत्वेच
तथा कर्तेवभवत्युदासीन इति ॥
बुद्धिधर्म्म : । पुं॰ धर्मादिषु ॥ धर्मो
ज्ञानंविरागऐश्वर्यम्॰सात्विकमेत
द्रूपंतामसमस्माद्विपर्यस्तम् ॥
बुद्धिभेद : । पुं॰ बुद्धेर्विचालने ॥
बुद्धिरहमेतत्कर्म्म करिष्ये॰एतत्
फलञ्चभोक्ष्ये॰ इति॰तस्या:॰ भेदो
विचालनम्॰अकर्त्तात्मोपदेशेन ॥

बुद्धिभ्रंस : । पुं० मतेर्विषयेषुपतनकर्तरि ॥ रजोगुणे ॥

बुद्धिमान् । त्रि० बुद्धियुक्ते । ज्ञानवति ॥ तद्भुञ्ज्यतेयद्द्विजभुक्तशेषंसबुद्धिमान्योनकरोतिपापम् आत्मज्ञानवति । विवेकिनि ॥ प्रशस्तबुद्धौ ॥ बुद्धेःप्राशस्त्यंनाम । शुश्रूषाश्रवणंचैवग्रहणंधारणंतथा ।ऊहा पोहोर्थविज्ञानंतत्त्वज्ञानश्चधीगुणा: ॥ प्रशंसायांमतुप् ॥

बुद्धियुक्त : । त्रि० बुद्धिमति ॥ परमात्मसाक्षात्कारवति । समत्वबुद्ध्यायुक्ते ॥

बुद्धियोग : । पुं० आत्मबुद्धिसाधनभूते निष्कामकर्मयोगे । आत्मतत्त्वविषयेसम्यग्दर्शने ॥ अप्रचलितेनसम्यग्ज्ञानस्थैर्यलक्षणेनसमाधिनायुज्यते इति ॥ बुद्ध्याव्यवसायात्मिकयाकृत : कर्मयोग : बुद्धियोग : ॥ बुद्धिसाधनभूतोवायोग : ॥

बुद्धिवित् । पुं० बौद्धे ॥ बुद्धिरेवात्मेतिवौद्धानांभ्रान्तिमात्रमेव । सुप्ते व्यभिचारात्०वेद्यस्यचघटवद्तिरिक्तवेद्यत्वात् ॥

बुद्धिसम्पत्ति : । स्त्री० धीशक्तौ ॥ बुद्धे : सम्पत्ति : ॥

बुद्धिसहाय : । पुं० धीसचिवे मन्त्रिणि ॥ मते : साहाय्यकर्तरि ॥

बुद्धिस्कन्धमय : । पुं० संसारवृक्षे ॥ वृक्षस्यविशाखा : स्कन्धात्प्रभवन्ति संसारस्यच बुद्धे : स्कन्धान्नाना विधा : परिणामाभवन्ति०तेनसाधर्म्येण० बुद्धिरेवस्कन्धस्तन्मयस्तत्प्रचुरोयंसंसारवृक्ष : ॥

बुद्धीन्द्रियम् । न० ज्ञानेन्द्रिये । धीन्द्रिये ॥ तत्रेन्द्रियंतावत्त्रिविधंभवति । बुद्धीन्द्रियंकर्मेन्द्रियमन्तरिन्द्रियञ्च । यथाहमनु : । बुद्धीन्द्रियाणिपञ्चैषांश्रोत्रादीन्यनुपूर्वश : । कर्मेन्द्रियाणिपञ्चैषांपाय्वादीनिप्रचक्षते ॥ एकादशंमनोज्ञेयंस्वगुणेनोभयात्मकम् । यस्मिन्जितेजिताबेतौभवत : पञ्चकौगणाविति ॥ बुद्धे : करणत्वाद्बुद्धीन्द्रियम् । सङ्कल्पकरूपेणोभयरूपेन्द्रियगणप्रवर्तकस्वरूपम । मनस्त्वन्तरिन्द्रियंज्ञातव्यं । बुद्ध्यर्थमिन्द्रियं ॥

बुद्ध्यमान : । त्रि० गम्यमाने ॥

बुद्बुद : । पुं० जलस्फोटे । वर्तुलाकारेजलविकारे । बुल्बुला० इ० भा० ॥ अभ्रच्छायातृणाद्ग्निर्नीचसेवापथेजलम् । वेश्यारा ग : खलेप्रीति: षडेतेबुद्बुदोपमा: ॥ गर्भस्यावयवविशेषे यथा । पञ्चरात्रेणकललंबुद्बुदाकारतांव्रजेत् ॥

बुद्बुददृष्टि : । त्रि० पुष्पिताक्षे ॥

बुध : । पुं० विदुषि । विपश्चिति । दोषज्ञे । सति । पण्डिते ॥ विवे-

क्विनि । विवेकिनावगततत्त्वे । अधिष्ठानसाक्षात्कारेणनिवृत्तभ्रमे । आत्मतत्त्वज्ञे । ब्रह्मविदि ॥ चतुर्थग्रहे । रौहिणेये सौम्ये ॥ अस्य वारेजातस्यफलम् । यथा । गुणेगुणज्ञ : कुशल : क्रियादौविलासशीलोमतिमान्विनीत : । मृदुस्वभाव : कमनीयमूर्तिर्बुधस्यवारेप्रभवोमनुष्य : ॥ सूर्यवंशीयदेवामीढनृपस्यपुत्रे । बुद्ध्यते । बुध० । इगुपधेतिक : ॥ बुद्धमुनौ ॥ सर्वज्ञ : ॥ सुगतोबुध : ॥ इ० व्याडिकोष: ॥

बुधगृहम् । न० मिथुनराशौ ॥ कन्याराशौ ॥ बुधस्यगृहम् ।

बुधचार : । पुं० पश्यचाराहीम् ॥

बुधतात : । पुं० विधौ । चन्द्रे ॥

बुधरत्नम् । न० मरकतमणौ ॥

बुधराशि: । पुं० मिथुने । कन्यायाम् ॥

बुधसुत : । पुं० पुरूरवसि ॥

बुधा । स्त्री० जटामांस्याम् ॥

बुधान : । पुं० गुरौ । जीवे । बृहस्पतौ ॥ त्रि० विज्ञे ॥ ब्रह्मवादिनि ॥ प्रियवादिनि ॥ बुध्यते० बोधयति वा । बुध० । युधिबुधिदृश : किच्चेत्यानच् ॥

बुधाष्टमी । स्त्री० व्रतविशेषे ॥ पतङ्गेमकरेयातिदेवेनारायणेमाधवे । बुधाष्टमींप्रकुर्वीतवर्जयित्वातुचैत्रकम् ॥ प्रसुप्ते चजगन्नाथेसन्ध्याकालेमधौतथा । बुधाष्टमींनकुर्वीतकृतंनाशयतिपुराकृतम् ॥

बुधित : । त्रि० ज्ञाते । बुद्धे । विदिते ॥ बुध्यतेस्म । बुध०भ्वादि : सेट् । क्त : ॥

बुधिन : )
बुधिल : ।) त्रि० पण्डिते ॥

बुध्न: । पुं० मूले ॥ रुद्रे । गिरिशे ॥ बध्नाति० बध्यतेवा । नञ्बन्धने । बन्धेर्ब्रधिबुधीचेतिनक् ॥ वर्तुले । यथा । पृथुबुध्नोदराकारोघटइति ॥

बुभुक्षा । स्त्री० क्षुधि । अशनायायाम् ॥ भोक्तुमिच्छा । भुजपालनाभ्यवहारयो : । धातो : कर्मणइतिसन् । अप्रत्ययादित्य : । टाप् ॥

बुभुक्षित : । त्रि० क्षुधार्ते । क्षुधिते ॥ बुभुक्षासञ्जाताऽस्य । तारकादित्वादितच् ॥

बुभुक्षु : । त्रि० संसारभोगासक्तजने ॥

बुभुत्सा । स्त्री० बोद्धुमिच्छायाम् ॥

बुभूषु : । त्रि० भवितुमिच्छौ ॥ भुव : सन्नन्तादुप्रत्यय : ॥

बुम्बारव : । पुं० हस्तमुखयोगेनक्रियमाणेशब्दे ॥ कस्मिंश्चिदनर्थेसम्प्राप्तेएतंशब्दंलोका : कुर्वन्ति । यथा । गत्वादैत्यपतिंसर्वेचक्रुर्बुम्बारवंमुहु : । रक्षरक्षमहाराजभक्षयत्यद्यकालिकेतिशुम्भंप्रतिरणात् पराहत्यागतानां दैत्यानामुक्तिर्भाग

वते ॥ वोंवी इ० भा० ॥
वुलिः । स्त्री० भगे ॥
वुषम् । न० वुसे ॥
वुसम् । न० तुच्छधान्ये । कडङ्करे ।
भुस० भूसा० इ० भा० ॥ वुस्यति
वुस उत्सर्गे । इगुपधेतिकः ॥
वुस्तः । पुं० न० मांसपिण्डविशेषे ॥
स्थालीभृष्टमांसे ॥ पनसादिफलस्या
सारभागे ॥ वुस्यतेस्म । वुस० ।
क्तः ॥
वृद्ध । पुं० पश्चान्तस्थादिम् ॥
बृहच्चञ्चुः । पुं० महाचञ्चुशाके ॥
बृहच्चित्तः । पुं० बीजपूरे ॥
बृहच्छल्कः । पुं० चिङ्गटमत्स्ये ॥
बृहच्छदः । पुं० दार्वाघाटे । काठको
रवा० इ० भा० ॥
बृहच्छ्रवाः । त्रि० महायशसि ॥
बृहच्छ्लोकः । पुं० भगवतिवासुदेवे ।
बृहन्तः श्लोकाः कवीनांपद्यानिय
स्मिन् ॥
बृहज्जीरकः । पुं० कृष्णजीरके ॥
मंगरेलाइतिलोकेइतिभावप्रकाशः ॥
बृहज्जीवन्ती । स्त्री० वृक्षविशेषे ।
पत्रभद्रायाम् । जीवपुष्टायाम् ॥
बृहड्ढक्का । स्त्री० दण्डढक्कायाम् ॥
बृहत् । त्रि० महति ॥ बर्हति । बृह
द्धौ ॥ वर्तमानेपृषद्बृहन्महज्ज
गच्छतृवच्चेत्यतिप्रत्ययान्तोनिपाति
तः ॥ ब्रह्मणि ॥ बृहत्त्वाद्बृंहणत्वा

च्चब्रह्मबृहत् । अत्रापिप्रत्ययेनहेतु
कर्तृसाधारणकर्तृत्वसामान्यंप्रति
पाद्यते । बर्हतिवृद्धिंप्राप्नोतिबृंह
यतिवर्द्धयतिचेतियोगात् । तथाच
बृहिधात्वर्थवृद्धिंप्रतिकर्ताहेतुकर्ता
चेत्युभयमपिकर्तृत्वेनरूपेणलभ्य-
तइतिवर्धितावर्धयिताचेति बृह
त्पदेनोच्यते ॥ आदित्यदैवत्ये साम
विशेषे ॥ बृहत्सामतथासाम्नामिति
भगवदुक्तेः ॥
बृहतांपतिः । पुं० सुराचार्ये ॥
बृहतिका । स्त्री० उत्तरीये । उपरिव
स्त्रे । उपर्ना० इ० भा० ॥ बृहती
वसनान्तरे०बृहत्येव । बृहत्याआच्छा
दने० इतिकन् ॥ कण्टकार्याम् ॥
बृहती । स्त्री० वसनान्तरे ॥ वारिधा
न्याम् ॥ वाचि ॥ विततायाम् ॥
महत्याम् ॥ क्षुद्रायांक्षुद्रवार्ताक्याम्
बृहतीतिनिगद्यते । स्वैतक्षुद्राचन्द्र
हासालक्ष्मणाचेत्रदूतिका ॥ गर्भदाच
न्द्रभाचन्द्राचन्द्रपुष्पाप्रियङ्करी ॥ बृह
तीग्राहिणीहृद्यापाचनीकफवातहृ
त् । कटुतिक्ताऽस्यवैरस्यमलारोचक
नाशिनी । उष्णाकुष्ठज्वरश्वासशूल
कासाग्निमान्द्यजित् ॥ कण्टकार्याम्
॥ विश्वावसोर्वीणायाम् ॥ नान्तरा
यांवृत्तौ ॥ बर्हति । बृह० । वर्तमा
नेपृषदितिसाधुः । ऋतउक्त्वान्ङी
प् ॥

बृहतीपति: । पुं० बृहस्पतौ ॥

बृहतीसहस्रम् । न० महत्युक्थे ॥

बृहत्कन्द: । पुं० गृञ्जने ॥ विष्णुकन्दे ॥

बृहत्कालशाक: । पुं० कासमर्दान्तरे ॥

बृहत्काश: । पुं० पोटगले ॥

बृहत्कुक्षि: । त्रि० तुन्दिले ॥ विशालजठरेजने ॥ बृहत्कुक्षिरस्य ॥

बृहत्ताल: । पुं० पाठायाम् ॥

बृहत्तृण: । पुं० वंशे ॥

बृहत्त्वक् । पुं० सप्तपर्णे ॥ रोध्रे ॥ ग्रहनाशनवृक्षे । छातियान् इ० भा० ॥

बृहत्पञ्चमूलम् । न० पञ्चमूले ॥

बृहत्पत्र: । पुं० दीर्घपत्रे ॥ पट्टिकालोध्रे ॥ हस्तिकन्दे ॥

बृहत्पत्रा । स्त्री० त्रिपर्णिकायाम् ॥

बृहत्पाटलि: । पुं० धुस्तूरे ॥

बृहत्पाद: । पुं० वटवृक्षे ॥

बृहत्पारेवतम् । न० महापारेवते ॥

बृहत्पाली । पुं० वनजीरे ॥

बृहत्पीलु: । पुं० महापीलौ ॥

बृहत्पुष्प: । पुं० कुष्माण्डे ॥

बृहत्पुष्पी । स्त्री० घण्टारवायाम् ॥

बृहत्फल: । पुं० पनसे ॥ कूष्माण्डे ॥ चचेण्डायाम् ॥

बृहत्फला । स्त्री० कटुतुम्ब्याम् ॥ महेन्द्रवारुण्याम् ॥ कूष्माण्डयाम् ॥

महाजम्ब्वाम् ॥

बृहत्साम । न० गीतिविशेषे ॥

बृहदङ्ग: । पुं० मतङ्गजे ॥

बृहदम्ल: । पुं० कर्माकरे । कर्मरङ्गे ॥

बृहदारण्यकम् । न० यजुर्वेदीयोपनिषद्विशेषे ॥ यथा । अरण्येऽध्यापनादेतदारण्यकमुदाहृतम् । बृहत्त्वाद्ग्रन्थतोऽर्थाच्च बृहदारण्यकं मतम् ॥ बृहच्चतदारण्यकञ्चेति विग्रह:॥

बृहदेला । स्त्री० पृथ्वीकायाम् । स्थूलैलायाम् ॥

बृहद्गृहा: । पुं० )भ० कारूषदेशेषु ॥ विन्ध्या

बृहद्गृहा: । पुं० ) ट्रि: पश्चान्मालवदेशस्य समीपेतिदेशावर्तन्ते ॥

बृहद्गोलम् । न० तरम्बुजे । तरबूज इ० भा० ॥

बृहद्दल: । पुं० पट्टिकालोध्रे ॥ हिन्ताले ॥

बृहद्दलम् । न० हलौ । जित्यायाम् ॥

बृहद्दारिका । स्त्री० दुर्गायाम् ॥

बृहद्भानु: । पुं० अनले । वह्नौ ॥ बृहन्तोभानवोस्य ॥ चित्रके ॥

बृहद्रथ: । पुं० पराशरशिष्ये । शार्ङ्गरवे ॥ इन्द्रे ॥ यज्ञपात्रे ॥ मन्त्रविशेषे ॥ सामवेदांशे ॥

बृहद्रावी । पुं० क्षुद्रोलूके ॥

बृहद्वनम् । न० गोकुले ॥ महद्वने ॥

बृहद्वल्क: । पुं० पट्टिकालोध्रे ॥

बृहद्वात: । पुं० अश्मरीहरे । देवधा

न्ये ॥

बृहद्वारुणी । स्त्री० महेन्द्रवारुण्याम् ॥

बृहद्वीज : । पुं० आम्रातके ॥

बृहन्नल : । पुं० महापोटगले ॥ अर्जुने । सुभद्रेशे ॥

बृहन्नला । स्त्री० अर्जुने ॥ द्वादशवर्षवनवासानन्तर मज्ञातवासे विराटभवने विराटकन्यायान्नृत्यगीतादिशिक्षार्थं स्त्रीक्लीववेशेनार्ज्जुनो बृहन्नलेति नाम्नाख्यातो ऽ भूत् । यथा । अर्जुनउवाच । गायामिनृत्याम्यथवादयामि भद्रोस्मिनृत्ये कुशलोस्मिगीते । त्वमुत्तरायैप्रदिशस्वमांस्वयंभवामिदेव्यानरदेवनर्त्तक : ॥ इदन्तुरूपंममयेनकिन्तवप्रकीर्त्तयित्वा भृशशोकवर्द्धनम् । बृहन्नलांमांनरदेववुद्धिसुतंसुतांवापितमातवर्ज्जिताम् ॥ विराटउवाच । ददामितेहन्तवरंबृहन्नलेसुतांचमेनर्त्तययाश्वतादृशी : ॥ इतिमहाभारते विराटपर्वे ॥

बृहस्पति : । पुं० सुराचार्ये । गीष्पती ॥ पंचमवारे ॥ तद्वारजातफलम् । नृपेन्द्रमन्त्रीनृपलब्धकामोविद्याविनोदीचतुर : प्रगल्भ : । आचार्यपूज्योमधुरस्वभावोवारेभवेद्देववगुरोर्मनुष्य : ॥ बृहताम्पति : । तद्वृहतोरितिसुट्तलोपौ ॥

बृहस्पतिगृहम् । न० धनूराशौ ॥ मीनराशौ ॥

बेटक : । पुं० वैकटिके , मणिकारे ॥ मत्स्यप्रभेदे । भेकटी० इ० गौ० दे० भा० ॥ यूनि । जातताम्ये ॥ विदूषके ॥

बेढमिका । स्त्री० वेढमी० वेढञी० इ० भा० प्र० खाद्ये ॥ यथा । माषपिष्टिकयापूर्णगर्भागोधूमचूर्णत : । रचितारोटिकासैवप्रोक्तावेढमिकाबुधै : ॥ भवेद्वेढमिकावल्याबृष्यारुच्यानिलापहा । उष्णासन्तर्पणीगुर्वीबृंहणीशुक्रलापरम् ॥ भिन्नमूत्रमलास्तन्य मेद : पित्तकफप्रदा । गुदकीलार्दितश्वासपंक्तिशूलानिनाशयेत् ॥ पङ्क्तीत्यत्र० यकृदिति पाठान्तरम् ॥

बोकडी । स्त्री० वस्तान्त्याम् ॥

बोद्धव्य : । त्रि० ज्ञातव्ये । प्रतिपाद्ये ॥

बोद्धा । त्रि० बोधकर्त्तरि ॥ बुद्ध्यति । बुधअवगमने । तृच् ॥

बोद्ध्यमान : । त्रि० उपदिश्यमाने ॥

बोध: । पुं० ज्ञाने ॥ यथा । बोधविहीने श्रोतरिवक्तु र्वाक्यंप्रयातिवैफल्यम् । नयनविहीने भर्त्तरिलावण्यमिवस्वञ्जनाचीणामिति ॥ साक्षान्मोक्षसाधने ज्ञाने ॥ यथा हरा

चार्या : । बोधोन्यसाधनेभ्योहिंसा चान्मोक्षैकसाधनम् । पाकस्यवह्निवत् ज्ञानं बिनामोक्षोनसिद्ध्यतीति ॥ वृत्तिज्ञाने ॥ जागरणकाले चैतन्ये ॥ निर्णयात्मकज्ञाने ॥ आत्मसाक्षात्कारे ॥ प्रमाणेनयश्चेतनाशक्तेरनुग्रहस्तत्फलंप्रमाबोधद्गतिसाङ्ख्याः । बोधनम् । बुध ० । बुद्ध्यतेयेनवाघञ् ॥

बोधक : । पुं० सूचके । प्रमाणे ॥ त्रि० बोधकर्त्तरि ॥ बोधजनके ।

बोधकर : । पुं० निशान्ते बोधकारकेस्तुत्यादिनाप्रातर्बोधके ।। बोधं करोति । डुकृञ् ० । कृञोहेत्विति टः ॥

बोधज्ञ : । पुं० श्रीकृष्णे ॥ य० । सर्वभावविदांश्रेष्ठोबोधज्ञ : कामशास्त्रवित् । कामिनींबोधयामासवामयामासवक्षसि ॥ त्रि०अभिप्रायाभिज्ञे ॥

बोधद : । पुं० अर्हति ॥ त्रि०बोधदातरि ॥

बोधनम् । न० गन्धदीपने ॥ विज्ञापने ॥ वेदने ॥

बोधनी । स्त्री० कार्त्तिकशुक्लैकादश्याम् ॥ बोधी ॥ पिप्पल्याम् ॥ शिवचक्रेपुकैलासादुपरिस्थे ॥

बोधनीय : । त्रि० बोध्ये । बोधितव्ये । बोधयोग्ये ॥

बोधभानु : । पुं० ज्ञानार्के ॥ यथा । सततमसिमोहरूपे विश्वमपश्यन्तदेतदिह्यखिलम् । उदितवतिबोधभानौकिमपिनपश्यामिकिञ्चिदंचिन्नम् ।

बोधवासर : । पुं० भगवत: प्रबोधदिने । उत्थानैकादश्याम् ॥

बोधात्मा । पुं० ज्ञानस्वरूपे ०परमात्मनि । यथा । कदाचिद्व्यवहारेतु द्वैतंयद्यपि श्यति । बोधात्मर्यतिरेकेणनपश्यतिचिदन्वयात् ॥ किन्तु पश्यतिमिथ्येवदिङ्मोहेन्दुविभागवत् ॥

बोधायन : । पुं० ऋषिविशेषे । ज्योतिष्टोमादियज्ञपरमार्थशादिनि ॥

बोधि : । पुं० बौद्धसमाधौ ॥ पिप्पलपादपे । बोधे ॥ त्रि०ज्ञातरि ॥ बुद्ध्यते । बुध० । सर्वधातुभ्यइन् ॥

बोधित : । त्रि० ज्ञापिते ॥ सञ्जातबोधे ॥ ता० इतच् ॥

बोधितरु : । पुं० अश्वत्थद्रुमे ॥ बोधिश्चासौतरुश्च ॥

बोधितव्य : । त्रि० ज्ञापितव्ये ॥

बोधिद्रुम : । पुं० पिप्पलवृक्षे ॥ बोधिश्चासौद्रुमश्च ॥

बोधिवृक्ष: । पुं० अश्वत्थे । चलदले ॥

बोधिसत्त्वम् । न० बुद्धे । श्रीघने ॥

बौद्ध: । पुं० बुद्धशास्त्रावलम्बिनि ॥

भिन्नके । क्षपणे । अर्हतके । वैनाशिके । अस्तिनास्तीत्यादिसप्तप्रकारैः पदार्थानामनेकरूपत्ववादिनि विवसने । वैशेषिके ॥ न० बुद्धमुनिप्रणीतेनिरीश्वरशास्त्रे ॥ त्रि० बुद्धिभवेप्रत्यये ॥
बौद्धैकदेशी । पुं० बाह्यास्तित्ववादिनि ॥
बौध : । पुं० पुरूरवसि ॥ बुधस्याऽपत्यम् । अण् ॥
ब्रतति : । स्त्री० लतायाम् ॥ विस्तारे ॥ ब्रजन्तीततिर्विस्तृतिरस्याः । पृषोदरादिः ॥ यद्वा । प्रतनोति । तनु० । क्तिच्क्तौचसंज्ञायामितिक्तिच् । पृषोदरादित्वात्पस्यबः ॥ व्रतमिवकरोति । व्रतशब्दात्० तत्करोतीतिण्यन्ताद्बाहुलकात्क्तिर्वा ॥
ब्रतती । स्त्री० वल्ल्याम् । लतायाम् ॥ विस्तारे ॥
ब्रध्न : । पुं० सूर्ये ॥ वृक्षमूले ॥ गिरिशे । रुद्रे । अर्कवृक्षे ॥ बध्नाति । बन्ध० । बन्धेर्ब्रधिबुधीचेतिनक्० धातोर्ब्रधादेशश्च ॥ रोगविशेषे ॥
ब्रह्मकन्यका । स्त्री० सरस्वत्याम् ॥ ब्राह्मीशाकोषध्यां ॥
ब्रह्मकर्म । न० ब्राह्मणजातेः कर्मणि ॥ शमोदमस्तपःशौचंक्षान्तिरार्जवमेवच । ज्ञानंविज्ञानमास्तिक्यंब्रह्मकर्मस्वभावजम् ॥
ब्रह्मकर्मसमाधि : । पुं० ब्रह्मण्येव-कर्मात्मकेचित्तैकाग्र्ये ॥ यथा । ब्रह्मार्पणंब्रह्महविर्ब्रह्माग्नौब्रह्मणाहुतिम् । ब्रह्मैवतेनगन्तव्यंब्रह्मकर्मसमाधिना ॥
ब्रह्मकल्प : । पुं० सृष्ट्युपक्रमे ॥
ब्रह्मकुण्डम् । न० ब्रह्मणानिर्मिते सरोविशेषे ॥ य० पाण्डुनाथस्योत्तरस्यां ब्रह्मकुण्डाख्यंसरः । ब्रह्मणानिर्मितंपूर्वंस्नानायस्वर्गवासिनाम् ॥ आयामेनशतव्यामंविस्तीर्णेनतदर्द्धकम् । सर्वपापहरंपुण्यंदेवलोकात्समागतं ॥
ब्रह्मकूट : । पुं० पर्वतविशेषे ॥ यथा ब्रह्मकुण्डजलेस्नात्वा पूजयित्वाउमापतिम् । ब्रह्मकूटंसमारुह्यमुक्तिमेवाप्नुयान्नरः ॥
ब्रह्मकूर्चम् । न० व्रतविशेषे ॥ तत्तुउपवासपूर्वंपञ्चगव्यपानम् । य० । अहोरात्रोषितोभूत्वा पौर्णमास्यां विशेषतः । पंचगव्यंपिबेत्प्रातर्ब्रह्मकूर्चविधिः स्मृतः ॥ इति प्रायश्चित्तविवेकः ॥
ब्रह्मकोशी । स्त्री० अजमोदायाम् ॥
ब्रह्मगर्भा । स्त्री० आदित्यभक्तायाम् ॥
ब्रह्मगिरि : । पुं० ब्रह्मशैले ॥
ब्रह्मघातक : । त्रि० ब्राह्मणवधकर्त्तरि ॥ यथा । रागाद्द्वेषात्प्रमादाच्चस्वतः

परतएवच । ब्राह्मणं घातयेद्यस्तु सभवेत्ब्रह्मघातकः ॥ अपिच । गोभूहिरण्यग्रहणे स्त्रीसम्बन्धे कृते पिवा । यमुद्दिश्यत्यजेत्प्राणांस्ताहुर्ब्रह्मघातकम् ॥

ब्रह्मघोषः । पुं० मन्त्रपाठे ॥ ब्रह्मणो वेदस्यघोषः ॥

ब्रह्मघ्नः । पुं० आत्मघातिनि ॥ यथा । भूमिजंस्वजंवापि छत्राकंभक्षयंति ये । ब्रह्मघ्नांस्तान्विजानीयाद् ब्रह्मवादिषुगर्हितान् ॥

ब्रह्मघ्नी । स्त्री० गृहकन्यायाम् ॥

ब्रह्मचर्य्यम् । न० आश्रमविशेषे ॥ गुरुकुलवासादिलक्षणेतपसि ॥ ब्रह्मचर्यस्थितोनैकमन्नमद्यादनापदि । ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥ मधुमांसंतथाश्नीलमित्यादिपरिवर्ज्जयेत् । प्रतिवेदं ब्रह्मचर्यंद्वादशाब्दानिपञ्चवा ॥ ग्रहणांतिकमित्यके० केशान्तश्चैवषोडशे ॥ सचकलौनास्त्येव । ब्रह्मचर्याश्रमोनास्ति वानप्रस्थोपिनप्रिये । गार्हस्थोभैक्षुकश्चैवआश्रमौद्वौकलौ युग इतिमहानिर्वाण तन्त्रोक्तः ॥ स्त्रीविषयतृष्णात्यागे ॥ निषिद्धमैथुननिवृत्तौ ॥ अष्टाङ्गमैथुनाभावे ॥ यथोक्तम् स्मरणं कीर्तनंकेलिः प्रेक्षणं गुह्यभाषणम् । सङ्कल्पोध्यवसायश्चक्रियानिर्वृत्तिरेवच ॥ एत



न्मैथुनमष्टाङ्गं प्रवदन्तिमनीषिणः । विपरीतं ब्रह्मचर्य मेतदेवाष्टलक्षणमिति ॥

ब्रह्मचारिणी । स्त्री० भार्य्याम् ॥

ब्रह्मचारी । पुं० प्रथमाश्रमिणि ॥ उपनयनानन्तरं नियमंकृत्वागुरोः सन्निधौस्थित्वासाङ्गवेदाध्ययनकारिणि ॥ सद्विविधः । उपकुर्वाणोनैष्ठिकश्चेति ॥ यथा । ब्रह्मचार्य्युपकुर्वाणोनैष्ठिकोब्रह्मतत्परः । योऽधीत्यविधिवद्वेदान् गृहस्थाश्रममाव्रजेत् ॥ उपकुर्वाणकोज्ञेयोनैष्ठिकोमरणान्तिकइति ॥ ब्रह्मवेदः । तदध्ययनार्थंव्रतमप्युपचाराद्ब्रह्म । ब्रह्मचरितं शीलमस्य । व्रतेइतिणि०-सुपीतिवाणिनिः ॥ यद्वा ब्रह्म० तपो०ज्ञानं वा०आचरत्यर्ज्जयत्यवश्यम् । आवश्यके०णिनिः ॥

ब्रह्मचारिणी । स्त्री० दुर्गायाम् ॥ वेदेषुचरतेयस्मात्तेनसाब्रह्मचारिणीति देवीपुराणम् ॥ करुणीवृक्षे ॥ ब्रह्मीशाके ॥ ब्रह्मचर्यव्रतधारिण्याम्

ब्रह्मजः । पुं० अग्नौ ॥ ब्रह्मणोहिरण्यगर्भाज्जाते ॥

ब्रह्मजन्मः । पुं० अग्नौ ॥ ब्रह्मजन्मासौजन्म ॥

ब्रह्मजन्म । न० उपनयनजन्मसंस्काररूपे ॥ ब्रह्मणोवेदस्यग्रहणार्थं जन्म ॥

ब्रह्मजटा । स्त्री० दमनकवृक्षे ॥

ब्रह्मजिज्ञासा । स्त्री० ब्रह्मविचारायेच्छायाम् ॥

ब्रह्मजीवी । पुं० द्विजकार्येषु मूल्येन परिचारके ॥

ब्रह्मज्ञ: । त्रि० ब्रह्मविदि ॥ ब्रह्म जानाति । ज्ञा० । आतइतिकः ॥ यथा । सब्रह्मज्ञ: सवेदज्ञ: सोऽग्निहोत्रीसदीक्षित: । चीनाचार क्रमाचारैर्योयजेत् तारिणींनर: ॥ अपिच । सांसारिकसुखासक्तं ब्रह्मज्ञोस्मीतिवादिनम् । त्यजेत्तंसततंवीरचण्डालमिवदूरत: ॥ इति श्रीरुद्रयामलवचनम् ॥ न० श्रीकृष्णे । परमात्मनि ॥ ब्रह्मशब्दार्थभूतान्वेदान्प्रलयेप्रलयेस्वात्मनिप्रलीनान्सृष्ट्यादौहिरण्यगर्भोपदेशार्थंजानात्यनुसन्धत्ते इतितथा ॥

ब्रह्मज्ञानम् । न० ब्रह्मविषयकज्ञाने इतिसमञ्जसावृत्ति: ॥ मिथ्यावासनाविरहविशिष्टआत्मभिन्नभिन्नज्ञाने० इतिमुक्तिवाद: ॥ प्रकृतिपुरुषयोर्विवेकविषयज्ञाने० इतिसांख्यमतम् ॥ क्लेशकर्मविपाकाशयनिवर्तकहिरण्यगर्भविषयकेज्ञाने० इतिपातञ्जलमतम् ॥ तत्त्वमस्यादिवाक्यजन्यप्रतिफलितवृत्त्यारूढज्ञाने इतिवेदान्तलघुचन्द्रिका ॥ प्रत्यक्तयापरोक्षज्ञाने ॥ प्रतिबोधमवभासाश्रितप्रतिबिम्बास्तेषां प्रत्यगात्मतयाऽव्यभिचरितस्वरूपेण बिम्बस्थानीयेनैकेनरूपेणयद्ब्रह्मवेदनं तद्ब्रह्मज्ञानम्० तदेवसम्यग्दर्शनमितिव्याख्यातार: ॥

ब्रह्मज्ञानी । त्रि० ब्रह्मज्ञानविशिष्टे ॥ यथा । कुशलाकुशलाद्वृत्तिरहित: समदर्शन: । लिङ्गाश्रमपरित्यागीब्रह्मज्ञानीनिगद्यते ॥ कृष्णभक्तिस्तुतेनापिकर्तव्येति पुराणगी: ॥ यथा । ब्रह्मानन्देनपूर्णोहंतेनानन्देनपूर्णधी: । तथापिशून्यमात्मानंमन्ये कृष्णरतिंविना ॥ इति पाद्मे पातालखण्डे जाबालिंप्रतिब्रह्मविद्यावचनम् ॥

ब्रह्मण्य: । पुं० विष्णौ ॥ ब्रह्मदारुवृक्षे ॥ शनैश्चरे ॥ मुञ्जतृणे ॥ तूलवृक्षे ॥ त्रि० ब्रह्मसाधौ ॥ ब्रह्मरते ॥ ब्रह्मणिवैदिके० साधु: । तत्रसाधुरितियत् । येचाभावकर्मणोरित्यन्प्रकृत्या ॥ ब्रह्महिते ॥ तपोवेदाश्चजातिश्च ज्ञानञ्चब्रह्मसंज्ञितम् । तेभ्योहित: । खलयवमाषतिलवृषब्रह्मणश्चेतियत् ॥

ब्रह्मण्यदेव: । पुं० श्रीकृष्णे ॥

ब्रह्मताल: । पुं० चतुर्मुखताले ॥ सतुदशतालात्मिक: । तत्र ७ मात्रा: । मात्रातु० क च ट त पु० इतिपञ्चाक्षराणामुच्चारणकाल: ।

सैवलघुमात्रा । तदर्द्धं द्रुतमात्रा । तन्मध्ये ४ लघवः ६ द्रुताः० । ० । ०० । ००० । यथा । चतुर्मुखाभिधितालेजगणानन्तरंद्रुतः । इति सङ्गीतदामोदरः ॥

ब्रह्मतीर्थम् । न० पुष्करतीर्थे ॥ पुष्करमूले ॥ ब्राह्मेतीर्थे ॥ तीर्थविशेषे ॥

ब्रह्मत्वम् । न० ब्रह्मभूये । ब्रह्मसायुज्ये ॥ ब्रह्मणोभावः । तस्यभावस्त्वतलौ ॥ ब्रह्मणोऽर्त्विग्विशेषस्यकर्मभावयोः ॥ ब्रह्मत्वः । नेतिवाच्ये० त्ववचनंतलोबाधनार्थम् । ब्राह्मणपर्यायात्ब्रह्मन्शब्दात्त्वतलौभवतएव । ब्रह्मत्वम्० ब्रह्मता ॥

ब्रह्मदण्डः । पुं० ब्राह्मणशापे ॥ वशिष्ठमुनेः सिद्धयष्टाम् ॥ यथा । धिग्बलंक्षत्रियबलं०ब्रह्मतेजोबलंबलम् । एकेनब्रह्मदण्डेन सर्वोनाशितामम ॥ पाशे ॥ केतुविशेषे ॥ उक्तंचनारदसंहितायाम् । पितामहात्मजः क्रूरस्त्रिवर्णशिखिरान्वितः ब्रह्मदण्डोऽह्वयंकेतुः सर्वभूतविनाशनः ॥ इति ॥ ब्राह्मणयष्टिकायाम् ॥

ब्रह्मदण्डी । स्त्री० चुद्रक्षुपविशेषे ॥ अजदण्डाम् कण्टपत्रफलायां ॥

ब्रह्मदत्तः । पुं० इक्ष्वाकुवंशीयराजविशेषे । ब्रह्मसूनौ ॥

ब्रह्मदर्भा । स्त्री० यमान्याम् ॥ अजमोदायाम् ॥ ब्रह्मणादर्भ्यते । दृभीग्रन्थे । घञ् । कर्तृकरणेकृतेतिसमासः ॥

ब्रह्मदर्भिका । स्त्री० यमान्याम्

ब्रह्मदारु । न० स्वनामाख्यातेऽश्वत्थाकारवृक्षविशेषे । तूदे । पूगे । क्रमुके । ब्रह्मण्ये । अश्वत्थाकारे पार्श्वपिप्पलइतिख्याते । तूत इ० भा० ॥ ब्रह्मणो० ब्रह्मणिवा० दारु ॥

ब्रह्मदेया । स्त्री० ब्राह्मविवाहेनोढायाम् ॥

ब्रह्मदैत्यः । पुं० प्रेतयोनिप्राप्तब्राह्मणे ॥

ब्रह्मद्विट् । त्रि० ब्राह्मणानांद्वेष्टरि ॥ ब्राह्मणान्द्वेष्टि । द्विष्० । क्विप् ॥

ब्रह्मा । पुं० चतुर्मुखे । वेधसि । विश्वसृजि । हिरण्यगर्भे ॥ तदण्डमभवद्धैमंसहस्रांशुसमप्रभम् । तस्मिन्जज्ञेस्वयंब्रह्मासर्वलोकपितामहः ॥ ऋत्विग्विशेषे ॥ विष्कम्भादिसप्तविंशतियोगान्तर्गतपंचविंशयोगे ॥ तत्रजातस्यफलम् । नानाशास्त्राभ्याससंजातकालोवर्णाचारैः संयुतश्चारुकीर्तिः । शान्तोदान्तोजायतेचारुकर्मामर्त्योयस्यब्रह्मयोगप्रयोगः ॥ इति॥विप्रे । ब्राह्मणे ॥ अर्हदुपास

कविशेषि ॥ बृंहति॰वर्द्धयतिप्रजाः । बृंहितवरे । ब्रह्मभाविततगर्थः । बृंहेर्नोच्चेति॰ मनिन्॰धातोर्नस्या द्यादेशः ॥ बृंहति॰वर्द्धते वा ॥

ब्रह्म । न॰ वेदे ॥ तपसि ॥ अव्यक्ते । सर्वकारणकारणे॰ परमात्मनि ॥ यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् । तद्विसृष्टः सपुरुषोलोके ब्रह्मेतिकीर्त्यते ॥ अध्यात्मे ॥ ज्ञाने ॥ तपोवेदाश्चज्ञानिचज्ञानंचब्रह्मसंज्ञितम् ॥ प्रत्यस्तमितभेदंयत्सत्तामात्रमगोचरम् ॥ वचसामात्मसंवेद्यंतज्ज्ञानंब्रह्मसंज्ञितम् ॥ इ॰ वि॰ पु॰ ॥ बृहत्त्वाद्बृंहणत्वाद्वासत्यज्ञानादिलक्षणम् । ब्रह्मानन्तंहि विज्ञेयंशास्त्राचार्योपदेशतः ॥ साक्षादपरोक्षात्सर्वान्तरे॰ आत्मनि॰ अशनायाद्यतीते॰नेतिनेत्यस्थूलमनणिवर्ह्वेवमादिलक्षणे॰औपनिषदे तत्वे अव्यावृत्ताननुगतंवस्तुब्रह्मगिरोच्यते । अकारणमकार्यन्तदित्यनेनोदितंभवेत् ॥ अव्यावृत्तपदेन॰अकार्यम् । अननुगतपदेन॰वस्तुतोऽकारणमितितत्रोक्तंभवतीत्यर्थः ॥ नव्यावृत्तं विशेषेभ्योनानुवृत्तञ्चगोत्ववत् । अव्यावृत्ताननुगतंचैतन्यंकेन वीक्ष्यताम् ॥ तदिदंतादृशमीदृशमेतावत्तावदितिचयन्नभवेत् । ब्रह्मतदित्यवधेयंनोचेद्विषयोभवेत्परो



क्षम् ॥ यन्नाभान्नपरोलाभोयत्सुखान्नापरंतुसुखम् । यज्ज्ञानान्नापरंज्ञानंतद्ब्रह्मेत्यवधारयेत् ॥ यद्दृष्ट्वानापरंदृश्यंयद्भूत्वानपुनर्भवः । यज्ज्ञात्वानापरंज्ञेयंतद्ब्रह्म॰ ॥ तिर्यगूर्द्ध्वमधः पूर्णंसच्चिदानन्दमद्वयम् अनन्तंनित्यमेकंयत्तद्ब्रह्म॰ ॥ अतद्व्यावृत्तिरूपेणवेदान्तैर्लक्ष्यतेऽद्वयम् । अखण्डानन्दमेकंयत्तद्ब्रह्म॰ ॥ दृश्यतेश्रूयतेयद्यद्ब्रह्मणोन्यन्नतद्भवेत् । तत्वज्ञानाच्चतद्ब्रह्मसच्चिदानन्दमद्वयम् ॥ सर्वगंसच्चिदात्मानंज्ञानचक्षुर्निरीक्षते । अज्ञानचक्षुर्नेक्षेतभास्वन्तंभानुमन्धवत् ॥ इत्यादि ॥ ब्रह्मचतुर्विधम् । यथा । विराट् १ हिरण्यगर्भः २ ईश्वरः ३ तुरीय ४ । इतिभेदात् ॥ अपिच । सत्यमानन्दमद्वयममृतमेकरूपं वाङ्मनसागोचरंसर्वगंसर्वातीतंचिदेकरसंदेशकालापरिच्छिन्नमपादमपिशीघ्रगमपाणिचसर्वग्रहमचक्षुरपिसर्वदृष्ट॰अश्रोत्रमपिसर्वश्रोतृ॰अचिन्त्यमपिसर्वज्ञसर्वनियन्तृसर्वशक्तिसर्वेषांसृष्टिस्थितिप्रलयकर्तृकिमपिवस्तुब्रह्मेतिवदन्ति ॥ तच्चशुद्धबुद्धस्वभावइत्यौपनिषदाः । १ । आदिविद्वान्सिद्धइतिकापिलाः । २ । क्लेशकर्मविपाकाशयैरपरामृष्टोनिर्मा-

बृहम

यथायमधिष्ठासम्प्रदायप्रद्योतकोऽनु ग्राहकश्चेतिपाशुपताः । ३ । लोक वेदविरुद्धश्चापिनिर्लेपःस्वतन्त्रश्चेतिम हापाशुपताः । ४ । शिवइतिशैवाः पुरुषोत्तम इ० वैष्णवाः । ६ । पितामहइतिपौराणिकाः । ७ । यज्ञपुरुषइतियाज्ञिकाः ८ । स र्वज्ञइतिसौगताः । ९ । निरावर णमितिदिगम्बराः । १० । उपास्य त्वेनदेशितइतिमीमांसकाः । ११ । लोकव्यवहारसिद्धइतिचार्वाकाः । १२ । यावदुक्तोपपन्नइतिनैयायिका । १३ । विश्वकर्मेतिशिल्पिनः । । १४ । इतिकुसुमांजलिः ॥ वि- श्वेशे० परमेश्वरे० विश्वात्मनि० वि- श्वाश्रये ॥ सएकएवसद्रूपः सत्यो हैतपरात्परः । स्वप्रकाशःसदापूर्णः सच्चिदानन्दलक्षणः ॥ निर्विकारोनि राधारोनिर्विशेषोनिराकुलः गु णातीतः सर्वसाक्षीसर्वात्मासर्वदृ ग्विभुः ॥ गूढः सर्वेषुभूतेषुसर्व व्यापीसनातनः । सर्वेन्द्रियगुणा भासः सर्वेन्द्रियविवर्जितः ॥ लोकातीतोलोकहेतुरवाङ्मनसगो चरः । सवेत्तिविश्वंसर्वज्ञस्तंनजा नातिकश्चन ॥ तदधीनंजगत्सर्वंत्रै लोक्यंसचराचरम् । तदालम्बनत स्तिष्ठेदवितर्क्यमिदंजगत् ॥ तत्सत्य तामुपाश्रित्यसद्वद्भातिपृथक्पृथक् ॥

बृहम

तेनैवहेतुभूतेनवयंजातामहेश्वरि । कारणंसर्वभूतानांसएकः परमेश्व रः ॥ लोकेषुसृष्टिकरणात्स्रष्टाब्र ह्मेतिगीयते । विष्णुः पालयिताहे विसंहर्ताहंतदिच्छया ॥ इन्द्रादयो लोकपालाः सर्वेतद्वशवर्तिनः । स्वेस्वेधिकारेनिरतास्तेशासन्तित- दाज्ञया ॥ त्वंपराप्रकृतस्तस्यपूज्यासि भुवनत्रये । तेनान्तर्यामिरूपेणतत् तद्विषययोजिताः ॥ स्वस्वकर्मप्र कुर्वन्तिनस्वतन्त्राः कदाचन ॥ यद्भ याद्वातिवातोपिसूर्यस्तपतियद्भयात् । वर्षन्तितोयदाः कालेपुष्प्यन्तितरवो वने ॥ कालंकालयतेकालेमृत्योर्मृ त्युर्भियोभयम् । वेदान्तवेद्योभगवा न्तत्तत्तच्छब्दोपलक्षितः ॥ सर्वेदे वाश्चदेव्यश्चतन्मयाः सुरवन्दिते । आब्रह्मस्तम्बपर्यन्तंतन्मयंसकलंजग त् ॥ तस्मिँस्तुष्टे जगत्तुष्टंप्रीणिते प्रीणितंजगत् ॥ । तदाराधनतोदेवि सर्वेषांप्रीणनंभवेत् ॥ तरोर्मूलाभि षेकेणयथातद्भुजपल्लवाः । तृप्यन्ति तदनुष्ठानात्तथासर्वेमरादयः ॥ यथातदर्चनाद्ध्यानात्पूजनाज्जप नात्प्रिये । भवन्तितुष्टाः सुंदर्यस्त थाजानीहिसुव्रते ॥ यदागच्छन्तिस रितोऽवशेनापिसरित्पतिम् । तथा चाहोमिकर्माणितदुद्देश्यानिपार्व- ति ॥ योयोयान्यान्यजेद्देवान्भक्त्या

यथायद्यदाप्नये । ततत्तद्दातिसौख्य चलाः सर्वदेवगणैः शिवे ॥ बहुनात्र किमुक्तेन तवाग्रे कथ्यते प्रिये । ध्येयः पूज्यः सुखाराध्यस्तं विना नास्ति मुक्तये ॥ नायासो नोपवासश्च कायक्लेशो न विद्यते । नैवाचारादि नियमो नोपचाराश्च भूरिशः ॥ न दिक्कालविचारोऽस्ति न मुद्रान्यास संहतिः । यत्साधने कुलेशानि तं विना कोऽन्यमाश्रयेत् ॥ इति श्रीमहानिर्वाणतन्त्रे सर्वधर्मनिर्णयसारे श्रीमदाद्या सदाशिवसंवादे जीवनिस्तारोपायप्रश्नोत्तरद्वितीयोल्लासे परब्रह्मोपासनोपक्रमः ॥ अपिच । श्रीसदाशिव उवाच । श्रेयं भवति तद्ब्रह्म सच्चिद्विश्वमयं परम् । यथातत्त्वस्वरूपेण लक्ष्यते वा महेश्वरि ॥ सत्तामात्रं निर्विशेषमवाङ्मनसगोचरम् । असत्त्रिलोकीसद्भानं स्वरूपं ब्रह्मणः स्मृतम् ॥ समाधियोगैस्तद्वेद्यं सर्वत्र समदृष्टिभिः । द्वन्द्वातीतैर्निर्विकल्पैर्देहात्माध्यासवर्जितैः ॥ यतो विश्वं समुद्भूतं येन जातं च तिष्ठति । यस्मिन् सर्वाणि लीयन्ते ज्ञेयं तद्ब्रह्म लक्षणैः ॥ स्वरूपबुद्ध्या यद्वेद्यं तदेव लक्षणैः शिवे । लक्षणाप्तुमिच्छूनां विहितं तत्र साधनम् ॥ इति ॥ महानिर्वाणतन्त्रे तु शिवेनोक्तं हि साधनम् । तत्तत्स्मादवगन्तव्यं ते

ननिःश्रेयसं भवेत् ॥ इति वर्त्ते निरयमस्त्वलक्षणविमानं भवति । इति । इदं तैर्नीच्छे तिमनिन्० नु मौनस्थाकारादेशश्च ॥

ब्रह्मनालम् । न० काश्यां चक्रतीर्थस्य पूर्वभागे पितामहेश्वरलिङ्गस्याधस्तीर्थविशेषे ॥

ब्रह्मनिर्वाणम् । न० ब्रह्मणि निर्वृतौ ॥ मोक्षे ॥ ब्रह्मपरमानन्दरूपम्० कल्पितद्वैतोपशमरूपत्वे न निर्वाणं तदेव० कल्पितभावस्याधिष्ठानात्मकत्वात् ॥

ब्रह्मनिष्ठः । त्रि० कृतब्रह्मसाक्षात्कारे ॥ हित्वा सर्वाणि कर्माणि केवले ऽद्वये ब्रह्मणि० निष्ठा तदेकपरता यस्य सः ॥

ब्रह्मनिष्ठत्वम् । न० औपनिषद्ब्रह्मात्मविज्ञानपरिपूर्णत्वे । वेदान्तवेद्य ब्रह्मात्मनावस्थितत्वे ॥

ब्रह्मपर्वम् । न० पलाशच्छदे । ढाकका पत्ता इ० भा० ॥

ब्रह्मपथः । पुं० सत्यलोकस्थ ब्रह्मणः प्राप्तिमार्गे ॥ गन्तव्ये न ब्रह्मणोपलक्षितः पन्था ब्रह्मपथ उच्यते ॥

ब्रह्मपर्णी । स्त्री० पृश्निपर्ण्याम् ॥

ब्रह्मपवित्रः । पुं० कुशे ॥ दर्भे ॥

ब्रह्मपादपः । पुं० पलाशे ॥

ब्रह्मपुत्रः । पुं० क्षेत्रविशेषे ॥ नदविशेषे ॥ अमोघानन्दने । लौहित्ये

॥ ब्रह्मणःपुत्रः ॥ सत्ये ॥ धर्मे ॥ मरीच्यादिषु ॥ विषप्रभेदे ॥ ब्रह्मपुत्रस्तुकपिलोमलयाद्रिभवः खरः । इतितल्लक्षणम् । अपिच । वर्णितः कपिलोयःस्यात्तथा भवतिसारकः । ब्रह्मपुत्रःसविज्ञेयोयतोजायतेमलयाचले ॥

ब्रह्मपुत्री । स्त्री० सन्ध्यायाम् ॥ सरस्वतीनद्याम् ॥ शिखायाम् ॥ वाराहीकन्दे ॥

ब्रह्मपुरम् । न० शरीरे ब्रह्मोपलब्धिहेतुत्वात्० ब्रह्मणः सदाख्यस्यपुरमिवपुरम् ॥

ब्रह्मपुराणम् । न० अयुतश्लोकात्मकेमहापुराणविशेषे॥ यथोक्तंदेवीभागवते । तथाचायुतसङ्ख्याकंपुराणं ब्रह्मसंज्ञकमिति ।

ब्रह्मपुरी । स्त्री० काश्याम् ॥ त्रैलोक्ये ॥ ब्राह्मणानांनिवासस्थाने ॥

ब्रह्मबन्धुः । पुं० अधिक्षिप्ते । निन्द्यविप्रे ॥ ब्राह्मणस्यनिर्देशे ॥ ब्राह्मणस्यबान्धवे ॥ ब्रह्मैवब्राह्मणजातिः बन्धुरस्य । ब्रह्मणोब्राह्मणस्यबन्धुरेव०अनुष्ठानाभावादिति०जातिब्राह्मणोधिक्षिप्यते ॥ ब्राह्मणान्बन्धून्व्यपदिशतिनस्वयंब्राह्मणइत्यर्थः ॥

ब्रह्मबंधूः । स्त्री० व्रतस्वाध्यायहीनायांब्राह्मणजातौ ॥ ऊङुतइत्यू

ङ् ॥

ब्रह्मभूतः । पुं० ब्रह्मणि ॥ ब्रह्मैवभूतउच्यते ॥

ब्रह्मभूतिः । स्त्री० सन्ध्यायाम् ॥

ब्रह्मभूमिजा । स्त्री० सिंहल्याम् ॥

ब्रह्मभूयम् । न० ब्रह्मसाक्षात्कारे । ब्रह्मभवने । मोक्षे । ब्रह्मत्वे । ब्रह्मणोभावः । भुवोभावइति क्यप् ॥

ब्रह्ममयः । त्रि० ब्रह्मस्वरूपे ॥

ब्रह्ममीमांसा । स्त्री० उत्तरमीमांसायाम् । ब्रह्मकाण्डवेदविचारग्रन्थे । वेदव्यासप्रणीते० वेदान्तत्वेनप्रसिद्धे० ब्रह्मसूत्रे ॥

ब्रह्ममूर्द्धभृत् । पुं० शिवे ॥

ब्रह्ममेखलः । पुं० मुञ्जे ॥

ब्रह्मयज्ञः । पुं० विधिनावेदानामध्ययने ॥ विधिनाशिष्याणामध्यापने ॥ अध्यापनंब्रह्मयज्ञः पितृयज्ञस्तुतर्पणमितिमनुः ॥ ब्रह्मयज्ञरूपमिदंबहुवेदाध्ययनाशक्तौ० सावित्रीमात्राध्ययनेन।विशिष्यतीत्याहमनुः । अपांसमीपे नियतोनैत्यिकंविधिमाश्रितः । सावित्रीमप्यधीयीतगत्वारण्यंसमाहितइति।अन्यत्तुक्तंछन्दोगपरिशिष्टे। यज्ञश्रुतिजपःप्रोक्तोब्रह्मयज्ञःसउच्यते। सचार्वाक्तर्पणात्कार्यःपश्चाद्वाप्रातराहुतेः ॥ वैश्वदेवावसानेवा

मान्यवर्त्तनिमित्तकात् । स्वर्त्तनिमित्तकात् जलस्थतपर्वत:दिनिमित्तं विना ॥

ब्रह्मयष्टि : । स्त्री० भार्ग्याम् ॥ विप्रयष्ट्याम् ॥

ब्रह्मयष्टिका )। स्त्री०

ब्रह्मयष्टी । )स्त्री० भार्ग्याम् ॥ विप्रयष्ट्याम् ॥

ब्रह्मयोनि : । पुं० ब्रह्मगिरौ ॥ तीर्थविशेषे ॥

ब्रह्मयोनी । स्त्री० कुरुक्षेत्रे सरस्वतीतीरे पृथूदकनिकटे तीर्थविशेषे ॥ तत्रब्रह्मणाचत्वारोवर्णा : सृष्टा : ॥

ब्रह्मरन्ध्रम् । न० उत्तमाङ्गे ॥

ब्रह्मरात : । पुं० शुकदेवे ॥

ब्रह्मराक्षस : । पुं० भूतविशेषे ॥ यथा । संयोगपतितैर्गत्वापरस्यैवचयोषितम् । अपहृत्यचविप्रस्वंभवतिब्रह्मराक्षस : ॥ महादेवस्यगणविशेषे ॥ पारिभाषिकब्रह्मराक्षसा यथा । मूर्ख : स्त्रीकष्टपश्चैववाजीवधिरएवच । गृहीतार्थंनमुंचन्ति पञ्चैते ब्रह्मराक्षसा : ॥ इति ॥

ब्रह्मराति : । पुं० याज्ञवल्क्यमुनौ ॥

ब्रह्मरात्र : । पुं० ब्राह्ममुहूर्त्ते ॥

ब्रह्मरात्रि : । पुं० याज्ञवल्क्यमुनौ-॥ ब्रह्म० स्नानं०राति० ददातिय : । ब्रह्मोपपदाद्रातेस्क्विप् ॥

ब्रह्मरात्रि : । स्त्री० ब्रह्मणोनिशायाम् ॥ सहस्रयुगैनभवति ॥

ब्रह्मरीति : । स्त्री० पित्तलप्रभेदे ॥ राजरीतौ ॥ इ० रा० नि० ॥

ब्रह्मरूपम् । न० अस्त्यादिषु ॥ यथा । अस्तिभातिप्रियंरूपंनामचेत्यंशपञ्चकम् । आद्यंत्रयंब्रह्मरूपंजगद्रूपंततोद्वयम् ॥

ब्रह्मर्षि : । पुं० भृग्वादिषु । ब्रह्मणोमानससुतनयेषु ॥ तद्यथा । भृगुंपुलस्त्यं पुलहंक्रतुमङ्गिरसंतथा । मरीचिन्दक्षमत्रिञ्चवसिष्ठञ्चैव मानसान् । नवब्राह्मणइत्येते पुराणे निश्चयंगता : ॥

ब्रह्मर्षिदेश : । पुं० कुरुक्षेत्रादिदेशचतुष्टये ॥ यथा । कुरुक्षेत्रञ्चमत्स्याश्चपंचाला:शूरसेनका : । एषब्रह्मर्षिदेशोवैब्रह्मावर्त्तादनन्तर : ॥ एतद्देशप्रसूतस्यसकाशादग्रजन्मन: । स्वंस्वंचरित्रंशिक्षेरन् पृथिव्यांसर्व्वमानवा : ॥

ब्रह्मलोक : । पुं० ब्रह्मणि ॥ लोकनंलोक : । ब्रह्मैवलोकोब्रह्मलोक : ॥ कार्यब्रह्मणि ॥ ब्रह्मण: कार्यस्यसद्मनि । ब्रह्मणोभुवने ॥ यथा । सत्यस्तुसप्तमोलोकोह्यपुनर्भववासिना

म । ब्रह्मलोकः समाख्यातोऽप्रतीघातलक्षणः ॥ इ० देवीपुराणम् ॥ अपि च । षड्गुणं जनतपोलोकात्सत्यलोको विराजते । अपुनर्मारकाय च ब्रह्मलोको हि स स्मृतः । अस्यार्थः । जनलोकापेक्षया षड्गुणं नद्वादशकोट्युच्छ्रायेण तपोलोकान्तरं सत्यलोकः । न तु तपोलोकात्षड्गुणमेतिमन्तव्यम् । तत्र सत्यष्टाचत्वारिंशत्कोट्युच्छ्रायत्वे नव्रह्माण्डे तस्यावकाशाभावात् । सूर्याण्डगोलयोरन्तः कोट्यः स्युः पञ्चविंशतिरिति शुकोक्तेः । सत्यलोक एव कल्पारम्भे दैनब्रह्मधिष्ण्यात् परं वैकुण्ठलोकादिर्ज्ञेयम । एवञ्च भूतलादूर्ध्वं पञ्चदशलक्षोत्तरास्त्रयोविंशतिकोट्यो भवन्ति । सत्यलोकादूर्ध्वं पञ्चदशलक्षोनकोटिद्वयाद्ब्रह्मकटाहइतिज्ञेयम् । अपुनर्मारकाः पुनर्मृत्युशून्याः । इति विष्णुपुराणे २ अंशे ७ अध्यायः ॥

**ब्रह्मवद्यम्** । न० ब्रह्मोद्यं ॥ ब्रह्मवेदस्तस्य वदनम् । वदः सुपिक्यप्चेति भावेयत् ॥

**ब्रह्मवद्या** । स्त्रि० ब्रह्मोद्यायाम् ॥ टाप् ॥

**ब्रह्मवनम्** । न० संसाररूपे ॥ ब्रह्मणो जीवरूपस्य भोग्यं वननीयं सम्भजनीयम् ॥

**ब्रह्मवर्चसम्** । न० ब्राह्मणस्य० वृत्ताऽध्ययनजे । वेदाध्ययनतदर्थज्ञानादिप्रकर्षकृते तेजसि ॥ ब्रह्मणो वेदस्य तपसो वा० वर्चः ब्रह्महस्तिभ्यां वर्चसस्त्वच् ॥

**ब्रह्मवर्चसी** । पुं० वृत्तस्वाध्यायनिमित्तं तेजो ब्रह्मवर्चसम् तद्वति ॥

**ब्रह्मवर्चस्यम्** । त्रि० ब्रह्मवर्चसे निमित्ते ॥ ब्रह्मवर्चसस्य० निमित्तं०संयोग० उत्पातौ । ब्रह्मवर्चसाद्युपसङ्ख्यानमिति यत् ॥

**ब्रह्मवर्चस्वी** । पुं० श्रुताध्ययनसम्पत्तिकृततेजोयुक्ते ॥

**ब्रह्मवर्मम्** । न० ताम्रे ॥

**ब्रह्मवादः** । पुं० वेदपाठे । श्रुतादाने ॥

**ब्रह्मवादी** । त्रि० मुक्ते । वेदान्तिनि ॥ वेदार्थज्ञे ॥ ब्रह्म वदितुमवश्यात् शीलमस्य । वद० । सुप्यजातौ णिनि ताच्छील्य० ब्रह्मवदइति णिनिः ॥ वेदवक्तरि ॥

**ब्रह्मवादिनी** । स्त्री० गायत्र्याम् ॥ मन्त्रयोगप्रभृतिषु ॥ ब्रह्म वदितुं शीलमस्याः । णिनिः । ङीप् ॥

**ब्रह्मवित्** । पुं० वेदार्थाभिज्ञे । परमार्थदर्शिनि । ब्रह्मसाक्षात्कारवति । अकर्मणि ॥ ब्रह्म वेद वेदार्थं स्वयथावद्वेत्ति० विन्दते वा । विद ज्ञाने० विद्लृ लाभे वा । क्विप् ॥ प्रसन्नेन्द्रि

वप्रहसितवदनश्चनिश्चिन्त : कृता-
र्थोब्रह्मविद्भवतीति॰भाष्यम्। अ
स्यमाहात्म्यंस्मृतौयथा। यथाको
ब्रह्मविद्भुङ्क्ते जगत्तत्र्यं यत्तेऽखि
लम्। तस्माद्ब्रह्मविदेहैव बद्यास्ति-
वस्तुकिञ्चनेति॥ अस्यलक्षणानु। नि
यतं लक्षणं किञ्चिन्नह्यस्तिब्रह्मवेदि-
न:॥ रागीकश्चिद्विरक्तोऽन्य : क्रु-
द्धोऽन्य:शान्तिमान्पर :। प्रारब्ध-
भोगनानात्वात्कथं लक्ष्मनियम्यते
। देहेन्द्रियमनोबुद्धिधर्मानिषोश्चव
र्त्तते। प्रत्यगैकात्म्यसम्बोधात्त-
द्धर्मैर्लिप्यतेकथम्॥ सर्वसंसारभा
वोह्यनयथालक्षणंतथा। सर्वाभा-
वोपिनैवस्यात्सुषुप्तेव्यभिचारत :
। ननुज्ञानात्पूर्वं यत्साधनममानि
त्वादि॰तत्सर्वं मुमुक्षुज्ञानिलक्षणमि
तिसम्प्रदायविद:॰ नतदन्यथयि-
तंयुक्तमतआह। शोभतेश्रद्दधानानां
लक्ष्मैतन्नविवेकिनाम्॥ साम्प्रदा-
यिका : श्रद्धालव : सन्तोविदुषोय
ल्लक्षणमाचक्षते॰तत्सर्वं व्यवहार-
स्थैवनतदतीतस्थेत्यर्थ :। तर्हि-
व्यवहारातीतस्यकिं लक्षणमित्याश
ङ्क्य॰ ब्राह्मणलक्षणमेवतल्लक्षण-
मित्याह। विद्यानुरोधतोयस्मा-
द्युज्यतेलक्ष्मतद्विद:॥ भावाभावोभ
यधूंसिन्नह्यवेद्यंतत:श्रुति:। येनेदृगे
वतेनेतिलक्षणंतद्विदोऽब्रवीत्॥ ब्र

अथाहंकृत्वाहंगेवभवेद्दिद्वान्निबोधत:
। बोधोतीलक्षणंतस्यबोधस्यात्म-
साक्षिकत्वति॥ तस्यविष्णुस्वरूप-
त्वंबोध्यम्। ज्ञानीत्वात्मैवमेमतमि
तिभगवद्वचनात्॥

ब्रह्मविद्या। स्त्री॰ वेदार्थपरिज्ञाने॥
ब्रह्मणोवेदत्रयस्य॰विद्याशिक्षादिरू-
पा॥ ब्रह्मज्ञाने॥ यथा। न्यायाग-
तधन : शान्तोब्रह्मविद्यापरायण :।
स्वधर्मपालकोनित्यंसोऽमृतत्वायक
ल्पते॥ परविद्यायाम्॥ ब्रह्मपर-
मात्मा॰तद्यया वेद्यते॰साब्रह्मविद्ये
तिभाष्यकारा :॥

ब्रह्मविंदु :। पुं॰ वेदपाठकालेमुखा
न्निर्गतविन्दौ॥ ब्रह्मणोविंदु :॥

ब्रह्मविंदुक :। पुं॰ब्रह्मविन्दौ॥

ब्रह्मबीजम्। न॰ प्रणवे॥

ब्रह्मवृक्ष :। पुं॰ किंशुके। पलाशवृ
क्षे। पलाशोब्रह्मरूपधृगितिपद्म
पुराणोक्ते :। उदुम्बरे॥ ब्रह्मणो
वृक्ष :॥ परमात्मनाऽधिष्ठिते॰सं-
सारवृक्षे॥

ब्रह्मवृत्ति:। स्त्री॰ ब्राह्मणस्यजीवनो
पाये॥ यथा। स्वदत्तांपरदत्तांवाब्र
ह्मवृत्तिंहरेत्तु य :। षष्टिवर्षसह
स्राणिविष्ठायांजायतेकृमिरिति॥
पूर्णवृत्तौ॥ ब्रह्माकारवृत्तौ॥
यथा।येतुवृत्तिंविहायैनांब्रह्मा
ख्यांपावनींपराम्। तेतुवृथैवजीव

न्निपशुभिश्चसमानराः ॥

ब्रह्मवेदः । पुं० ब्रह्मज्ञाने ।

ब्रह्मवेदिः । स्त्री० देशविशेषे । यथा । ब्रह्मवेदिः कुरुक्षेत्रे पञ्चरामहृदान्तरमितिहेमचन्द्रः ॥

ब्रह्मवैवर्त्तम् । न० अष्टादशमहापुराणान्तर्गतदशमपुराणे ॥ य० । अष्टादशमहस्रश्च ब्रह्मवैवर्त्तमीषितम् । सर्वेषाञ्चपुराणानांसारमेवविदुर्बुधाः ॥

ब्रह्मशल्यः । पुं० सोमवल्के । वबूर०इ०भा० । इतिरत्नमाला ॥

ब्रह्मशासनम् । न० ब्रह्मविचारगृहे । धर्म्मकीलके ॥ ब्रह्मणआज्ञायाम् ॥ पत्रविशेषे ॥

ब्रह्मसंस्थः । पुं० मुख्यपरिव्राजि । ब्रह्मणिसम्यक्स्थिते । निवृत्तसर्वकर्मतत्साधने० परिव्राज्यस्याश्रमिणि०परमहंसे ॥ ब्रह्मणोपरमात्मनि०सम्यगव्यभिचारिणिस्थितिर्निष्ठायस्यपरब्रह्मसाक्षात्कारवतः सः॥ निवृत्तकर्म्माभिचुकएवब्रह्मसंस्थइतिभाष्यम् ॥

ब्रह्मसंस्पर्शः । पुं० ब्रह्मतादात्म्ये ॥

ब्रह्मसंहिता । स्त्री० भगवत्सिद्धान्तसङ्ग्रहग्रन्थविशेषे ॥ अध्यायशतसम्पन्नाभगवद्ब्रह्मसंहिता । कृष्णोपनिषदांसारैः सङ्कलिताब्रह्मणोदितेति जीवगोस्वामी ॥

ब्रह्मसत्रम् । न० अध्यापने ॥ आत्मनोविचारे ॥ यथसमानाएवब्रह्मवादिनोवक्तृश्रोतृभावेनब्रह्ममीमांसन्ते तद्ब्रह्मसत्रमित्युच्यते ॥

ब्रह्मसभा । स्त्री० चतुर्मुखसभायाम् ॥ सभाविशेषे ॥ यथा । यस्मिन्देशेनिसीदन्तिविप्रावेदविदस्त्रयः । राज्ञश्चाधिकृतोविद्वान्ब्रह्मणस्तांसभांविदुः । ब्रह्मणः सभेवसभा ॥

ब्रह्मसंभवः । पुं० द्विपृष्ठनामकजैनविशेषे ॥

ब्रह्मसर्प्पः । पुं० सर्प्पविशेषे । हलाहले ॥

ब्रह्मसात् । अ० ब्रह्माधीने ॥

ब्रह्मसायुज्यम् । न० ब्रह्मत्वे ॥ युनक्ति । युजिर् । इगुपधेतिकः । युजेनसह । तेनसहेति बहुव्रीहिः । वोपसर्जनस्येतिसहस्य सः । यद्वा । योजनंयुक् । सम्पदादित्वात्क्किप् । सहयुजा । सयुजश्च सयुजोवाभावः । ब्राह्मणादित्वात्ष्यञ् । ब्रह्मणः सायुज्यं ॥

ब्रह्मसावर्णिः । पुं० दशमेमनौ ॥

ब्रह्मसुवर्चला । स्त्री० सुवर्चलायाः

प्रभेदे । सूर्यतिक्ताकषायोष्णासरारूक्षालघुः कटुः । निहन्तिकफपित्तास्रश्वासकासारुचिज्वरान् ॥ विस्फोटकुष्ठमेहास्रयोनिरुक्क्रिमिपाण्डुता ॥

ब्रह्मसूः । पुं॰ अर्षकेतौ । कामदेवे ॥ अनिरुद्धे । उषापतौ ॥ ब्रह्मतपः सुवतिचालयति । सूप्रेरणे । अन्येभ्योपीतिक्विप् । इतिकामपक्षे । अनिरुद्धपक्षेतु । ब्रह्माणं सूतवान् । कल्पान्तरे किलानिरुद्धमूर्त्तेर्भगवतोब्रह्माजातः ॥ तथाचब्रह्मपुराणम् । अनिरुद्धात् ततोब्रह्मातन्नाभिकमलोद्भवः ॥ इति ॥

ब्रह्मसूत्रम् । न॰ यज्ञसूत्रे । पवित्रे । यज्ञोपवीते ॥ व्याससूत्रे ॥ ब्रह्मसूच्यते॰ एभिरितिव्याख्यातारः ॥ तटस्थलक्षणपरेषूपनिषद्वाक्येषु ॥

ब्रह्मसूनुः । पुं॰ इक्ष्वाकुवंशोद्भवराजविशेषे । ब्रह्मदत्ते ॥

ब्रह्मस्थानम् । न॰ तीर्थविशेषे ॥

ब्रह्मस्थूणा । स्त्री॰ तीर्थविशेषे ॥

ब्रह्मस्तेयी । त्रि॰ आचार्यानुमतिंविनायेनकेनापिप्रकारेणवेदंगृह्णाति । यथाहमनुः । ब्रह्मयस्त्वननुज्ञातमधीयानादवाप्नुयात् । सब्रह्मस्तेयसंयुक्तो नरकंप्रतिपद्यतइति ॥

ब्रह्मस्वम् । न॰ ब्राह्मणसम्बन्धिधने ॥ तद्धरणेदोषोयथा । ब्रह्मस्वंवागुरुस्वंवादेवस्वंवापियोहरेत् । सकृतघ्नइतिख्यातोमहापापीचभारत ॥ यवटोदेवसेतुसोपियावदिन्द्रशतंशतम् । ततोभवेत्सुरापीतिस्ततः शूद्रस्ततः शुचिरितिब्र॰ वै॰ पु॰ ॥

ब्रह्महत्या । स्त्री॰ ब्राह्मणवधे । ब्राह्मणस्यहननजन्ये महापातकविशेषे ॥ ब्राह्मणप्राणवियोगरूपफलकेव्यापारे ॥ सचव्यापारः साक्षादन्यंवानियुज्य । तथागोहिरण्यादिनिमित्त कार्यकस्यापि तदुद्देशेन ब्राह्मणमरणे ब्रह्महत्या । एवञ्चशास्त्रतोयस्यब्राह्मणहन्तृत्वंप्रतीयते॰ सएवब्रह्महन्तेतिज्ञेयम् ॥ ब्रह्मणोहननम् । हन॰॰ । हनस्तचेति॰हन्तेर्भाविक्यप्॰तकारश्चान्तादेशः ॥ अनृतञ्चसमुत्कर्षेराजगामिचपैशुनम् । गुरोश्चालीकनिर्बन्धः समानिब्रह्महत्ययेति मनुः ॥ निद्राभङ्गः कथाच्छेदोदम्पत्योःप्रीतिभेदनम् । शिशुमातृविभेदश्चब्रह्महत्यासमंस्मृतमिति देवीभागवतम् ॥

ब्रह्महा । पुं॰ ब्रह्मघ्ने । ब्राह्मणवधकर्त्तरि ॥ श्वसूकरखरोष्ट्रा

णागोजाविमृगपक्षिणाम् । चाण्डालपुक्कसानाञ्च ब्रह्महा योनिमृच्छति ॥ ब्रह्माणं ब्रह्म वा हतवान् । हन० ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ब्रह्महा न भवत्यन्यो ब्रह्महा वृषलीपतिः । यस्तस्यामाहितो गर्भः स तेन ब्राह्मणो हतः ॥

ब्रह्महुतम् । न० पञ्चमहायज्ञान्तर्गतयज्ञविशेषे । नृयज्ञे । अतिथिपूजने ॥

ब्रह्माक्षरम् । न० प्रणवे ॥

ब्रह्माग्रभूः । पुं० क्रतुपशौ । घोटके ॥

ब्रह्माञ्जलिः । पुं० वेदपाठकालाञ्जलौ । अध्ययनस्यादावन्ते च गुरवे प्रणवोच्चारणपूर्वकोऽञ्जलौ ॥ ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा । संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृत इति मनुः ॥

ब्रह्माणी । स्त्री० ब्रह्मणः पत्न्याम् ॥ ब्रह्माणमणति कीर्त्तयति ॥ अण शब्दे । कर्म्मण्यण् । ङीप् ॥ यद्वा । ब्रह्माणमानयति० जीवयति । अन प्राणने । ण्यन्तात्कर्म्मण्यणि० णेरनिटीति णिलोपे० टिड्ढेति ङीपि० पूर्वपदादिति णत्वे० ब्रह्माणीतिरूपसिद्धिः । अन्यथा कृन्त्रकरुणेतिसूत्रे ब्रह्मन्शब्दस्यपाठाभावाण्णमुगनुपपन्न एव । दुर्गायाम् ॥ ब्रह्माणी ब्रह्मजननाद्ब्रह्मण्यपराभता इति देवीपुराणम् ॥ रेणुकानामगन्धद्रव्ये ॥ राजरीतौ । पित्तलविशेषे ।

ब्रह्माण्डम् । न० भुवनकोषे । विश्वगोलके ॥ चतुर्दशलोकाः स्थावरजङ्गमभूतलोकालोकपर्वततद्बाह्यपृथिवीतद्बाह्यसमुद्रैः सहिता ब्रह्माण्डमित्युच्यते ॥ अथ ब्रह्माण्डगोलमाह भास्कराचार्यः । भूभूधरत्रिदशदानवमानवाद्यायेष्वधिष्ण्यगगनेचरचक्रकक्षाः । लोकव्यवस्थितिरुपर्युपरिप्रदिष्टा ब्रह्माण्डभाण्डजठरे तदिदं समस्तमिति ॥ द्वादशैवसहस्राणि ब्रह्माण्डं शताधिकमित्युक्तसंख्याके महापुराणविशेषे ॥ महादानविशेषे ॥

ब्रह्माण्डकपालम् । न० योजनार्बुदकोटिविस्तृते ॥

ब्रह्मात्मभूः । पुं० अश्वे ॥

ब्रह्मादनी । स्त्री० हंसपद्याम् ॥

ब्रह्माद्रिः । पुं० गिरिविशेषे ॥

ब्रह्माद्रिजाता । स्त्री० गोदावर्याम् ।

ब्रह्मानुभवः । पुं० अविषयतयैव विषयानुपरक्तचित्स्फुरणे ॥ ब्रह्मणोऽनुभवः ॥

ब्रह्मायितः। पुं० माघमासे सूर्यनिकटस्थितराक्षसे ॥

ब्रह्मारण्यम्। न० वेदपाठभूमौ ॥ वनवि० ।

ब्रह्मार्पणम्। न० ब्रह्मणि समर्पणे ॥ तत्प्रकारउक्तः कूर्मपुराणे यथा। ब्रह्मणादीयते देयं ब्रह्मणे सम्प्रदीयते। ब्रह्मैव दीयते चेतिब्रह्मार्पणमिदं परम् ॥ नाहंकर्त्तासर्वमेतद्ब्रह्मैव कुरुते तथा। एतद्ब्रह्मार्पणम्प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ प्रीणातुभगवानीशः कर्मणानेन शाश्वतः। करोतिसततं बुद्ध्या ब्रह्मार्पणमिदंपरम् ॥ यद्वाफलानांसन्यासंप्रकुर्यात्परमेश्वरे। कर्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तममिति ॥

ब्रह्मावर्तः। पुं० देशवि०। तपोवटे ॥ सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्। तंदेवनिर्मितंदेशंब्रह्मावर्त्तंप्रचक्षते ॥ तीर्थविशेषोयं ॥

ब्रह्माश्रमः। पुं० ब्रह्मज्ञानसाधनीभूतेसंन्यासाश्रमे ॥

ब्रह्मासनम्। न० ध्यानयोगासने। ध्यानंप्रत्ययैकतानताच० योगश्चित्तवृत्तिनिरोधस्तयोरासनम् ॥ यद्वा। ध्यानस्ययोगउपायः० ध्यानमेवयोगोवा। तस्यासनमित्यर्थः ॥ ब्रह्मणः सम्बन्धिआसनम् ॥

ब्रह्मास्त्रम्। न० ब्रह्मस्वरूपास्त्रे। ब्राह्मे ॥

ब्रह्मास्त्रविद्या। स्त्री० बगलामुख्याम्। पीताम्बरायाम् ॥

ब्रह्मिष्ठः। त्रि० ब्रह्मविदि ॥ अतिशयेनब्रह्मवान्। मतुबन्ताद्ब्रह्मशब्दादिष्ठन्। विन्मतोर्लुगितिमतुपोलुक्। नस्तद्धितइतिटिलोपः ॥

ब्रह्मिष्ठा। स्त्री० दुर्गायाम् ॥ ब्रह्मिष्ठावेदमातत्वाद्गायत्रीचरणाग्रजा। वेदेषुचरतेयस्मात्तेनसाब्रह्मचारिणी ।

ब्रह्मी। स्त्री० फञ्जिकायाम् ॥ शाकविशेषे। मत्स्याख्याम्। सुरमायाम् ॥ पङ्कगडकमत्स्ये ॥

ब्राह्मीघृतम्। न० औषधविशेषे। सारस्वतघृतमितिख्याते ॥ यथा। समूलपत्रामुत्पाट्यब्रह्मींप्रक्षाल्यवारिणा। उलूखलेक्षोदयित्वारसंवस्त्रेणगालयेत् ॥ रसेचतुर्गुणेतस्मिन्घृतप्रस्थंविपाचयेत्। हरिद्रामालतीकुष्ठंवृहतीसहरीतकी ॥ एतेषां पलकैर्भागैः शेषास्तुकार्षिकाः स्मृताः। पिप्पल्योथविडङ्गानिसैन्धवं शर्करावचा ॥ सर्वमेतत्समालोड्य शनैर्मृद्वग्निनापचेत्। एतत्प्राशितमात्रेणवाग्विशुद्धिः प्रजायते ॥ सप्तरात्रप्रयोगेणकिन्नरैः सहगीयते ॥

अर्द्धरात्रप्रयोगेणस्वरोभवतिकौलिकः ॥ मासमेकंप्रयोगेणभवेच्छ्रुतिधरोनरः । पञ्चगुल्मान्प्रमेहांश्च कासंपञ्चविधंजयेत् ॥ वन्ध्यानांचैव नारीणांनराणामल्परेतसाम् । घृतं सारस्वतंनामबलवर्णवपुः प्रदमिति चिकित्सारत्नसङ्ग्रहः ॥

ब्रह्मोद्यम् । त्रि० ब्रह्मणोवेदस्यवदने । ब्रह्मवद्ये ॥ वदः सुपिक्यप् ॥ ब्रह्मोद्यास्वकथाः कुर्यात्पितॄणामेतदीप्सितम् ॥

ब्रह्मोपनिषद् । स्त्री० वेदगुह्ये ॥

ब्रह्मोपनेता । पुं० पलाशवृक्षे ॥

ब्रह्मौदनम् । न० यज्ञेऋत्विग्भ्योदत्तेऽन्ने ।

ब्राह्म : । पुं० ब्रह्मोपासके । ब्रह्माराधनतत्परे ॥ ब्रह्मास्त्रे ॥ विवाह विशेषे । वरमाहूययथाशक्त्यलङ्कृतायाः कन्यायादाने ॥ यथा । आच्छाद्यचार्चयित्वाचश्रुतिशीलवतेस्वयम् । आहूयदानंकन्यायाब्राह्मोधर्मः सउच्यते ॥ जननंचापिमरणं- शरीराणांयथासकृत् । दानंतथैवकन्यायाब्राह्मोद्वाहः सकृत्सकृत् ॥ ब्रह्मणाद्रवायम् । नतुब्रह्मदेवतात्वंविवाहस्यसम्भवति ॥ नारदे ॥ न० ॥ मानसेसरसि ॥ ब्रह्मतीर्थे ॥ अङ्गुष्ठमूलस्यतलेब्राह्मंतीर्थंप्रचक्षते ॥ अनेनद्विजस्याचमनं यथा । अन्तर्जानुशुचौदेशेउपविष्टउदङ्मुखः । प्राग्वाब्राह्मेणतीर्थेनद्विजोनित्यमुपस्पृशेत् ॥ अंगुष्ठोत्तरतोरेखायापाणेर्दक्षिणस्यच । एतद्ब्राह्ममितिख्यातंतीर्थमाचमनायवै ब्रह्मपुराणे ॥ त्रि० ब्रह्मदेवताके ॥ ब्रह्मादेवताऽस्य । सास्यदेवतेत्यण् । ब्रह्मोजातावितिसाधुः ॥ तस्येदमित्यण्वा ॥ नस्तद्धितइतिटिलोप

ब्राह्मण : । पुं० प्रथमवर्णेसत्त्वप्रधाने द्विजातौ । अग्रजन्मनि । भूदेवे । वाडवे । विप्रे । वक्त्रजे । वर्णज्येष्ठे । षट्कर्मणि । द्विजोत्तमे । द्विजे ॥ ब्राह्मणोजङ्गमामूर्तिःश्रीविष्णोः परमात्मनः । अतएवहिविख्याताभूदेवास्तेमहामते ॥ राज्ञोब्राह्मणः पितृवन्मान्यउक्तोमनुना । ब्राह्मणं दशवर्षन्तुशतवर्षन्तुभूमिपम् । पितापुत्रौविजानीयात्ब्राह्मणस्तुतयोः पितेति वचनात् ॥ जात्याकुलेनवृत्तेनस्वाध्यायेनश्रुतेनच । एभिर्युक्तोहियस्तिष्ठेन्नित्यंसद्विजउच्यते ॥ इ० वह्निपुराणम् ॥ अपिच । तपः श्रुतञ्चयोनिश्चएतद्ब्राह्मणकारकम् । तपःश्रुताभ्यांयोहीनोजातिब्राह्मणएवसः ॥ अविदुषोब्राह्मणस्यापूज्यत्वंयथा । अविद्वान्ब्राह्मणःकोपि नैवपूज्यः कदाचन । आहारादधिकंनैवदेयंमूर्खायकर्हिचित् इतिभाग

वतम्॥ ब्राह्मणस्य तु देहोयं न कामार्थाय जायते। इह क्लेशाय तपसे प्रेत्य त्वनुत्तमंसुखमिति भारते मोक्षधर्मे पावकाध्ययनाध्याय:। १४५॥ अस्य वर्जनीयानि कर्माण्याह नारद:।

। ज्याकर्षणं शत्रुनिबर्हणं च कृषिर्वणिज्या पशुपालनं च। शुश्रूषणं चापि तथार्थहेतोरकार्यमेतत्परमं ब्राह्मणस्य॥ राजप्रेष्यं कृषिधनं जीवनं च वणिज्यया। कौटिल्यं कौलटीयं च कुषीदं च विवर्जयेत॥ शूद्रो राजन् स भवति धर्मपि सोदुराचर:। वृषलीं रमते यस्तु पिशुनो नर्तनस्तथा॥ ग्रामप्रेष्यो विकर्मा च यो द्विजश्चरिताच्च्युत:। वेदानपि जपन्शूद्रै: सम: स परिकीर्तित:॥ कृत्येषु वर्जनीयो सौ वैदिकेतान्त्रिकेपि च। निर्मर्यादे चाशुचौक्रूरवृत्ते हिंसात्मके त्यक्तधर्मस्ववृत्ते। हव्यं च कव्यं च न देयमेव दानं च दत्तं विफलं भवेदिति॥ ब्राह्मणी क्षत्रियावैश्यासु ब्राह्मणाज्जातो ब्राह्मणाज्जातो ब्राह्मण:। यथा। ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मण: स्यान्न संशय:। क्षत्रियायास्तु य: पुत्रो ब्राह्मण: सोप्यसंशय:॥ क्षत्रियायांयथैवस्याद्वैश्यायामपि चैव हीति महाभारते: दानधर्म:॥ ब्रह्मणोऽपत्यम्। तस्यापत्यमित्यण्। अन्निति० टिलोपोन॥ यद्वा। ब्रह्म०वेद:। तदधीतेवेदवा तदधीते तद्वेदेत्यण्॥ अपरोक्षीकृतपरमार्थतत्त्वे०ब्रह्मविदि॥ यन्नसन्तं नचासन्तं नश्रुतं नबहुश्रुतम्। नसुवृत्तं नदुर्वृत्तं वेदकश्चित्सब्राह्मण:॥ गूढधर्माश्रितोविद्वान् अज्ञातचरितं चरेत्। अन्धवज्जडवच्चापि मूकवच्च महीं चरेत्॥ नक्रुध्येन्नप्रहृष्येच्च मानितोमानितश्च य:। सर्वभूतेष्वभयदस्तं देवाब्राह्मणंविदु:॥ अनाशिषमनारम्भं निर्नमस्कारमस्तुतिम्। अक्षीणक्षीणकर्माणं तंदेवाब्राह्मणं विदु:॥ अक्षीणं पूर्णम्॥ अनुत्तरीयवसनमनुपस्तीर्णशायिनम्। बाहूपधानीयं शान्तं तंदेवाब्राह्मणंविदु:॥ येनकेनचिदाच्छन्नोयेनकेनचिदाशित:। यत्रक्वचनशायीचतंदेवाब्राह्मणं विदु:॥ कन्थाकौपीनवासास्तु दण्डधृग्ध्यानतत्पर:। एकाकीरमतेनित्यंतंदेवा ब्राह्मणं विदु:॥ योहिरिवगणाद्भीत: सन्मानान्नरकादिव। कुणपादिवय:स्त्रीभ्यस्तं देवाब्राह्मणंविदु:॥ येनपूर्णमिवाकाशंभवत्येकेनसर्वदा। शून्यं यस्यजनाकीर्णं तंदेवाब्राह्मणं विदु:॥ संन्यासिनि॥ अमौनञ्चमौनञ्चनिर्विद्याथब्राह्मणइतिश्रुति:। ब्राह्मणोबृहवाक्यार्थ: साक्षादित्यादिलक्षण:। ब्राह्मण्यं गौणमन्यस्य-

ब्रह्मवेदार्थेजन्मनः । विप्रजन्मनो
ब्रह्माधीयोग्यत्वात्तत्रब्राह्मणशब्दो-
गौणः । विदुषिमुख्यइत्यर्थः । ब्रह्म
णोवेदस्यायम् । तस्येदमित्यण् ॥

ब्राह्मणम् । न० ब्रह्मसङ्घाते । विप्रस
मूहे ॥ मन्त्रेतरवेदभागे ॥ सचविधि
वचनत्वेनार्थवादवचनत्वेनअनुवा-
दवचनत्वेनचत्रिधास्मृतः ॥

ब्राह्मणकः । पुं० आयुधजीविब्राह्म
णानांदेशे॥ ब्राह्मणकोष्णिकेसंज्ञा
यांकन् ॥

ब्राह्मणकीयः । त्रि० ब्राह्मणकेजाते
॥ ब्राह्मणकोनामजनपदः० यत्र
ब्राह्मणाआयुधजीविनः०तत्रजातः
। छः ॥

ब्राह्मणचाण्डालः । पुं० ब्राह्मण्यां
शूद्राज्जाते ॥

ब्राह्मणधनम् न० ब्राह्मणानांसमता
दिरूपेवित्ते ॥ नैतादृशंब्राह्मणस्या
स्तिवित्तंयथैकतासमतासत्यताच ।
शीलंस्थितिर्दण्डनिधानमार्जवंतत
स्ततश्चोपरमःक्रियाभ्यः । बृहन्स्त्रे ॥

ब्राह्मणप्रियः । पुं० नारायणे० भग
वति०वासुदेवे ॥ ब्राह्मणानांप्रियः ।
ब्राह्मणाः प्रियायस्यवा । घ्नन्तंश
पन्तंपरुषंवदन्तंयोब्राह्मणंनप्रणमेद्य
थाहम् । सपापकृद्ब्रह्मदवाग्निदग्धो
वध्यश्चदण्ड्यश्चनचास्मदीयः ॥ इति
भगवद्वचनम् ॥ अपिच । यंदेवंदेव

कीदेवीवसुदेवादजीजनत् । भौमस्य
ब्रह्मणोगुप्त्यैदीप्तमग्निरिवारणिरि
तिभारतम् ॥

ब्राह्मणब्रुवः । पुं० जातिब्राह्मणे ।
जातिमात्रोपजीविब्राह्मणे । योब्रा
ह्मणः क्रियारहितआत्मानंब्राह्
मणंब्रवीतिसइत्यर्थः ॥ यथा । वि-
प्रः संस्कारयुक्तोनित्यंसन्ध्यादिक
र्मयः । नैमित्तिकन्तुनोकुर्याद्ब्राह्
मणब्रुवउच्यते ॥ युक्तःस्यात्सर्वसंस्का
रैर्द्विजस्तुनियमव्रतैः । कर्मकिञ्चि
न्नकुरुतेवेदोक्तंब्राह्मणब्रुवः ॥ गर्भा
धानादिभिर्युक्तस्तथोपनयनेनच ।
नकर्मकृन्नचाधीतेसज्ञेयो ब्राह्मण-
ब्रुवः ॥ अध्यापयतियः शिष्यान्
नाधीतेवेदमुत्तमम् । गर्भाधानादिसं
स्कारैर्युतः स्याद्ब्राह्मणब्रुवः ॥
इति ॥ तस्मैदानेफलविशेषोयथा
। सममब्राह्मणेदानंद्विगुणंब्राह्म
णब्रुवे । अधीतेशतसाहस्रमनन्तंवेद
पारगे ॥ इ० मनुः ॥

ब्राह्मणयष्टिका । स्त्री० फञ्जिकायाम्
। पद्मायाम् । भार्ग्याम् । ब्राह्मणे
टी० इ० भा० भारङ्गी० इ० च० ॥

ब्राह्मणयष्टी । स्त्री० अङ्गारवल्ल्याम् ।
बालियशाके । भार्ग्याम् ॥

ब्राह्मणहितः । त्रि० ब्राह्मणस्य
हितकारिणि । बृहन्मधे ॥ यद्ब्रा
ह्मणस्यकुशलं तदेवसततंवदेत् ।

तूष्णीमासीतनिन्दायांकुर्वन्भैषज्यमात्मन : ॥

ब्राह्मणाच्छंसी । पुं० ऋत्विग्विशेषे ॥ ब्राह्मणे विहितानिशास्त्राणि० उपचाराद्ब्राह्मणानि । तानिशंसति । ब्राह्मणाच्छंसिनउपसङ्ख्यानमित्यलुक् । द्वितीयार्थेपञ्चम्युपसङ्ख्यानादेव ॥ अयंशब्दश्छांदस : । ब्राह्मणाच्छंसिन: छन्दसीत्युपसंख्यानात् ॥

ब्राह्मणाच्छंसीयम् । न० ब्राह्मणाच्छंसिनऋत्विग्विशेषस्यकर्म्मभावयो : ॥ छोचाभ्यश्च : ॥

ब्राह्मणायन : । पुं० शुद्धसन्तानजेविप्रे ॥ ब्राह्मणस्यापत्यम् । नडादिभ्य : फक् ॥

ब्राह्मणिका । स्त्री० तीर्थविशेषे ॥

ब्राह्मणी । स्त्री० विप्रभार्यायाम् । ब्राह्मणपत्न्याम् ॥ ब्राह्मणद्वयम् । तस्येदमित्यण् । शार्ङ्गरवादित्वान्ङीन् ॥ फञ्जिकायाम् ॥ पृक्कायाम् ॥ वरटायाम् ॥ पिपीलिकाभेदे । स्थूलशीर्षिकायाम् ॥ रक्तपुच्छिकाख्यजन्तौ । ब्राह्मनी० इ० भा० ॥

ब्राह्मण्यम् । न० ब्राह्मणत्वे ॥ ब्राह्मणस्यकर्म्मभावोवा । गुणवचनब्राह्मणादिभ्य:कर्मणिचेतिष्यञ् ॥ ब्राह्मण्यं बहुभिरवाप्यतेतपोभिस्तल्लब्ध्वानरतिपरैर्णहेलितव्यम् । स्वाध्यायेतपसिदमेषनित्ययुक्त : क्षेमार्थीकुशलपर : सदायतस्वेतिभारतेशान्तौ मोक्षधर्मे पावकाध्ययनम् ॥ पाण्डित्यबाल्यमौनानिश्रवणादीनितैरयम् । भवतिब्राह्मणस्तत्रब्राह्मण्यंब्रह्मरूपता ॥ विप्रवृन्दे ॥ ब्राह्मणानांसमूह : । ब्राह्मणवडवाद्यन् ॥ त्रि० ब्राह्मणहिते ॥ ब्राह्मणेषुहित: । यत् ॥ ब्राह्मणेभ्योहितोवा ॥

ब्राह्मण्य : । पुं० तृणप्रभेदे । मुञ्जे । दृढतृणे ॥

ब्राह्ममुहूर्त : । पुं० अरुणोदयकालस्य प्रथमदण्डद्वये ॥ ब्राह्ममुहूर्तमाहपितामह : । रात्रे:पश्चिमेयामेमुहूर्तोब्राह्मउच्यते । पश्चिमेयामेशेषार्द्धप्रहरे । शेषार्द्धप्रहरेब्राह्मोमुहूर्त इतिमदनपारिजातात् । तत्रापिसूर्योदयात्प्रागर्द्धप्रहरेद्वौमुहूर्तौ ० तत्राद्योब्राह्म : ० द्वितीयोरौद्र : ॥ ब्राह्मस्यासौमुहूर्तश्च ॥ ब्रह्मणोमुहूर्ते ॥ सतु ० एकमनुस्थितिकाल : । दैविकानांयुगानान्तुसहस्रंब्रह्मणोदिनम् मन्वन्तरंतथैवैकंतस्यभागस्तुहर्शइतिलिङ्गपुराणम् ॥

ब्राह्मावधूत: । पुं० अवधूतविशेषे ॥ ब्रह्ममन्त्रोपासकायेब्राह्मणक्षत्रियाद्य : । गृहाश्रमेवसन्तोपिज्ञेयास्तेयतय : प्रिये ॥

ब्राह्माहोरात्रः पुं० ब्रह्मणोदिनयामिन्योः। द्वयोर्दैवयुगसहस्रयोः॥ दैवैः षष्ट्यधिकैस्त्रिभिरहोरात्रशतैर्दिव्यंवर्षम्। तैर्द्वादशभिः सहस्रैर्मानुषंचतुर्युगम्। तच्चदेवानामेकंयुगम्। तत्सहस्रंब्रह्मणो दिनंभूतानांस्थितिकालः। तावत्येवरात्रिः प्रलयकालः॥ ब्राह्मस्यासावहोरात्रश्च॥

ब्राह्मी। स्त्री० भारत्याम्। सरस्वत्याम्॥ दुर्गायाम्॥ अष्टमातृकान्तर्गतमातृकाविशेषे। ब्रह्मणः शक्तौ॥ शाकप्रभेदे। हिलमोचिकायाम्। हिलिंचा० इ० गौ० दे० भा०॥ फञ्जिकायाम्॥ रोहिणीनक्षत्रे॥ वाराहीकन्दे॥ महाज्योतिष्मत्याम्। वडीमालकङ्गुनी० इ० भा०॥ मत्स्यप्रभेदे। पङ्कगडकी इ० ॥ स्वनामप्रसिद्धायामोषध्याम्। सोमवल्लयाम्। सौम्यलतायाम्। मण्डूकमातरि। मेध्यायाम्। ब्राह्मीहिमासरातिक्ता लघुर्मेध्याच शीतला। कषायामधुरास्वादुपाकायुष्यारसायनी॥ स्वर्यास्मृतिप्रदाकुष्ठपाण्डुमेहास्रकासजित्। विषशोथज्वरहरीतद्वन्मण्डूकपर्णिनी॥ मत्स्याक्ष्याम्। मछेछी० छकमछरिया० इ० प्र० पुष्पशाके॥ ब्रह्मणइयम्। तस्येदमित्यण्। ब्राह्मीजाता-

तिटिल्लोपेटिड्ढेतिङीप्॥

ब्राह्मीकन्दः। पुं० वाराहीकन्दे॥

ब्राह्मीघृतम्। न० मेधाकरौषधविशेषे॥ पश्यमेधाम्॥

व्रीहिः। पुं० यवादिसामान्यधान्ये॥ आशुधान्ये॥ अस्यसामान्यनामगणनागुणाश्चयथा। धान्यंभोग्यस्त्रभोगार्हमन्नाद्यंजीवसाधनम्। तच्चतावत्त्रिधाज्ञेयंशूकशिम्बीतृणाह्वयम्॥ व्रीह्यादिकंतदिहशूकसमन्वितंस्यात्तच्छूकधान्यमथमुद्गमकुष्ठकादि। शिम्बीनिगूढमितितत्प्रवदन्तिशिम्बीधान्यंतृणोद्भवमथोतृणधान्यमन्यत्॥ तत्रत्रिदोषशमनंलघुशूकधान्यंतेजोबलातिशयवीर्यविवृद्धिदायि। शिम्बीभवंगुरुहिमञ्चविबन्धदायिवातालकन्तुशिशिरंतृणधान्यमाहुः॥ देशेदेशेशूकधान्येषुसङ्ख्यातुंशक्यानोनरैर्देवतैर्वा। तस्मादेषांयेषुभोगोपभोगास्तान्यस्माभिर्व्याक्रियन्तेकियन्ति॥ शालयः कलमारुच्यावीहिश्चैछानृपप्रियाः। धान्योत्तमाश्चविज्ञेयाः केदाराः सुकुमारकाः॥ राजान्नषष्टिकसितेतररक्तमुण्डस्थूलाशुगन्धतिरियादिकशालिसंज्ञाः। व्रीहिस्तथेतिदशधाभुविशायनाः स्युस्तेषांक्रमेणगुणनामगणंब्रवीमि॥ व्रीहिर्गौरोमधुरशिशिरः पित्तहारीकषायः

स्निग्धोवृष्यः कृमिकफज्वरस्तापर
नापहश्च । पुष्टिं दत्ते श्रमशमनकृद्
वीर्यवृद्धिं विधत्ते रुच्योत्यन्तं जनयति
मुदं श्रातकृन्मे चकोना: ॥ इतिरा
जनिर्घण्टः ॥ अपिच । वार्षिकाः
कण्डिताः शुक्लाव्रीहयश्चिरपाकिनः
। कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक
इत्यपि ॥ शालामुखोजतुमुखइत्या
द्याव्रीहयः स्मृताः । कृष्णव्रीहिः
सविज्ञेयोयः कृष्णतुषतण्डुलः ॥
पाटलः पाटलापुष्पवर्णकोव्रीहिरु
च्यते । शालमुखः कृष्णशूकः कृ
ष्णतण्डुलउच्यते ॥ लाक्षावर्णमुखय
स्यज्ञेयोजतुमुखस्तुसः । व्रीहयः
कथिताः पाकेमधुरावीर्यतोहिमाः
॥ अल्पाभिष्यन्दिनोबद्धवर्चस्काः
षष्टिकैः समाः । कृष्णव्रीहिर्वर-
स्तेषांतस्मादल्पगुणाः परे ॥ इति
भावप्रकाशः ॥ वर्द्धतिउपचयंग
च्छति । वृहवृद्धौ । इगुपधात्किदि
तीन् । पृषोदरादिः ॥ व्रीयते व्रीङ्क्या
म् । बाहुलकात् ० हिक्वा ॥ यद्वा ।
व्रीणाति । व्रीवरणे । व्रीहिशाल्योर्ढ
गितिज्ञापकात् ० हिक् ॥ व्रीहेः फ
लम् ० व्रीहिः । बिल्वादिभ्योण् ।
फलपाकशुषामितिलुपि ० युक्तवद्भा
वः ॥

व्रीहिकः । त्रि० धान्यविशिष्टे । व्री
हिषि ॥ व्रीह्यादित्वात्ठन् ॥

व्रीहिकांचनः । पुं० मसूरे ॥

व्रीही । त्रि० व्रीहिमति० क्षेत्रादौ ।
व्रीहिके । व्रीह्यादित्वादिनिः ॥

व्रीहिपर्णी । स्त्री० शालिपर्ण्याम् ॥

व्रीहिभेदः । पुं० अणौ । चीणा०
इ० भा० प्र० धान्ये ॥

व्रीहिमयः । पुं० पुरोडाशे ॥ व्रीहे-
र्विकारः । व्रीहिपुरोडाश इतिम
यट् ॥

व्रीहिराजिकः । पुं० कङ्गुधान्ये ॥
चीनकधान्यम् ॥

व्रीहिश्रेष्ठः । पुं० शालिधान्ये ॥

व्रीह्यगारम् । न० धान्यगृहे । कुमूले ॥

ब्रुवन् । त्रि० कथयति ॥

ब्रुवाणः । त्रि० आचक्षाणे । वक्तरि ॥

ब्रूहि । अ० प्रैषे ॥ अनुज्ञायाम् ॥
अवसरे ॥

व्रैहः । त्रि० व्रीहिनिर्मिते ॥

व्रैहेयम् । त्रि० आशुधान्योत्पयुक्त
भूस्थले । धान्यसामान्यस्यकलमा
देश्चोत्पत्तियोग्ये क्षेत्रे ॥ व्रीहीणां
भवनं क्षेत्रम् । व्रीहिशाल्योर्ढक् ॥

—+— —*— —+—

भः । पुं० भवर्णे । भकारे ॥ भृगु
नन्दने । शुक्राचार्ये ॥ भ्रमरे ॥
आदिगुरौत्रिकले० ऽ।। ॥ भ्रांतौ
॥ न० उडुनि । नक्षत्रे ॥ राशौ ।
क्षेत्रे । ग्रहे ॥ भाति । भादीप्तौ
। अन्येष्वपीतिडः ॥

भक्तकूटम् । न० वैवाहिकविचारोपयोगिनिपोटकविशेषे ॥ यथा । एकराशौच दम्पत्योः शुभंस्यात्समसप्तके । चतुर्थे दशके चैवहतौ यैकादशेतथैति ॥

भक्त : । त्रि० भक्तियुक्ते । तत्परे । पूज्यविषयकानुरागोभक्तिः ० तद्वति । भगवदनुरक्तिविशिष्टे । शरणागतत्वे सत्यत्यन्तप्रीतिमति ॥ भज्यते स्म । भजसेवायाम् । कर्मणिक्तः ॥ भक्तत्यागेदोषउक्तः श्रीदेवीभागवते ॥ ब्रह्महत्यासुरापानं गोवधः स्त्रीवधस्तथा । तुल्यमेभिर्महत्पापं भक्तत्यागादुदाहृतम् । भजन्तं भक्तमत्याज्यं त्यजतः स्यात्कथं सुखमिति ॥ न० अन्ने । अन्धसि । ओदने । भात ० इ० भा० ॥ तस्यविधिर्गुणाश्च । यथा । जलेचतुर्दशगुणे तण्डुलानांचतुष्पलम् । विपचेत्स्रावयेन्मंडं तद्भक्तं मधुरं लघु ॥ चक्रदत्तस्तु । अन्नंपंचगुणे तोयेयवागूंषड्गुणे पचेत् । अन्नान्नं भक्तम् ॥ अपि च । सुधौतांस्तंडुलान्स्फीतांस्तोये पंचगुणे पचेत् । तद्भक्तं प्रस्रुतं चोष्णं विशदं गुणवन्मतम् ॥ भक्तं वह्निकरंपथ्यं तर्पणं रोचनं लघु । अधौतमस्रुतं शीतं गुर्वरुच्यंकफप्रदम् ॥ अपिच । वारिणा भूरिणाशालितण्डुलान्क्षालितान्बहु । तक्रे वासिच्यततप्ते स्थाल्यम्भसिविनिःक्षिपेत् ॥ ततः पयोघृतं क्षिप्त्वाप्रस्विन्नान्स्रावयेदिमान् । राजार्हं तद्भवेद्भक्तं गन्धवर्णरसान्वितम् ॥ यस्यधान्यस्ययद्भक्तं तस्यतद्गुणमाहरेत् । भक्तं लघुपुराणस्यशालेस्तस्विपिटोगुरुः ॥

भक्तकर : । पुं० कृत्रिमधूपे ॥

भक्तकार : । पुं० पाचके । औदनिके ॥ भक्तं करोति । डुकृञ्० कर्मण्यण् ॥

भक्ततूर्यम् । न० नृपाभेरे । भुंजांभोजनकालावेदके वाद्यविशेषे ॥

भक्तदास : । पुं० पंचदशदासान्तर्गतदासविशेषे । दुर्भिक्षे पिभक्तेनाङ्गीकृतदास्ये ॥

भक्तमण्ड : । पुं० अन्नाग्ररसे । मासरे । मांड० इ० भा० ॥

भक्तवत्सल : । पुं० श्रीहरौ । भक्ता : वत्सलायस्य ॥ त्रि०. भक्तस्नेहवति ॥

भक्ति : । स्त्री० विभागे ॥ गौणवृत्तौ ॥ भङ्ग्याम् ॥ श्रद्धायाम् । भजने ॥ अनुरक्तौ ॥ अनुरागविशेषे ॥ पूज्येष्वनुरागोभक्तिरित्युपदेशः ॥ परमेश्वरविषयेपरमप्रेमणि । नचेष्टदेवात् परमस्तिकिंचिदिति

बुद्धिपूर्विकायां प्रीती ॥ उपास नायाम् । उपास्याकारचित्तवृत्त्या वृत्तिरूपायांपरिपक्वनिदिध्यासना ख्यायांश्रवणमननाभ्यासफलभूतायामनुरक्ती । तात्पर्य्यं । जन्मान्तर सहस्रेषु तपोध्यानसमाधिभिः । नराणांक्षीणपापानांकृष्णेभक्तिःप्रजायते ॥ उक्तानिलक्षणानिगौतमीयतन्त्रे देवतायांचमन्त्रे च तथा मन्त्रप्रदेगुरौ । भक्तिरष्टविधायस्य तस्यकृष्णः प्रसीदति । तद्भक्त जनवात्सल्यं पूजायांचानुमोदनम् । सुमनाश्चर्चयेन्नित्यं तदर्थे दम्भ वर्जनम् ॥ तत्कथाश्रवणे रागस्तदर्थे चाङ्गविक्रिया । तदनुस्मरणंनित्यं ०यस्तन्नाम्नोपजीवति । भक्तिरष्ट विधाह्येषा यस्मिन्म्लेच्छेपिवर्त्तते । समुनिः सत्यवादीचकीर्त्तिमान्सभवेन्नरः ॥ श्रीभागवते प्रह्लादोक्तिर्यथा । श्रवणं कीर्त्तनं विष्णोःस्मरणम्पादसेवनम् । अर्च्चनंवन्दनंदास्यं सख्यमात्मनिवेदनम् । इतिपुंसार्पिताविष्णौभक्ति श्चेन्नवलक्षणा । क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ इति ॥ उदाहरणम् यथा । विष्णोस्तुश्रवणे परीक्षितिरभूद्वैयासकिः कीर्त्तनेप्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुःपूजने । सुग्रीवस्त्वभिवन्दनेऽथ हनुमान् दास्येऽथ सख्येऽर्जुनः सर्व्वस्वात्मनिवेदने बलिरभूत्कैवल्यमेषाम् पदमिति ॥ हिमालयउवाच । कीदृशीभक्ति र्वदस्वाम्बयेनज्ञानं सुखं नहि । जायते मनुजस्यास्यमध्यमस्याविरागिणः ॥ मध्यमस्य मध्यमाधिकारिणः विरागिणोभक्ति रहितस्यापि दुर्ल्लभज्ञानं येनभक्तिहेतुनाजायेत तांभक्तिं वदेत्यर्थः ॥ श्रीदेव्युवाच । मार्गास्त्रयोमेविख्याताम्मोक्षप्राप्तौनगाधिप । कर्म्मयोगोज्ञानयोगो भक्तियोगश्चसत्तम ॥ मोक्षप्राप्तौत्रयोमार्गाः ते चकर्म्मोपासनाज्ञानभेदेनत्रिविधाः । तत्रज्ञानमार्गः साक्षान्मोक्षसाधनम् व्रतरौचित्तशुद्धिद्वारेतिविवेकः । तान्मार्गान् दर्शयतिकर्म्मयोगइतिभक्तियोग उपासनायोगइत्यर्थः ॥ त्रयाणामप्ययंयोग्यः कर्त्तुंयोग्योस्तिसर्व्वथा । सुलभत्वात्मानसत्वात्कायचित्ताद्यपीडनात् ॥ गुणभेदान्मनुष्याणां साभक्तिस्त्रिविधामता । परपीडांसमुद्दिश्यदम्भंकृत्वापुरस्सरम् ॥ मात्सर्य्यक्रोधयुक्तोयस्तस्यभक्तिस्तु तामसी । परपीडादिरहितः स्वकल्याणार्थमेवच ॥ नित्यंसकामहृदयोयश्चोर्थीभोगलोलुपः । तत्तत् फलसमावाप्त्यै मामुपास्तेतिभक्ति

तः ॥ भेदबुद्ध्यादिमां यस्मादन्यं
जानाति पामरः । तस्य भक्तिः स
माख्याता नगाधिप तु राजसी ॥ पर
मेशार्पणं कर्म पापसङ्क्षालनाय
च । वेदोक्तत्वादवश्यं तत्कर्त्तव्यं
तु मया निशम् ॥ इति निश्चितबु
द्धिस्तु भेदबुद्धिमुपाश्रितः ।
करोति प्रीतये कर्म भक्तिः सा नग
सात्त्विकी ॥ परभक्तेः प्रापिकेयं
भेदबुद्ध्यवलम्बनात् । पूर्वप्रोक्ते
ह्युभे भक्ती न परप्रापिके मते ॥
अधुना परभक्तिन्तु प्रोच्यमानां नि
बोध मे । मद्गुणश्रवणं नित्यं मम
नामानुकीर्त्तनम् ॥ कल्याणगुण
रत्नानामाकरायां मयि स्थिरम् ।
चेतसो वर्त्तनञ्चैव तैलधारासमं
सदा ॥ हेतुस्तु तत्र को वापि न कदा
चिद्भवेदपि । सामीप्यसार्ष्टिसा
युज्यसालोक्यानां न चैषणा ॥ मत्
सेवातोऽधिकं किञ्चिन्नैव जानाति
कर्हिचित् । सेव्यसेवकताभावा
त् तत्र मोक्षं न वाञ्छति ॥ परा
नुरक्त्या मामेव चिन्तयेद्यो ह्यतन्द्रि
तः । स्वाभेदेनैव मां नित्यं जाना
ति न विभेदतः ॥ मद्रूपत्वेन जी
वानां चिन्तनं कुरुते तु यः । यथा
स्वस्यात्मनि प्रीतिस्तथैव च परात्म
नि ॥ चैतन्यस्य समानत्वान्न भेदं
कुरुते तु यः । सर्वत्र वर्त्तमानानां

भक्तिः

सर्वरूपास्व सर्वदा ॥ नमते यजते
चैवाप्याचाण्डालान्तमीश्वरम् ।
न कुत्रापि द्रोहबुद्धिं कुरुते भेदवर्ज्ज
नात् ॥ मत्स्थानदर्शने श्रद्धा मद्
भक्तदर्शने तथा । मच्छास्त्रश्रवणे
श्रद्धा मन्त्रतन्त्रादिषु प्रभो ॥ मयि प्रे
माकुलमती रोमाञ्चिततनुः स
दा । प्रेमाश्रुजलपूर्णाक्षः कण्ठ
गद्गदनिस्वनः ॥ अनन्येनैव भावे
न पूजयेद्यो नगाधिप । मामीश्वरीं
जगद्योनिं सर्वकारणकारणाम् ॥
दानानि मम दिव्यानि नित्यनैमित्ति
कान्यपि । नित्यं यः कुरुते भक्
त्या वित्तशाठ्यविवर्ज्जितः ॥ मदुत्स
वदिदृक्षा च मदुत्सवकृतिस्तथा ।
जायते यस्य नियतं स्वभावादेव भू
धर ॥ उच्चैर्गायं स्वनामानि ममैव
खलु नृत्यति । अहङ्कारादिरहितो
देहतादात्म्यवर्ज्जितः ॥ प्रारब्धे
न यथा यच्च क्रियते तत् तथा भवेत् ।
न मे चिन्तास्ति तत्रापि देहसंरक्षणा
दिषु ॥ इति भक्तिस्तु या प्रोक्ता पर
भक्तिस्तु सा स्मृता । यस्यां देव्यति
रिक्तन्तु न किञ्चिदपि भाव्यते ॥
इत्थं जाता परा भक्तिर्यस्य भूधर तत्त्व
तः । तदैव तस्य चिन्मात्रे मद्रूपे
विलयो भवेत् ॥ भक्तेस्तु या परा
काष्ठा सैव ज्ञानं प्रकीर्त्तितम् ।
वैराग्यस्य च सीमा सा ज्ञाने तदुभयं

यतः ॥ भक्तौक्ततायांयस्यापि प्रार
ब्धवशतोनग । नजायतेऽमज्ञानंम
णिद्वीपंसगच्छति ॥ तत्रगत्वाखिला
न् भोगाननिच्छन्नपिचर्च्छति ॥
तदन्तेममचिद्रूपज्ञानंसम्यग्भवे
न्नग । तेनमुक्तः सदैवास्याज्ज्ञाना
न्मुक्तिर्नचान्यथा ॥ इहैववस्य
ज्ञानंस्याद्धृद्गतप्रत्यगात्मनः ॥
ममसंवित्परतनोस्तस्यप्राणाव्रजन्ति
न । ब्रह्मैवसंस्तदाप्नोतिब्रह्मैव
ब्रह्मवेदयः ॥ कण्ठचामीकरस
मज्ञानात्तुतिरोहितम् । ज्ञाना
दज्ञाननाशेनलब्धमेवहिलभ्यते ॥
विदिताविदितादन्यन्नगोत्तमवपु
र्मम । यथादर्शेतथात्मनियथाजले
तथापितृलोके ॥ छायातपौयथा
स्वच्छौविविक्तौतद्वदेवहि । मम
लोकेभवेज्ज्ञानंद्वैतभानविवर्जि
तम् ॥ यस्तुवैराग्यवानेवज्ञानही
नोम्रियेतचेत् । ब्रह्मलोकेव
सेन्नित्यंयावत्कल्पंततः परम् ॥
शुचीनांश्रीमतांगेहेभवेत्तस्य
जनिः पुनः । करोतिसाधनं
पश्चात्ततोज्ञानंहिजायते ॥ अ
नेकजन्मभीराजन्ज्ञानंस्यान्नैक
जन्मना । ततः सर्वप्रयत्नेनज्ञाना
र्थंयत्नमाश्रयेत् ॥ नोचेन्महा-
विनाशः स्याज्जन्मैतद्दुर्लभं-
पुनः । तत्रापिप्रथमेवर्णेवेदप्रा
प्तिश्चदुर्लभा ॥ शमादिषट्कसम्प
त्तियोगसिद्धिस्तथैवच । तथोत्तम
गुरुप्राप्तिः सर्वमेवात्रदुर्लभम् ॥
तथेन्द्रियाणांपटुतासंस्कृततनुस्त
नोस्तथा । अनेकजन्मपुण्यैस्तु
मोक्षेच्छाजायतेततः । साधने
सफलेप्येवंजायमानेपियोनरः ।
ज्ञानार्थंनैवयततेतस्यजन्मनिरर्थक
म् ॥ तस्माद्राजन्यथाशक्त्याज्ञा
नार्थंयत्नमाश्रयेत् । पदेपदेऽश्व
मेधस्यफलमाप्नोतिनिश्चितम् ॥
घृतमिवपयसिनिगूढं भूतेभूतेचवस
तिविज्ञानम् । सततंमन्थयितव्यंमन
सामन्थानभूतेन ॥ ज्ञानंलब्ध्वा
कृतार्थः स्यादितिवेदान्तडिण्डिमः
। सर्वमुक्तंसमासेनकिंभूयः श्रोतुमि
च्छसि ॥ ४५ ॥ इतिश्रीदेवीभाग
वतेमहापुराणे सप्तमस्कन्धे देवी-
गीतायांसप्तत्रिंशोऽध्यायः ॥ ३७ ॥
भक्तिश्चवैराग्यस्यपत्नी । यथा । वैरा
ग्यस्यचद्वेभार्येश्रद्धाभक्तिश्चपूजिते ।
याभ्यांशश्वज्जगत्सर्वंयज्जीवन्मुक्ति
मन्मुने । इति ॥ भज्यतेसेव्यते । भज
सेवायाम् । कर्मणिक्तिन् । भजइ
त्येषवैधातुः सेवायांपरिकीर्तितः
। तस्मात्सेवाबुधैः प्रोक्ताभक्तिसा
धनभूयसी ॥

भक्तिकरः । पुं० भक्तौ ॥ भक्तिंकरोति
दिवाविभेतिटः ॥

भक्तिमान् । त्रि॰ भक्तियुक्ते ॥

भक्तियोगः । पुं॰ प्रेमलक्षणे ॥ यथोक्तंदेवीगीतायाम् । त्रयाणामप्ययंयोग्यः कर्त्तुंशक्योस्तिसर्वथा । सुलभत्वान्मानसत्वात्कायचित्ताद्यपीडनात् ॥ अस्यार्थः । त्रयाणामपिमार्गाणांतन्मार्गगामिनांत्रयाणांपुरुषाणामप्ययंभक्तियोगः कर्त्तुंयोग्यः शक्यश्चभवति । कुतइतिचेत् ० अस्य भक्तियोगस्यान्यापेक्षयासुलभत्वान्मानसत्वात्० द्रव्यव्ययशरीरायासमन्तरेणकेवलं मनोवृत्त्यैवसम्पाद्यत्वात् । यस्मिन्भक्तियोगे । कायचित्तद्रव्यव्ययादिपीडनाभावो भवति तस्मादित्यर्थः । तस्मात्सर्वैरप्ययं भक्तियोगोनियमेनाश्रयितव्य इत्यर्थः ॥

भक्तिलः । पुं॰ साधुहये ॥

भक्षकः । त्रि॰ भक्षणतत्परे । अशुरे । घस्मरे ॥ भक्षयति । भक्षअदने । ण्वुल् ॥

भक्षटकः । पुं॰ क्षुद्रगोक्षुरे ॥

भक्षणम् । न॰ द्रवेतरद्रव्यस्यगलाधःकरणे । नादे । स्वदने । खादने । भखना॰ खाना॰ इतिभाषा ॥ भक्षेर्ल्युट् ॥ शणशाकंतथामांसंकरेणकथितंदधि । तर्जन्यादत्तधावत्रसद्योगोमांसभक्षणम् ॥

भक्षणीयम् । त्रि॰ भक्ष्यद्रव्ये । भक्षणयोग्ये ॥ भक्ष्यतेयत् । भक्ष॰ । अनीयर् ॥

भक्षपत्रा । स्त्री॰ नागवल्ल्याम् ॥

भक्षितः । त्रि॰ कृतभक्षणवस्तुनि । चर्विते । प्रत्यवसिते । खादिते । अभ्यवहृते । अशिते । भुक्ते । खायलिया॰ इ॰ भा॰ ॥ भक्ष्यतेस्म । भक्ष॰ । क्तः ॥

भक्ष्यः । त्रि॰ अदनीयद्रव्ये । अपूपादौ ॥ दन्तैरवखण्ड्यावखण्ड्ययत् भक्ष्यते॰तद्भक्ष्यम् । खरविशदमभ्यवहार्यंभक्ष्यमितिव्याख्यातारः । खरंकठिनम्॰ विशदंविविक्तावयवंखाद्यं॰ भक्ष्यमित्यर्थः ॥ यत्प्रत्ययान्तस्यभक्षयतेस्तत्रैवप्रयोगात् ॥ भक्ष्यस्नामचतुःप्रतिघातार्थमुपादीयते॰ शक्यश्चानेनश्वमांसादिभिरपिचुत्प्रतिहन्तुम् । तत्रनियमः क्रियतेइदंभक्ष्यमिदमभक्ष्यमितिमहाभाष्यम् ॥ भक्ष्यस्नामेत्यस्यतत्रवर्तियदितिशेषइतिविवरणम् ॥

भक्ष्यकारः । त्रि॰ पिष्टकादिखाद्यद्रव्यविक्रयजीविनि । आपूपिके । कांदविके । कंदोइ॰हलवाई॰ इ॰ भा॰ ॥ भक्ष्यंकरोति । कर्मण्यण् ॥

भक्ष्याभक्ष्यम् । न॰ खाद्याखाद्यद्रव्ये ॥ यथा । भक्ष्याभक्ष्याण्यनेकानिब्राह्मणस्तुविशेषतः । अत्रशिष्टायथाब्रूयुस्तथाकार्योविनिर्णयः ॥

भव्यालाबू : । स्त्री॰ राजालाब्वाम् ॥
भग : । पुं॰ भाग्ये ॥ ऐश्वर्य्यादिषु ॥
यथा । ऐश्वर्य्यस्यसमग्रस्यधर्मस्ययश
स : श्रिय : । ज्ञानवैराग्ययोश्चैव
षस्रांभगइतीङ्गना ॥ सूर्य्ये । रवौ ॥
भज्यते । गजसेवायाम् । पुंसी
तिघ : । खनोघचेतिघित्करणाद्वा
घ : ।।
भगम् । न॰ स्त्रीचिह्ने । योनौ ।
वराङ्गे । उपस्थे । स्मरमन्दिरे
। रतिगृहे । जन्मवर्त्मनि ।। तस्य
लक्षणंयथा । विस्तीर्णंचगभीरंच
द्विविधं भगलक्षणम् । तद्गुणा
यथा । कूर्मपृष्ठंगजस्कंधं पद्मगधं
सुकोमलम् । अकोमलंसुविस्तीर्णं
पंचैते चभगोत्तमा : ॥ तद्दोषा
यथा । शीतलंनिम्नमत्युष्णं गोजि
ह्वासदृशंपरम् । इत्युक्तं कामशा
स्त्रज्ञैर्भगदोष चतुष्टयम् ॥ विस्ती
र्णमुषलंयोज्यंगभीरेबंशवीजकम्
॥ इति ॥ श्रियि ॥ वीर्य्ये ॥ इच्छा
याम् ॥ ज्ञाने ॥ वैराग्ये ॥ की
र्त्तौ ॥ माहात्म्ये ॥ ऐश्वर्य्ये ॥
यत्ने ॥ धर्म्मे ॥ मोक्षे ॥ रूपे ॥
स्त्रियि । सौभाग्ये ॥ कान्तौ ॥
सूर्य्ये । तपने ॥ चन्द्रे ॥ पूर्वफल्
गुनीनक्षत्रे ॥ पूर्वफल्गुन्योर्देव
तायाम् ॥ पुंसांगुह्मुष्कमध्यभा
गे ॥

भगण : । पुं॰ नक्षत्रसमूहे ॥
यद्वा । भगमायासमाख्यातायोनि:
सर्वस्यसायत : । तद्वतीतितद्दीशा-
नीनाम्नाभगवतीस्मृतेतिशिवपुराणा
त्तर्गतोमासंहितोक्ते: सर्वकारण
त्वाद्योनिस्थानापन्नायामायाशक्तिस्त
स्यास्वामिनीत्वात्तद्वतीयासच्चिदा
नन्दरूपिणीदेवीसाभगवतीपदेनो
च्यते ॥
भगदत्त : । पुं॰ नरकासुरस्यज्येष्ठा
त्मजे ॥ यथा । सकरोभगदत्तेनप्रेर्य
माणोमुहुर्मुहु : । नकरोतिवचस्तस्य
दरिद्रस्य वयोषित : ॥
भगदैवतम् । न॰ पूर्वफल्गुनीनक्ष
त्रे ।। बृहस्पतेर्जन्मभे ॥
भगन्दर : । पुं॰ अपानदेशेव्रणरोगवि
शेषे ॥ तल्लक्षणमाह । गुदस्यद्वाङ्ग
लेक्षेत्रे पार्श्वत: पिडकार्त्तिकृत् ।
भिन्नोभगन्दरोज्ञेय : सचपंचविधो
भवेत् ॥ आर्त्तिकृत् पीडाकृत् । पं
चविध: ॰वातिकपैत्तिकश्लैष्मिक
सान्निपातिकशल्यजभेदै : ॥ भगंदा
रयति । भगेचदारेरितिकाशिकौ
क्तौ : खच् । मुम् ॥ तथाचभोज:
। भगंपरिममन्ताच्चगुदवस्तीतथै-
वच । भगवद्दार येद्यस्मात्तस्मादेष
भगंदर: ॥ इ॰ । भजन्त्यमेभेतिभग
मेहनम् । भजन्त्यस्मिन्निति भग
योनि : । अत्रभगशब्दे नद्वयमप्य

भिहितम् । भगवत्० योनिवत् ॥
कटीकपालनिस्तोददाहकण्डूरुजा
दयः । भवन्तिपूर्वरूपाणिभविष्यति
भगन्दरे ॥ कटीकपालमत्रकटीफल
कम् ॥ अथास्यपिडकामेवतथायत्ना
दुपाचरेत् । शुद्ध्यस्रस्तुतिसेका
द्यैर्यथापाकंनगच्छति ॥ लङ्घनं
स्वेदनंलेप विम्लापनविरेचनैः
। रक्तमोक्षादिभिः शीघ्रं गुदजांपि
डकांजयेत् ॥ तथायत्नंभिषक्कुर्या
द्यथापाकंनियच्छति । अपक्वंवाथ
पक्वंवाजलौकापातनंहितम् ॥ त
दभावेतुशृङ्गाभ्यामिदंरक्तस्यमोक्षण
म् ॥ गुग्गुलुत्रिफलायुक्तंपीत्वान
श्येद्भगन्दरः ॥

भगभक्षकः । पुं० कुण्डाशिनि । कुट
ना० इ० भा० ॥ तस्यान्नभक्षण
निषेधोयथा । योबान्धवैः परि
त्यक्तः साधुभिर्ब्राह्मणैरपि ।
कुण्डाशीयश्चतस्यान्नंभुक्त्वाचान्द्रा
यणंचरेदिति ॥

भगवान् त्रि० अचिन्त्यैश्वर्यादिगु
णे० ईश्वरशब्दवाच्ये ॥ भगमाश्चा
त्म्यं षड्विधमैश्वर्यंचनित्यम
प्रतिबन्धेनयत्रवर्त्तते०सभगवान्
नित्ययोगेमतुप् ॥ उत्पत्तिंनिधन
ञ्चैवभूतानामागतिङ्गतिम् ।
वेत्तिविद्यामविद्याञ्चसवाच्योभगवा
निति विष्णुपुराणम् ॥ पूजावति

। पूज्ये ॥ आत्मनि ॥ जिने ॥

भगवती । स्त्री० अचिन्त्यैश्वर्यायामा-
द्यायाम् । गौर्याम् । दुर्गायाम् । प
रस्यांप्रकृतौ ॥ तस्याः स्वरूपंयथा
। यथानित्योहिभगवान्नित्याभगव
तीतथा ॥ स्वमाययातिरोभूतातत्रेशे
प्राकृतेलये ॥ आब्रह्मस्तम्बपर्यन्तंस
र्वंमिथ्यैवकृत्रिमम् । दुर्गासत्यस्व
रूपासाप्रकृतिर्भगवान्यथा । सि-
द्ध्यैश्वर्यादिकंसर्वंयस्यामस्तियुगेयु
गे । सिद्ध्यादिकेभगोज्ञेयस्तेनभ
गवतीस्मृता ॥ इतिब्रह्मवैवर्त्तपुरा
णम् ॥ अपिच । सेव्यतेयासुरैः
सर्वैस्तांश्चैवभजतेयतः । धातु-
र्भजेतिसेवायांभगवत्येवसास्मृते-
ति ॥ चतुर्व्यूहात्मकंभगवत्याः
स्वरूपंक्रमेणदर्शितंश्रीदेवीभागवते ।
तद्यथा । सर्वस्याद्यामहालक्ष्मीर्वरे-
ण्याशक्तिरुत्तमा । सात्त्विकीयंमही
पालाजगत्पालनतत्परा ॥ सृजतेया
रजोरूपासत्त्वरूपाचपालने । संहारे
चतमोरूपात्रिगुणासासदामता ॥
निर्गुणापरमाशक्तिः सर्वकामफ-
लप्रदा । सर्वेषांकारणंसाहिब्रह्मा
दीनांनृपोत्तमाः ॥ सर्वस्याद्येति ।
एकापालयित्रीसात्त्विकीमहालक्ष्मी
र्विष्णुशक्तिः सर्वप्रपञ्चस्याद्येय-
म् । द्वितीयातु०सृजतेयारजोरूपा
सा०सत्त्वरूपाचपालने०इतिपुनस्त

क्तिरनुवादरूपा : संहारितमोरूपा-
यासेयंतृतीयाशक्तिः। एतासांना-
मानिप्रथमस्कन्दएवोक्तानि। तस्या
स्तुसात्विकीशक्तीराजसीतामसीत-
था। महालक्ष्मीसरस्वतीमहाकाली
तिता : स्त्रियइति। ननुरहस्ये तु०
सत्वाख्येनातिशुद्धेनगुणेनेन्दुप्रभं-
दधावितिवचनेनमहालक्ष्मीरजोगु
णासरस्वतीसत्वगुणेतिलभ्यतइति-
चेन्न। कल्पभेदेनगुणभेदव्यवस्था-
या : सुस्थत्वात्। एतासांचशक्ती-
नांशक्तसस्वरूपाव्यतिरेकाद्ब्रह्माश्रयं
विहायावस्थानासम्भवेन०ततद्गु-
णविशिष्टंब्रह्मैवमहालक्ष्म्यादिना
मकमितिबोध्यम्॥ निर्गुणेति।
अथयागुणत्रयकारणभूतासाम्याव-
स्थात्मिकासानिर्गुणा०तस्याअपिप
राशक्तित्वेन०ब्रह्माश्रयंविनाऽवस्था
नासम्भवेन०साम्यावस्थमायोपाधि
कंब्रह्मैव०पराशक्तिमायाभुवनेश्व-
रीशब्दवाच्यंभवति। सर्वंचेदमुपो-
द्घातेस्पष्टम्। तत्रनिर्गुणासर्वे-
षांकारणमित्याह। सर्वेषांकारणं
साहीति। सर्वकारणस्यानवस्था-
भियाकस्मादप्युत्पत्त्यभावेननित्य-
त्वमुक्तम्। तेनचकेयंशक्तिः : कुतो
जातेत्यस्योत्तरंदत्तंभवति॥ रूपच
तुष्टयमध्येप्याह। निर्गुणासर्वथा-
ज्ञातुमशक्यायोगिभिर्नृपा:। सगु-
णासुखसेव्यासाचिन्तनीयासदाबुधैः
॥ अयोगिभिरितिच्छेदः। अयो
गिभिर्निर्विकल्पसमाधिरहितैर्निर्गु
णाज्ञातुमशक्यायोगिबुद्धिगम्यैवेति
त्यर्थः। तथाचश्वेताश्वतरेतिध्या-
नयोगानुगताअपश्यन्देवात्मशक्तिं
स्वगुणैर्निगूढामिति। मध्यमाधि-
कारिणामयोगिनान्तुसगुणामहा-
लक्ष्म्यादिरूपाचिन्तनीयेत्यर्थः।
तद्दहरामूलप्रकृतेरेवसर्वेषामाश्र-
त्वमितिरहस्यम्। सर्वेषांदंशतित-
त्वविमर्शिन्यांस्पष्टम्॥ पूज्यायाम्
॥ उगित्वान्ङीप्॥

भगवत्पदी। स्त्री० गङ्गायाम्॥

भगवत्पूज्यपादः। पुं० श्रीशङ्कराचा-
र्ये॥

भगवद्द्रुमः। पुं० तगरवृक्षे॥

भगवद्धर्मः। पुं० हरिपरितोषकैकाद
श्यादिनियमस्वरूपे धर्मे॥ त्रि०त
द्विशिष्टे॥

भगवद्भक्तः। त्रि० स्थितप्रज्ञे॥ य०।
दैवाधीनंजगत्सर्वंमजन्मकर्मशुभा
शुभम्। संयोगाश्चवियोगाश्चनचदै
वात्परंवलम्॥ कृष्णायत्तश्चतद्दैवं
सदैवात्परतस्ततः। भजन्तिसततं
संतः परमात्मानमीश्वरम्॥ दै-
वंवर्द्धयितुंशक्तः : क्षयंकर्त्तुंस्वली
लया। नदैववद्धस्तद्भक्तश्चाविनाशी
चनिर्गुणः॥

भगालम् । न० नृकरोटिकाया म् । नृमस्तके ॥ भनक्ति । भञ्जो आमर्दने । बाहुलकात् कालन् । नलोपः । न्यङ्क्वादित्वात् कुत्व म् ॥

भगाली । पुं० चन्द्रमौलौ । सदाशि वे ॥ भगालमस्यास्ति । इनि: ॥

भगिनी । स्त्री० सहोदरायाम् ॥ स्वसरि ॥ भगंकल्याणम् ० इच्छा वास्त्यस्या: । इनि: । ङी प् ॥

भगनीपति: । पुं० आवुत्ते ॥ भामे । । भगिन्या: पति: ॥

भगीरथ: । पुं० सूर्यवंशीयनृपति विशेषे । दिलीपात्मजे । योहि गङ्गांस्वर्गादानीयभागीरथीतिसंज्ञां चकार ॥

भगोल: । पुं० भपञ्जरे । नक्षत्रचक्रे ॥

भगो । अ० ) हेभगवन्०

भगो: । अ० ) इतिसम्बोधने ॥

भग्न: । त्रि० पराजिते ॥ स्फुटिते । फूटा० इ०भा० ॥ भङ्गे ॥ तोडा० इ०भा० ॥ यथा । चिरकालोषितं- जीर्णंकीटनिष्कुषितंधनु: । कि ञ्चित्रंयद्रिरामेणभग्नंक्षत्रियकान्ति के ॥ भञ्ज: क्त: ॥ न०रोगविशेषे । अस्थिविश्लेषलक्षणे ॥

भग्नपादर्क्षम् । न० पुष्कराख्यनक्षत्र षट्के ॥ यथा । पुनर्वसूत्तराषाढा: कृत्तिकोत्तरफल्गुनी । पूर्वभाद्र: विशाखेचषडेतेपुष्करा:स्मृता० ॥ भग्नपादर्क्षसंयोगात्० द्वितीया द्वादशीयदि । सप्तमीचार्कमन्दारे- जायतेजारजोध्रुवम् ॥

भग्नपृष्ठ: । पुं० सम्मुखे ॥ इ०त्रि० शेष: ॥

भग्नसन्धि: । पुं० शरीरस्थसन्धिस्था नभग्नरोगविशेषे ॥ तस्यौषधंयथा । अभयात्रिफलाव्योष: सर्वैरेभि: समीकृतै: । तुल्योगुग्गुलुनायो ज्योभग्नसन्धिप्रसारक: ॥

भग्नसन्धिकम् । न० घोले ॥

भग्नात्मा । पुं० चन्द्रमसि ॥

भग्नाश: । त्रि० हताशे ॥

भग्नी । स्त्री० भगिन्याम् ॥

भङ्कारी । स्त्री० दंशे ॥

भङ्क्ता । त्रि० भङ्गकर्त्तरि ॥ भनक्ति: । भञ्जो० । तृच् ॥

भङ्ग: । पुं० तरङ्गे । वीच्याम् । स्व- ल्पोर्म्याम् ॥ भज्यते । भञ्जो० । क- र्मणिघञ् ॥ जयविपर्यये । पराजये । भञ्जनम् । घञ् ॥ भेदे ॥ रोगविशे षे ॥ रोगभाग्वे ॥ स्फोटने ॥ कौटि ल्ये ॥ भये ॥ विच्छित्तौ ॥ जलनि र्याणे ॥ न० खण्डे ॥

भङ्गवासा । स्त्री० हरिद्रायाम् ॥

भङ्गसार्थ: । त्रि० कुटिले ॥

भङ्गा । स्त्री० शणाख्यशस्यान्तरे । मा

तुलान्याम् ॥ इन्द्राशने । विजया याम् । भाङ्ग० इ० भा० । भङ्गाक फहरीतिख्यातायाहिणोपाचनीलघुः । तीक्ष्णोष्णापित्तलामोहमदवाग्वह्निवर्द्धनी ॥ भज्यतेऽनया । भञ्जो० । अकर्त्तरिचेतिहलश्चेतिवा० घञ् । टाप् ॥ विच्छित्तायाम् ॥

भङ्गाकटम् । न० भङ्गारजसि ॥ अला वृतिलेति० कटच् ॥

भङ्गानः । पुं० मत्स्यविशेषे ॥ दीर्घज ङ्गले । भाङ्गन० इ० गौ० दे० भा०

भङ्गिः । स्त्री० भक्तौ ॥ वीच्याम् ॥ विच्छेदे ॥ कौटिल्यप्रभेदे । विभ ङ्ग्याम् ॥ विन्यासे ॥ भङ्गे ॥ व्याजे ॥ [illegible] ॥ नानाविधशब्दरचना वैदग्ध्यविशेषाभङ्गयइतिव्याख्या: [illegible] ॥ [illegible]करणम् । तत्करोतीतिख्यस्मात्चइः ॥

भङ्गिमा । पुं० भङ्ग्याम् ॥ यथा । अ धरेकज्जलंचारुदृशोस्ताम्बूलरङ्गिमा । प्राणनाथकिमेतत्ते वेशविन्यास-भङ्गिमा ॥

भंगी । स्त्री० विभङ्ग्याम् । कौटिल्ये । अंगमनोहरविन्यासे ॥ जानामिमानमलसांगिवचोविभंगीभंगीगतंनयनयोरपिचातुरींच । आभीरनन्दनमुखाम्बुजसंगशंसोवंशीरवोयदिनमामवशीकरोतीत्युद्भटः

भंगुरः । पुं० नद्यावक्रे । त्रि० कुटिले । वक्रे ॥ भास्वरे ॥ भज्यतेस्वयमेव । भञ्जो० । भञ्जभासेतिघुरच् । कर्मकर्त्तर्येव ॥

भंगुरा । स्त्री० अतिविषायाम् ॥ प्रियङ्गौ ॥

भङ्ग्यम् । न० भांगीने ॥ भंगायाभव नंक्षेत्रम् । विभाषातिलमाषोमाभङ्गाणुभ्य इ०पञ्चेयत् । भंगार्हे ॥ भङ्गमर्हति । दण्डादित्त्वाद्यत् ॥

भचक्रम् । न० राशिचक्रे ॥ यथा । भमावर्त्तेभचक्रेस्मिन्ध्रुवोनाभौव्यवस्थितः । आराचक्रेत्विन्दुभौमौशुक्रजीवशनैश्चराः ॥ राहुः केतुरस्यश्चनक्षत्रश्चयराशयः । यदादिदुष्टामुमेरोर्भूगोलकोद्भवा ॥ कायाभवेत्तदाराचिः स्यात्ततहिरहा हिमम् । सूर्येन्द्वोरुपरागस्तुगोलच्छायया भवेत् ॥ अन्योन्ययोस्तयोरेवकारणात् । ग्रासमोक्षौतुजायेतेतत्रातः पूर्वपश्चिमौ ॥ तत्रवृष्यफलाद्भागः क्षतोराहोस्तुविषयं त्यार्यवह्निपुराणेभेदनामाध्यायः ॥ अथभचक्रभ्रमणव्यवस्थामाहसिद्धान्तशिरोमणौ ॥ निरक्षदेशेक्षितिमंडलोपगौ ध्रुवौनरः पश्यतिदक्षिणोत्तरौ । तदाश्रितंखेजलयन्त्रवत्तदाभ्रमद्भचक्रंनिजमस्तकोपरि ॥ उदग्दिशंयातियथायथानरस्तथातथाखान्नतमृक्षमंडलम् । उदग्ध्रुवंपश्यतिचोन्नतं

मितिस्तट्टत्तरेयोजनजाःपलांशकाः ॥ योजनसङ्ख्याभांशै३६०र्गुणिता कुपरिधिहृता४८६७भवन्त्यंशाः भूमौकक्षायांवाभागेभ्योयोजनानिच व्यस्तम् ॥ इति ॥

भजन् । त्रि० विभजति । भागकर्त्तरि ॥ सेवाकर्त्तरि । सेवति । भजति । भजसेवायाम् । लटःशत्रादेशः ॥

भजनम् । न० भक्तौ । भागे । सेवायाम् ॥ भजेर्भावेल्युट् ॥ दारास्तेयेभजनसहायापुत्रास्तेयेतब्बनकायाः । धनमपितद्द्वरिभजनार्थमोचे देत तुसर्वव्यर्थम् ॥

भजमानः । त्रि० औपयिके । न्यायागते ॥ शरणागते ॥ भजतेफलमनुवध्नाति । भज० । ताच्छील्ये ति० चानश्० शानच्वा ॥ भागकर्त्तरि ॥ सेवाकर्त्तरि ॥

भजिष्णुः । त्रि० भजनशीले ॥

भञ्जकः । पुं० त्रि० भञ्जनकर्त्तरि ॥ भनक्ति । भञ्जो० । लटः शतृ ॥

भञ्जनम् । न० खंडने । भञ्जेर्भावेल्युट् ।

भञ्जनकः । पुं० मुखरोगविशेषे । यथा । वक्त्रंवक्रंभवेद्यस्तद्दन्तभंगश्च जायते । कफवातकृतोव्याधिः स भञ्जनकसंज्ञितः ॥

भञ्जकः । पुं० देवकुलोद्भूततरौ । काचिमे ॥

भञ्जा । स्त्री० अन्नपूर्णायांदेव्याम् ॥

भञ्जितः । त्रि० खंडिते ॥

भटः । पुं० योद्धरि । वीरे ॥ पामरविशेषे ॥ म्लेच्छप्रभेदे ॥ मिथ्याभाषिणिसेवके । रात्रिचरे ॥ वर्णसङ्करजातिविशेषे ॥ यथा । वर्द्धकाराइटोजातोनटिक्यांवरवाहकः । इ० प० पु० ॥ भटति । भटभृतौ । पचाद्यच् ॥

भटा । स्त्री० इन्द्रवारुण्याम् । राखालशसा० इ० दे० भा० ॥

भटित्रम् । न० शूलाकृते । शूल्ये । शूलपक्वमांसे । शूला० इ० भा० भटतिभक्ष्यतेवा । भट० । अमिनाक्षि० इत्र ॥

भटी । स्त्री० भटयोषिति ॥

भट्टः । पुं० मीमांसकविशेषे भाट० इ० भा० प्र० वर्णसङ्करजातिविशेषे ॥ तस्योत्पत्तिर्ब्रह्मवैवर्त्ते यथा । वैश्यायांशूद्रवीर्येण पुमानेकोवभूव ह । सभट्टोवावदूकश्चसर्वेषांस्तुतिपाठकः ॥ अपिच तत्रैव । क्षत्रियाद्विप्रकन्यायांभट्टोजातोनुवाचकः । इति ॥ शिविरान्तिकेराज्ञातस्थवासोदेयः । यथा । भट्टंवैद्यंपुष्पकारंस्थापयेच्छिविरान्तिके । इ० ॥

भट्टाचार्यः । पुं० भट्टाचार्योभिताभिज्ञे ॥ तुतातभट्टमतंमीमांसाशास्त्रम् उदयनाचार्यमतंन्यायशास्त्रम्०एत

दुभयमतनिष्णातोभट्टाचार्य : ॥

भट्टार : । त्रि० पूज्ये ॥ भटति । भट । क्विप् । भट्चासौतारश्च । पृषोदरादि : ॥ भट्टं स्वच्छतिवा । कर्मण्यण् ॥

भट्टारक : । पुं० नाट्यवाचा०नृपे ॥ नाट्योक्ता०देवे ॥ तथा० तपोधने ॥ त्रि० पूज्ये ॥ भटति । भटपरिभाषणे । क्विप् । भट्चासौतारकश्च । पृषोदरादित्वात्० ह्रस्वनिषेधेन ॥ भट्टं स्वामित्वम्०स्वच्छतिवा । कर्मण्यण् । तत : स्वार्थेक : ॥

भट्टारकवार : । पुं० आदित्यवारे ॥

भट्टि : । पुं० सनामप्रसिद्धरामकथाश्रयेमहाकाव्ये ॥

भट्टिनी । स्त्री० नाट्योक्ताऽकृताभिषेकायांराजयोषायाम् ॥ ब्राह्मण्याम् ॥

भड : । पुं० वर्णसङ्करजातिविशेषे ॥ सतुलेटात्तीवरकन्यायांजात : । यथा । लेटस्तीवरकन्यायांजनयामासपञ्चनरान् । मालंमल्लंमातरञ्चभडंकोलञ्चकन्दरम् ॥ इ० ब्र० वै० पु० ॥

भडाग्नि : । पुं० अग्निविशेषे ॥ भड भडइतिशब्दयुक्तवह्नौ ॥

भडिल : । पुं० शूरे ॥ सेवके ॥ भडइतिसौत्रोधातु : । सलिकल्यनिमहिभडिभंडिशंडिपिंडितुंडिकुकिभूभ्यइलजिति० इलच् ॥

भणित : । त्रि० कथिते । शब्दिते ॥

भणिति : । स्त्री० वाचि ॥

भण्टाकी । स्त्री० वार्ताक्याम् ॥ भण्यते० भण्यते ऽ । भटभृतौ० भणश्च्देवा । पिनाकादयश्चेतिसाधु : ॥ वृहत्याम् ॥

भण्टिका । स्त्री० वृन्ताके । भण्टा० भण्टा० इ० भा० ॥

भण्टुक : । पुं० श्योनाकवृक्षे ॥

भण्ड : । पुं० चाटुवटौ । अश्लीलभाषिणिभांड०इ०भा० ॥ भंडते । भडिकल्याणे० पचाद्यच् ॥

भंडक : । पुं० खञ्जनखगे ॥

भंडनम् । न० कवचे ॥ युद्धे ॥ खलीकाकारे ॥

भंडहासिनी । स्त्री० वेश्यायाम् ॥

भंडि : । स्त्री० वीच्याम् ॥

भंडिका । स्त्री० मञ्जिष्ठायाम् ॥

भंडिर : । पुं० भंडिले ॥ शिरीषवृक्षे ॥ रलयोरैक्यम् ॥

भंडिल: पुं० । शिरीषवृक्षे । भण्डते । भडिकल्याणे ० परिभाषणेवा । सलिकलीति० इलच् । त्रि० दूते । शुभे ॥ शिल्पिनि ॥

भण्डी । स्त्री० मञ्जिष्ठायाम् ॥ भण्डति । भण्डभाभण्डने । पचाद्यच् । गौ० ङीष् ॥ शिरीषवृक्षे ।

भण्डीतकी । स्त्री० मंजिष्ठायाम् ॥

भण्डीर : । पुं० कोविदारे । काञ्च

नारे ॥ तण्डुलीयबीजे ॥ शिरी षवृत्ते ॥ भण्डीरीरम् ॥

भण्डीरलतिका । स्त्री० मञ्जिष्ठायाम् ॥

भण्डीरी । स्त्री० मंजिष्ठायाम् ॥ भण्डति । भण्डभामर्द्दने । वा० ईरन् गौ० ॥

भण्डील: । पुं० मंजिष्ठायाम् ॥

भण्डुक: । पुं० मत्स्यविशेषे । भाकुर० ऊ० गौ० दे० भा० ॥

भण्डूक: । पुं० श्योनाकवृक्षे ॥

भदन्त: । पुं० सौगतादिबुद्धे ॥ मुनेजसि ॥ मायादेवीसुते ॥ त्रि० प्रव्रजिते ॥ पूज्ये ॥ भंदते ॥ भदिकल्याणेसखेच । भन्देर्नलोपश्चेतिझ च् ॥

भद्राक: । पुं० न० मंगले ॥ भन्दते भदि० । पिनाकादित्वात्साधु: ॥

भद्रम् । न० कल्याणे ॥ शर्मणि । सौख्ये ॥

भद्र: । पुं० शिवे ॥ खंजरीटे ॥ वृषभे ॥ कदम्बके । करिजातिविशेषे ॥ नवशुकवलान्तर्गतबलदेवे । रामचरे ॥ सुखाम् ॥ न० मङ्गले ॥ मुस्ते ॥ काञ्चने ॥ त्रि० श्रेष्ठे । भन्दनीये ॥ स्तुत्ये ॥ साधौ ॥ पुं० स्त्री० करणान्तरे । विष्टिसंज्ञके ॥ मृणाले० । भन्दते भदि० । ऋज्रेन्द्रेतिरन् । भन्देर्नलोपश्चनिपात्यते ॥

भद्रक: । पुं० देवदारुणि ॥ सुपार्श्वस्यविष्कम्भशैलमूले० धृतिमन्नामकाननम्० तत्रत्यहृदे ॥ न० भद्रमुस्तके ॥ त्रि० मनोज्ञे

भद्रकटः । पुं० गोक्षुरे ॥

भद्रकर्ण: । पुं० शिवस्थानविशेषे ॥ भद्राख्याभद्रकर्णके ॥

भद्रकर्णह्रद: । पुं० तीर्थविशेषे ॥

भद्रकर्णी । स्त्री० गन्धालिकायाम् ॥ ॥ गोकर्णाधिवासिन्यांदेव्याम् ॥

भद्रकाली । स्त्री० कात्यायन्याम् । महिषमर्द्दिन्याम् ॥ औषधीभेदे । गन्धाल्याम् ॥ भद्रंकल्याणंकालयति वर्द्धयति । कर्मण्यण् भद्राचासौकालीचेतिवा ॥

भद्रकाशी । स्त्री० भद्रमुस्तायाम् ॥

भद्रकुम्भ: । पुं० पूर्णकुम्भे । भद्रस्य० भद्रोवाकुम्भ:

भद्रगन्धिका । स्त्री० मुस्तके ॥

भद्रङ्कर: । त्रि० क्षेमङ्करे । शुभङ्करे ॥

भद्रचूड: । पुं० स्नुहीभेदे । लङ्कास्थायिनि ॥

भद्रज: । पुं० इन्द्रयवे ॥

भद्रतरुणी । स्त्री० कुब्जकवृक्षे ॥

भद्रतुरगम् । न० जम्बूद्वीपस्यनववर्षान्तर्गतवर्षविशेषे ॥ यथा ।

माल्यवज्जलधिमध्यवर्त्ति यत् तत्, भद्रतुरगं जगुर्बुधा: ॥ इ० सिद्धान्तशिरोमणि: ॥

भद्रदन्तिका। स्त्री० दन्तीवृक्षप्रभेदे। बोगरुद्दायाम्। न्यावहाया म् ॥

भद्रदारु:। पुं० न० देवदारुणि ॥ न० सरलवृक्षे ॥ भद्रंदारु ॥

भद्रदार्वादिक:। पुं० औषधगण वि० ॥

भद्रनामा। पुं० काष्ठकुट्टखगे ॥

भद्रनामिका। स्त्री० त्रायन्तीवृक्षे। बल्ला०गौ० दे० भा० प्र० ॥

भद्रनिधि:। पुं० महादानविशेषे ॥

भद्रपत्नी। स्त्री० सुभगायाम् ॥ भद्र: पतिर्यस्या: ० इतिविग्रहे० नित्यं सपत्न्यादिष्विति पतिशब्दस्य नान्तादेशे० नान्तलक्षणोङीप् ॥

भद्रपदा:। स्त्री० प्रोष्ठपदासु। पूर्वभाद्रपदोत्तरभाद्रपदनक्षत्रयो: ॥ भद्रं पदं यासाम् ० ता:। अत्रारोपाद्दुत्वं ॥

भद्रपर्णी। स्त्री० गम्भार्याम् ॥ भद्राणि पर्णान्यस्या:। पाककर्णेतिङीष् ॥ प्रसारण्याम् ॥

भद्रपीठ:। पुं० सिंहासने ॥

भद्रबलन:। पुं० बलरामे ॥

भद्रबला। स्त्री० लताविशेषे। प्रसारण्याम्। कटम्भरायाम् ॥ भद्रं बलमस्या: ॥ बलायाम् ॥

भद्रमल्लिका। स्त्री० वल्लीतिख्यातपुष्पे ॥

भद्रमल्ली। स्त्री० अपराजितायाम् ॥

भद्रमुञ्ज:। पुं० शरे। इक्षुदर्भे। सरकण्डा० इ० भा० ॥

भद्रमुस्त:। पुं० भद्रमुस्तके ॥ भद्रासौ मुस्तकश्च ॥

भद्रमुस्तक:। पुं० नागरमुस्तके ॥ भद्रश्चासौ मुस्तश्च ॥

भद्रमुस्ता। स्त्री० भद्रमुस्तके। गुन्द्रायाम् ॥

भद्रयवम्। न० कुटजफले। कलिङ्गे। इन्द्रयवे ॥ यवाकारबीजत्वाद्यवम्। भद्रश्चतद्यवं च ॥

भद्ररेणु:। पुं० ऐरावतहस्तिनि ॥

भद्रवट:। पुं० भौमतीर्थविशेषे ॥

भद्रवत्। न० देवदारुणि ॥

भद्रवती। स्त्री भद्रपर्ण्याम् ॥ कट्फले ॥

भद्रवर्मा। पुं० नवमालिकायाम्। नवाल्याम्। नवारा० इ० भा० ॥

भद्रवल्लिका। स्त्री० गोपवल्ल्याम्। अनन्तमूल० इ० भा० प्र० ॥

भद्रवल्ली। स्त्री० मल्लिकायाम् ॥ माधवीलतायाम् ॥ लताविशेषे। शातभीरौ। अष्टापदिकायाम्।

मद्नमालो०इ० हापरमालो०इ०
च०गौ०दे०भा० ॥

भद्रश्रयम्। न० चन्दने ॥

भद्रश्री:। पुं० चन्दनवृक्षे ॥ भद्राश्रीरप्य ॥

भद्रसोमा। स्त्री० गङ्गायाम् ॥

भद्रा। स्त्री० रास्नायाम् ॥ कृष्णायाम् ॥ व्योमनद्याम् ॥ यथा। भद्रा तथोत्तरगिरीन् उत्तरांश्चतथाकुरून् अतीत्योत्तरमम्भोधिमभ्येतिचमहामुने ॥ प्रसारिण्याम् ॥ कट्फले ॥ अनन्तायाम् ॥ तिथिभेदे। द्वितीयासप्तमीद्वादशीषु ॥ जीवन्त्याम्। अपराजितायाम् ॥ नील्याम् ॥ बलायाम् ॥ शम्याम् ॥ वचायाम् ॥ दन्त्याम् ॥ हरिद्रायाम् ॥ श्वेतदूर्वायाम् ॥ काश्मर्याम् ॥ सारिवाविशेषे ॥ गवि ॥ काकोदुम्बरिकायाम् ॥ बुद्धशक्तिविशेषे। तारायाम् ॥ छायागर्भजात सूर्यकन्यायाम् ॥ श्रीकृष्णभगिन्याम् ॥ सुभद्रायाम् ॥ दुर्गायाम् ॥ यथा। भद्राख्याइद्रकर्णिके० इति ॥ विष्ट्याम् ॥ यथा। शुक्ले पूर्वार्द्धेऽष्टमी पञ्चदश्योर्भद्रैकादश्यांचतुर्थ्यां परार्द्धे। कृष्णेऽन्त्यार्द्धे स्यात्तृतीया दशम्यो: पूर्वेभागेसप्तमीशम्भुतिथ्यो: ॥ विहायविघ्नरोद्राणिविष्टिं सर्वंचवर्जयेत्। विष्टिशेषेचिद्राडे

च्छिपुच्छे कार्यंजयावहम् ॥

भद्राकरणम्। न० मुण्डने

भद्राक्ष:। त्रि० शोभननेत्रे ॥

भद्रात्मज:। पुं० खड्गे ॥

भद्रारक:। पुं० अष्टादशक्षुद्रद्वीपान्तर्गतद्वीपविशेषे

भद्रालपत्रिका। स्त्री० )
भद्राली। स्त्री० ) गन्धाल्याम् ॥

भद्रावती। स्त्री० कट्फलवृक्षे ॥

भद्राश्वम्। न० भुवोनववर्षान्तर्गत वर्षविशेषे। इलावृतवर्षे ॥ भद्राश्वम् माल्यवत्प्राच्यांवर्षं भद्रजनाकुलम् ॥

भद्रासनम्। न० नृपासने ॥ भद्रश्च तद्रासनंच ॥ तृतीययोगाङ्गविशेषे तद्यथा। सीवन्या: पार्श्वयोर्न्यस्येद्गुल्फयुग्मं सुनिश्चलम्। वृषणाध: पादपार्ष्णी पाणिभ्यांपरिबन्धयेत् ॥ भद्रासनं समुद्दिष्टं योगिभि: सारकल्पितम् ॥

भद्रेश्वर:। पुं० कल्पग्रामस्थशिवे ॥ शिवप्राप्त्यर्थं दुर्गाराधितहिमालयस्थपार्थिवशिवलिङ्गे ॥

भद्रैला। स्त्री० स्थूलैलायाम् ॥

भद्रोदनी। स्त्री० बलायाम्। वरिआरा०इ० भा० ॥ नागबलायाम् ॥

भन्दम्। न० कल्याणे ॥ प्रचाद्ये च ॥

भन्दिल : । पुं॰ दूते न॰ शुभे ॥ कम्पे ॥

भन्भ्रक : । पुं॰ भारतवर्षान्तर्गतदेशविशेषे ॥

भपञ्जर : । पुं॰ नक्षत्रचक्रे ॥

भपति : । सुधांशौ ।। भानांपति : ॥

भम्भ : । पुं॰ धूमे ॥

भम्भरालिका । स्त्री॰ भङ्गार्याम् । दंशे ॥

भम्भराली । स्त्री॰ मक्षिकायाम् ॥ दंशे ॥

भम्भासार : । पुं॰ मगधराजविशेषे । श्रेणिके ।

भयम् । न॰ घोरे । भयङ्करे ॥ कुब्जकप्रसूने । प्रतिभये । दरे । त्रासे । भीतौ । भिये । साध्वसे । अनागतप्रतिकूलप्रतिसन्धाने ॥ तल्लक्षणानियथा । रौद्रशक्त्यातुजनितंचित्तवैक्लव्यदंभयम् । व्याघ्रादिदर्शनाधीनचित्तवृत्तिविशेषे ॥ भयम् ॥ गर्भवासादिदु : खरूपम् । रागविषयस्यविनाशके समुपस्थितेतन्निवारणासामर्थ्यमात्मनोमन्यमानस्यदैन्यात्मकश्चित्तवृत्तिविशेषः ॥ सर्वान्विषयान्परित्यज्यज्ञानमार्गेकथंजीवितव्यमितित्रासः ॥ अनिष्टहेतूपनिपाते तत्परित्यागानर्हताज्ञानम् ॥ परत : स्वानिष्टसम्भावनायाम् । भयंद्वितीयाभिनिवेशत : स्यात् ॥ यथा व्याघ्राद्बिभेति॰व्याघ्राधीनत्वेनस्वीयमरणंसम्भावयतीति ॥बिभेत्यस्मात् । ञिभीभये । अज्विधौभयादीनामुपसङ्ख्यानंनपुंसकेक्तादिनिवृत्त्यर्थम् ॥ बिभेत्यस्मादिति विग्रहे॰ एरजितिकरणेऽच् ॥ भयं द्विविधम् । दैवम्॰मानुषञ्च । यथा इकामकन्दक : । हुताशनोजलंव्याधिर्दुर्भिक्षंमरणंतथा । इतिपञ्चविधंदैवंमानुषंव्यसनंतत : ॥ आयुक्तकेभ्यश्चौरेभ्य : परेभ्योराजवल्लभात् । पृथिवीपतिलोभाच्चनराणांपंचधाभयमिति । आगते भये॰अभीतवत्स्थातव्यम् । यथा । तावद्भयस्यभेतव्यंयावद्भयमनागतम् । उत्पन्नेतुभयंतीव्रे स्थातव्यंतैरभीतवत् ॥ पुं॰ रोगे ॥

भयङ्कर : । पुं॰ डुण्डुलपक्षिणि । त्रि॰ भयोत्पादके । भैरवे । दारुणे । भीषणे । भयानके ॥ भयंकरोति । मेघर्त्तिभयेषुकृञ इति खच् । मुमागम : ॥ पुं॰ याज्ञयोगान्तरे ॥ यथा । एकार्चगौशुक्रजीवौस्यातामन्योन्यसप्तगौ । भयङ्कराख्योयोगोयं यातुर्भीति प्रदायक : ॥

भयडिंडिम : । पुं॰ सङ्ग्रामपटहे ॥

भयद्रुत:। त्रि० कान्दिशीके। भीत्यापलायिते ॥ अद्रुद्रुवत्। द्रुगतौ। कर्त्तरि क्त:। भयात्द्रुत:। पंचमीतियोगविभागात्समास: ॥

भयनाशिनी। स्त्री० भयनाशकर्त्र्याम्। विद्यायाम् ॥ त्रायमाणालताम् ॥

भयभीत:। त्रि० त्रासेनातङ्किते ॥ यथा। एकतोभयभीतस्यप्राणिन: प्राणरक्षणम्। नातोगुरुतमोधर्म: कश्चिदन्योस्तिखेचरेति ।। वह्निपुराणे शिविराजोपाख्यानं ॥

भयभ्रष्ट:। त्रि० भयद्रुते ॥

भयानक:। पुं० व्याघ्रे ।। राहौ ।। शृङ्गाराद्यष्टरसान्तर्गतषष्ठरसे ॥ त्रि० भयानके। भीषणे ॥ बिभेत्यस्मात्। ञिभी० आनक: शीङ्भियद्भ्यानक: ॥

भयापह:। पुं० राजनि ॥ परमेश्वरे ॥ भयंसंसारजंमुमुक्षूणामपहन्तीति। हन०। अन्येभ्योपिदृश्यतइतिड:। अथमपवद्ध्याहा। आशिषिहनइतिड: ॥ त्रि० भयापहरणकर्त्तरि ॥

भयावह:। त्रि० भयङ्करे ॥

भर:। पुं० अतिशये। भरति। भृञ्०। पचाद्यच् ॥ भरणं भर: ० पुंसीतिघोषा ॥ अस्यद्रव्यवाचित्वेपि०पुंस्त्वमेव। घञजवन्ता: पुंसी तिवचनात् ॥ चन्द्रे ॥ भंनक्षत्रं राति। रा० क:। यत्नं ॥ भारे ॥ शेतेधराभराक्रान्ते शेषेनारायण: स्वयम्। लक्ष्मीवन्तोनजानन्तिदु: सहांपरवेदनाम् ॥

भरट:। पुं० कुम्भकारे ॥ भृतके ॥ बिभर्त्ति। डुभृञ्० जनिदृश्यादिना० रटच् ॥

भरणम्। न० वेतने ॥ भृतौ। मूल्ये ॥ भ्रियते ऽनेन। भृञ्० ल्युट् ॥ पोषणे ॥ यथा। भरणं पोष्यवर्गस्यप्रशस्तंस्वर्गसाधनम्। नरकंपीडनेचाऽस्यतस्माद्यत्नेनतंभरेत् ॥ पुं० भरणीनक्षत्रे ॥

भरणी। स्त्री० द्वितीयनक्षत्रे। यमदैवते ॥ तत्रजातस्यफलम्। यथा। सदापकीर्त्तिर्हिमहापवादोनानाविनोदैश्चविनीतकाल:। जलेविलासीचपल:खल: स्यात् प्राणिप्रणीतोभरणीषुजात: ॥ प्राणिप्रणीत: प्राणिभि क्षिप्त: ॥ घोषके ॥ टित्वान् ङीप् ॥

भरणीभू:। पुं० राहुग्रहे ॥

भरणीय:। त्रि० पोष्ये। भरणयोग्ये ॥

भरण्ड:। पुं० स्वामिनि। कृमौ ॥ नृपे ॥ वृषे ॥ भरति। भृञ्०। अण्डन् कृसृभृवृञ:। वृषण्डन् ॥

भरण्डा। स्त्री० भूमौ ॥

भरण्यम् । न० वेतने । मूल्ये ॥ भरणे साधु । तत्रसाधुरितिय त् ॥

भरण्यभुक् । त्रि० वैतनिके । कर्मकरे । मूल्येनकर्मकुर्वति ॥ भरण्यं वेतनंभुङ्क्ते । क्विप् ॥

भरण्या । स्त्री० वेतने ॥

भरण्याह्वा । स्त्री० रामदूतीतिगौ०दे० ख्यातायांपूर्व्वपुष्प्याम् ॥

भरण्युः । पुं० शरण्ये ॥

भरत : । पुं० नाट्यशास्त्रे ॥ अलङ्कारादिशास्त्रस्यसूत्रकारि०मुनौ ॥ रामानुजे ॥ शबरे ॥ क्षेत्रे ॥ भरतात्मजे ॥ देवर्षिविशेषे ॥ तन्तुवाये ॥ नटे ॥ भरतस्यमुनेः शिष्यः । तस्येदमित्यण् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ यद्वा । विभर्तिस्वाङ्गं । डुभृञ्० । भृमृदृशीत्यतच् ॥ चन्द्रवंशीयनृपविशेषस्यदुष्यन्तस्यपुत्रे । शाकुन्तलेये । दौष्यन्तौ । सर्वदमने ॥ निरुक्तिश्चास्यश्रीभागवते। माताभस्त्रापितुः पुत्रोयेनजातासएवसः । भरस्वपुत्रंदुष्यन्तमावमंस्थाः शकुन्तलाम् ॥ इति ॥ ऋषभदेवादिन्द्रदत्तजयन्त्यांकन्यायामुत्पन्नशतपुत्रान्तर्गतज्येष्ठपुत्रे ॥ यथा ॥ अथाहभगवानृषभदेवः स्वंवर्षंकर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवासोलब्धवरैर्गुरुभिरनुज्ञातोगृहमेधिनांधर्माननुशिक्षमाणोजयन्त्यामिन्द्रदत्तायामुभयविधंकर्मसमाम्नाय मभियुञ्जन्नात्मजानामात्मसमानानांशतंजनयामास । येषांखलुमहायोगीभरतोज्येष्ठः श्रेष्ठगुणश्चासीत् ०येनेदंवर्षंभारतमितिव्यपदिशन्तीति ॥ पावकपुत्रे॥

भरतखण्डम् । न० भारतवर्षान्तर्गतकुमारिकाखण्डे ॥

भरतज्ञः । त्रि० नाट्यशास्त्रज्ञे ॥

भरतपुङ्गवः । पुं० गाङ्गेये । भीष्मे

भरतपुत्रकः । पुं० शैलूषे । नटे ॥

भरतप्रसूः । स्त्री० कैकय्याम् ॥

भरताग्रजः । पुं० श्रीरामचन्द्रे ॥

भरथः । पुं० लोकपाले ॥ विभर्त्ति । डुभृञ्० । भृञ्शिदिभ्यथः ॥

भरद्वाजः । पुं० मुनिविशेषे ॥ व्याघ्राटे । भारुइ०गौ०दे०भा०प्र०पक्षिणि । भट्टुल०इ०भा० ॥ गुरोः पुत्रे । उतथ्यपत्न्याम्ममतायांवृहस्पतेर्वीर्याज्जातमुनिविशेषे ॥ अस्य नामनिर्वचनंयथाविष्णुपुराणे । मूढेभरद्वाजमिमं०भरद्वाजंवृहस्पतेः। यातौयदुक्त्वापितरौभरद्वाजस्ततस्त्वयम् ॥ इति ॥ भरन्धारकोवाजोऽस्य । यद्वा । भरद्वाजस्यापत्यम् । ऋष्यण् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः ॥

भरवान् । पुं० शिवे ॥ भरश्चन्द्रोमस्य

ख्य । मतुप् ॥ भरसहिष्णौ ॥

भरिणी । स्त्री० हरिद्वर्णे । हरा०इ० भा० ॥

भरित : । पुं० हरिद्वर्णे ॥ त्रि०तद्वति ॥ भृते ॥ पुष्टे ॥ परिपूर्णे । भरा० इ०भा० ॥ भर : सञ्जातोऽस्य । ता० इतच् ॥

भरिता । स्त्री० हरितायाम् ॥

भरिमा । पुं० भरणे ॥ कुटुम्बे ॥ भरति०बिभर्त्ति वा । भृञ्०ड्भृञ्० वा । हृभृधृसृस्तृशृभ्य इमनिच् ॥

भरु : । पुं० स्वर्णे । कनके ॥ हरे । शिवे ॥ भर्त्तरि । स्वामिनि । भरति०बिभर्त्ति वा । भृञ्०ड्भृञ् वा । भृमृशीतृचरित्सरितनिधनि मिमसजिभ्यउ : ॥

भरुज : । पुं० चुद्रशृगाले ॥

भरुटम् । न० निष्क्वाथपक्वमांसे ॥

भरुटकम् । न० भृष्टामिषे ॥

भर्ग्ग : । पुं० स्मरहरे । शिवे ॥ भर्जते । भृजोभर्जने । प० घञ् । न्यङ्क्वादित्वात्कुत्वम् ॥ भृज्यन्ते कामादयोऽनेनेति वा । हलश्चे तिघञ् ॥ भृज्यते०. पच्यते जगदनेनेति वा ॥ सवितृमण्डलगतादित्यरूपे पुरुषे ॥ चिन्तयामोवयं भर्गं धियोयोन : प्रचोदयात् । धर्म्मार्थकाममोक्षेषु बुद्धिवृत्ती : पुन : पुन : ॥ अपिच । भग्गज पाकेभवेद्धातुर्यस्मात्पाचयते ह्यसौ । भाजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि ॥ कालाग्निरूपमास्थायसप्तार्चि : सप्तरश्मिभि: । भ्राजते यत्स्वरूपेणतस्माद्भर्ग: सउच्यते ॥ भेतिभीषयते लोकान्रेति रञ्जयते प्रजा : । गत्यागच्छत्यजस्रं योभगवान्भर्ग उच्यते ॥ इतियोगियाज्ञवल्क्य : ॥

भर्ग : । न० तेजसि ॥ भर्जते । भृजोभर्जने । अञ्च्यञ्जियुजिभृजिभ्य : कुश्चेत्यसुन्० चावर्गश्चान्तादेश : । भर्गसी० इत्यादि ॥ स्वरूपभूते तेजसि ।

भर्ग्य : । पुं० शिवे ॥ भर्जते । भृजो० । ऋहलोर्ण्यत् ! चजोरिति कुत्वम् ॥

भर्जनम् । न० भृष्टौ । भूनना० इ० भा० ॥

भर्ज्जित : त्रि० दग्धे ॥ भृजो० । क्त : ॥

भर्त्तव्य : । त्रि० भरणीये । पोषणीये ॥ वृद्धौचमातापितरौसाध्वीभार्या सुत : शिशु : । अप्यकार्यशतं कृत्वाभर्त्तव्यामनुरब्रवीत् ॥

भर्त्ता । पुं० स्वामिनि । नाथे । पत्यौ । परिवृढे । नेतरि ॥ विष्णौ ॥ प्रपञ्चस्याधिष्ठानत्त्वे भरणात् । विभर्त्ति वाध्यस्तं सर्वमधिष्ठान

तयाधारयति सत्तास्फूर्त्तिप्रदाने नपोषयतिवेति विग्रहे धारणापोषणार्थात्तृच्॥ त्रि० धातरि। धारके॥ सुखसाधनस्यदातरि॥ देहेन्द्रियमनोबुद्धीनांसंहतानां० चैतन्याभासविशिष्टाना०स्वसत्तया स्फुरणेन धारयितरि॥ विभर्त्ति भरतिवा। डुभृञ्० भृञ्०वा। तृच्॥

भर्तृदारक:। पुं० नाट्योक्त्यायुवराजे। द्रियते। दृङ् आदरे० तुदादि:। ण्वुल्। भर्त्तूराज्ञो दारक:॥

भर्तृदारिका। स्त्री० नाट्योक्तौराजकन्यायाम्॥ भर्त्तूराज्ञोदारिका॥

भर्तृप्रपञ्च:। पुं० औपनिषदंमन्ये वेदान्तानांव्याख्यातृविशेषे॥

भर्तृस्थानम्। न० तीर्थविशेषे॥ यत्रकार्त्तिकेयस्तिष्ठति॥

भर्तृहरि:। पुं० व्याकरणकारिकाकर्त्तरिऋषिविशेषे॥ स्वनाम्नाप्रसिद्धे काव्यकर्त्तरिराजविशेषे॥ सचविक्रमादित्यराजभ्राता॥

भर्त्सनम्। न० अपकारगिरि। चौरोसित्वंघातयिष्यामित्वामित्याद्यपकारार्थवचने॥ भर्त्स तर्जसन्तर्जने। ल्युट्॥

भर्त्सपत्रिका। स्त्री० महानील्याम्॥

भर्मित:। त्रि० अधिश्रिते॥

भर्म्मम्। न०॥ स्वर्णे॥ भृतौ॥ नाभौ॥

भर्म्मकम्। न० रोगविशेषे॥ विडङ्गे॥ कलधौते। सुवर्णे॥

भर्म्मण्या। स्त्री० गणिकाशुल्के॥

भर्म्म। न० भारे॥ काञ्चने॥ भृतौ। भरणे। पोषणे। कुमारभृत्याकुशलैरधिष्ठितैभिषग्भिराप्तैरथ गर्भभर्मणीति रघु:। अत्रगर्भहेमप्रभृतिपङ्कतिमल्लिनाथधृत:शाश्वत:॥ नाभौ॥ धुस्तूरे॥ विभर्त्ति० भरतिवा। भ्रियतेऽनेनवा। डुभृञ्०भृञ्०। मनिन्॥

भलता। स्त्री० प्रसारण्यामोषध्यौ। राजबलायाम्॥

भलन्दन:। पुं० कान्यकुब्जदेशीय नृपविशेषे॥

भलूक:। पुं० भाल्लूके॥ भलते। भलभल्लपरिभाषणहिंसादानेषु॥ उलूकादयश्च निपात्य:॥

भल्ल:। पुं० भल्लते। रुद्रे॥ पुं० न० शस्त्रप्रभेदे। भाला० इ०भा०॥ वाणविशेषे॥ स्त्रीइल्लफली भल्लइतिख्यात:॥ भल्लते। भल्ल०। पचाद्यच्॥ न० भद्रे। शिवे॥ दु० भि० भे ०॥

भल्लक:। पुं० भल्लूके॥ संज्ञायां

कन् ॥
भल्लपुच्छी । स्त्री० गवेशकायाम् ॥
भल्लाटः । पुं० न० शशिध्वजराजपुरे
भल्लातः । पुं० भल्लातके ॥
भल्लातकः । पुं० अग्निमुख्याम् । अरुष्करे । शोथकृति । भा० प्र० इ० भा० । भल्लातकफलंपक्वंस्वादुपाकरसंलघु। कषायंपाचनंस्निग्धं तीक्ष्णोष्णंछेदिभेदिनम् ।मेध्यंवह्निकरंहन्तिकफवातव्रणोदरम् ॥ कुष्ठार्शोग्रहणीगुल्मशोफानाहज्वरक्रिमीन् ॥ तन्मज्जामधुरोवृष्योवृंहणोवातपित्तहा । वृन्तमारुष्करंस्वादुपित्तघ्नं केश्यमग्निकृत् ॥ भल्लातकः कषायोष्णः शुक्रलोमधुरोलघुः । वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान् ॥ हंतिगुल्मज्वरश्वित्रवह्निमान्द्यक्रिमिव्रणान् ॥ भल्लइवातति अत० । क्वुन् ॥
भल्लातकी । स्त्री० वीरवृक्षे । अग्निमुख्याम् । भल्लातके ॥ गौरादित्वान् ङीष् ॥
भल्लिका । स्त्री० ) भल्ला
भल्ली । स्त्री० )तके ॥
भल्लुः । पुं० भल्लुके ॥ भल्लते । भल्ल० बाहुलकादुः ॥
भल्लुकः । पुं० दुर्घोषे । ऋक्षे । रीछ भालू ० इ० भा० संज्ञायांकन् ।
भल्लूकः । पुं० ऋक्षे । भल्लुके ॥ भल्लते । भल्ल० । उलूकादित्वात्साधुः ॥ श्योनाकप्रभेदे ॥ कुक्कुरे ॥
भवः । पुं० ईशे । शिवे । शङ्करे । हरे ॥ क्षेमे । श्रेयसि ॥ समृद्धौ ॥ यस्यावतारोभूतानांक्षेमायचभवायच ॥ संसारे ॥ अपामार्गलतेवायंविरुद्धफलदोभवः । प्रत्यगुद्धर्शांविमोचायसंसारायपराग्दृशाम् ॥ सत्तायाम् ॥ प्राप्तौ । भद्राप्तौ ॥ उद्भवे । जन्मनि ॥ लग्नादेकादशे ॥ भवति० भवतेवासर्वम् । भू प्राप्तौ । पचाद्यच् । अन्तर्भावितण्यर्थोवा ॥ जन्मनितु०भावे०ऋदोरप् । न० फलविशेषे । भव्ये । चालता० इ० गौ० दे० भा० त्रि० क्षेमान्विते ॥
भवघस्मरः । पुं० दावानले ।
भवच्छिद् । त्रि० संसारनिवर्तके ॥ भवंछिनत्ति । छिदिर्० । सत्सूद्विषेत्यादिना० क्विप् ॥
भवान् । त्रि० युष्मदर्थे॥ भाति । भातेर्डवतुः ॥ लिंगत्रयेरूपन्तु । भवान्० भवती०भवदिति॥ पूज्ये ॥ सति । विद्यमाने ॥ भवतेर्लट् : शत्रादेशे । भवन्० भवन्तीभवत्० इतित्रिलिंगेरूपंबोध्यम् ॥ जायमाने ॥
भवती । स्त्री० विषाक्तवाणे ॥ पूज्यायाम् ॥ दीप्तमत्याम् ॥ उगितश्चेति ङीप् ॥

भवदारु । न० देवदारुवृक्षे ॥
भवदीयः । त्रि० भावत्के ॥ भवताम यम् । भवतष्ठक्छसाविति० छस् ॥
भवनम् । न० अगारे । मन्दिरे । गृहे ॥ भावे ॥ भवन्त्यत्र । भू० । ल्युट् ॥ राशौ ॥ क्षेत्रे ॥
भवनाशनः । पुं० आत्मनोबोधे ॥
भवनाशिनी । स्त्री० सरय्वांसरिति ॥
भवनीयः । त्रि० भवितव्ये ॥ उत्पत्त्यर्हे ॥
भवन्तः । पुं० कालसामान्ये ॥ वर्तमानकाले ॥ भवति० भूयाद्वा ॥ भू० तृभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्चेति० झच्० सचषित् ॥
भवन्तिः । पुं० वर्तमानकाले ॥ भवति । भू० । भुवोझिच् ॥
भवन्ती । स्त्री० पूर्वाचार्याणांलटःसंज्ञायाम् ॥ यथा । अस्तिर्भवन्तीपरोऽप्रयुज्यमानोप्यस्तीत्यादिभाष्यम् ॥ षित्वान्ङीष् ॥
भवभावनः । त्रि० संसारकारणे ॥ भवः संसारस्तस्यभावनंयेन ॥ उत्पत्तिकृत्ये ॥
भवभूतिः । पुं० भोजराजस्यसभास्थे कविविशेषे । मालतीमाधवादिनाटककर्तरि । भूगर्भे ॥ महादेवस्यैश्वर्ये ॥
भवरुत् । पुं० प्रेतपटहे ॥
भवाघनाशिनी । स्त्री० गङ्गायाम् ॥

भवात्मजा । स्त्री० मनसादेव्याम् ॥
भवादृक्षः । त्रि० भवादृशे ॥ भवानिवपश्यति० भवन्तमिववा । दृशिर् प्रेक्षणे । त्यदादिष्विच्यत्र० क्सोपि वाच्यइति० क्सः० । आसर्वनाम्नइत्यत्र०दृग्दृशवतुष्विति आकारादेशः ॥
भवादृक् । त्रि० भवादृशे ॥ भवानिवपश्यति० भवन्तमिववा । दृशिर्० । त्यदादिष्विति क्विन् । आसर्वनाम्नः ॥
भवादृशः । त्रि० युष्मत्सदृशे । भवद्विधे ॥ भवानिवपश्यति० भवन्तमिववा । दृशिर्० त्यदादिषुदृशोनालोचनेकञ् चेति० कञ् । आसर्वनाम्नः इत्याकारोन्तादेशः ॥
भवानी । स्त्री० पार्वत्याम् । दुर्गायाम् ॥ भवस्यस्त्री । इन्द्रवरुणभवशर्वेत्यादिना० ङीषानुकौ ॥ परदेवतायाम् ॥ एकैवशक्तिः परमेश्वरस्यभिन्नाचतुर्धाव्यवहारकाले । भोगेभवानीपुरुषेषुविष्णुः कोपेषुकाली समरेषुदुर्गा ॥ चट्टलपीठवासिन्यामम्बायाम् ॥
भवानीगुरुः । पुं० हिमालये ॥
भवानीपतिः । पुं० महादेवे ॥
भवापवर्गः । पुं० मोक्षे ॥ भवस्यापवर्गः नाशः ॥
भवाभीष्टः । पुं० गुग्गुलौ ॥

भवाब्धिः। पुं० संसाररूपसमुद्रे ॥ भवाब्धितरणोपायः कुलमार्गोहि-नापरः ॥

भवायना। स्त्री० गङ्गायाम् ॥

भविकम्। न० भव्ये। कुशले ॥ भवो-भद्राप्तिरस्यास्ति। अतइनिठनाविति ठन् ॥ त्रि० तद्वति ॥

भवितः। त्रि० अतीतोत्पत्तिके। भूते॥

भवितव्यम्। त्रि० भवनीये ॥ भवितव्य मभवत्येवनारिकेलफलाम्बुवत्। गन्तव्यं गतमित्याहुर्गजभुक्तकपित्थवत् ॥

भवितव्यता। स्त्री० नियतौ। भाग्ये। अर्थानामनर्थानाञ्चावश्यंभावित्वे। कालभार्यायाम् ॥

भविता। त्रि० भविष्णौ ॥ भवनशीलः भू०। तृन्निति तृन् ॥

भविनः। त्रि० काव्यकर्त्तरि ॥

भविलः। पुं० भव्ये ॥ भवति। भू०। सलिकल्यनीत्यादिना०इलच् ॥ षिड्गे। विदूषके ॥

भविष्णुः। त्रि० भवितरि। भूष्णौ ॥ भवनशीलः। भुवश्चेति०भवतेरि-ष्णुच् ॥

भविष्यम्। न० पञ्चशताधिकचतुर्दश सहस्रश्लोकात्मकेपुराणविशेषे ॥ यथा। चतुर्दशं भविष्यं स्यात् तथा पञ्चशतानिच तिश्रीभागवतम् ॥ अपिच। चतुर्दशसहस्राणितथा पञ्चशतानिच। भविष्यं परिसंख्यातं मुनिभिस्तत्त्वदर्शिभिरितिदेवी भागवतम् ॥ त्रि० भविष्यत्काले ॥

भविष्यत्। त्रि० आगामिकाले। वर्त्तमानप्रागभाव प्रतियोगिनिकाले- ॥ वर्त्तमानकालोत्तरकालीनोत्पत्तिकत्त्वे। अनागते। श्वस्तने ॥

भव्यः। पुं० कर्मरङ्गतरौ ॥ न० अस्थनि ॥ फलविशेषे चालता० इ० गौ० दे० प्र०। वर्भेरक्तशोधने ॥ भव्यंस्वादुकषायाम्लं हृद्यमास्य विशोधनम्। तदेवपक्वं दोषघ्नं गुरु ग्राहिविषापहम् ॥ पुं० न० रस भेदे ॥ त्रि० शुभे ॥ सत्ये ॥ योग्ये ॥ भाविनि ॥ जनिष्यमाणे ॥ भवति० भाव्यमनेनवा। भव्य गेयप्रवचनीयोपस्थानीयजन्याप्ला व्यापात्यावेति ० कर्त्तरि० भावे वायतासाधुः ॥

भव्या। स्त्री० उमायाम्। करिकणा याम् ॥

भषः। पुं० कुक्कुरे ॥ भषति। भष० । अच् ॥

भषकः। पुं० कुक्कुरे। शुनि ॥ भषति। भषपैशुन्ये। क्वुन् ॥

भषणम्। न० बुक्कने। श्वरवे ॥

भष०ल्युट्॥

भषा। स्त्री० स्वर्णक्षीर्याम्॥

भषी। स्त्री० शुन्याम्॥ भषतिपाश्य म्। भषभर्त्सने। पचादौ० भष डितिपाठात्० टिड्ढे तिङी प्॥

भसद्। स्त्री० भास्वरे॥ योनौ॥ जघने॥ काले॥ मांसे॥ कारण्ड वखगे॥ प्लवे। भेलके। बभस्ति। भसभर्त्सनदीप्त्योः। श्रद्द भसोदिः॥

भसन:। पुं० भ्रमरे॥

भसन्त:। पुं० काले॥

भसितम्। न० भस्मनि॥

भसूचक:। पुं० देवर्षो॥

भस्त्रका। स्त्री० चर्मप्रसेविका याम्॥

भस्त्रफला। स्त्री० ओषधिविशेषे॥ भस्त्रेवफलान्यस्याः। पाककर्णेति प्राप्तंङीषंबाधित्वा०सम्भस्त्राजिने तिटाप्। ङ्यापोरितिह्रस्व:॥

भस्त्रा। स्त्री० अग्निदीपकचर्मनिर्मि तयन्त्रविशेषे। चर्मप्रसेविकाया म्॥ जलादिनीयते येनलोहादि ध्मायते तथा। चर्मगोविकृतिः सावेभस्त्राशास्त्रेप्रकीर्त्तिता॥ भस्यतेऽनया। भसदीप्तौ। हुयामा श्रुभसिभ्यस्त्रन्। तिसुत्रेतिमेट्। । अजादित्वात्टाप्॥

भस्त्राका। स्त्री० भस्त्रिकायाम्। भस्त्रा यां॥

भस्त्रिक:। त्रि० भस्त्रयाजलाद्याहारक र्त्तरि। भिस्ती० इ०भा०॥ भस्त्रया हरति। भस्त्रादिभ्यः ष्ठन्॥ स्त्री०-भस्त्रिकी। षित्वान्ङीष्॥

भस्मक:। पुं० रोगविशेषे॥ तस्य निदानसम्प्राप्तिपूर्वकंलक्षणं। य था। कट्वादिरूक्षान्नभुजांनराणांक्षी णेकफेमारुतपित्तवृद्धौ। अतिप्रवृद्धः पवनान्वितोऽग्निर्भुक्तंक्षणाद्भस्म करोतियस्मात्॥ तस्मादसौभस्मक संज्ञकोऽभूदुपेक्षितोयंपचतेचधा तून्॥ अस्योपद्रवमरिष्टंयथा। तृट्स्वेददाहमूर्च्छादीन्कृत्वैवात्य ग्निसम्भवान्। पक्त्वान्नमाशुधात्वा दीन्सद्यःप्रणाशयेद्ध्रुवम्॥ इ०

भस्मकार:। पुं० रजके॥

भस्मगन्धा। स्त्री० रेणुकायाम्। हरे णौ॥

भस्मगन्धिका। स्त्री० हरेणवामौषधौ। रेणुकायाम्॥ भस्मनोगन्धः। भस्म गन्धोस्त्यस्याः। अतइनि। ठनावि तिठन्। टाप्॥

भस्मगन्धिनी। स्त्री० रेणुकायाम्। ह रेणवाख्यौषधौ॥ गन्धद्रव्यमेतदिति स्वामी॥ भस्मगन्धोस्त्यस्याः अत इनिठनावितीनिः। ङीप्॥

भस्मगर्भः। पुं० तिनिशद्रुमे॥

भस्मगर्भा । स्त्री० कपिलवर्णपुष्पायां शिंशपायाम् ॥ रेणुकानामगन्धद्रव्ये । ओषधिभेदे ॥ भस्मगर्भेयस्याः शुक्लसारत्वात् ॥

भस्मतूलम् । न० ग्रामकूटे ॥ पांशुवर्षे ॥ हिमे ॥

भस्म । न० काष्ठादेरग्निकृतेविकारे । शिवाङ्गभूषणे । भूतौ । भसिते । विभूतौ ॥ वभस्ति । भसभर्त्सनदीप्त्योः । सर्वधातुभ्योमनिन् ॥ बिनाभस्मत्रिपुण्ड्रेणबिनारुद्राक्षमालयः । पूजितोपिमहादेवोभस्मात् तत्फलप्रदः ॥ अश्मरीविकारे ॥

भस्मरोहा । स्त्री० दग्धाख्यवृक्षे ॥

भस्मवेधकः । पुं० कर्पूरे ।

भस्मसात् अ० भस्मीभावे ॥ कृत्स्नं भस्मसम्पद्यते । विभाषासातिकार्त्स्न्ये इतिसातिः प्रत्ययः ॥

भस्मस्नानम् । न० सप्तविधस्नानान्तर्गताग्नेयस्नाने ॥ यथा । आग्नेयंभस्मनास्नानंवायव्यंगोरजः स्मृतम्

भस्माह्वयः । पुं० कर्पूरे ॥

भस्मितः । त्रि० दग्धे ॥

भा । स्त्री० भासि । प्रभायाम् । छवौ । दीप्तौ । रोचिषि ॥ ज्ञाने, चैतन्यरूपे । यथा । अभारूपस्यविश्वस्यभानंभासन्निधेर्बिना । कदाचिन्नावकल्पेतभाचाहंतेनसर्वगः ॥ भाति भादीप्तौ । दृशियहणात्० ङः । टाप् ॥

भाकुटः । पुं० भेकुटी० इ० गौडे० भा० प्र० मत्स्ये ॥

भाकूटः । पुं० शैलप्रभेदे ॥ झषविशेषे । भेकटी० इ० भा० ॥ भाकूटोमधुरः शीतोवृष्यः श्लेष्मकरोगुरुः । विष्टम्भजनकश्चापिरक्तपित्तहरःस्मृतः ॥

भाकोषः । पुं० सूर्ये ॥

भाक्तः । त्रि० औपचारिके । गौणे । लाक्षणिके ॥ भक्तसम्बन्धिनि ॥ अन्नेनपोष्ये । भाक्तिके ॥ भक्तमस्मैनियुक्तंदीयते । भक्तादणन्यतरस्यामित्यण् ॥ न० शालिधान्ये ॥ भक्तसाधु । भक्ताणः इतिणः ॥

भाक्तिकः । त्रि० अन्नेनपोष्ये । भाक्ते ॥ भक्तमस्मैनियुक्तंदीयते । भक्तादणन्यतरस्यामितिपक्षेठक् ॥

भागः । पुं० अंशे । वण्टके । स्त्रीक्लिबमाणांशे ॥ रूप्यार्द्धके भाग्ये ॥ एकदेशे ॥ भज्यते । भजसेवायाम् । कर्मणिघञ् ॥ भागानामैश्वर्यादिषण्णांसमूहोवा । अण् ॥ राशित्रिंशभागैकभागे ॥ त्रिंशांशकस्तथाराशेर्भागइत्यभिधीयतेइत्युक्तेः ॥

भागत्यागः । पुं० जहदजहल्लक्षणायाम् । विरुद्धांशपरित्यागे ॥

भागत्यागलक्षणा । स्त्री० जहदजहल्लक्षणायाम् । अंशान्तरपरित्यागेना-

शान्तरलक्षणायाम् ॥

भागधेयः । पुं० करे । राजस्वे । ग्रामादिराजग्राह्ये षष्ठभागादौ " दायादे ॥ भागएव । भागरूपनामभ्यो धेयइतिस्वार्थे० धेयप्रत्ययः ।। न० भाग्ये । प्राक्तनेकर्म्मणि । दैवे ॥

भागलक्षणा । स्त्री० भागत्यागलक्षणायाम् ॥

भागलेख्यम् । न० भागपर्णे ॥ भागायलेख्यम् ॥

भागवतः । पुं० भगवद्भक्ते ॥ यथा । सर्वदेवान्परित्यज्यनित्यंभगवदाश्रयः । एतत्तदीयसेवायांसभागवतउच्यते ॥ शङ्खोयस्यगृहेनास्तिघण्टाबागरुडान्विता । पुरुतो वासुदेवस्यनसभागवतः कलौ ॥ उत्तमभागवतस्तु । सर्वभूतेषुयः पश्येद्भगवद्भावमात्मनः । भूतानि भगवत्यात्मन्येषभागवतोत्तमः ॥ नयस्यस्वपरइतिवित्तेष्वात्मनिवाभिदा । सर्वभूतसमः शान्तः सवैभागवतोत्तमः । गृहीत्वापीन्द्रियैरर्थान्योनद्वेष्टिनकाङ्क्षति । विष्णोर्मायामिदंपश्यन्सवैभागवतोत्तमः ॥ शिवेचपरमेशाने विष्णौचपरमात्मनि । समबुद्ध्या प्रवर्त्तन्तेतेवैभागवतोत्तमाः ॥ भगवतोयम् । अण् ॥

भागवतम् । न० अष्टादशपुराणान्तर्गतेअष्टादशसहस्रश्लोकात्मकेउपपुराणविशेषे ॥ महापुराणविशेषे ॥ तत्राष्टादशाध्यायोत्तरत्रिशताध्यायात्मकंदेवीभागवतंनाममहापुराणं द्वात्रिंशदध्यायाधिकत्रिशताध्यायात्मकंविष्णुभागवतमितिकेचित् ॥ अष्टादशसहस्रंवैपुराणंभागवतंकिलेतिदेवीभागवतम् ॥ आत्मतत्त्वदीपकेज्ञाने ॥ भगवताप्रोक्तम् । तेनप्रोक्तमित्यण् ॥ भगवत्यामायोपाधिकब्रह्मरूपिण्या:प्रातिपदिकं० सर्वंखल्विदमेवाहंनान्यदस्मिसनातनमित्यर्द्धश्लोकात्मकम् त्रभूतमेवसर्ववेदसारं सर्वंखल्विदंब्रह्मनेहनानास्तिकिञ्चनेतिसर्ववेदतात्पर्यार्थप्रतिपादकवाक्यार्थाभिलापकंपुराणंमन्त्ररूपंभगवत्या वटपत्रशयानायविष्णवे प्रकटीकृतंयत्तत् । भगवत्याप्रोक्तम् । तेन प्रोक्तमित्यण् ॥

भागिकम् । त्रि० भाग्ये । सवृद्धिकमुद्रादौ ॥ भागोरूपकस्यार्होवृद्धिः आयः० शुल्कम्० उपदावाऽस्मिन्दीयते । भागिकंशतम्० भागिकाविंशतिः । भागाद्यच्चेतिठन् ॥

भागी । त्रि० अंशिनि ॥ ग्राहिणि ॥ सम्पृचेत्यादिना ० भजेर्विनुण् ॥

भागिनेय : । पुं० भगिनीपुत्रे । स्व स्रीये ॥ भगिन्या : अपत्यम् । स्त्री भ्योढक् ॥

भागिनेयी । स्त्री० भगिन्यास्त्वपत्ये। भानजी० इ० भा० ॥ टिड्ढेति ङीप् ॥

भागीरथी । स्त्री० गङ्गायाम् ॥ भगी रथस्येयम् । तस्येदमित्यण् । ङीप् ॥

भागुरि : । पुं० स्मृतिव्याकरणकर्त्तरिमुनिविशेषे ॥ मार्कण्डेयपुराण प्रसिद्धेमुनौ ॥ कविविशेषे । शत लुम्पके० इति जटाधर : ॥

भाग्यम् । न० प्राक्तनशुभाशुभकर्म्मणो : । नियतौ । दैवे । दिष्टे । फलोन्मुखी भूतपूर्वदैहिकशुभा शुभकर्म्मणि । जडानामविवेकाना मशूराणामपिप्रभो । भागभोग्या निराज्यानिसन्त्यनीतिमतामपि ॥ भज्यतेऽनेन०भजतेवा । भज सेवायाम् । ऋहलोर्ण्यत् । चजो रितिकुत्वम् ॥ त्रि० भागिके ॥ भागोवृद्ध्यादिरस्मिन्दीयते । भाग्यंशतम्० भाग्याविंशति : । भागाद्यच्चेति०यत् ॥ भागार्हे ॥ भागमर्हति । दण्डादित्वाद्य त् ॥

भाग्ययोग : । पुं० याशायोगान्तरे ॥ पञ्चमेन्दोरवि:षष्ठे वर्त्तते नवमेगुरु: । भाग्ययोगाभिधे योगेनिरन्ताबैरि णांसदा ॥

भाग्यवान् । त्रि० भाग्ययुक्ते ॥ भाग्य वतांसर्वंश्रेयसिभवति ॥

भाग्याख्या । स्त्री० तुष्टिविशेषे ॥ य-था । यातुनप्रकृतेनकालान्नाप्युपादानाद्विवेकख्यातिरपितुभाग्या-देव०अतएवमदालसाऽपत्यानिअति बालानिमातुरुपदेशमात्रादेवविवे-कख्यातिमन्तिमुक्तानिबभूवु: ० त स्माद्भाग्यमेवहेतुर्नान्यदित्युपदेशे तुष्टि : साभाग्याख्यातुष्टिर्वृष्टिरु-च्यते ॥

भाङ्गीनम् । त्रि० भङ्ग्ये । भङ्गाक्षेत्रे ॥ भङ्गायाभवनमृक्षेत्रम् । वि भाषातिलमाषोमाभङ्गाणुभ्यश्च-तिपक्षेखञ् ॥

भाजक् । अ० शैघ्र्ये ॥

भाजनम् । न० पात्रमात्रे ॥ योग्ये ॥ य : संवादयतेनित्यंयोऽतिवादांस्तितिक्षति । यश्चतप्तोनतपतिदृढ' सोऽर्थस्यभाजनम् ॥ आढकपरिमाणे इतिवैद्यकपरिभाषा ॥ भाज-यति । भाजपृथक्कर्म्मणिल्यु-ट् ॥

भाजित : । त्रि०पृथक्कृते । विभ-क्ते । न०भागे ॥

भाजी । स्त्री० श्राणायाम् । पक्वायाम् ॥ जानपदेतिङीष् ॥

भाज्य : । त्रि० भागार्हे । भाजनीये ॥

भाटक : । पुं० न० व्यवहारार्थंदत्त गृहशकटादिलभ्यधने । भाडा० इ० भा० ॥

भाट्ट : । पुं० आत्मनश्चिदचिद्रूपत्ववादिनिभट्टाचार्यमतानुसारिणि- मीमांसके ॥ गूढंचैतन्यमुत्प्रेक्ष्य द्रव्यबोधस्वरूपताम् । आत्मनोब्रुवतेभाट्टाश्चिदुत्प्रेक्षोत्थितस्मृतेः ॥ जडोभूत्वातदाऽस्वाप्समितिजाड्यस्मृतिस्तदा । विनाजाड्यानुभूतिं नकथंचिदुपपद्यते ॥ द्रष्टुर्दृष्टेरलोपश्चश्रुतः सुप्तौततस्त्वयम् । अप्रकाशप्रकाशाभ्यामात्माखद्योतवद्युतः ॥

भाण : । पुं० नाटकादिदशरूपकान्तर्गतरूपकविशेषे ॥

भाण्ड : । पुं० गर्द्दभाण्डवृक्षे ॥

भाण्डम् । न० पात्रे । घटकर्कादिभाजनमात्रे ॥ पण्यद्रव्ये । वणिङ्मूलधने ॥ भूषायाम् । भूषणे ॥ अश्वभूषायाम् । तुरङ्गाणांमण्डने ॥ नदीकूलद्वयमध्ये ॥ भण्यते । भणशब्दे । अमन्ताड्डः । ॥ भणतिवा । डः । प्रज्ञाद्यण् ॥ यद्वाभन्दते । भदिकल्याणे सुखेच । अच् । पृषोदरादिः ॥ भाण्डवृत्ती । भंडीआ० इ० भा० ॥

भाण्डपुट : । पुं०नापिते ॥ भाण्डे-पुटाःयस्यसः ॥

भाण्डपुष्प : । पुं० सर्पविशेषे । कौकुटिकन्दले ॥

भाण्डागारम् । न० गृहविशेषे । अन्नादिद्रव्याणांगृहे ॥ भाण्डानामागारम् ॥ धनागारे ॥

भाण्डागारिक : ॥ त्रि० भाण्डागारे-नियुक्ते । भण्डारी०इ०भा० ॥ अगारान्ताट्ठन् ॥

भाण्डागारी । त्रि० भाण्डारिणि । भाण्डागारवति ॥ भाण्डागारमस्यास्ति । इनिः ॥

भांडारी । पुं० भांडागाराध्यक्षे । स्वनाम्नैवप्रसिद्धे ॥ यथा क्षुधितस्तृषितःकामीविद्यार्थीकृषिकारकः । भांडारीचप्रवासीचसप्तसुप्तान्प्रबोधयेत् ॥

भाण्डि : । पुं० नापितक्षुराद्याधारे ॥

भाण्डिल : । पुं० ) नापिते ॥

भाण्डिवाह : । पुं० )

भाण्डीर : । पुं० वटवृक्षे ॥ व्रजमण्डलान्तरेषोडशवटवनमध्ये द्वितीयवटवने ॥

भातम् । न० प्रभाते ॥ भा० । क्तः । दीप्तौ ॥ त्रि० तद्वति ॥

भाति : । स्त्री० शोभायां ॥

भातु : । पुं० आदित्ये । सूर्ये ॥ भाति । भादीप्तौ । कमिगमीतितुः ॥

भाद्र : । पुं० नभस्ये । प्रौष्ठपदे । भा

द्रपदेमासि ॥ भाद्रीपौर्णमास्यस्मिन्। सास्मिन्पौर्णमासीत्यण् ॥ अत्रजातस्यफलम्। नभस्यमासिखलु जन्मयस्यधीरोमनोज्ञश्चवराङ्गनानाम्। रिपुप्रमाथीकुटिलोऽतिमर्मप्रपन्नभर्त्तासभवेत्सहासः ॥ अत्रगोःप्रसवेनारदः। भानौसिंहगतेचैवयस्यगोःसमप्रसूयते। मरणंतस्यनिर्दिष्टंषड्भिर्मासैर्नसंशयः ॥ प्रसूतांतत्क्षणादेवतांतांगांविप्रायदापयेत्। पश्चाच्छान्तिंप्रकुर्वीतशान्तिशास्त्रोक्तवर्त्मनेति ॥

भाद्रपदः। पुं० वर्षर्तुद्वितीयमासि। भाद्रे ॥ भद्रपदाभिर्युक्तापौर्णमास्यस्मिन्। सास्मिन्पौर्णमासीत्यण् ॥

भाद्रपदा। स्त्री० प्रोष्ठपदासु। भद्रपदासु। पूर्वभाद्रपदानक्षत्रे०उत्तरभाद्रपदानक्षत्रेच ॥ भद्रमेव० ॥ भाद्रम्। भाद्रंपदंयासां०ताः ॥

भाद्रमातुरः। पुं० सतीतनये ॥ भद्रमातुरपत्यम्। मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः ॥

भानम्। न० आभासे ॥ प्रतीतौ ॥ प्रकाशे। साक्षात्कारे ॥ नहिभानादृतेसत्त्वंनर्तेनानंचितोऽचितः। चित्सत्त्वंदीपिना ध्यासादृतेतेनाद्वमद्वयः ॥ भाति। भा०। ल्युः ॥

भानुः। पुं० किरणे। मयूखे। अंशौ। करे ॥ रवौ। सूर्ये। हंसे। सहस्रांशौ ॥ दिने ॥ भाति। भा०। दाभाभ्यांनुः ॥ यद्वा। भाति० चतुर्दशभुवनमध्ये अन्यादिस्वयंप्रकाशिभ्यः अधिकंदीप्यतेवा। पूर्ववत् ॥ अर्कवृक्षे ॥ प्रभौ ॥ राजनि ॥ वृत्तार्हत्पितृविशेषे ॥

भानुः। स्त्री० भानुमत्याम् ॥

भानुफला। स्त्री० रम्भायाम्। कदल्याम्। भानुरिवफलान्यस्याः। अजादिः ॥

भानुमान्। पुं० सूर्ये ॥ भानवोविद्यन्तेऽस्य। मतुप् ॥ त्रि० दीधितियुक्ते। सकिरणे ॥

भानुमती। स्त्री० विक्रमादित्यनृपस्यपत्न्याम् ॥ यथा। देवगुरोःप्रसादेनजिह्वाग्रेमेसरस्वती। तेनाहंनृपजानामिभानुमत्यास्तिलंयथेतिवररुचिः ॥

भानेमिः। पुं० गभस्तिहस्ते। सूर्ये ॥

भाभ.। त्रि० नक्षत्रकान्तौ ॥ भस्याभेवाभायस्यायस्यसः ॥

भामः। पुं० क्रोधे ॥ रवौ ॥ दीप्तौ रुचौ ॥ पूज्ये ॥ भगिनीपतौ ॥ यथा। अहोभगिन्याहोभाममयावांवतपापमना। पुरुषादइवापत्यंसुहृदोहिंसिताःसुताः ॥ भाति। भा० अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्योमन्निति मन् ॥ भामते। भामक्रोधे। अच्वा

भामक : । पुं॰ भगिनीपती ॥ स्वार्थेक : ॥

भामा । स्त्री॰ कोपनायांयोषिति ॥ सत्यभामायाम् । विनापिप्रत्ययमितिपूर्वपदलोप : ॥

भामी । त्रि॰ क्रोधिनि ॥

भामिनी । स्त्री॰ कोपनायाम ॥ भव श्यं भामते । भाम॰ । भावश्यके णिनि : । ग्रह्यादिणिनिर्वा ॥ स्त्री माघे ॥

भामिनीविलास : । पुं॰ जगन्नाथमिश्रपण्डितराजकृते विलासचययात्मके ग्रन्थविशेषे ॥

भार : । पुं॰ वीवधे ॥ विष्णौ । विंशतितुलापरिमाणे । पलानांद्विसहस्रे । अष्टसहस्रतोलकात्मके ॥ द्विशूर्पो गोण्युदाहृता ॥ तामेवभारंजानीयाद्वाहोभारचतुष्टयम् ॥ भ्रियते । भृञ् भरणे । अकर्त्तरि चकारकेसंज्ञायामितिघञ् ॥

भारंड : । पुं॰ उत्तरकुरुदेशजशकुनपक्षिणि ॥

भारत: । पुं॰छागवाहने । वह्नौ ॥ नटे ॥ भरतस्यमुने : शिष्य : । अण् ॥ भरतात्मजे ॥ भरतवंशोद्भवे ॥ महाकुलप्रसूते ॥ भरतस्यराज्ञोयम् । तस्येदमित्यण् ॥ सङ्ख्यामविशेषे ॥ भरतायोद्धारोऽस्यसङ्ख्यामस्य । सङ्ख्यामेप्रयोजनयोद्धृभ्यइत्यण् ॥ त्रि॰ ग्रामनिरते ॥ भाखानम्॰ तत्ररत : ॥

भारतम् । न॰ व्यासप्रणीतलक्षश्लोकात्मकमहाभारतसंज्ञके॰ इतिहासे ॥ तस्यश्रवणादिफलंयथा । भारतं शृणुयान्नित्यंभारतंपरिकीर्त्तयेत् । भारतंभवनेयस्यतस्यहस्तगतोजय : ॥ योगोशतंकनकशृङ्गमयंददातिविप्रायवेदविदुषे चबहुश्रुताय । पुण्यांचभारतकथांशृणुयाच्चनित्यं तुल्यंफलंभवतितस्यचतस्यचैव ॥ नवनीतंयथादध्नोद्विपदांब्राह्मणोयथा । ह्रदानामुदधि: श्रेष्ठो गौर्वरिष्ठचतुष्पदाम् । यथैतानीतिहासानांतथाभारतमुच्यते ॥ यश्चैनंश्रावयेच्छ्राद्धे ब्राह्मणान्पादमंतत : । अक्षय्यमन्नपानंवै पितॄंस्तस्योपतिष्ठते ॥ इतिहासपुराणाभ्यांवेदंसमुपबृंहयेत् । विभेत्यल्पश्रुताद्वेदोमामयंप्रहरिष्यति ॥ कार्ष्णंवेदमिमंविद्वान्श्रावयित्वार्थमश्नुते । भ्रूणहत्याकृतंचापिपापंजह्यादसंशयम् ॥ इति ॥ जम्बुद्वीपनवमांशेवर्षविशेषे ॥

भारतवर्ष : । पुं॰ न॰ जम्बुद्वीपस्य नववर्षान्तर्गतवर्षविशेषे । यथा । हिमाह्वंदक्षिणंवर्षंभरतायददौपिता । तस्माच्चभारतंवर्षंतस्यनाम्नामहात्मन : ॥ तस्यनवभागाश्चया

भारतस्यास्यवर्षस्यनवभेदान्निबोध
मे । समुद्रांतरितास्ते यास्त्वगम्याः
परस्परम् ॥ इन्द्रद्वीपः कशेरुश्च ता
म्रवर्णोगभस्तिमान् । नागद्वीपस्तथा
सौम्योगान्धर्वोवारुणस्तथ ॥ अयन्तु
नवमस्तेषां द्वीपः सागरसंवृतः
। योजनानांसहस्रं वै द्वीपोयं दक्षि
णोत्तरात् ॥ पूर्वे किरातायस्यान्ते
पश्चिमेयवनाःस्मृताः । ब्राह्मणाः
क्षत्रियावैश्याः शूद्राश्चान्तः स्थि
ताद्विज ॥ इज्यायुद्धवणिज्याद्यैः
कर्मभिः भक्तपावनाः । तेषां
संव्यवहारश्चएभिः कर्मभिरिष्यते
॥ स्वर्गापवर्गप्राप्तिश्चपुण्यंपापंच-
वैतथा । महेन्द्रोमलयः सह्यः
शुक्तिमानृक्षपर्वतः ॥ विन्ध्यश्च-
पारियात्रश्चसप्तैवात्रकुलाचलाः
तेषांसहस्रशश्चान्ये भूधरायेसमीप
गाः ॥ विस्तारोच्छ्रायिणोरम्याविपु
लाश्चित्रसानवः । कोलाहलः स
वैभ्राजोमन्दरोदर्दुराचलः ॥ वा
तस्वनोवैद्युतश्चमैनाकः सुरसस्त
था । तुङ्गप्रस्थोनामगिरिर्गोधनः
पांडुराचलः ॥ पुष्पवोर्जयन्तो
रैवतोर्बुदएवच । ऋष्यमूकः
सगोमन्तः कूटशैलः कृतः सरः
॥ श्रीपर्वतश्चकोरश्चशतशोन्ये ऽल्प
पर्वताः । तैर्विमिश्राजनपदाम्ले
च्छाआर्याश्चभागशः । तैः पीय



न्ते सरिच्छ्रेष्ठायास्ताः सम्यङ्निबो
धमे । गङ्गासरस्वतीसिन्धुश्चंद्रभा
गातथापगा । यमुनाचशतद्रुश्चवि
तस्तैरावतीकुहूः । गोमतीधूतपा
पाचबाहुदाचदृषद्वती ॥ विपाशा
देविकावंचुर्विशालागण्डकीतथा
। कौशिकीचापराविप्रहिमवत्पाद
निःसृताः ॥ वेदस्मृतिर्वेत्रवती
सि
नीराचिघनीसिन्धुरेवच । वेणाच
स्यन्दनाचैवसदानीरामहीतथा ॥
पाराचर्मण्वतीलूपीविदिशावेत्रव-
त्यपि । शिप्राह्यवन्तीचतथापारिपा
त्राश्रयाः स्मृताः ॥ शोणोमहान
दश्चैवनर्मदासुरसाक्रिया । मन्दा
किनीदशार्णाचचित्रकूटातथापगा ॥
चित्रोत्पलाचतमसाकरतोयापिशा
चिका । तथान्यापिप्पलाश्रोणीवि-
पाशावञ्जुलानदी ॥ सरोजाशुक्ति
मतीमङ्कुलीत्रिदिवाक्रतुः । ऋक्ष-
पादप्रसूतावैतथान्यावेगवाहिनी ॥
शिप्रापयोष्णीनिर्विन्ध्यातापीचनि
षधावती । वेणावैतरणीचैवसिनी
वालीकुमुद्वती ॥ तोयाचैवमहागौ
रीदुर्गाचान्तःशिवातथा । विन्-
ध्यपादप्रसूतास्तानद्यः पुण्यजलां-
शुभाः ॥ गोदावरीभीमरथीकृष्ण-
वर्णातथापगा । तुङ्गभद्रासुप्रयोगा-
वाह्याकावेर्यथापगा ॥ सह्यपादवि
निष्क्रान्ताइमास्ताः सरिदुत्तमाः ॥

कृतमालाताम्रपर्णी पुष्पजात्युत्प
लावती । मलयाद्रिसमुद्भूतानद्यः
शीतजलास्त्विमाः ॥ पितृसोमर्षि
कुल्याचइक्षलात्रिदिवालया । ला-
ङ्गूलिनीवंशकरामहेन्द्रप्रभवाः स्मृ
ताः ॥ ऋषिकाचकुमारीचमन्दगा
मन्दवासिनी । कृपापलाशिनीचै-
वशुक्तिमत्प्रभवाः स्मृताः ॥ स-
र्वाः पुण्याः सरस्वत्यः सर्वागङ्गा-
समुद्रगाः । विश्वस्यमातरः सर्वाः
सर्वाः पापहराः स्मृताः ॥ अ-
न्याः सहस्रशश्चोक्ताः क्षुद्रनद्यो-
द्विजोत्तम । प्रावृट्कालवहाः सं-
तिसर्वकालवहाश्चयाः ॥ मत्स्याः
कुशूलाः कुल्याश्चकुंतलाः काशि
कोशलाः ॥ अर्बुदाश्चकुलिङ्गाश्चस-
मकाश्चवृकैः सह । मध्यदेशेजनप-
दाः प्रायशोमीप्रकीर्त्तिताः ॥ सह्य
स्योत्तरेचैवयत्रगोदावरीनदी ।
पृथिव्यामपिकृत्स्नायां सप्रदेशोम-
नोरमः ॥ गोवर्द्धनपुरंरम्यंभार्ग-
वस्यमहात्मनः ॥ वाह्लीकावाटधा
नाश्चआभीराः कालतोयकाः ॥
अपरान्ताश्चशूद्राश्चपह्लवाश्चर्मखण्डि-
काः । गान्धारायवनाश्चैवसिन्धु
सौवीरमद्रकाः । शतद्रुकालित्या
अपारदाहारमूषिकाः । माठरार-
चहतकाः । कैकयादशमानिकाः ॥
क्षत्रियोपनिवेशाश्चवैश्यशूद्रकुलानि



च । काम्बोजादरदाश्चैववर्बराश्च-
ङ्गलौकिकाः ॥ चीनाश्चैवतुषारा-
श्चपह्लवावाह्यतोदराः । आत्रेयाः
सभरद्वाजाः प्रस्थलाश्चदशेरकाः ॥
लम्पकाः सूनकाराश्चचूलिकाजा-
ङ्गधैः सह । अपगाश्चालिमद्राश्च-
किरातानाञ्चजातयः ॥ तामसाहं
समार्गाश्चकाश्मीरास्तङ्गनास्तथा ।
चूलिकाहुहुकाश्चैवऊर्णादार्वास्त-
थैवच ॥ एतेदेशाह्युदीच्यास्तु० प्रा-
च्यान्देशान्निबोधमे । अम्बुवाका
मुद्गरकाअन्तर्गिरिवहिर्गिराः ॥ त
थाप्लवङ्गावङ्गेयामलदामलवर्त्तिकाः
ब्रह्मोत्तराः प्रविजयाभार्गवाङ्गेय
मर्दकाः । प्राग्ज्योतिषाश्चमद्रा-
श्चविदेहास्तामलिप्तकाः । मल्ला-
मगधगोमेदाः प्राच्याजनपदाः
स्मृताः ॥ अथापरेजनपदादक्षिणा
पथवासिनः । पाण्ड्याश्चकेरलाश्चै
वचोलाः कुल्यास्तथैवच ॥ सेतुका
मूषिकाश्चैवकुमारावानवासिकाः ।
महाराष्ट्रामाहिषकाः कलिङ्गाश्चै-
वसर्वशः ॥ आभीराः सह-
चैषीकाआटव्याश्शवराश्चये । पु-
लिन्दाविन्ध्यमौलेया वैदर्भादण्ड-
कैः सह ॥ पौरिकामौलिकाश्चैव
अश्मकाभोगवर्द्धनाः । नैलिकाः
कुन्तलाश्चान्ध्राउद्भिदानलकारकाः
॥ दाक्षिणात्यास्त्विमेदेशा० अपरा

न्तान्निबोधमे । सौर्पारकाः का लनदादुबासालीयकैः सह ॥ कारस्करलोहजङ्घावामेयाराजभद्रकाः । तोसलाः कोशलाश्चैव चैपुराविदिशास्तथा ॥ तुषारास्तुम्बराश्चैवपाटवोनैषधैः सह । पुलिन्दाश्चसुशीलाश्चरूपर्मास्तामसैः सह ॥ तथाकुद्दमिनश्चैवसर्वेचैवकारस्कराः। मासिकाख्याश्चयेचान्येयेचैवाम्नरनर्मदाः ॥ मारुकच्छाः समाहेयाः सर्वेसारस्वतैः सह । कच्छीयाश्चसुराष्ट्राश्चआवन्त्याश्चार्बुदैः सह ॥ इत्येतेह्यपरान्ताश्चशृणुविन्ध्यनिवासिनः । मलजाश्चकरूषाश्चमेकलाश्चोत्कलैः सह ॥ उत्तमर्णादशार्णाश्चभोजाः किष्किन्धकैः सह । अनूपास्तुण्डिकेराश्चवीरहोत्राश्चवन्तयः ॥ एतेजनपदाः सर्वे विन्ध्यपृष्ठनिवासिनः ॥ अतोदेशान्प्रवक्ष्यामिपर्वताश्रयिणश्चये ॥ निर्हाराहंसमार्गाश्चकुपथास्तङ्गणाः खशाः ॥ कुत्साः प्रावर्णाश्चैवऊर्णादर्वाः सहूहुकाः ॥ त्रिगर्तामालवाश्चैवकिरातास्तामसैः सह । कृतत्रेतादिकश्चात्रचतुर्युगकृतोविधिः ॥ एततुभारतंवर्षंचतुःसंस्थानसंस्थितम् । दक्षिणेपरतोह्यस्यपूर्वेणचमहोदधिः ॥ हिमवानुत्तरेणास्यकार्मुकस्ययथागुणः । तदेतद्भारतं वर्षंसर्वबीजंद्विजोत्तम ॥ देवत्वममरेशत्वंदेवत्वंमर्त्यतांतथा । मृगपश्वप्सरचरायोनीस्तद्वत्सरीसृपाः ॥ स्थावराश्चसर्वेषामतोब्रह्मन्शुभाशुभैः । प्रयान्तिकर्मभूर्ब्रह्मन्नान्यालोकेषुविद्यते । देवानामपिविप्रर्षेसदैवैषमनोरथः ॥ अपिमानुष्यमाप्स्यामोदेवत्वात्प्रच्युताः क्षितौ । मनुष्याः कुर्वतेतत्तुयन्नशक्यंसुरासुरैः ॥ स्वकर्मनिगडग्रस्तैः स्वकर्मचपणोत्सुकैः । नकिञ्चित्क्रियतेकर्मसुखलेशोपबृंहितैः ॥ इतिश्री मार्कण्डेयपुराणेभारतखण्डवर्णनं नामाध्यायः ॥

**भारतिः** । पुं० दशनामसन्न्यासिनां मध्येसन्न्यासिविशेषे ॥ यथा । नानाशास्त्रेषुयोविद्वानानाकर्मविशारदः । सदेष्टदेवीभावेनभावयेद्योहिचावलाम् । सएवभारतिर्वीरोमहाज्ञानीजितेन्द्रियइति ॥

**भारती** । स्त्री० वचने ॥ सरस्वत्याम् । अर्थपरिज्ञानफलाहिभारतीगरुर्धीधिनिपक्षित्रिशेषि । भार० द्रु० गौ० दे० भा० प्र० ॥ ब्राह्मामोषधौ ॥ नाट्यवृत्तिप्रभेदे ॥ शृङ्गारेकौशिकीवीरेसात्वत्यारभटीपुनः । रसेरौद्रेचबीभत्सेवृत्तिः सर्वत्रभारती ॥ भारतीवृत्तिस्तुसंस्कृतप्रायोवाग्व्यापारोनराश्रयः ॥ विभर्ति । हुभृञ

भूमृद्वियवीत्यतच् । ततः प्रज्ञाद्यणि० ङीप् ॥
भारद्वाजः । पुं० बृहस्पतिगुरौ व्याघ्राटाख्यविहङ्गमे द्रोणाचार्य्ये ऋषिविशेषे ॥ मङ्गलग्रहे ॥ भारद्वाजगोत्रापत्यम् । बिदाद्यञ् ॥ अगस्त्यमुनौ ॥
भारद्वाजी । स्त्री० वनकार्पास्याम् ॥ भरद्वाजस्य मुनेरियम् । तेननिर्म्मितत्वात् । तस्येदमित्यण् । ङीप् ॥
भारभूतिः । पुं० पुण्यस्थानविशेषे ॥ भारभूतौभवेद्भूतिरितिभागवतम् ॥
भारयः । पुं० भरद्वाजपक्षिणि ॥
भारयष्टिः स्त्री० उभयतोबद्धशिक्ये स्कन्धवाह्यकाष्ठे । विहङ्गिकायाम् ॥ भारस्ययष्टिः ॥
भारवम् । न० ज्यायाम् । गुणे ॥
भारवाहः । त्रि० भारिके ॥ भारंवहति । वह० । कर्मण्यण् ॥
भारवाहकः । त्रि० भारवहनकर्त्तरि ॥ भारम्वहति । वह० । ण्वुल् ॥ भारस्यवाहकोवा ॥
भारवाहनः । त्रि० उष्ट्रादौभारवाहके ॥ वहेर्ण्यन्तात्कर्त्तरिल्युट् । भारस्यान्नादेर्वाहनः । वाहनमाहितादितिणत्वम् ॥
भारवाही । पुं० धुर्य्ये ॥
भारवाही । स्त्री० नौकायाम् ॥
भारविः । पुं० किरातार्जुनीयकाव्यकर्त्तरिकविविशेषे । गतलभ्यद्युतिविकारडशेषः ॥
भारवृक्षः । पुं० काचीनामकगन्धद्रव्ये ॥
भारशृङ्गः । पुं० रुरुनामकहरिणजातौ । भारंसिंगा० इ०भा० ॥
भारहरः । पुं० भारिके ॥ हरति । हृ अच्० । अच् । भारस्यहरः ॥
भारहारः । पुं० भारिके ॥ भारंहरति । हृञ्० । कर्म्मण्यण् ॥
भाराक्रान्तः । त्रि० भारवाहे ॥ भारेणाक्रान्तः ॥
भाराक्रान्ता । स्त्री० अत्यष्टिवृत्तिप्रभेदे ॥ भाराक्रान्तामभनरसलागुरुः श्रुतिषड्ढयैः ॥ यथा । भाराक्रान्तामभतनुरियंगिरीन्द्रविधारणात्कम्पंधत्तेश्रमजलकणांतथापरिमुञ्चति । इत्थावृषवन्जयतिजगद्रक्षनाकुलवल्लवीमंशंसोत्यंस्मरविलसितंविलोक्यमुरांधरिः ॥
भारिकः । पुं० भारवाहे ॥ भारोस्ति वाह्यत्वेनास्य । अतइनिठनाविति ठन् ॥
भारिः । पुं० सिंहे ॥
भारिटः । पुं० पक्षिविशेषे । श्यामवटके । भैरिटे । कणभक्के ॥
भारी । पुं० भारवाहके ॥ त्रि०भारपीडिते ॥ भारयुक्ते ॥ भारोऽस्त्यस्य० अस्मिन्वा । इनिः ॥

भारीष्टी । स्त्री० भारद्वाजिकायाम् ॥

भार्गवः । पुं० गजे । मतङ्गजे ॥ धन्विनि । धानुष्के ॥ शुक्राचार्ये ॥ परशुरामे ॥ भृगोरपत्यम् । ऋष्यण् । बहुत्वे०तस्यचित्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्चेति०लुकि० भृगवः ॥

भार्गवाः । पुं० भू०भारतवर्षमध्ये प्राच्यदेशान्तर्गतदेशविशेषे॥

भार्गवप्रियः । पुं० हीरके ॥ शुक्राधिष्ठातृदेवताकत्वात् ॥

भार्गवी । स्त्री० पार्वत्याम् ॥ श्रियि ॥ कृष्णदूर्वायाम् ॥ श्वेतदूर्वायाम् ॥ मतान्तरे । भृगोरियम् । तस्येदमित्यण्०ङीप् ॥

भार्गी० । स्त्री० ब्राह्मणयष्टिकायाम् । फञ्ज्याम् । भारङ्गी०इ०भा० ॥ यथा । भार्गीरूक्षाकटुस्तिक्तारुच्योष्णापाचनीलघुः।दीपनीतुवरागुल्मरक्तान्नाशयेद्ध्रुवम् । शोथकासकफश्वासपीनसज्वरमारुतान् ॥ भर्जनम्। भ्रस्जपाके । घञ् । भ्रस्जोरोपधयोरमन्यतरस्याम्०इतिरमागमः । चजोरितिकुत्वम् ॥ भृज्जोभर्जनेवा । घञ् । भर्गोस्त्यस्याः । ज्योत्स्नादिभ्यउपसङ्ख्यानमित्यण् । ङीप् ॥

भार्ङ्गजी । स्त्री० बनाकार्पास्याम् ॥

भार्य्यः । त्रि० भरणीये ॥ भृ०ङुभृञ्०वा । ण्यत् ॥

भार्य्या । स्त्री० जायायाम् । द्वितीयायाम् । पाणिगृहीत्याम् ॥ साभार्यायाप्रियंब्रूयात्सपुत्रोयस्तुजीवति । सजीवतिगुणोयस्यधर्मोयस्यसजीवति गुणधर्मविहीनोयोनिष्फलंतस्यजीवनम् ॥ भ्रातुर्ज्येष्ठस्यभार्यायागुरुपत्न्यनुजस्यसा । यवीयसस्तुयाभार्यास्नुषाज्येष्ठस्यसास्मृता ॥ भर्याकान्त्याभार्या ॥ भर्त्तुंयोग्या । डुभृञ्० भृभस्मनेवा। ऋहलोर्ण्यत् । टाप् ॥

भार्याटः । पुं० अन्यार्थंस्त्रीदातरि ॥

भार्याटिकः । पुं० स्त्रीजिते ॥ हरिणान्तरे ॥ मुनिभेदे ॥

भार्यापती । पुं० सशेषत्याजायापत्योः । दम्पत्योः ॥ भार्याचपतिश्चतौ । राजदन्तादिः । निपातनात्पूर्वनिपातः ॥

भार्यारुः । पुं० शैलविशेषे ॥ मृगप्रभेदे॥ क्रौडयापरभार्यायांपुत्रोत्पादके ॥

भालम् । न० महसि । तेजसि ॥ ललाटे ॥

भालदर्शनम् । न० सिंदूरे ॥

भालदृक् । पुं० शिवे । भाललोचने ॥

भालाङ्कः । पुं० करपत्रे । क्रकचे

॥ शाकविशेषे ॥ रोहितमत्स्ये ॥ महालक्षणसम्पन्नपुरुषे ॥ कच्छपे ॥ हरे ॥

भालुकः । पुं० ऋक्षे । अच्छभल्ले । भल्लूके ॥ भलति । भलहिंसायाम् । वाहुलकादुः । संज्ञायांकन् । प्रज्ञाद्यण् ॥

भालूकः । पुं० भालुके ॥ भलति । भलपरिभाषणादौ । उलूकादित्वात् साधुः । प्रज्ञाद्यण् ॥

भाल्लवेयः । पुं० इन्द्रद्युम्ननामनि ऋष्यन्तरे ॥ भल्लवेरपत्यम् भाल्लविः । तस्यापत्यम् । शुभादेराकृतिगणत्वात् ० ढक् ॥

भाल्लुकः । पुं० भल्लूके ॥ )

भाल्लूकः । पुं० )

भावः । पुं० सत्तायाम् । सत्त्वे ॥ परमार्थसत्तारूपे ॥ स्वभावे ॥ मानसधर्मे ॥ उपसनोपायसाधके ॥ स चोक्तः श्रीमहानिर्वाणतन्त्रे । पशुर्वीरदिव्यभावादेवतामन्त्रसिद्धिदा इति ॥ तत्रापि । पशुभावः कलौ नास्तिदिव्यभावोपिदुर्लभः । वीरसाधनकर्माणिप्रत्यक्षाणिकलौयुगे इति ॥ अपिच । शुभभावत्रयं देविदिव्यवीरपशुक्रमात् । दिव्यस्तु देववत्प्रायोवीरश्चोद्धतमानसः ॥ सत्यत्रेताद्वापर्यन्तं दिव्यभावविनिर्णयः । त्रेताद्वापरपर्यन्तं वीरभावस्तुतीरितम् ॥ मद्यं मत्स्यं तथा मांसं मुद्रां मैथुनमेवच । श्मशानसाधनं भद्रे चितासाधनमेवच । एतत्ते कथितं सर्वं दिव्यवीरमतं प्रिये ॥ दिव्यवीरमतं नास्तिकलिकाले सुलोचन इतिकालीविलासतन्त्रम् ॥ अभिप्राये ॥ आत्मनि ॥ चेष्टायाम् ॥ प्रकृतिजन्यबोधविषयप्रकारे ॥ क्रियायाम् ॥ लीलायाम् ॥ पदार्थे ॥ विभूतौ ॥ नाट्योक्त्या विदुषि । बुधे ॥ जन्तौ ॥ मानसविकारे० रत्यादौ ॥ योनौ ॥ उपदेशे ॥ शृङ्गारादिकारणे ॥ शब्दप्रवृत्तिहेतौ ॥ गौरविते ॥ अभिनयान्तरे ॥ धात्वर्थे ॥ संसारे ॥ भवने । भावनायाम् । चिन्तने ॥ सद्भावे ॥ परमार्थतत्त्वाग्रहरूपे प्रेम्णि ॥ भक्तौ । अनुरागे ॥ तत्त्वादात्म्ये ॥ भू० विभाषाग्रहइत्यत्र० भवतेश्चेति० काशिकावचनात् ॥ भावयतिकरोतिरसान् । भावयति० परिभावयतिवा । पचाद्यच् ॥ भवनं वा । श्रिणीभुवोनुपे तिघञ् वा ॥ भावावुद्धिगुणाधर्मज्ञानवैराग्यभूतयः । सात्त्विकाव्यत्यये नैते रागमुत्सृज्यतामसाः ॥ धर्मज्ञानवैराग्यैश्वर्याख्या बुद्धिगुणाः० भाव संज्ञया निर्दिष्टा याः । एतेचमोतात्विकावोद्धव्याः । व्यत्यये

न॰ रागमुत्सृज्यवैराग्यविवर्जिता स्तामसाः । अधर्माज्ञानैश्वर्यरूपाः॰ अवैराग्यलक्षणस्तुभावोराजसइत्यर्थः । धर्मादिभिरन्विताबुद्धिस्तदन्वितं सूक्ष्मशरीरमित्युक्तम् । भावयन्त्यियतोलिङ्गंतेनभावाइतिस्मृताः ॥ सचसात्त्विकादिभेदात्त्रिविधः । तत्र॰ सात्त्विकः शमदमादिरूपः राजसोहर्षदर्पादिरूपः॰ शोकमोहादिरूपस्तुतामसः । बाह्याध्यात्मिकभेदाद्द्विविधश्चयथासाध्यसाधनतयास्थितोबाह्यःसुखंदुःखंज्ञानंरागस्यैवमाकारश्चाध्यात्मिकः ॥ विभावः स्थायिसंज्ञश्चसानुभावोथसात्त्विकः । व्यभिचारीतिपञ्चैतेभावभेदाः प्रकीर्त्तिताः । अष्टमवत्सरे ॥ बहुक्षीरास्तथागावोधान्यञ्चबलवत्तरम् । जायन्तेसर्वशस्यानिभाववर्षेवरानने ॥ ८ नवयस्थावांशयनादिद्वादशचेष्टासुतन्वादित्वादशसु॥ स्त्रीणांयौवनकालेस्वभावजाष्टाविंशत्यलङ्कारन्तर्गतांगजप्रथमालङ्कारे ॥ यथा। यौवनेसत्त्वजास्तासामष्टाविंशतिसङ्ख्यकाः ॥ अलङ्कारास्तत्रभावहावहेलास्त्रयोङ्गजाः। तत्रभावोयथा । निर्विकारात्मकेचित्ते भावःप्रथमविक्रिया । जन्मतःप्रभृतिनिर्विकारेमनसि॰ उद्बुद्धमात्रोविकारोभावः । यथा । सएवसुरभिःकालः सएवमलयानिलः । सैवेयमबलाकिन्तुमनोन्यदिवदृश्यतइति ॥ प्रतिक्षणपरिणामिनःसर्वेभावाऋतेचित्शक्तेः ॥

भावकः । पुं॰ भावे । मानसविकारे ॥ त्रि॰सत्ताश्रये ॥

भावकरणम् । न॰अभिप्रायस्यसूचने ॥

तत्रभावज्ञः। त्रि॰ अभिप्रायज्ञे॥

भावतः । त्रि॰ भवदीये । भावत्के ॥ भवतोऽयम् । भवतष्ठक्छसावित्यत्रवृद्धादित्यनुवृत्तेःशत्रन्तादणेव ॥

भावत्कः । त्रि॰ भवदीये ॥ भवतामयम् । भवतष्ठक्छसाविति॰ ठक् । इसुसुक्तान्तात्कः ॥

भावनः । पुं॰ परमेश्वरे ॥ सर्वेषांभोक्तॄणांफलानिभावयतिउत्पादयतीतिव्याख्यानात् भवतेर्ण्यन्तात्ल्युट् ॥ न॰ कल्पने ॥ भावनायाम् ॥ भावनन्तुननाध्यानेपर्यालोचेऽधिवासने ॥ भव्ये । चाल्ता इ॰ गौ॰ दे॰ भा॰ प्र॰ फलविशेषे ॥

भावना स्त्री॰ ध्याने ॥ पर्यालोचे ॥ अधिवासने ॥ कल्पनावाम् ॥ संस्कारे ॥ भावनानामभवितुर्भवनानुकूलोभावयितुर्व्यापारविशेषः सा द्विधा । शब्दभवना॰ । अर्थभावना चेति ॥ भाव्यस्यविषयान्तरपरिहारेणचेतसिपुनःपुनर्निवेशने ; निदिध्यासनात्मिकायांविजातीयप्रत्यया

नन्तरितसजातीयप्रत्ययप्रबाहरूपा याम् ॥ भावनातिङ्प्रत्ययवाच्येति मीमांसकाः ॥ उत्पादनाय म् ॥ ० उत्पत्त्यर्थादभवतेर्ण्यन्तात् ० युच् । त्रिविधाभावनायथा । त्रिविधाभा वनाविप्रविश्वमे तन्निबोधमे । ब्रह्माख्याकर्मसंज्ञाच तथाचैवोभया-त्मिका ॥ ब्रह्मभावात्मिकाह्येकाक र्मभावात्मिकापरा । उभयात्मिकात थैवान्यात्रिविधाभावभावना ॥ सन न्दनादयोब्रह्मभावभावनयायुताः । कर्मभावनयाचान्ये देवाद्याः स्थाव राश्चराः ॥ हिरण्यगर्भादिषुचब्रह्म कर्मात्मिकाद्विधा । बोधाधिकार युक्तेषुविद्यतेभावभावना ॥ इति विष्णुपुराणे ६ अंशे ७ अध्यायः॥ त्रि विधभावनाश्रयजीवात्मकत्वात्तदु पचारेणत्रिविधाभावनेत्युच्यते। एत द्धिहरेः स्थूलंरूपम् । अतः पररू पप्राप्त्युपायत्वात्० तत्रप्रथमंमनः सन्धार्यमितिभावः। भावनानाम ज्ञानविशेषजावासना । तांत्रिविधा मपिसंज्ञामादिशति०ब्रह्माख्येति । तामेवविषयत्रैविध्येनविविनक्ति० ब्रह्मभावनात्मिकेति ॥ । भावभाव-ना०भावोवस्तु०तद्विषयाभावनात्रि विधा । तत्रवयंब्रह्मैवभावयामः । वयंकर्मैवकुर्मः । वयन्तूभयमिदम नुसन्दध्मइत्येवंत्रिविधाभावना । भावनायुक्तान्जीवानुदाहरति०सन न्दनादयइतिद्वाभ्याम् । इतितट्टी का ॥

**भावबोधकः** । पुं० अनुभावे ॥ भाव स्यरत्यादेर्बोधकः सूचकोगुणः क्रि यादिरनुभावः । अनुभावस्तेप्रती तियोग्यतांनीयतेरत्यादिरनेनेति० अनुभावः । घञ् ॥ तत्ररतेरनुभावाः लोचनचातुर्यभ्रूक्षेपादयः। हासस्यच कपोलाकुंचना:०नासोत्फुल्लनाद-योऽनुभावाः ०एमन्यत्रानुमन्तव्यम् ।

**भावरूपम्** । न० द्रव्ये ॥

**भाववृत्तः** । पुं० ब्रह्मणि । भावः सृ ष्टिः ० तत्रवृत्तः प्रवृत्तः ॥

**भाववृत्तिः** । स्त्री० घटाद्याकारवृत्तौ ।

**भावशुद्धिः** । स्त्री० अन्तःकरणशुद्धौ ॥ कलिकल्मषयुक्तानांसर्वदास्थिरचे-तसाम् । निद्रालस्य प्रसक्तानां-भावशुद्धिः कथंभवेत्इतिमहानि र्वाणतन्त्रं ॥

**भावसंशुद्धिः** । स्त्री० हृदयस्यकामक्रो धलोभादिमलनिवृत्तौ पुनरशुद् ध्युत्पादराहित्ये नसाम्प्रत्वे नविशि ष्टायाम् ॥ परे: सद्व्यवहारकाले मायाराहित्ये ॥

**भावसरोरुहम्** । न० हृदयकमले ॥

**भावाटः** । पुं० भावके ॥ साधुनिवेशे ॥ कामुके ॥ नटे ॥

**भावानुगा** । स्त्री० छायायाम् ॥

भावार्थ : । पुं० सत्तारूपे । परमार्थे ।
भावालीना । स्त्री० छायायाम् ।
भावाव : । त्रि० विश्वचातरि ॥ भावा
न्० अवति । अव० । कर्मण्यण् ॥
भावावबोध : । पुं० अभिप्रायपरिज्ञा
ने ॥ यथा । भावावबोधविहितोन
दुनोतिदोषइति ॥
भाविकम् । न० अलङ्कारविशेषे ॥ यथा
। प्रत्यचाइवयद्भावा : क्रियन्ते भूत
भाविन : । तद्भाविकम् ॥ भूताश्च
भाविनश्चेतिद्वन्द्व : । भाव :
कवेरभिप्रायोऽस्तीति० भाविकम्
। उदाहरणम् । आसीदञ्जनमत्रे
तिपश्यामितवलोचने । भाविभूष
णसम्भारांसाचात्कुर्वेतवाकृतिम् ॥
अत्राद्ये भू०तस्य० द्वितीयेभाविनोद
र्शनम् ॥
भावित : । त्रि० वासिते । संस्कृते ।
याहितलिङ्ख्यादिगर्भे व्यञ्जनादौ
॥ प्राप्ते ॥ चिन्तिते ॥ भाव्यतेस्म ।
भूप्राप्तौ । आधृषाद्वेतिवाणिजन्त :
। क्त : ॥ भुवोवकल्कनइतिण्यन्ता-
त्०क्तोवा ॥ संपादितेशुद्धे ॥
भावितत्वम् । न० संसक्रतत्वे ॥
भावितात्मा । त्रि० शुद्धचित्ते ॥
भावित्रम् । न० त्रैलोक्ये ॥ भवति ।
भू० । भूवादिगृभ्योणित्रल् ॥
भावी । त्रि० भविष्यति ॥ भविष्यत्का
ले । वर्त्तमानप्रागभावप्रतियोग्यु-

त्पत्तिके ॥ भू० । भुवश्चेति०इनि-
णित् ॥ भवितुंयोग्ये ॥
भाविनी । स्त्री० नारीविशेषे ॥ भाव :
शृङ्गारचेष्टाविशेषोविद्यतेऽस्या : ।
अतइनि : । ङीप् ॥ वर्त्तमानप्रा-
गभावप्रतियोगिन्याम् ॥
भावुक : । पुं० नाट्योक्त्याभगिनीप
तौ ॥ न०भविके । कल्याणे । म-
ङ्गले । शुभे ॥ शीलम् । भूप्राप्तौ ।
लषपतपदेत्युकञ् ॥ त्रि०मङ्गल-
वति ॥ रसविशेषभावनाचतुरे ।
उत्पत्तिशीले । भवनाश्रये ॥ भवति
य : । कर्त्तरि०उकञ् ॥
भाव्यम् । त्रि० कार्ये ॥ विभावनीये ॥
भवितव्ये ॥ भवति । भू० । बाहु
लकात्कर्त्तरिण्यत् । यथा । कृत-
स्यकरणंनास्तिदैवाधिष्ठितकर्म्मण:
। भावीत्यवश्यंयद्भाव्यंतचत्रस्याप्य-
बाधक : ॥ इति ॥ न०अवश्यभवि
तव्ये ॥ ओरावश्यके । इतिण्यत् ॥
साध्ये ॥ भावयतीतिभवतेर्ण्यन्ता
त्कर्म्मणियत् ॥
भाषणम् । न० कथने ॥ यथा । सं
लापोभाषणमिति ॥ भाषव्यक्तायां
वाचि । ल्युट् ॥ नर्म्मच्छाशुच्यधा
र्मिकै : सहसम्भाषेत ॥
भाषा । स्त्री० व्याहारे । उक्तौ । वच
ने ॥ भाष्यते प्रयोज्यप्रयोजकवृद्ध
व्यवहारे णप्रयुज्यते । भाष० । गु

रीस्त्रेत्यप्रत्ययः । टाप् । शास्त्रीया ष्टादशभाषायथा । संस्कृता१ प्राकृता २ उदीची ३ माहाराष्ट्री ४ मागधी ५ मिश्रार्द्धमागधी ६ शकाभीरी ७ अवन्ती ८ द्राविडी ९ ओड्रीया १० पाश्चात्या ११ प्राच्यः १२ वाह्लिका १३ रन्तिका १४ दाक्षिणात्या १५ पैशाची १६ आवन्ती १७ शौरसेनी १८ । एतासांलक्षणोदाहरणानिप्राकृतलङ्केश्वरव्याकरणे द्रष्टव्यानि ॥ अथभाषाविभागः । पुरुषाणामनीचानांसंस्कृतंस्यात्कृतात्मनाम् । शौरसेनीप्रयोक्तव्यातादृशीनाञ्चयोषिताम् ॥ आसामेवतु गाथासु महाराष्ट्रीं प्रयोजयेत् । अत्रोक्तामागधीभाषा राजान्तःपुरचारिणाम् । चेटानांराजपुत्राणांश्रेष्ठिनांचार्द्धमागधी । प्राच्याविदूषकादीनांधूर्त्तानांस्यादवन्तिका ॥ योधनागरिकादीनांदाक्षिणात्याहिदीव्यताम् । शकाराणांशकादीनांशाकारींसम्प्रयोजयेत् ॥ बाल्हीकभाषादिव्यानांद्राविडीद्रविडादिषु । आभीरेषुतथाभीरीचाण्डालीपुक्कसादिषु ॥ आभीरीशावरीचापिकाष्ठपत्रोपजीविषु ॥ तथैवाङ्गारकारादौपैशाचीस्यात्पिशाचवाक् । चेटीनामप्यनीचानामपि स्याच्छौरसेनिका ॥



बालानांषण्डकानांचनीचग्रहविचारिणाम् । उन्मत्तानामातुराणांसैव स्यात्संस्कृतंक्वचित् ॥ ऐश्वर्येण प्रमत्तस्यदारिद्र्योपस्कृतस्यच । भिक्षुबन्धधरादीनांप्राकृतंसम्प्रयोजयेत् ॥ संस्कृतंसम्प्रयोक्तव्यंलिङ्गिनीषूत्तमासुच । देवीमन्त्रिसुतावेश्यास्वपिकैश्चित्तथोदितम् ॥ यद्देशंनीचपात्रन्तु तद्देशंतस्यभाषितम् । कार्यतश्चोत्तमादीनांकार्योभाषाविपर्ययः ॥ योषित्सखीबालवेश्याकितवाप्सरसांतथा । वैदग्ध्यार्थंप्रदातव्यंसंस्कृतञ्चान्तरान्तरा ॥ एषामुदाहरणान्याकरेषुबोद्धव्यानि । भाषालक्षणानिभाषार्णवे ॥ इतिसाहित्यदर्पणे ६ परिच्छेदः ॥ संस्कृतंप्राकृतंभूतभाषाऽपभ्रंशिकागिरः । नाटकेनियताःशस्ताएताभाषारसावहाः ॥ भाषाविभाषाभेदेनप्राकृतन्तुचतुर्द्दश ।मागध्यवन्तिकाप्राच्याशौरसेन्यर्द्धमागधी ॥ बाह्लीकादाक्षिणात्याचभाषाःसप्तचप्राकृते ॥ ॥ शकाराभीरचाण्डालशवरद्रविडोड्रजाः । वनौकसीविजातीनांविभाषाः सप्तकीर्त्तिताः ॥ कैकेयीशौरसेनी चक्षाञ्चीपाञ्चलमागधी । द्राविडीपापांचदेशीचभूतभाषाप्रकीर्तिता ॥ ॥ वैदर्भीमागधीनाटीकाम्बोजीचोपनाभगरी । पाञ्चालीषडपभ्रंशभाषा

स्य दंशभेदतः ॥ इतिसङ्गीतदामोदरः॥ आसामुदाहरणंमुरारेरनर्घराघवे० भवभूतेरुत्तरचरिते० कालिदासस्याभिज्ञानशाकुन्तलेऽवलोकनीयम् ॥

भाषापादः। पुं० चतुष्पाद्व्यवहारान्तर्गतप्रथमपादे ॥ तल्लक्षणंयथा। अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम्। साध्यवद्वाचकपदंप्रकृतार्थानुबन्धिच ॥ प्रसिद्धमविरुद्धंयच्चनिश्चितंसाधनक्षमम्। संक्षिप्तं निखिलार्थञ्चदेशकालाविरोधिच ॥ वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत्। स्थानावसथसाध्याख्या जात्याकारवयोयुतम् ॥ साध्यप्रमाणसङ्ख्यावदात्मप्रत्यर्थिनामच। परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥ क्षमालिङ्गात्मपीडावत्कथिताहर्तृदायकम्। यदावेदयतेराज्ञेतद्भाषेत्यभिधीयते ॥ इतिमिताक्षरा ॥ अस्यविवरणं भाषाशब्दे कल्पद्रुमेद्रष्टव्यम् ॥

भाषितम्। न० वचने। वचसि ॥ यथा। आचारः कुलमाख्यातिवपुराख्यातिभोजनम्। सन्ततिः पुण्यमाख्यातिदेशमाख्याति भाषितमिति ॥ भाषणम्। भाष०। भावे क्तः॥ त्रि० कथिते। उक्ते। अभिहिते॥ भाष्यतेस्म। भाषि: कर्मणिक्तः॥

भाष्यम्। न० चूर्ण्याम् ॥ सूत्रोक्तार्थप्रपञ्चके। सूत्रानुकारिभिर्वाक्यैः सूत्रार्थस्वस्वपदानाञ्चोपवर्णनपरे० ग्रन्थविशेषे ॥ तथाचभरतः। सूत्रार्थोवर्ण्यतेयत्रपदैः सूत्रानुसारिभिः। स्वपदानिचवर्ण्यन्तेभाष्यं भाष्यविदोविदुरिति ॥ त्रि० कथनीये ॥

भाष्यकारः। पुं० श्रीशङ्कराचार्ये ॥ महाभाष्यकर्त्तरिमुनौ। गोनर्दीये। पतञ्जलौ। चूर्णिकृति ॥ अहस्वभाष्यकारस्यकुशाग्रीयधियाबुभौ। नैवशब्दाम्बुधेः पारंकिमन्ये जडबुद्धयः॥ भाष्यं करोति। डुकृञ्०। कर्मण्यण् ॥

भाष्यकृत्। पुं० भाष्यकारे ॥

भाः। स्त्री० प्रभायाम्। दीप्तौ ॥ प्रभावे ॥ मयूखे ॥ इच्छायाम् ॥ भासते। भासृदीप्तौ। भ्राजभासेतिक्विप्। भाः० भासौ० भासः ॥

भासः। पुं० प्रभायाम् ॥ विहगविशेषे। शकुन्ते। गृध्रे ॥ कुक्कुटे ॥ गोष्ठे ॥ व्याप्यव्यापकतादिप्रतिभासे ॥

भासनम्। न० दीप्तौ ॥ प्रकाशने ॥ स्वतस्तावदिदंजगत्चिज्जडोभयात्मकंभासते। यद्यपिशब्दस्पर्शादिजडवस्तुभासनायेवेन्द्रियाणिसृष्टानितथापिचैतन्यस्य० चित्तगतव्यवहारस्य० उपादानतयाचैतन्य पूर्वकमेवजडं

भासते । तथासति ० पश्चाद्भ्रा ससमानस्यजडस्यप्रथमतोभ: तमानं चैतन्य मेवप्रास्तवं रूप मिति नि श्चित्य० जडमुपेक्षन् चिन्मात्रंचित्तं वा सयेदितिजीवन्मुक्तिप्रकरणम् ॥

भासन्त : । पुं० भासपक्षिणि । शकुन्ते ॥ सूर्ये ॥ भे । नक्षत्रे ॥ चन्द्रे ॥ त्रि० रम्ये । सुन्दराकारे ॥ भासते। भास्० । तॄभूवहिवसिभासिसाधीति भच्‌षित् ॥

भासन्ती । स्त्री० नक्षत्रे ॥ ङीष् ॥

भासमान : । त्रि० प्रकाशमाने ॥

भासित : । त्रि० प्रकाशिते ॥

भासु : । पुं० सूर्ये ॥

भासुर : । पुं० स्फटिके । वीरे ॥ प्रमाणनिरपेक्षतयैवभासनशीले० चात्मनि ॥ न० कुष्ठौषधे ॥ त्रि० भासनशीले । दीप्तियुक्ते ॥ भासते तच्छील : । भास्० । भञ्जभासमिदोघुरच् ॥

भासुरपुष्पा । स्त्री० वृश्चिकाल्या म् ॥

भास्कर : । पुं० आदित्ये । प्रभाकरे ॥ यथा । सदायजन्तियज्ञेनसदा दानंददन्तिच । सदाचरायुभक्ता स्ते नित्यंयेऽर्चन्तिभास्करमितिभ विष्यपुराणम् । अग्नौ । वह्नौ ॥ भा : करोति । दिवाविभेतिट : । कस्कादित्वात्स : । तेनविसर्जनीयजिह्वामूलीयौसकारस्तनभवत: वीरे ॥ अर्कवृक्षे ॥ न० सुव र्णे ॥

भास्करक्षेत्रम् । न० प्रयागे ॥

भास्करप्रिय : । पुं० पद्मरागमणौ। चुन्नौ०इतिकेचित् ॥

भास्करेष्टा । स्त्री० आदित्यभक्तायाम् ॥

भास्मन : । त्रि० भस्ममये ॥ भस्मनो विकार : । अण् । अन्नितिप्रकृति भावान्नस्तद्धितइतिटिलोपोन ॥

भास्वान् । पुं० सूर्ये ॥ अर्कवृक्षे ॥ दीप्तौ । प्रभायाम् ॥ भास : सन्त्य स्य । तदस्यास्तीतिमतुप् ॥ त्रि० भास्वरे । दीप्तिविशिष्टे । प्रकाश वति ॥

भास्वर : । पुं० दिने ॥ न० कुष्टौष धौ । कुठ० इ० भा० ॥ त्रि० प्रका शवति । भासनशीले ॥ भासते० तच्छील : । भास्दीप्तौ । स्थेशभा सपिसकसोवरच् ॥

भि : सटा । स्त्री० भिस्सटायाम् ॥

भिक्षा । स्त्री० भृतौ ॥ याच्ञायाम् । अर्च नायाम् ॥ सेवायाम् ॥ भिक्षितवस्तुनि ॥ अन्नग्रासमात्राभवेद्भिक्षा तिग्रासात्त- प: । सम्भवेत्त्वधिकमपिदेयमिति० भिक्षाञ्चभिक्षवेदद्याद्विधिवद्ब्रह्मचा रिणे ०इत्यत्रकुल्लूकभट्ट : ॥ यदैव यतिब्रह्मचारिणौरूपस्थितिस्तदैव०

। भिक्षादानं कर्त्तव्यम् । यथोक्तं न
रसिंहपुराणे । भिक्षाञ्च भिक्षवे द-
द्यात् परिव्राड्ब्रह्मचारिणे । कल्पि
तादन्नादुद्धृत्य सव्यञ्जनयुतादपि ।
अकृते वैश्वदेवे तु भिक्षौ च गृहमागते
। उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा वि-
सर्ज्जयेत् इति ॥ पाखण्डानुपक्रम्य-
ब्रह्मपुराणे तेभ्योदेयं गृहाद्वहिरित्य
भिहितम् । भिक्षया लक्ष्यते चर्या प-
रिग्रहविवर्ज्जिता । किम्भोग्यं परि
गृह्णीयात् सर्वभोग्येषु दोषदृक्-
गा च याचामाचक्षेतु भिक्षान्नादिव्य-
तिरिक्तसर्वभोग्यत्यागो भिक्षाशब्दे
न लक्ष्यत इत्यर्थः । इयञ्च चर्या वि-
वेकिनामति सुलभेत्याह । किम्भो-
ग्यमिति ॥ यथाहुः । भिक्षाहारो
निराहारो भिक्षा नैव प्रतिग्रहः । अ
सतो वासतो वापि सोमपानं दिने दि-
ने ॥ भिक्षा प्राणस्य रक्षार्थं कन्था शीत
निवारिणी । अचला केशवे भक्तिर्वि
भवैः किम्प्रयोजनम् ॥ भिक्षणम्०-
भिक्ष्यतेऽनया वा । भिक्ष भिक्षायां-
लाभेऽलाभे च । गुरोश्च ल्यः । टाप् ॥
भिक्षाकः । पुं० भिक्षुके ॥
भिक्षाकी । स्त्री० भिक्षुक्याम् ॥
भिक्षाचरः । पुं० स्त्री० भिक्षुके ॥
भिक्षाटनम् । न० भिक्षार्थगमने ॥
भिक्षाशित्वम् । न० पैशुन्ये ॥
भिक्षाशी । स्त्री० भिक्षुके ॥

भिक्षुः । पुं० ब्रह्मचार्य्याद्याश्रमचतुष्ट
यान्तर्गतचतुर्थाश्रमे ॥ आश्रमशब्दो
यं धर्म्मिपरो धर्मपरश्च । तत्पर्य्यायाः ।
परिव्राट् । कर्म्मन्दी । पाराशरी ।
मस्करी । इति ॥ तस्य धर्मा यथा । भि-
क्षोर्धर्मं प्रवक्ष्यामि तन्निबोधत सत्तमाः
। वनाद्गृहाद्वा कृत्वेष्टिं सर्ववेदस
दक्षिणाम् ॥ प्राजापत्यां तदन्ते तु
अग्निमारोप्य चात्मनि । सर्वभूत-
हितः शान्तस्त्रिदण्डी सकमण्डलुः
। सर्वारामं परित्यज्य भिक्षार्थी ग्राम
माश्रयेत् । अप्रमत्तश्चरेद्भैक्षं सायाह्ने
नातिलक्षितः । रहिते भिक्षुकै
र्ग्रामे यात्रामात्रमलोलुपः । भवेत् प
रमहंसो वा एकदण्डी यमादिकृत् ॥
सिद्धयोगस्त्यजन् देहममृतत्वमिहा-
प्नुयात् ॥ योगमभ्यस्य मितभुक् परां
सिद्धिमवाप्नुयात् ॥ दातातिथिप्रियो
ज्ञानी गृही श्राद्धेऽपि मुच्यते । इति गा
रुडे १०३ अध्यायः ॥ अपि च । च-
तुर्थश्चाश्रमो भिक्षोः प्रोच्यते यो मनी-
षिभिः । तस्य स्वरूपं गदतो मम श्रो-
तुं नृपार्हसि ॥ पुत्त्रद्रव्यकलत्त्रेषु त्य-
क्तस्नेहो नराधिप । चतुर्थमाश्रमस्था
नं गच्छेन्निर्द्धूतमत्सरः ॥ त्रैवर्गि-
कांस्त्यजेत् सर्वानारम्भानवनीपते ।
मित्रादिषु समो मैत्रः समस्तेष्वेव
जन्तुषु ॥ जरायुजाण्डजादीनां वा-
ङ्मनः कर्म्मभिः क्वचित् । युक्तः

कुर्वीतनद्रोहंसर्वसङ्गांश्चवर्ज्जयेत् ॥ एकरात्रस्थितिर्ग्रामेपञ्चरात्रस्थितिः पुरे तथातिष्ठेद्यथाप्रीतिर्द्वेषोवानास्यजायते । प्राणयात्रानिमित्तञ्चव्यंगारेभुक्तवज्जने। काले प्रशस्तवर्णानांभिक्षार्थं पर्य्यटेद्गृहान् ॥ कामः क्रोधस्तथादर्पमोहलोभादयश्चये । तांस्तुदोषान्परित्यज्यपरिव्राण्निर्ममोभवेत् ॥ अभयंसर्वसत्त्वेभ्योदत्वायश्चरतेमुनिः । नतस्यसर्वभूतेभ्योभयमुत्पद्यतेक्वचित्॥ कृत्वाग्निहोत्रंस्वशरीरसंस्थंशारीरमग्निञ्चमुखेजुहोति। विप्रस्तुभैक्षोपरतैर्हविर्भिश्चिताग्निनासव्रजतिस्मलोकान्॥ मोक्षाश्रमंयश्चरतेयथोक्तंशुचिःसुसङ्कल्पितबुद्धियुक्तः। अनिन्धनंज्योतिरिवप्रशान्तंसब्रह्मलोकंश्रयतिद्विजातिः ॥ इतिविष्णुपुराणे ३ अंशे ८ अध्यायः ॥ अपिच । चतुर्विधाभिक्षवस्तुकुटीचरबहूदकौ । हंसः परमहंसश्चयोयः पश्चात्सउत्तमः ॥ एकोभिक्षुर्यथोक्तः स्याद्द्वावेवमिथुनंस्मृतम् । त्रयोग्रामः समाख्यातऊर्द्ध्वन्तुनगरायते ॥ नगरंनहिकर्त्तव्यंग्रामोवामिथुनंतथा । राजादिवार्त्तातेषुस्याद्भिक्षावार्तापरस्परम् इतिस्मृतिः ॥ पुनश्च । अजिह्नः पण्डकः पंगुरन्धोवधिरएवच । मुग्धश्चमुच्यतेभिक्षुः षड्भिरेतैर्नसंशयः ॥ अत्रस्याजिह्नादिपदव्याख्यानंयथा स्थानेद्रष्टव्यम् ॥ अपिच । नभिन्द्यांनस्तुतिंकुर्य्यान्नकञ्चिन्मर्मणिस्पृशेत् ॥ नातिव्याधिर्भवेत्तद्वत्सर्वत्रैवसमोभवेत् । नसम्भाषेत्स्त्रियंकाञ्चित्पूर्व्वदृष्टाञ्चनस्मरेत् । कथाञ्चवर्जयेत्तासांनपश्येल्लिखितामपि ॥ इति ॥

भिक्षणशील : । भिक्षयाञ्चायाम् । सनाशंसभिक्षउः ॥ बुद्धभिक्षुकै॥ श्रावणीक्षुपे ॥ कोकिलाक्षे ॥

भिक्षुकः । त्रि० याचके । अर्थिनि॥

भिक्षुसङ्घाटी । स्त्री० चीवरे ॥

भिण्डः । पुं० भिण्डाक्षुपे ॥ )

भिण्डकः । पुं० )

भिण्डा । स्त्री० शाकक्षुपविशेषे० तत्फलेच । चेत्रसम्भवे । सुशाके । करपर्णे । वृत्तबीजे भिण्डी० ० इ० भा० ॥ भिण्डीस्नोष्णाग्राहिणीचतथारुचिकरास्मृता ॥

भिण्डीतकः । पुं० भिण्डायाम् ॥

भित्तम् । न० खण्डे ॥ भिद्यतेस्म । भिदिर्विदारणे । क्तः । भित्तंशकलमितिनिष्ठातकारस्यनत्वाभावोनिपात्यते । यथा । भित्तंतिष्ठति ० खण्डमित्यर्थः ॥

भित्तिः । स्त्री० कुड्ये । कांथ० कांध० कम्ध० भीत ० इ० भा० ॥ भिद्य

ते । भिदिर्० । क्तिन् ॥ प्रदेशे ॥ प्रशस्ते ॥ मतल्लिकोद्घमिश्रा : स्यु: प्रकाण्डस्थालभित्तयइतिगणरत्नमहोदधि : ॥

भित्तिका । स्त्री० भित्तौ ॥ पल्लिकायाम् । पल्ल्याम् ॥ भिनत्ति ० भिद्यतेवा । भिदिर् ० । कृतिभिदिलतिभ्य : कित्तिति ० तिकन् ॥

भित्तिचौर : पुं ० चौरविशेषे । कुड्यच्छेदिनि । सींधचोर० इ० भा०

भित्तिपातन : पुं ० महामूषके । घूंस ० इ० भा० ॥

भिद् । स्त्री० प्रभेदे ॥ भिनत्तिभिदिर् ० । तच्छीलादिषु ० अन्यतोपिदृश्यतइतिक्विप् ॥ त्रि ० भेदकर्त्तरि ॥

भिदकः । पुं० खड्गे ॥ न ० वज्रे ॥

भिदा । स्त्री० भेदे ॥ वस्त्रादेर्विदारणे । विदरे । स्फुटने । फाडा० फटा ० फाडना ० इ ० भा० ॥ भेदनम् । भिदिर्० । भिदाद्यङ् । टाप् ॥ धन्याके ॥

भिदि: । पुं० वज्रे ॥ भिनत्ति । भिदिर्० । कृगृशृपृकुटिभिदिछिदिभ्यश्चेति ० इ : सचकित् ॥

भिदिरम् । न० वज्रे ॥ भिनत्ति । भिदिर्० । इषिमदीत्यादिनाकिरच् ।

भिदु: । पुं० पवौ ॥ वज्रे ॥ भिनत्ति । भिदिर्० । पृभिदिव्यधीतिकु : ।

भिदुरम् । न० कुलिशे वज्रे ॥ भिनत्ति । भिदिर्० । विदिभिदिच्छिदेःकुरच् ॥ न ० प्लक्षवृक्षे ॥ त्रि० मिश्रे ॥

भिदेलिम: । त्रि ० भेत्तव्ये ॥ भिद्यते ० कर्मणिभिदे : केलिमर ॥

भिद्य: । पुं० नदे ॥ भिनत्तिकूलम् । भिदिर ० । भिद्योद्ध्यौनदे ० इति० हलजपवाद: कर्त्तरिक्यप्निपात्यते ॥

भिद्रम् । न० शतधारे । वज्रे । भिनत्ति । भिदिर ० स्फायीतञ्चीत्यदिनारक् ॥

भिन्दि : स्त्री ० कृपाणिकायाम् ॥ भिन्दति । भिदिअवयवे । सर्वधातुभ्य इन् ॥

भिन्दिपाल: । पुं० क्षेपणीये । सृगे ॥ गोफण ० इ० १० ॥ भिभिन्दिंपालयति । पालरक्षणे । कर्मण्यण्

भिन्न: । वि० भेदविशिष्टे । दारिते । भेदिते । खण्डितावयवे । अन्यत्वसङ्गते ॥ फुल्ले ॥ विद्धे । भिद्यतेस्म ॥ भिदिर् ० । क्त : । रदाभ्यांनिष्ठातो न: पूर्वस्यचदइति०दकारतकारयोर्नौ ॥ न० अन्यार्थवचने । पुं० न० क्षतरोगविशेषे ॥ तल्लक्षणंयथा । शक्तिकुन्तेषुखड्गाग्रविषाणैराशयोहत : । यत्किञ्चित्प्रस्रवेत्तद्धिभिन्नमित्यभिधीयते ॥ आशय : कोष्ठ : ॥

भिन्नक : । पुं॰ क्षपणे । बौद्धे । त्रि॰ ईषद्भिन्ने ॥ अनन्तस्यन्तगतौ क्तादि तिकन् ॥

भिन्नगन्धिका । स्त्री॰ कर्कटीविशेषे । फूट॰ इ॰ भा॰ ॥ भिन्नं गात्रमस्या:

भिन्नदर्शी । त्रि॰ अज्ञे । कुतार्किके । अविद्यामोहितात्मान : पुरुषाभिन्नदर्शिन : ॥ भिन्नं द्रष्टुं शीलं यस्य । णिनि : ॥

भिन्नधी : । त्रि॰ भ्रंसितमतौ ॥

भिन्नभिन्नात्मा । पुं॰ चणके ॥

भिन्नयोजनी । स्त्री॰ पाषाणभेदवृक्षे ॥

भिन्नार्थक : । त्रि॰ अन्यस्मिन् ॥ भिन्नार्थकाअन्यतरएकत्वान्यतराअपि इत्यमर : ॥ भिन्न : अर्थोयस्य स: ॥

भिया । स्त्री॰ भये ॥ ञिभीभये । भिदाद्यङ्गित्यङ् । टाप् ॥

भिरिण्टिका । स्त्री॰ श्वेतगुञ्जायाम् ॥

भिल्ल: । पुं॰ म्लेच्छजात्यन्तरे । भील इ॰ भा॰ ॥ यथाह । हेमचन्द्र : । मालाभिल्लाकिरातास्तसर्वेपिम्लेच्छजातय: इति ॥ सचब्राह्मणकन्यायां तीवराज्जात : । यथा । पुलिन्द मेदभिल्लाश्चपुल्लोमल्लश्चधावक : । कुन्दकारोडोखलोवामृतपोहस्तिपस्तथा ॥ एतेवैतीवराज्जाता : कन्यायां ब्राह्मणस्यचेतिप॰ पद्धति : ॥

भिल्लगवी । स्त्री॰ गवय्याम् ॥

भिल्लतरु : पुं॰ लोध्रे ॥

भिल्ली । स्त्री॰ लोध्रे ॥

भिषक्पाश : । पुं॰ निन्द्यवैद्ये ॥ कुत्सितोभिषक् । याप्ये पाशप् ॥

भिषक्प्रिया । स्त्री॰ गुडूच्याम् ॥

भिषक्जितम् । न॰ औषधे ॥

भिषग्भद्रा । स्त्री॰ भद्रदन्तिकायाम् ॥

भिषङ्माता । स्त्री॰ वासके ॥

भिषक् । पुं॰ वैद्ये ॥ हेतौलिङ्गप्रशमनेरोगाणामपुनर्भवे । ज्ञानंचतुर्विधंयस्यसराजार्होभिषक्तम : ॥ दण्डनीयोयथा । अज्ञातौषधमन्त्रस्तुयश्चव्याधेरतत्त्ववित् । रोगिभ्योऽर्थंसमादत्ते सदण्ड्यश्चौरवद्भिषक् ॥ भिषजोन्नस्याभोज्यत्वं यथा । शूद्रान्नंब्राह्मणोभुक्त्वातथारङ्गावतारिण: । चिकित्सकस्यक्रूरस्यतथास्त्रीमृगजीविनाम् ॥ शौण्डिकान्नं सूतिकान्नं भुक्त्वामासंव्रतीभवेत् । व्रतीयावकेन । तत्रधेनुद्वयमितिप्रायश्चित्तविवेक : ॥ अपिच । पूयंचिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियम् । विष्ठावार्धुषिकस्यान्नंशस्त्रविक्रयिणोमलम् ॥ इतिमानवे ४ अध्याय : ॥ भिषज्यति । भिषज् रुग् जये । कण्ड्वादि : । क्विप् ॥ बिभेतिवा । ञिभी॰ । भिय : षुग्ह्रस्वश्चेत्यजि : ॥

भिस्सटा । स्त्री॰ दग्धिकायाम् दग्धान्ने ॥ भिस्सांटीकते । टीकृगतौ ।

अन्येभ्योपीतिड : । ङ्यापोरितिह्रस्व : ॥

भिस्सा । स्त्री० अन्ने । ओदने । भक्ते ॥ बभस्ति । भसदीप्तौ । बाहुलकात्सः छन्दसिवहुलमितीत्वम् । ब्राह्मणभिस्सेतिभाष्यप्रयोगाल्लोकेपि ॥ यद्वा । भेदनम् ०भित् । सम्पदादित्वात्क्विप् । भिदंस्यति । षोन्तकर्मणि । आतोनुपेतिकः । पृषोदरादिः ॥

भिस्साग्डम् । न० शालूके । भसौंड० इ० भा० प्र० कन्दे ॥

भी : । स्त्री० भये ॥ ञिभीभये । सम्पदादित्वात्क्विप् ॥

भीतम् । न० भये त्रि० भययुक्ते ॥ ञिभेति । ञिभी० क्तः ० ॥

भीतभीत : । त्रि० अतिशयेनभीते । भीतप्रकारे ॥

भीति : । स्त्री० भये ॥ ञिभीभये । क्तिन् ॥ कर्म्मे ॥

भीम : । पुं० अम्लवेतसे ॥ शिवे ॥ पीठविशेषे ॥ यथा । भीमेश्वरीभीमपीठे शिवाभीमेश्वरीतथेत्यागम : ॥ सर्वसम्प्रतिपन्नपराक्रमेपाण्डुतनये । वृकोदरे ॥ त्रि०भयहेतौ । घोरे ॥ भयानके ॥ बिभेत्यस्मात् । भीमादयोऽपादाने० भियः षुग्वेतिमक् ॥

भीमकर्मा । पुं० भीमसेने ॥ भीमं० हिडम्बवधादिरूपंकर्मास्य ॥

भीमनाद : । पुं० सिंहे ॥

भीमनिर्ह्राद : । पुं० राक्षसान्तरे ॥

भीमपूर्वज : । पुं० भीमाग्रजे । युधिष्ठिरे ॥

भीमरथ : । पुं० तामसमनुवंशजातासुरविशेषे ॥ हरिणाकूर्मरूपेणाहतोभीमरथोऽसुरइतिगारुडेगयामाहात्म्ये ८६ ऽध्याय : ॥

भीमरथी । स्त्री० जनानावस्थाविशेषे ॥ यथा । वैद्यकेसप्तसप्ततिकेवर्षेसप्तमेमासिसप्तमी । रात्रिर्भीमरथीनामनराणामतिदुस्तरा ॥ नराणांदुरितक्रमेतिचपाठ : ॥ तामतीत्यनरोयोसौ दिनानि यानिजीवति । क्रतुभिस्तानितुल्यानिसुवर्णशतदक्षिणै : ॥ गति : प्रदक्षिणंविष्णोर्जल्पनंमन्त्रभाषणम् । ध्यानंनिद्रासुधापानंभीमरथ्या : फलश्रुति : ॥ नदीविशेषे ॥

भीमविक्रान्त : । पुं० करिमाचले । सिंहे ॥ भीमश्चासौविक्रान्त : ॥ त्रि० भयानकविक्रमवति ॥

भीमशासन : । पुं० यमे ॥ भीमंशासनंयस्य ॥

भीमसेन: । पुं० मध्यमपाण्डवे । भीमेवृकोदरे ॥ कर्पूरभेदे । भीमसेनोकपूरइतिभाषा । यथा । पीतासोभीमसेनस्तदनुशितकर : शङ्क

रावासमंज्ञ: । पांशु: पिष्टोऽत्र सारस्तदनु हिमयुतात्वालुकाजूटिका च। पश्चादस्यास्तुषारस्तदुपरि सहिम: शीतल: पत्रिकाख्याकर्पूरस्येति भेदागुणरसमहसावैसदृश्येनदृश्या: ॥

भीमसुता । स्त्री० दमयन्त्याम् ॥

भीमा । स्त्री० दुर्गायाम् ॥ रोचमाख्य गन्धद्रव्ये ॥ कशायाम् ॥

भीमाकाली । भीमादेवी । स्त्री०) दुर्गायाम् ॥

भीमास्थानम् । न० तीर्थविशेषे ॥

भीमेश्वरी । स्त्री० भीमपीठस्थायाम् ॥

भीमैकादशी । स्त्री० माघशुक्लैकादश्याम् ।। भैम्याम् ॥

भीर: । त्रि० भयदे ॥ भियंराति । रा । क: ॥

भीरु: । पुं० इक्षुप्रभेदे ॥ यथा । भीरु: श्लेष्मकर: स्वादुरविदाहीगुरु: स्मृत: इति ॥ व्याघ्रे ॥ शृगाले ॥ त्रि० आर्त्ते । कातरे ॥ भीरुके । चस्त्री । दरपोक० इ० भा० ॥ रणे भीरो: स्वर्गाभाव: ॥ विभेति । ञिभीभये । भिय: क्रुक्लुकनाविति० कु: ॥ स्त्री० भयशीलायाम् । वरयोषिति ॥ कण्टकार्याम् ॥ शतावर्याम् ॥ अजायाम् ॥ छायायाम् ॥ स्त्रीमात्रे ॥

भीरुक: । पुं० इक्षुप्रभेदे । भोररी० इ० दे० भा० प्र० ॥ वातपित्तप्रशमनोमधुरोरसपाकयो: । सुशीतोबृंहणोबल्य: पौण्ड्रकोभीरुकस्तथा ॥ पेचके ॥ न० वने ॥ त्रि० भयशीले । भीलुके । चस्त्री ॥ विभेति । ञिभी० । क्रुकन् ॥

भीरुहृदय: । पुं० मृगे ॥

भीरू: । स्त्री० भयशीलायांयोषिति ॥ ऊङुतइत्यूङ् ॥

भील: । पुं० भिल्ले ॥ भियंलाति । ला० क:० ॥

भीलभूषणा । स्त्री० गुञ्जायाम् ॥

भीलुक: । त्रि० भयप्रकृतिकेजने । चस्त्री ॥ विभेति । ञिभी० । भिय: क्रुक्लुकनाविति क्लुकन् ॥

भीषण: पुं० भयानकरसे ॥ शल्लक्याम् ॥ कुन्दुरुके ॥ कपोते ॥ हिन्ताले ॥ भैरवविशेषे ॥ त्रि० गाढे ॥ दारुणे ॥ भीरुरसान्विते ॥ भीषयते । ञिभी० । नन्द्यादित्वाल्ल्यु: । भियोहेतुभयेषुगिति षुक् ॥

भीष्म: । पुं० गाङ्गेये ; पाण्डवानां पितामहे ॥ रुद्रे ॥ राक्षसे ॥ भयानकरसे ॥ त्रि० भयहेतौ । भयङ्करे ॥ विभेत्यस्मात् । ञिभी० । भिय: षुग्वेति० मक् ० षुगागमश्च ।

भीष्मक: । पुं० रुक्मिण्या: पितरि ॥

भीष्मजननी । स्त्री० गङ्गायाम् ॥

भीष्मपञ्चकम् । न० कार्तिकशुक्लपक्षी यैकादश्यादि पूर्णिमान्तपञ्चतिथि कर्तव्यव्रतविशेषे ॥

भीष्मरत्नम् । न० हिमालयोत्तरदेश जातशुक्लवर्णप्रस्तरविशेषे । भीष्म पाषाणे ॥

भीष्मसू : । स्त्री० गङ्गायाम् ॥ भीष्मं सूते । षूङ्० । क्विप् ॥ शान्तनो- र्महिषीभूत्त्वाभीष्मं सूतवतीयत : । तस्मात्साभीष्मसू: प्रोक्तागङ्गात्रैलो क्यपावनी ॥

भीष्माष्टमी स्त्री० माघशुक्लाष्टम्याम् ॥ तत्रभीष्मस्यतर्पणंकर्त्तव्यम् ॥

भौसटम् । न० शूर्माण्डके ॥

भुक्तम् । न० भक्षणे ॥ त्रि० भक्षिते । खादिते । अभ्यवहृते । अशिते ॥ भुज्यतेस्मभुज० । क्त: भुक्ताब्राह्मणा इत्यत्रतुभुक्तमेषामस्तीत्यकारोमत्व र्थीयोनतुकर्त्तरिक्त : । सकर्मकेभ्यस्तस्यविधानाभावात् ॥ यद्वोत्तर पदलोपोत्रद्रष्टव्य : । भुक्तान्नाभुक्ता : । अत्रान्नस्यभुक्तत्वंब्राह्मणे षूपचर्य्यते ॥

भुक्तसमुज्झित : । त्रि० फेलायाम् ॥ पूर्वम्भुक्तम्० पश्चात्समुज्झितम् । पूर्वकालेकेतिसमास : ॥

भुक्ति : । स्त्री० भोजने ॥ भोजनम् । भुजपालनाभ्यवहारयो : । स्त्रियां क्तिन् ॥ भोगे ॥ यथा । भुक्तिस्त्रिपु रुषीसिध्येदिति ॥

भुक्तिप्रद : । पुं० मुद्गे ॥ त्रि०भोगदा तरि ॥

भुक्तोज्झित : । त्रि० फेलायाम् ॥ पूर्वभुक्तम्०पश्चादुज्झितम् । पूर्वे कालेकेतिसमास : ॥

भुग्न : । त्रि० रोगादिनाकुटिलीकृते रुग्णे ॥ नम्रे ॥ भुज्यतेस्म । भुजो कौटिल्ये । क्त : । ओदितश्चेति नत्वम् ॥ भुजतिस्मवा । गत्यर्थेति क्त : ॥

भुज : । पुं० स्त्री० करे ॥ बाहौ ॥ अस्यशुभाशुभलक्षणंयथा । कराङ्गु ल्यङ्गुलाग्रे छासुगन्धिन्यूर्ध्वरोमिका । अन्यथाअर्थहीनानामसौनि : स्वस्य रोमशौ ॥ निर्मांसौचैवभग्नाल्पौश्लि ष्टौचविपुलौभुजौ । आजानुलम्बि नौबाहूवृत्तौपीनौनरेश्वरे ॥ नि स्वानांरोमशौह्रस्वौश्लिष्टौकरिकरप्र भौ । इति ॥ भुज्यतेऽनेन । भुज पालनाभ्यवहारयो : । भुजन्युब्जौ पाण्युपतापयोरितिसाधु : ॥ यद्वा । भुजति । भुजकौटिल्ये । इगुप- धेतिक : ॥ चतुष्कलिशेषगुरुसंज्ञा याम् ॥ ० ॥ पुं० ॥

भुजकोटर : । पुं० कक्षे ॥

भुजग : । पुं० सर्पे ॥ भुज: सन्गच्छ ति । अन्यत्रापीतिड : ॥ भुजेनकौ टिल्येनगच्छतिवा ।

भुजगदारणः । पुं० गरुडे ॥

भुजगभोगी । ० मयूरे ॥

भुजगराजः । पुं० शेषाहौ ॥ भुजगानां राजा । टच् ॥

भुजगशिशुभृता । स्त्री० बृहतीछन्दः प्रभेदे ॥ भुजगशिशुभृतानौमः । यथा । हृदतटनिकटक्षोणीभुजगशिशुभृतायासीत् । मुररिपुदलिते नागेन्द्रजनसुखदासा ऽभूत् ॥

भुजगान्तकः । पुं० गरुडे ॥

भुजगाभोजी । पुं० मयूरे ॥

भुजगाशनः । पुं० पक्षिसिंहे । गरुडे ॥ भुजगानश्नाति । अश० । ल्युः । भुजगाश्चशनं यस्यवा ॥

भुजङ्गः । पुं० अहौ । सर्पे ॥ षिड्गे ॥ भुजं नकौटिल्यं नगच्छति । गमेः सुपिखच् खच्चडिद्वावाच्य इतिडित्वपक्षे टिलोपः ॥ सीसके ।

भुजङ्गघातिनी । स्त्री० सर्पाक्ष्याम् । गुल्कार्य्याम् । कङ्कालिका० इ० गौ० दे० भा० ॥

भुजङ्गजिह्वा । स्त्री० महासमङ्गायाम् ॥ सर्परसनायाम् ॥

भुजङ्गप्रयातम् । न० जगतीछन्दः प्रभेदे ॥ भुजङ्गप्रयातं चतुर्भिर्यकारैः ॥ यथा । सदारात्मजभ्रातिभृत्योविहायस्समेतं हृदं जीवितं लिप्समानः । मयाक्रोशितः कालिये त्वं कुरुत्वं भुजङ्गप्रयातं द्रुतंस्नागराय ॥

भुजङ्गभुक् । पुं० मयूरे ॥ भुजङ्गं भुङ्क्ते । भुज० । क्विप् ॥ गरुडे ॥

भुजङ्गभोजी । पुं० राजसर्पे ॥

भुजङ्गमः । पुं० सर्पे । भुजं नकौटिल्यं नगच्छति । गमेः सुपिवाच्यइतिखच् । खच्चडिद्वावाच्यइति डिद्भावे टिलोपाभावः ॥ न० सीसके ॥

भुजङ्गलता । स्त्री० नागवल्ल्याम् ॥

भुजङ्गविजृम्भितम् । न० उत्कृतिच्छन्दः प्रभेदे ॥ वस्वीशाश्वैश्छेदोपेतं ममतनयुगलसजजगैः भुजङ्गविजृम्भितम् ॥ यथा । हेलोदस्यन्यस्तपादप्रकटविकटनटनभरोरणत्करतालकस्फारप्रेङ्खच्चूडावर्हः स्तुतितरलनवकिशलयतरङ्गितहार धृक् । नम्यन्नागस्त्रीभिर्भक्त्यामुकुलितकरकमलयुगं क्रमस्तुतिरच्युतः पायाद्वश्छिन्दन्कालिन्दीहृदकृतनिजवसतिमहद्भुजङ्गविजृम्भितम् ॥

भुजङ्गसङ्गता । स्त्री० बृहतीछन्दः प्रभेदे ॥ सजरैर्भुजङ्गसङ्गता ॥ यथा । तरलातरङ्गरिङ्गितैर्यमुनाभुजङ्गसङ्गता । कथमेतिव-

तस्याश्चतुष्पल : सदैवतांशरि : ॥

भुजङ्गहा । पुं० श्रीकृष्णस्यन्दन ध्वजे । गरुडे ॥

भुजङ्गाक्षी । स्त्री० रास्नायाम् ॥ भुजङ्गान् अक्षति । अक्षूव्याप्तौ । कर्मण्यण् ॥ यद्वा । भुजङ्गोक्षियस्याः । अच्णोदर्शनादित्यच् । जातेरिति० गौरादित्वाद्वा० ङीष् । भुजङ्गशब्दश्चभुजङ्गाक्षिसदृशीलक्षणा ॥

भुजङ्गाख्य : । पुं० नागकेसरे ॥

भुजशिर : । न० स्कन्धे ॥ भुजस्यशिर : ॥

भुजा । स्त्री० बाहौ ॥ करे ॥ भुजाट्टाप् ॥

भुजाकण्टः । पुं० कामाङ्कुशे । नखे ॥

भुजादल : । पुं० हस्ते ॥ भुजान्तरम् न० क्रोडे ॥ भुजयोरन्तरम् ॥

भुजि : । पुं० वह्नौ ॥ भुनक्ति० भुज्यतेवा । भुज० । भुजे : किच्चेति० इः ॥

भुजिष्य : । पुं० स्वतन्त्रे ॥ हस्तसूत्रे दासे ॥ भुङ्क्ते० स्वाम्युच्छिष्टम्० भुज्यतेवा । भुज० । रुचिभुजिभ्यां किष्यन् ॥

भुजिष्या । स्त्री० दास्याम् ॥ गणिकायाम् ॥ टाप् ॥

भुज्यु : । पुं० भोजने ॥ अग्नौ ॥ भुनक्तिपालयतिसर्वाणिभूतानि । भुजमृङ्भ्यांयुक्त्युकाविति युक् भोजनं वा ॥ भाजने ॥ अरुपिविशिषे ॥

भुञ्जन् । त्रि० भोगकर्तरि । भुञ्जाने ॥ भुजे० र्लट : शतृ ॥

भुञ्जान : । त्रि० भुञ्जति । यथा त्रिषुधामसुयद्भोज्यं भोक्तायश्चप्रकीर्तित : । वेदैतदुभयंयस्तुसभुञ्जानो नलिप्यत इति । त्रिषुधामसुजाग्रदादिषु ॥ भुजे : कर्तरिलट : शानच् ॥

भुरिक् । स्त्री० पृथिव्याम् ॥ बिभर्त्ति० भरति मनुष्यादीन् । डुभृञ्० । भृञउच्चेति० इकप्रत्ययः

भुवनम् । न० सलिले । जले ॥ गगने । जने ॥ पिष्टपे । जगति ॥ भूरादिसर्वलोके ॥ चतुर्दशभुवनानियथा । भूर्भुवः स्वर्महश्चैवजनश्चतपएवच । सत्यलोकश्चसप्तैतेलोकास्तु परिकीर्त्तिता : । अतलंसुतलंचैव वितलञ्चगभस्तिमत् । महातलं रसातलंपातालं सप्तमं स्मृतम् ॥ इति ॥ भवन्त्यस्मिन्भूतानि० इति भुवनमयंलोकः ॥ भूयते । भूप्राप्तौ । भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन् ॥ यद्वा । भवन्ति० उत्पद्यन्तेऽनेनकरणेल्युट् । संज्ञापूर्वकत्वाद्गुणाभाव : ॥

भुवनकोष : । पुं० भूगोले ॥

भुवनकोषवित् त्रि० । चतुर्दशभुवना

निवसतू नि० इतितात्पर्यार्थाभिज्ञैः ॥ कल्पनामात्रमेतत्। तेषामदृष्टत्वात् । नचवचनेभ्यस्तद्दर्शनम्। तेषांमिथोविप्रतिपत्तिदर्शनात्। 

भुवनेश्वरः। पुं० एकाम्बरे ॥

भुवनेश्वरी। स्त्री० महाविद्याविशेषे। साम्यावस्थमायोपाधिकब्रह्मरूपिण्याम् ॥ मणिद्वीपाधिवासिन्याम्॥ यथा। पाशाङ्कुशधराभीतिवरांदेवीं चिदात्मिकाम्। वन्देसमन्दहसितां मणिद्वीपाधिवासिनीम् ॥ आयुधस्थानानिवामाधःकरमारभ्यदक्षिणाधःकरपर्यन्तम्। तदुक्तंमहासम्मोहनतन्त्रे। दक्षिणेचाङ्कुशंदद्याद्वामेपाशंप्रदापयेत्। अभयंदक्षिणेदद्याद्वरंवामेप्रदापयेदिति। दशपटल्यामपिभुवनेशीध्याने। दक्षेऽङ्कुशाभयेप्रोक्तावामेपाशमथेष्टदर्मिति॥

भुवन्युः। पुं० भानौ ॥ सूर्ये ॥ ज्वलने। वह्नौ ॥ शशलाञ्छने। शशिनि ॥ भवति। भू०। कन्युच्चिपिर्श्वेति० चाद्भुवः कन्युच् ॥

भुवर०। अ० अन्तरिक्षे। गगने ॥ षष्ठ्यन्तप्रतिरूपकमव्ययम्। भवति। भू०। भूरञ्जिभ्यांकिदित्यसुन्। उवङ् ॥

भुवर्लोकः। पुं० भूरादिसप्तलोकान्तर्गत द्वितीयलोके॥ यथा। भूमिसूर्यान्तरंयत्रसिद्धादिमुनिसेवितम्। भुवर्लोकस्तुसोप्युक्तोद्वितीयोमुनिसत्तम ॥ अपिच। तिथिलघोभुवर्लोकोध्रुवप्राप्तोमहीतलात्॥ भूपृष्ठादारभ्यध्रुवप्राप्तइति० ज्योतिश्चक्रावलम्बनभूतध्रुवपर्यन्तपञ्चदशलक्षोच्छ्रायोभुवर्लोकइत्यर्थः॥

भुविः। न० अब्धौ। समुद्रे ॥ भवन्त्यस्मिन्। भू०। भुवः कित्इति० इसन् ॥

भुशुण्डी। स्त्री० अस्त्रान्तरे। अस्त्रियन्त्रे। यथा। उड्डीयोड्डीयतप्राप्यनदन्तोदशकण्ठका। क्रमतेपानताक्षीया साभुशुण्डीनिगद्यते ॥

भू। अ० रसातले ॥

भूः। स्त्री० स्थानमात्रे ॥ एकाक्षे ॥ व्याडस्त्वन्तरे॥ धरण्याम्। भूमौ ॥ हृष्टात्मविजयव्ययान्नृपान्हसति भूरियम्। अहोमांविजिगीषन्तिमृत्योःक्रोडनकानराः॥ भवति० भवनंवा। भू० सत्तायाम्। कर्त्तरिभावेवाक्विप् ॥ भवन्त्यस्यांसर्वमित्यधिकरणेबहुलवचनादाक्विब्त्यन्ते। भवन्त्यस्याभूतानीत्यपादानेवाक्विबित्यन्ये ॥ उत्पत्तौ ॥

भूकः। पुं० न० काले ॥ छिद्रे ॥ अन्धकारे ॥ भवति॥भू०। सूभृशुषिमुषिभ्यः कक् ।

भूकदम्बः। पुं० अलम्बुषवृक्षे। कोकसिम० इ० गौ० दे० भा० ॥

भूकद्म्बक : । पुं० यवान्याम् ।
भूकदम्बिका । स्त्री० महाश्रावणिका याम् ॥ मुण्डाराम् ॥
भूकन्द : । पुं महाश्रावणिकायाम् ।
भूकम्प : । पुं० उत्पातविशेषे ॥ स- यथा । यामत्रमाचभूकम्पोहिंसादी नामभिष्टद : । चभिष्टद : चिती शानांसम्यगोरुभयोरपि ॥ इतिव शिष्ठ : ॥ यदाविजृम्भतेनन्तोमदाघू र्णितलोचन : । तदाचलतिभूरेषा साद्रिद्वीपाब्धिकानना ॥ भुव: कम्पो भूकम्प: ॥ मेषेवृश्चिकभे गज : प्र- चलतिव्यासादिभि : कथ्यते चापि मीनकुलीरभेचवृषभेसम्य चलित्क- म्प : । यूकेकुम्भधरेमृगेन्द्रमिथुने- कन्यामृगेपन्नगस्तेषामेकतमोयदि प्रचलतिचौणीतदाकम्पते ॥ कच्छ पेमरणंचयंमरणं चापिपन्नगे । सर्व चसुखदस्त्वपृथिव्यां चलितेगजे ॥ प्रथितनरेश्वरमरणंव्यसनान्यग्नेय मारुतयो : । चुद्भयमतिवृष्टिभि रुपपोडान्तोजनाश्चापि ॥ चिचतु र्थपञ्चमदिनेमासेपचेचिपचके । भव तियदाभूकम्प:प्रधाननृपनाशनंकुरु ते।सचार्यभूमिजोत्पातविशेष:॥यथा । चरस्थिरभवंभौमंभूकम्पमपिभूमि जम् । जलाशयानांवैकृत्यं भौमंतद पिकीर्तितम् ॥ भौमंयाप्यफलंस्व यंचिरेणपरिपच्यते ॥ चपिच । चि तिकम्पमाहुरेके वृहदन्तर्जलनिवा सिसत्वकृतम् । भूभारखिन्नदिग्ग जविश्रामसमुद्भवंचान्ये ॥ अनिलो ऽनिलेननिहत : चितौपतन्सस्वं- नंकरोत्यन्ये । केचित्त्वदृष्टकारित मिदमन्ये प्राहुराचार्या : ॥ गिरि भि : पुरासपचैर्वसुधाप्रपतद्भिरुत्प तद्भिश्च । आकम्पितापितामहमा हामरसदसिसव्रीडम् ॥ भगवन्नाम ममैतत्त्वयाकृतंयदचलेतितन्नतथा । क्रियतेऽचलैश्चलद्भि : शक्ताहंना स्यखेदस्य ॥ तस्या : सगद्गदगिरं किञ्चित्स्फुरिताधरंविनतमीषत् । साश्रुविलोचनमाननमवलोक्यपिता मह : प्राह ॥ मन्युंहरेन्द्रधात्या : चिपकुलिशंशैलपचभङ्गाय । शक्र: कृ तमित्युक्त्वामाभैषीरितिचवसुमतो माह ॥ किन्त्वनिलदहनसुरपति वरुणा : सदसत्फलावबोधार्थम् । प्राग्द्विचिचतुर्भागेषुदिननिशो : क म्पयिष्यन्ति ॥ अतोविशेषोद्रष्टव्यो वाराहसंसुविचक्षणै : ॥
भूकर्बुदार : । पुं० ) चुद्रश्लेष्मान्तके ।
भूकर्बुदारक : । पुं०) भूशेलो । छोटा लसोडा० इ० भा० ॥ भूकर्बुदा रोमधुर : कृमिशूलापह : परम् । वातप्रकोपन : किञ्चित्शीतल : स्वर्णमारक : ॥
भूकल : । पुं० दुर्विनीताश्वे ॥

भूकश्यपः । पुं॰ वसुदेवे ॥
भूकाकः । पुं॰ स्वल्पकङ्के ॥ क्रौञ्चे ॥ नीलकपोते ॥
भूकुम्भी । स्त्री॰ भूपाटल्याम् ॥
भूकुष्माण्डी । स्त्री॰ विदार्याम् ॥
भूकेशः । पुं॰ शैवले ॥ वटे ॥
भूकेशा । स्त्री॰ राक्षस्याम् ॥
भूकेशी । स्त्री॰ अवल्गुजे ॥
भूक्षित् । पुं॰ सूचीरोमणि । शूकरे ॥
भूखर्जूरी । स्त्री॰ क्षुद्रखर्जूर्याम् । भूयुक्तायाम् ॥ भूखर्जूरीतुमधुरा शिशिरादाहपित्तनुत् ॥
भूगरम् । न॰ विषे ॥
भूगर्भः । पुं॰ भगवति । भूर्गर्भे यस्य भूःसर्वभूताश्रयभूतागर्भइवान्तर्वर्तिनीचस्य भूस्तागर्भेऽस्येतिवा॥ भवभूतिनामनि॰ कवौ ॥
भूगोलः । पुं॰ ज्योतिश्शास्त्रप्रसिद्धे भुवनकोषे ॥ भोज्यं यथासर्वरसंविनाज्यं राज्यं यथाराजविवर्जितञ्च । सभानभातीवसुवक्तृहीनागोलानभिज्ञोगणकस्तथैव ॥ वादीव्याकरणं विनैवविदुषांधृष्टःप्रविष्टः सभां जल्पन्नल्पमतिः स्मयात्पटवटुभ्रूभङ्गवक्रोक्तिभिः । ह्रीतः सन्नुपहासमेतिगणकोगोलानभिज्ञस्तथाज्योतिर्वित् सदसिप्रगल्भगणकप्रश्नप्रपञ्चोक्तिभिः ॥
भूचरः । त्रि॰ भूमिचारिणि ॥

भूच्छायम् । न॰ अंधकारे ॥ भुवः छाया । छायाबाहुल्ये॰ इति क्लीवता ॥
भूजम्बुः । पुं॰ भूनागे ॥
भूजम्बूः । स्त्री॰ गोधूमे ॥ विकङ्कतफले ॥ भूमिजम्ब्वाम् ॥
भूतः । पुं॰ देवयोनिविशेषे ॥ सच अधोमुखोर्ध्वमुखादिपिशाचभेदोरुद्रानुचरोबालग्रहः ॥ कुमारे ॥ कृष्णचतुर्दश्याम् ॥ योगीन्द्रे ॥ शम्भोर्गणविशेषेषु ।न॰ क्ष्मादौ। पृथिव्यप्तेजोवाय्वाकाशेषु ॥ पिशाचादौ ॥ जन्तौ । युक्ते । न्याय्ये ॥ वस्तुतत्वानुसरणे । त्रि॰ उचिते ॥ प्राप्ते ॥ वित्ते ॥ ऋते । सत्ये ॥ प्राणिनि ॥ कालविशेषे । वृत्ते । अतीते । गते ॥ परमार्थे ॥ विद्यमानेवस्तुनि॥ अतीतोत्पत्तिके । जाते ॥ समे ॥ उत्तरपदस्थएव भूतशब्दः समार्थइतिशाब्दिकाः । यथा पितृभूतः । देवभूतोयमिति पूर्वमपिविद्यमाने ॥ भवनधर्मिणि ॥ भाव्यते स्म । भूप्राप्तौ । आधृषाद्वेतिणिजभावःपक्षे॰ क्तः ॥ भूतिरस्यास्तिवा । अर्श आद्यच् ॥ अभवद्वा । भुवोगत्यर्थेति॰ भूतार्थेक्तः रिक्तः ॥ अर्शआदिः ॥
भूतकृत् । पुं॰ धातरि । दृहिणे ।

भूतानि करोति । डुकृञ् ० । क्विप् । तुक् ॥ कर्द्दे ॥ भूतानि कृन्तति ० छिनत्ति । कृतीछेदने । क्विप् ॥ कृणोतिहिनस्तिवा । कृञ् ० । क्विप् तुक् ॥ विरिञ्चौ ॥ रजोगुणंसमाश्रित्यविरिञ्चिरूपेण ० भूतानिकरोतिहन्तितथा ॥

भूतकेश: । पुं० तृणविशेषे । गोलोम्याम् । अल्पकेश्याम् ॥ भूतानांकेशइव । भूत: केशोस्य वा ॥

भूतकेशी । स्त्री० भूतकेशे ॥ शेफालिकायाम् ॥ नीलसिंदुवारे ॥

भूतक्रान्ति: । स्त्री० भूतावेशे ।

भूतगण: । पुं० पृथिव्यादिपञ्चके ॥ भूतानांगण: ॥

भूतगन्धा । स्त्री० मुरानामगन्धद्रव्ये ॥

भूतग्राम: । पुं० देहेन्द्रियसङ्घाताकारेणपरिणते पृथिव्यादिभूतसमुदाये ॥ सच० जरायुजाण्डजस्वेदजोद्भिज्जभेदाच्चतुर्विधोभवति । भूतानांपृथिव्यादीनांग्राम: ॥

भूतघ्न: । पुं० भूर्जवृक्षे । उष्ट्रे ॥ लशुने । त्रि० भूतनाशके ॥

भूतघ्नी । स्त्री० तुलस्याम् ॥ मुण्डितिकायां ॥

भूतचतुर्द्दशी । स्त्री० कार्त्तिककृष्णच तुर्द्दश्याम् । यमचतुर्द्दश्याम् ॥

भूतजटा । स्त्री० जटामांस्याम् ॥ गन्धमांस्याम् ॥

भूतत्वम् । न० वर्त्तमानध्वंसप्रतियोगिसमयवृत्तित्वे ॥ बहिरिन्द्रियग्रहणायोग्यविशेषगुणवत्वे ॥ पृथिव्यादयस्तुजातिविशेषा: ॥

भूतदर्शनम् । न० परमार्थदर्शने ॥

भूतद्रावी । पुं० भूताङ्कुशवृक्षे ॥ रक्तकरवीरे ॥

भूतद्रुम: । पुं० श्लेष्मांतकवृक्षे ॥

भूतधृक् । पुं० भूतानामपकारके ॥ भूतानिद्रुह्यति । द्रुह० । सत्सूद्विषेतिक्विप् ॥ भूतधृक्कोलभेतशम् ॥

भूतधात्री । स्त्री० भूमौ । भूतानां धात्री ।

भूतनाथ: । पुं० शिवे ॥ भूतानां नाथ: ॥ भूतैर्जन्तुभिर्याच्यते० तानुपतापयति० तेभ्यआशास्ते ० तेषामभीष्टमितिवाभूतनाथ: ॥

भूतनायिका । स्त्री० दुर्गायाम् ॥

भूतनाशन: । पुं० श्वेतसर्षपे । सर्षपे । भल्लातके ॥ न० रुद्राक्षे ॥ भूतान्नाशयति । णशअदर्शने ल्युट् ।

भूतपति: । पुं० महादेवे ॥ भूतानां पति: ॥

भूतपत्री । स्त्री॰ तुलस्याम् ॥

भूतपुष्पः । पुं॰ श्योनाकवृक्षे ॥

भूतपूर्णिमा । स्त्री॰ आश्विनपूर्णिमायाम् । शारदाम् । कोजागरायाम् ॥

भूतपूर्वः । त्रि॰ अतिक्रान्ते ॥ पूर्वं भूतः । सुप्सुपेतिसमासः । भूतपूर्वेचरडितिनिर्देशात्भूतशब्दस्यपूर्वनिपातः ॥

भूतप्रादुर्भावः । पुं॰ अतिक्रान्तोत्पत्तौ ॥ भूतस्यप्रादुर्भावः ॥

भूतभावनः । पुं॰ सर्वभूतपितरि । ईश्वरे । भूतानिभावयतिजनयति॰ प्रापयतिवा । भवतेर्ण्यन्ताद्युच् ॥

भूतभृत् । पुं॰ विष्णौ ॥ भूतानिबिभर्तिधारयति॰ पोषयतिवा॰ । डुभृञ्॰ । क्विप् । तुक् ॥

भूतभैरवः । पुं॰ भैरवविशेषे ॥ शीतज्वरापहचूर्णविशेषे ॥ यथा । एलाजातिफलंव्योषंत्रिफलाजीरकंघनः । सविडङ्गंसितायुक्तंचूर्णंशीतज्वरापहमिति ॥

भूतमात्रा । स्त्री॰ शब्दादिषु ॥ पृथिव्यादिषुविषयेषु ॥

भूतमारी । स्त्री॰ चीडानामनिगंधद्रव्ये ॥

भूतयज्ञः । पुं॰ पञ्चमहायज्ञान्तर्गतबलिवैश्वदेवकर्मणिभूतेभ्योबलिहरणे ॥

भूतयोनिः । पुं॰ परमात्मनि ॥ भूतानांयोनिः ॥

भूतलिका । स्त्री॰ पृक्कायाम् ॥

भूतवासः । पुं॰ कलिद्रुमे ॥ भूतानांवासः । भूतानांवासोस्मिन्वा॥

भूतविक्रिया । स्त्री॰ अपस्माररोगे ॥

भूतवित् । पुं॰ लौकायतिके ॥ सच पृथिव्यप्तेजोवायवस्तत्त्वानि॰तानिचत्वारिभूतानिजगत्कारणानीति कल्पयति ॥

भूतविद्या । स्त्री॰ भूततन्त्रे ॥ यथा । भूतविद्यानाम॰ देवासुरगन्धर्वयक्षरक्षः पितृपिशाचनागग्रहाद्युपसृष्टचेतसां॰ शान्तिकर्मबलिहरणादिग्रहोपशमनार्थमितिसुश्रुतः ॥

भूतवृक्षः । पुं॰ शाखोटवृक्षे । श्योनाकवृक्षे ॥ कलिवृक्षे ॥

भूतवृक्षकः । पुं॰ शाखोटे ॥ वहुवारके लसोड़ा॰ इ॰ भा॰ ॥

भूतवेशी । स्त्री॰ श्वेतशेफालिकायाम् श्वेतसुरसायाम् । श्वेतन्यवारी॰ इ॰ भा॰ ॥ भूतानिविशन्ति । विशप्रवेशने । कर्मण्यण् ॥

भूतब्रह्मा । पुं॰ देवले ॥

भूतसञ्चारः । पुं॰ भूतोन्मादरोगे । भूतक्रान्तौ । ग्रहागमे ॥

भूतसञ्चारिणी । स्त्री॰ कृष्णचतुर्दश्याम् ॥

भूतसञ्चारी । पुं॰ दावानले ॥
भूतसर्ग : । पुं॰ भूतसृष्टौ । देवासुरभेदेनभूतानांसृष्टौ ॥ यथा । ब्राह्म : प्रजापतीयश्चसौम्यऐन्द्रस्तथैवच । गान्धर्वोयक्षश्चासुरश्च : पैशाचमानुषा : ॥ स्थावर : पाशवोमार्ग : सार्प: शाकुनिकस्तथा । चतुर्दशविधोह्येषभूतसर्ग : प्रकीर्तित : ॥
भूतसार : । पुं॰ श्योनाकप्रभेदे ॥
भूतसृट् । पुं॰ ब्रह्मणि ॥
भूतहन्त्री । स्त्री॰ वंध्याकर्कोटक्याम् । नीलदूर्वायाम् ॥
भूतहर : । पुं॰ गुग्गुलौ ॥
भूतहारि । न॰ देवदारुणि ॥
भूता । स्त्री॰ कृष्णचतुर्दश्याम् ॥ यथा । स्कान्दे । ब्रह्माण्डोदरमध्ये तुयानितीर्थानिसन्तिवै । पूजितानिभवन्तीहभूतायांपारणेकृते ॥ अपिच । शिवरात्रिव्रतेभूतांकामविद्धांविवर्जयेत् ॥
भूताङ्कुश : । पुं॰ गौ॰ दे॰ खनामाप्रसिद्धे वृक्षे । चवको । ग्रहाङ्कये ॥ भूताङ्कुशस्तीक्ष्णगन्ध : कटुरुष्णस्तथोत्कट : । भूतग्रहादिदोषघ्न : कफवातनिकृन्तन : ॥
भूतात्मा । पुं॰ देहेपृथिव्यादिभूतारब्धत्वात्॰ भूतान्येवात्मास्वभावोयस्य स : ॥ परमेष्ठिनि । द्रुहिणे । हिरण्यगर्भे ॥ भूतानांव्यष्टिपाधीनामात्मानियन्तासमष्ट्युपाधित्वात्॰ इति ॥ सदाशिवे ॥ जीवात्मनि ॥ विष्णौ ॥ भूतानांप्राणिनामात्माअन्तर्यामी ॥
भूतादि : । पुं॰ सर्वजगत्कारणे । तामसाहङ्कारे ॥ भूतानामादि : ॥ परमेश्वरे ॥ भूतानांभवनधर्मकाणामुत्पत्तिमतांसर्वेषामादि : कारणं कर्तुपादानोभयात्मकमितियावत् ॥
भूतादिसर्ग : पुं॰ भौतिकसर्गे ॥ भूतादे : सर्ग : ॥
भूतारि । न॰ हिङ्गुनि॰ ॥
भूतार्त : । त्रि॰ भूताविष्टे ॥ भूतेनऋतोदीप्त : । ऋतेचतृतीयासमास इतिवृद्धि : ॥ भूतेनआर्त्तोवा ॥
भूतार्थ : । पुं॰ सिद्धार्थे ॥
भूतार्थवाद : । पुं॰ प्रमाणान्तरविरोधस्तुतिरहितार्थबोधकेवेदवाक्ये ॥ यथा । इन्द्रोवृत्रायवज्रमुदयच्छदित्यादि : ॥
भूताली । स्त्री॰ भूपाटल्याम् ॥ मुषल्याम् ॥
भूतावास : । पुं॰ विभीतके । बहेडा॰ इ॰भा॰ ॥ भूतानामावास : ॥ आकाशाद्याश्रये॰वासुदेवे ॥ भूतान्याभिमुख्येनवसन्त्यत्र ॥ वसन्तित्वयिभूतानिभूतावासस्ततोभवान् । इतिहरिवंश : ॥ काये ॥
भूताविष्ट : । त्रि॰ पिशाचग्रस्ते ॥ भू-

ताक्रान्ते । भूतादिनारोगग्रस्ते ॥

भूतावेश : । पुं० आवेशे । भूतस-
ञ्चारे ॥

भूति : । स्त्री० भस्मनि । सम्पत्तौ ।
हस्तिशृङ्गारे । मांसपाकविशेषे ।
उत्पाते । शिवस्याणिमाद्यष्टविधै-
श्वर्ये । अणिमामहिमाचैवलघिमा
गरिमातथा । प्राप्तिः प्राकाम्यमीशि
त्वंवशित्वंचाष्टभूतय : । शम्भुधृ
तभस्मनि । भूतृणे । उत्पत्तौ । जा
तौ । हस्तिनामौषधे । रोहिषतृणे ॥
विभूतौ । भवनम् । भूति : । स्त्रियां
क्तिन् । भवत्यनया । क्तिच्वा ॥

भूतिक : । पुं० यवान्यामौषधौ । न०
कटुफलौषधौ । घनसारे । भूनि
म्बे । भूस्तृणे । भवति । भू० ।
क्तिच्क्तौचसंज्ञायामिति० क्तिच् ।
संज्ञायांकन् ॥

भूतिकाम : । पुं० ऐश्वर्याभिलाषि
णि ॥

भूतिकील : । पुं० भूखाते ॥

भूतिगर्भ : । पुं० भवभूतिकवौ ॥

भूतिनिधानम् । न० धनिष्ठानक्षत्रे ॥

भूतिमान् । त्रि० ऐश्वर्ययुक्ते ॥

भूतिकम् न० भूनिम्बे । यवान्या
म् । कर्पूरे । भूस्तृणे । तृणे ।

भूतृणम् । न० गन्धतृणे । गन्धखेडे
। रौहिषे । पुं० रोहिषे । भूति-
के । मालातृणे । सुगन्धरोहिष० दृ०
परिमलदगङ्गनि० दृ० चान प्रभाषाप्र
सिद्धे ॥ भूतृणंकटुकंतिक्तंतीक्ष्णो
ष्णंरोचनंलघु । विदाहिदीपनंरूक्ष
मनेल्यंमुखशोधनम् ॥ वृष्यंवहुवि
टकश्चपित्तरक्तप्रदूषणम् । भुव-
स्तृणम् ॥

भूतेश : । पुं० शिवे । सर्वभूतनियन्तरि
॥ भूतानांप्रमथादीनांबालग्रहाणां
प्राणिनांवाईश : ॥

भूत्तमम् । न० स्वर्णे । भुविउत्तमम् ॥

भूदरीभवा । स्त्री० आखुकर्ण्याम् ॥

भूदार : । पुं० वराहे । सूकरे । भुव
न्दारयति । दृ० कर्मण्यण् ॥

भूदेव : । पुं० ब्राह्मणे । ब्राह्मणोजङ्ग
मामूर्ति : श्रीविष्णो : परमात्म-
न : । अतएवहिविख्याताभूदेवा-
स्तेमहात्मने । भुव : भुविवादे-
व : ॥

भूधन : । पुं० राज्ञि ॥ क्षुपीवले ॥

भूधर : । पुं० पर्वते । महीध्रे ॥ धरति
धृञ : पचाद्यच् । भुवोधर : ॥ य
न्त्रविशेषे ॥ यथा । जलकच्छपपाता
लदोलाभूधरवालुका : । अकाद्या
यन्त्रभेदा : स्युरितिशब्दचन्द्रिका ॥

भूधात्री । स्त्री० भूम्यामलक्याम् ॥
भूधात्रीवातकृत्तिक्ताकषायामधु
राहिमा । पिपासाकासपित्तास्रक्
कफपाण्डुक्षतापहा ॥

भूध्र : । पुं० पर्वते ॥ भुवन्धरति । धृ-

अ० । मूलविभुजादित्वात्क: ।

भूनाग : । पुं० उपरसविशेषे । क्षितिनागे ॥

भूनिम्ब: । पुं० क्षुपविशेषे । किराततिक्ते । चिरायता० इ० भा० ॥ भुवोनिम्बइव ॥

भूनीप : । पुं० भूमिकदम्बे । भूक्षवक्षभे । लघुपुष्पे ॥ विकदम्बा: कटूष्णास्सबृष्यादोषहराश्चिमा: । कषायतिक्ता : पित्तघ्नावीर्यवृद्धिकरा : परा : ॥

भूनेता पुं० राज्ञि ॥ भुवोनेतानायक: ॥

भूप : । पुं० राजनि ॥ भुवंपाति । पा रक्षणे । आतोनुपेतिक: । १६ संख्यायाम् ॥

भूपति : । पुं० नृपे । राज्ञि ॥ भूपुचीयस्यपत्नीसतुभवतिकथंभूपती रामचन्द्र: । इतिरामायणेकैकयीवाक्यम् ॥ भुव : पति : ॥ ऋषभौषधे ॥

भूपद: । पुं० वृक्षे ॥भुविपदानियस्य॥

भूपदी । स्त्री० मल्लिकायाम् । वेलो० इ० भा० ॥ भुविपदमस्या: । गौरादि: ॥

भूपलाश: । पुं० वृक्षविशेषे । विशाली इ० गौ० दे० भा० ॥ भुव : पलाश : ॥

भूपाटला । स्त्री० भूपाटल्याम् ॥

भूपाटली । स्त्री० भूकुम्भ्याम् । रक्तपुष्पिकायाम् ॥ भुव : पाटली ॥



भूपाल : । पुं० राज्ञि ॥ भुवंपालयति । पालरक्षणे । कर्मण्यण् ॥ यथा । राज्यंपालयतेनित्यं सत्यधर्मपरायण : । निर्जित्यपरसैन्यानिक्षितिंधर्मणापालयेत् ॥

भूपुत्री । स्त्री० सीतायाम् ॥ भुव : पुत्री ॥

भूपेष्ट : । पुं० राजादनीवृक्षे ॥

भूबदरी । स्त्री० लघुबदर्याम् । क्षितिबदर्याम् । झाड़बेरी० इ० भा० ॥

भूभर्त्ता । पुं० नृपे ॥ भुवोभर्त्ता । पत्यर्थभर्तृशब्दस्ययाजकादित्वात्० याजकादिभिश्चेतिसमास : । तेन० अपांस्रष्टा० वज्रस्यभर्त्तेतिवत्० तृजकाभ्यांकर्त्तरीति०नसमासनिषेध: ॥

भूभुक् । पुं० राज्ञि ॥ भुवंभुनक्तिपालयति । भुज० । क्विप् ॥

भूभृत् । पुं० अद्रौ । गोत्रे । गिरौ ॥ महीपतौ ॥ भुवंबिभर्ति । डुभृञ्० । क्विप् तुक् ॥

भूमा । पुं० बहुत्वे ॥ भूमामहान्निरतिशयंवस्त्विति पर्याया : ० इतिभाष्यम् । सकलसांसारिकव्यवहाराभावोपलक्षितेतत्त्वे । ब्रह्मणि ॥ यत्रनान्यद्विजानातिनान्यच्चशृणोतिच । नान्यत्पश्यतियस्मिन्वैस भूमाप्रोच्यतेश्रुतौ ॥ योभूमासोऽमृत : प्रोक्त : सुखंनाल्पेविचारय ॥ बहोर्भाव : । पृथ्वादित्वादिमनिच्

। वशोर्लोपोभूचवशो : । त्रि० बहुत्वविशिष्टे ॥

भूमय : त्रि० मृदात्मके । भूमिमये

भूमयी । स्त्री० सूर्यपत्न्याम् ॥ छायायाम् ॥

भूमि: । स्त्री० स्थानमात्रे वसुन्धरायाम् । क्षितौ । अचलायाम् । रसायाम् । स्थिरायाम् ॥ विश्वभूमिसम्पूज्योवाच । सर्वाधाराभवशुभैस्सर्वैः सम्पूजितासुखम् । मुनिभिर्मनुभिर्देवैःसिद्धैर्दानवादिभिः ॥ अम्बुवाचीत्यागदिनेगृहारम्भप्रवेशने । वापीतडागारम्भे चगृहेचकृषिकर्मणि । तवपूजांकरिष्यन्तिमहरेणसुराद्य : । मूढायेनकरिष्यन्तियास्यन्तिनरकंचते । इति ॥ अम्बुवाचीत्यागदिनेगृहारम्भप्रवेशने । तस्मिन्नदिनेतवपूजांकरिष्यन्तीत्यन्वयः ॥ अष्टा : गुणामहाभारते मोक्षधर्मे यथा । भूमेस्थैर्यंगुरुत्वञ्चकाठिन्यं प्रसवार्थता । गन्धोगुरुत्वं शक्तिश्चसङ्घात : स्थापनाधृति : । इति ॥ अस्यार्थ : । स्थैर्यमचाञ्चल्यम् १ । गुरुत्वं पतनप्रतियोगीगुणः २ । काठिन्यम् ३ । प्रसवार्थता० धान्याद्युत्पत्तिस्तदर्थता ४ । गन्ध : ५ । गुरुत्वं पिण्डपुष्टि : ६ । शक्ति : गन्धग्रहणसामर्थ्यम् ७ सङ्घात : ० श्लिष्टावयवत्वम् ८ । स्थापना० मनुष्याद्याश्रयत्वम् ९ । धृति : पाञ्चभौतिकेमनसियोधृत्यंश: १० । इति ॥ षष्टिवर्षसहस्राणिस्वर्गेतिष्ठति भूमिद: । उच्छेत्ताचानुमन्ताचतावन्तिनरकंवसेत् ॥ योगिनामवस्थाविशेषे ॥ यथा । निरुद्धे चेतसिपुरासविकल्पसमाधिना । निर्विकल्पसमाधिस्तुभवेदत्रत्रिभूमिक : ॥ व्युत्तिष्ठतेसतस्वाद्येद्वितीयेपरबोधितः। अन्ते व्युत्तिष्ठतेनैवसदाभवतितन्मय : ॥ एवंप्रागभूमिसिद्धावप्युत्तरोत्तरभूमये । विधेयाभगवद्भक्तिस्तांविनासानसिध्यति ॥ भवन्त्यस्यांभूतानि । भूसत्तायाम् । भुव : किदिति० मि : ॥

भूमिकदम्ब: । पुं० कदम्बविशेषे । भूनीपे । भूमिजे । लघुपत्रे । वृत्तपुष्पे । विषघ्ने ॥

भूमिकन्दली । स्त्री० कन्दल्याम् । द्रोणपर्ण्याम् ॥

भूमिका । स्त्री० रचनायाम् ॥ वेशान्तरपरिग्रहे । रूपान्तरस्वीकारे यथा । हर्षचन्द्र : । पात्राणिभाव्येऽधिकृतास्तस्तद्दे शास्तुभूमिका : । इति ॥ ज्ञानिनामवस्थाविशेषे ॥ यथाहु : । ज्ञानभूमि : शुभेच्छाख्याप्रथमासमुदाहृता । विचारणा द्वितीयास्यात् तृतीयातनुमानसा । सत्त्वापत्तिस्तुतुर्यीस्या ततोऽसंसक्ति

नामिका ॥ पदार्थभावनाषष्ठीसप्तमी तुर्यगाख्या स्मृतेति । भूमिकानामचित्तस्यावस्थाविशेषः । अत्रभूमिकाचितयंब्रह्मविद्यासाधनमेव० नतुब्रह्मविद्याकोटावन्तर्भावः ० भेदसत्यत्वबुद्धेरद्ध्वस्तत्वात् । यश्चचतुर्थभूमिकांप्राप्तः सब्रह्मविदित्युच्यते। पञ्चमभूमिर्निर्विकल्पातदातस्याः स्वयमेवव्युत्तिष्ठति० सोयंज्ञानीब्रह्मविद्वरः षष्ठभूमौपार्श्वस्थबोधितोव्युत्तिष्ठति० सोयंब्रह्मविद्वरीयान् । तदेतद्भूमिद्वयंसुषुप्तिरितिचाभिधीयते ॥ असम्प्रज्ञातप्रतिपादकानियोगशास्त्राणिसप्तभूमिकाप्राप्तयोगिन्यवपर्यवस्यन्ति० सोयमीदृशोयोगीव्युत्थानरहितोनिर्विकल्पकसमाधिस्थः परमहंसः सप्तमभूमौब्रह्मविद्वरिष्ठइतिचोच्यते॥ इति ॥ भूमिकापञ्चकमप्याहुः । यथा। क्षिप्तं मूढंविक्षिप्तमेकाग्रंनिरुद्धमिति ॥ तत्र० आसुरसम्पल्लोकशास्त्रदेहवासनामुवर्त्तमानंचित्तंक्षिप्तभूमिकानिन्द्रातन्द्रादिग्रस्तंचित्तंमूढभूमिका कदाचिद्ध्यानयुक्तंचित्तंक्षिप्ताद्विशिष्टतयाविक्षिप्तभूमिका। तत्रक्षिप्तमूढयोः समाधिस्वशङ्कैवनास्ति० विक्षिप्ते तुसमाधिस्वशङ्कातदितरत्भूमिकाद्वयंसमाधिः॥ एकाग्रे मनसिसद्भूतमर्थंप्रद्योतयति० क्लेशान्क्षिणोति० कर्मबन्धनानिश्लथयति० निरोधमभिमुखीकरोति० इतिसम्प्रज्ञातोयोगः एकाग्रभूमिका। सर्ववृत्तिनिरोधरूपासम्प्रज्ञातसमाधिः० निरुद्धभूमिकेति ॥

भूमिकूष्माण्डी । स्त्री० लताविशेषे । विदार्याम् ॥

भूमिखर्जूरिका । स्त्री० क्षुद्रखर्जूर्याम् ॥ भूमिखर्जूरिकास्वाद्वीदुरारोहाम्रदुच्छदा । अयस्कन्धफलाकाककर्कटीस्वादुमस्तका ॥ पिण्डखर्जूरिकात्वन्यासादेशेपश्चिमेभवेत् ॥

भूमिखर्जूरी । स्त्री० भूमिखर्जूरिकायाम् ॥

भूमिगृहम् । न० बहय।तनागृहे ॥

भूमिचम्पकः । पुं० पुष्पवृक्षविशेषे । ताम्रपुष्पे । सन्धिवर्ध्ने । द्रुघणे । भुँइचाँपा० इ० भा०॥ भूचम्पा० इ० भा० ॥ अस्यमूलंव्रणपाककारकम् ॥

भूमिच्छत्रम् । न० शिलीन्ध्रे ॥

भूमिजः । पुं० नरकासुरे । अङ्गारके । कुजे । भौमे ॥ भूमिकदम्बे ॥ मनुष्ये ॥ न० गौरसुवर्णे ॥ भूमेर्भूमौवाजातः । जनी० । डः ॥

भूमिजगुग्गुलुः । स्त्री० आशापुरसम्भवे । दैत्यमेदजे । महिषासुर सम्भवे । आशापुरीगूगुल० इ० भा ॥

तिक्तोसीकटुरुष्णश्च कफवातहरस्तथा । उमाप्रियश्चभूतघ्नोमिश्र : सौरभ्यदायक : ॥

भूमिजम्बु : । स्त्री० भूमिजम्बुकायाम् । नादेय्याम् ॥ भूमेर्जम्बु : ॥

भूमिजम्बुका । स्त्री० क्षुद्रजम्बाम् । नादेय्याम् ॥ ह्रस्वत्वात्स्वार्थेकन् ॥ यद्वा भूमिलग्नाजम्बुका । शाकपार्थिवादि : । भूमिलग्नफलत्वात् ॥

भूमिजम्बू : । स्त्री० क्षुद्रजम्बाम् । ह्रस्वफलायाम् । भ्रमरेष्टायाम् । पिकभक्ष्यायाम् । काष्ठजम्बाम् ॥

भूमिजा । स्त्री० जनकात्मजायाम् । सीतादेव्याम् ॥ भूमेर्जाता । जनी० । ड : । टाप् ॥

भूमिजीवी । स्त्री० विशि ॥

भूमिदानम् । न० दानोत्तमे ॥ यथा । वृहद्भि : सम्पन्नांभूमिंयवगोधूमशालिनीम् । ददातिवेदविदुषेसन भूयोभिजायते ॥ भूमिदानात्परं दानं नभूतंनभविष्यतीति ॥

भूमिदेव : । पुं० ब्राह्मणे । भूदेवे ॥ भूमेर्भूमौवादेव : ॥

भूमिप : । पुं० राजनि ॥

भूमिपक्ष : । पुं० वाताश्वे ॥

भूमिपिशाच : । पुं० तालवृक्षे ॥

भूमिपिशाची । स्त्री० माधवीलतायाम् ॥

भूमिपुत्र : । पुं० भारे । मङ्गले ॥ भूमे:पुत्र :

भूमिमण्ड : । पुं० अष्टपादिकायाम् । मदनमाली० हापरमाली० द्रु० गौ० दे० भा० ॥

भूमिमण्डपभूषणा । स्त्री० माधवीलतायाम् । अतिमुक्ते । पुण्ड्रके ॥

भूमिमान् । त्रि० भूमिविशिष्टे । यवादित्वाद्वत्वंन ॥

भूमिरक्षक : । पुं० वाताश्वे ॥

भूमिलाभ : । पुं० मृत्यौ ॥ भूमेर्लाभो येन ॥ भूमिप्राप्तौ ॥

भूमिलेपनम् । न० गोमये ॥ भूमेर्लेपनंयेन ॥ भूमेर्लेपे ॥

भूमिवर्द्धन : । पुं० न० शवे ।

भूमिसम्भवा । स्त्री० सीतायाम् ॥

भूमिसुत: । पुं० मङ्गलग्रहे । नरकासुरे ॥ भूम : सुत : ।

भूमिसुता । स्त्री० जानक्याम् ॥

भूमिस्पृक् । पुं० मानवे ॥ वैश्ये ॥ चौरविशेषे ॥ अन्धे ॥ खञ्जे ॥ भूमिं स्पृशति । स्पृशस्पर्शने । स्पृशोऽनुदकेक्विन् ॥

भूमी । स्त्री० भूमौ । क्षितौ ॥ भवति । भू० भुव : किदितिमि : । कृदिकारादक्तिनइति०ङीष् ॥

भूमीन्द्र : । पुं० नृपे । राजनि ॥

भूमिरुह : । पुं० वृक्षे ॥ यथा । दीर्घास्तापयुतायथाविरहिणीश्वासास्तथावासरायामिन्यश्चपलाययाकुलवधू

दृष्टिः सरोषप्रिये । छायावाञ्छा तमालवीढवनितावाणीवभूमीरुहा निष्पन्दाः सुचिरादयामिलितयोर्यूनोर्मिथोदृष्टयः ॥

भूमीसहः । पुं० द्रुमान्तरे । बादरा तौ ॥ भूमीसहस्तुशिशिरोरक्तपित्त प्रसादनः ॥

भूम्यामलकी । स्त्री० क्षुपविशेषे । बहुपुष्पायाम् । जटायाम् । अध्यण्डाया म् । तामलक्याम् । भुँइआमला इ० भा० ॥

भूम्यामली । स्त्री० तमाल्याम् । चारव्याम् । भूम्यामलक्याम् । भुइँआं मलाइ०गौ०दे०भा० ॥ अरुनेली० इ० भा० ॥

भूम्याहुल्यम् । न० कुष्ठकेतौ । क्षुपे । मार्कण्डीये । महौषधे । भुजित खड० । इ० भा० ॥

भूयः । अ० अधिकारे ॥ पुनरर्थे ॥

भूयान् । त्रि० बहुतरे । प्रचुरे ॥ अपरिमितमहिमनि ॥ अयमनयोरतिशयेनबहुः । द्विवचनविभज्योपपदेतरबीयसुनाविति०ईयसुन् । बहोर्लोपोभूचबहोः ॥ स्त्री० भूयसी अतिमहत्याम् ॥ ङीप् ॥

भूयिष्ठः । त्रि० प्रचुरे । बहुतमे ॥ अयमेषामतिशयेनबहुः । अतिशायने इष्ठन् । इष्ठस्ययिट्चेति० बहोःपरस्य इष्ठस्य लोपः० यिडागमश्च०बहोः

स्थाने भूरादेशश्च ॥

भूयुक्ता । स्त्री० भूमिखर्ज्जूर्याम् ॥

भूयोभूयः । वारंवारमर्थे ॥ यथा । भूयोभूयोभाविनोभूमिपालान्नत्वान त्वायाचतेरामचन्द्रः । सामान्योयं धर्मसेतुर्नृपाणां कालेकालेपालनीयोभवद्भिरिति ॥

भूः । अ० रेफान्तमव्ययम् । भूर्लोके ॥

भूरिः । पुं० वासुदेवे ॥ हरे ॥ परमेष्ठिनि ॥ न० सुवर्णे ॥ त्रि० प्राज्ये । प्रचुरे ॥ भवति० भूयतेवा । भूसत्तायाम्० प्राप्तौवा । अदिशदिभूशुभिभ्यः क्रिन् ॥

भूरिगन्धा । स्त्री० मुरानामनिगन्धद्रव्ये । गन्धाढ्यायां ॥

भूरिगमः । पुं० खरे । गर्दभे ॥

भूरिदावा । पुं० बाहुदातरि ॥

भूरिपत्रः । पुं० उखवालतृणे ॥

भूरिपलितदा । स्त्री० पाण्डुरफल्याम् ॥

भूरिपुष्पा । स्त्री० शतपुष्पायाम् ॥

भूरिप्रेमा । पुं० चक्रवाके ॥

भूरिफेना । स्त्री० सप्तलायाम् । चर्म्मकषौषधौ ॥ भूरयः फेनायस्याः ॥

भूरिबला । स्त्री० अतिबलायाम् ॥ भूरिबलंसामर्थ्यंयस्याम् ॥

भूरिभागः । त्रि० महद्भाग्ये ॥

भूरिमल्ली । स्त्री० अम्बष्ठायाम् ॥

भूरिमायः । पुं० शृगाले ॥ भूरयो मायायस्य ॥

भूरिरसः । पुं० इक्षौ ॥ ॥

भूरिशः । अ० बहुशइत्यर्थे । बह्वर्था च्छस्कारकादन्यतरस्याम् ॥

भूरिश्रवाः । पुं० चन्द्रवंशीयसोमदत्त पुत्रे ॥ त्रि० बहुयशोविशिष्टे । भूरिप्रचुरंश्रवोयशोयस्य सः ॥

भूरुण्डी । स्त्री० श्रीहस्तिन्याम् । हस्तिकर्णपलाशायाम् ॥ शाकविशेषइतिस्वामी । भुवंरुण्डयति० आच्छादयति । रुटिलुटिस्तेयकरणे० इत्य त्र० माधवीयायांवृत्तौ० रुडिलुडी त्यपरे० इतिपाठान्तरमुपन्यस्तम् । कर्मण्यण् ॥

भूरुट् । त्रि० भूरुहे ॥ भुविरोहयति । रुहजन्मनिप्रादुर्भावे । क्विप् ॥

भूरुहः । पुं० वृक्षे ॥ रोहति । रुह० । इगुपधेतिकः । भुविरुहः सप्तमीसमासः ॥

भूर्जः । पुं० मृदुत्वचि । भूतपत्रे । रक्षापत्रे । भोजपत्र इतिभाषा भूर्जोभूतयहन्ता स्यात्कर्णरुक्पित्तरक्तजित् । कषायोरक्षःसप्तसमेद्दोवि षहरः परः ॥ ऊर्जनमूर्जः ऊर्जवलप्राणनयोः । घञ् । भूः ऊर्जोऽस्य ॥

भूर्जकण्टकः । पुं० सङ्करजात्यन्तरे । व्रात्याद्ब्राह्मणात्सवर्णायामुत्पन्ने । आवन्त्ये ॥

भूर्जपत्रः । पुं० ) स्वनामख्यातप्रसि-
भूर्जपत्रकः । पुं० ) द्धे । मृदुत्वचि ॥

भूमिः । स्त्री० भूमौ । पृथिव्याम् । मरुभूमौ ॥ विभर्त्ति । डुभृञ्० । घृणिपृश्निपार्ष्णिचूर्णिभूर्णीति० विभर्त्तेरुत्वंनिप्रत्ययश्च ॥

भूर्लोकः । पुं० अन्तरीक्षादधोलोके । सप्तद्वीपसमुद्रसन्निवेशविशेषे ॥ पृथिव्याम् । मर्त्यलोके ॥ अस्यलक्षणं । यथा । पादगम्यन्तुयत्किञ्चित् वस्त्वस्तिपृथिवीमयम् । सभूर्लोकः समाख्यातोविस्तारोऽस्यमयोदितः ॥ इ० वि० पु० २ अंशे ५ अध्यायः । विस्तारोमयोदितइति । सर्वतो लोकालोकावधिः पञ्चविंशतिकोटि प्रमाणः ॥ भूः संज्ञकोलोकः ॥

भूलग्ना । स्त्री० शङ्खपुष्प्याम् ॥

भूलता । स्त्री० किञ्चुलुके ॥

भूवायुः । पुं० आवहाभिधेपवने । भूमेर्व हिर्दादशयोजनान्यस्यस्थानमत्राम्बुद विद्युदादयस्सन्तीतिशिरोमणिः ॥

भूशयः । पुं० नकुलगोधादौ ॥ विष्णौ ॥ लङ्काप्रतिमार्गान्वेषणंकुर्वन् समुद्रंप्रतिव्रताचरणायतदुपकण्ठे भूमौशेतेदाशरथिरूपेणेतिभूशयः । अधिकरणेशेतेरित्यच्प्रत्ययः ॥ तथाचरामायणम् । ततः सागरवेलायांदर्भानास्तीर्यराघवः । अञ्ज-

लिंप्राङ्मुखःकृत्वाप्रतिशिष्यं मश्रीदृधेरिति ॥

भूशिलु : । पुं० भूकर्बुदारे ॥

भूषणम् । न० अलङ्कारे ॥ तद्धारणफलंयथा भूषणंभूषयेदङ्गं यथाभोग्यविधानतः । शुचिसौभाग्यसन्तोषदायकं काञ्चनंस्मृतम् ॥ ग्रहदृष्टिहरंपुष्टिकरंदुःखप्रणाशनम् । पापदौर्भाग्यशमनंरत्नाभरणधारणम् ॥ माणिक्यंतरणेः सुजात्यममलंमुक्ताफलं शीतगोर्माहेयस्यचविद्रुमोनिगदितः ० सौम्यस्यगारुत्मतम् । देवेज्यस्यचपुष्परागमसुराचार्यस्यवज्रं शनेर्नीलंनिर्मलमन्ययोश्चगदितेगोमेदवैदूर्य्यके ॥ वास : स्वगन्धरत्नानां धारणं प्रीतिवर्द्धनम् । रक्षोघ्नमथ्यं मोजस्यं सौभाग्यकरमुत्तमम् ॥ भूष्यते ऽनेन । भूषअलङ्कारे । ल्युट् ॥ भूषयति वा । कृधमण्डार्थेभ्यश्चेतिभूषेर्युच् ॥ यतीनांभूषणंज्ञानं सन्तोषोहिद्विजन्मनाम् । उद्यमः शत्रुहननंभूषणंभूतिमिच्छतामिति पारिभाषिकम् ॥

भूषा । स्त्री० अलङ्क्रियायाम् । अलङ्कारसाध्यशोभायाम् ॥ भूषणम् । गुरोश्चहलइत्य : ॥

भूषित : । त्रि० अलङ्कृते । मण्डिते ॥ भूष्यतेस्म । भूष० । क्तः । इट् ॥ भूमावुषिते ॥ भुविउषित : स्थितः

भूषिता । स्त्री० अलङ्कारैरलङ्कृतायाम् । मण्डितायाम् ॥ टाप् ॥

भूष्णु : । त्रि० भविष्णौ ॥ भवनशीलः । भू० । ग्लाजिस्थश्चग्स्नुः ० चाद्भुवः । क्ङितिचेत्यत्रगकारप्रश्लेषाद्गुणाभाव : ॥

भूसुत : । पुं० भौमे । मङ्गलग्रहे ॥ नरकासुरे ॥

भूसुता । स्त्री० सीतायाम् । जानक्याम् ॥

भूसुर : । पुं० ब्राह्मणे ॥

भूस्तृणम् । न० भूतृणे ॥ अस्यपर्यायगुणास्तुयथा । गुह्यबीजस्तुभूतीकंसुगन्धं गोमयप्रियम् । भूस्तृणन्तु भवेच्छत्रामालातृणकमित्यपि ॥ भूस्तृणंकटुकंतिक्तं तीक्ष्णोष्णं रोचनं लघु । विदाहिदीपनंरूक्षमनेल्यं मुखशोधनम् ॥ अवृष्यं बहुविट्कञ्च पित्तरक्तप्रदूषणम् ॥ इति ॥ भुवः तृणम् । पारस्करादित्वात्सुट् ॥ मालवदेशप्रसिद्धे ० शाकविशेषे ॥

भूस्पृक् । पुं० मर्त्ये । पञ्चजने । मनुष्ये ॥ भुवंस्पृशति । स्पृश० । क्विन् ॥

भूस्वर्ग : । पुं० सुरपर्वते । सुमेरौ ॥

भूस्वामी । पुं० भूपतौ ॥ भुवः स्वामी ॥

भृकुंस : । पुं० स्त्रीवेशधरनर्त्तके । भ्रकुंसे ॥ पटपुटेतिदण्डकोक्तभाषणार्थकुसिधातोर्बाहुलकादिग्यस्मात् ०

एरच् । भृगोराश्रमोऽभावरणमस्य ।
पृषोदरादि: ॥
भृकुटिः । स्त्री० भ्रुकुट्याम् । क्रोधादिनाभ्रुवः कौटिल्ये ॥ कुटकौटिल्ये ।
इगुपधात्किदितिः० इन् । भ्रुवोः कुटिः । पृषोदरादित्वात्‌ऋकारः ॥
भृकुटी । स्त्री० भ्रुकौटिल्ये । क्रोधादिनाललाटसङ्कोचने ॥ कुट० ।
इगुपधादिति० इन् । कृदिकारादितिङीष् । पृषोदरादित्वाद्‌ऋकारः ॥
भृगुः । पुं० ब्रह्मणस्त्वचोजाते महर्षिविशेषे । महर्षीणांभृगुरहमितिभगवद्वचनाद्‌भगवद्विभूतौ । मनुपुत्रे ॥ वरुणस्तनये ॥ अग्नेर्भ्रष्टाद्रेतस उत्पन्नत्वात्भृगुः ॥ हरे । शिवे ॥ शुक्राचार्ये ॥ यमदग्नौ ॥ सानौ । निरवलम्बनपर्वतपार्श्वे । यस्मात् पतने ऽवलम्बनक्रियाविशेषोनास्ति । तस्यपर्यायौ ।
प्रपातः । अतटः । इति ॥ भृज्जति० तपसा० भृज्यते वा । भ्रस्ज पाके । प्रथिम्रदिभ्रस्जांसम्प्रसारणंसलोपश्चेति० भ्रस्जेः कुप्रत्ययः० सम्प्रसारणंभ्रस्जेः सलोपश्च । न्यङ्क्वादित्वात्कुत्वम् ।
भृगुकच्छः । पुं० शककारकबलेर्जन्मस्थानपत्तनविशेषे ॥
भृगुतुङ्गम् । न० तीर्थविशेषे ॥
भृगुपतिः । पुं० परशुरामे ॥
भृगुप्रस्रवणः । पुं० हिमवतः पादे ॥
भृगुभवा । स्त्री० भार्ग्याम् ॥
भृगुषट्कः । पुं० योगविशेषे ॥ लग्नात्षष्ठोभवेच्छुक्रोभृगुषट्क इतीरितः ।
भृगुसुतः । पुं० शुक्रग्रहे ॥
भृगूणांपतिः । पुं० परशुरामे ॥
भृङ्गः । पुं० भ्रमरे । मधुव्रते । भृङ्गराजे ॥ धूम्याटे । कलिङ्गपक्षिणि । फिङ्गा० इ० गौ० दे० भा० भृङ्गइवकृष्णत्वात्० भृङ्गः ॥ पिङ्गे ॥ न० गुडत्वचि । त्वक्पत्रे ॥ अभ्रके ॥ विभक्तिः । डुभृञ्० । भृञः किन्नुट्चेति०गन् ॥
भृङ्गकः । पुं० राजवासनपक्षिणि ॥
भृङ्गजम् । न० अगुरुणि ॥
भृङ्गजा । स्त्री० भार्ग्याम् ॥
भृङ्गपर्णिका । स्त्री० सूक्ष्मैलायाम् ॥
भृङ्गप्रिया । स्त्री० वासन्त्याम् । माधवीलतायाम् ॥ भृङ्गाणांप्रियेव ॥
भृङ्गमूलिका । स्त्री० भ्रमरच्छल्याम् लतायाम् ॥
भृङ्गरजः । पुं० भृङ्गराजे ॥ भृङ्गइव

रजोऽस्य ॥

भृङ्गरजाः । पुं० भृङ्गराजे ॥ भृङ्ग इवरजोस्य ॥

भृङ्गराजः । पुं० मार्कवे । कुन्तल वर्द्धने । केशरञ्जने । भंगरा०इ० भा० ॥ भृङ्गराजः कटुस्तिक्तो रूक्षोष्णः कफवातनुत् । केश्यस्त्वच्यः कृमिश्वासकासशोथामपाण्डुनुत् ॥ दन्त्योरसायनोबल्यः कुष्ठनेत्रशिरोर्त्तिजित् ॥ अस्थपक्षिविशेषे ॥ भ्रमरे ॥ यन्त्रविशेषे ॥ भृङ्गइवराजते । राजृदीप्तौ । अच् ॥

भृङ्गराजादिचूर्णम् । न० भैषज्यरत्नावल्युक्ते चूर्णविशेषे॥ यथा । शुक्लोक्तं भृङ्गराजस्यचूर्णंतिलार्द्धकंचामलकार्द्धकंच । सशर्करंभक्षयतेगुडैर्वानतस्यरोगोनजरानमृत्युः ॥ अस्य : पश्येद्गमनरक्षितामत्तमातङ्गगामीमूकोवाग्मीश्रवणरहितोदूरशब्दानुसारी । नीरुगमर्त्त्योभवतिपलितीनीलजीमूतकेशोजीर्णादन्ताः पुनरपिनवाः चौरगौराभवन्तीति ॥

भृङ्गरिटः । पुं०
भृङ्गरिटिः । पुं० } शिवद्वारपाले ॥
भृङ्गरीटः पुं०

भृङ्गरोलः । पुं० कीटान्तरे । विषस्कायाम् । वरीले । दृणपटपदे । भीमरुलइ०गौ०भा० ॥

भृङ्गवल्लभः । पुं० भूमिकदम्बे ॥ धाराकदम्बे ॥

भृङ्गवल्लभा । स्त्री० भूमिजम्ब्वाम् ॥

भृङ्गसोदरः । पुं० केशराजे । नागमारे ॥

भृङ्गानन्दा । स्त्री० यूथिकायाम् ॥

भृङ्गाभीष्टः । पुं० आम्रवृक्षे । रसाले ॥ न०आम्रमुकुलफलयोः ॥

भृङ्गारः । पुं० कनकालुकायाम् । स्वर्णघटितजलपात्रे । भृङ्गराजे । मार्कवे॥ विभर्त्तिजलम् । डुभृञ्० । शृङ्गारभृङ्गारावितिसाधुः ॥ न०लवङ्गे ॥ काञ्चने ॥

भृङ्गारिः । स्त्री० केविकापुष्पे ॥

भृङ्गारिका । स्त्री० झिल्लिकायाम् ॥

भृङ्गारी । स्त्री० झिल्लिकायाम् । झीँगुरइतिख्याते कीटे । भृङ्गभृङ्गरूपमारारति । राढाने । मूलविभुजादित्वात्कः । गौरादिः । यद्वा । विभर्त्ति । डुभृञ्० । शृङ्गारभृङ्गारावितिं०भृञ्आरन्०नुम्०गुक्०-त्त्वस्य ॥ यद्वा । रूपेणभृङ्गमृच्छति । ऋगतौ । कर्मण्यण् ॥

भृङ्गाह्वः । पुं० जीवके ॥ भृङ्गराजे ॥

भृङ्गाह्वा । स्त्री० भ्रमरच्छल्याम् ॥

भृङ्गिः । पुं० भृङ्गिणि । शिवद्वाः स्थे॥

भृङ्गिणी । स्त्री० वटीवृक्षे ॥

भृङ्गी । पुं० शिवद्वारपालविशेषे । अस्थिविग्रहे । नाडीदेहे ॥ वटद्रौ ॥

भृङ्गी । स्त्री० अतिविषायाम् ॥ गौरादित्त्वान् ङीष् ॥

भृङ्गीफल : । पुं० आम्रातकवृक्षे ॥

भृङ्गीश : । पुं० महादेवे । शिवे ॥

भृङ्गिरिटि : । पुं० भृङ्गरीटे । भृङ्गिणि ॥

भृङ्गेष्टा । स्त्री० काकजम्ब्वाम् ॥ घृतकुमार्याम् ॥ तरुण्याम् ॥ भार्ग्याम् ॥

भृज्जन : । पुं० न० अम्बरीषे । भर्जनपात्रे ॥ भृज्जन्त्यत्र । भृस्जपाके । भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन् ॥

भृत : । त्रि० भरिते । धारिते ॥ वेतनेनक्रीते ॥ भृञ् ० । क्त : ॥ भरणीये ॥ पुष्टे ॥

भृतक : । पुं० वेतनग्राहिकर्मकर्त्तरि । भृतिभुजि । कर्मकरे । वैतनिके ॥ सचत्रिविध : । यथा । उत्तमस्त्वायुधीयोऽत्रमध्यमस्तुकृषीवल : । अधमोभारवाहीस्यादित्येवंत्रिविधोभृत : ॥ इति ॥ भ्रियतेस्म । भृञ् भरणे । क्त : । स्वार्थेक : ॥ यद्वा । भृतिंकरोति । तत्करोतीतिणिजन्तात्क्वुन् ॥

भृतकाध्यापक : । पुं० अपाङ्क्तेये० द्विजाधमे ॥ भृतक : सन्योऽध्यापक : ॥ अयम्त्वसर्वानर्थक्लृप्त्वात् ॥

भृतकाध्यापित : । पुं० वेतनं दत्त्वापाठिते । अपाङ्क्तेयेद्विजाधमे ॥ भृतिवेतनम् । तद्ग्राहीभृतक : । भृतक : सन्योध्यापित : सतथा ॥

भृति : । स्त्री० भरणे । वेतने ॥ मूल्ये ॥ भ्रियन्तेकर्मकराअनया । भृञ् भरणे । कर्मणिक्तिनाबितिनिर्देशात्क्तिन् ॥

भृतिभुक् । त्रि० भृतके । वैतनिके ॥ भृतिंवेतनंभुङ्क्ते । भुज० । क्विप् ॥

भृत्य : । पुं० किङ्करे । दासे ॥ भृत्यावहुविधाज्ञेयाउत्तमाधममध्यमा: । नियोक्तव्यायथार्हेषु त्रिविधेष्वेवकर्मसु । भ्रियते । भृञ् ० । भृञोऽसञ्ज्ञायामितिक्यप् ॥ त्रि० पोष्ये । अवश्यभरणीयेवृद्धमातापित्रादौ ॥

भृत्या । स्त्री० भृतौ । वेतने ॥ भ्रियन्तेकर्मकराअनया० भरणंवा । भृञ् ० । संज्ञायांसमजनिषदनिपतमनविदषुञ्शीङ्भृञिणइतिक्यप् ॥ चिकित्सायां ॥ यथा । कुमारभृत्याकुशलैरितिरघु : ॥

भृमि : । पुं० वायुविशेषे । घूर्णवायु० इ० भाषा ॥ जलादिभ्रमणे ॥ भ्रमति० भ्राम्यतिवा । भ्रमुअनवस्थाने० भ्रमुचलनेवा । भ्रमे : सम्प्रसारणञ्चेति० इन्० कित् ॥ भृमिंभ्रमणशीलंदरिद्रंजनमितिवेदभाष्यम् ॥

भृशम्। न० अतिशये॥ त्रि० अतिशयान्विते॥ भृशति। भृशुभ्रंशुअध: पतने। भ्रमर्भावितरण्यर्थादिगुपधेतिक:॥

भृशम्। अ० प्रकर्षार्थे॥ शोभने॥

भृषत्-द्। पुं० पाषाणे॥

भृष्ट:। त्रि० जलोपसेकेनविनापक्वे॥ भूना० भुजेना० इ० भा०॥

भृष्टतण्डुल:। पुं० भर्जनविशिष्टधान्यनिकरे। भूनाचावल० इ० भा० सुगन्धि: कफहारूच: पित्तलोभृष्टतण्डुल:॥

भृष्टमांसम्। न० शूल्ये॥ भृष्टंचतन्मांसंच॥

भृष्टयव:। पुं० धानासु। बहुरी०इ० भा०॥ भृष्टश्चासौयवश्च॥

भृष्टान्नम्। न० भृष्टतण्डुले॥

भृष्टि:। स्त्री० भर्जने॥ शून्यवाटिकायाम्॥

भेक:। पुं० मण्डूके। वर्षाभ्वि। मेघे॥ त्रि० भीरौ॥ बिभेति। ञिभीभये। इण्भीकेतिकन्॥

भेकट:। पुं० मत्स्यवि०॥

भेकभुक्। पुं० कुम्भीनसे। सर्पे॥ भेकान्भुङ्क्ते। भुज०। क्विप्॥

भेकरावण:। पुं० मेघे॥ भेकान्रावयति। रुशब्दे। नन्द्यादित्वाल्ल्यु:॥

भेकल:। पुं० वनस्पतिविशेषे॥

भेकलि:। पुं० मत्स्यविशेषे। भाङ्गन इ० गौ० दे० भा० प्रसिद्धे॥ भेकलिर्मधुर: शीतोष्ण: श्लेष्मकारोगुरु:॥

भेकी। स्त्री० भेकस्त्रियाम्। शिल्याम्। गण्डूपद्याम्। वर्षाभ्व्याम्॥ क्षुद्रमण्डूके॥ जातेरस्त्रीतिङीष्॥ मण्डूकपर्ण्याम्॥

भेड:। पुं० मेषे। मेढा० इ० भा०॥ इतिहै०॥

भेडी। स्त्री० भेडस्त्रियाम्॥

भेडीदुग्धम्। न० आविके॥

भेत्ता। त्रि० भेदकर्त्तरि॥ भिनत्ति। भिदिर्०। तृच्॥

भेद:। पुं० उपजापे। शत्रोरमात्यादीनामुपायेन० परतोविश्लिष्यात्मसात्करणे। एकमत्येनस्थितानांराजामात्यादीनांभयजननादिनापृथक्करणे॥ तद्विशेषोयथा। मत्स्यउवाच। परस्परन्तुयेदुष्टा:क्रुद्धाभीतावमानिता:। तेषांभेदंप्रयुञ्जीतभेदसाध्याहितेमता:॥ येतुयेनैवदोषेणपरस्माद्धापराध्यति। तेतुतद्दोषपातेनभेदनीयाभृशंतत:॥ आत्मीयंदर्शयेद्दोषंपरस्माद्दर्शयेद्भयम्। एवंहिदर्शयेद्भिन्नंयथावद्वशमानयेत्॥ संहताहिविनाभेदंशक्रेणापिसुदु:सहा:। भेदमेवप्रशंसन्तितस्मान्नयविशारदा:॥ स्वमुखेनाशयेद्भेदंभेदंपर

सुखेनच । परीच्यसाधुमन्यन्त भेदं परसुखाक्कृतम् ॥ भेद्या : स्वकार्य सुहृदिश्यकुशलैर्येहिभेदिता : ।भेदिता स्ते विनिर्दिष्टानैवराज ःवादिभि: ।। अन्त: कोपोवहि : कोपोयचस्था तांमहीचिताम् । अन्त : कोपोम हाँस्तत्रनाशक : पृथिवीचिताम् ।। सामन्तकोपोवाह्यस्तुकोप: प्रोक्तो मनीषिभि : । महिषीयुवराजाभ्यां तथासेनापतिर्द्विज : । अमात्याम न्त्रिणश्चैवराजपुत्रास्तथैवच । अन्त: कोपोविनिर्द्दिष्टोदारुण : पृथिवी चिताम् ॥ वाह्यकोपे समुत्पन्ने सुम हत्यपिपार्थिव : । शुद्धान्तस्तुमहा भागशीघ्रमेवजयीभवेत् ।। अपिश क्रसमोराजाअन्त : कोपे ननश्यति । अन्त : कोपे समुत्पन्ने तस्माद्रचे न्महीचिताम् ॥ परत : कोपमुत्पा द्यभेदेनविजिगीषुणा । ज्ञातीनां भेदनंकार्यंपरेषांविजिगीषुणा ।। रक्ष्यश्चैवप्रयत्नेनज्ञातिभेदस्तथा त्मन : । ज्ञातय : परितप्यन्ते सत तंपरितप्ययम् ॥ तथापितेषांकर्त्त व्यं सुगंभीरेणचेतसा । ग्रहणंदान मानाभ्यांभेदस्तेभ्योभयंकर : ॥ नज्ञातिरनुगृह्णातिनज्ञातिर्दंग्धु मिच्छति । ज्ञातिभिर्भेदनीयास्तु रिपवस्तेनपार्थिवै : ॥ भिन्नाहि शक्यारिपव : प्रभूता : स्वल्पेन सैन्येननिहन्तुमाजौ । सुसंहता नांहिततस्तुभेदंकार्यंरिपूणांनय शास्त्रविज्ञै : ॥ इतिमात्स्ये राज धर्मे १८७ अध्याय : ॥ द्वैधे ॥ आपद्यात्मीयानात्मीययोर्भेद : ।। विशेषे ॥ विदारणे ॥ मन्त्रभेदे कार्यहानिरितिविदांमतम् ॥ षं धे ॥ भिद्यमानभावे॥ भेदनम् । भिदिर्० घञ् ॥ विरंकें ॥

भेदकम् । न० व्यावर्त्तके । विशेष णे ॥ त्रि० नाशके ॥ विदारणे ॥ विरेचकौषधादौ ॥ पृथक्कारके । यथा । भेदयति० अन्यपदार्थे पृथक्करोतीतिभेदकम् । नाम्ना। शिव : गौर्वा गार्ग्य : । अपिच। भेद्यभेदकयो : श्लिष्टसंबन्धोन्यो न्यमिष्यते । द्विष्ठायद्यपिसम्बन्ध : षष्ठ्युत्पत्तिस्तुभेदकादितिभर्तृह- रि: ॥

भेददर्शी । त्रि० अपराधिनि ॥ यथा । यदस्तितन्नजानातियन्नेहा स्तितदीक्षते । इत्येवमपराधोस्य विद्यतेभेददर्शिन : ।। किञ्चजाग त्स्वप्नयोरविद्यावत्त्विभ्रान्तिरुपलम्भा त्० सुषुप्तिसमाध्योर्भ्रान्त्यभावेऽ नुपलम्भान्मिथ्यात्वंभेदस्यसिद्धमि त्यनुभवाच्चभेददर्शिनोमिथ्यावादि त्वात्तस्यापराधत्वमितिनिश्चय : ॥

भेदनम् । न० विदारणे ॥ भिदेल्युं

ट् ॥ हिङ्गुनि ॥ पुं० अश्वभेदे त से ॥ सूकरे ।

भेदनिम्न: । त्रि० संसारानुगे ॥

भेदित: । त्रि० दारिते । भिन्ने ॥ भेद्यते स्म । भिदिर् । चुरादि ण्यन्त: । क्त: ॥

भेदी । पुं० अश्वभेदे ॥ त्रि० भेदकर्त्तरि । तद्विशिष्टे च ॥

भेदुरम् । न० भिदुरे । कुलिशे ॥

भेद्य: । त्रि० व्यावर्त्ये । विशेष्ये ॥ अमानितजने ॥ भेत्तुं शक्ये । विघट्टनीये । वाच्ये ॥

भेर: । पुं० पटहे ॥ विभेत्यस्मात् । ञिभीभये । स्फायितञ्चीत्यादिनारन् ॥ भेर्याम् ॥ दुन्दुभौ

भेरि: । पुं० वाद्यप्रभेदे । करणाल० इ० भा० ॥ विभेत्यस्मात् । ञिभी० । वङ्क्र्यादयश्चेति० क्रिन् । बाहुलकाद्गुण: ॥

भेरी । स्त्री० बृहड्ढक्कायाम् । आनके ॥ वाद्यविशेषे । करणालइति ख्याते ॥ कृदिकारादक्तिनइति ङीष् ॥ बिभेतेः स्फायितञ्चीत्यादिना रन् ॥ गौरादित्वान्ङीष्० इतितुरामाश्रम: ॥ वितस्तित्रयदीर्घाताम्रनिर्मिताथर्म च्छन्नाचतुर्विंशत्यङ्गुलवदनद्वयाभेरीतिकश्चित् ॥ अस्तस्त्रीकाढक्का भेरीतिस्वामी ॥

भेरुण्ड: । पुं खगे ॥ त्रि० भयानके

भेरुण्डा । स्त्री० देवतान्तरे ॥ यक्षिणी विशेषे ॥

भेल: । पुं० प्लवे । डोंगा० इ० भा० ॥ जलतरणसाधने । मुनिविशेषे ॥ त्रि० भीरौ । अज्ञे । बुद्धिविवर्ज्जिते । मूर्खे ॥ बिभेत्यस्मात् । ञिभी । स्फायितञ्चीत्यादिनारन् । निपातनाल्लत्वम् । चंचले ॥

भेलक: । पुं० न० उडुपे । प्लवे । स्वल्पे जलतरणसाधने ॥ स्वार्थिक: ॥

भेषजम् । न० औषधे । जायौ ॥ भेषयति । भेषृभये । ण्यन्त: । अच् भेषं रोगं जयति । जि० । अन्येभ्यो पीतिड: ॥ भेषं जायतिवा । जैक्षये । आतोनुपेतिक: ॥ भिषजइदम् । तस्येदमित्यण् । अनन्तावस थेतिहभेषजादिति निर्देशादेत्वमित्यन्ये ॥ संसाररोगस्य स्वसाक्षात्कारेण भेषजवत् भेषजं निवर्तकं ब्रह्माभिन्नात्मज्ञानम् ॥

भेषजाङ्गम् । न० अनुपाने ॥

भैक्षम् । न० भिक्षानिकुरम्बे ॥ भिक्षाणांसमूह: । भिक्षादिभ्योण् ॥ ब्राह्मणचर्यविशयुक्तैर्भैक्षमन्वहम् । सजातीयगृहेष्वेवं सार्ववर्णिकमेववा ॥ सर्वं वापिचरेद्ग्रामंपूर्वोक्तानामसम्भवे । अनन्यवर्जं महाभागशास्त्रे स्थितो निश्चय: ॥ भैक्षेण वर्त्तिनो वृत्तिरुपवाससमा स्मृता ।

भैक्षचर्य्या । स्त्री० भिक्षासमूहाहरणे ॥

भैक्षजीविका । स्त्री० भिक्षयाजीवनो पाये पैण्डिन्ये ॥ इतित्रिकाण्डशेषः ॥

भैक्षभुक् । त्रि० भैक्षाशिनि ॥ भैक्षंभुनक्ति । भुज० । कर्त्तरिक्विप् ॥

भैक्षाण: । पुं० परिव्राजि । प्राणसन्धारणार्थंयथाशास्त्रंमाधूकरादि भिक्षांकुर्वाणे ॥

भैक्षुकम् । न० भिक्षुकवृन्दे ॥ भिक्षूणांसमूह: । खण्डिकादित्वादञ् ॥

भैमी । स्त्री० दमयन्त्याम् । भीमतिथौ । माघशुक्लैकादश्याम् ॥ भीमो क्तलप्सिकाप्रभेदे ॥ यथा । श्रेष्ठंगोधूमचूर्णंप्रचुरघृतयुतंनालिकेरेणसार्द्धंद्राक्षाखर्जूरशुण्ठीत्वचमरिचयुतंशर्करापूर्णगर्भम् । पक्वंतास्मै कटाहेटलविटलटलेपावकेमंददीप्तौ धन्यैर्हेमन्तकालेमुजनपरिवृतैर्भुज्यतेलापनश्री: । भीमस्येयम् । अण् । ङीप् ॥

भैरव: । पुं० शङ्करे । रुद्रे ॥ रागविशेषे ॥ नदविशेषे ॥ भयानकरसे ॥ भैरवपर्वतइतिप्रसिद्धे ॥ भैरवा र्च भैरवीदेवी ॥ सिद्धान्तविशेषे ॥ त्रि० भयानके । भीषणे । भीरोरिदम् । तस्येदमित्यण् ॥

भैरवी । स्त्री० देवताभेदे । चामुण्डायाम् ॥ रागिणीविशेषे । भैरवरागपत्न्याम् ॥

भैषजम् । न० भेषजे ॥ लावकपक्षिणि ॥

भैषज्यम् । न० औषधे ॥ भैषजमेव । अनन्तावसथेतिष्वभैषजाज्ञ्य:

भो । अ० सम्बोधने ।

भोक्तव्य: । त्रि० भोजनीये ॥ भोज्ये । यथा० । यत्नेनभगिनीतस्माद्भोक्तव्यंपुष्टिवर्द्धनम् ॥

भोक्ता । पुं० पत्यौ ॥ शरीरेन्द्रियमनोभि: संयुक्तआत्मनि०संसारिणि । अवस्थात्रयविशिष्टे जीवे ॥ भोक्तावात्मानकर्त्तेतिसाङ्ख्या: ॥ सुखादिभोगकर्त्ता० यथा कर्त्ताच देहीभोक्ताचआत्माभोजयितासदा । भोगोविभवर्भेदश्चनिष्कृतिर्मुक्तिरेवचेति ब्र० वै० पु० वैश्वानरेग्नौ ॥ सर्व्वेषांयज्ञानांतपसाञ्चकर्त्तृरूपेणदेवतारूपेणचभोगकर्त्तरि ॥ आनन्दमये ॥ बुद्धे: सुखदु: खमोहात्मकान्प्रत्ययान्स्वरूपचैतन्येनप्रकाशयतीतिनिर्विकारएवोपलब्धरि ॥ त्रि० पालके ॥ भोगकर्त्तरि । भोजनकर्त्तरिचेतनेदेवदत्तादौ ॥ तस्य प्रकारोयथा । स्नात: सुधौतमृदुसुन्दरशुक्लवासास्तत्कालधौतचरण: सहपुत्र मित्रै: । स्रग्वीप्रसन्नहृदयोरसपाकवेत्त्याभोक्ताविशेच्चसततंहिसहाप्तवैद्यै: ॥ मृदुतूलमयेसुखसिचाक्त

स्वावगुण्ठिते । आसनेप्राङ्मुखो-
भोक्तोपविशेद्वाप्युदङ्मुख: ॥ भुङ्
क्ते । भुज० । टच् ।

भोग: । पुं० सुखे ॥ चुद्रसुखलवानु-
भवे ॥ सुखसाधनविषये० पञ्चनन्दि
रण्यादौ ॥ नत्वननुत्साहवतामननु-
तिष्ठतामलसानांभोगप्राप्तिर्लोकेद्द-
ष्टेतिपूज्यपादा: ॥ सुखादिग्रहणे ।
सुखदु:खानुभवे ॥ धने ॥ अहे:
शरीरे ॥ अहेरितिप्रयोगवाहुल्याभि
प्रायम्० भोगशब्दस्यशक्तिस्तुशरीरमा
त्रे० इत्याकर: ॥ अहे: फणायाम्
॥ पालने । अभ्यवहारे । योषिदा-
दिभृतौ । वेश्यादिवेतने ॥ आदिना
हस्त्यश्वादिकर्मकराणांभृतौभाडा०-
इ०भा० ॥ विषये । राज्ये ॥ भोज
नम०भुज्यतेवा। भुजपालनाभ्यवहा
रयो: । भुजोकौटिल्येवा । भावे
कर्म्मणिवाघञ् ॥ योगिनोजीवन-
हेतौभिक्षाव्यापारे० वर्णाश्रमोचि-
तव्यापारेच ॥ यथा । चित्तस्यभो-
गैर्द्वौभागौशास्त्रैरेकंप्रपूरयेत् । गु
रुशुश्रूषयाभागमव्युत्पन्नस्यसक्रम: ॥
किञ्चिद्व्युत्पत्तियुक्तस्यभागंभोगेन
पूरयेत् । गुरुशुश्रूषयाभागौभागंशा
स्त्रार्थचिन्तया ॥ व्युत्पत्तिमनुयात
तस्यपूरयेच्चेतसोन्वहम् । द्वौभागौ
शास्त्रवैराग्यैर्द्वौध्यानगुरुपूजयेतिव
शिष्ठ: ॥ भूम्यादीनांभोगो यथा ।
त्रिपुरुषभोगमाहव्यास: । प्रपिता
महेनयद्भुक्तं तत्पुत्रेणविनाचतम् ।
तौविनायस्यपित्राचतस्यभोगस्त्रि-
पौरुष: ॥ पितापितामहोयस्यजी
वेच्चप्रपितामह: । त्रयाणांजीवतां
भोगोविज्ञेयस्त्वेकपूरुष: ॥ नार
द: । तथारूढविवादस्यप्रेतस्यव्यव
हारिण: । पुत्रेणसोऽर्थ: संशोध्यो
नतंभोगोनिवर्त्तयेत् ॥ विभवभे-
दे ॥ य० । कर्त्ताचदेहीभोक्ताचआ
त्माभोजयितासदा । भोगोविभव
भेदश्चनिष्कृतिर्मुक्तिरेवच ॥

भोगगृहम् । न० वासगृहे ॥

भोगदेह । पुं० स्वर्गनरकादिभोगार्थं
सूक्ष्मशरीरे ॥ यथा । कृतेसपिण्डी
करणेनर: संवत्सरात्परम् । प्रेतदे
हंपरित्यज्यभोगदेहंप्रपद्यते० इति ॥

भोगपाल: । पुं० अश्वरक्षके ॥ त्रि०
भोगरक्षके ।

भोगपिशाचिका । स्त्री० क्षुधायाम् ॥

भोगभूमि: । स्त्री० सुखस्थाने ॥ भा
रतवर्षातिरिक्तवर्षे ॥ यथा । तत्रापि
भारतंश्रेष्ठंजम्बुद्वीपेमहामुने । य-
तोहिकर्मभूरेषाततोन्याभोगभूम-
य: ॥

भोगवान् । पुं० अहौ । सर्पे ॥ भोगो
स्यस्य । मतुप् । नाम्न । त्रि०
भोगविशिष्टे ॥

भोगवती । स्त्री० नागपुर्याम् ॥ पा-

तालगंगायाम् ॥ ङीप् ॥ वासुकि तीर्थे ॥
भोगसद्म । न० वासगृहे । भोगायसद्म ॥
भोगार्हम् । न० धने ॥ भोगायअर्हम् ।
भोगार्घ्यम् । न० धान्ये ॥
भोगावली । स्त्री० नागपुर्याम् । वन्दिनांसंस्तुतौ । बन्दिपाठे ॥
भोगावासः । पुं० वासगृहे ॥ भोगस्यवासः ॥
भोगिकः । पुं० भोगपाले । अश्वरचके ॥
भोगिकान्तः । पुं० कम्पलत्त्मणि । वायौ ॥
भोगी । पुं० जिह्मगे । भुजङ्गे । सर्पे ॥ भोगः फणोवक्रगतिर्वाऽस्यास्ति । अतइनिठनावितीनिः ॥ ग्रामपाले । ग्रामण्याम् । ग्रामाधिपतौ ॥ नृपे । राज्ञि ॥ नापिते ॥ वैयावृत्तिकरे ॥ त्रि० सर्वैर्भोगोपकरणैरुपेते ।
भोगिनी । स्त्री० महिषींविहायान्यराजयोषिति ॥ अतिशयितोभोगोस्त्यस्याः । इन्नन्तान्नान्तलक्षणोङीप् ॥
भोगिवल्लभम् । न० चन्दने ॥
भोगीन्द्रः । पुं० )
भोगीशः । पुं० ) अनन्ते । नागराजे । शेषे ॥ वासुकौ ॥ भोगिनाम् इन्द्रः ईशोवा ।
भोग्यम् । न० धने ॥ धान्ये ॥ फले ॥ आधिविशेषे । फलभोग्ये ॥ त्रि० भोगार्हे । शब्दादिविषयेषु ॥ भोक्तुमर्हः । भुजेर्ण्यत् ॥
भोग्या । स्त्री० वेश्यायाम् ॥ भोक्तुमर्हायाम् ॥ टाप् ॥
भोजः । पुं० यादवे ॥ दूरेऽभवन्भोजबलक्षगच्छतइतिमाघः ॥ देशविशेषे ॥ धारानगरीपतौ० कलिप्रसिद्धे नृपविशेषे ॥ देशविशेषे । भोजकटे ॥
भोजकटः । पुं० रुक्मिनिर्मितपुरे रुक्मिभोजकटंनामपुरंकृत्वाऽवसत्तदेतिवि० पु० ॥ देशविशेषे ॥
भोजकटीयः । त्रि० भोजकटदेशोद्भवे ॥ वृद्धाच्छः ॥
भोजनम् । न० आहारे । निघसे । जेमने । जीवन० इ० भा० ॥ बहूनां पङ्क्त्याऽशने ॥ भुज्यते । भुज० । ल्युट् ॥ भोज्यरूपतयाप्रकृतौ ॥ अथभोजनगुणविधानादियथा । भोजनाग्रे सदापथ्यं जिह्वाकण्ठविशोधनम् । अग्निसन्दीपनंहृद्यंलवणार्द्रकभक्षणम् ॥ आयुर्घृतेगुडेरोगोमृत्युर्लौनोविदाहिषु । आरोग्यंकटुतिक्तेषु बलंमांसेपयस्सु च ॥ अन्नादष्टगुणंपिष्टंपिष्टादष्टगु

णं पय : । पयसोष्टगुणं मांसं मांसा
दष्टगुणं घृतम् ॥ घृतादष्टगुणं तै-
लं मर्द्दनान्नचभक्षणात् । आहार :
प्रीणन : सद्योबलकृद्देहधारण : ।
फलमादौहिचाश्नीयाद्भोजनस्यनरो
त्तम : । विनामोचाफलं तद्वद्वर्ज-
नीयाचकर्कटी ॥ मृणालबिसशा-
लूककन्देक्षुप्रभृतीन्यपि । पूर्वमे
वहिभोज्यानिनतुभुक्त्वाकदाचन ॥
याममध्ये नभोक्तव्यं यामयुग्मं नलं
ङ्घयेत् । याममध्ये रसोत्पत्तिर्यु-
ग्मेऽतीतेबलक्षय : ॥ आयुष्यं प्रा-
ङ्मुखोभुङ्क्ते यशस्यं दक्षिणामु-
ख: । श्रियं प्रत्यङ्मुखोभुङ्क्ते ऋ
तं भुङ्क्ते ह्युदङ्मुख : ॥ कुक्षे र-
न्नेनभागौद्वावेकं पानेनपूरयेत् ।
वायो : सञ्चारणार्थञ्चचतुर्थमवशे
षयेत् ॥ दन्तैश्चावगतं चान्नं शोचे
नावहरेज्जलै : । कुर्याद्दनिर्गतं त
द्धिमुखस्यानिष्टगन्धताम् ॥भुक्त्वापा
णितलंघृष्ट्वाचक्षुषोर्यदिदीयते । अ
चिरेणैवतद्वारितिमिराणिव्यपोह-
ति ॥ भुक्त्वाचम्यकरंवामंदत्त्वाकु-
क्षौतत: पठेत् । भुक्तं मयेन्द्रहस्ते
नवैश्वानरमुखेनच ॥गरुडस्यचक-
ण्ठेनसमुद्रस्यचवह्निना । वाता-
पिर्भक्षितोयेनपीतोयेनमहोदधि :
॥ यन्मयाखादितंपीतंतदगस्त्यो-
जरिष्यति । पठित्वैतत्सुखासीन:



क्षणंतिष्ठेदनाकुल : ॥ भुक्-
त्वापादशतंगत्वावाम पार्श्वेनसं
विशेत् । एवंह्यधोगतंचान्नं सुखं-
तिष्ठतिजीर्यते ॥ भुक्त्वासंविश-
तस्तुन्दं बलमुत्तानशायिन : । आ
युर्वामकसुप्तस्यमृत्युर्धावतिधावत :
॥ अपिच । ततोभोजनवेलायां
कुर्यान्मङ्गलदर्शनम् । तस्यप्रदक्षि
णंनित्यमायुर्धर्मविवर्द्धनम् । लोके
ऽस्मिन्मङ्गलान्यष्टौब्राह्मणोगौर्हुता-
शन : । हिरण्यं सर्पिरादित्यआपो
राजातथाष्टम : ॥ पादुकारोहणंकु
र्यात्पूर्वंभोजनत : परम् । पादरोग
हरंवृष्यं चक्षुष्यं चायुषेहितम् ॥ अ
श्नीयात्तन्मनाभूत्वापूर्वन्तुमधुरंरस
म् । मध्ये स्लवणौपश्चात्कटुतिक्तक
षायकान् ॥ विदाहीन्यन्नपानानि
यानिभुङ्क्ते हिमानव: । तद्विदाह
प्रशान्त्यर्थंभोजनान्ते पय : पिबेत्
॥ एवंभुक्त्वासमाचामेत्कृत्वग्रहण
पूर्वकम् । भोजनेदन्तलग्नानिनि
र्हृत्याचमनंचरेत् ॥ दन्तलग्नमनि
र्हार्यंलेपमन्यं तदन्तवत् । नतत्रबहु
श : कुर्यात्यत्नं निर्हरणं प्रति वि
स्तरस्त्वनरात्र ॥ अस्नाताशीमलंभुङ्
क्ते अजपीपूयशोणितम् । अहुत्वातु
कृमिंभुङ्क्ते अदत्त्वा विड्विभोजन
म् ॥ अघंसकेवलंभुङ्क्तेय : पचत्या
त्मकारणात् । इन्द्रियप्रीतिजनकं

ह्यथापाकं विवर्जयेदितिजाबालिः ॥ बालंसुवासिनीवृद्धगर्भिण्यातुरकन्यकाः । सम्भोज्यातिथिभृत्यांश्चदम्पत्योः शेषभोजनम् इतियाज्ञवल्क्यः । नभोजनार्थंस्वेविप्रः कुलगोत्रे निवेदयेत् भोजनार्थंहितेशंसन्‌वान्ताशीत्युच्यतेबुधैरितिमनुः॥

भोजनपात्रम् । पुं॰ आहारभाजने ॥ हैमंदोषहरंप्रात्रं चक्षुष्यं राजतंशुचि । कांस्यं बुद्धिप्रदंरम्यं पालाशंरुचिकारकम् ॥

भोजपतिः । पुं॰ कंसासुरे ॥ भोजानांक्षत्रियविशेषाणांपतिः ॥

भोजपुरम् । न॰ स्वनामाप्रसिद्धे देशवि॰ ॥

भोजयिता । त्रि॰भोजनकारयितरि ॥ भोगप्रयोजके । पुं॰ ईश्वरे ॥

भोजविद्या । स्त्री॰ ऐन्द्रजालिकविद्यायाम् ॥

भोजाधिपः । पुं॰ कंसासुरे ॥ भोजानामधिपः ॥

भोज्यम् । न॰ भोजनीयद्रव्ये । यत्केवलंजिह्वयाविलोड्यनिगीर्यतेसूपौदनादितस्मिन् । पायसादौ ॥ विषयमात्रे ॥ भुज्यते । भुज॰ । ऋहलोर्ण्यत् । भोज्यंभक्ष्ये इतिण्यतिकवर्गाभावोनिपातनात् ॥ आहारादधिकंभोज्यंब्रह्माण्डविभवेपिन ॥ अभ्युदयार्थब्राह्मणभोजने ॥ स्वाराज्यसाम्राज्ययोर्भोगभाक्त्वे ॥ सोमे ॥

भोज्यवित् । पुं॰ सूपकारे ॥ सूपकारोहिभोज्यंवस्तुत्वेनजानाति ॥

भोज्यसम्भवः । पुं॰ शरीरस्थरसधातौ ॥

भोज्या । स्त्री॰ भोजस्यराज्ञोगोत्रापत्ये स्त्रियि ॥ क्रौड्यादिभ्यश्चेत्यत्रभोजच्चत्रिये॰ इत्युक्तेः ष्यङादेशः । ष्यङ्श्चाप् ॥

भोटः । पुं॰ भोटाङ्गे । भोटान्ते ॥

भोटाङ्गः । पुं॰ स्वनामाप्रसिद्धे देशविशे॰ । भोटान्॰ इ॰ भा॰ प्र॰॥

भोटान्तः । पुं॰ देशविशेषे ॥ यथा । काश्मीरन्तुसमारभ्यकामरूपात्तुपश्चिमे । भोटान्तदेशोदेवेशिमानसेशात्तदक्षिणे ॥

भोभो । अ॰ सम्बोधने ॥

भोलिः । पुं॰ वक्रग्रीवे । उष्ट्रे ॥

भोः । अ॰ सम्बोधने । विषादे ॥ प्रश्ने ॥ भाति । भा॰ । बाहुलकात्॰ डोस् ॥

भौतः । पुं॰ देवले॥ भूतयज्ञे ॥ न॰ भूतसङ्घे ॥ भूतानांसमूहः । भिक्षाद्यण् ॥ त्रि॰ भूतसम्बन्धिनि ॥

भौतिकः । पुं॰ स्थाणौ ॥ शिवे ॥ सर्वविशेषे ॥ यथा । अष्टविकल्पोदैवस्तैर्यग्योनिश्चपञ्चधाभवति । मानुष्यश्चैकविधः समासतोभौतिकः सर्गः ॥ भौतिकाख्याश्चसर्ग

स्यैतन्योत्कर्षनिष्कर्षतारतम्याभ्या मूर्द्धोमध्यभावेनत्रैविध्यम् । यथा । ऊर्ध्वंसत्त्वविशालस्तमोविशालश्चमूलत : सर्गः । मध्येरजो विशालोब्रह्मादिस्तम्बपर्यन्त:॥न० मुक्तायाम् ॥ त्रि० भूतसम्बंधिनि॥ रूपादिषु ॥ चक्षुरादिषु ॥ शरीरादिषु ॥

भौती । स्त्री० तस्याम् । रात्रौ । रजन्याम् ॥

भौत्य : । पुं० भूतिमुने : पुत्रेचतुर्दशेमनौ ॥

भौम : । पुं० कुजग्रहे । मङ्गले ॥ नरकासुरे ॥ अम्बरे ॥ रक्तपुनर्नवायाम् ॥ न० पानीयविशेषे ॥ भौमम्भोनिगदितंप्रथमंत्रिविधंबुधै : । जाङ्गलंपरमानूपंतत : साधारणंक्रमात् ॥ भौमानामम्भसांप्रायेणग्रहणंप्रातरिष्यते । शीतत्वंनिर्मलत्वञ्चयतस्तेषांमहान्गुण: ॥ त्रि० भूमिभवे ॥ तले ॥ अन्नमयभूमिकार्ये॥ भूमेरपत्यम् । शिवादित्वादण् ॥ भूमौभवति शैषिकोण् ॥ भूमेरिदम् । तस्येदमित्यण् ॥

भौमवार : । पुं० पञ्चवाराश्चांशषष्ठाध्यायम् ॥

भौमन : । पुं० विश्वकर्मणि ॥

भौमरत्नम् । न० प्रवाले ।

भौमावास्या । स्त्री० गोसहस्रोतिविख्यातायाममायाम् यथा । अमावास्यांभवेद्वारोयदिभूमिसुतस्यच । गोसहस्रफलंदद्यात्स्नानमात्रेणजाह्नवीतिव्यास : ॥

भौमी । स्त्री० सीतायाम् । जानक्याम् ॥

भौरिक : । पुं० कनकाध्यक्षे ॥ भूरिणि । सुवर्णेनियुक्त : । तत्रनियुक्तइतिठक् ॥

भ्रंश : । पुं० अध : पतने ॥

भ्रंस : । पुं० भ्रंशे ॥

भ्रकुंस : । पुं० स्त्रीवेशधारिणिनर्त्तके । भ्रुकुंसे ॥ पटपुटेतिदण्डकोक्तभाषार्थकुसिधातोरप्रत्ययान्तादेरच् । भ्रुवाकुंसोभाषणमस्य । इकोह्रस्वोऽङ्योगालवस्येतिसूत्रे० अभ्रकुंसादीनामितिवार्त्तिकस्यप्रकारेणविधीयतइतिव्याख्यानान्तराद्० भ्रकुंस : ॥

भ्रुकुटि: । स्त्री० क्रोधादिनाभ्रुव:कौटिल्ये । भ्रुकुट्याम् ॥ कुटकौटिल्ये । इगुपधात्किदिति० इन् । भ्रुवो : कुटि : इकोह्रस्वइत्यत्र० अभ्रकुंसादीनामितिवार्त्तिकेनाकारोविधीयते ॥

भ्रकुटी । स्त्री० भ्रकुटी । कुटेरिन्नन्तात्० कृदिकारादितिङीष् ॥ भ्रुवो: कुटी ॥ इकोह्रस्वइतिसूत्रे० अभ्रकुंसादीनामितिवार्त्तिकस्य०-

चकारोनेनविधीयतइत्यर्थादिकार: ॥

भ्रम : । पुं० अम्बुनिर्गमे । प्राकारगृह भित्तिषुजलनिर्गमनजाले ॥ कुन्दाख्यशिल्पियन्त्रे ॥ चरख० इ० भा० भ्रमणे । भ्रान्तौ । मिथ्याज्ञाने । मिथ्यामतौ । व्यसनइति ॥ मा विनश्यत्वऽयं भोगोवर्द्धतामुत्तरोत्तरम् । माविघ्ना: प्रतिबध्नन्तुधन्योस्म्यऽस्मादितिभ्रमः॥ भ्रमणम् । भ्रमुचनवस्थाने । भावे घञ् ॥ नयादावधस्थलस्योर्द्धनि : सरणे ॥ भ्रमन्तिजलान्यनेन । हल श्चेतिघञ् । नोदात्तोपदेशस्येति वृद्ध्यभाव : ॥ देहेन्द्रियाद्यध्यासे ॥ न्यायमते० भ्रमस्यनामान्तरमप्रमा । भ्रमोद्विविध : । विपर्यास : ० संशयश्च । आद्योयथा । देहेआत्मबुद्धि : ० शङ्खादौपीततामति : । सानिश्चयरूपा ॥ द्वितीयोयथा । किंस्विन्नरोवा० स्थाणुर्वेत्यादिबुद्धि: । तत्रकारणम् । पित्तदूरत्वमोहभयादिनानाविधदोष: । यथा । अप्रमाचप्रमाचेतिज्ञानंद्विविधमुच्यते । तच्छून्ये तन्मतिर्यास्यादप्रमासादिरूपिता ॥ तत्प्रपञ्चोविपर्यास : संशयोपिप्रकीर्त्तित: । आद्योदेहेआत्मबुद्धि : शङ्खादौपीततामति : ॥ भवेन्निश्चयरूपासासंशयोथप्रदर्श्यते । । किंस्विन्नरोवास्थाणुर्वेत्यादिबुद्धिस्तुसंशय : ॥ तदभावाप्रकाराधीस्तत्प्रकारातुनिश्चय: । समंशयोभवेद्याधीरेकत्राभावभावयो : ॥ साधारणादिधर्मस्यज्ञानंसंशयकारणम् । दोषोऽप्रमायाजनक : प्रमायास्तुगुणोभवेत् ॥ पित्तदूरत्वादिरूपोदोषोनानाविध : स्मृत : । इ० भा० प० ॥

भ्रमणम् । न० अनवस्थितौ ॥ गमनविशेषे । पर्यटने ॥

भ्रमणी । स्त्री० कारण्डिकायाम् । जलौकायाम् ॥ अधीशितु: क्रीडायायाम् । अधीशितु : क्रीडादौ॥

भ्रमत्कुटी । स्त्री० तृणादिच्छत्रे ॥ कावार्याम् । जङ्गमकुट्याम् ॥

भ्रमर : । पुं० कीटविशेषे । मधुपे मधुव्रते । द्विरेफे । चञ्चरीके ॥ कामुके ॥ षेधनग्रस्ते । वर्मा० इ० भा०॥ भ्रमति । भ्रमु० । अर्त्तिकमिभ्रमिचमिदेविवासिभ्यश्चिदित्यर: ॥

भ्रमरक : । पुं० भृङ्गे । मधुलिहि ॥ गिरिके । बालमृषिके ॥ चूर्णकेशे । अलके । ललाटलम्बितचूर्णकुन्तले ॥ जलभ्रमे ॥ भ्रमरइव । इवेप्रतिकृताविति कन् ॥ भ्राम्यतिवा । भ्रमु० अर्त्तिकमीत्यर : । स्वार्थेकन् ॥

भ्रमरकीट : पुं० कीटान्तरे । कुम्भारी० इ० भा० ॥

भ्रमरच्छली । स्त्री० लताविशेषे । भृङ्गाह्वायाम् ॥ भृङ्गच्छलीचकटुका

तिक्तादीपनरोचनीति० रा० नि०

भ्रमरप्रियः। पुं० धाराकदम्बे ॥

भ्रमरमारी। स्त्री० मालवदेशप्रसिद्धपुष्पवृक्षविशेषे। मांसपुष्पिकायाम् ॥

भ्रमरविलसितम्। न० भ्रमरविलसितायाम्। म्भौन्लौगःस्याद्भ्रमरविलसितम् ॥

भ्रमरविलसिता। स्त्री० त्रिष्टुप् ११ छन्दःप्रभेदे ॥ यथा। मोगौनौगो भ्रमरविलसिता ॥ य० मुग्धेमानंपरिहरनचिरात्ताकण्यन्ते सफलयतुहरिः। फुल्लावल्लीभ्रमरविलसिताभावेशोभांकलयतिकिमुताम् ॥

भ्रमरा। स्त्री० भ्रमरच्छल्याम् ॥

भ्रमरातिथिः। पुं० चम्पके ॥

भ्रमरानन्दः। पुं० बकुले। अतिमुक्तके ॥ रक्ताम्लाने ॥

भ्रमरालकः। पुं० भ्रमरके। कुन्तले। ललाटस्थितचूर्णकुन्तले ॥

भ्रमरावलिका। स्त्री० भ्रमरावल्याम् ॥

भ्रमरावली। स्त्री० अतिशर्करीप्रभेदे ॥ भुजसङ्गतशङ्खसुवर्णलसद्वलया०कर पुष्पसुगन्धवतीरसनारुचिरा। कनकद्वयनूपुरचारुतराजयतिभ्रमरावलिकाभुजगाधिपदुर्ललिता ॥ यथा। सखिसम्प्रतिकम्प्रतिमौजमिदंविहितम्० मदनेनधनुःसभ्रमुकरे निहितम्। नतिशालिनिकिंवनमालिनिमानकथा० रतिनायकसायक

ट्टः खमुपैतिहृथा ॥

भ्रमरिका। स्त्री० बालानांक्रीडाविशेषे ॥ येनभूरपिभ्रमतीवभाति। भ्रा म्योमाञ्ची० इ० भा० ॥

भ्रमरी। स्त्री० भ्रमरयोषिति। भौरी० इ० भा० ॥ षट्पद्याम् ॥ जतुकायाम् ॥ पुत्रदाल्याम् ॥ भ्रामर्याःस्थाने ॥

भ्रमरेष्टः। पुं० श्योनाकप्रभेदे ॥

भ्रमरेष्टा। स्त्री० भूमिजम्ब्वाम् ॥ भार्ग्याम् ॥

भ्रमरोत्सवा। स्त्री० माधव्यांलतायाम् ॥

भ्रमासक्तः। पुं० शस्त्रमार्जके ॥

भ्रमिः। स्त्री० भ्रमणे ॥ जलनिःसरणमार्गे ॥ यन्त्रविशेषे ॥ भ्रमणम्। भ्रमु०। इकृष्यादिभ्यः ॥ भ्रमेः सम्प्रसारणञ्चेतीन्। बाहुलकात्सम्प्रसारणाभावः ॥

भ्रमितः। त्रि० घूर्णिते। भ्रमणंकारिते ॥

भ्रमी। त्रि० भ्रमविशिष्टे ॥

भ्रष्टः। त्रि० गलिते। च्युते। हस्तादितः पतिते ॥ अर्थाद्भ्रष्टातीर्थयात्रान्तुगच्छेत्सत्याद्भ्रष्टोरौरवंवैव्रजेच्च। योगभ्रष्टः सत्यधृतिश्चगच्छेद्राज्याद्भ्रष्टोमृगयांव्रजेच्च ॥

भ्राजः। पुं० कात्यायनप्रणीतेश्लोके ॥ भ्राजानामश्लोकाइतिमहाभाष्यम् ॥

भ्राजकम्। न० पित्ते ॥

भ्राजमानः। त्रि० दीप्यमाने ॥

भ्राजिष्णुः। त्रि० अलङ्कारादिनादी

मियुक्ते ॥ दीप्तिशालिनि । विभ्रा जि ॥ भ्राजते । तच्छील । भ्राज दीप्तौ । भुवश्चेतिचकारात् भ्राजे रपिष्णुच् ॥ स्वप्रकाशचिद्रूपे ॥

भ्राता । पुं० सहोदरे ॥ भ्राजते० वि भर्ति वा । भ्राज् डुभृञ्० । वा । नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृ पितृदुहितृ । इतिसाधुः ॥

भ्रातरौ । पुं० २०० सहोदराभ्रातृभ गिन्यो :। भ्राताचस्वसाच । । भ्रा तृपुत्रौस्वसृदुहितृभ्यामित्येकशेष : स्वसाचभ्राताचेतिवा ॥

भ्रातृकम् । त्रि० भ्रातुरागतेधनादौ ॥ ऋतठञ् ॥ ङीपि० भ्रातृकी ॥ भ्रातृयोग्ये ॥

भ्रातृज :। पुं० भ्रातृपुत्रे ॥ भ्रातुर्जात: । पञ्चम्यामितिड : ॥

भ्रातृजा । स्त्री० भ्रातुष्पुत्र्याम् । भ्रात्री यायाम् ॥ टाप् ॥

भ्रातृजाया । स्त्री० भ्रातृपत्न्याम् । प्रजावत्याम् ॥ भ्रातु : जाया ॥

भ्रातृपत्नी । स्त्री० प्रजावत्याम् ॥ भ्राता पतिर्यस्याइतिविग्रहे० नित्यंस पत्न्यादिष्विति० भ्रातृपतिशब्दस्य नान्तादेशे० ऋन्नेभ्यइतिङीप् ॥

भ्रातृपुत्र :। पुं० भ्रातृजे ॥

भ्रातृभगिन्यौ । स्त्री० भ्रात्रो : ॥ भ्राताचभगिनीच ॥

भ्रातृबल :। त्रि० भ्रातृमति ॥ भ्रातास्यास्ति । अन्येभ्योपिदृश्यतइ ति० बलच् । संज्ञामित्यनुवृत्तेर्वल इतिनदीर्घ : ॥

भ्रातृव्य :। पुं० भ्रातृपुत्रे ॥ भ्रातु रपत्यम् । भ्रातुर्व्यच्च ॥ शत्रौ ॥ व्यन्सपत्ने ॥

भ्रातृश्वशुर :। पुं० पतिज्येष्ठभ्रात रि । जेठ० भाशुर० इ० भा० ॥

भ्रातृस्थानम् । न० सहोदरगृहे ॥ लग्ना त्तृतीयभवने ॥ भ्रातु. स्थानम् ॥

भ्रात्रीय: । पुं० भ्रातृजे ॥ भ्रातुरपत्य म् । भ्रातुर्व्यच्चेति० चाच्छ : ॥

भ्रान्त :। पुं० मत्तद्विपे ॥ राजधुस्तूरे ॥ न० भ्रमणे ॥ त्रि० भ्रमान्विते ॥ भ्रान्तिमापन्ने ॥ अद्वितीयं- ब्रह्मतत्त्वंनजानन्तियदातदा । भ्रा न्ताएवाखिलास्तेषांक्वमुक्ति : क्वेह वासुखम् ॥ भ्रमे : कर्त्तरिक्त :। अनुनासिकस्यक्विझलो : क्ङिति० इ० दीर्घ : ॥

भ्रान्ति :। स्त्री० भ्रमे । मिथ्यामतौ । अतस्मिंस्तज्ज्ञाने ॥ युक्तिहीनप्र काशत्वाद्भ्रांतिर्नैन्द्रन्तिलक्षणम् । यदिस्याल्लक्षणंकिञ्चिद्भ्रान्तिरेवन- सिध्यति ॥ भ्रान्तिभाजिभवतिक्वविवेक : ॥ भ्रमणे । अनवस्थितौ ॥ भ्रमणम् । भ्रमु० । क्तिन् । अनुना सिकस्येतिदीर्घ :

भ्रान्तिदर्शनम् । न० असाधनेसाधनत्व

द्धौ ॥ साधनेप्यसाधनत्वबुद्धौ ॥ भ्रान्त्यादर्शनम् ॥ शुक्तिकायांरजतवद्विपर्ययज्ञाने ॥

भ्रान्तिमान्। त्रि० भ्रान्तिविशिष्टे ॥ भ्रान्तिरस्यास्ति। मतुप् ॥ ङीपि० भ्रान्तिमती ॥ पुं० अलङ्कारविशेषे ॥ भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने। तदिति० अन्यत्प्राकरणिकंनिर्दिश्यते० तेनसमानमर्थादिष्टप्राकरणिकमाश्रीयते। तस्यतथाविधशब्दष्टौसत्यांयत्प्राकरणिकतयासंवेदनम्०सभ्रान्तिमान्। नचैषरूपकमप्रथमातिशयोक्तिर्वा०तत्रवस्तुतोभ्रमस्याभावात्। इहत्वारोपानुगमेनसंज्ञायाः प्रवृत्तस्तस्यस्पष्टमेवप्रतिपन्नत्वात्। उदाहरणम्। कपालेमार्जारः पयइतिकराल्लेढिशशिनस्तरुच्छिद्रप्रोतान्बिसमितिकरीसङ्कलयति। रतान्तेतल्पस्थान्हरतिवनिताप्यंशुकमितिप्रभामत्तश्चन्द्रोजगदिदमहोविप्लवयति ॥

भ्रान्तिहरः। पुं० मन्त्रिणि ॥ त्रि० भ्रमनाशके ॥

भ्रामकः। पुं० जम्बुके। फेरौ ॥ धूर्त्ते ॥ सूर्यावर्त्ते ॥ अश्मप्रभेदे। चुम्बक० इ० भा० प्र० ॥ त्रि० भ्रमजनके ॥

भ्रामरः। पुं० चुम्बक० इ० प्र० पाषाणे। भ्रामके ॥ न० शुक्रवर्णमधुनि ॥ भ्रमरैः कृतम्। क्षुद्राभ्रमरेत्यादिनाऽञ् ॥ किञ्चित्सूक्ष्मैःप्रसिद्धेभ्यः षट्पदेभ्योलिभिश्चितम्। निर्मलंस्फटिकाभंयत्तन्मधुभ्रामरंस्मृतम् ॥ भ्रामरंरक्तपित्तघ्नं मूत्रजाड्यकरंगुरु। स्वादुपाकमभिष्यन्दिविशेषात्पिच्छिलंहिमम् ॥ रतबन्धान्तरे ॥ यथा। तत्कटिंसमधिरुह्यवल्लभः स्वाङ्घ्रिपादिपशुसंस्थितिस्थितः। चक्रवद्भ्रमतिकुञ्चितत्रिकोभ्रामरंनिगदितंसमुद्रतम् ॥ नृत्यविशेषे। रासे। मण्डलनृत्ये। हल्लीसे ॥ त्रि० भ्रमरसम्बन्धिनि ॥ अण् ॥

भ्रामरी। त्रि० अपस्मारिणि ॥ इतिकुल्लूकभट्टः ॥

भ्रामरी। स्त्री० पार्वत्याम् ॥

भ्रामितः। त्रि० आघूर्णिते ॥

भ्राष्ट्रः। पुं० भर्जनपात्रे। अम्बरीषे। भड्सां० इ० भाड० इ० भा० ॥ भृज्ज्यतेऽत्र। भ्रस्जपाके। भ्रस्जिगमिनमिहनिविश्यशांवृद्धिश्चेति०ष्ट्रन्० हविश्च ॥

भ्रियमाणः। पुं० पोष्यमाणे ॥

भ्रुकुंसः। पुं० भ्रुकुंसे ॥ भ्रूकुंसे। स्त्रीवेशधारिणिनर्त्तके। नचनिआ० इ० भा० ॥ भ्रुवाकुंसोभाषणमस्य। इकोह्रस्वोऽङ्योगालवस्य तिसूत्रे० इयंङुवङ्भाविनामव्ययानाञ्चेति

 

वक्तव्यमितिनिषेधोक्तरपठितेन ० अभ्रुकुंसादीनामितिवक्तव्यमिति वार्त्तिकेनतन्निषेधाद्भ्रस्वः ॥ एवं भ्रुकुटिशब्देपिबोध्यम् ॥

भ्रुकुटि : । स्त्री० भ्रुकुटौ । भ्रूकुट्याम् । क्रोधादिनाललाटसङ्कोचने ॥ कुटेरिगुपधात्किदितीन् । भ्रुवो: कुटि : । भ्रुकुंसवत्प्रक्रिया ॥

भ्रुकुटी । स्त्री० भ्रुकुटौ । भ्रुवो : कौटिल्ये ॥ कुटेरिगुपधादितीन् । कृदिकारादितिङीष् । भ्रुवो : कुटी ॥ अभ्रुकुंसादीनामितिवार्त्तिकाद्भ्रस्व : ॥

भ्रू :। स्त्री० नेत्रोपरिभागस्थरोमराज्यां चिल्लिकायाम् । भौं० इ० भा० ॥ भ्रमु० ।भ्रमेश्चडूः। टिलोपः॥ यद्वा। भ्रमति । भ्रमुचलने । भ्रमेश्चडू : ॥ यद्वा । भ्रास्यति । क्विप् । जङ्गमादीनामिति० गम : क्वाविच्यत्र वार्त्तिकेन०मलोपऊङ्चादेश :॥

भ्रूकुंस : । पुं० भ्रूकुंसे । भ्रुकुंसे । नचनिआ० इ० भा० ॥ भाषणार्थकचुरादिग्रस्मात् कुसेरेरच् । भ्रुवाकुंसोभाषणमस्य । इकोह्रस्वो ऽङ्योगालवस्येतिसूत्रे ०इयङ् ०वङ्भाविनाम [illegible] थानाम्नेतिवार्त्तिकाद्भ्रस्व [illegible] निषेध : ॥

भ्रूकुटि : । स्त्री भ्रुकुट्याम् ॥ भ्रुवो: कुटि : इयङुवङ्भाविनामिति निषेधाद्ध्रस्वोनभवति ॥

भ्रूकुटी । स्त्री० भ्रकुट्याम् । भ्रुकुटी ॥ कुटेरिगुपधादितीन् । कृदिकारादितिङीष् । भ्रुवो : कुटी । इयङुवङ्भाविनामितिह्रस्व निषेध : ॥

भ्रूण : । पुं० स्त्रीगर्भे । उदरस्थजन्तौ ॥ डिम्भे । अर्भके । गर्भिण्याम् ॥ श्रोत्रियद्विजे ॥ भ्रूण्यते । भ्रूण आशाविशङ्कयो : । घञ् ॥

भ्रूणहत्या । स्त्री० गर्भस्थबालकहनने॥ यथा । त्रिविवाहंकृतंयेनलकरोतिचतुर्थकम् । कुलानिपातयेत्सप्तभ्रूणहत्याव्रतञ्चरेत् ॥

भ्रूणहा । त्रि० गर्भस्थबालकहन्तरि ॥ भ्रूणंहतवान् । हन० । ब्रह्मभ्रूणहत्रेषुक्विप् ॥ ब्रह्मघ्ण ॥ भ्रूणहा० वरिष्ठब्राह्मणहन्तोच्यत इतिव्याख्यानात् ॥

भ्रूभङ्ग : ।. पुं० भ्रूविक्षेपे । भ्रुव : कौटिल्ये ॥ भ्रुवोभङ्ग : ॥

भ्रेष : । पुं० अध : पाते । यथोचितात्० भ्रंशे ॥ भ्रेषणम् । भ्रेषृचलने । घञ् ॥ चलने ॥

भ्रेषणम् । न० चलने ॥

भ्रौणहत्यम् । न० भ्रूणघ्नोभावे ॥ ष्यञ् । दाण्डिनायनेतिनिपातनात्तकारादेश : ॥

† —*— †

म : । पुं० मकारे ॥ यमे ॥ समये ॥ विषे ॥ मधुसूदने ॥ चन्द्रशेखरे । शम्भौ ॥ ब्रह्मणि ॥ चन्द्रमसि ॥ मन्त्रे ॥ मङ्गले ॥ त्रिगुरौ० ऽऽऽ० ॥

मंहिष्ठ : । त्रि० महनीये । पूजनीये ॥

मकर : । पुं० नक्रे । यादःप्रभेदे । मगर० इतिभाषाप्रसिद्धे० भषाणांमध्ये भगवद्विभूतौ ॥ निधिप्रभेदे ॥ दशमराशौ । आकौकेरे ॥ कृणाति । कृहिंसायाम् । पचाद्यच् । मनुष्याणांकर : । पृषोदरादि : ॥ यद्वा । मङ्कते । मकिमण्डने । अच् । आगमशास्त्रस्यानित्यत्वान्ननुम् । मकं राति । रादाने । आतोनुपेतिक : ॥ दर्पणेऽप्युक्त : सारस्वतकोपि ॥ अर्हद्ध्वजे ॥

मकरकुण्डलम् । न० मकराकृतिकर्णाभरणे ॥

मकरकेतन : । पुं० कामदेवे ॥ मकर : केतनं यस्यस : ॥

मकरध्वज : । पुं० कंदर्पे । अनङ्गे ॥ मकरोनक्रोध्वजोयस्यस : ॥ रससिन्दूरविशेषे । चन्द्रोदये ॥ तत्प्रकारणप्रकारोन्यत्ररसेन्द्रचिन्तामणौ ॥

मकरन्द : । पुं० पुष्परसे ॥ मकरमपि द्यति० कामजनकत्वात् । दोअवखण्डने । आतोनुपेतिक : । पृषोदरादि : ॥ यद्वा । मकरमप्यन्दति । अदिबन्धने । कर्म्मण्यण् । शकन्ध्वादि : ॥ कुन्दपुष्पवृक्षे ॥ न० किञ्जल्के ॥

मकरमुखी । स्त्री० प्रणाल्याम् । पयस : पदव्याम् ॥

मकरन्दवती । स्त्री० कृष्णवृन्तायाम् । पाटलापुष्पे ॥ मधुविशिष्टायाम् ॥

मकरव्यूह : । पुं० मकराकृतिवत्सैन्यविन्यासे ॥ वराहव्यूहविपर्ययेणमकरव्यूहोभवति । तेनाऽग्रे पश्चाच्चोभयत्रभयेसतिगच्छेत् ॥

मकराकर: । पुं० समुद्रे ॥ मकराणामाकर : ॥

मकराकार : । पुं० महाकरञ्जे । षड्ग्रन्थे ॥

मकराङ्क: । पुं० समुद्रे ॥ कामदेवे ॥

मकराधिप : । पुं० शनिग्रहे ॥ मकरस्यराशिविशेषस्यअधिप : ॥

मकरालय : । पुं० अब्धौ ॥ मकराणां मकरोपलक्षितानांजलजन्तूनामालय : ॥

मकरी । पुं० समुद्रे ॥ मकरा: सन्त्यस्मिन् । अतइनिठनाविति० इनि : ॥

मकुटम् । न० मुकुटे । किरीटे ॥ मङ्कतेऽनेनवा । मकि० । बाहुलकादुट: । आगमशास्त्रस्यानित्यात्त्वन्ननुम् ॥

मकुतिः । स्त्री० शूद्रशासने ॥

मकुरः । पुं० मुकुरे दर्पणे ॥ वकुलद्रुमे ॥ कुलालदण्डे । कोरके ॥ मङ्कते । मकि० । मकुरदर्दुरावितिसाधुः ॥

मकुलः । पुं० न० मुकुले ॥ वकुलद्रुमे ॥

मकुष्ठः । पुं० वनमुद्गे । मोठ० इ० प्र० व्रीहिविशेषे ॥ मकुष्ठोवातलोग्राहीकफपित्तहरोलघुः । वांतिजिन्मधुरः पाकेक्रमिकृज्ज्वरनाशनः ॥ त्रि० मन्थरे ॥

मकुष्ठकः । पुं० वनमुद्गे । मयुष्टके । मकुष्ठे ॥ मङ्कते० मङ्क्यतेवा । मकि० । बाहुलकादुनुमभावश्च । तिष्ठति । ष्ठा० । कुन् । मकुश्चासौस्थकश्च । पूर्वपदादितिषः ।

मकूलकः । पुं० मुकूलके । दन्त्यामोषधौ ॥ मङ्कते । मकि० । खर्जपिञ्जादिभ्यऊरोलचावितिपिञ्जादित्वादूलच् । स्वार्थेकन् ॥

मक्कलः । पुं० शूलरोगविशेषे ॥ यथा । सूतायाहृच्छिरोबस्तिशूलमक्कलसंज्ञितम् । यवक्षारंपिबेत्तत्रमस्तुनोष्णोदकेनवा ।

मक्का । स्त्री० खुराशानाभिधे देशे ॥

मक्कुलम् । न० शिलाजतुनि ॥

मक्कशः । पुं० ) खुराशानदेशस्थे
मक्कश्वरः । पुं० ) शिवे ॥

मक्कोलः । पुं० शिलाधातौ । सितोपले । मकोल० खडियामाटी० गोलू० इ० भा० ॥

मक्षः । पुं० स्वदोषाच्छादने ।

मक्षवीर्यः । पुं० पियालवृक्षे ।

मक्षिका । स्त्री० कीटविशेषे । गन्धलोलुपायाम् । वमनीयायाम् । मक्खी० इ० भा० ॥ मशति । मशशब्दे रोषकृतेच । हनिमशिभ्यां सिकन् ॥ मक्षतिवा । मक्षरोषसङ्घाते । कुन् । गवुल्वा ॥

मक्षिकामलम् । न० सिक्थके ॥

मक्षीका । स्त्री० मक्षिकायाम् ॥

मखः । पुं० यज्ञे ॥ मखन्तिदेवाअत्र अनेनवा । मखहतौ । हलश्चेति० घञ् । संज्ञापूर्वकत्वान्नवृद्धिः ॥ यद्वाक्वचिदपवादविषयेप्युत्सर्गोभिनिविशते० इतिघञ्विषयेपिपुंसीतिघः ॥ यद्वा । मह्यते । मह० । नहेर्हलोपश्च० मरेश्चेति० । हलोपश्च ॥

मखत्राता । पुं० श्रीरामचन्द्रे ॥ मखानांत्राता ॥

मखवह्निः । पुं० प्रणीते । यज्ञाग्नौ ॥

मखानलः । पुं० महावीरे । यज्ञाग्नौ ॥

मखान्नम् । न० पद्मबीजाभे । पानीयफले । मखाना० इ० भा० ॥ मखान्नंपद्मबीजस्यगुणैस्तुल्यंविनिर्दिशेत् ॥

मखासुहृत् । पुं० शिवे । मखस्यदच यज्ञस्यअसुहृत्०शत्रु: ॥

मगण : । पुं० त्रिगुरौ०SSS: ॥

मगध : । पुं० वन्दिनि ॥ मागधे । वंशपरम्पराशंसके ॥ मगध्यति०याचते । मगधपरिवेष्टने । कण्ड्वादिर्यगन्त: । अच् । यस्यहलइतियलोप: ॥ मगधा : पुं०भूम्नि० कीकटदेशे ॥ यथा । व्यासेश्वरंसमारभ्यतप्तकुण्डान्तकं शिवे ।मगधाख्योमहादेशो यात्रायांनहिदुष्यति ॥ दक्षोत्तरक्रमेणैवक्रमात्कीकटमागधौ ॥ मगधानांनिवासोजनपद : ० मगधा : । निवासेऽणोजनपदेलुप् । लुपियुक्तवद्भाव : ॥

मगधा । स्त्री० पिप्पल्याम् ॥

मगधेश्वर : । पुं० जरासन्धनृपे । मगधदेशाधिपमात्रे ॥ मगधानांदेशविशेषाणामीश्वर : ॥

मगधोद्भव : । त्रि० मगधदेशजाते ॥

मगधोद्भवा । स्त्री० पिप्पल्याम् ॥ मगधे उद्भवोयस्य ॥

मग्न : । त्रि० जलान्त : प्रविष्टे । आप्लुते । स्नाते ॥ मज्जति । टुमस्जो शुद्धौ । क्त: । ओदितश्चेति०निष्ठानत्वम् । तस्यासिद्धत्वात्०स्कोरिति सलोप : । चो : कु : ॥

मघ : । पुं०द्वीपान्तरे ॥ देशान्तरे । मग् ०नामकर्म्मच्छस्थाने ॥ न० पुष्पविशेषे ॥

मघवा । पुं० इन्द्रे । शक्रे ॥ मह्यतेपूज्यते । महपूजायाम् । श्वन्नुक्षन्पूषन्प्लीहन्नित्यादिना०कनिन् ॥ कविरितिमनोरमायांस्फुटम् ॥ निपातनात्०हस्यघोबुगागमश्च । मघवानौ०मघवान : ॥ मघवाबहुलमिति मिनिश्चादेशपक्षेतु० मघवान्मघवन्तौ० मघवन्त : ० इत्यादिबोध्यम् ॥ जिनानांद्वादशचक्रवर्त्त्यन्तर्गतचक्रवर्त्तिविशेषे ॥

मघवती । स्त्री० इन्द्राण्याम् ॥

मघा । स्त्री० दशमनक्षत्रे ॥ अत्रजातस्यफलंयथा । कठोरचित्त: पितृमातृभक्तस्तीव्रस्वभावस्त्वनवद्यविद्य : चेज्जन्मभं यस्यमघाऽनघ : स्यात्मति: सदारातिविनाशदक्षा ॥ बहुवचनान्तोप्ययंदृश्यते ॥ यथा नवोदकेनवान्नेचगृहप्रच्छादनेतथा । पितर: स्पृहयन्त्यन्नमष्टकासुमघासुचेति ॥ मघायांपिण्डदानेनज्येष्ठपुत्रोविनश्यतीत्येकवचनान्तोपि ॥ औषधविशेषे ॥

मघाभव : । पुं० शुक्राचार्य्ये ॥

मघाभू : । पुं० शुक्राचार्य्ये ॥

मघी स्त्री० धान्यविशेषे ।

मघोनी । स्त्री० इन्द्राण्याम् ॥

मङ्कुर : । पुं० दर्पणे । मुकुरे । मङ्कते मकि० । वाहुलकादुरच् ॥

मङ्क्ष्वि: । त्रि० शठे ॥ मङ्कत । ः क्वि० । वङ्क्र्यादित्वात्साधु : ॥

मङ्क्षणम् । न० जङ्घात्राणे ॥ इति हारावली ॥

मङ्क्षु । अ० शीघ्रे ॥ भृशार्थे ॥ मज्जति । टुमस्जोशुद्धौ । बाहुलकात्सु : । मस्जिनशोरितिनुम् । स्कोरितिसलोप : ॥

मङ्क्षुणम् । न० जङ्घात्राणे ॥ इति त्रिकाण्डशेष : ॥

मङ्ग : । पुं० नौमस्तके ॥ मङ्गति । मगिसर्पणे । पचाद्यच् ॥

मङ्गल: । पुं० अङ्गारके । कुजे । तत्तीयर्क्षे ॥ अस्यवारेजातस्यफलंयथा । उग्र: प्रतापीक्षितिपालमन्त्रीरणप्रियोवक्रवचा : सरोष : । सत्वान्वित : शूरगणप्रणीताकुजस्यवारेप्रभवोमनुष्य : ॥ न०कल्याणे ॥ सर्वार्थरक्षणे ॥ अगर्हिताभिप्रतार्थसिद्धौ ॥ यत्खलुक्रियमाणमेवमन : प्रह्लादनंसमीहितसाधनञ्चतन्मङ्गलमुच्यतइतिव्याख्याकारा : ॥ आशीर्नमस्क्रियावस्तुनिर्देशोवापितन्मुखमित्यालङ्कारिकोक्त : काव्यादिमुखे क्रियमाणे ॥ यथाहभगवान्भाष्यकार: । मङ्गलादीनिमङ्गलमध्यानिमङ्गलान्तानिशास्त्राणिप्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणिच भवन्तिअध्येतारश्चप्रवक्तारोभवन्तीतिमङ्गलानुष्ठानप्रयोजनानि ॥ प्रशस्ताचरणंनित्यमप्रशस्तविवर्जनम् । एतद्धिमङ्गलंप्रोक्तमृषिभिस्तत्त्वदर्शिभि : ॥ लोकेऽस्मिन्मङ्गलान्यष्टौब्राह्मणोगौर्हुताशन : । हिरण्यंसर्पिरादित्यआपोराजातथाष्टम : ॥ एतानिसततंपश्येन्नोर्चेदर्ध्यादिनायर्जेत् । प्रदक्षिणन्तुकुर्वीततथाचायुर्नहीयते ॥ अपिच । रोचनंचन्दनंहेममृदङ्गंदर्पणंमणिम् । गुरुमग्निंतथासूर्यंप्रात : पश्येत्सदाबुध: ॥ मङ्गति०दुरदृष्टमनेन । मगिसर्पणे॥ गतौवा । मङ्गरलच् ॥ अशुभानिनिराचष्टे तनोतिशुभसन्ततिम् । स्मृतिमात्रेणयत्पुंसांब्रह्मतन्मंगलंविदुरितिविष्णुपुराणम् ॥ त्रि०कल्याणवति ॥

मङ्गलगृहम् । न० मेषराशौ ॥ वृश्चिकराशौ ॥ मङ्गलस्यतृतीयग्रहस्यगृहम् ॥

मङ्गलचण्डिका । स्त्री०) दुर्गायाम् ॥

मङ्गलचण्डी । स्त्री०　) यथा। प्रधानांशस्वरूपाचदेवीमङ्गलचण्डिका । प्रकृतेर्मुखसम्भूतासर्व्वमङ्गलदासदा ॥ सृष्टौमङ्गलरूपाचसंहारेकोपरूपिणी । तेनमङ्गलचण्डी सापण्डितै : परिकीर्त्तितेतिभागवतम् ॥

मङ्गलच्छाय : । पुं० प्लक्षवृक्षे ॥

मङ्गलपाठकः । पुं० स्तुतिपाठके । वन्दिनि ॥

मङ्गलप्रदा । पुं० दुर्गायाम् ॥ हरिद्रायामितिकश्चित् ॥ त्रि० मङ्गलदातरि ॥

मङ्गलप्रस्थः । पुं० भारतवर्षस्थपर्वतान्तरे ॥

मङ्गलमालिका । स्त्री० स्त्रजोभेदे ॥ मङ्गलायामालिका ॥

मङ्गला । स्त्री० उमायाम् । कात्यायन्याम् ॥ गयायांमङ्गलास्मृतेतिदेवीगीता ॥ सितदूर्वायाम् ॥ साध्व्याम् ॥ करञ्जभेदे ॥ हरिद्रायाम् ॥ नीलदूर्वायाम् ॥ वृत्तार्हन्मातृविशेषे ।

मङ्गलागुरु । न० अगुरुचतुष्टयान्तर्गतागुरुविशेषे ॥ यथा । मङ्गल्यामल्लिकागन्धामङ्गल्यागुरुवाचकाः । मङ्गल्यागुरुशिंशिपागन्धाढ्यायोगवाहिका ॥

मङ्गलाचरणम् । न० ग्रन्थाद्यारम्भे मङ्गलकरणे ॥ मङ्गलाचरणंशिष्टाचारात्फलदर्शनाच्छ्रुतितस्तावश्यंकर्त्तव्यमित्याहुर्व्याख्याकाराः ॥

मङ्गलारुहा । स्त्री० दूर्वायाम् ॥

मङ्गलिकाक्षीरणम् । न० असादृश्यकथायाम् ॥

मङ्गल्यः । पुं० त्रायमाणायाम् ॥ अश्वत्थे ॥ विल्वे ॥ मसूरके जीरके ॥ नारिकेले ॥ कपित्थे ॥ रीठाकरञ्जे ॥ न० दध्नि ॥ चन्दने ॥ मङ्गलागुरुणि ॥ सिन्दूरे ॥ स्वर्णे ॥ त्रि० शिवकरे ॥ रुचिरे ॥ साधौ ॥ मङ्गलेसाधुः । तत्र साधुरितियत् ॥

मङ्गल्यकः । पुं० मसूरे ॥ स्वार्थे कन् ॥

मङ्गल्यकुसुमा । स्त्री० शङ्खपुष्प्याम् ॥ मङ्गल्यानिकुसुमान्यस्याः ॥

मङ्गल्यनामधेया । स्त्री० जीवन्त्याम् । शाकश्रेष्ठायाम् ॥

मङ्गल्या । स्त्री० मल्लिगन्ध्यगुरुणि ॥ शम्याम् ॥ अधःपुष्प्याम् ॥ मिश्याम् ॥ शुक्लवचायाम् ॥ रोचनायाम् । प्रियङ्ग्वाम् ॥ शङ्खपुष्प्याम् । माषपर्ण्याम् ॥ जीवन्त्याम् ॥ ऋद्धिनामौषधौ ॥ वचायाम् ॥ हरिद्रायाम् ॥ चीडायाम् ॥ दूर्वायाम् ॥ मङ्गलेसाधुः । तत्रसाधुरितियत् ॥ गौर्याम् । शिवायाम् । भवान्याम् ॥ शोभनानिचर्श्रेष्ठानियादेवीददतेहरे । भक्तानामार्त्तिहरणीमङ्गल्यातेनसास्मृता ॥

मङ्गिनी । स्त्री० नावि । नौकायाम् ॥

मचर्चिका । स्त्री० प्रशस्ते ॥ मंशर्मचर्चति । चर्चअध्ययने । ख्वु

ल् ॥ यथा । प्रशस्तोब्राह्मणः० ब्राह्मणमचर्चिकारूढिशब्दत्वात्० प्रशंसावचनैश्चेतिसमासः ॥

मच्छः । पुं० मत्स्ये ॥

मज्जका । स्त्री० मज्जायाम् ॥ मज्जे वस्तार्थेकः ॥

मज्जकृत् । न० अस्थनि ॥

मज्जा । पुं० वृक्षसारे । वृक्षादेरुत्तम स्थिरभागे ॥ फलमज्जगुणायथा । यस्ययस्यफलस्येहवीर्यंभवतियादृशम् । तस्यतस्यैववीर्येणमज्जानमपिनिर्दिशेत् ॥ अस्थिमध्यगतधातौ । अस्थिसारे ॥ मज्जस्वरूपमाह । अस्थियत्स्वाग्निनापक्वंतस्यसारोद्रवीघनः । यःस्वेदवत् पृथग्भूतः समज्जेत्यभिधीयते ॥ स्थानन्तु । स्थूलास्थिषुविशेषेण मज्जात्वभ्यन्तरेस्थितः । इति ॥ अस्यगुणायथा । बलशुक्ररसश्लेष्म मेदोमज्जविवर्द्धनः । मज्जाविशेषतोऽस्थ्नांचबलकृत्स्नेहनेहितः ॥ मज्जत्यस्थिषु । टुमस्जो शुद्धौ । श्वन्नुक्षन्निति साधुः ॥ शिरोस्थिमध्यपिण्डितस्नेहे । मस्तिष्के ॥

मज्जनम् । न० स्नाने ॥ मज्जत्यनेन । टुमस्जो० । बहुलमन्यत्रापीति युच् ॥ मज्जायामितिशब्दचन्द्रिका ॥

मज्जसमुद्भवम् । न० वीजे । शुक्रे ॥

मज्जसम्भवः । पुं० शुक्रे ॥

मज्जा । स्त्री० वृक्षसारे । अस्थिगतधातौ ॥ मज्जति । पचाद्यजन्ताट्टाप् । मज्जोमज्जयासहेति० द्विरूपः ॥

मजाजः । पुं० भूमिक्षगुग्गलौ ॥

मजारसः । पुं० शुक्रे ॥

मजासारम् । न० जातीफले ॥

मजिका । स्त्री० मज्जकायाम् ॥

मञ्चः । पुं० खट्वायाम् ॥ काष्ठवंशे । मांचा०मांजा० इ०भो० । उच्चमण्डपविशेषे ॥ दोलायमानंगोविन्दंमञ्चस्थंमधुसूदनम् । रथस्थंवामनंदृष्ट्वापुनर्जन्मनविद्यतेइति पुराणम् ॥ मञ्चते । मचिधारणोच्छ्रायपूजनेषु । पचाद्यच् ॥

मञ्चकः । पुं० इन्द्रकोषे । उच्चमण्डपे ॥ खट्वायाम् ॥

मञ्चकाश्रयः । पुं० मत्कुणे ॥

मञ्चमण्डपः । पुं० शस्यरक्षार्थकुटीरे । कुटङ्गे ॥

मञ्चिका । स्त्री० आसन्द्यायाम् ॥

मञ्जरः । पुं० वल्लरी ॥ मुक्तायाम् ॥ तिलकद्रुमे ॥ वल्याम् । लतायाम् ॥

मञ्जरिः । स्त्री० वल्लर्याम् ॥ मञ्जुत्वमृच्छति । ऋगतौ । अचइः । शकन्ध्वादिः ॥

मञ्जरी । स्त्री० तिलकद्रुमे ॥ स्थूलमुक्तायाम् ॥ वल्लरी ॥ तुलस्यामृङ्गी ॥

ष् ॥

मञ्जरीनम्र : । पुं० वेतसवृक्षे ॥

मञ्जा । स्त्री० मञ्जर्याम् ॥

मंजि : । पुं० मंजर्याम् ॥

मञ्जिका । स्त्री० वारसुन्दर्याम् । वेश्यायाम् ॥

मञ्जिफला । स्त्री० कदल्याम् ॥

मञ्जिष्ठा । स्त्री० विकसायाम् । जिङ्ग्याम् । समङ्गायाम् । मजीठ० इ० भा० प्र० औषधी ॥ मञ्जिष्ठा मधुरातिक्ताकषायस्वर्णवर्णकृत् । गुरुरुष्णाविषश्लेष्मशोथयोन्यक्षिकर्णरुक् रक्तातीसारकुष्ठास्रविसर्पव्रणमेहनुत् ॥ मञ्जीशोभनेवर्णे तिष्ठति । ष्ठा० । सुपिस्थइतिकः । अम्बाम्बेतिषत्वम् । यद्वा । अतिशयेनेतमबिष्ठनौ ॥

मञ्जी । स्त्री० मञ्जर्याम् ॥

मञ्जीर : । पुं० मन्थानदण्डरज्जुबन्धनार्थस्तम्भे । कुटरे ॥ पुं० न० नूपुरे ॥ मञ्जति । मजिधुनौ० सौत्रः । बाहुलकादीरन् ॥ गुर्वक्षरे०ऽ, ॥

मञ्जीरा । स्त्री० वर्णवृत्तान्तरे ॥

मञ्जु : । त्रि० मनोज्ञे ॥ मञ्ज्यते । मजि० । बाहुलकादुः ॥

मञ्जुकेशी । पुं० श्रीकृष्णे ॥ त्रि० मनोज्ञचिकुरविशिष्टे ॥

मञ्जुकेशी । स्त्री० स्वर्गवेश्याभेदे ॥

मञ्जुगमना । स्त्री० हंस्याम् ॥ त्रि० सुन्दरगामिनि ॥

मञ्जुघोष : । पुं० शिवे ॥ उपास्यदेवताविशेषे ॥ पूर्वजिने ॥ बुद्धानां देवताभेदे ॥ मञ्जु : घोष : शब्दोऽस्य ॥ शोभनशब्दे ॥ त्रि० शोभनशब्दवति ॥

मञ्जुपाठक : । पुं० शुके । कीरे ॥ त्रि० सुन्दरपाठकर्त्तरि ॥

मञ्जुप्राण : । पुं० ब्रह्मणि ॥

मञ्जुभद्र : । पुं० पूर्वजिनविशेषे ॥ ज्ञानदर्पणे । मञ्जुघोषे ॥ शिवे ॥

मञ्जुभाषिणी । स्त्री० अतिजगतीछन्द : प्रभेदे ॥ यथा । सजसाजगौचयदिमञ्जुभाषिणी ॥ अमृतोस्मिशीतलकरेणलालयंस्तनुकान्तिरोचितविलोचनोहरे नियतंकलानिधिरसीतिवल्लवीमुदमच्युते व्यधितमञ्जुभाषिणी ॥ सुनन्दिनीतिशम्भौ॥

मञ्जुमणि : । पुं० पुष्परागे । पोखराज० इ० भा० ॥

मञ्जुल : । पुं० जलरङ्कौ ॥ न० जलाञ्चले । शैवाले ॥ निकुञ्जे ॥ त्रि० मञ्जौ ॥ मञ्जु० मञ्जुत्वंलाति । ला० । कः ॥ मञ्जुमञ्जुत्वमस्त्यस्मिन्वा । सिध्मादित्वाल्लच् ।

मञ्जुवक्त्र : । त्रि० सौम्याननयुक्ते ॥

मंजुवाक् । त्रि० मधुरवचने ॥

मञ्जुश्री : । पुं० मञ्जुघोषे ॥ म-

ऋजुर्मनोज्ञाश्रीर्यस्य॥

मञ्जुषा । स्त्री० मञ्जूषायाम् । पिटके ।

मञ्जूषा । स्त्री० पिटके । दार्वादिनिर्मितपेटके ॥ पाषाणे । प्रस्तरे ॥ मञ्जिष्ठायाम् ॥ हिर आदिनिधेपाधारे ॥ मञ्ज्यस्यथवा । टुमस्जोमस्जेर्नुमूषेच्यूपन् ॥

मटची । स्त्री० मर्दनहेतुभूतेपाषाणवृष्ट्यादौ ॥ अशन्याम् ॥

मटस्फटि : । पुं० दर्पारम्भे ॥

मट्टकम् । न० गृहमस्तके ॥

मठ : । पुं० छात्रादिनिलये ॥ मठन्त्यत्र । मठमदनिवासयो : हलश्चेतिघञ् । संज्ञापूर्वकत्वान्नवृद्धि : ॥ यद्वा । मठतिनिवासयति । पचाद्यच् ॥ मांठ० इतिख्यातेपक्वान्नविशेषे ॥ यथा । समितांमर्दयेदाज्येर्नलिनापिचसन्नयेत् । तस्यास्तुवटकांकृत्वापचेत्सर्पिषिनीरसम् ॥ एलालवङ्गकर्पूरमरिचाद्यैरलङ्कृते । मज्जयित्वासितापाकेततस्तञ्चसमुद्धरेत् ॥ अयंप्रकार : संसिद्धोमठइत्यभिधीयते ॥ मठस्तुबृंहणोवृष्योबल्य: सुमधुरोगुरु: । पित्तानिलहरोरुच्योदीप्ताग्नीनांसुपूजित : । समिताशर्करासर्पिर्निर्मिताअपरेप्रिये । प्रकाराअमुनातुल्यास्तेपिचैतद्गुणा: स्मृता : ।

मठर : । पुं० मुनिविशेषे ॥ शौगडे ॥ मन्यते । मनज्ञाने । मनुतेवा । मनुअवबोधनेवा । वचिमनिभ्यांचिच्चेतिअरठोन्तादेशश्च ॥

मडक : । पुं० मड्डवा० इ० प्र० शब्दे

मड्डु : । पुं० वाद्यप्रभेदे मज्जति० मज्जतिशब्दाभवता । टुमस्जोशुद्धौ ॥ भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्यउ : । पृषोदरादि : ॥ डमरुरेवमडुःमड्डुरित्युच्यते ॥ चुचुक० इ० गौडेषुयस्यप्रसिद्धि:॥

मड्डुक: । पुं० मड्डुवाद्ये ॥ स्वार्थेक : ॥ मर्दले ॥

मणि: । पुं० स्त्री० अश्मजातौ । रत्ने ॥ मुक्तादौ ॥ अजागलस्तने ॥ लिङ्गाग्रे ॥ अलिंजरे ॥ योन्यग्रभागे ॥ स्तने । मणिबन्धे ॥ मण्यते । मणशब्दे । सर्वधातुभ्यइन् ॥

मणिकम् । न० अलिंजरे । मांट० इ० भा० प्र० ॥ मणति । मण० । इन् । स्वार्थेयावादित्वात्कन् । संज्ञायांकोवा ॥

मणिकर : । पुं० मणिकारे ॥

मणिकर्णिका । स्त्री० काश्यन्तर्गतप्रधानतीर्थे ॥ इयञ्चोविश्वेश्वरोदेवोकाशव्यामणिकर्णिका ॥

मणिकर्णिकेश्वर : । पुं० काश्यन्तर्गतशिवलिङ्गविशेषे ॥ मणिकर्णिकाया : ० मणिकर्णिकायांवाईश्वर:

मणिकाननम् । न० कण्ठे ॥ रत्नवने
मणिकारः । पुं० वैकटिके । मणिघटितालङ्कारादिकर्त्तरि । जौंहरी इ० भा० । मणिकार० इतिच ॥ मणिं करोति । डुकृञ्० । कर्मण्यण् ॥ न्यायचिन्तामणिकर्त्तरि ॥
मणिकूटः । पुं० पर्वतविशेषे ॥ यथा । मणिकूटस्यार्थगिरेर्गन्धमादनकस्य च । मध्येसवतिलोहित्योब्रह्मपुत्रः समाश्रितः ॥ प्लक्षद्वीपस्थेगिरिविशेषे ॥
मणिखनिः । स्त्री० मणेराकरे ॥ मणेः खनिः ॥
मणिगुणनिकरः । पुं०अतिशर्करी १५ प्रभेदे ॥ यथा । वसुमुनियतिरिति० मणिगुणनिकरः । यथा । नरकरिपुरवतु० निखिलसुरगति० रमितमहिमभरसहजनिवसतिः अनिबधिमणिगुणनिकरपरिचितिः सरिदधिपतिरिवधृततनुविभवः ॥
मणिग्रीवः । पुं० कुबेरात्मजे ॥ मणिरिवग्रीवायस्य ॥ त्रि०रत्नकन्धरे ॥
मणिच्छिद्रा । स्त्री० मेदायाम् ॥ ऋषभाख्यौषधौ ॥
मणितम् । न० रतिकूजिते । मैथुनकालीनवाक्ये ॥ रतिकालेस्त्रीणांकण्ठकूजितविशेषे ॥ मणनम् । मण० । भावेक्तः ॥
मणितारकः । पुं० सारसपक्षिणि ॥
मणिद्वीपः । पुं० क्षीराब्धिमध्येपद्मरागादिमणिमयान्तरीपे । त्रिपुरसुन्दर्यावासस्थाने ॥ भुवनेश्वर्याः स्थानइ०देवीगीता । ब्रह्मलोकादूर्ध्वभागेसर्पलोकोस्तियःश्रुतः । मणिद्वीपःसएवास्तियत्रदेवीविराजते ॥ सर्वस्मादधिकोयस्मात्सर्वलोकस्ततःस्मृतः । पुरापराम्बयैवायंकल्पितोमनसेच्छया । सर्वादौनिजवासार्थंप्रकृत्यामूलभूतया । कैलासादधिकोलोकोवैकुण्ठादधिकोत्तमः ॥ गोलोकादपिसर्वस्मात् सर्वलोकोधिकःस्मृतः । नैतत्समंत्रिलोक्यान्तुसुन्दरंविद्यतेक्वचिदित्यादिमादेवीभागवतेद्वादशस्कन्धे १० अध्यायेऽस्यवर्णनंद्रष्टव्यं ॥
मणिनागः । पुं०तीर्थविशेषे ॥
मणिपर्वतः । पुं० गिरिविशेषे ॥
मणिपुष्पकः । पुं० सहदेवाख्यपाण्डवस्य शङ्खे ॥
मणिपूरम् । न० षट्चक्रान्तर्गतनाभिमध्यस्थेदशदलेतृतीयेचक्रे ॥ मणिवद्भिन्नंतत्पद्मंमणिपूरंतथोच्यते ॥ देशविशेषे ॥
मणिबन्धः । पुं० प्रकोष्ठपाण्योः सन्धिस्थाने । करग्रन्थौ । कलाइ०इ० भा० । हस्तमूले ॥ मणिर्बध्यतेऽत्र । बन्धबन्धने । हलश्चेतिघञ् न० ॥ बृहती ६ छन्दः प्रभेदे ॥ यथा ।

आदितुरीयं पञ्चमकं षष्ठमथान्त्यं स्या द्गुरु चेत् । इन्द्रियवेदैर्यदि विरति-स्तन्मणिबन्धं प्राहुः फणी ॥ मणिमध्य मितिनामान्तरम् ॥

मणिबन्धनम् । न० हस्तमूले ॥

मणिभद्रः । पुं० जिननांपूर्वं यक्षवि शेषे । जम्भले ॥ कुवेरसेनापतौ ॥

मणिभूमिः । स्त्री० कुट्टिमे । रत्नस्य ख नौ ॥

मणिमञ्जीरम् । न० रत्नमयनूपुरे ॥

मणिमण्डपः । पुं० रत्नमयगृहे ॥

मणिमध्यम् । न० वृहती ९ छन्दोभे दे । मणिबन्ध ॥ लक्षणं यथा । स्या न्मणिमध्यं चेद्भमसाः । यथा । का लियभोगाभोगगतस्तन्मणिमध्यस्फो तरुचा । चित्रपदाभो नन्दसुतस्ताण्ड वनर्तस्मेरमुखः ॥

मणिमन्थम् । न० सैन्धवलवणे ॥ पर्व तविशेषे ॥

मणिमान् । त्रि० मणिविशिष्टे । रत्न भूषिते ॥ पुं० तीर्थस्थे नवर्णितेप र्वतविशेषे ॥

मणिमन्दिरम् । न० बहुमूल्यप्रस्तरयु क्तगृहे ॥

मणिमाला । स्त्री० हारे ॥ स्त्रीणां दन्त-क्षतान्तरे ॥ लक्ष्म्याम् ॥ जगती-१२ छन्दोभेदे । यथा । त्यौत्यौम णिमालाछिन्नागुहवक्त्रैः ॥ यथा । प्रह्वामरमौलौ रत्नोपलक्लृप्तेऽजातप्र तिबिम्बाशोणा मणिमाला । गोविन्द पदाब्जे राजीनखराणामास्तां मम चि त्तध्वान्तं शमयन्ती ॥ मणीनां मा ला । मालेवया ॥

मणिरागम् न० हिङ्गुले ॥

मणिवः । पुं० नागविशेषे ॥ मणि रस्यास्ति । अन्येभ्योपि दृश्यत इति वः ॥

मणिवरः । पुं० हीरके ॥

मणिबीजः । पुं० दाडिमवृक्षे ॥

मणिसरः । पुं० मुक्ताहारे ॥

मणी । स्त्री० मणौ ॥

मणीचकम् । न० इन्दुकान्ते । चन्द्र वर्णरूप्ये ॥ पुं० मत्स्यरङ्कख गे ।

मणीव । अ० मणितुल्ये ॥

मणीवकम् । न० पुष्पे । कुसु मे ॥

मण्टपी । स्त्री० क्षुद्रोपोदकायाम् ॥

मण्ठः । पुं० पक्वान्नविशेषे । मठे । मांठ० इ० भा० ॥ मण्ठते । मठि शोके । शोकइहाध्यानम् । पचाद्य च् ॥

मण्डः । पुं० पञ्चाङ्गुले । एरण्डवृक्षे ॥ शाकभेदे ॥ मस्तुनि ॥ भूषा याम् ॥ सारे ॥ पिच्छे ॥ दृढे ॥ भक्तादिभवरसे ॥ तल्लक्षणं यथा भक्तैर्विनाद्रवो मण्डः पेयं भक्तस मन्वितम् ॥ अपि चास्य लक्षणं विधि

गुणाश्चतण्डुलानांमुसिद्धानांचतुर्दशगुणे जले । रसः सिक्थैर्विरहितोमण्डइत्यभिधीयते ॥ शुण्ठीसैंधवसंयुक्तोदीपनः पाचनश्च सः । अन्नस्यसम्यक्सिद्ध्याचस्रोयामण्डस्यसिद्धता ॥ पेयायूषयवागूनांविलेपीभक्तयोरपि । तस्यगुणाः । मण्डोग्राहीलघुः शीतोदीपनोधातुसाम्यकृत् ॥ ज्वरघ्नस्तर्पणोवल्यः पित्तश्लेष्मश्रमापहः । अपिच सुद्धोधनोवस्तिविशोधनश्चप्राणप्रदः शोणितवर्द्धनश्च । ज्वरापहारीकफपित्तहन्ताधायुंजयेदष्टगुणोहिमण्डः ॥ लाजमण्डोग्निजननोदाहतृष्णानिवारणः ज्वरातीसारशमनोऽशेषदोषामपाचनः ॥ वाप्यमण्डोग्निजननः शूलानाहविनाशनः । पाचनोदीपनोहृद्यः पित्तश्लेष्मानिलापहः वाप्यमण्डोभृष्टयवमण्डः ॥ न० मस्तुनि ॥ मण्डने ॥ पुं० न० सर्वेषामन्नदध्यादीनामग्ररसे । मांड० ह्र० भा० ॥ सारे ॥ पिच्छे ॥ मण्डयति । मडिभूषायाम् । पचाद्यच् ॥ मण्डति० मण्डते वा । अच्० घञ्वा ॥ मन्यते वा । मनज्ञाने । अमन्नाड्ड: ॥

मण्डकः । पुं० मांडे० मांडा० मण्डाइतिप्रसिद्धे खाद्यपदार्थे ॥ तद्विधानंयथा । वारिणाकोमलांकृत्वासमितांसाधुमर्दयेत् । हस्तलालनयातस्यालोपर्वोसम्यक्प्रसारयेत् ॥ अधोमुखघटस्यैतद्विस्तृतं प्रक्षिपेद्बहिः । मृदुनावह्निनासाध्यः सिद्धोमण्डकउच्यते ॥ दुग्धेनसाज्यखण्डेनमण्डकंभक्षयेन्नरः । अथवासिद्धमांसेनसतक्रषटकेनवा ॥ मण्डकोदृंहणोवृष्योवल्योरुचिकरोभृशम् । पाकेपिमधुरोग्राहीलघुर्दोषत्रयापहः ॥ गीताङ्गविशेषे ॥ यथा । जयप्रियः कलापश्चकमलः सुन्दरस्तथा । मङ्गलोवल्लभश्चेतिमण्डकाः षट्प्रकीर्तिताः ॥ एषांविशेषः सङ्गीतदामोदरेद्रष्टव्यः ॥

मण्डनम् । न० प्रसाधने । भूषणे ॥ चतुर्धामण्डनंवासोभूषामाल्यानुलेपनैः ॥ मण्डातेऽनेन । मडि० । ल्युट् ॥ नीतिर्भूमिभुजांनतिर्गुणवतांह्रीरङ्गनानांधृतिर्दम्पत्योः शिशवोगृहस्यकविताबुद्धेः प्रसादोगिराम् । लावण्यंवपुषः स्मृतिः सुमनसः शान्तिर्द्विजस्यक्षमाशक्तस्यद्रविणंगृहाश्रमवतांस्वास्थ्यंसतांमण्डनम् ॥ त्रि० भूषणकर्त्तरि अलङ्करिष्णौ । मण्डनशीलः । मडि० । क्रुधमण्डार्थेभ्यश्चेतियुच् ॥

मण्डनता । स्त्री० प्रसाधनत्वे ॥
मण्डप : । पुं० न० जनाश्रये । जन विश्रामसद्मनि ॥ मण्डनम् मडि । घञ् । मण्डं पाति । पारक्षणे । आतोऽनुपसर्गेक : ॥ देवादिद्रव्ये प्रमनि ॥ त्रि० मण्डपानकर्त्तरि ॥ मण्डं पिबति । पा० । क : ॥
मण्डपी । स्त्री० निष्पाव्याम् ।
मण्डयन्त : । पुं० नटे ॥ बधूसमूहे । अन्ने ॥ अलङ्कारे । भूषणे ॥ मण्डयति । मडिभूषायांहर्षेच । तृभूवहिवसीत्यादिना० भच्० सचषित्
मण्डयन्ती । स्त्री० योषिति । वधूाम् ॥ नव्याम् ॥ षित्वान्ङीष् ॥
मण्डयमान : । त्रि० मण्डनंकुर्वाणे ॥ मण्डयति० तच्छील : । मडि० । ताच्छील्यवयोवचनशक्तिषुचानश् ॥
मंडरी । स्त्री० घुर्घुर्याम् ॥
मंडल : । पुं० कुक्कुरे ॥ सर्पप्रभेदे ॥ न० परिधौ । चन्द्रसूर्ययोर्वहिर्वेष्टने । चन्द्रसूर्ययोरुत्पातजरश्मिमंडले ॥ य० वातेनमंडलीभूता: सूर्याः चन्द्रमसो : करा: । मालाभाव्योम्नितन्वन्ते परिवेश : प्रकीर्तितइति ॥ चक्रवाले । मंडलाकारेणपरिणतेसमूहमात्रे ॥ चतुरस्रादौ ॥ यथा। चतुरस्रंत्रिकोणंवावर्त्तुलंचार्द्धचन्द्रकम् । कर्तव्यमानुपूर्व्येणव्राह्मणादिषुमंडलमिति ॥ कोठरोगे । मंडलवत् कुष्ठे ॥ देशे॥ समन्ताद्विंशतियोजने । चत्वारिंशद्योजनेवादेशइतिकेचित् ॥ द्वादशराजकी ॥ द्वादशराजम् ॥ द्वादशराजमंडलंतुकामन्दकीनोक्तं । यथा । अरिर्मित्रमरेर्मित्रंमित्रमित्रमत : परम् । तथारिमित्रमित्रञ्चविजिगीषो : पुर : स्थिता : ॥ पार्ष्णिग्राह : स्मृत : पश्चात्आक्रन्दस्तदनन्तरम् । आसारावनयोश्चैवविजिगीषोस्तुपृष्ठत : मंडलम् ॥ अरेश्चविजिगीषोश्चमध्यमोभूम्यनन्तर : । अनुग्रहेसंहतयो : समर्थोव्यस्तयोर्वधे ॥ मंडलाद्बहिरेतेषामुदासीनोबलाधिक : । अनुग्रहेसंहतानांव्यस्तानाञ्चवधेप्रभु : ॥ पञ्चविजिगीषो : पुर : सरा : । पार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहासाराक्रान्दासाराश्चेतिपृष्ठतश्चत्वार : । मध्यमोदासीनौद्वौ । विजिगीषुरेकइत्येवंद्वादशराजमंडलमभवति ॥ गोले ॥ चक्रे॥ सङ्घाते ॥ नखाघाते । गदायुद्धगतिभेदे ॥ धन्विनांस्थानपञ्चकान्तर्गतस्थितिविशेषे ॥ यथा । मंडलाकारपादाभ्यांमंडलंस्थानमीरितम्॥ व्याघ्रनखाख्यगन्धद्रव्ये ॥ व्यूहविशेषे । यथा । तिर्यग्वृत्तिश्चदंड:स्याद्भोगोन्वाहत्तिरेवच । मंडलंसर्वतोवृत्ति:पृथग्वृत्तिरसंहत: ॥ मंडयति। मडि० । वृषादित्वात्कल: ॥ मंडं

मतिगर्भः। त्रि० प्रतिभासारे ॥
मतिदा। स्त्री० ज्योतिष्मत्याम् ॥ शि
मृडीक्षुपे ॥
मतिभ्रमः। पुं० भ्रमे ॥ मतेर्भ्रमः ॥
मतिभ्रान्तिः। स्त्री० मतिभ्रमे। मि-
थ्यामतौ। मतेर्भ्रान्तिः ॥
मतिमान्। त्रि० प्राज्ञे ॥
मतिविभ्रंसः। पुं० उन्मादरोगे।
मतेर्भ्रंसोनाशोयेन ॥
मतुबर्थीयः। पुं० मत्वर्थीयेषुप्रत्ययेषु ॥
बाहुलकान्मतुबर्थशब्दाच्छः॥ शैषि
कान्मतुवर्थीयादितियथा ॥
मत्कुणः। पुं० मकनाद्रुतिख्यातेनि-
र्विषाणेभे। कालेप्यजातदन्ते गजे ॥
निःश्मश्रुपुरुषे ॥ उद्दंशे। रक्त
पायिनि। रक्ताङ्गे। मञ्चाश्रये०
कीटविशेषे। उडुस० मांगुण०
खटमल्ल० हिं०चभाषा ॥ नारिकेले ॥
जङ्घात्राणे। जङ्घासम्बद्धवाससि ॥
मत्कुणा। पुं० निर्लोमयोनौ ॥
मत्कुणारिः। पुं० इन्द्राशने। भङ्गा
याम् ॥
मत्तः। पुं० प्रभिन्ने। चरन्मदेहस्ति
नि। गर्जिते ॥ धुस्तूरे ॥ कोकिले ॥
महिषे ॥ त्रि० हृष्टे ॥ मदिरामत्ते
॥ शौण्डे माद्यतिस्म। मदीहर्षे
; गत्यर्थेतिक्तः। नध्याख्येतिनत्वं ॥
मत्तकाशिनी। स्त्री० अत्युत्तमनार्याम्
। वरवर्णिन्याम् ॥ मत्ता० क्षीवे

त्वकाशतेभाति। काशृदीप्तौ। कर्त्त
र्युपमानइतिणिनिः ॥
मत्तकासिनी। स्त्री० वरारोहायांयो
षिति ॥ मत्तेवकासते। कासृशब्द
कुत्सायाम्० कासगतिशासनयोर्वा
। कर्त्तर्युपमानइतिणिनिः।
मत्तकीशः। पुं० हस्तिनि ॥
मत्तवारणः। पुं० प्रक्षिप्तकटकुञ्जरे।
मत्तगजे ॥ न० प्रासादवीथीभांबर
गडे ! कोठिकाबरंडा० हिं०भा० ॥
अपाश्रये। प्राङ्गनावरणे ॥ पूगचूर्णे ॥
मत्तमयूरः। पुं० अतिजगती १३ छ
न्दः प्रभेदे। यथा। वेदैरन्ध्रैर्म्तौस
यगामत्तमयूरः। यथा। लीला
नृत्यन्मत्तमयूरध्वनिकान्तम्० नृ
त्यन्नीपामोदिपयोदानिलरम्यम्।
रासक्रीडाहृष्टमनागोपवधूभिः०
कंसध्वंसीनिर्जनवृंदावनमाप ॥
मत्तमातङ्गः। पुं० दंडकप्रभेदे ॥ यथा
आदितोरागणास्त्वच्छयायत्रदृत्ताः
सवैमत्तमातङ्गनामामहादंडकः स
न्मते०स्वान्तरेनंसमादायमोदायचे
तोविधेहिप्रभोभारतीरीतिविश्रान्ति
भूस्त्वंयतः। विस्फुरत्सङ्गरप्राङ्ग
णेनागराजेसचीत्कारफूत्कारधाराकु
लेसावधानोयथा० पन्नगाधीशगुह
प्रबुद्धैकबुद्धिप्रकाशप्रवृत्तिप्रवृद्धत्तशा
स्त्रेऽपिनित्यंयथा ॥
मत्तमातङ्गलीलाकरः। पुं० दंडकप्र

भेदे ॥ यथा । यत्ररेफ : पर : स्वेच्छयागुम्फित : ॥ सम्मृतोदंडकोमत्तमातङ्गलीलाकर : ॥ हेमगौरे वसानोंऽशुकेद्वन्द्वनीलासितेवर्णयोस्पष्टदिव्यानुलेपाङ्कितो हारतारां शुवन्नोनभास्विचमालाञ्चितोभव्यभूषोज्ज्वलाङ्ग : समंसीरिणा । अञ्जनाभाम्बरेणेन्दुकुन्दाभदेहेनलीलापरीहासहासोर्मिकौतूहलै : कंसरङ्गाद्रिग : पातुनश्चक्रपाणिर्गतिक्रीडयामत्तमातङ्गलीलाकर : ॥

मत्ता । स्त्री० मदिरायाम् ॥ मदेनमूढायाम् ॥ पङ्क्तिच्छन्द : १० प्रभेदे ॥ यथा ज्ञेयामत्तामभसगदृष्टा ॥ यथा । पीत्वामत्तामधुमधुपालीकालिन्दीयेतटवनकुञ्जे । उद्दीव्यन्तीव्रजजनरामाकामासक्तामधुजितिचक्रे ॥

मत्ताक्रीडम् । न० विकृतिच्छन्द : २३ प्रभेदे ॥ यथा । मत्ताक्रीडंवसिष्वागायतिमयुगगयुगमनुलघुगुरुभि: ॥ यथा । मुग्धोन्मीलनमत्ताक्रीडंमधुसमयसुलभमधुरमधुरसात्गानेयामेकिञ्चित्प्रन्दत्पदमरुणनयनयुगलसरसिजम् । रासोल्लासक्रीडत्कम्रव्रजयुवतिवलयविहितभुजरसम्सान्द्रानन्दंवृन्दारण्येस्मरजहरिमनघचरणपरिचयम् ॥

मत्तालम्ब : । पुं० प्राङ्गनावरणे । अ

पाश्रये । प्रग्रीवे मत्तवारणे ॥

मत्तेभगमना । स्त्री० स्त्रीविशेषे । मत्तगजगामिन्याम् ॥ मत्तेभवद्गमनंयस्या . सा ॥

मत्पूर्व : । त्रि० मदीयप्राचीने ॥

मत्यम् । न० टाचादिमुष्टौ । उणादौ वैटा०इ०भा० ॥ मतंज्ञानम्तस्यकरणम्भाव : साधनंवा । मतजनहलात्करणजल्पकर्षेषु०इतियत् ॥

मत्वर्थीय : । पुं० मतुबर्थीयेप्रत्यये ॥ मत्वर्थाच्छ : । बहुलवचनादकारलोप : ॥

मत्स : । पुं० मत्स्ये ॥

मत्सगण्ड : । पुं० गलगण्डे । मत्सघण्ड इ०गौ०दे०प्र०व्यञ्जनविशेषे ॥

मत्सर : । पुं० मात्सर्ये । अन्यशुभद्वेषे ॥ क्रोधे ॥ वैरे ॥ त्रि०असद्व्यपरसम्पत्तौ । परोत्कर्षासहनपूर्विकायांस्वोत्कर्षवाञ्छायाम् । स्वप्रयोजनप्रतिसन्धानंविनापराभिमतनिवारणेच्छायाम् ॥ अन्यशुभद्वेषवति ॥ कृपणे ॥ माद्यतिपरकृच्छ्रे । मदीहर्षे । कृधूमदिभ्य : क्सिदिति सर : ॥ मत्सरंहर्षहेतुमितिवेदभाष्यम् ॥ आत्मधिक्कारविशेषे ॥ यथा । निन्दन्तिमांसदालोकाधिगस्तुममजीवनम् । इत्यात्मनिभवेद्यस्तुधिक्कार : सचमत्सर : ॥

मत्स्य :

मत्सरा । स्त्री० मक्षिकायाम् ॥
मत्सरी । त्रि० अन्यशुभद्वेषिणि । कर्ण्णजपे । दुर्जने । पिशुने । सूचके । नीचे । द्विजिह्वे । खले ॥ मत्सरोऽस्त्यस्यास्मिन् वा । इनि : ॥
मत्सी । स्त्री० मत्स्यस्त्रियाम् ॥ मत्स्यशब्दात्स्त्रीत्वेच्छायांगौरादित्वान् ङीषि०सूर्य्यतिष्येतियलोप : । सचमत्स्यस्यङ्यांसिद्ध : ॥
मत्स्य : । पुं० मीनान्तरे । अभिख्यःयादवे । नारायणे ॥ द्वादशराशौ । मीने ॥ अष्टादशपुराणान्तर्गतेचतुर्द्दशसहस्रश्लोकात्मकेपुराणविशेषे ॥ दशावतारान्तर्गतप्रथमावतारे ॥ मत्स्या : भूम्नि । देशविशेषे ॥ पुलिन्दादुत्तरेभागेकक्षाश्चपश्चिमेशिवे । मत्स्यदेश:समाख्यातोमत्स्यबाहुल्यकारक: ॥ मत्स्यानांनिवासोजनपद:मत्स्या: । अणोलुप् । लुपियुक्तवद्भाव: ॥ देशविशेषे ॥ विराटनगरे ॥ माद्यति । मदी० । ऋतन्यञ्जीतिमदे : स्यन् । जनिदेत्यादिना० स्योवा । स्वरेभेद : ॥ पुं० स्त्री० जलजन्तुविशेषे । पृथुरोम्णि । झषे । मीने । वैसारिणे । अण्डजे । मच्छी० इ० भाषा ॥ रोहिताद्यास्तुये जीवास्ते मत्स्या : परिकीर्त्तिता : ॥ अथ तेषां गुणा: । यथा । मत्स्या: स्निग्धोष्णमधुरा:

मत्स्य :

गुरव : कफपित्तला : । वातघ्नाबृंहणावृष्यारोचकाबलवर्द्धना : ॥ अध्वव्यवायसक्तानांदीप्ताग्नीनाञ्चपूजिता : ॥ शुष्कमत्स्यानवल्या : स्युर्दुर्जराविड्विबन्धना : ।दग्धमत्स्योगुणै : श्रेष्ठ : पुष्टिकृद्बलवर्द्धन : ॥ सूक्ष्ममत्स्यास्तु । भर्जितास्तिलतैलेनसर्वसम्भारसम्भृता: । सूक्ष्मामत्स्या : स्वादुरसादोषत्रयनिवर्हणा : । परंसूक्ष्मास्तुयेतेषु तेसर्वे पुंस्त्वनाशना: ॥ अथकूपादिमत्स्यानांगुणा : । कौपमत्स्या : शुक्रमूत्रकृच्छ्रघ्नाविबन्धदा : । सरोजामधुरा : स्निग्धाबल्यावातविनाशना : ॥ नादेयाबृंहणामत्स्या गुरवोनिलनाशना : ॥ रक्तपित्तकराव्रष्या : स्निग्धोष्णा : स्वल्पवर्च्चस : ॥ चौडा : पित्तहरा : स्निग्धामधुरालघवोहिमा : । ताडागागुरवोवृष्या : शीतलाबलमूत्रदा : ॥ ताडागवन्निर्झरजाबलायुर्मतिदक्करा : ॥ अथर्त्तुविशेषेमत्स्यगुणा : । यथा । हेमन्ते कूपजामत्स्या : ० शिशिरेसारसाहिता : । वसन्तेतुनादेयाग्रीष्मे चौञ्जासमुद्भवा : ॥ तडागजास्तेवर्षामुताश्चपथ्यानदीभवा : । नैर्झरा : शरदिश्रेष्ठाविशेषोयमुदाहृत : ॥ अपिच । नि : शल्कानि

न्हितामत्स्या : सर्वे शल्कयुताहिता : । वपु : स्थैर्य्यकारावीयं बल पुष्टिविवर्द्धना : ॥ कुद्रकुल्याजल निर्भरतडागवापीजलेषु येमत्स्या: । तेऽतिजडानादेयास्तास्तरंलघुतरास्तुदेया : ॥ चाराम्बुमत्स्या गुरवोविदाहिनोविष्टंभदास्ते लवणार्णवादिजा : । नानाश्रिता : स्वादुजलस्थितात्र्यपिच्चेयाजडास्तेपितथाश्रिताइमे ॥ क्षुद्रमत्स्या : स्वादुरसादोषत्रयविनाशना : । लघुपाकारुचिकरा : सर्वदातेहितामता : ॥ अतिसूक्ष्मा : पुंस्त्व हराकच्या : कासानिलापहा : । मत्स्याण्डगुणास्तु । मत्स्यग र्भोभृशंहृष्य : स्निग्ध : पुष्टिकरो गुरु : । कफमेद : प्रदोवल्योग्लानिकर्म्महनाशन : ॥ अथरन्धन प्रकारा : । मत्स्यखण्डानिसङ्घ्य प्रक्षालयेत्प्रथमंजलै : । ततोवेशनतक्राभ्यांबहुश : क्षालयेतपुन: ॥ गन्धनाशनप्रकारस्तु । हरिद्रा शुण्ठीधान्याककटुतैलैर्विमर्दयेत् । प्रक्षाल्यहिङ्गुनालिम्पेद्गन्धस्तेनोपशाम्यति ॥ मत्स्योत्तमरन्धनन्तु । तप्ततैलेक्षिपेद्धान्यकास मर्दसहिङ्गुकम् । भृष्टंसलवणंतक्रेमत्स्यंक्षिप्त्वापुन: पचेत् । अर्द्धपक्वेक्षिपेद्दग्धंसिद्धचूर्णन्तुनागरम् । दग्धंहिङ्गुविनि: क्षिप्यसाधयेन्मत्स्य मुत्तमम् ॥ मत्स्यपिष्टिकातु । गत त्वक्कण्टकोमत्स्योवेसवारेणसंयुत : । शिलायांपेषितोभूय : प्रोच्यतेमत्स्यपिष्टिका ॥ तैलेविपाचयेत्प स्वाच्चतुर्थंसाम्लसंयुतम् । वेसवारेणसंयुक्तंशिलायांपेषयेत्पुन : ॥ अनयापूर्ववत्कुर्य्यान्मांसस्येवप्रकारका : । वटिकावटकाद्याश्चसूपकारधियोचिता : ॥ मत्स्यपूरणम् । तक्रेणस्विन्नमत्स्यस्यखण्डान्प्रक्षाल्य पेषयेत् । वीजपूरार्द्रमरिचैर्हिङ्गुसैन्धवजीरकै : ॥ संयुक्तकटुतैलाद्यैर्घृतेपक्त्वाथचूर्णयेत् ॥ मत्स्यपुटपाकस्तु । गतत्वक्क्षालितंमत्स्यंकदलीफलवेष्टितम् । मृदालिप्तंपुटेपक्वंसंस्कृतंदाडिमादिना ॥ यच्चमत्स्यंपुटेपक्वंजीरतण्डुललेपितम् । तापिकायांपुन : पक्वंसंमिश्रंमरिचादिना ॥ केचिद्वदन्त्यमृतमस्तिपुरेसुराणांकेचिद्वदन्तिवनिताधरपल्लवेषु । ब्रूमोवयंसकलशास्त्रविचारबुद्ध्या- जम्बीरनीरपरिपूरितमत्स्यखण्डे- तिमणिमिश्र : ॥ मत्स्यभक्षणनिषेधो यथा । योयस्यमांसमश्नातिसत- न्मांसादउच्यते । मत्स्याद : सर्वमांसादस्तस्मान्मत्स्यान्विवर्ज्जयेत् ॥ विन्ध्यस्यपश्चिमेभागेमत्स्यभुक्पतितो- भवेत् । अन्यत्रकामतोजग्ध्वासोपवा

समत्स्याश्चंवसेत्॥ अत्रानतस्तदर्ह्नम् । मत्स्यभक्षणप्रतिप्रसवो यथा । मत्स्यान्सशल्कान्भुञ्जीतमांसरौरवमेव । निवेद्यदेवताभ्यस्तुब्राह्मणेभ्यस्त्वनान्यथा ॥ सफरंसिंहतुण्डञ्चतथापाठीनरोहितौ । मत्स्यास्त्वेतेसमुद्दिष्टाभक्षणायतपोधनैः ॥ प्रोक्षितभक्षयेदेषांमांसञ्चद्विजकाम्यया । यथाविधिनियुक्तश्चप्राणानामपिचात्यये ॥ इतिकौर्मेउपरिभागे १६ अध्याय : ॥ अपिच । पाठीनरोहितावाद्यौनियुक्तौहव्यकव्ययो: । राजीवान्सिंहतुण्डांश्चशल्कांश्चैवसर्वश : ॥ इतिमनु : ॥ अनिवेद्यनभोक्तव्यंमत्स्यंमांसञ्चयद्भवेत् । अत्र विष्ठापयोमूत्रं यद्विष्णोरनिवेदितम् ॥

मत्स्यकरण्डिका । स्त्री० मत्स्यरक्षणपात्रे । मत्स्याधान्याम् । कुवेण्याम् । खालु इ० इ० गौ० दे० भा० ॥

मत्स्यगन्धा । स्त्री० व्यासदेवस्यमातरि ॥ तोयपिप्पल्याम् । लाङ्गल्याम् ॥ मत्स्यस्यगन्धइवगन्धोऽस्या : । उपमानाच्च तिइत्त्वाभावश्छान्दस : ॥

मत्स्यगर्भ : । पुं० मत्स्यांडे ॥

मत्स्यघण्ट : । पुं० मत्स्यघटितव्यञ्जनविशेषे । गलग्रहे ॥

मत्स्यजालम् । न० आनाये । जाले ॥

मत्स्यगण्डिका । स्त्री० मत्स्यण्डाम् । राव० इ० भा० ॥ मत्स्यण्डिकाखंडसिता : क्रमेणगुणवत्तरा इतिवाग्भट : । मत्स्यण्डीव । स्वार्थेकन् ॥

मत्स्यण्डी । स्त्री० फाणिते राव० इ० काशीभाषा ॥ तल्लक्षणम् ॥ यथा । इक्षोरसीय : सम्पक्कोघन : किञ्चिद्द्रवान्वित: । मन्दं यत्स्यन्दतेतस्मान्मत्स्यण्डीतिनिगद्यते ॥ मत्स्यण्डीभेदिनीवल्यालघ्वीपित्तानिलापहा । मधुराबृंहणीवृष्यारक्तदोषापहास्मृता ॥ मत्स्याण्डाकारत्वात् मत्स्यंडी । शकन्ध्वादि : ॥ मदंमुदंवास्यन्दते । स्यन्द्‌ प्रस्रवणे । कर्मण्यण् । ङीप् । पृषोदरादि:॥

मत्स्यधानी । स्त्री० मत्स्याधान्याम् । कुवेण्याम् ॥ मत्स्याधीयन्तेऽत्र । करणाधिकरणयोरितिधाञो ल्युट् ॥

मत्स्यध्वज : । पुं० मत्स्याकारेध्वजे ॥ गिरिकामरूपप्रसिद्धे पर्वते ॥ यथा । मणिकूटाचलात्पूर्वेमत्स्यध्वजकुलाचल : । निर्दग्धोयत्रमदनोहरनेत्राग्निनापुनरित्यादिकालिकापुराणे ॥ ८१ ऽध्यायेऽस्ति ॥

मत्स्यनाशक : । पुं० कुररपक्षिणि । त्रि० मीननाशकर्त्तरि ॥

मत्स्यनाशन : । पुं० कुररपक्षिणि ॥

मत्स्यपित्ता । स्त्री० कटुरोहिण्याम् कृष्णभेद्याम् । कटुक्याम् । मत्स्यानांपित्तमिवतत्स्वादुत्वात् ॥

मत्स्यप्रलेह : । पुं० मत्स्यस्यव्यञ्जनान्तरे ॥ विशेष ; प्रलेहे ॥

मत्स्यबन्धी । पुं० कैवर्त्ते । धीवरे ॥

मत्स्यबन्धनी । स्त्री० कुवेण्याम् । मत्स्याधान्याम् ।

मत्स्यमण्डक : । पुं० व्यञ्जनान्तरे । मत्स्यस्यपिष्टिकांकृत्वापर्णस्थांमण्डलाकृतिम् । आसुरेणसमुत्स्विन्नांसंयुक्तांधूलनेनतु ॥ मत्स्यमण्डकइत्युक्त : सूदशास्त्रे विचक्षणै : ॥

मत्स्यरङ्ग : । पुं० )
मत्स्यरङ्गक : । पुं० ) पक्षिविशेषे । मत्स्याशिनि । जलमङ्गौ । मणीचके । माचराङ्गा०इ०गौ०दे०भा० । मच्छंरङ्ग०इ०दे०भा० ॥

मत्स्यराज : । पुं० विराटनृपे । रोहितमत्स्ये ॥ मत्स्यानांराजा । टच् ॥

मत्स्यविन्ना । स्त्री० कटुकायाम् ॥

मत्स्यवेधनम् । न० वडिशे ॥ विध्यतेनेन । विधविधाने । करणेतिल्युट् । मत्स्यानांवेधनम् ॥

मत्स्यवेधनी । स्त्री० मद्गुपक्षिणि ॥ वडिशे ॥

मत्स्यसन्तानिक : । पुं० मत्स्यव्यञ्जनविशेषे ॥ यथा । दग्धोङ्गारेसलवणोवेसवारैरुपस्कृत: । सार्द्रक : कटुतैलेनमत्स्यसन्तानिकोभवेत् ॥

मत्स्यसुता । स्त्री० उत्तरायाम् । परीक्षिन्मातरि ॥ सत्यवत्याम् ॥

मत्स्याक्षी । स्त्री० तोयपिप्पल्याम् ॥ सोमलतायाम् । ब्राह्म्याम् । यथा ब्राह्मीवयस्थामत्स्याक्षीमीनाक्षीसोमवल्लरी । मत्स्याक्षीशिशिरारुच्याव्रणदोषक्षयापहा ॥ इतिराजनिघण्ट : ॥ गण्डदूर्वायाम् ॥ हिलमोचिकायाम् ॥ मत्स्यस्याक्षीवपुष्पमस्या : । मत्स्यशब्द : स्वासावयवेगौण : । बहुव्रीहौषाविति षच् । ङीष् ॥ मच्छेक्षी०इतिलोकप्रसिद्धौषधौ ॥ मत्स्याक्षीग्राहिणीशीताकुष्ठपित्तकफास्रजित् । लघुस्तिक्ताकषायाचस्वाद्वीकटुविपाकिनी ॥

मत्स्यात्खग : । पुं० मत्स्यान्अत्ति । अद० । क्विप् । मत्स्याच्चासौखगश्च ॥

मत्स्यादनी । स्त्री० लाङ्गल्याम् । तोयपिप्पल्याम् । मत्स्याच्याम् ॥ मत्स्यैरद्यते । अद० । ल्युट् । क्विप् । ङीप् ॥

मत्स्याधानी । स्त्री० मत्स्यरक्षार्थपात्रे । कुवेण्याम् । खारयी०खालुइ०इ०गौ०देशभा० ॥ मत्स्याआधीयन्तेऽत्र । डुधाञ्० । करणाधिकरणयोरितिल्युट् ॥

मत्स्याशन : । पुं० मत्स्यरङ्कविहङ्गमे ॥

मत्स्योडरी । स्त्री० मत्स्यव्यञ्जनान्तरे ॥ कासमर्दकचूर्णेनमत्स्यपिष्टिनियोजिता । भर्जिताकटुतैलेनमत्स्योडरीइतीरिता ॥

मत्स्योदरी । स्त्री० सत्यवत्याम् । व्यासमातरि । काशीस्थतीर्थविशेषे ॥

मथन : । पुं० गणिकारिकायाम् ॥ न० दध्यादिविलोडने । विलोडना० इ०भा० ॥ मथति । मथ विलोडने । ल्युट् ॥

मथितम् । न० निर्जलसरोवर्जितेविलोडितेदधिनि ॥ सरोदकविहीनन्तुमथितंकफपित्तनुत् । त्रि० आलोडिते ॥ घृष्टे । निघृष्टे ॥ मथ्यतेस्म मथ० । क्त : ॥

मन्थ : । पुं० मन्थानदण्डे ॥ मथ्यतेऽनेन । मन्थविलोडने । मन्थइति० इनि : कित् । कित्त्वान्नलोप : ॥ मन्थामन्थानदण्डेचवज्रेवातेपिच-स्मृत : ॥

मथुरा । स्त्री० मधुपुर्याम् । श्रीकृष्णजन्मभूमौ । मधुरायाम् ॥ मथति । मथि० । मन्दिवाशिमथिचतिच्युरच् ॥ मथुरानविलोमेनसध्यमोनंयदक्षरम् । योनस्मरतिलोकेस्मिंस्तन्मध्यंतन्मुखोपरि ॥

मथुरेश : । पुं० श्रीकृष्णे ॥

मथूरा । स्त्री० मथुरायाम् ॥

मद : । पुं० रेतसि ॥ कस्तूर्याम् ॥ गर्वे । अहङ्कारे ॥ विद्यामदोधनमदस्तथैवाभिजनोमद: । एतेमदामदान्धानांतएवहिसतांदमा: ॥ हर्षे । आमोदे ॥ इभदाने । गजगण्डजले । दाने ॥ यथा । करात्कटाभ्यांमेढ्राच्चनेत्राभ्याञ्चमदस्रुति: । करान्नासारन्ध्राभ्याम् ॥ मद्ये ॥ मादकद्रव्यसेवनजन्यविकारविशेषे ॥ क्षैब्ये । मत्ततायाम् ॥ यथा । स्वामदात्प्रकृतिमेतिहिसर्व: इतिस्वाभाविकधर्म्मप्रकाशनंमदधर्म्म: उत्कर्षरहितत्वेप्युत्कर्षविशेषाध्यारोपे ॥ अशास्त्रीयविषयसेवनोन्मुखत्वे ॥ मदनम्० माद्यत्यनेनवा । मदीहर्षे । मदोऽनुपसर्गइत्यप् ॥ मदयतिवा । अच् ॥ नदे ॥ कल्याणवस्तुनि ॥ इतिधरणि : ॥ बुद्धेर्मोह : समभवदहङ्कारादभून्मद : । तल्लक्षणं यथा । अहंमहात्माधनवान्मत्तुल्य : कोस्तिभूतले । इतियज्ञायतेचित्तेमद: प्रोक्त : सकोविदै : ॥

मदक : । पुं० मध्वासवे ॥

मदकट : । पुं० षण्डे । गोपतौ ॥

मदकर : । पुं० आनन्दजनके ॥

मदकल: । पुं० अल्पमदगजे । मदोत्कटे ॥ त्रि० मदेनाव्यक्तवचने । मदेनकलते । कलशब्दसङ्ख्यानयो:। अच् ॥ मदेसति कलोध्वनिर्यस्येतिवा ॥

मदगन्ध: । पुं० सप्तच्छदवृक्षे ॥ मदसदृशोगन्धोस्य ॥

मदगन्धा । स्त्री० सुरायाम् ॥ अतस्याम् ॥

मदगमना स्त्री० महिष्याम् ॥

मदघ्नी । स्त्री० पूतिकायाम् ॥

मदच्युत् । पुं० अमृतरसच्यावयितरि० अमृतरूपेसोमे ॥ मदंमदकरमानन्दकरंरसममृतरूपंच्यावयत्यसौमदच्युत् ॥

मदन: । पुं० मन्मथे । कामदेवे ॥ वसन्ते ॥ धूस्तूरे ॥ पीण्डीतके । मरुवके । श्वसने । मयनफलइतिभाषा ॥ मदनोमधुरस्तिक्तोवीर्योष्णोलिखनोलघु: । वान्तकृद्विद्रधिहर: प्रतिश्यायव्रणान्तक: ॥ रूक्ष: कुष्ठकफानाहशोथगुल्मव्रणापह: ॥ सिक्थके । मधूच्छिष्टे । मेंण० मोम० इतिचभाषा ॥ मदनंमृदुसुस्निग्धंभूतघ्नंव्रणरोपणम् । भग्नसन्धानकृद्वातकुष्ठवीसर्परक्तजित् ॥ माषे ॥ खदिरे ॥ लग्नात्सप्तमभवने ॥ आलिङ्गनविशेषे । तत्स्वरूपंयथा । नायकोनायिकाया: कण्ठेहस्तंदत्त्वा० द्वितीयहस्तंतस्यामध्यदेशेदत्त्वायदाश्लिष्यति० इति कामशास्त्रम् ॥ मदयति मदीहर्षग्लेपनयो: । ल्यु: ॥ न० जले ॥

मदनकाकुरव: । पुं० पारावते ॥

मदनगृहम् । न० लग्नात्सप्तमचक्रे ॥ मात्रावृत्तप्रभेदे ॥ यथा । प्रथमंकुरुषट्कलमन्तेकुण्डलमिहमध्येवसुतुरगधरंसन्तापहरम्० दशवसुभुवनाष्टभिरत्रचरणमभिभवतित्रिरामोयदिललितंकविवलयहितम् फणिनायकभणितंजगणविरहितंचतत्वारिंशत्कलकलितंभुविसहितम्० वृत्तंरसनिवहंतन्मदनगृहंनरपतिसंसदिलब्धपदंगुरुशोकगदम् ॥ यथा । विरहानलतप्तासीदतिमुग्धारचितनलिनदलतल्पतलेमरकतविमले० करकल्पितकपोलंगलितनिचोलंनयर्यतिसततरुदितेननिशाम् निमिषहगा । नमखीमभिनन्दतिरुजमनुविन्दतिनिन्दतिहिमकरकरनिकरंपरितापकरम्० मनुतेहृदिभारंमुक्ताहारंदिवसनिशाकरदीनमुखीजीवितविमुखी ॥

मदनगोपाल: । पुं० श्रीकृष्णे ।

मदनचतुर्दशी । स्त्री० चैत्रशुक्लचतुर्दश्याम् ॥

मदनत्रयोदशी । स्त्री० चैत्रशुक्लत्रयो-

दश्याम् ॥
मदनद्वादशी । स्त्री० चैत्रशुक्लद्वादश्याम् ॥
मदनपाठक: । पुं० कोकिले ॥
मदनभवनम् । न० लग्नात्सप्तमस्थाने ॥
मदनमोहन: । पुं० श्रीकृष्णे ॥
मदनरस: । पुं० शृङ्गारे ॥
मदनललिता । स्त्री० अष्टिसंज्ञकच्छन्द: १६ प्रभेदे ॥ म्भौनोम्नौगोमदन ललितावेदै: षड्ऋतुभि: । यथा। विभ्रष्टस्रग्गलितचिकुराधौताधरपुटा०म्लायत्पत्रावलिकुचतटोच्छ्वासोर्मितरला । राधात्यर्थमदन ललितान्दोलाऽलसवपु: ० कंसारातेरतिरसमहोचक्रेऽतिचटुलम्॥
मदनलव: । पुं० अस्तांशे ॥ मदनस्य लव: ॥
मदनशलाका । स्त्री० कामोद्दीपकभेषज्ये ॥ सारिकायाम् ॥ कोकिलायाम् ॥
मदनसारिका । स्त्री० पक्षिप्रभेदे । सारिकायाम् । चित्रलोचनायाम् । सालिक्० इ० गौ० भा०
मदना । स्त्री० सुरायाम् ॥
मदनायक: । पुं० कोद्रवे ॥
मदनाङ्कुश: । पुं० नखे ॥ लिङ्गे ॥
मदनाडी । स्त्री० गजदानशिरायाम् ॥ ताश्चसप्तयथाहपाल: । करात्कटाभ्यांमेढ्राच्चनेत्राभ्याञ्चमदच्युतिरिति ॥
मदनायुध: । पुं० भगे ॥ योनौ ॥
मदनायुष: । पुं० कामवृद्धिक्षुपे ॥
मदनालय: । पुं० कुसुमधनुषोमन्दिरे । स्मरागारे । भगे ॥ मदनभवने ॥
मदनावस्था । स्त्री० उद्वेगरूपायांकामावस्थायाम् ॥ कथंतस्यालाभोभविष्यतीति ॥
मदनी । स्त्री० सुरायाम् ॥ कस्तूर्याम् ॥ अतिमुक्तके ॥
मदनीय: । त्रि० मदकारिणि । मदयति । मदी० । कृत्यल्युटोबहुलमिति कर्त्तरि अनीयर् ॥
मदनीया । स्त्री० धातक्याम् ॥
मदनेच्छाफल: । पुं० वृक्षरसाले ॥
मदनोत्सव: । पुं० सुवसन्तके । होलाकायाम् । होली० इ० भा० ॥
मदनोत्सवा । स्त्री० स्वर्गवेश्यायाम् ॥
मदप्रयोग: । पुं० करिणांमदोद्गमे । व्यसारे ॥
मदनभञ्जनी । स्त्री० शतमूल्याम् ॥
मदमूढबुद्धि: । त्रि० मदेनविपरीतप्रवृत्ते ॥ मदमूढबुद्धिषुविवेकिताकुत: ॥
मदयन्तिका । स्त्री० मल्ल्याम् ॥
मदयन्ती । स्त्री० मल्ल्याम् ॥ वनमल्लिकायां ॥

मदयिता । त्रि० मादके ॥ मदयति । मदी० । लट : शत ॥

मदयित्नु : । पुं० कामदेवे ॥ शौण्डिके ॥ मेघे ॥ न० मद्ये ॥ मदयति । हर्षयति० ग्लपयतिवा । मदी० । स्तनिहृषिपुषिगदिमदिभ्योणेरित्नुजिति० इत्नुच् । णेरयादेश : ॥

मदलेखा । स्त्री० उष्णिक् ७ छन्द : प्रभेदे ॥ ममगा : स्यान्मदलेखा । यथा । रङ्गे बाहुविलग्नाद्दन्तीन्द्रान्म दलेखा । लग्नाभून्मुरशत्रौकस्तूरीरसचर्चा ॥

मदविक्षिप्त : । पुं० मत्तहस्तिनि ॥

मदव्यायाम : । पुं० मदाधिक्ये ॥

मदशाक : । पुं० उपोदक्याम् ॥

मदसार : । पुं० तूदवृक्षे । ब्रह्मकाष्ठे ॥

मदस्थलम् । न० )
मदस्थानम् । न० )मद्यपानस्थले । शुण्डायाम् । पानगृहे ॥

मदहस्तिनी । स्त्री० महाकरञ्जे ॥

मदहेतु : । पुं० धातक्याम् ॥ मदस्य-कारणे ॥

मदाढ्य : । पुं० तालवृक्षे ॥ त्रि०मद युक्ते ॥

मदाढ्या । स्त्री० लोहितभिण्ड्याम् ॥

मदातङ्क : । पुं० मदात्ययरोगे ॥

मदात्यय : । पुं० मद्यपानजन्यरोगविशेषे । पानात्यये । मदव्याधौ ॥

निदानानितु । विषस्ययेगुणादृष्टा : सन्निपातप्रकोपणा : । तएवमद्येदृश्यन्ते विषे तुबलवत्तरा : ॥ तस्मादविधिपीतेनतथामात्राधिकेनच । युक्तेनचाहितैरन्नै रकालेसेवितेनच । मद्येनखलुजायन्ते मदात्ययमुखागदा : ॥ अविधिप्रयुक्तंमद्यंविकारान्तरमप्युत्पादयतीत्याह । निर्भुक्तएकान्ततएवमद्यं निषेव्यमाणं मनुजेननित्यम् । उत्पादयेत्कष्टतमान् विकारानुत्पादयेच्चापिशरीरभेदम् ॥ इत्यन्तरमप्याह । क्रुद्धेनभीतेनपिपासितेनशोकाभितप्ते नबुभुक्षितेन । व्यायामभाराध्वपरिक्षतेनवेगावरोधाभिहितेनचापि ॥ अत्यम्लभक्षावततोदरेणसाजीर्णभुक्तेनतथाऽबलेन । उष्णाभितप्ते नच सेव्यमानं करोतिमद्यं विविधान्विकारान् ॥ तेचविकाराग्रन्थान्तरेद्रष्टव्या : ॥ चिकित्सातु । मद्योत्थानान्तुरोगाणांमद्यमेवहिभेषजम् । यथादहनदग्धानांदहनं स्वेदनं हितम् ॥ मिथ्याविहितमद्येनयोव्याधिरुपजायते । मद्येनैवनिपीतेनमद्येनसहशाम्यति ॥ विशेषोन्यत्रद्रष्टव्य : ॥

मदामद : । पुं० परमेश्वरे ॥ आत्मनि ॥ आत्माहिसमदोऽमदश्च०सहर्षोऽहर्ष श्च० विरुद्धधर्मवानतोदेशि

कोपदेशं विनाऽशक्योज्ञातुम् ॥

मदाम्रात : । पुं० गजढक्कायाम् । हा घोपरकाडङ्का०इ०भा० ॥

मदाम्बर : । पुं० मत्तहस्तिनि ॥

मदायुधः । पुं० चतुर्दन्ते । ऐरावते ।

मदारः । पुं० द्विरदे । हस्तिनि ॥ शूकरे ॥ धूर्त्ते ॥ कामुके ॥ मत्तहस्तिनि । गन्धभेदे ॥ नृपान्तरे ॥ माद्यति । मदी० । अगिमदिमन्दिभ्यश्चारन् ॥ वस्त्रनविशेषे ॥

मदामर्द : । पुं० मल्लभेदे । राजयीवे ॥

मदालसा । स्त्री० मार्कण्डेयपुराणप्रसिद्धायामृगन्धर्वकन्यायाम् ॥ययापुत्रस्तारित : ॥

मदालापी । पुं० कोकिले ॥

मदाश्रय : । त्रि० मदैकशरणे ॥

मदाह्वय : । पुं० कस्तूर्याम् ॥

मदिर : । पुं० रक्तखदिरे ॥ मदयति । मदि० । किरच् ॥

मदिरा । स्त्री० मादकद्रव्यविशेषे । सुरायाम् । हलिप्रियायाम् । वरुणात्मजायाम् । गन्धोत्तमायाम् । प्रसन्नायाम् । कादम्बर्याम् । इरायाम् । मद्ये । सुप्रतिभायाम् । मोदिन्याम् । महानन्दायाम् । मैरेये । देवसृष्टायाम् । अब्धिजायाम् । द्वादशविधेयं यथा । माध्वीकंपानसंद्राक्षंखार्जूरंतालमैक्षवम् । मैरेयंमाक्षिकंटाङ्कंमधूकंनारकेलजम् ॥ मुख्यमन्नप्रकारोत्थंमद्यानिद्वादशैवच ॥ ऋतुविशेषेपेयमदिरायथा । गौडीतुशिशिरेपेया०पैष्टीहेमन्तवर्षयो : । शरद्ग्रीष्मवसन्तेषुमाध्वीग्राह्यानचान्यथा ॥ कादम्बरीशर्करजादिमद्यं सुशीतलंवृष्यकरंमदाढ्यम् । माध्वीसमंस्यात्तृणद्रुमजातंमद्यंसुशीतंगुरुतर्पणञ्च ॥ अन्यथाकुरुतेपानंमद्यंसन्तापशोषदम् । अन्नदोषमदात्यादिकारकंमूर्च्छनञ्चतत् ॥ नवजीर्णमद्यगुणास्तु । मद्यंनवंसर्वविकारहेतुसर्वस्तुवातादिकदोषदायि । जीर्णंतुसर्वंसकलामयघ्नंघृणप्रदंवृष्यकरञ्चदीपनम् ॥ मद्यप्रयोगंकुर्वन्तिशूद्रादिषुमहर्त्तिषु । द्विजैस्त्रिभिस्तुनयाह्यंयद्यप्युज्जीवयेन्मृतम् ॥ गौडीपैष्टीतथामाध्वीत्रिविधाचोत्तमासुरा । सैवनानाविधाप्रोक्तातालखर्जूरसम्भवा ॥ तथादेशविभेदेननानाद्रव्यविभेदत : । वहुधेयंसमाख्याताप्रशस्तादेवतार्चने ॥ अन्येद्वादशधामद्यभेदानाहुर्मनीषिण: । उक्तस्यान्तर्भवन्तीतिनान्येषांपृथगीरितम् ॥ प्रायशोभिनवंमद्यंगुरुदोषलमीरितम् । स्रोतसांशोधनंजीर्णंदीपनंलघुरोचनम् ।

हर्षणं प्रीणनं बल्यं मत्यं शोकश्रमापहम्। प्रागल्भ्यप्रतिभापुष्टिवीर्य तुष्टिस्वरप्रदम्॥ अपिच। सम्यग् विधिविधानेनसुसमाहितचेतसा। पिबन्तिमदिरांमर्त्याअमर्त्याएवते चिती॥ आकृतिच्छन्दः २२ प्रभेदे॥ यथा। सप्तभकारयुतैक गुरुर्गदितेयमुदारतरामदिरा। यथा। माधवमासिविकस्वरकेशर पुष्पलसन्मदिरामुदितैर्भृङ्गकुलैरुपगीतवनेषनमःलिनमालिकलानिलयम्। कुञ्जगृहोदरपल्लवकल्पित तल्पमनल्पमनोजरसंत्वंभजमाध विकांमृदुनर्त्तनयामुनवातकृतोपगमा॥ माद्यत्यनया। मदीरष्.। इषिमदिमुदीत्यादिनाकिरच्॥ मत्तखञ्जने॥

मदिराक्षी। स्त्री० मत्तनेत्रायाम्॥ मदिरावदक्षिणीयस्याः सा। यथा। अविदितसुखदुःखंनिर्गुणंवस्तु किञ्चिज्जडमतिरिहकश्चिन्मोक्षइत्याचचक्षे। ममतुमतमनङ्गस्मेरतारुण्यघूर्णन्मदकलमदिराक्षीनीविमोक्षोहिमोक्षः॥ इतिविटोक्तिः॥

मदिरागृहम्। न० गञ्जायाम्। मद्यसंधानगृहे॥ मदिरायाः गृहम्॥

मदिरासखः। पुं० आम्रवृक्षे॥

मदिष्ठा। स्त्री० मदिरायाम्॥

मदी। स्त्री० चषकवस्तुनि॥ कृष्यङ्गे॥

मदीयम्। त्रि० मत्करे। हर्षोत्पादके। मदीयंसरः इतिषेदेदर्शनात्॥ मामके॥ ममेदम्। छः। मपर्यन्तस्यमादेशः॥

मदोत्कटः। पुं० चन्समदैहस्तिनि। मदकले॥ मदेनदानेनाम्बुना० उत्कटः मत्तः॥ त्रि० मदमत्ते॥

मदोत्कटा। स्त्री० मदिरायाम्॥ मदेनोन्मत्तायाम्॥ मदेनउत्कटा॥

मदोदग्रः। त्रि० मदोन्मत्ते॥

मदोदया। स्त्री० नार्याम्॥

मद्गतप्राणः। त्रि० मद्गजनार्थजीवने॥ मद्गताः प्राणायस्य॥

मदोद्धतः। त्रि० मत्ते॥ मदः पौरुषादिधर्मः तेनउद्धतः॥

मद्गुः। पुं० कारण्डवे॥ जलकाके॥ मज्जति। टुमस्जोशुद्धौ। भृमृशीत्यु:। न्यङ्क्वादित्त्वात्कुत्वम्। सप्वजश्त्वेनदः॥ ब्राह्मणेनवन्दिभार्यायांजनिते॥

मद्गुरः। पुं० मगुरी० मागुर० इ० ख्यातेमत्स्ये॥ मज्जति। टुमस्जो०। मद्गुरादयश्चेतिनिपातितः। यद्वा। माद्यति। मदी०। मद्गुरादयश्चेत्युरच्० धातोर्गुरादेशः। मद्गुरोवातहृद्वृष्योबल्यः कफकरोलघुः॥ मद्गुरः खण्डरहितः कटुतैलेसुभर्ज्जितः। मागिमन्थनिशायुक्तोहिङ्गुनाधूपितेरसः। मद्गुरो-

वातहापथ्योरुच्योबष्योबलः प्रदः । अग्निसन्धननीहृद्यस्तद्दुक्ताचशृङ्गिका ॥

मद्गुरकः । पुं० मद्गुरमीने ॥

मद्गुरसी । स्त्री० शृङ्ग्याम् ॥

मद्गतः । त्रि० प्रेमृणामप्यनुरक्ते ॥

मद्यम् । न० सुरायाम् ॥ माद्यन्त्यनेन । मदी० गदमदचरेत्यादिनायत् ॥ अस्यलक्षणादि यथा । पेयंयन्मादकं लोकैस्तन्मद्यमभिधीयते। यथारिष्टं सुरासीधुरासवाद्यमनेकधा ॥ गौडीपैष्टीतथामाध्वीत्रिविधा चोत्तमासुरा। सैवनानाविधाप्रोक्ता तालखर्जूरसम्भवा ॥ तथादेशविभेदेननानाद्रव्यविभेदतः । बहुधेयंसमाख्याताप्रशस्तादेवतार्चने ॥ तद्द्वादशविधंयथाहपुलस्त्यः । पानसद्राक्षमाधूकंखार्जूरंतालमैक्षवम् । माध्वीकंटाङ्कमार्द्वीकमैरेयंनारिकेलिजम् ॥ समानानिद्विजातीनांमद्यान्येकादशैवतु । द्वादशन्तुसुरामद्यंसर्वेषामधमंस्मृतम् ॥ मद्यंसर्वंभवेदुष्णंपित्तकृद्वातनाशनम् । भेदनंशीघ्रपाकञ्चरुक्षंकफहरंपरम् ॥ अम्लञ्चदीपनंरुच्यंपाचनंवासकारिच । तीक्ष्णंसूक्ष्मञ्चविशदंव्यवायिचविकाशिच ॥ मद्यंनवमभिष्यन्दित्रिदोषजनकंसरम् । अहृद्यंबृंहणंदाहिदुर्गन्धंविशदंगुरु ॥ जीर्णंतदेवरोचिष्णुकृमिश्लेष्मानिलापहम् । हृद्यंसुगन्धिगुणवल्लघुस्रोतोविशोधनम् ॥ सात्त्विकादिविभेदेनचेष्टास्तुयामनीषिभिः । त्रिभेदास्तु। पर्यायार्वाग्भवेन्मद्यंतामसंराक्षसप्रियम् । मण्डलार्वाग्राजसंतत्तदूर्ध्वं सात्त्विकंभवेत् ॥ सात्त्विकेगीतहास्यादिराजसेसाहसादिकम् । तामसेनिन्द्यकर्माणिनिद्राञ्चमदिराचरेत् ॥ विधिनामात्रयाकालेहितैरन्नैर्यथाबलम् । प्रहृष्टोयः पिबेन्मद्यंतस्यस्यादमृतंयथा । किन्तुमद्यंस्वभावेनयथैवान्नंतथास्मृतम् । अयुक्तियुक्तंरोगायमुक्तियुक्तंयथामृतम् ॥ मद्यगन्धस्यनाशायउपायोयमुदीर्यते । मुस्तैलवालगन्धजीरकधान्यकैलायसर्वेयन्सदसिवाचमभिव्यनक्ति। स्वाभाविकंमुखजमुज्झतिपूतिगन्धंगन्धञ्चमद्यलशुनादिभवंचनूनम् ॥ *॥ नालिकेरोदकंकांस्येताम्रपात्रेस्थितंमधु । मध्यञ्चताम्रपात्रस्थंमद्यतुल्यंघृतंविनेतिकर्मलोचनम् ॥

मद्यगन्धः । पुं० बकुलद्रुमे ॥

मद्यद्रुमः । पुं० माडे । ध्वजवृक्षे । बितानके ।

मद्यपः । त्रि० सुरापे ॥ सुराव्यतिरिक्तमद्यपातरि ॥

मद्यपङ्कः । पुं० सुराकल्के । मेदके ॥ जगलें । मेया० द्र० गौ० दे० भा०॥

मद्यपाचनी । स्त्री० धातक्याम् ॥

मद्यपाशनम् । न० उपदंशे । अवदंशे । चचणे । पानरोचकभक्ष्ये ॥

मद्यपुष्पो । स्त्री० धातक्याम् ॥

मद्यमण्डः । पुं० सुराग्रभागे । मद्यफेने । कारोत्तरे ॥

मद्यवासिनी । स्त्री० धातकीवृक्षे ॥

मद्यवीजम् । न० नानाद्रव्यकृतसुरावीजे । किण्वे । नग्नहि । वाखर० इ०गौ०दे०भा० ॥ मद्यस्यवीजम् ॥

मद्यसन्धानम् । न० अभिषवे । आसुतौ । मद्यच आवना०इ०भा० ॥

मद्याजी । त्रि० मत्पजापरे ॥ मद्यपं शीलं यस्य । णिनिः ॥

मद्यामोदः । पुं० वकुलवृक्षे ॥ मद्यस्य आमोदोऽस्मिन् ॥

मद्योग : । त्रि० मदेकशरणे । मयि सर्वकर्मसमर्पणं ॥

मद्रः । पुं० हर्षे ॥ देशविशेषे ॥ वैराटपाण्ड्ययोर्मध्येपूर्वदक्षक्रमेण तु । मद्रदेशः समाख्यातोमाद्रीहा तत्रतिष्ठति ॥ मन्दते । मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु । स्फायितञ्चीतिरक् ॥

मद्रक : । त्रि० मद्रदेशभवे ॥ मद्रेषु जात : । कन् ॥

मद्रकार : । पुं० मद्रङ्करे ॥ मद्रं करोति । डुकृञ् । चे मप्रियमद्रेणु चेतिअण् ॥

मद्रङ्करः । त्रि० चे मङ्करे । शङ्करे ॥ मद्रंकरोति । डुकृञ् । चे मप्रियमद्रेणु चेतिखच् ॥

मद्रसुता । स्त्री० माद्याम् । नकुलसहदेवयोर्जनन्यां पाण्डुपत्न्याम् ॥

मद्वान् । पुं० विधौ० । वायसे ॥

मद्वती । स्त्री० शिवायां ॥

मद्वा । पुं० शिवे ॥ माद्यति । मदी० । स्नामदीष्यादिनावनिप् ॥ राजवत् ०रूपाणि ॥

मद्वरी । स्त्री० सुरायाम् ॥ माद्यत्यनया । मदी० । वनिप् । वनोरचेति ङीब्रौ ॥

मद्वर्गीण : । त्रि०<br>मद्वर्गीय : । त्रि०<br>मद्वर्ग्य : । त्रि०<br>मद्वर्गसम्बन्धिनि ॥ शैषिकेष्वर्थेषु० अशब्दे यत्खावन्यतरस्यामित्यनेनक्रमात्०खछयत्प्रत्यया : ॥

मधु : । पुं० मधुद्रुमे । मधूके । महुवा०इ०भा० ॥ वसन्तर्त्तौ ॥ दैत्यविशेषे ॥ यंहत्वा०विष्णुर्मधुसूदनोऽभूत् ॥ चैत्रमासि ॥ जीवाशोके ॥ असुरविशेषे ॥ सचशत्रुघ्नेनहत : । यस्यनाम्नामथुरा०मधुपुरीति ख्यातिंगता ॥ मधुयष्ट्याम् ॥ न० चीरे ॥ जले ॥ मद्ये ॥ मधुररसे ॥ इच्चौ ॥ वर्णवृत्तान्तरे ॥ यथा । इयमपि । लघुमधु ॥ यथा । रतिमय । वरतनु ॥ कर्मफले ॥मन्यन्ते-

एतम् । मनस्त्वाने । फलिपाटीष्णुः धस्मान्तादिश : ॥ पुं॰न॰माद्वीकम-द्ये ॥ पुष्परसे । मकरन्दे । कुसुमासवे । क्षौद्रे । माक्षिके । पुष्पासवे । पवित्रे । पिल्ये । वरटीवान्ते ॥ मक्षिकावरटीभृङ्गवातपुष्परसोद्भवम् । मधुशीतलघुस्वादुरूक्षं ग्राहिविलेखनम् । चक्षुष्यं दीपनं स्वर्यं व्रणशोधनरोपणम् ॥ सौकुमार्यकरं सूक्ष्मं परं स्रोतोविशोधनम् । कषायानुरसं ह्लादिप्रसादजनकं परम् ॥ वर्ण्यं मेधाकरं वृष्यं विशदं रोचनं हरेत् । कुष्ठार्शः कासपित्तास्रकफमेहक्लमक्रमीन् ॥ मेदस्तृष्णावमिश्वासहिक्कातीसारविड्ग्रहान् । दाहक्षतक्षयांस्तत्तु योगवाह्यल्पवातलम् ॥ माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं छात्रमित्यपि । आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥ एषां स्वरूपं विज्ञेयं स्वस्वस्थानेमनीषिभिः ॥ नवं मधु भवेत्पुष्ट्यै नातिश्लेष्महरं सरम् । पुराणं ग्राहकं रूक्षं मेदोघ्नमतिलेखनम् । मधुनः शर्करायाश्च गुडस्यापि विशेषतः । एकसंवत्सरेतीते पुराणत्वं स्मृतं बुधैः ॥ विषपुष्पादपि रसं सविषा भ्रमरादयः । गृहीत्वा मधु कुर्वन्ति तच्छीतं गुणवन्मधु ॥ विषान्वयात्तदुष्णं तु द्रव्यं चोष्णेन वा सह । उष्णार्त्तं त्वोष्णकाले च स्मृतं-

विषसमं मधु ॥ मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः । अर्द्धर्चादिषु पाठात्पुन्नपुंसकयोर्मधुः ॥

मधुः । स्त्री॰ जीवन्तीवृक्षे ॥

मधुकः । पुं॰ खगविशेषे । श्रीवदपक्षिणि ॥ वल्ल्यन्तरे । मधुयष्ट्याम् ॥ वंशपरम्पराशंसके । मागधे ॥ न॰ क्षौतके । मधुयष्टिकायाम् । त्रपुणि ॥ मध्विव । इवे प्रतिकृतौ ॥ इति कन् ॥ यद्वा । मधु॰ मधुरं कायति । कै॰ आतइतिकः ॥

मधुकण्ठः । पुं॰ कोकिले ।

मधुकरः । पुं॰ भ्रमरे । मधुपे । मधु करोति॰ तच्छीलः । कृञोहेत्विति टः ॥ भृङ्गराजे । भृङ्गरा॰ इ॰ भा॰ ॥ कामिनि ॥

मधुकर्कटिका । स्त्री॰ मिष्टबीजपूरे । मधुकर्कट्याम् । मधुकर्कटिकास्वाद्वीरोचनी शीतला गुरुः । रक्तपित्तक्षयश्वासकासहिक्काभ्रमापहा ॥ मधुखर्जूरिकायाम् ॥

मधुकर्कटी । स्त्री॰ मधुकर्कटिकायाम् मधुकाकरीति॰भाषा ॥

मधुका । स्त्री॰ मधुपर्ण्याम् मधुपर्ण्याम् ॥ मधुयष्ट्याम् । टाप् ।

मधुकुक्कुटिका । स्त्री॰ )

मधुकुक्कुटी । स्त्री॰ ) जम्बीरविशेषे । मातुलुङ्गायाम् । सुगन्धायाम् । गिरिजायाम् । पूतिपुष्पिकायाम् ॥

मधुकृत् । पुं० भ्रमरे ॥ मधुकरोति । डुकृञ्० । क्विप् ॥ मधुकरमक्षिकायाम् ॥

मधुकैटभ : । पुं० भृङ्गे । भ्रमरे ॥

मधुकोष : । पुं० मधुमक्षिकाभिः कृतेमध्वाधारे । मधुचाकी० हि० भा० ॥

मधुक्रम : । पुं० मधुपानानुक्रमे । अथवामधुपानक्रमे । मधुवारे । मधुनः क्रमः ॥

मधुक्षीर : । पुं० खर्जूरवृक्षे ॥

मधुखर्जूरिका । स्त्री० मधुकर्कटिकायाम् । कोलकर्कटिकायाम् । माध्वीमधुरायाम् ॥

मधुगन्ध : । पुं० वकुले ॥

मधुगायन : । पुं० कोकिले ॥

मधुगुञ्जन : । पुं० शोभाञ्जनवृक्षे ॥

मधुघोष : । पुं० कोकिले ॥

मधुच्छदा । स्त्री० मयूरशिखायाम् ॥

मधुच्छन्दा: । पुं० ऋषिविशेषे । विश्वामित्रपुत्रे ॥

मधुच्युत् । त्रि० अमृतस्राविणि ॥

मधुजम् । न० सिक्थके ॥

मधुजम्बीर : । पुं० मधुरजम्बीरे ॥

मधुजा । स्त्री० पृथिव्याम् ॥ मधोर्जाता । जनी० । ड : ॥ मत्स्यण्डिकायाम् । सितायाम् ॥

मधुजित् । पुं० विष्णौ ॥ मधुंदैत्यविशेषम्० अजैषीत् । जि० । सत्सू-

द्विषेतिक्विप् । तुक् ॥

मधुतृण : । पुं० न०इक्षौ ॥

मधुत्रयम् । न० मधुरत्रये ॥

मधुदीप : । पुं० कामदेवे ॥

मधुदूत : । पुं० आम्रवृक्षे ॥

मधुदूती । स्त्री० पाटलावृक्षे ॥

मधुद्रु : । पुं० भ्रमरे ॥

मधुद्रव : । पुं० रक्तशिग्रौ ॥

मधुद्रुम : । पुं० मधूके । गुडपुष्पे । महुवा० हि०भा० ॥ मधुनामाद्रुमः ॥

मधुद्विट् । पुं० विष्णौ ॥

मधुधातु : । पुं० स्वर्णमाक्षिके ॥

मधूलि : । स्त्री० खण्डे । खांड हि०-भा० ॥

मधुधेनु : । स्त्री० दानार्थमध्वादिनिर्मितसवत्सायांगवि ॥

मधुनाडी । स्त्री० मध्वाधारच्छिद्रे ॥

मधुनारिकेल : । पुं० माध्वीकफले । मधुफले । बहुकूर्चे । दृढफले । मोहानारल० हि०गौ०दे०भा० । एरनारिकेल० हि०कोंकणदेशभा० ॥ माध्वीकंनालिकेरंफलमतिमधुरंदुर्जरंजन्तुकारिस्निग्धंवातातिसारभ्रमशमनमथध्वंसनंवह्निदीप्त : । भामश्लेष्मप्रकोपंजनयतिकुरुतेचारुकान्तिंबलञ्चस्थैर्यंदेहस्यधत्तेधनमदनकलावर्द्धनंपित्तनाशम् ॥

मधुनी । स्त्री० क्षुपविशेषे । घृतमण्डायाम् । वायसोल्याम् । सुमङ्ग

लायाम् । माकण्डहाता० इ० माक चाउली० इ० च० गौ० दे० भा० ॥
मधुनेता । पुं० भ्रमरे ॥
मधुपः । पुं० भ्रमरे ॥ मद्यपे ॥ मधु-पिबति । पा० । आतोमेपसर्गे० इति कः । पिबतेः सुरासीध्वोरिति-नियमान्नटच् ॥
मधुपतिः । पुं० श्रीकृष्णचन्द्रे ॥
मधुपर्कः । पुं० षोडशोपचारपूजान्तर्गतषष्ठोपचारे ॥ तस्य प्रमाणं यथा । दधिसर्पिर्जलंक्षौद्रं सितैताभिस्तुपञ्चभिः । प्रोच्यते मधुपर्कस्तु सर्वदेवौघतुष्टये ॥ जलन्तु सर्वतः स्वल्पं सिताद्दधिघृतं समम् । सर्वेषामधिकं क्षौद्रं मधुपर्के प्रयोजयेत् ॥ तद्वैतत्कांस्यपात्रे गारीक्ष्मप्रवेतभवेन वा । ज्योतिष्टोमाश्वमेधादौ पूर्व्वे चेष्टे प्रपूजने ॥ मधुपर्कः प्रतिष्ठोयं-सर्वदेवौघतुष्टिदः । धर्मार्थकाममोक्षसाधकः परिकीर्त्तितः ॥ मधुपर्कः सौख्यभोग्यतुष्टिपुष्टिप्रदायकः ॥ आज्यं दधिमधुमिश्रं मधुपर्कं विदुर्बुधाः । इतिच ॥ न० दधिसंयुक्तमधुनि । महोदये ॥ मधुना पृच्यते । पृची० । घञ् ॥
मधुपर्क्यः । त्रि० मधुपर्कार्हे ॥ मधुपर्कमर्हति । दण्डादिभ्यइतियत् ॥
मधुपर्णिका । स्त्री० गम्भार्याम् ॥ नीलीवृक्षे ॥ मञ्जिष्ठ० मधुराणिवा०-

पर्णान्यस्याः । पाककर्णेतिङीष् । स्वार्थेकन् । ह्रस्वः ॥ सुदर्शनायाम् ॥
मधुपर्णी । स्त्री० गम्भार्याम् । नीत्योषधौ ॥ गुडूच्याम् ॥ मधुबीजपूरे ॥ वराहक्रान्तायाम् ॥
मधुपा । स्त्री० मद्यपायाम् ॥
मधुपाका । स्त्री० षड्भुजायाम् । खर्बूजा० इ० भा० ॥
मधुपायी । पुं० भ्रमरे ॥ त्रि० मधुपानकर्त्तरि ॥
मधुपालिका । स्त्री० गम्भार्याम् ॥
मधुपिपासुः । त्रि० मधुपातुमिच्छौ ॥ मधुपिपासुः । गम्यादित्वाद्द्वितीयासमासः ॥
मधुपीलुः । पुं० महापीलौ । राजपीलौ । महावृक्षे ॥
मधुपुरी । स्त्री० मथुरायाम् ॥
मधुपुष्पः । पुं० मधुद्रुमे ॥ रोध्रे ॥ शिरीषवृक्षे ॥ अशोकवृक्षे ॥ वकुलवृक्षे ॥
मधुपुष्पा । स्त्री० दन्तीवृक्षे ॥ नागदन्तीवृक्षे ॥
मधुप्रियः । पुं० बलदेवे । अच्युताग्रजे ॥ मधुमद्यंप्रियंयस्यसः । भूमिजम्बाम् ॥ त्रि० मद्यप्रिये ॥
मधुफलः । पुं० मधुनालिकेरे ॥ विकङ्कतवृक्षे ॥
मधुफलिका । स्त्री० मधुखर्ज्जूरिकायाम् ॥

मधुवल्ली । स्त्री० वासन्तीलतायाम् ॥
मधुभारः । पुं० मात्राच्छन्दोन्तरे ॥ सगणं विधाय जगणं निधाय सुखसौख्यधाममधुभारनाम ॥ यथा । च-यिमुच्चमानमवटीवधान । भुजपाशकीनभयनाशकीन ॥
मधुभित् । पुं० विष्णौ ॥
मधुभुक् । त्रि० मधुपे ॥
मधुमक्षिका । स्त्री० सरघायाम् ॥ मधुनीमक्षिका ॥
मधुमज्जा । पुं० आखोटवृक्षे ॥
मधुमान् । त्रि० माधुर्य्ययुते ॥
मधुमती । स्त्री० मूर्वायाम् । कास्मर्याम् ॥ नदीविशेषे ॥ तस्याजलगुणास्तु । चन्द्रभागगुणासाम्यद्जलं किञ्चमाधुमतमग्निदीपनम् । इति ॥ मध्वस्तियस्याम् । मध्वादिभ्यश्चेतिमतुप् ।। उपास्यनायिकाविशेषे ॥ यथा । तथामधुमतीसिद्धिर्जायतेनात्रसंशयः । देवचेटीशतशतं तस्यवश्याभवन्तिहि ॥ स्वर्गेमर्त्त्येचपातालेसयत्रगन्तुमिच्छति । तत्रैवचेटिकाः सर्व्वानयन्तिनात्रसंशयः ॥ अपिच । शब्दानेषशृणोतियोजनशतादाविर्भवन्त्यश्रुतास्तेतिवेदपुराणभारतकथागाथादयोवाङ्मयाः । यत्रनातिस्वयमिच्छयाशुचिपदैः शास्त्राणिकाव्यानिवालोकान्भाम्यतिपश्यतिस्फुटकचोरत्नस्थलीर्भैरवीः ॥ उष्णिक्छन्दः ७ प्रभेदे ॥ यथा । ननगिमधुमती । यथा । रविदुहितृतटेवनकुसुमततिः । व्यधत्तमधुमतोमधुमथनमुदम् ॥
मधुमत् । पुं० विष्णौ ॥ मधुंमथ्नाति । मदेः । क्विप्चेतिक्विप् ॥
मधुमथनः । पुं० विष्णौ ॥
मधुमल्ली । स्त्री० मालत्याम् ॥
मधुमस्तकम् । न० खाद्यविशेषे । परिमाजने ॥
मधुमाक्षिकम् । न० स्वर्णमाक्षिके ॥
मधुमाध्वीकम् । न० मद्ये ॥
मधुमारकः । पुं० भ्रमरे ॥
मधुमूलम् । न० आलुके । मौआलुइ० गौ०दे०भा०प्रसिद्धे । हिङ्गुले ॥
मधुयष्टिः । स्त्री० इक्षौ ॥
मधुयष्टिका । स्त्री० मधुकायाम् । मधुयष्ट्याम् । मुलहठी०मुहलेठी-तिख्यातौषधौ ॥ मधुयष्टीव । इवेतिकन् ॥
मधुयष्टी । स्त्री० मधुयष्टिकायाम् ॥ मधुनोयष्टी ॥ गुणान्पश्ययष्टि-म् ॥
मधुरः । पुं० मिष्टरसे । गौल्ये । स्वादौ । रसज्ञे । गुल्ये । तस्यगुणाः । मधुरः पिच्छलः शीतोधातुसन्यवर्द्धप्रदः । चक्षुष्योवातपित्तघ्नः कुर्यात्स्थौल्यबलक्रमीन् ।

सोतियुक्तोज्वरश्वासगलगगंडादिरोगकृत् ॥ अपिच । मधुरस्सुरसश्चिनोतिकेशान्वपुषः स्थौर्यबलौजवीर्यदायी । अतिसेवनतः प्रमेहशैत्यजडतामान्द्यमुखान्करोतिदोषान् जीवकौषधौ ॥ रक्तशिग्रौ ॥ राजाम्रे ॥ रक्तेक्षौ । गुडे ॥ शालौ हैमन्तधान्ये । न० विषे ॥ वङ्गे ॥ त्रि० रसनाकर्षिणि । स्वादौ । मधुररसयुक्ते । मधुमाधुर्यमस्त्यस्मिन् । ऊषसुषीतिरः ॥ मधुमाधुर्यं राति वा । आतोनुपेतिकः ॥ प्रिये ॥ दधिमधुरंमधुमधुरंद्राक्षामधुरासितातुमधुरैव । तस्यतदेवहिमधुरंयस्यमनोयत्रसंलग्नम् ॥

मधुरकः । पुं० जीवकौषधौ ॥ स्वार्थेकः ॥

मधुरकण्टकः । पुं०मत्स्यविशेषे । कज्जलायाम् ।

मधुजम्बीरः । पुं० मधुजम्बीरे । रसद्राविणि । शर्करके ॥

मधुरत्वचः । पुं० धवे । पीतफले ॥

मधुरत्रयम् । न० दुग्धसितामाक्षिकेषु ॥ सितामाक्षिकसर्पिष्षु ॥

मधुरत्रिफला स्त्री० द्राक्षाकाश्मर्यखर्जूरिफलेषु ॥

मधुरनिस्वना । स्त्री० मधुरस्वरयुक्तायांनार्याम् ॥ मधुरोनिस्वनोयस्याः ॥

मधुफलः । पुं० राजबदरे ।

मधुरमांसम् । न० क्षीरामृते ॥ तद्विधानंयथा । घृताम्बुस्वेदितेमांसेशुण्ठीचूर्णैविमिः क्षिपेत् । दुग्धस्वशर्करोपेतंपश्चात्सौगन्धिकंक्षिपेत् ॥ नातिसार्द्रंनातिशुष्कमिदंक्षीरामृतंस्मृतम् ॥ क्षीरमृतंबहुरसंरोचकंचातिशीतलम् । वातपित्तहरंबल्यंसुस्निग्धमतिकोमलम् ॥

मधुरवल्ली । स्त्री० मधुबीजपूरे ॥

मधुरसः । पुं० इक्षौ । मधुर्मधुरोरसोयस्मिन्वा ॥ तालवृक्षे ॥

मधुरसा । स्त्री० मूर्वायाम् ॥ द्राक्षायाम् ॥ दुग्धिकायाम् ॥ गम्भार्याम् ॥ मधूरसोस्याः ॥

मधुरस्रवा । स्त्री० पिण्डखर्जूर्याम् ॥

मधुरा । स्त्री० शतपुष्पायाम् । सौं फ० इ० भा० ॥ मिश्रेयायाम् । शालेये । शीतशिवे । सलूफा० इ० गौ० दे० भा० ॥ मधुरोरसोस्त्यस्याः । अर्शआद्यच् ॥ मथुरापुर्याम् ॥ यथा । हत्वोचलवणंरक्षोमधुपुत्रंमहाबलः । शत्रुघ्नोमधुरांनामपुरींतत्रचकारवै इति । मधुकर्कटिकायाम् ॥ मोदायाम् ॥ मधूल्याम् ॥ यष्टिकायाम् ॥ काकोल्याम् ॥ शतावर्याम् ॥ बृहज्जीवन्त्याम् ॥ पालङ्क्यशाके ॥ मनोहरायाम् ॥ टाप् ॥

मधुराकृतिः । त्रि० सौम्यरूपे ॥

मधुराम्लः । पुं० )
मधुराम्लकः । पुं०) आम्रातके ॥

मधुराम्लफलः । पुं० रेफले । आरे ॥

मधुरालापा । स्त्री० शारिकायाम् ॥

मधुरालावुनी । स्त्री० राजलाब्वाम् ।

मधुरिका । स्त्री० मिस्याम् । शालेये । शीतशिवे । धनसौंफ० इ० भा० ॥ मधुरोरसोऽस्यस्याः अच् । स्वार्थे कन् ॥

मधुरिपुः । पुं० विष्णौ ॥ मधोरसुरविशेषस्यरिपुः ॥

मधुरेणुः । पुं० कटभीवृक्षे ॥

मधुरोदकः । पुं० सप्तसमुद्राणांशेषसमुद्रे । जलसमुद्रे । स्वादूदके ॥

मधुलम् । न० आसवे । मद्ये ॥

मधुलग्नः । पुं० रक्तशोभाञ्जने ॥

मधुलता । स्त्री० शूलीतृणे ॥

मधूलिका । स्त्री० राजिकायाम् ॥

मधुलिट् । पुं भ्रमरे ॥ मधुलेढि। लिह आस्वादने । क्विप् ॥

मधुलेही । पुं० भृङ्गे । भ्रमरे ॥

मधुलोलुपः । पुं० भ्रमरे ॥

मधुवटी । स्त्री० तीर्थविशेषे ॥

मधुवनम् । न० मथुरायाम् ॥ कदाचिन्मधुसंज्ञेनदैत्येनाधिष्ठितंयतः । ततोमधुवनंनामाख्यातमत्रमहीतले ॥ पुण्यंमधुवनंतत्रसान्निध्यंनित्यदाहरेः ॥ मधोःवनम् ॥ किष्किन्धायां सुग्रीवस्यवनविशेषे ॥

मधुवल्लः । पुं० कोकिले ॥

मधुवल्ली । स्त्री० यष्टीमधुनि ॥ क्षीतनके ॥

मधुवारः । पुं० मधुक्रमे । पुनः पुनर्मधुपानपरिपाट्याम् । मधुपानावसरे ॥ मधुनोमद्यस्यवारोऽवसरः । मधुपानावृत्तिरितियावत् ॥

मधुवारुणी। स्त्री० मधुरूपायांवारुण्याम् ॥

मधुवीजः । पुं दाडिमे ॥

मधुवीजपूरः । पुं० मधुरफलायाम् । महाफलायाम् । मधुकर्कट्याम् । मीठाविजौरा० इ०भा० ॥

मधुवृक्षः । पुं० मधुके । महुवा० इ० प्रसिद्धे ॥ मधुनामावृक्षः ॥

मधुव्रतः । पुं० भ्रमरे ॥ मधुव्रतंभक्ष्यंयस्य ॥ यद्वा मधुमकरन्दंव्रतयति भुङ्क्ते । कर्मण्यण् ॥

मधुशर्करा । स्त्री० मधुजातशर्करायाम् । सिताखण्ड० इ० गौ० हि० भा० प्र० द्रव्ये यथा । माध्वीमुतामधूत्पन्नामधुजामधुशर्करा । माक्षीकशर्कराचैवक्षौद्रजाक्षौद्रशर्करा ॥ यद्गुणंयन्मधुप्रोक्तंतद्गुणातस्यशर्करा । विशेषाद्दलवृष्याचतर्पणीक्षौवादेहिनाम् अपिच । मधुजाशर्कराक्षाकफपित्तहरीगुरुः । छर्द्यतीसारतृड्दाहरक्तहृत्तुवराहि

मा ॥ मधुनःशर्करा ॥
मधुशाख : । पुं० मधुष्ठीले ॥
मधुशिग्रु : । पुं० रक्तशोभाञ्जनवृक्षे । मुनगा० इ० काश्यादौख्याते ॥ मधु: मधुर: शिग्रु : ॥ मधुप्रधान : शिग्रुर्वा ॥
मधुशीर्षकम् । न० समितानिर्मितेप क्वान्नविशेषे ॥
मधुशेषम् । न० सिक्थके ॥
मधुश्रेणी । स्त्री० मूर्वायाम् । मधुन : श्रेणिरत्र ॥
मधुश्वासा । स्त्री० जीवन्तीवृक्षे ॥
मधुष्ठील: । पुं० मधूकवृक्षे । महुवा इ० विख्याते ॥ मधुष्ठीवति । ष्ठिवु निरसने । इगुपधेतिक : । पृषोद रादि: ॥ मधुष्ठीले गर्भेऽस्येतिवा ॥
मधुसख: पुं० कामदेवे ॥
मधुसारथि : । पुं० कामदेवे ॥
मधुसिक्थक: । पुं० स्थावरविषभेदे ॥
मधुसुहृत् । पुं० कामदेवे ॥
मधुसूदन: । पुं० भ्रमरे । वनमालिनि । श्रीकृष्णे । वैदिककर्ममार्गके भगवति०दुष्टनियन्तर्तरि ॥ मधुनामानमसुरंसूदितवान्०सूदयति स्मवा । सूदक्षरणे । नन्द्यादित्वाल्ल्यु : ॥ विष्णुकर्णमलोद्भूतंमधुनाममहासुरम् । ब्रह्मणोपचितिंकुर्वन्जघानपुरुषोत्तम : ॥ तस्यताव हधादेवतदासर्वेविमानवा : । मधुसूदनमित्याहुऋर्षयश्चजनार्दनमितिभारते ॥
मधुसूदनी । स्त्री० पालङ्कीशाके ॥
मधुस्रव: । पुं० मधूकवृक्षे । मोरटलतायाम् ॥ न० तीर्थविशेषे ॥
मधुस्रवा : । पुं० मधूकवृक्षे ॥
मधुस्रवा । स्त्री० जीवन्त्याम् । डोडीतिगुर्जरदेशभाषयाप्रसिद्धायाम् ॥ मूर्वायाम् ॥ हंसपद्याम् ॥ मधुयष्टिकायाम् ॥
मधुस्वर : । पुं० कोकिले ॥ मधुर्मधुर : स्वरोयस्यस : ॥ मधौस्वरोयस्यवा ॥
मधुहा । पुं० विष्णौ ॥ मधुंदैत्यविशेषंहन्ति । हन० । क्विप्चेतिक्विप् । ब्रह्मभ्रूणवृत्रेषुक्विबितिनियमस्याप्रायिकत्वात् ॥
मधूक : । पुं० गुडपुष्पे । मधुद्रुमे । महुवा० इतिख्यातेवृक्षे ॥ अस्यगुणा : मधूकपुष्पंमधुरंशीतलंगुरुबृंहणम् । बलशुक्रकरंप्रोक्तंवातपित्तविनाशनम् ॥ फलंशीतंगुरुस्वादुशुक्रलंवातपित्तनुत् । अहृद्यंहन्ति तृष्णास्रदाहश्वासक्षतक्षयान् ॥ तन्मध्यगुणास्तत्फलवत् । यथा । यस्ययस्यफलस्यवीर्यंभवतियादृशम् । तस्यतस्यैववीर्येणमज्जानमभिनिर्दिशेत् ॥ तस्यत्वग्गुणा : । मधुस्त्वक्रक्तपित्तघ्नीव्रणशोधनरोपणी ॥ मद्यते० मन्यतेवा । मदपूजाया

म० मनज्ञाने । उलूकादयश्च सा धु: ॥ न० यष्टीमधुनि ॥ इ० रा० निर्घण्ट : ॥

मधूकपुष्पम् । न० मधुद्रुमस्य कुसुमे॥ मधुच्युतंस्थूलमधूकपुष्पं संशोधितंकेसरधूलिवर्जितम् । सम्याचितंशुभसिताघृताभ्यांसजीरकंजीवनदंहि जीविनाम् ॥ वृंहणीयंसुमधुरंमधूकंवातहृद्गुरु । पित्तप्रकोपशमनंहृद्यंरुच्यमुखप्रियम् ॥

मधूच्छिष्टम् । न० सिक्थके ॥ मधुन उच्छिष्टम् ॥

मधूत्थितम् । न० सिक्थके ॥

मधूत्सव : । पुं० चैत्रावल्याम् ॥

मधूपघ्न : । पुं० न० मथुरायाम् । लवणपुरे ॥

मधूल : । पुं० जलजेमधूके । मधूलके ॥

मधूलक : । पुं० जलजमधूके जल महुवा० इतिभाषा । दीर्घपत्रे ॥ मधुलाति । ला० आतोनुपेतिक: । अन्येषामपीतिदीर्घ : । स्वार्थेकन् । गिरिजातमधूके । गौरशाके । अल्पगुणामधूकगुणतुल्या : ॥ मधुरसे ॥ त्रि० तद्वति ॥

मधूलिका । स्त्री० मूर्वायाम् ॥ प्रत्ययस्थादितीत्वम् ॥

मधूली । स्त्री० क्षीतनके ॥ मधुकर्कट्याम् ॥ आम्रे ॥

मध्य : । पुं० यहस्पष्टसाधकाङ्कवि शेषे । पुं० न० विलग्ने । देहमध्यभागे । मध्यमे । अवलग्ने ॥ हृदयपुण्डरीकाकाशे ॥ त्रि० न्याय्ये । उत्कर्षापकर्षहीने ॥ यथा० मध्यस्थ: ॥ अन्तरे ॥ अधमे ॥ मध्यमे ॥ यथा । उत्तमाऽधममध्यानिबुद्ध्वाकार्याणिपार्थिव । उत्तमाधममध्येषुपुरुषेषु नियोजयेत् ॥ मांध्यायति । ध्यै० । आतोनुपेतिक: । यद्वा । मज्जति । मस्ज० । मांशोभांवर्त्तो वा । अघ्न्यादि: ॥ मध्येशरीरादेर्भवम् । असाम्प्रतिके० इत्य: ॥ सङ्ख्याविशेषे ॥ यथा ॥ १०००००००००००००००००० ॥

मध्यगन्ध : । पुं० आम्रद्रुमे ॥

मध्यत : । अ० मध्य[illegible] ॥ [illegible]दित्वात्तसि ॥

मध्यदेश : । पुं० देशविशेषे । मध्यमे ॥ तस्यसीमायथा । हिमवद्विन्ध्ययोर्मध्यंयत्प्राग्विनशनादपि । प्रत्यगेवप्रयागाच्चमध्यदेश: प्रकीर्त्तित: ॥ मध्यश्चासौदेशश्चेतिकर्मधारय : ॥ शास्त्रीयज्ञानकर्मसंस्कृतोजनोमध्यदेशइतिव्याख्याकारा : ।

मध्यदेशीय: । त्रि० मध्यदेशोद्भवे ॥ मध्यदेशीयजनपदायथा । तास्त्रिमेकुरुपाञ्चाला : साल्वाश्चवसजाङ्गला : । शूरसेनाभद्रकारावोधका: सपटच्चरा : ॥ मत्स्या : किराता :

कुरूयाश्चकुन्तय : कान्तिकोशला : । आवन्त्याश्चभुलिङ्गाश्चलोकाश्चैवाम्ब कै : सह ॥ मध्यदेश्याजनपदा : प्रायश : परिकीर्तिता : ॥

मध्यदेश्य: । त्रि० मध्यदेशभवे ॥ दिगादित्वात्० यत् ॥

मध्यन्दिन : । पुं० वम्बूकवृचे । मध्यन्दिना० द्र० भा० ॥

मध्यपञ्चमूलकम् । न० पाचनविशेषे ॥ यथा । बलापुनर्नवैरण्डसूर्पप र्णीद्वयेनतु । एकत्रयोजितेनैवस्यान्मध्यंपञ्चमूलकम् ॥

मध्यम : । पुं० तन्त्र्युत्थितैकण्ठोत्थितेचसप्तस्वराणांमध्येपञ्चमे ॥ मध्यदेशे ॥ मृगविशेषे ॥ रागप्रभेदे ॥ शरीरावस्थाविशेषे ॥ यथा । षोडशाव्दंसमारभ्ययावद्दैसप्ततिर्भवेत् । मध्यम : सतुविज्ञेय : परतोवृद्ध उच्यते ॥ यथोक्तम् । तद्वदेवोत्थितोवायुरुर : कण्ठसमाहत : । नाभिप्राप्तोमहानादोमध्यस्थस्तेनमध्यम : ॥ क्रौञ्चोनदतिमध्यममिति च ॥ भूपालविशेषे ॥ अरेश्वविजिगीषोश्चमध्यमोभूम्यनन्तर : ॥ पुं० न० अवलग्ने । देहस्यमध्यमेभागे ॥ त्रि०मध्यजे ॥ उत्कृष्टादधमेचैवापकृष्टादुत्तमेपिच । मध्येभव : । मध्यान्म : ॥ ग्रहाणांसामयिकसंज्ञायाम् ॥

मध्यमपाण्डव : । पुं० अर्जुने ॥

मध्यमभृतक : । पुं० कृषीवलभृतके । कृषाण० द्र० भा० ॥ यथा । उत्तमस्त्वायुधीयोत्रमध्यमस्तु कृषीवल : । अधमोभारवाहीस्यादित्येषत्रिविधोभृत : ॥

मध्यमलोक : । पुं० भूमौ ॥

मध्यमसङ्ग्रह: । पुं० स्त्रीसङ्ग्रहणाख्यविवादविशेषे ॥

मध्यमहलम् । न० षड्गवे हले ॥

मध्यमा । स्त्री० दृष्टरजोनार्याम् । रजस्वलायाम् कन्यायाम् ॥ कर्णिकायाम् ॥ अङ्गुलिप्रभेदे ; मध्याङ्गुलौ ॥ त्र्यचरछन्दसि । हृदयोत्थितवृत्तियुतनादरूपवर्णे ॥ नायिकाभेदे ॥ लज्जामन्मथमध्यस्थामध्मोदितयौवनेतिलचणम् । मध्ये जातायाम् ॥ अदन्तत्वाट्टाप् ॥ मध्यमस्य भार्यायाम् ॥ मध्यमस्यस्त्री । पुंयोगलचणंङीषंवाधित्वाऽजादित्वाट्टाप् ॥ बाल्ययौवनयोर्मध्येभवा । मध्यान्म : । तयोर्मध्ये माशोभायस्यावा ॥

मध्यमाग्नि : । पुं० अर्कार्थमग्निविशेषे ॥

मध्यमिका । स्त्री० मध्यमायाअर्थे ॥ मध्यमैव । कन् ॥

मध्यमीयम् त्रि०मध्य ॥ मध्येभवम् । मण्मीयौचप्रत्ययौवक्तव्याविति

मीयः॥

मध्यमेश्वरः। पुं॰ काशीस्थ शिवलिङ्गविशेषे॥ शर्वाणीमध्यमाभिधे॥ अत्रशर्वाणीस्थानम्॥

मध्ययवः। पुं॰ षट्सर्षपमर्षपपरिमाणे॥

मध्यरात्रः। पुं॰ निशीथे। अर्द्धरात्रे॥ मध्यंरात्रेः। पूर्वापराधरेतिसूत्रे॰ सर्वएकदेशः कालेनसमस्यतेनत्वह्नैव॰ज्ञापकस्यसामान्यापेक्षत्वादित्युक्तेः समासे॰ अहःसर्वैकदेशेत्यच्॥

मध्यलोकः। पुं॰ पृथिव्याम्॥

मध्यलोकेशः। पुं॰ नृपे। राज्ञि॥ मध्यलोकानांमर्त्यानामीशः॥

मध्यस्थः। त्रि॰ निसृष्टे। मध्यवर्तिनि। विवदमानयोरुभयोरपिहितैषिणि॥ उभयपक्षरहिते॥ स्वार्थाविरोधेनपरार्थघटके॥ यथा। एकेसत्पुरुषाः परार्थघटकाः स्वार्थस्यबाधेनयेमध्यस्थाः परकीयकार्यकुशलाः स्वार्थाविरोधेनये। तेऽमीमानुषराक्षसाः परहितंयैः स्वार्थतोहन्यते॰येतुघ्नन्तिनिरर्थकंपरहितंतेकेनजानीमहे॥ पुं॰ पुरुषे॥ अत्रैगुण्यात्पुरुषोहिमध्यस्थः। सुखीहिसुखिनतृप्यन्॰ दुःखीचदुःखंद्विषन्नमध्यस्थोभवति। तदुभयरहितोमध्यस्थइति॰ उदासीनइतिचाख्यायते। मध्येतिष्ठति। स्था॰। कः॥

मध्यस्थलम्। न॰ कटिदेशे॥ यथा। कुचौमरिचसन्निभौमुरजमध्यमध्यस्थलीत्वहोतिमिरमञ्जरीसहचरीनरीनृत्यते। इति॥

मध्या। स्त्री॰ मध्यमायाम्॥ त्यचरायाम्वृत्तौ॥ नायिकाभेदे॥

मध्याह्नः। पुं॰ अह्नोमध्यभागे। त्रिधाविभक्तदिनस्यमध्यभागे। पञ्चधाविभक्तस्याह्नस्तृतीयभागेवा॥ अह्नोमध्यम्। सङ्ख्याविसायेतिज्ञापकात्समासः॥

मध्येचित्तम्। अ॰ चित्तमध्ये॥ मध्येचित्तस्येतिविग्रहे॰ पारेमध्येषष्ठ्यावेति॰अव्ययीभावः॰ निपातनादेदंतत्वम्॥

मध्वदः। पुं॰ कर्मफलभुजिजीवे॥ मधुकर्मफलम्॰ अत्ति। अद॰। कर्मण्यण्॥ संज्ञापूर्वकत्वाद्वृद्ध्यभावः॥

मध्वाधारः। पुं॰ सिक्थके॥

मध्वालुः। ) न॰ कन्दविशेषे। मधु

मध्वालुकम्। ) न॰ रतायुक्तेगोमान्विते। दीर्घसुषिमीति॰ भा॰। मीआलु इ॰ गौ॰ भा॰॥

मध्वासवः। पुं॰ मधूकपुष्पजातेमद्ये। माधवके। मधुनि। माध्वीके॥ मधूकपुष्पंमधु। तस्यासवः॥

मध्वासववणिक्। पुं॰ शौण्डिके॥

मध्वजा । स्त्री० मद्ये ॥

मन : । पुं० जटामांस्याम् ॥

मनश्राप : । त्रि० मनोज्ञे ॥

मनःप्रणिधान् । त्रि० प्रगृहीतमनसि । समाहितचित्ते ॥

मनःप्रसादः । पुं० विषयचिन्ताव्याकुलत्वराहित्ये ॥ मनसः स्वच्छतायाम् ॥ मनस : प्रसाद : ॥

मन : शिल : । पुं० मन : शिलायाम् ॥

मन : शिला । स्त्री० रक्तवर्णधातुविशेषे । कुनट्याम् । मनोज्ञायाम् । नागजिह्विकायाम् । मनसिल्० इ० भा० ॥ मन : शिलागुरुर्वर्ण्यासरोष्णालेखनीकटु : । तिक्तास्निग्धाविषश्वासकासभूतकफास्रनुत् ॥ मनःशिलामन्दबलंकरोतिजन्तुंध्रुवंशोधनमन्तरेण । मलानुबन्धंकिलमूत्ररोधंसशर्करंकृच्छ्रगदंचकुर्यात् ॥ तालकस्यैवभेदोस्तिमनोगुप्तातदन्तरम् । तालकंत्वतिपीतस्याद्रवेद्रक्तामन : शिला ॥ अथशोधनम् । पचेत्त्र्यहमजामूत्रे दोलायन्त्रे मन : शिलाम् । भावयेत्सप्तधापित्तै रजायाःसाविशुध्यति ॥ मनःशब्दवाच्याशिला । शाकपार्थिवादि : ॥

मननम् । न० बुद्धौ ॥ युक्तिभिरनुचिन्तने ॥ ध्याने ॥ असम्भावनाविपरीतभावनानिरासेनयुक्तिभिरनुचिन्तने ॥ ऊहे ॥ श्रुतस्यार्थस्याद्वितीयवस्तुनोवेदान्तार्थानुगुणयुक्तिभिरनवरतमनुचिन्तने ॥ केवलपुरुषबुद्ध्योत्प्रेक्षितशुष्कतर्कव्यावृत्त्यर्थंवेदान्तार्थानुगुणेतिविशेषणम् ॥ अर्थोऽसम्भावनोच्छेदीतर्कोमननमीरितम् । वेदशास्त्राविरोधश्चतर्कणीयो-ह्योनचेतर : ॥ आत्मन्यतीतेसर्व-स्मात्सर्वरूपेथवाततेः । कोवन्ध : कश्चवामोक्षोनिर्मलंमननंकुरु ॥

मन : । न० ज्ञानेन्द्रियविशेषे । बुद्धीन्द्रियाणांप्रधानेभगवतोविभूतौ । चित्ते । चेतसि । हृदये । स्वान्ते । हृदि । मानसे ॥ अपिचास्यपर्या-या : यथाभारते । मनोमहान्म-तिर्ब्रह्मापूर्बुद्धि : ख्यातिरीश्वर : । प्रज्ञासंविच्चितिश्चैवस्मृतिश्चपरिप-ठ्यते । पर्यायवाचका : शब्दामनस : परिकीर्त्तिता : ॥ इति । न्यायमतेऽस्यगुणा : । यथा । परापर-त्वंसङ्ख्याद्या : पञ्चवेगाश्चमानसे । मनोग्राह्यंसुखंदु : खमिच्छा-द्वेषोमति : कृति : ॥ अयौगपद्याज्ज्ञानानांतस्याणुत्वमिहेष्यते । इति ॥ जन्यज्ञानसामान्यंप्रतित्वङ्मनोयोग : कारणम् । त्वचोयोगोमनसाज्ञानकारणमिष्यते : ॥ तस्यनवगुणायथा । धैर्योपपत्तिर्व्य-क्तिश्चविसर्ग : कल्पनाक्षमा । सद

सत्त्वाश्रुतार्चवमनसोऽष्टवैगुण्याः ॥
धैर्य्यम् १ । उपपत्तिः ऊहापोह-
कौशलम् २ । व्यक्तिः स्मरणम् ३ ।
कल्पनामनोरथवृत्तिः ४ । विसर्गः
विपरीतसर्गभ्रान्तिः ५ । क्षमा ६ ।
सत्० वैराग्यादि ७ । असत्० राग-
द्वेषादि ८ । आशुता० अस्थिरत्व-
म् ९ । इत्यर्थः ॥ अन्तःकरणे ॥
अस्य चातुर्विध्यं यथा । मनोबुद्धिरह
ङ्कारश्चित्तं करणमान्तरम् । संशयो
निश्चयो गर्व्वः स्मरणं विषया अमी ॥
तस्याध्यात्मत्वादि यथा । अध्या-
त्मं मन इत्याहुः पञ्चभूतात्मधार-
कम् । अधिभूतञ्च सङ्कल्पश्चन्द्रमाश्चा
धिदैवतम् ॥ इति ॥ तस्य स्वरूपं य-
था । अनिरूप्यमदृश्यञ्च ज्ञानभेदं म-
नः स्मृतमिति ॥ तस्य प्राशस्त्या-
प्राशस्त्यानुमापकानि यथा । जना-
नां हृदयं सद्यः सुव्यक्तं वचनेन वै ।
शिष्ये कलत्रे कन्यायां दौहित्रे बान्ध
वे पि च ॥ पुत्रे पौत्रे च वचसि प्रतापे
यशसि श्रियाम् । बुद्धौ वारिणि वि-
द्यायां ज्ञायते हृदयं नृणाम् इति ब्रह्म
वैवर्त्त पुराणम् ॥ तस्य बन्धमोक्षं प्रति
हेतुत्वं यथा । न देहो न च जीवात्मा ने
न्द्रियाणि परन्तप । मन एव मनुष्या-
णां कारणं बन्धमोक्षयोः । बन्धस्तु-
विषयासङ्गी मुक्तो निर्व्विषयस्तथेति ॥
तच्चायवीयपरमाणुरूपमिति शिरो

मणिमतम् । स्पर्शरहितत्वे सति-
क्रियावत्त्वं वायोर्लक्षणम् ॥ अस्य क्वा
पत्वमेव नपुंसकमिति स्यात्ताप्रिया-
ये प्रेषितं मनः । तत्तु तत्र चरमतेह
ताः पार्थिवनिभावयम् ॥ सुखदुःखा
द्युपलब्धिसाधने० इन्द्रियविशेषे ॥
सङ्कल्पविकल्पात्मिकायामन्तःक
रणवृत्तौ ॥ तच्च प्रत्यात्मनियतत्वा-
दनन्तं परमाणुरूपं नित्यञ्चेति ता-
र्किकाः ॥ एकैकस्यात्मन एकैकं मन
इत्यात्मनामनेकत्वान्मनसोऽनेकत्व
म् ॥ प्रदीपज्वालासन्तानवन्निरन्तरा
नरूपेण परिणममानमन्तःकरणद्र
व्यं मननात्मकत्वान्मन इत्युच्यते ॥ ए
कादशेन्द्रियाणां मध्ये प्रवर्त्तकं मनो
वासुदेवविभूतिः ॥ उभयात्मकमत्र
मनः सङ्कल्पकमिन्द्रियञ्च साध
र्म्यात् । एकादशस्विन्द्रियेषु मध्ये
मन उभयात्मकम्० बुद्धीन्द्रियञ्क
र्म्मेन्द्रियञ्च । चक्षुरादीनां वागादी
नाञ्च मनोधिष्ठितानां स्वविषये प्रवृ-
त्तेः । तदसाधारणेन रूपेण लक्षय
ति० सङ्कल्पकमत्र मनः । आलो
चितमिन्द्रियेण वस्तु इदमिति सम्मु-
ग्धम्० इदमेवं नैवमिति सम्यक् कल्प
यति० विशेषणविशेष्यभावेन विवेच
यतीति यावत् । यथाहुः । सम्मुग्ध
वस्तुमात्रन्तु प्राग्गृह्णात्यविकल्पि
तम् । तत् सामान्यविशेषाभ्यां क-

त्ययन्निममनीषिणइति ॥ तथा॰ अस्तिह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ ततः परं पुनर्वस्तुधर्मैर्जात्यादिभिर्यया। बुद्ध्यावसीयतेसापिप्रत्यक्षत्वेनसम्मतेति॥ सोयं सङ्कल्पलक्षणोव्यापारोमानसः समानासमानजातीयाभ्यां व्यवच्छिन्दन् मनोलक्षयति॥ स्यादेतत् । असाधारणव्यापारयोगिनो यथाऽहङ्कारोनेन्द्रियम्॰ एवं मनोप्यसाधारणव्यापारं नेन्द्रियं भवितुमर्हतीत्यतआह इन्द्रियस्य॰ कुतः साधर्म्यात्॰ इन्द्रियान्तरैः । सात्विकाहङ्कारोपादानत्वंसाधर्म्यम् । नत्विंद्रलिङ्गत्वम्॰ महत्तत्वादीनामपि॰ इन्द्रलिङ्गत्वेनेन्द्रियत्वप्रसङ्गात् । तस्माद्व्युत्पत्तिनिमित्तमात्रमिन्द्रलिङ्गत्वंनप्रवृत्तिनिमित्तम् ॥ मनुतेऽनेनेतिविज्ञाननिमित्तान्तःकरणे ॥ युगपज्ज्ञानानुत्पत्तिर्मनसोलिङ्गम् ॥ १६ । इतिगोतमसूत्रम् । युगपत्एककाले॰ एकात्मनीतिपूरणीयम्॰ ज्ञानानामनुत्पत्तिर्यतःसएवधर्मोज्ञानकरणाणात्वं मनसोलिङ्गं लक्षणमित्यर्थः । तथाहि । चक्षुरादिषु विषयसम्बन्धेपि॰ यस्यामत्त्वभावादेकं न ज्ञानं जनयतितत्सम्बन्धादपरञ्ज्ञानं जनयति॰ तदेवचाणुनिखिलज्ञानजनकंसुखादिसाक्षात्कारासाधारणकारणं तदेकमेवलाघवात् सिद्धमनइत्यर्थः ॥ लम्नान्नवमभवने ॥ मनएवमनुष्याणांकारणं बन्धमोक्षयोः । बन्धायविषयासक्तं मुक्त्यैनिर्विषयंस्मृतम् ॥ यतोनिर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥ निरस्तविषयासङ्गं सन्निरुद्धं मनोहृदि यदायात्युन्मनीभावं तदातत्परमं पदम् ॥ तावदेवनिरोद्धव्यं यावद्धृतिगतंक्षयम् । एतज्ज्ञानञ्चध्यानञ्च शेषोन्यायस्यविस्तरः ॥ मन्यतेनेन मनुतेनेनवा । मनज्ञाने॰ मनुअवबोधनेवाअसुन् ॥ मनसोनैर्मल्यस्त्वावश्यंकरणीयम् । यथोक्तंश्रीदेवीभागवते । भ्रमन्सर्वेषु तीर्थेषुस्नात्वास्नात्वापुनःपुनः । निर्मलंनमनोयावत्तावत् सर्वंनिरर्थकमिति ॥

मनसा । स्त्री॰ विषहर्याम् । जरत्कारुमुनेः पत्न्याम् ।

मनसादेवी । स्त्री॰ कर्त्री । मनसायाम् ॥ अस्याः प्रणाममन्त्रोयथा । आस्तीकस्य मुनेः माता भगिनी वासुकेस्तथा । जरत्कारुमुनेः पत्नी मनसादेवीनमोस्तुते ॥ अस्याध्यानं यथा । देवीमम्बामहीनांशशधरवदनांचारुकान्तिं वदान्यां हंसारूढामुदारामरुणितवसनांसर्वदांस

वर्द्दैव । स्मरास्यांमर्गिडता‍ङ्गीकन कर्मगिणगणैर्नागरस्वैरनेकैर्वर्न्द्दहं साष्टनागामुकुचयुगलांभोगिनीं कामरूपामितितिथ्यादितत्त्वम् ॥

मनसिजः । पुं॰कामदेवे ॥ शृङ्गाररूपे चमनसिजायते स्म । जनो॰ सप्तम्यांजनेर्ड: तत्पुरुषे कृतीत्यलुक् हलदन्तादितिवा ॥

मनसिशयः । पुं॰ स्मरे । कामदेवे । मनसिशेते । शीङ् । अधिकरणे शेतेरित्यच् । हलदन्तादित्यलुक्॥

मनस्कारः । पुं॰ चित्ताभोगे । मनसः सुखादौ । एकस्मिन्विषयेचित्तस्थैर्ये ॥ मनसः कारोव्यापारविशेषः । डुकृञ् । भावे घञ् । अतः कृकमीतिसत्वम् ॥

मनस्तापः । पुं॰ मनः पीडायाम् । अनुतापे । पश्चात्तापे ॥ यथा । परनिन्दानिजोत्कर्षव्यसनायुक्तभाषणम् । अयुक्तं कर्मकुर्वाणोमनस्तापैर्विशुद्ध्यतीतिमहानिर्वाणतन्त्रम् ॥ ब्राह्मणं नयदादैवाच्छिन्नंयज्ञोपवीतकम् । मनस्तापेनशुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः ॥

मनस्तालः । पुं॰ दुर्गायाः सिंहे ।

मनस्थः । त्रि॰ मनसिस्थितवस्तुनि ॥

मनश्ननम् । न॰ विवक्षामुद्रो ॥

मनस्वी । पुं॰ शूरे ॥ अभिमानिनि ॥ मनोऽस्यास्ति । असमन्तादिनिः ॥ शरभे ॥ त्रि॰ सुमनसि । प्रशस्तमनोयुक्ते ॥ प्रशंसायांविनिः ॥ क्वचिद्भूमौशय्याक्वचिदपिचपर्यङ्कशयनः क्वचिच्छाकाहारः क्वचिदपिचशाल्योदनरुचिः । क्वचित्कन्थाधारीक्वचिदपिचदिव्याम्बरधरोमनस्वीकार्यार्थी नगणयतिदुःखंनचसुखम् ॥

मनस्विनी । स्त्री॰ प्रशस्तमनसिस्त्रियाम् ॥ नान्तलक्षणोङीप् ॥

मनहंसः । पुं॰ अतिशक्वरीछन्दः १५ प्रभेदे ॥ सगणं विधायपयोधरद्वयसुन्दरम्॰ भगणंततोपिविधायचामरतोमरम् । मनहंसवृत्तमिदस्वपञ्चदशाक्षरम् भणितम्भुजङ्गमनायकेनमनोहरम् ॥ यथा । नवमञ्जुवञ्जुलकुञ्जकूजितकोकिले॰मधुमत्तचञ्चलचञ्चरीककुलाकुले । समयेतिधीरसमीरकम्पितमानसे॰ किमुचण्डिमानमनोरथेनविखिद्यसे ॥

मनाक् । अ॰ अल्पे ॥ मन्दे ॥ मननम् । मनज्ञाने । आक् प्रत्ययः ॥

मनाका । स्त्री॰ करिण्याम् । हस्तिन्याम् ॥ मन्यते । मन॰ । बलाकादयश्चेतिसाधुः ॥

मनाक्करम् । न॰ मंगल्यायाम् । मल्लिकागन्धयुक्तागुरुणि ॥ त्रि॰ ई-

पत्न्यां ॥

मनायी । स्त्री० मनो : पत्न्याम् ॥ मनुशब्दः पुंयोगे० मनोरौवेत्यैकारा देशस्ततोङीप् च ॥

मनावी । स्त्री० मनाय्याम् ॥ मनो : स्त्रीतिपुंयोगेमनुशब्दस्यमनोरौवेत्यौ कारादेशस्ततोङीप्च ॥

मनित : । त्रि० बुद्धे । ज्ञाते॥ मन्यते स्म । मनुअवबोधने । क्त : । यस्य- विभाषेत्यस्यानित्यत्वादिट् ॥

मनीकम् । न० अञ्जने ॥

मनीषा । स्त्री० बुद्धौ धिषणायाम् । शेमुष्याम् । ईषणम् ० ईषा । ईष गतिहिंसादर्शनेषु । गुरोश्चहलइत्य प्रत्यय : । टाप् । मनसईषा । श- कन्ध्वादि : ॥

मनीषिका । स्त्री० मनीषायाम् ॥

मनीषितम् । न० मनीषायामभिनिवि ष्टंमनीषितम् । प्रातिपदिकाद्धात्व र्थेबहुलमिष्ठवच्चेति० णिचि० तद न्तात्० क्त :॥ इच्छायाम् ॥

मनीषी । पुं० ज्ञे । प्राज्ञे । धीरे । पण्डिते ॥ मनीषाऽस्यास्ति । व्रीह्या दित्वादिनि : ॥ यद्वा । मनसईषी चित्तशुद्धिक्रमेणमनसोवशीकर्त्ता ॥ मनसईषितरिसर्वज्ञईश्वरे ॥ पृषोद रादि : ॥ ब्रह्मविदि ॥ अकृतफला भिसन्धौ । सतत्वशुद्धिद्वारेणमहावा- क्यजन्यात्ममनीषावति ॥ विवेकि

नि ॥ प्रमाणकुशले ॥

मनु : । पुं० ब्रह्मण : पुत्रे । सचप्र- जापतिर्धर्मशास्त्रवक्ताच ॥ स्वाय भुवादिषु ॥ प्रतिकल्पं चतुर्दशम- नवोभवन्ति । तेषांनामानियथा । स्वायम्भुव : १ सचगायत्र्यांब्रह्मणो जात : । स्वारोचिष: २ । उत्तम: ३ । तामस : ४ । रैवत : ५ । चा क्षुष : ६ । सचध्रुवपौत्रात्रिपुञ्ज- यात्तव्रह्मदौहित्र्यांवीरणकन्यायांवैरि ण्यांजात : । एतेषडतीता : । वैव स्वत : ७ । अयञ्चसूर्यात्संज्ञायां जातोवर्त्तमानएव ॥ सावर्णि: ८। सतुसूर्याच्छायायांभविष्यति । द क्षसावर्णि : ९ । ब्रह्मसावर्णि: १० । धर्म्मसावर्णि : ११ । रुद्रसावर्णि : १२ । देवसावर्णि : १३ । इन्द्रसावर्णि : १४ । एतेभ विष्यन्ति ॥ मात्स्ये नवमादिमनूनां नामान्तराण्युक्तानि । यथा० रौ- च्य : ९ असौरुचिप्रजापते : पुत्र: । भौत्य : १० । असौभूतिप्रजाप- ते : पुत्र: । मेरुसावर्णि : ११ अ सौब्रह्मण : पुत्र : । ऋतु: १२ ऋ तुधामा १३ । विष्वक्सेन : १४॥ इतिमात्स्ये नवमाध्यायमारभ्यैकविं शत्यध्यायपर्यन्तंचतुर्दशमनूनांनि- रूपणमस्ति ॥ ब्रह्मणोदिवसे ब्रह्म- न् मनवश्चचतुर्दश । भवन्तिपरिम

गाश्चतेषांकालकृतंशृणु ॥ सप्तर्षयः सुराः शक्रोमनुस्तत्सूनवोनृपाः । एककालेहिसृज्यन्तेसंह्रियन्ते चपूर्ववत् ॥ चतुर्युगाणांसंख्यातमधिकाह्येकसप्तति: । मन्वन्तरंमनोः कालः सुरादीनाञ्चसत्तम ॥ अष्टौशतसहस्राणिदिव्ययासङ्ख्ययास्मृताः । द्वापञ्चाशत्तथान्यानिसहस्राण्यधिकानिच ॥ त्रिंशत्कोट्यस्तुसम्पूर्णाः सङ्ख्याताः सङ्ख्ययाद्विज । सप्तषष्टिस्तथान्यानिनियुतानिमहामुने ॥ विंशतिश्चसहस्राणिकालोयमधिकंविना । मन्वन्तरस्यसङ्ख्येयंमानुषैर्वत्सरैर्द्विज ॥ मन्वे मनुष्ये । जिनभेदे ॥ प्रजापतौ ॥ ऋषिविशेषे ॥ स्वायम्भुवप्रणीतस्मृतिविशेषे ॥ मनुते । मनुअवबोधने । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्युः ॥ मन्यते । मनज्ञाने । पूर्ववत् उः ॥

मनु: । स्त्री॰ मनोः पत्नाम् ॥ मनोस्त्रीतिविग्रहे॰ पुंयोगे॰ मनोरौवेत्यौकारैकाराभावे॰ तत्सन्नियोगशिष्टोङीप् चनभवति ॥ पृक्कायाम् ॥

मनुज: । पुं॰ मनुष्ये ॥ मनोर्जात: । जनी॰ । पञ्चम्यामितिड: ॥

मनुजपति: । पुं॰ नरेन्द्रे । मनुजानांपति: ॥ मध्यगुरुसंज्ञायाम्॰ ।ऽ।०॥



मनुजी । स्त्री॰ मनुष्याम् ॥

मनुभू: । पुं॰ मनुष्ये ॥

मनुराट् । पुं॰ कुबेरे । निधिनाथे । श्वेतोदरे ॥

मनुषी । स्त्री॰ मानुषस्त्रियाम् । मनुष्यस्त्रीजातौ ॥ योपधप्रतिषेधे॰ गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधइतियोपधाज्जातेर्ङीष् । हलस्तद्धितस्येतियलोप: ॥

मनुष्य: । पुं॰ मानुषे । मर्त्ये । मनुजे । मानवे । नरे ॥ अयन्तुअर्वाकस्रोतोब्रह्मणोनवम: सर्गएकविधश्च । यथा । अर्वाक्स्रोतस्तुनवम: क्षत्तरेकविधोनृणाम् । रजोधिकाः कर्मपराट्: खेचसुखमानिन: ॥ अपिच । तथापिध्यायत: सर्गंसत्याभिध्यायिनस्तत: । प्रादुर्बभूवचाव्यक्तादर्वाक्स्रोतस्तुसाधक: ॥ यस्मादर्वाक्प्रपद्यन्ते ततोर्वाक्स्रोतसस्तुते । तेचप्रकाशबहुलास्तमोद्रिक्तारजोधिका: । तस्मात्ते दु:खबहुला भूयोभूयश्चकारिण: । प्रकाशाबहिरन्तश्चमनुष्यासाधकास्तुते इतिवह्निपुराणम् ॥ शास्त्रीयज्ञानकर्मयोग्योद्धयम् ॥ अत्रपश्चमनुष्यविभागोवाराह्याम् ६७ अध्याये ॥ मनोरपत्यम् । मनोर्जातावञ्यतौषुक्च ॥

मनुष्यतीर्थम् । न॰ प्रजापतितीर्थे । कनिष्ठामूले ॥

मनुष्यधर्मा । पुं० धनदे । श्रीदे । कुबेरे ॥ मनुष्यस्येवधर्म्म आचार : । श्मश्रुलत्वादिर्यास्य । धर्मादनिच्केवलात् ॥

मनुष्ययज्ञ : । पुं० अतिथिपूजने । नृयज्ञे ॥

मनुष्यलोक : । पुं० अधिकृतब्राह्मणादिविशिष्टदेहे ॥

मनोगुप्ता । स्त्री० नागजिह्वायाम् । मन : शिलायाम् ॥ मनसागुप्ता । कर्तृकरणसमास : ॥ इक्षुप्रभेदे । मनोगुप्तावातहरीतृष्णामयविनाशिनी । सुशीतामधुरातीवरक्तपित्तप्रणाशिनी ॥

मनोज : । पुं० कामदेवे ॥ मनसिजायतेशृङ्गारादिरूपेणप्रादुर्भवति । जनी० । सप्तम्यांजनेर्ड : । तत्पुरुषेकृतिबहुलमितिबहुलग्रहणात्लुगभावाभाव : ॥

मनोजन्मा । पुं० कामदेवे ॥ मनसोजन्मयस्य स : ॥

मनोजव : । पुं० हरौ ॥ मनसोवेगइवजवोऽस्यसर्वगतत्वात् ॥ हनुमति । मनसोवेगे ॥ त्रि० पितृसन्निभे । पितृतुल्ये अतिशयवेगवति ॥ जवति । जु : सौत्र : । अच् । मनोजवेवेगवदास्मिन् ॥

मनोजवस : । पुं० पितृसन्निभे ॥ मनोजवतेस्मिन् । औणादिकोऽस : ॥

मनोजवृद्धि : । पुं० कामवृद्धिक्षुपे ॥

मनोज्ञम् । न० सरलकाष्ठे ॥ त्रि० शोभने । मनोहरे । सुन्दरे । रुचिरे ॥ मनसाजानाति । इगुपधेतिक : । निवृत्तप्रेषणोवजानाति : ॥

मनोज्ञा । स्त्री० मन : शिलायाम् ॥ राजपुत्र्याम् ॥ बन्ध्याकर्कोटक्याम् ॥ जात्याम् ॥ मदिरायाम् ॥ स्थूलजीरके ॥

मनोनाश : । पुं० मनसोलये ॥ मनसोनाशोनामवृत्तिरूपपरिणामंपरित्यज्यसर्ववृत्तिविरोधिनानिरोधाकारेणपरिणाम : ॥ सहस्रांकुरशाखात्मफलपल्लवशालिन : । अस्यसंसारवृक्षस्यमनोमूलमितिस्थितम् । संकल्पमेवतन्मन्ये संकल्पोपशमेनतत् । शोषयामियथाशोषमेतिसंसारपादप: ॥ प्रबुद्धोस्मिप्रबुद्धोस्मिदुष्टश्चौरोमयात्मन: । मनोनामनिहन्म्येनंमनसाहंचिरंहत: ॥ इतिजनक: ॥ वशिष्ठोप्याह । अस्यसंसारवृक्षस्य सर्वोपद्रवदायिन : । उपायएकएवास्तिमनस : स्वस्यनिग्रह : ॥ मनसोभ्युदयोनाशोमनोनाशोमहोदय : । ज्ञोमनोनाशमभ्येतिमनोज्ञस्यहिशृङ्खला ॥ तावन्निशीववेतालावल्गन्तिहृदिवासना : । एकतत्त्वदृढाभ्यासाद्यावन्नविजितंमन : ॥ प्रक्षीणचित्तदर्पस्यनिगृहीतेन्द्रियद्विष : । पद्मि

न्यइव स्तिमस्तं चीयन्तं भोगवासना : ॥ हस्तंहस्तेनसम्पीड्य दन्तैर्दन्तान् विचूर्ण्य च । अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मन : ॥ एतावति भूमितले सुभगास्ते साधुचेतना : पुरुषा: । पुरुषकथासु च गण्या न जिता ये चेतसा स्वेन ॥ हृदयबिलेकृतकुण्डल उल्बणकलनाविषो मनोभुजग : । यस्योपशान्तिमागतमुदितं तमव्ययं वन्दे ॥ इति ॥ द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानञ्च राघव । योगस्तद्वृत्तिरोधो हि ज्ञानं सम्यगवेक्षणम् । असाध्य : कस्यचिद्योग : कस्यचिद् ज्ञाननिश्चय : । प्रकारौ द्वौ ततो देवो जगाद परमेश्वर : ॥ इति च ॥ मनोनाशाभ्यासस्तु अत्यन्ताभावसम्पत्तौ ज्ञातुर्ज्ञेयस्य वस्तुन : । युक्त्या शास्त्रैर्यतन्ते ये तेप्यत्राभ्यासिन : स्थिता : ॥ ज्ञातृज्ञेययोर्मिथ्यात्वधीरभावसम्पत्ति : ० स्वस्वरूपेणाप्यप्रतीतिरत्यन्ताभावसम्पत्ति : । युक्तिर्योग : । सोऽयं मनोनाशाभ्यास : ॥

मनोन्मनी । स्त्री० योगिनोऽवस्थाविशेषे ॥ यथाहुर्योगतारावल्यां श्रीशङ्कराचार्या : । नेत्रयोरुन्मेषनिमेषशून्ये वायुर्यथावर्जितरेचपूर : मनश्च सङ्कल्पविकल्पशून्यं मनोन्मनी साम यिसन्निधत्ताम् ॥ चित्तेन्द्रियाणां चिरनिग्रहेण श्वासप्रवाहे शमिते समस्ते । निवातदीपायुतनिश्चलाङ्गा मनोन्मनी सामयि सन्निधत्तामिति ॥

मनोभव: । पुं० कामदेवे ॥ मनसि भवोऽस्य

मनोभू: । पुं० कन्दर्पे । मनसा० मनस : मनसि वा भवति। भुव: क्विप् ॥

मनोमय: । पुं० पञ्चकोषान्तर्गततृतीयकोषे । इच्छाशक्तिमति० करणरूपे मनस्तु कर्मेन्द्रियै : सहितं मनोमयकोषो भवतीति ॥ अहन्तां ममतां देहे गृहादौ च करोतिय : । कामाद्यवस्थया भ्रान्तो नासावात्मा मनोमय : ॥ आत्मनि ॥ मनोवृत्तिभिर्विभाव्यमानत्वात् ॥ त्रि० मन : प्राये ॥

मनोयोनि : । पुं० कामदेवे ॥ मनोयोनिरस्य ॥

मनोरथ : । पुं० इच्छायाम् । स्पृहायाम् ॥ मन एव रथोऽत्र । मनसो रथ इव वा ॥ मनोरथानां समाप्तिरस्ति वर्षायुतेनाप्यथवाब्दलक्षै : । पूर्णेषु पूर्णेषु पुनर्नवानामुत्पत्तय: सन्ति मनोरथानाम् । त्रि० मनस्तुष्टिकरे । चित्तपरिकल्पिते० चित्तपरिच्छेद्ये मनस्यन्तर्वर्तमाने ॥

मनोरम : । त्रि० सुन्दरे । रुचिरे । चारुणि । सुषमे । साधौ । शोभने ॥ मनो रमयति । रम् ० । ण्यन्त : । कर्मण्यण् ॥ दक्षिणपश्चिमद्वारगृहे ॥

मनोरमा । स्त्री० मनोज्ञायाम् । का न्तायाम् । मञ्जुलायाम् । मनोह रायाम् । सुंदर्याम् ॥ बुद्धशक्तिवि शेषे । तारायाम् । लोकेश्वरात्म जायाम् ॥ पङ्क्तिश्छन्द : १० प्र- भेदे । यथानरजगैर्भवेन्मनोरमा । यथा । तरणिजातटे विहारिणी० व्रजविलासिनीविलासत : । मुररि स्तनु : पुनातुव : ० सुकृतशालि नांमनोरमा ॥

मनोवती स्त्री० ब्रह्मण : पुर्याम् ॥ यथा । चतुर्दशसहस्राणियोजनानां स्वयम्भुव : । मध्ये मनोवतीनामपु रीलोकेशवन्दिता ॥ याचकारारुणा नुस्र्वैर्यन्मार्गान्महः श्रिया । सावित्र्या : स्पर्द्धमानेवस्वर्गकामाति वर्तिनी ॥ तस्यामुपासतेदेवामुनय श्चमहौजस : । महायोगेश्वरंसिद्धै यमाद्यैर्भूतवैधसम् ॥ मध्ये ० इन्द्रा द्यष्टदिक्पाना ममरावत्याद्यष्टपुरी णांमध्यइत्यर्थ : ॥ इतिमृगेन्द्रसंहि ता ॥

मनोवित् । पुं० लोकायतभेदे ॥ सहिभा न्त्यामनणवात्मेतिनिश्चिनोति । म नस : स्वातन्त्र्याच ० घटवदनात्म त्वात् ० करणत्वाद्दीपवदात्मत्त्वा योगात् ॥

मनोहत : । त्रि० प्रतिहते । कृतमनो भङ्गे । मनोहतंयस्यस : ॥

मनोहर : । पुं० कुन्दवृक्षे ॥ न० सुव र्णे ॥ त्रि० मनोज्ञे ॥ मनोहरति हरतेरनुद्यमनेऽ० इत्यच् ॥

मनोहरा । स्त्री० जातीवृक्षे ॥ स्वर्णयू थ्याम् ॥ मनोज्ञायाम् ॥ टाप् ॥

मनोहर्त्ता । त्रि० मनोहरणकर्त्तरि ॥

मनोहारि । न० सुन्दरवाक्ये ॥ त्रि० मनोहरे ॥ प्रिये ॥

मनोह्वा । स्त्री० मन : शिलायाम् ॥ मन : शब्दे ह्वयते । ह्वेञ्शब्दे । आतश्चोपसर्गइत्यङ् । टाप् ॥

मन्तव्य : । त्रि० ज्ञेये ॥ मननीये । भाव्ये । विभावनीये ॥ मन्तव्यश्चो पपत्तिभि : ॥

मन्तु : पुं० अपराधे ॥ मनुष्ये ॥ प्रजापतौ ॥ न० मन्त्रणायाम् ॥ म न्यते । मनज्ञाने । कमिमनिजनी त्यादिना० तु : ॥

मन्ता । पुं० मन्त्रिणि ॥ मन्यते मन । बहुलमन्यत्रापीति० तृच् ।

मन्त्र : । पुं० वेदविशेषे ब्राह्मणभिन्ने वेदभागे । याज्यापुरोनुवाक्यादौ । देवेभ्योयेनोद्दिश्यहविर्दीयतेतत्र ॥ स्वरतोवर्णतोवाहीनस्यमन्त्रस्यानिष्ट फलजनकत्वमुक्तं शिक्षायांमहाभाष्ये च । मन्त्रोहीन : स्वरतोवर्णतोवा मिथ्याप्रयुक्तोनतमर्थमाह । सवाग् वज्रोयजमानंहिनस्तियथेन्द्रशत्रु : स्वरतोपराधादितिशिक्षा । दुष्ट :

शब्द : स्वरतइतिभाष्यपाठ : । दुष्टान्शब्दान् माप्रयुक्ष्महीत्यधेयाक रणमिति ॥ श्चकैयट : । स्वरेणस्वरत : । चाद्यादित्वात्तसि : । मिथ्याप्रयुक्तइति । यदर्थप्रतिपादनायप्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात् प्रतिपादयन्नाभिमतमर्थमाहेत्यर्थ : । वागेववज्रोहिंसकत्वात्यथेन्द्रशत्रुशब्द : स्वरदोषात्यजमानंहिंसितवानित्यर्थ : । इन्द्रस्याभिचारोवृत्रेणारब्ध : । तत्रेन्द्रशत्रुर्वर्द्धस्वेतिमन्त्रऊहित : तत्रेन्द्रस्यशमयितागातयिताबाभवेतिक्रियाशब्दोऽत्रशत्रुशब्दआश्रितोनतुरूढिशब्द : । तदाश्रयणे हिबहुव्रीहितत्पुरुषयोरर्थाभेद : । तत्रेन्द्रादिमित्वर्त्विसिद्धे सतिइन्द्रस्यशत्रु : अर्वेत्यवार्थप्रतिपाद्यमन्तोदात्तं प्रयोक्तव्यं आद्युदात्तस्त्विजाप्रयुक्तइत्यर्थान्तराभिधानादिन्द्रएव० वृत्रस्यशातयितासम्पन्न : । इन्द्रशत्रुत्वस्यविधेयत्वात्सम्बोधनविभक्तेरनुवाद्यविषयत्वादित्याभाव : । यथाराजाभवयुध्यस्वेति । ऊह्यमानस्यचामन्त्रत्वात्यज्ञकर्मणीतिजपादिपर्युदासेमन्त्राणामिकश्रुतिर्विधीयमानानेहभवतीति ॥ ❀ ॥ मन्त्रान्तेकर्मसन्निपातइतिन्याय : ॥ प्रयोगसमवेतार्थस्मारकैवेदभागे ॥ मन्त्राणांतादृशार्थस्मारकत्वेनैवार्थवत्त्वम् । नतुतदुच्चारणमदृष्टार्थं सम्भवति । दृष्टफलकत्वे० अदृष्टकल्पनायाअन्याय्यत्वात् । न चदृष्टार्थस्मरणस्यप्रकारान्तरेणापि सम्भवान् मन्त्राम्नानं व्यर्थमितिवाच्यम् । मन्त्रैरेवस्मर्त्तव्यमितिनियमविध्याश्रयणात् ॥ देवादीनांसाधने । मायावीजादौ ॥ गुह्यवादे । रहसिकर्त्तव्याऽवधारणे । मन्त्र णायाम् ॥ तस्यच० पञ्चाङ्गानिभवन्ति । तानिच । कर्मणामारम्भोपाय : ० पुरुषद्रव्यसम्पत्० देशकालविभाग : ० विनिपातप्रकार : ० कार्यसिद्धिरिति ॥ मन्त्रमूलंयतोराज्यमतोमन्त्रंसुरक्षितं । कुर्याद्यथातन्नविदु : कर्मणामाफलोदयम् ॥ गिरिपृष्ठंसमारुह्यप्रासादंवारहोगत : । अरण्येनि : शलाकेवामंत्रयेदविभावित : ॥ षट्कर्णोभिद्यतेमन्त्रश्चतुष्कर्णःसधार्यते । द्विकर्णस्यतुमन्त्रस्यब्रह्माप्यन्तंनबुध्यते ॥ मन्त्रते० मन्त्रणंवा । मन्त्रिगुप्तभाषणे । घञ् ॥ पञ्चमराशौ ।

मन्त्रकृत् । पुं० मन्त्रेणि । मन्त्रकारके ॥ मन्त्रान्कृतवान् । सुकर्मपापमन्त्रपुण्येषुकृञइतिक्विप् ॥ मन्त्रद्रष्टरि ॥ दौत्यकृति ॥ मन्त्राणांद्रष्टरि० प्रयोक्तरि-

ण ॥

मन्त्रगण्डकः । पुं॰ विद्यायाम् ॥

मन्त्रगूढः । पुं॰ चरे॥ मन्त्रोगूढोयस्मिन् ॥

मन्त्रगृहम् । न॰ मन्त्रणागारे ।

मन्त्रजा । स्त्री॰ मन्त्रशक्तौ ॥

मन्त्रजिह्वः । पुं॰ वह्नौ ॥

मन्त्रज्ञः । पुं॰ चरे ॥ त्रि॰ । मन्त्रविदि ॥

मन्त्रज्वालः । पुं॰ चमौ ॥

मन्त्रणम् । न॰ मन्त्रे ॥ मत्रि॰ । भावे ल्युट् ॥ मन्त्रणायाम् ॥

मन्त्रणा । स्त्री॰ मन्त्रे ॥ रहसिकर्त्तव्यावधारणे ॥ तत्रवर्णनीयानि यथा । मन्त्रेपञ्चाङ्गताशक्तिषाड्गुण्योपायसिद्धयः । उदयाश्चिन्तनीयाश्चस्थैर्यैर्न्नस्यादिसूक्तयः ॥

मन्त्रणागारम् । न॰ मन्त्रगृहे ॥

मन्त्रदः । त्रि॰ मन्त्रदातरि ॥

मन्त्रदाता । त्रि॰ मन्त्रप्रदानकर्त्तरि । श्रीगुरौ ॥ अदीक्षितस्यमूर्खस्यनिष्कृतिर्नास्तिनिश्चितम् । सर्वकर्मस्वनर्हश्चनरकेतत्पशौः स्थितिः ॥ जन्मदातान्नदाताचामातान्येगुरवस्तथा । पारेकर्त्तुंन शक्यन्तेघोरेसंसारसागरे॥ विद्यामन्त्रज्ञानदातानिपुणः पारकर्म्मणि । समर्थः शिष्यमुद्धर्त्तुं सोऽपरः ॥

मन्त्रदीधितिः । पुं॰ चमौ ॥

मन्त्रनिर्णयः । पुं॰ मन्त्रनिश्चये ॥ यथा । मन्त्रमूलंयतोराज्यंततोमन्त्रंसुरक्षितम् । कुर्याद्यथातन्नविदुः कर्मणामाफलोदयात् ॥ धर्मार्थकामशत्रूणांमंत्रोभौसंशयस्सपरीक्ष्यते । समंचद्वितिविज्ञेयः श्रेयाखलुविभ्रमाः ॥ एकमेवविषंहन्तिशस्त्रेणैकश्चवध्यते । सराष्ट्रसम्पदंहन्तिराजानंमंत्रविप्लवः ॥ करिष्यन्नप्रभाषेतकृतान्येवतुदर्शयेत् । धर्मार्थकामकार्याणिकृतेमंत्रोनभिद्यते ॥ गिरिपृष्ठमुपारुह्यप्रासादंवारहोगतः ॥ स्वपथेनिःशलाकेवातत्रमंत्रोविधीयते ॥ तत्रसामप्रयोक्तव्यंकार्येषुगुणवत्स्वपि । दानंलुब्धेपिभेदश्शङ्कितेष्वपिनिश्चयः ॥ जडमूकांधवधिरांस्तिर्यग्योनीन्वयोधिकान् । स्त्रीम्लेच्छव्याधितव्यङ्गान्मंत्रकालेनिषेधयेत् ॥ इतिसम्यक्कृतः प्रोक्ताराजनीतिरियंमया । यत्त्रिवर्गाविरुद्धंस्याद्राजनीतिस्तदुच्यते ॥ इति युक्तिकल्पतरौनीतियुक्तिः ॥

मंत्रपूतः । त्रि॰ मंत्रेणपविची कृते ॥

मंत्रपूतात्मा । पुं॰ गरुडे ॥ त्रि॰ मंत्रेणपवित्रात्मनि ॥

मंत्रवित् । पुं॰ चरे ॥ मंत्र-

वेत्ति । विद० । क्विप् ॥
वि० मंत्रज्ञातरि ॥
मंत्रवेश्म । न० मंत्रगृहे । चिन्तो द्वसिते ॥
मंत्रशक्तिः । स्त्री० राज्ञांशक्ति विशेषे । ज्ञानबले ॥ सन्ध्या दिषगणांयथावत्स्थापनंज्ञानबलंमं त्रशक्तिः । पञ्चाङ्गमंत्रोमंत्रश क्तिरित्यन्ये ॥
मंत्रस्पृक् । वि० मंत्रकरणकस्प र्शकर्त्तरि ॥
मंत्रितः । वि० मंत्रेणसंस्कृते । अभिमंत्रिते ॥
मन्त्री । त्रि० उपदेष्टरि । साधके ॥ पुं० मन्त्रज्ञातकर्त्तव्यनिश्चयकर्त्त रि । धीसचिवे । अमात्ये ॥ कार्य सहायाः सचिवाबुद्धिसहायाश्चम न्त्रिणः प्रोक्ताइतिभेदः । तल्ल क्षणंयथा । मन्त्रीभक्तः शुचिः शू रोऽनुरक्तोबुद्धिमान्क्षमी । आन्वी क्षिक्यादिकुशलः परिच्छेदीसुदेश जः ॥ विद्यादिगुणसम्पन्ना विप्राः कार्याश्चमन्त्रिणः । यथोक्तं कालिकापु राणे । मन्त्रिणस्तुनृपः कुर्य्याद्विप्रान् विद्याविशारदान् । विशुद्धांश्चकुलीनां श्चधर्मार्थकुशलानृजून् ॥ मन्त्रयेत्तैः समंकालेनात्यर्थंबहुभिश्चरेत् एकैके नैवकर्त्तव्यंमन्त्रस्तुविनिश्चयम् ॥ व्य स्तैश्चैवसमस्तैश्चवान्यस्यव्यपदेशतः । स्वयंकृत्तंमन्त्रगृहंस्थूलवाक्यमम न्त्रयेत् ॥ अरण्ये निःशलाकेवान यामिन्यांकदाचन । शिशून्शाखामृ गान्षण्डान्शुकान्वैसारिकांस्तथा ॥ वर्जयेत्मन्त्रगेहेषुमनुष्यानुद्धतां स्तथा । दूषणंमन्त्रभेदेषुनृपाणांयच्च जायते ॥ नतत्सम्यक्समाधातुंद्द च्छैर्नृपशतैरपोति ॥ अपिचमत्स्यपुरा णे । बहुभिर्मंत्रयेत्कामंराजामंत्रं पृथक्पृथक् । मंत्रिणामपिनोकुर्यात् मंत्रीमंत्रप्रकाशनम् ॥ नक्कचित्कस्य विश्वासोभवतीहसदानृणाम् । नि श्चयश्चसदामंत्रे कार्यएकेनसूरिणा । भवेद्वानिश्चयावाप्तिः परबुद्ध्यनु जीवनात् । एकस्यैवमहीभर्त्तुर्भू यः कार्योविनिश्चयः ॥ इति ॥ मं त्रगुप्तभाषणमस्यास्ति । अतइनिः ॥ यद्वा । अवश्यंमंत्रयते । मन्त्रिगु प्तभाषणे । आवश्यकेणिनिः ॥ य ह्णादिणिन्यन्तोवा ॥
मन्थः । पुं० मन्थानदण्डे ॥ दिवाक रे ॥ सातवे । द्रवद्रव्यसंयुक्तेषुसक्तु षु । यथा । सक्तुभिः सर्पिषाभ्यक्तैः शीतवारिपरिप्लुतैः । नात्यच्छोनाति सान्द्रश्चमन्थइत्यभिधीयते ॥ पेय विशेषेयथा । जलेचतुष्पलेशीतेक्षुण्णं द्रव्यंपलंक्षिपेत् । मृत्पात्रेमन्थयेत् सम्यक्तस्माच्चद्विपलंपिबेत् ॥ क्षुण्णं चूर्णीकृतंमन्थेन० मृद्नीयात् ॥

नेत्ररोगे ॥ नेत्रमले ॥ मारणे ॥ मथ्यतेऽनेन। मथिहिंसासंक्लेशनयोः । हलश्चेतिघञ् ॥ मन्थने ॥

मन्थजम् । न० नवनीते ॥

मन्थदण्ड : । पुं० मन्थाने । मन्थानदण्डे । रई० इ० भा० ॥

मन्थनम् । न० विलोडने ॥ कुन्थने ॥ पुं० मन्थानदण्डे ॥

मन्थनघटी । स्त्री० दधिमन्थनपात्रे ॥

मन्थनी । स्त्री० गर्गर्याम् । मन्थनपात्रे ॥ मथ्यतेऽस्याम् । मन्थविलोडने। करणेतिल्युट् ॥

मन्थर : । पुं० कोषे ॥ फले ॥ वाधे । मन्थाने ॥ सूचके मन्दगामिनि । योऽरि ॥ कोपे ॥ केशे ॥ न० कुसुम्भाम् ॥ त्रि० मन्दे ॥ पृथौ । वक्रे ॥ मन्दगामिनि । जडे ॥ सूचके ॥ नीचे ॥ मन्थतिपादौ । मथि० । वाहुलकादरन् ॥

मन्थरा । स्त्री० कैकेय्यादास्याम् ॥

मन्थरु : । पुं० कुठेरी । चामरवाते ॥

मन्थशैल : । पुं० मन्दराचले ॥

मन्था । स्त्री० मेथिकायाम् ॥

मन्थान : । पुं० मन्थदण्डे । बैशाखे रई० इ० भा० ॥ आरग्वधे ॥ न० गायत्रीच्छन्दः ६ प्रभेदे ॥ यथा । कर्णध्वजानन्दमाधायनित्यश्च । बर्हीरसैयैत्तुमन्थानमेतत्तु ॥ यथा । शीतांशुवक्त्रायपाथोजनेत्राय । वन्दस्वनन्दस्यभव्यायपुत्राय ॥ मन्थति । मथि० । वाहुलकादानच् ॥

मन्थानक : । पुं० तृणभेदे । रहिते । दृढमूले । तृणाङ्घ्रिपे ॥

मन्थिनी । स्त्री० दधिमन्थनपात्रे । गर्गर्याम् । कलस्याम् । मथानी० इ० भा० ॥

मन्द : । पुं० शनैश्चरे ॥ हस्तिजात्यन्तरे ॥ शीर्षपादे । यमे ॥ प्रलये ॥ त्रि० अतीक्ष्णे । अलसे । शीतके ॥ मूर्खे ॥ स्वैरे ॥ अभाग्ये । भाग्यरहिते ॥ रोगिणि ॥ अल्पे ॥ मद्यरते ॥ खले ॥ अशुश्चित्तत्वेनज्ञानाधिकारमप्राप्ते ॥ मन्दते । मदिस्तुतिमोदमदस्वप्रकान्तिगतिषु । पचाद्यच् ॥ न० ईषदर्थे ॥

मन्दग : । त्रि० मृदुगामिनि । अशीघ्रगे ॥

मन्दगति : । पुं० शनौ ॥ त्रि० मन्दगामिनि ॥

मन्दगामी । त्रि० मन्दगमनशीले । मन्थरे ॥ मन्दं गच्छति० तच्छील : । गमॢ० । सुप्यजातावितिणिनिः

मन्दजननी । स्त्री० सूर्यपत्न्याम् । शनिमातरि । छायायाम् । तपत्याम् ॥

मन्दट : । पुं० पारिभद्रवृक्षे ॥

मन्दता । स्त्री० आलस्ये । मन्दत्वे ॥

मन्दनम् । न० स्तोत्रे ॥ मन्दते । मदि । कृपृवृजिमन्दीत्यादिनाक्युः ॥

मन्दप्रज्ञ : । त्रि॰ जडबुद्धौ ॥ मन्दाज्ञ
डाप्रज्ञाधीर्थस्यस : ॥
मंदभाग्य : । त्रि॰ विघ्नाकुले ॥
मंदभू : । पुं॰ मन्दभूमौ ॥
मन्दर : । पुं॰ मन्थशैले ॥ मन्दारपा
दपे । स्वर्गे ॥ हारभेदे ॥ मेरोर्दा
व्यार्थिप्राच्यांदिशिस्थिते तत्पर्वे पञ्चाशत्
सहस्रोच्छ्रायेविष्कम्भशैले ॥ तत्र
योजनसहस्रोन्नतिमान्कदम्बपाद
पोऽस्ति । सुराङ्गनाक्रीडाप्रधानोऽद्रि
मन्दर : । न॰ वर्णवृत्तान्तरे ॥
छन्दसिभोयदि । मन्दरमस्त्विति ॥
शङ्करुशङ्कर । वैरिभयङ्कर ॥ त्रि॰
बहुले ॥ मन्दे ॥
मन्दिरहरिण : । पुं॰ जम्बुद्वीपोपद्वीप
विशेषे ॥
मन्दसान : । पुं॰ अग्नौ ॥ जीवे ॥
निद्रायाम् ॥ मन्दते । मदि॰ । ऋ
ञ्जिवृधिमन्दिसहिभ्य : किदित्यसा
नच् ॥ वेदभाष्येयौगिकार्थएवपुरस्कृ
त : ॥
मन्दा । स्त्री॰ सङ्क्रान्तिविशेषे ॥ अ
जादित्वाट्टाप् ॥
मन्दाकम् । न॰ स्तवने ॥
मन्दाकिनी । स्त्री॰ वियद्गङ्गायाम् ।
स्वर्णद्याम् । सुरदीर्घिकायाम् ॥
प्रधानधारायास्वर्गेसाचमन्दाकिनी
स्मृता । योजनायुतविस्तीर्णाप्रस्थे
नयोजनास्मृता ॥ क्षीरतुल्यजलाश

प्रवद्व्युत्तुङ्गतरङ्गिणी । वैकुण्ठाद्
ब्रह्मलोकश्चतत : स्वर्गंसमागता ॥
सङ्क्रान्तिविशेषे ॥ यथा । बुधेमै
त्रसंज्ञेतुमन्दाकिनीसानृपाणान्सुखौ
ख्यंभवेत्तत्रमासे ॥ जगतीच्छन्द:
१२ प्रभेदे ॥ ननररघटितातुमंदा
किनी । यथा । बलिदमनविधौबभौ
सङ्गता॰ पदजलरूहियस्यमंदाकिनी
सुरनिहितसिताम्बुजस्रङ्निभाहर
तुजगदघंसपीताम्बर : ॥ मंदमक
ति॰ तच्छीला । अककुटिलायांग-
तौ । सुपीतिणिनि : । ङीप् ॥
मंदाक्रान्ता । स्त्री॰ अत्यष्टिच्छंद : १७
प्रभेदे ॥ मंदाक्रान्ताम्बुधिरसनगैर्मो
भनौतौगयुग्मम् । यथा । प्रेमाला
पै : प्रियवितरणै : प्रीणितालिङ्ग
नाद्यैर्मंदाक्रान्तातदनुनियतंवश्यता
मेतिबाला । एवंशिक्षावचनसुधया-
राधिकाया : सखीनांप्रीत: पायात्
स्मितसुवदनोदेवकीनंदनोन : ॥
मंदाचम् । न॰ लज्जायाम् ॥ मंदमचं
बागावच ॥
मंदाग्नि: । पुं॰ अर्कनिष्कासनाग्नि
विशेषे ॥ कफहाराल्पजठरानले ॥
तस्यनिदानादियथा । मंदस्तीक्ष्णोथ
विषम : समश्चेतिचतुर्विध : । क
फपित्तानिलाधिक्यात्तत्साम्याज्जा
ठरोऽनल : ॥ विषमोवातजान्रो-
गांस्तीक्ष्ण : पित्तसमुन्नतान् । करो

ष्यग्निस्तथामंदीविकारान्कफसम्भवान् ।। समासमाग्ने रशितामाता सम्यग्विपच्यते। अल्पापिनैवमंदाग्ने र्विषमाग्नेस्तुदेहिन : ॥ कदाचित्प च्यतेसम्यक् कदाचिन्नपच्यते ॥ इति ॥ तस्यौषधंयथा। चित्रकस्याष्टभागानिशूरणस्यचषोडश। शुण्ठ्यास्तत्वारिभागानिमरिचानांद्वयं तथा ॥ पिप्पलीपिप्पलीमूलंविडङ्गानांचतुष्टयम्। अष्टौमूषलिभागाश्चत्रिफलायाश्चतुष्टयम् ॥ द्विगुणेनगुडेनैषांमोदकानिहिकारयेत्। तन्नश्यगमजीर्णंहिपाण्डुरोगश्चकामलाम् ॥ अतिशोणितमन्दाग्निप्लीहादांश्चनिवारयेत् ॥ इ० ॥

मन्दायु : । त्रि० अल्पायुषि ॥

मन्दार : । पुं० सुरद्रुमविशेषे। पारिभद्रे। निम्बतरौ। बकायन० इ० भा० ॥ अर्कपर्णे। आक० इ० भा० ॥ मन्दते० मोदयति। मदिस्तुत्या दौ। अर्तिमदिमन्दिभ्यआरन् ॥ मन्दाश्चरायस्य ॥ यद्वा ॥ मन्दाआराधारा अस्यसरलत्वात् ॥ मन्दमृच्छतिवा ऋगतौ ॥ कर्म्मण्यण् ॥ मन्दानिवर्त्ति। अण्। मन्देरर्यतेवा। घञ् ॥ तीर्थविशेषे ॥

मन्दारु : । पुं० पारिजाते ॥ मन्दते। मदि० । बाहुलकादारु : ॥

मन्दिकुकुर : । पुं० मत्स्यविशेषे ॥

मन्दिर : । पुं० मकरावासे। समुद्रे ॥ जानुपश्चाद्भागे ॥ न० नगरे ॥ अगारे। निशान्ते। वस्त्ये। सदने ॥ देवतागृहे ॥ मन्दते० मन्द्यते० सुप्यतेऽत्रवा। मदि० । इषिमदिमुदीतिकिरच् ॥

मन्दिरपशु : । पुं० बिडाले ॥

मन्दिरा। स्त्री० मन्दिरे ॥ अजादित्वाट्टाप् ॥

मन्दुरा। स्त्री० वाजिशालायाम् ॥ शयनीयार्थवस्तुनि। मादरी० इ० भा० ॥ मन्दतेऽत्र। मदिस्तुत्यादौ। मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ॥

मंदेह : । पुं० राक्षसविशेषाणांसंज्ञायाम् ॥ यथा। सन्ध्याकालेतुसम्प्राप्तेरौद्रेपरमदारुणे। मंदेहाराक्षसाघोरा : सूर्यमिच्छन्तिखादितुम् ॥ प्रजापतिकृत : शापस्तेषांमैत्रेयरक्षसाम् ॥ अक्षयत्वंशरीराणां मरणञ्चदिनेदिने ॥ तत : सूर्यस्यतैर्युद्धंभवत्यत्यन्तदारुणम्। ततो द्विजोत्तमास्तोयंप्रक्षिपन्तिमहामुने। ओङ्कारब्रह्मसंयुक्तंगायत्र्याभिमन्त्रितम्। तेनदह्यन्तितेपापावज्रीभूतेनवारिणा इत्यादि विष्णुपुराणेद्रष्टव्यम् ॥

मंदोदरी। स्त्री० रावणस्यपत्न्याम्। मयासुरस्यपुत्र्याम् ॥

मंदोदरीश : । पुं० रावणे ॥ मंदो

दर्या : ईश : ॥

मन्दोदरीसुत : । पुं० इन्द्रजित ।

मन्दोष्णम् । न० ईषदुष्णे ॥ मंदश्च तदुष्णञ्च ॥ वि० तद्वति ॥

मन्द्र : । पुं० गम्भीरध्वनौ ॥ मेघादि-शब्दे ॥ मन्दते । मदि० । स्फायि तञ्चीतिरक् । वाद्यविशेषे । मृदङ्गके ॥ त्रि०गम्भीरध्वनिवति ॥

मन्मथ : । पुं० कामदेवे । कुसुमायुधे ॥ कपित्थे ॥ मननंमत् । चेतना । मन० । सम्पदादित्वात्क्विप् । गमादीनांक्वाविति नलोप : । ह्रस्वस्येतितुक् । मथतीतिमथ : । मथि० । अच् । मतोज्ञानम्यमथ : मन्मथ : ॥ मनोमथ्नातिवा । पृषोदरादि : । मिथुनलग्ने ॥ वत्सरविशेषे । २९॥ सरोगं चतथादेविदाहज्वरसमन्वितम् । अभिभूतं जगत्सर्वं मन्मथेसुरपूजिते ॥

मन्मथानन्द : । पुं० महाराजचूते ॥

मन्मथालय : । पुं० आम्रे ॥

मन्मन : । पुं० गद्गदध्वनौ ॥ न०दम्पत्यो : शनैर्भाषणे ॥ सुरतेकर्णमूलेषुयच्चदेशीयभाषया । दम्पत्योर्जल्पितं मन्दंमन्मनंतंविदुर्बुधा : ॥

मन्मनस्क : । त्रि० मन्मनसि ॥ मय्येवमन : सङ्कल्पात्मकं यस्य ॥

मन्मय : । त्रि० मदेकचित्ते ॥ मांपरमात्मानं तत्पदार्थं त्वंपदार्थाभेदे-नसाक्षात्करणशीले ॥

मन्या । स्त्री० ग्रीवाया : पश्चाद्भागे० स्थितायांशिरायाम् ॥ गलपार्श्वशिरायाम् ॥ मन्यतेऽनया । सञ्ज्ञायां समजेतिक्यप् ॥

मन्याका । स्त्री० मन्यायाम् ॥

मन्यु : । पुं० क्रुधि ॥ दैन्ये ॥ शोके ॥ यज्ञे ॥ मन्यते । मनज्ञाने । यजिमनिशुम्भिदसिजनिभ्योयुच् ॥ मृगय्वादिर्वा ॥

मन्ये । अ० वितर्के ॥

मन्वन्तरम् । न० दिव्यानांयुगानामेकसप्ततौ । किञ्चिदधिकैकसप्ततियुगात्मकेमनो : कालविशेषे ॥ एवंचतुर्युगाख्यानांसाधिकाह्येकसप्तति : । कृतत्रेतादियुक्तानांमनोरन्तरमुच्यते ॥ मनव : स्वायम्भुवादयस्तेषामन्तरमवकाश : स्थितिरितियावत् ॥ एकसप्ततिरित्यमरोक्ति : । अत्रयद्यपिगणनया०अष्टयुगेनाधिकामङ्ख्यासम्पद्यते० । यत : ० दैविकानांयुगानान्तुसहस्रंब्रह्मणोदिनम् । मन्वन्तरं तथैवैकं तस्यभागाश्चतुर्दश ॥ तत् किञ्चिदधिकादिव्ययुगानामेकसप्ततिरिति०नामविधानेसर्वज्ञनारायणेमोक्तत्वात् । तथापि०अल्पत्वादिहतथानोक्तमितिबोध्यम् । मन्वन्तरस्यसङ्ख्यातवर्षाणियथा । त्रिंश-

त्कोऽयस्तुवर्णानांमानुषे र्यद्विजोत्त-मा : । सप्तषष्टिस्तथान्यानिनियुता न्यधिकानितु ॥ विंशतिस्तुसहस्रा-णिकालोय : साधिकांविना । मन्व न्तरस्यसङ्ख्यैषालिङ्गेऽस्मिन्क-थिताद्विजा : ॥ यथाङ्का : ॥ ३०६७२०००० । एवं चतुर्द्दशमन्व रै र्ब्रह्मदिनं भवति ॥ ब्रह्मणोदिन मध्ये चतुर्द्दशमन्वन्तराणिभवन्ति- । एकोमनुर्यावदधिकारीभवतिस कालोमन्वन्तरसंज्ञकोभवति । तत्र मनूनांनामानि यथा । स्वायम्भुवो मनु : पूर्वं स्तत: स्वारोचिषोमनु : । उत्तमस्तामसश्चैवरैवतश्चाक्षुषस्त था ॥ षडेते मनवोऽतीताश्चथ वैवस्वतोमनु : । सावर्णा : पञ्चरौ च्यश्चभौत्यश्चागामिनस्त्वमी ॥ पुरा णलक्षणे ॥ मन्वन्तरं मनुर्देवामनु पुत्रा : सुरेश्वर : । ऋषयोंऽशाव तारश्चहरे : षड्विधमुच्यते ॥

मन्वादिः । स्त्री० मासविशेषेषुतिथि विशेषे ॥ अश्वयुक्शुक्लनवमी० कार्त्तिकेद्वादशीसिता । तृतीया चैत्रमासस्य० तथाभाद्रपदस्यच ॥ श्रावणस्याष्टमीकृष्णा पौषस्यैकाद शीतथा । आषाढस्यापिदशमी मा घमासस्यसप्तमी ॥ कार्त्तिकीफा ल्गुनीचैत्री ज्यैष्ठीपञ्चदशीसिता । माघमासेकुहूश्चैवकार्त्तिकीचतथै

वच ॥ एतामन्वादय : प्रोक्तादत्त स्याक्षयकारिका : ॥

मपष्ट : । पुं० )

मपष्टक : । पुं० ) वनमुद्गे ॥

मपुष्टक : । पुं० )

मम । अ० षष्ठ्यन्तकप्रतिरूपकमव्यय म् । ममेत्यभिमाने ॥

ममता । स्त्री० मदीयत्वाभिमाने ॥ भावेतल् ॥ ममत्वे ॥

ममतायुक्त : । त्रि० कृपणे ॥

ममत्वम् । न० ममतायाम् ॥ भावे त्व : ॥

ममापताल : । पुं० विषये ॥ मव्य ति । मव्यबन्धने । मव्यतेर्यलोपो मश्चापतुट्चालङ्कृतिमव्यतेरालप्र त्ययस्तस्यापतुट्० आगमोधातोर्यलो पोमकारश्चान्त्यस्य ॥

मय : । पुं० दैत्यानांशिल्पिनि । मा याविनांशिल्पिनाञ्चाचार्ये ॥ वेसरे । अश्वतरे ॥ उष्ट्रे । करभे ॥ मीनाति० मयतेवा । मीङ्हिंसा याम्० मयगतौवा । पचाद्यच् ॥

मयट : । पुं० तृणहर्म्ये । तृणयुक्त हर्म्ये ॥

मया । स्त्री० चिकित्सायाम् ॥

मयु : । पुं० किन्नरे ॥ मृगे ॥ मिनो ति । डुमिञ्प्रक्षेपणे । भृमृशीतृ चरित्सरितनिधनिमिमस्जिभ्यउ : इत्यु : । मीनातीत्यात्वन्तुबाहुल कान्न ॥

मयुराज : । पुं० कुवेरे ॥ मयूनांराजा टच् ॥

मयुष्टक : । पुं० वनमुद्गे । मकुष्टके । मीठ०इ०भा० ॥ तिष्ठति । ष्ठा० । कन् । मयुष्वासौष्टकश्च । पूर्वपदादितिषत्वम् ।

मयूख : । पुं० किरणे । मोख०इ०भा० ॥ ज्वालायाम् ॥ शोभायाम् ॥ दीप्तौ ॥ मिमीते । माङ् माने । माङ् ऊखोमयश्च ऊखप्रत्ययोमयादेशश्च ॥

मयूर : पुं । बर्हिणे । नीलकण्ठे । शिखावले । केकिनि । मोर०इ०भा० ॥ अस्यमांसगुणा : । यथा । मयूर : श्रोत्रनेत्राग्निमेधावर्णस्वरायुषाम् । हितोवल्योगुरुस्रोष्णोवातघ्न: शुक्रमांसद : ॥ हेमन्तकालेशिशिरेवसन्तेसेव्यं हिमायूरमुशन्तिमांसम् । उष्णोहिवर्हिर्विषभोजनेस्ववर्षाशरद्ग्रीष्ममुखे प्यपथ्य : ॥ एतन्मांसमेरण्डतैलभृष्टं विषतुल्यम् ॥ वर्हिचूडाख्यौषधौ । खराश्वायाम् । कारव्याम् ॥ अपामार्गे ॥ मिनातिरोगम् । मीञ् हिंसायाम् । मिनातेरुरन् ॥ यद्वा । मयते । मयगतौ । खर्जादित्वादूर : ॥ मह्यांरौतिवा । अन्येभ्योपीतिड : । पृषोदरादि : ॥

मयूरक : । पुं० अपामार्गे ॥ मयूरे ॥ मयूरशिखायाम् ॥ न०तुत्थाञ्जने ॥

मयूरप्रतिकृति : ॥ कन् । मयूरंकायतिवासादृश्यं त् । कै० । आतइतिक : ॥

मयूरग्रीवकम् । न० तुत्थे ॥

मयूरग्रीवा । स्त्री० तुत्थे ॥

मयूरचटक : । पुं० गृहकुक्कुटे ॥

मयूरचूडम् । न० स्थौणेयके ॥

मयूरचूडा । स्त्री० मयूरशिखायाम् ॥

मयूरजङ्घ : । पुं० श्योनाके ॥

मयूरतुत्थम् । न० तुत्थे ॥

मयूरपदकम् । न० स्तनादौनखाघाते ॥

मयूरविदला । स्त्री० अम्बष्ठायाम् ॥

मयूरशिखा । स्त्री० वर्हिचूडायाम् । शिखिन्याम् । शिखावलाख्यमपि ॥ मधुराम्लाशिखाप्रोक्तासकफस्तम्भिमेरुच्छदा । नीलकण्ठशिखालघ्वीपित्तश्लेष्मातिसारजित् ॥

मयूरका । स्त्री० अम्बष्ठायाम् ॥

मयूरी । स्त्री० मयूरस्त्रीजातौ । मोरणी०इतिभाषा ॥

मरक : । पुं० मार्याम् । मारके । मारी०इतिभाषाप्रसिद्धे मरणे ॥ तत्प्रकारस्वादियथा । यावन्मार्तण्डसूनुर्गविधनुषिझषेमन्मथं वास्तिनार्यांतावद्दुर्भिक्षपीडाभवतिचमरकंसंशयंयांतिलोका : । हाहाकारातथोर्वीमनुजभयकरीपर्करावैश्चभीमै : शून्यग्रामाभवेयुर्नरपतिरहिताभूरिकङ्कालमाला ॥ वक्रं करो

तिरविजोधरणीसुतोवामूलर्चंहस्त-
मघरेवतिमैत्रभेषु । छत्रोपभङ्गप
तनानिचसैनिकानांसर्वत्रलोकम
रणंजलधौतदेश : ॥ ( ०*० )
मांसास्थीनिसमादायश्मशानाद्गृह
वायसा : । श्वाशृगालोथवामध्ये
पुरस्यप्रविशन्तिचेत् ॥ विकिर
न्तिगृहाद्दौचश्मशानंसामहीभवेत्
। चौरैणहन्यतेलोक : परचक्रस
मागम : ॥ सङ्ग्रामश्चमहाघोरो
दुर्भिक्षंमरकंतथा । अद्भुतानि
प्रसूयन्ते तस्यदेशस्यविद्रव : ॥ दे
वीमाहात्म्यपाठेनभैरवस्यस्तवेनच
। अत्रशान्तिर्भवेन्नूनंतुलस्याविष्णु
पूजनात् ॥

मरकतम् । न० हरिद्वर्णमणिवि-
शेषे गारुत्मते । अश्मगर्भे-
। हरिन्मणौ । पन्ना० इ० सा
धारणलोकभाषाप्रसिद्धे ॥ अस्य
लक्षणंयथा ॥ स्वच्छञ्चसच्छायंस्नि
ग्धंगात्रञ्चमार्दवसमेतम् । अव्य
ङ्गंबहुरङ्गंशृंगारीमरकतंशुभंबिभृ
यात् ॥ कुलक्षणंयथा । शर्करि
लकलिलरूक्षंमलिनंलघुहीनकान्ति
कल्माषम् । त्रासयुतंविकृताङ्गं
मरकतममरोपिनोपभुञ्जीत ॥ प
रीक्षादिकन्त्वन्यत्रद्रष्टव्यम् ॥ म
रकंतरन्त्यनेन । तृ० । अ-
न्येष्वपीतिड : ॥

मरकतपत्रिका । स्त्री० )
मरकतपत्री । स्त्री० पाच्याम् ॥
मरक्तम् । न० मरकतमणौ ॥
मरणम् । न० वत्सनाभविषे ॥ प-
ञ्चतायाम् । कालधर्मे । दृष्टा
न्ते । निधने । मृत्यौ ॥ मर
णंचेच्छयाकामंदु : खितोपिनवां
छति । रोगग्रस्तोपिदीनोपिन-
मुमूर्षतिकश्चनेतिभागवतम् ॥ अ-
पिच । मरणन्त्वृषिभि : प्रोक्तंसङ्ग
रेमङ्गलास्पदम् । यत्तत्समान
बलयोर्योधयोर्युध्यतो : किलेति ॥
अनुष्ठानासमर्थस्यवानप्रस्थस्यजीर्य
त : । भृग्वग्निजलसम्पातैर्मरण
न्तुविधीयते ॥ न्यायमतेन० वि
जातीयात्ममन : संयोगध्वंसे ॥
उपात्तानांपूर्वासांनिकायविशिष्टा-
नांदेहेन्द्रियमनोबुद्ध्यहङ्कारबुद्धिवेद
नानांपरित्यागे ॥ नत्वात्मनोपि
नाश : तस्यकूटत्वात् ॥ मरणं-
प्राणविच्छेदोनतुनाश : सतोम
त : । मृङ्प्राणत्यागइत्युक्तंस्व
यंनष्ट : कथंत्यजेत् ॥ मृङोल्युट्
॥ लग्नाष्टमभवने ।
मरत : । पुं० मरणे । म्रियते ।
मृङ्प्राणत्यागे । भृमृदृशियजिप
र्विपच्यमितमिनमिहर्यिभ्योऽतच् ॥
मरन्द : । पुं० )
मरन्दक : पुं० ) मकरन्दे ॥

मरहट्टा । पुं० मात्रावृत्तप्रभेदे ॥ यथा । आदौकुरुषट्कलऽ४चतुष्कलप श्चानन्दमितोपि० दशवसुकादश भवतिश्रमधिकशुभामवलीपि । विंशतिनवसङ्ख्यंभणितमुमुख्यंन न्दितगुणगणकोटिमरहट्टावृत्तंकि लजयकृतंकृतरिपुविनतकरोटि ॥ यथा । अभिमतधनदातासिद्धि विधाताजगदन्तरगतशील० दुरितद्रु मदावीविश्वविनाशीकल्पचयकृत लील० भुवनत्रयवंदितहरशिरसिस्थि रवास० दहहुतवहपापंदेहिदुरापंत्र मुद्दततिमिरविलास ॥

मराकाली । स्त्री० वृश्चिकाल्याम् ॥

मराल : । पुं० राजहंसे ॥ कारण्डवे ॥ कज्जले ॥ वारिवाहे ॥ तुरङ्गमे ॥ दाडिमीविपिने ॥ त्रि० खले ॥ त्रि० मसृणे ॥

मरालक : । पुं० कलहंसे ॥

मरिचम् । न० कोलके । कृष्णे । ऊषणे । धर्म्मपत्तने । कालीमिरच० इतिभाषा० ॥ मरिचंकटुकं तीक्ष्णंदीपनंकफवातजित् । उष्णं पित्तहरंरूक्षंश्वासशूलकृमीन्हरेत् ॥ तदार्द्रंमधुरंपाकेनात्युष्णंकटुकंगुरु । किञ्चित्तीक्ष्णगुणंश्लेष्मप्रसे- किस्यादपित्तलम् ॥ म्रियतेविषमनेन । मृङ्प्राणत्यागे । बाहुलका दिच : ॥ कक्कोले । पुं० मरुवकवृक्षे ॥

मरिचपत्रक : । पुं० अजकर्णे । मालतरौ : प्रभेदे ॥

मरिमा । पुं० मृत्यौ ॥ म्रियते । मृङ्० । जनिमृङ्भ्यामिमनिच् ॥

मरिष्यमाण : । त्रि० आसन्नमरणे ॥

मरीचम् । न० वेल्लजे । मरिचे । कृष्णमरिच० इ० भा० ॥ म्रियतेविषमनेन । मृङ्० । बाहुलकादीच: ॥

मरीचि : । पुं० ब्रह्मणोज्येष्ठमानसपुत्रे० मुनिविशेषे ॥ प्रजापतौ ॥ मरुतांमध्येभगवद्विभूतौ ॥ पुं० स्त्री० चन्द्रसूर्ययो : किरणे । गभस्तौ ॥ षट्त्रसरेणुपरिमाणे० इतिवैद्या : । म्रियतेतमोऽस्मिन् । मृकणिभ्यामीचि : ॥ त्रि० कृपणे ॥

मरीचिका । स्त्री० मृगतृष्णायाम् ॥ ग्रीष्मे मरुदेशसिकतादावर्ककरा: प्रतिफलिता : दूरस्थानांजलत्वेनाभांति० तद्वाचिकामृगतृष्णिकेति० टीकाकार : ॥ मरीचिरिव । इवेप्रतिकृताविति कन् ॥

मरीचिप : । पुं० तपोविशेषाल्लब्धे- तिसंज्ञे तापसान्तरे ॥ चन्द्रिकापायिनि ॥

मरु : । पुं० गिरौ । पर्वते ॥ धन्वनि । दशेरके । निरुदकदेशे । मारवाड० इ० भाषा ॥ गुर्जरात्पूर्वभागेतुद्वारिकातोहिदक्षिणे । म

रुदेशीमश्वेशानिउद्दिः त्यसिपरायणः ।। स्त्रियन्तेप्राणिनोत्र । मृङ्० । भृमृशीङ्‌ : ॥ मरुवकवृक्षे ॥ सूर्यं वंशीयभाविनृपविशेषे ।।

मरुक : । पुं० मृगविशेषे ॥ मयूरे ।।

मरुकान्तारम् । न० रामबाणेनशोषितेदेशविशेषे ।। आफ्रिका० इ० इङ्गभा० ॥

मरुज : । पुं० नखीनामगन्धद्रव्ये । व्याघ्रनखाख्ये ।। त्रि० मरुदेशजाते ।।

मरुजा । स्त्री० मृगेर्वारी ।।

मरुटा । स्त्री० )

मरुण्डा । स्त्री० )उच्चललाटायामस्त्रियाम् ।।

मरुत् । पुं० समीरे । वायौ ॥ स्त्रियंतेऽनेन० हर्षेन० विनावा । मृङ्० । मृग्रोरुति : ।। देवे । सुरे । सप्तसप्तकेगणे ॥ मरुवके । न० ग्रन्थिपर्णे ।। स्त्री० पृक्कायाम् ॥ मरुदग्निप्रदीप्त्यस्तिक्तोष्णा : पित्तलोलघु : । वृश्चिकादिविषश्लेष्मवातकुष्ठकृमिप्रणुत् ॥

मरुत : । पुं० वायौ ।। अव्युत्पन्नोयम् । मरुत : स्पर्शन : प्राणइतिविक्रमादित्यादिकोषात् । कोयंवातिसदाचिणात्यमरुतइतिकविराज : ॥ घण्टापाटलिवृक्षे ॥

मरुत्कर : । पुं० राजमाषे ॥

मरुत्त : । त्रि० वायुविशिष्टे । मरुत: सन्त्यत्र । तप्पर्वमरुद्भ्यामितितप् ॥ चन्द्रवंशीयनृपविशेषे ॥

मरुत्तक : । पुं० मरुवके ॥

मरुत्पथ : । पुं० आकाशे ॥

मरुत्पुत्र : । पुं० हनुमति ॥ भीमसेने ॥ मरुत : वायो : पुत्र : ॥

मरुत्प्लव : । पुं० कण्ठीरवे । सिंहे ॥

मरुत्फलम् । न० घनोपले ।

मरुत्वान् । पुं० इन्द्रे । शचीपतौ ॥ मरुतोदेवता : सन्त्यस्य । मतुप् । झयइतिवत्वम् । तसौमत्वर्थइतिभत्वाज्जश्त्वाभाव : ॥

मरुत्वतीयम् । न० मरुत्वाख्ये हविषि ॥ मरुत्वान्देवतास्य । द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पति-गृहमेधाच्छचेति० छ० : ॥

मरुत्वत्यम् । न० मरुत्वतीये० हविषि ॥ मरुत्वान्देवतास्य । द्यावापृथिवीत्यत्रस्यचकारात्०यत् ॥

मरुत्सख : । पुं० इन्द्रे ।। अग्नौ ॥

मरुदान्दोल : । पुं० धविचे ॥

मरुदिष्ट : । पुं० गुग्गुलौ ॥

मरुद्रथ : । पुं० आवहप्रवाहादिवायुसमूहे ।।

मरुद्द्रुमम् । न० वाततूलि । ग्रीष्मवासे । बुढियाकोसूत० इ० भा० ॥

मरुद्भवा । स्त्री० ताम्रमूलाक्षुपे । खिराइ इ० मौ० दे० भा० ॥

मरुद्रथः। पुं॰ अश्वे। देवरथे ॥
मरुद्रुमः। पुं॰ विट्खदिरे। अरिमेदे ॥
मरुद्वर्त्म। न॰ आकाशे ॥
मरुद्वाहः। पुं॰ धूमे ॥ –ह्नौ ॥
मरुद्विपः। पुं॰ उष्ट्रे ॥
मरुन्माला स्त्री॰ पृक्कायाम् ॥ मरुद्भिर्मल्यते। मलधारणे। घञ् ॥
मरुप्रियः। पुं॰ उष्ट्रे ॥ मरुर्देशविशेषः प्रियोऽस्य ॥
मरुभूः। स्त्री॰ दशेरकेमारवाड॰-इ॰ प्र॰ ॥ निर्जलदेशे ॥
मरुभूरुहः। पुं॰ करीरवृक्षे ॥
मरुलः। पुं॰ कारण्डवपक्षिणि ॥
मरुला। स्त्री॰ केरलदेशप्रसिद्धायां नद्याम् ॥
मरुवः। पुं॰ मरुवके ॥
मरुवकः। पुं॰ समीरणे। प्रस्थपुष्पे। फणिज्झके मरुवा॰ इ॰ भा॰-प्र॰पुष्पे ॥ पिण्डीतके। श्वसने। करहाटके। मदनद्रुमे। मयनफल इ॰ भाषा ॥ मरुं वाति। वा॰। जान्वशिल्पिसंज्ञयोः ॥ व्याघ्रे ॥ राहौ ॥ खरपत्रे। नागदौना॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ क्षुपविशेषे ॥ चि॰ भयानके ॥
मरुसम्भवम्। न॰ चाणक्यमूलके ॥
मरुसम्भवा। स्त्री॰ महेन्द्रवारुण्याम् ॥ क्षुद्रदुरालभायाम् ॥

मरुस्था। स्त्री॰ क्षुद्रदुरालभायाम् ॥
मरूकः। पुं॰ मृगविशेषे ॥ मयूरे ॥ मर्त्ये ॥ मारयति॰ म्रियतेवा। मृङ्॰। मृकणिभ्यामूकोकणाविल्युकः ॥
मरूद्भवा। स्त्री॰ कार्पास्याम् ॥ यवासे। क्षुद्रखदिरे ॥
मरोलिः। पुं॰ मकरे। असिदंष्ट्रके। मगर॰ इ॰ भा॰ प्र॰ यादसि ॥
मरोलिकः। पुं॰ मकरे ॥
मर्कः। पुं॰ देहे। शरीरे ॥ वानरे ॥ वायौ ॥ मर्चति॰ मर्चयतिवा। मर्चिः सौत्रोधातुरितिवृत्तः। मर्चशब्दे॰ चौरादिकइति॰ मित्रचोन्यात्सूत्रेकैयटः। इणभीकापाशल्यतिमर्चिभ्यः कन्। नचैवंणिलोपस्यानिवद्भावात्॰ कुत्वंनस्यादितिवाच्यम्॰ पूर्वत्रासिद्धे तदभावात् ॥
मर्ककः। पुं॰ गलेगण्डखगे। हाडगिल॰ इ॰ गौ॰ दे॰ भा॰ ॥
मर्कटः। पुं॰ वानरे। लूतायाम्। ऊर्णनाभे ॥ स्त्रीकरणान्तरे ॥ गलेगण्डे। हाडगिल॰ इ॰ भा॰ प्र॰ खगे ॥ मर्कति। मर्कः सौत्रोधातुर्गत्ये। शकादिभ्योऽटन् ॥ स्थावरविषभेदे ॥
मर्कटकः। पुं॰ शस्यप्रभेदे ॥ वानरे ॥ लूतायाम् ॥ मत्स्यविशेषे ॥ दैत्यवि

शेषे ॥ संज्ञायांकन् ॥
मर्कटतिन्दुकः । पुं० कुपीलौ ।
मर्कटपिप्पली । स्त्री० अपामार्गे ॥
मर्कटप्रियः । पुं० क्षीरवृक्षे ॥
मर्कटवासः । पुं० आशावर्ग्गे ॥ लूतातन्तौ । मकडीकाजाल० इ० भा० ॥
मर्कटशीर्षम् । न० हिङ्गुलि ॥
मर्कटास्यम् । न० ताम्रे ॥ वानरमुखे ॥ पुं० म्लेच्छविशेषे ॥ त्रि० वानरमुखसदृशमुखविशिष्टे ॥
मर्कटी । स्त्री० करञ्जप्रभेदे । मकडाकरेंजुवा० इ० भा० ॥ शूकशिम्ब्याम् ॥ मर्कटीवविविधचेष्टाहेतुत्वात् । अजमोदायाम् ॥ अपामार्गे ॥ वानर्याम् ॥ गौरादित्वान्ङीष् ॥
मर्कटेन्दुः । पुं० काकतिन्दुके ॥
मर्करः । पुं० भृङ्गराजे ॥
मर्करा । स्त्री० निष्कलायाम् ॥ दर्य्याम् ॥ सुरङ्गायाम् ॥ भाण्डे ॥
मर्ज्जूः । पुं० धावके । रजके ॥ पीठमर्दे । स्त्री० शुद्धौ । मार्ष्टि । मृजूशुद्धी । मृजेर्गुणश्चव्यूः ॥ मार्जनंवा ॥
मर्त्तः । पुं० मर्त्त्यलोके ॥ मानुषे ॥ म्रियन्तेऽत्र । मृङ० । हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्निति तन् ।
मर्त्यः । पुं० मनुष्ये ॥ म्रियते । मृङ० । हसिमृग्रिणितितन् । ततः स्वार्थेयत् । प्राक्प्रबोधात्० सर्वेऽस्मिन्मर्त्त्याः ॥ मध्यलोके ॥ म्रियन्तेऽत्रेतिमर्त्त्यः । हसिमृग्रिणित० मृङ्धातोस्तन्० मर्त्तः । ततोनवसूरमर्त्तयविष्टेभ्यः स्वार्थेयत् ॥ मर्त्ते भवोवा । दिगादेराकृतिगणत्वाद्यत् ॥
मर्त्त्यमुखः । पुं० यक्षे ॥
मर्त्त्या । स्त्री० मानुषस्त्रियाम् ॥
मर्त्त्येन्द्रा । स्त्री० मातरि ॥ अस्मिदमन्याम् ॥ राजमातरि ॥
मर्द्दनम् । न० अङ्गस्यमर्द्दने । पादमर्द्दनादौ । संवाहने ॥ मृदक्षोदे । ल्युट् । कदने ॥ चूर्णने । त्रि० मर्दयितरि ॥ मर्दयति । मृदक्षोदे० मृदमर्दनेवा । हेतुमण्णिजन्तात्कर्त्तरिल्युट् । बहुलमन्यत्रापीतियुक्त्या ॥
मर्द्दलः । पुं० वाद्यप्रभेदे ॥ मर्दलीमादल इति० नेपालेख्यातो० मृदङ्गसजातीयः ॥ मर्दमुपमर्दंलाति० । ला० । आतङ्कतिकः ॥
मर्द्दितः । त्रि० चूर्णिते ॥ यन्त्रिते ॥
मर्द्दिता । त्रि० मर्द्दिनि ॥
मर्द्दी । त्रि० मर्द्दितरि ॥
मर्म्मकीलः । पुं० भर्त्तरि ॥
मर्म्मज्ञः । त्रि० मर्मविदि । तत्त्वज्ञे ॥
मर्म्म । न० स्वरूपे । तत्त्वे । यथा ।

मृगयानविगीयतेनृपैरपिधर्म्मागम-
मर्म्मपारगैः। स्मरसुन्दरं... 
त्यजनस्तबधर्मः सदयोदयोज्ज्वलाः॥
सन्धिस्थाने॥ जीवस्थाने॥ परचे-
षेगांचरन्तीनचाचर्म्मीतकस्यचित्।
नसंवसेत्सूतकेचनकंवेमर्मणिस्पृ-
शेत्॥ चरुषि॥

मर्म्मरः। पुं० वस्त्रविशेषे॥ शुष्कप
र्णध्वनौ॥ वस्त्रपर्णानांस्वनिते।
मरमरमरडमरड० इतिभाषा॥
मर्मराति। रा० कः॥ चनुकरण-
शब्दोवा॥

मर्म्मरी। स्त्री० पीतदारुणि॥

मर्म्मरीकः। त्रि० दीनजने॥ म्रियते।
मृङ्०। पर्फरीकादिस्वादीकन्०धा
तोर्द्दित्वंरुक्चाभ्यासस्य॥

मर्म्मवित्। पुं० मर्म्मज्ञे। कार्पटि-
के॥

मर्म्मवेदी। पुं० मर्मविदि॥

मर्म्मस्पृक्। त्रि० मर्मपीडके। चरु-
न्तुदे॥ मर्म्मस्पृशति। स्पृशउपता
पे। स्पृशोऽनुदकइति० क्विन्॥

मर्म्माविद्। त्रि० सन्धिस्थानवेधक
र्त्तरि॥ मर्म्मज्ञे॥ मर्म्माणिविध्य
ति। व्यधताडने। क्विप्। ग्रहिज्ये
तिसम्प्रसारणम्। नहिवृतीतिदी-
र्घः॥

मर्म्मिकः। त्रि० मर्मज्ञे।

मर्म्मुरः। पुं० तुषानले॥

मर्य्यः। पुं० मरणधर्म्मणि। मनु-
ष्ये॥

मर्य्या। स्त्री० सीमायाम्॥

मर्य्यादा। स्त्री० सीमनि। अवधौ।
तेनविनेत्यर्थे॥ स्थितौ। धारणा-
याम्। सत्पथस्थितौ॥ अनुल्लङ्घनी
यायांव्यवस्थायाम्॥ स्थित्यनतिक्र
मे॥ कुलभूमौ॥ मर्येतिसीमार्थेऽ-
व्ययम्। तत्रदीयते। डुदाञ्०।
आतश्चोपसर्गेइत्यङ्॥

मर्षः। पुं० क्षान्तौ॥ मर्षणम्। मृ-
षतितिक्षायाम्॥ घञ्॥

मर्षणम्। न० अपराधेसत्यपिकोपा-
नाविष्करणे। क्षमायाम्। मृष०
भावेल्युट्॥

मर्षितः। त्रि० क्षान्तियुक्ते॥ मृषेः
कर्त्तरिक्तः। भावेक्तेक्लीबम्॥

मर्षितवान्। त्रि० क्षान्ते॥ मृषेः
कर्त्तरिक्तवतुः॥

मर्षी। त्रि० क्षमाशीले।

मलः। पुं० न० पापे। किल्बिषे॥
विशि। विष्ठायाम्। यथा। मला
यत्तंबलंपुंसांशुक्रायत्तन्तुजीवनम्।
तस्माद्यत्नेनतंरक्षेत्यक्ष्मिणोमलरे-
तसीइति॥ किट्टे। मण्डूरादौ॥
खेदादौ॥ वसाशुक्रमसृङ्मज्जामू-
त्रविट्कर्णविण्नखाः। श्लेष्माश्रुदू
षिकास्वेदोद्वादशैतेनृणांमलाः॥
वातादिषु। यथा। शरीरदूषणाद्दो

षामलिनीकरणान्मलाः। धारणा द्वातवस्ते एव वातपित्तकफास्त्रयः॥ सर्वेषामेवरोगाणांनिदानंकुपिता-मलाः। तत्प्रकोपस्यतुप्रोक्तंविविधाहितसेवनम्। इरेद्वसन्तेश्लेष्माणं पित्तंशरदिनिर्हरेत् वर्षासुशमये द्वायुंप्राग्विकारसमुच्छ्रयात्॥ अत्र-विशेषमाहमाधवः कफपित्तानिलाः पूर्वमध्यान्तेष्वव्यवस्थिताः। देहाहोरात्रिवयसांसम्भिप्वपिकफानिलाविति॥ अस्यार्थः। कफपित्तानिलाः देहाहोरात्रिवयसांपूर्वमध्यान्तेषुयथासंख्यंव्यवस्थिताः। देहस्यपूर्वभागेशिरआरभ्यवक्षोन्ते-कफोव्यवस्थितः। मध्येआमाशय-मारभ्यनाभ्यन्तेपित्तंव्यवस्थितम्। अन्तेनाभ्यधोभागेवायुर्व्यवस्थितः। शिरोमूलत्त्वात्देहस्येवपूर्वादिकल्पना। अह्नस्त्रिधाविभक्तस्यपूर्वभागेकफोमध्येपित्तमन्तेवायुः। एवंरात्रेरपिवयसोपिपूर्वभागेबाल्यावस्थायांश्लेष्मामध्येतरुणावस्थायां-पित्तम्अन्तेवृद्धावस्थायांवायुः। सन्धिष्विति। देहाहोरात्रिवयसा-मित्यत्र। तत्रदेहस्यपूर्वभागमध्य-भागयोः सन्धौकफोव्यवस्थितः मध्यभागान्त्यभागयोः सन्धौपक्वाश-याख्योवायुः एतत्त्वयथासङ्ख्यमित्यतोलभ्यते। अह्नः सन्धौराल्या-साकमध्ये सन्धिः प्रातः संज्ञकस्तस्मिन्कफः। अह्नासाकंरात्रेः सन्धिः सायंतस्मिन्वातः। वयः सन्धौबाल्यतारुण्ययोः सन्धौश्लेष्मा तारुण्यवृद्धत्वयोः सन्धौवायुरिति॥ मृज्यतेऽसौ। मृजूशुद्धौ। मृजेष्टिलोपश्चेतिकलः॥ मलयति। मल मल्कृतौ। अद्न्तः। मलतेवा। मलधारणे। पचाद्यच्॥ कर्पूरे॥ त्रि॰ कृपणे। कदर्य्ये॥

मलघ्नः। पुं॰ शाल्मलीकन्दे। त्रि॰ मलनाशके॥

मलघ्नी। स्त्री॰ नागदमन्याम्॥

मलजम्। न॰ पूये॥ त्रि॰ मलोद्भवे॥

मलदूषितः। त्रि॰ मलिने॥ मलेनदूषितः। कर्तृकरणेइतिसमासः॥

मलद्रावी। पुं॰ जयपाले॥

मलधीः। पुं॰ कामिनि॥

मलनः। पुं॰ पटवासे। अंशुकालये॥ न॰ मर्द्दने। पीडना॰ मलना॰ चू॰ भा॰॥

मलपूः। स्त्री॰ काकोदुम्बरिकाया-म्॥ मलयूस्तम्भकृत्तिक्ताशीतलातुवराजयेत्। कफपित्तव्रणश्वित्रकुष्ठपाण्डुर्शकामलाः॥ मलात्पापात्। पुनाति। पूञ्पवने। क्विप्॥

मलभुक्। पुं॰ काके॥

मलभेदिनी। स्त्री॰ कटुकायाम्॥

मलमासः। पुं॰ अधिमासे। मलि

मुषे । यस्मिन् मासिनसङ्क्रान्ति: सङ्क्रान्तिद्वयमेव॰। ग्गमास : सविज्ञे योमासस्त्रिंशत्तमोभवेत् ॥ गर्गस्तु । श्रमावास्याद्वयंयत्ररविसङ्क्रान्तिवर्ज्जितम । मलमास : सविज्ञे योमास : शुद्धाव्युत्तर:॥ तथाचब्रह्मसिद्धान्ते । चान्द्रोमासोह्यसङ्क्रान्तोमलमास: प्रकीर्त्तित : ॥ सत्यव्रतस्तु । राशिद्वयंयत्र मासिसङ्क्रमेतद्दिवाकर : । नाधिमासोभवेदेवमलमासस्तुकेवलम् ॥ एकत्रमासद्वितयंयदिस्याद्वर्षेऽधिकंतत्रपरोऽधिमास : । त्रयोदशन्तुश्रुतिराहमासंचतुर्द्दशंक्कापिनचास्तिदृष्टम् ॥ श्रयंमासश्चान्द्रएवनसौर: । श्रस्तित्रयोदशोमास : सचश्रुत्यानिगद्यते । श्रसौचान्द्रोनसौर:स्यान्नास्तिसौरस्त्रयोदश : ॥

मलमासत्त्वम् । न० रविसङ्क्रान्त्यभावविशिष्टचान्द्रमासत्त्वे ।

मलय : । पुं० ऋष्यमूकप्रदेशान्तरे स्वनामप्रसिद्धेऽद्रिविशेषे । भाषा ढे । दक्षिणाचले । चन्दनाद्रौ ॥ कृतमालाताम्रपर्णीप्रमुखामलयोद्भवा : ॥ शैलाङ्गे ॥ देशविशेषे । मलैवार०इं०भा० ॥ श्रारामे । नन्दनवने ॥ श्रष्टादशोपद्वीपान्तर्गतद्वीपविशेषे ॥ मलति । मलधारणे । वहिर्मलितनिर्भ्य : कथन् ॥

ऋषभदेवस्यपञ्चमेपुत्रे ॥

मलयगन्धिनी । स्त्री० उमाया : सखीविशेषे ॥

मलयज : । पुं० राहुग्रहे ॥ पुं०न०-चन्दने ॥ मलयेजात : । सप्तम्यांजनेड : ॥

मलया । स्त्री० त्रिवृतायामोषधौ ॥

मलयाचल : । पुं० सह्याद्रिसमीपस्थे॰शैलविशेषे । दक्षिणाचले ॥ सतांनिसेव्योऽपिमवान भोगिनांमलयाचल : ॥

मलयानिल : । पुं० वासन्ते । वसन्तकालिकवायौ ॥

मलयाल : । पुं० देशविशेषे ॥ यथा। सुराम्बिकांसमारभ्यमलयाद्यन्तगंशिवे । मलयालाभिधोदेशोमल्लसिद्धिप्रदर्शक : ॥

मलयू : । स्त्री० मलय्वाम् । काकोदुम्बरिकायाम् ॥ मलंयवति । युज्, गुप्सायाम् । क्षिप् । वाहुलकाद्दीर्घ : ॥ यद्वा । मलते । मलधारणे । वाहुलकादयू : ॥

मलयोद्भवम् । न० चन्दने ॥

मलवर्त्म । न० गुदे ॥

मलविलासिनी । स्त्री०शङ्खपुष्प्याम् ॥

मलहन्ता । पुं० शाल्मलीकन्दे ॥

मला । स्त्री० भूम्यामलक्याम ॥

मलाका । स्त्री० दूत्याम् ॥ कामिन्या

म् ॥ हस्तिन्याम् ॥

मलापकर्षणम् । न० पापमोचने ॥ मलस्य दूरीकरणे ॥

मलापहा । स्त्री० नदीविशेषे ॥ यथा । मलापहाभीमरथीचघट्टगायथाचकृष्णावलसाम्यगागुणैः । मलापहा घट्टगयोस्तथापिपथ्यं लघुस्वादुतरं सुकान्तिदम् ॥

मलावहम् । न० मलिनीकरणे । पापविशेषे । यथा । कृमिकीटवयोवस्यानयाग्नुगतभोजनम् । फलेध: कुसुमस्तेयमधैर्यं चमलावहम् ॥

मलारि : । पुं० सर्वक्षारे । साबन० इ० भा० ॥

मलिनम् । न० दोषे ॥ टङ्कणे । घोले ॥ त्रि० मलयुक्तवस्तुनि । मलीमसे । कृष्णे । मलदूषिते ॥ यथा । यथाभवतिबालानांगगनं मलिनं मलै: । तथाभवत्यबुद्धानामात्मापिमलिनोमलैरिति ॥ मलै: क्लेशकर्मफलै रात्मा । अन्यच्च मलैर्घनरजोधूमादिभिराकाशइत्यर्थ: ॥ निश्चयेनमित्तिकाक्रियाख्यागिनि ॥ कृष्णे । दूषिते ॥ मलोस्यास्ति । ज्योत्स्नातमिस्रेतिसाधु: ॥ यद्वा । मलते । मल० । बहुलमन्यत्रापीतीनच् ॥

मलिनमुख : । पुं० अग्नौ ॥ गोलाङ्गूले० मृगे ॥ प्रेते ॥ त्रि० क्रूरे । खले ॥

मलिनात्मा । पुं० कृष्णदेहे ॥ दुष्टचित्ते ॥ नपरिचयोमलिनात्मनां प्रधानम् ॥

मलिनाम्बु । न० मस्याम् ॥

मलिनास्य : । त्रि० खले ॥

मलिनिमा । पुं० कृष्णत्वे ॥ मलिनत्वे ॥ मलिनस्यभाव: । इमनिच् ॥

मलिनी । स्त्री० रजस्वलायांनार्याम् । ऋतुमत्याम् ॥ मलोऽस्त्यस्या: । अतइनिठनौ ।

मलिनीकरणम् । न० मलावहे ॥

मलिम्लुच : । पुं० मलमासे ॥ यथा । तमतिक्रम्यतुरविर्यदागच्छेत्क्षयञ्च न । आद्योमलिम्लुचोज्ञेयो द्वितीय: प्रकृत: स्मृत: ॥ यदा दर्शान्तमासमतिक्राम्यततपूर्वमासान्त्यदर्शप्रवृत्तिराशिस्थ: सन्सूर्योऽतिवाह्यगच्छेत् मासान्तरे राश्यन्तरसंयोगं गच्छेत्० तदाद्योऽतिक्रान्तमासोमलिम्लुचोज्ञेय: । मलोसन्म्लोचति० गच्छतीति० मलिम्लुच: । द्वितीयस्तुप्रकृत: शुभ: कर्मार्हत्वात् ॥ चौरे ॥ ज्वलने ॥ वाते ॥ मस्यते । मल० । क्विप् । मलिं धृतंम्लोचति । म्लुच स्तेये । मूलविभुजादित्वात्क: ॥

मलिष्ठा । स्त्री० ऋतुमत्यांनार्याम् ॥

मलीमसः। पुं॰ पुष्पकासीसे ॥ लौहे ॥ मलिने ॥ मलोऽस्यास्ति। ज्योत्स्नातमिस्रेतिसाधुः॥

मलूकः। पुं॰ कृमिविशेषे ॥

मल्लः। पुं॰ पात्रे ॥ कपोले ॥ मत्स्यभेदे ॥ बलीयसि ॥ झल्ल। निच्छिवी। बाहुयोधिनि॰ मल्लितिनाम्नाप्रसिद्धे ॥ अयञ्चव्रात्यात् क्षत्रियात्सवर्णायांजातः। यथा ह्ममनुः। झल्लोमल्लश्चराजन्याद्व्रात्यान्निच्छिविरेवच। नटश्चकरणश्चैव खसोद्रविडएवच ॥ इति ॥ देशविशेषे ॥ यथा। दशार्णानवराष्ट्रञ्चमल्लाः शाल्वाः युगन्धराः। इति। विराटपर्वणि १ अध्यायः॥ वर्णसङ्करजातिविशेषे। माला॰ इ॰ गौ॰ दे॰ भा॰ प्रसिद्धे ॥ अयञ्च॰ लेटात्तीवरकन्यायांजातः। इ॰ ब्र॰ वै॰ पु॰ ॥ तन्त्रवाय्यांकुन्दकाराज्जातः। इ॰ प॰ पु॰ ॥ नियुद्धकुशलोमल्ल स्त्रवृत्तिस्तपरायणः॥

मल्लकः। पुं॰ दन्ते ॥ पुं॰ स्त्री॰ दीपाधारे ॥ कोशिकायाम्। नारिकेलफलनिर्मितेचषके। नरेलो॰ इ॰ भा॰ ॥ मल्लते। मल्लधारणे। गवुल्॥

मल्लतूर्यम्। न॰ वाद्यविशेषे। महासमे।

मल्लनागः। पुं॰ ऐरावते ॥ वात्स्यायनमुनौ ॥ कामशास्त्रविशेषे ॥ लेखहारे ॥

मल्लभूः। स्त्री॰ मल्लभूमौ ॥

मल्लभूमिः। स्त्री॰ रङ्गभूमौ। अखवाटे। अखाडा॰ इ॰ भा॰ ॥ देशविशेषे ॥

मल्लयात्रा। स्त्री॰ मालव्याम्। मल्लानांयुद्धार्थंप्रयाणे ॥

मल्लयुद्धम्। न॰ नियुद्धे। बाहुयुद्धे। मल्लानांसङ्ग्रामे ॥

मल्ला। स्त्री॰ नार्याम् ॥ पत्रवल्ल्याम् ॥ मल्लिकायाम् ॥

मल्लारः। पुं॰ षट्संरागाणांमध्येद्वितीयरागे ॥ मेघमल्लाररागश्चगानंवर्षासुसर्वदा ॥

मल्लारी। स्त्री॰ वसन्तरागस्यरागिण्याम् ॥ यथा। आन्दोलिताचदेशाख्यालोलाप्रथममञ्जरी। मल्लारीचेतिरागिण्योवसन्तस्यसदानुगाः॥ मेघरागस्यरागिण्याम्।

मल्लिः। पुं॰ इन्द्रार्हद्विशेषे ॥ स्त्री॰ मल्लिकायाम् ॥ मल्लते। मल्ल॰। सर्वधातुभ्यइन् ॥

मल्लिकः। पुं॰ मलिनचञ्चुचरणयुक्तेहंसविशेषे। किञ्चिद्धूम्रवर्णैश्चञ्चुचरणैरुपलक्षितेहंसप्रभेदे ॥ मल्लते। मल्ल॰। इन्। स्वार्थेकः॥

मल्लिका। स्त्री॰ तृणशून्ये। भूपद्याम्।

। शतभीरौ । वेल्लि॰ वेला॰ वेली॰ दू॰ प्र॰ पुष्पदृक्षे ॥ मल्लतेगन्धं॰ मल्यतेवा । मल्लू॰ । सर्वधातुभ्यइन् । बाङ्कीष् । स्वार्थेकन् । ह्रस्व : । टाप् ॥ मल्लिकोष्णालघुद्व्याति वायकटुकाहरेत् । वातपित्तास्रद्व ग्व्याधिकुष्ठारुचिविषव्रणान् ॥ मौ नविशेषे ॥ मृत्पात्रविशेषे ॥ पान पात्रे ॥ सवैय्यान्तर्गतवृत्तविशेषे ॥ यथा । अशेषगुणाधिकशोभनशोभन सौरभयुद्वबिशुद्वयगते॰ विधिर्विवि धेहिविवेकनिधेहिपुरोऽगयानिष्ठ सारलगोसुमते । विशोभियशोभिरु पेतितवेतिविनिर्मितमल्लिकयैशर- ते॰ निधेहिनिधेहिमुदंहृदयेसदये यययमन्मधराधिपते ॥ वर्णवृत्तान्तरे ॥ यथा । हारशङ्खकक्रसेणमण्डिताष्ट वर्णकेन । वर्णितागुलहलेनमल्लिके पिङ्गलेन ॥ यथा । वेदवेदिवालखि ल्यमारदादिसंस्तुताय । वस्तुमेन तिः सदैवतुभ्यमम्बुजप्रियाय ॥ भू पदीपुष्पे ॥ मल्लिकाया : पुष्पम् । पुष्पमूलेषुबहुलमिति॰ अनुदात्ता देरञोऽणस्तलुप् । लुपियुक्तवत् ॥ वर्णपात्रे ॥ दू॰ प्र॰ माला ॥

मल्लिकाचः । पुं॰ किञ्चिद्धूमवर्णस्य चरणैरुपलक्षितेहंसविशेषे ॥ शुक्लव र्णवेष्टितचञ्चुर्द्वययुक्तारुखे॥ मल्लिका कारमक्षियस्यशुक्लापाङ्गत्वात् । ब हुव्रीहौसक्थ्यक्ष्णोरितिषच् ॥

मल्लिकाख्य : । पुं॰ मल्लिकाचाभिधे हंसे ॥

मल्लिकाख्या । स्त्री॰ मोविन्याम् । चि पुरमालोतिगौडदेशप्रसिद्धपुष्पे ॥

मल्लिकागन्धम् । न॰ मल्लिकागुरुणि ।

मल्लिकापुष्प : । पुं॰ कुटजवृक्षे ॥ कर्क टकवृक्षे । करुणालेवु॰ दू॰ गौ॰ दे॰ भा॰ ॥ सुगन्धाप्रसिद्धपुष्पवृक्षे ॥

मल्लिगन्धि । न॰ मल्लिकागुरुणि ॥ म ल्लिकापुष्पस्येवगन्धोयस्य । उपमा नाच्चेति॰ इत् ॥

मल्लिपत्रम् । न॰ छत्राके ॥

मल्ली । स्त्री॰ मल्लिकायाम् ॥

मल्लीकर : । त्रि॰ चौरे ॥

मल्लु : । पुं॰ भाल्लूके ॥

मवित : । त्रि॰ बद्धे ॥

मशक : । पुं॰ कीटविशेषे । वनतु ण्डे । सूच्यास्ये । रात्रिजागरदे । मच्छर॰ इतिभाषा ॥ तन्नाशकधू पोयथा । त्रिफलार्जुनपुष्पाणिभल्ला तकशिरीषकम् । लाक्षासर्जरस श्चैवविडङ्गश्चैवगुग्गुलु : । एतैर्धूपे र्मक्षिकाणांमशकानांविनाशनम् ॥ क्षुद्ररोगविशेषे । मस्सा॰ इ॰ भा॰ प्रसिद्धे ॥ यथा । अवेदनंस्थिरंचैव यस्यगात्रेप्रदृश्यते । माषवत्कृष्णमु त्सन्नंमनिलेनमशकंदिशेत् ॥ स्थिर

म०ञ्चलम् ॥ अश्वचिकित्सायथा । चर्मकीलंजतुमणिंजकं तिलकालकान् । उत्कृत्यशस्त्रेणदहेत्क्षारा ग्निभ्यामशेषतः ॥ अपिच । लशुनानान्तुचूर्णं स्यघर्षमिशकनाशनः ॥ इति ॥

मशकी । पुं० उदुम्बरवृक्षे ॥

मशहरी । स्त्री० चतुष्क्याम् । शयन तिरस्करिण्याम् ॥

मशुनः । पुं० कुक्कुरे ॥

मसनम् । न० सोमराजीवृक्षे ॥

मसरा । स्त्री० मसूरे ॥

मसारः । ) पुं० इन्द्रनील
मसारकः । ) पुं० मणौ ॥

मसिः । स्त्री० लिपिप्रयोजनायाम् । पचाद्युभे । मस्याम् ॥ मस्यति । मसीपरिणामे । इन् ॥ शेफालिका वृन्ते ॥

मसिकूपी । ) स्त्री० मस्या-
मसिधानम् । ) न० धा-
मसीधाना । ) स्त्री० रे ।
मसिकूपिकायाम्

मसिनम् । न० सपिंडके ॥

मसिपण्यः । पुं० लेखके ॥

मसिप्रसूः । स्त्री० मस्याधारे ॥ मस्याः प्रसूः ॥ लेखन्याम् ॥

मसिमणिः । पुं० मस्याधारे ॥

मसिवर्द्धनम् । न० रसगन्धे ॥

मसी । स्त्री० मेलायाम् । लिपिसाधन विशेषे । काली० इ० गौ० भा० । स्याही० इ० भाषा० ॥ शेफालिका वृन्ते । मस्यति । मसी० । पचाद्यच् । गौरादित्वात् ङीष् ॥

मसीजलम् । न० मस्याम् ॥

मसीधानम् । न० मस्याधारे ॥

मसीधानी । स्त्री० मस्याधारे ॥

मसीना । स्त्री० स्वनामाख्यातधान्ये । उमायाम् ॥

मसीशः । पुं० कायस्थे ॥ मस्याईशः ॥

मसुरः । पुं० मसूरे । मङ्गल्यके ॥ मस्यति० मस्यतेवा । मसी० । मसेरुरन् ॥ उपधाने ॥ मसुरा । स्त्री० वेश्यायाम् ॥ व्रीहिप्रभेदे । टाप् ।

मसुरी । स्त्री० पापरोगे । मसूर्याम् ॥

मसूरः । पुं० व्रीहिप्रभेदे । मङ्गल्यके । मसूरोमधुरःपाकेसङ्ग्राही शीतलोलघुः । कफपित्तास्रजिद्रू क्षोवातलोज्वरनाशनः ॥ मस्यति० मस्यतेवा । मसी० । मसेरूरन्निति पाञ्चमिकऊरन् । उपधाने ॥

मसूरकः । पुं० उपबर्हविशेषे । चातुरे । चक्रगण्डौ । गोलबालिशी मा० इ० भा० ॥ मसूरे । स्वार्थे कः ॥

मसूरविदला । स्त्री० कृष्णात्रिवृतायाम् ॥ मसूरवद्विदलमस्याः ॥

मसूरा । स्त्री॰ मसूर॰इ॰ प्रसिद्धे ब्रीहिभेदे । मङ्गल्यके ॥ वेश्यायाम् ॥ टाप् ॥

मसूरिका । स्त्री॰ कुट्टन्याम् ॥ मङ्गल्यके ॥ मसूरीरोगे । शीतलाख्यरोगे ॥ मसूराकृतिसंस्थानाःपिडकाःस्युर्मसूरिकाः ॥ मतीसारे ॥ मशहर्याम् ॥ यथोक्तं पाकक्रियायोगसारे । दंशांश्चमशकांश्चैववर्षाकालेनिवारयेत् । मसूरिकाभिः प्रावृत्यमश्चशायिनमुच्युतमिति ॥

मसूरी । स्त्री॰ पापरोगे । रक्तवत्याम् । शीतलाख्यरोगे ॥ चिवृति ॥ रक्तचिवृति ॥

मसृणः । पुं॰ सोमे ॥ त्रि॰ अकर्कशे । अकठिने स्निग्धे ॥ मस्यति । मसी॰ बाहुलकात्॰ ऋण: ॥ यद्वा । समृच्छतीति । ऋणुगतौ ॥ इगुपधेतिकः । पृषोदरादिः ॥

मसृणा । स्त्री॰ उमायाम् । अतस्याम् ॥

मस्करः । पुं॰ वेणौ । वंशे ॥ मस्कतेऽनेनवा । मस्कगतौ । बाहुलकादरः ॥ यद्वा । मस्कतीमस्किमगच्छते । अरः । आगमशास्त्रस्यानित्यत्वान्नुम् । मस्करमस्करिणौवेणुपरिव्राजकयोरितिसुट् ॥ रम्भवंशे ॥

मस्करी । पुं॰ परिव्राजके । भिक्षौ । संन्यासिनि ॥ मस्कनम् । मस्कगतौ । बाहुलकादरः । मस्करोज्ञानं



गतिर्वाऽस्यास्ति । मस्करमस्करिणाविनीतिनिः ॥ यद्वा । मस्करोवेणुरस्यास्ति । इनिः ॥ यद्वा । माकृतं कर्म निषिद्धं शीलमस्य । मस्करमस्करिणाविनिसाधुः ॥ यद्वा । मकुरइवशुद्धमनाः करणमस्यास्ति । प्राग्वन्निपातः ॥ यद्वा । मङ्कते । मङ्कि॰ । बाहुलकादरः आगमशास्त्रस्यानित्यत्वान्नुम् ॥ मकरीनिधिर्भेदोवाऽस्यास्ति । पूर्ववन्निपातः । चन्द्रे ॥

मस्तम् । न॰ मस्तके ॥ मस्यतेऽस्मै । मसी॰ । क्तः ॥

मस्तकः । पुं॰ न॰ उत्तमाङ्गे । शिरसि । मूर्द्धनि । स्वार्थेकन् ॥

मस्तकस्नेहः । पुं॰ शिरोमज्जनि ॥

मस्तकाख्यः । पुं॰ शिखरे ॥ वृक्षशिरसि ॥ मस्तकमित्याख्यायस्य ॥

मस्तदारु । न॰ देवदारुणि ॥

मस्तमूलकम् । न॰ शिरोधौ ॥

मस्तिष्कम् । न॰ गोर्दे । मस्तकस्थघृताकारस्नेहे ॥ मस्यते॰ मसनं वा॰ । मसी॰ । क्तिन् । मस्तिं मस्कते । मस्कगतौ । पचाद्यच् । पृषोदरादिः ॥

मस्तु । न॰ दधिभवमण्डे । दधिजले । तोड॰ इ॰ भाषा ॥ दध्नस्तु परियोभागोघनःस्नेहसमन्वितः । सलोकेसरइत्युक्तोदध्नोमण्डस्तुमस्त्विति ॥ मस्तुकमस्तरंवल्यं लघुभुक्ता-

भिलाषन्नुत् । स्रोतोविशोधनंक्षा
दिककफतृष्णानिलापहम् । अवृष्यं-
प्रीणनंशीघ्रं भिनत्तिमलसञ्चयम्।
अपिच । उष्णाऽम्लं रुचिपित्तदंश्रम
हरंबल्यं कषायंसरंभुक्तिच्छन्दकरंत
षोदरगदघ्नीहार्शसांनाशनम् । स्रो
तः शुद्धिकरंकफानिलहरंविष्टम्भ-
शूलापहम्पाण्डुश्वासविकारगुल्म
शमनंमस्तुप्रशस्तंलघु ॥ मस्यते ।
मसी० । सितनीतितुन् ॥

मस्तुलुङ्गः । पुं० मस्तकस्थघृताकार
स्नेहे । मस्तिष्के ॥

मस्तुलुङ्गकः । पुं० मस्तिष्के ॥

महः । पुं० उत्सवे ॥ तेजसि ॥ महि
षे ॥ महनम् । महपूजायाम् । घ-
ञ् । संज्ञापूर्वकत्वाद्वृद्ध्यभावः ।
घोता ॥ यद्वा महति । अच् ।
यज्ञे ॥

महकः । पुं० वकुलामोदे । महक०
ष्ठ० भा० ॥

महत् । न० राज्ये ॥

महान् । पुं० ज्ञानक्रियाशक्तिमतिम
हत्तत्त्वे । बुद्धितत्त्वे । अध्यवसाय
लक्षणे ॥ यथा । सविकारात्प्रधा
नात्तु महत्तत्त्वं प्रजायते । महानि-
तियतः ख्यातिर्लोकानांजायतेस
दा ॥ सर्वकार्यापेक्षयाऽधिकत्वात्
कारणे० हिरण्यगर्भे । प्रथमजे ॥
दुर्गायाम् । महान्व्याप्यस्थितासर्वं

महान्वाप्रकृतिर्मतेतिदेवीपुराणा-
त् ॥ उष्ट्रे ॥ नवधाभक्तियुक्तश्रीकृ-
ष्णभक्ते० शिवशेषधर्मादौ ॥ त्रि०
वृद्धे । विशङ्कटे । बृहति । विशा-
ले । बड्डे । विपुले । उत्कटे ॥ अ
तिप्रमाणे । अप्रमेये । आपातमधु
रसांसारिकसुखनिस्पृहे ॥ यथा ।
महत्सेवांद्वारमाहुर्विमुक्तेस्तमोद्वा
रंयोषितांसङ्गिसङ्गम् । महान्तस्ते
समचित्ताः प्रशान्ताविमन्यवः सु
हृदः साधवोये ॥ महति । मह०
। वर्त्तमानेपृषद्बृहन्महदितिनिपा-
तितः । महान्तेवा । महच्छब्दप्रयो
गनिषेधोयथा। महङ्खितेलितयामां
सेवेद्यो ज्योतिषिकेद्विजे । यात्रायांप
थिनिन्द्रायांमहच्छब्दोनदीयते ॥ इ
ति ॥ देशादिपरिच्छेदशून्ये सर्वग
तेपरमात्मनि ॥

महती । स्त्री० नारदस्यवल्लक्याम् ॥
शततन्त्रीवीणामहतीति० स्वामी ॥
विततायाम् । बृहत्प्रमाणायाम्
॥ बृहत्याम् ॥ वार्त्ताक्याम् ॥ म-
ह्यते । मह० । वर्त्तमानेपृषदिति
साधुः । गौरादिः ॥

महतीद्वादशी । स्त्री० श्रवणद्वादश्याम्
। वामनद्वादश्याम् ॥

महत्तत्त्वम् । न० चतुर्विंशतितत्त्वान्त
र्गतद्वितीयतत्त्वे । प्रकृतेरुत्पन्ने सम
ष्टिबुद्धिस्वरूपे ॥ तत्पर्यायाश्चोक्ताम

ष्टभारते । यथा । महानात्मामति विंष्णुर्जिष्णुः शम्भुस्ववीर्यवान् । बुद्धिः प्रज्ञोपलब्धिश्च तथाख्याति धृतिःस्मृतिः ॥ पर्यायवाचकैः श ब्दैर्महानात्माविभाव्यते ॥
महत्तरः । पुं॰ शूद्रविशेषे । ग्रामकूटे । महता॰ इ॰ भा॰ ॥ इ॰ चि॰ काण्डशेषः ॥
महत्युक्थम् । न॰ हत्तीसहस्राख्य शस्त्रे ॥
महत्त्वम् । न॰ महतोभावे । यथा । महत्त्वंषड्विधेहेतुरिन्द्रियंकारणंमतम् । इ॰ भा॰ प॰ । महत्त्वंषड्विधइ ति । द्रव्यप्रत्यक्षेमहत्त्वंसमवायसम वन्धेनकारणम् । द्रव्यसमवेतानां गुणकर्मसामान्यानांप्रत्यक्षे॰ स्वाश्र यसमवेतसमवायसम्बन्धेनकारणम् । इ॰ सिद्धान्तमुक्तावली ॥ स्वाध्यस्त सर्वसम्बन्धित्वे ॥ श्रेष्ठतायाम् ॥
महत्पुष्पा । स्त्री॰ हस्तिघोषायाम् ॥
महद्‌ब्रह्म । न॰ अव्याकृते॰ प्रकृतौ॰ त्रिगुणात्मिकायांमायायाम् । स- र्वकार्यविषयाधिकत्वात्कारणंमह त्॰सर्वकार्याणांवृद्धिहेतुत्वरूपात्॰ वृंहणत्वाद्वा॰ ब्रह्मणत्वाद्वा॰ ब्रह्मच भवत्यव्याकृतम् ॥ महच्चतद्‌ब्रह्मचे तिविग्रहः ॥
महद्भूतम् । न॰ परमात्मनि ॥ महत् ब्रह्मविद्योत्कर्षेणवर्तमानत्वात्॰भूतंपरमार्थसत्यम् । महच्चतद्भूतञ्च ॥
महनीयः । त्रि॰ पूजनीये ।
महर्घता । स्त्री॰ अधिकान्यूनत्वे ॥
महर्द्धिः । स्त्री॰ समृद्धौ । कुवेराधि क्ये ॥
महर्लोकः । पुं॰ भूरादिसप्तलोकान्त र्गतचतुर्थलोके ॥ चतुर्मुखदिनस्या न्तेजगदेतच्चराचरम् । तदादिदह्य तेसर्वंत्रैलोक्यंभूर्भुवादिकम् ॥ तम स्ययाग्नितापार्त्तामहर्लोकनिवासि नः ॥ चतुर्थेतुमहर्लोकेतिष्ठन्तिकल्प वासिनः ॥ अपिच । महोदिकोटि र्यत्रास्तेमरीच्यादिमुनिव्रजः ॥ भू- पृष्ठाद्दिकोट्युच्छ्रायोमरीच्यादिमुनि वृन्दस्थानंमहर्लोकइत्यर्थः ॥
महर्षभी । स्त्री॰ कपिकच्छ्वाम् ॥
महर्षिः । पुं॰ व्यासादिषु ॥ भृग्वा दिसप्तसु ॥ वेदतदर्थद्रष्टृषु॰ सर्वेषु॰ विद्यासम्प्रदायप्रवर्तकेषु ॥ भृ गुंमरीचिमत्रिञ्चपुलस्त्यंपुलहंक्रतु म् । वसिष्ठञ्चमहातेजाः सोसृजन् मनसासुतान् ॥ सप्तब्रह्माणइत्येते पुराणेनिश्चयङ्गताः ॥ महांश्चासौ॰ ऋषिश्च । कृत्स्नस्यवेदस्यदर्शनात् । । अन्येतुवेदैकदेशदर्शनादृषयः ॥
महल्लकः । पुं॰ अन्तःपुररक्षके । सौविदल्ले । कञ्चुकिनि ॥ महतो लाति । ला॰ । कः । कः ॥
महल्लिकः । पुं॰ अन्तःपुररक्षके ।

अन्न : पुरस्थायिजले ॥ तल्लचणंय था । मुष्कगून्योऽनुपस्थोय : स्त्री स्वभावोमहत्लिक : ॥ इति ॥

महः । न० उत्सवे ॥ तेजसि ॥ मह-नम०मह्यतेवा । मह्पूजायाम् । सर्वधातुभ्योऽसुन् ॥

महसम् । न० ज्ञाने ॥ महति०मह्य-तेवा । महः । अत्यविचमितमिन मिरभिलभिनभितपियतिपचिप-निमहिभ्योऽसच् ॥ प्रकारे ॥

महा । स्त्री० गोपवल्लाम् । पृश्निप-र्णीविशेषे ॥ धेनौ ॥ मह्यतेपूज्यते । मह० । स्वनोवचेति०घ : ॥

महाकच्छ : । पुं० समुद्रे ॥ प्रचेत-सि । वरुणे ॥ पर्वते ॥ महान्क-च्छोयस्यस : । आन्महतइत्यात्व-म् ॥

महाकण्टकिनी । स्त्री० चुद्रीभेदे । विश्वसारके । नागफणीथूहर०हु० भा० । फविमनसा०दुर्गो०दे०भा० ॥

महाकन्द : । पुं० लशुने ॥ चाणक्य मूलके ॥ मूलके ॥ रक्तलशुने । रा-जपलाण्डौ ॥

महाकपित्थ : । पुं० विल्ववृक्षे ॥ म-हांश्चासौकपित्थश्च । आन्महत : ॥

महाकपित्थाख्य : । पुं० विल्वे ॥

महाकरञ्ज : । पुं० हस्तिकरञ्जके ॥

महाकर्णिकार : । पुं० आरग्वधे ॥

महाकान्ता । स्त्री० पृथिव्याम् ॥

महाकाय : । पुं० वृषाणके । प्रमथ-विशेषे । शिवद्वारपाले ॥ बृहच्छरी रे ॥ त्रि०तद्वति ॥

महाकार्त्तिकी । स्त्री० रोहिणीनक्षत्रयु क्तायांकार्त्तिकपूर्णिमायाम् ॥

महाकाल : । पुं० महादेवे ॥ प्रमथ-विशेषे । महाभीमे ॥ लताविशेषे । किम्पाके ॥ अखण्डदण्डायमान विष्णुस्वरूपसमये ॥ उज्जयिन्यांम-हाकाल : शाङ्करीतत्रदेवता ॥

महाकाली । स्त्री० परदेवतायाम् ॥ म हाकालपत्न्याम् ॥ जिनानांचतु-र्विंशतिशासनदेवतान्तर्गतदेवीवि शेषे ॥

महाकाव्यम् । न० सर्गबन्धे ॥

महाकुमुदा । स्त्री० काश्मर्याम् ॥

महाकुम्भी । स्त्री० कट्फले ॥

महाकुल : । त्रि० कुलीने । आर्ये । सभ्ये । सज्जने । साधौ ॥ महच्चत त्कुलञ्चमहाकुलम् । आन्महतइ त्यात्वम् । महाकुलमस्यास्ति । अ-च् ॥ महत्कुलमस्येतिविग्रहोवा ॥ न०सत्कुले ॥

महाकुलीन : । त्रि० महाकुले ॥ म-हाकुलस्यापत्यम् । कुलात्ख : ० इत्यनुवृत्तौ । महाकुलादञ्खञौ वितिपक्षेख : ॥

महाकूप : । पुं० पादावर्त्ते ॥

महाकूल : । पुं० सत्कुले ॥

महाकोशफला । स्त्री० देवदालीलता याम् ॥

महाकोशल : । पुं० देशविशेषे ॥ यथा । गोकर्णेशात् पूर्वभागेचार्यावर्तात्तुचोत्तरे । तीरभुक्तात् पश्चिमे-तुमहापुर्वांश्चसर्वत : । महाकोशलदेशश्चसूर्यवंशपरायण : ॥

महाकोषातकी । स्त्री० हस्तिघोषायाम् । मेनुयां० घीयातोरजी० हू० भा० प्र० शाके ॥ महाकोषातकी स्निग्धासरापित्तानिलापहा ॥

महाक्रतु : । पुं० अश्वमेधे ॥ महांश्चासौक्रतुश्च ॥

महाखर : । पुं० अश्वतरे ॥

महागद : । पुं० ज्वरे ॥

महागन्ध : । पुं० कुटजवृक्षे ॥ अम्बुवेतसे ॥ न० हरिचन्दने ॥ महान् गन्धोयस्य० यस्मिन्वा ॥ बोले ॥

महागन्धा । स्त्री० चामुण्डायांदेव्याम् ॥ केविकापुष्पे ॥ नागबलायाम् ॥

महागव : । पुं० गवये , वनगवे ॥

महागिरि : । पुं० कौञ्चभेदे ॥ वृहत् पर्वते ॥

महागुरु : । पुं० मातरि ॥ पितरि ॥ आचार्ये ॥ यथा । मातापितानृणां दातामहान्तोगुरव : स्मृता : । इति ॥ महांश्चासौगुरुश्च । आत्मवत्त्वात्वम् ॥ स्त्रिया : पतिरेवम हागुरु : ॥

महागुल्मा । स्त्री० सोमवल्ल्याम् ॥

महागुहा । स्त्री० पृश्निपर्ण्याम् ॥

महागोधूम : । पुं० पश्चाद्देशभवेगोधूमविशेषे । वङ्गा० गोङ्गं० हू० भाषा ॥

महाग्रह : । पुं० सूर्ये ॥

महाग्रीव : । पुं० उष्ट्रे ॥ त्रि० वृहत् ग्रीवायुक्ते ॥

महाघूर्णा । स्त्री० सुरायाम् ॥ महती घूर्णायस्यायया वा ॥

महाघोर : । त्रि० अतिशयभयानके ॥

महाघोष : । पुं० अतिघोषणे । महाशब्दे । न० हट्टे । आपणे ॥ त्रि० वृहच्छब्दयुक्ते ॥

महाघोषा । स्त्री० कर्कटशृङ्ग्याम् । कुन्दुरुक्याम् ॥

महाङ्ग : । पुं० उष्ट्रे । महान्त्यङ्गान्यस्य । अनेकमितिबहुव्रीहि : । गोधुरके ॥ महामूषिके ॥ रक्तचित्रके ॥ त्रि० वृहदवयवयुक्ते ॥

महाचञ्चु : । पुं० वृहच्चञ्चुमतिखगे ॥ शाकविशेषे । सुचञ्चुकायाम् । दीर्घपल्याम् । दिव्यगन्धायाम् ॥

महाचण्ड : । पुं० कालभृत्ये ॥ त्रि० प्रचण्डे ॥

महाचीन : । पुं० देशविशेषे ॥ यथा कैलाशोरंसमारभ्यसरयूपरित : प-

रे । अमरगांमहेशानिमहाधीना
भिधोभवेत् ॥
महाच्छद: । पुं० देवताडवृचे । वृ
हत्पत्रे ॥
महाच्छाय: । पुं० वटवृचे । त्रि० वृहच्छा
यायुक्ते ॥ महतीच्छायाऽस्य ॥
महाच्छिद्रा । स्त्री० महामेदायाम् ॥
त्रि० वृहच्छिद्रयुक्ते ॥
महाज : । पुं० वृहच्छागे ॥ त्रि० म-
हाकुलोद्भवे । महांश्चासावजश्च ॥
महतीजायतेवा ॥
महाजटा । स्त्री० रुद्रजटायामोषधौ
॥ वृहत्यांजटायाम् ॥
महाजन : । पुं० सज्जने । साधौ ॥
यथा । वेदाविभिन्ना : स्मृतयो
विभिन्नानासौमुनिर्यस्यमतंनभिन्न
म् । धर्मस्यतत्त्वंनिहितंगुहायां
महाजनोयेनगत : सपन्था : ॥ म
हाजनोपर्यनुकोशयुक्त : सन्नाहरा
जाविवेक : । यथा । स्या : पाप
महामोहहतकस्यवयाहतस्त्वयायं
महाजन : । यत : । शान्तेऽनन्त
महिम्निनिर्मलचिदानन्दे तरङ्गाव
लीनिर्मुक्तेऽमृतसागरामभसिमना
क्मग्नोपिनाचामति । नि : सारे
मृगतृष्णिकार्णवजले श्रान्तोपिमू
ढ: पिबत्याधावत्यवगाहतेऽभिर
मतेमज्जत्यथोमज्जतीति ॥ मन्वा
दौ । यथा । प्रायेणवेदतदिदंनम
हाजनीयंदेव्याविमोहितमतिर्य्यत
मायया त्वम् । त्र्य्यांजडीकृतमति
र्मधुपुष्पितायांवैतानिकेमहतिक
र्मणियुज्यमान : ॥
महाजम्बु : । स्त्री० )
महाजम्बू । स्त्री० ) वृहज्जम्ब्वाम् ।
राजजम्ब्वाम् ॥
महाजव: । पुं० गवये ॥ श्रीकारि
मृगे ॥ त्रि० अतिशयवेगवति ॥
महाजाति : । स्त्री० वासन्त्याम्लता
याम् । माधव्याम् । शुक्लवर्णे ।
महाजाली । स्त्री० पीतवर्णघोषाया
म् ॥ राजकोषातक्याम् ॥ जालय
ति । जालमाच्छादयति । चु० । पचा
द्यच् । गौरादि : । महतीचासौ
जालीच ॥
महाज्यैष्ठी । स्त्री० नक्षत्रविशेषादियु
क्तायांज्यैष्ठांपूर्णिमायाम् ॥ अस्या
शब्दकल्पद्रुमम् ॥
महाज्योतिष्मती । स्त्री० लताविशेषे
। तेजोवत्याम् । बहुरसायाम् ।
कनकप्रभायाम् । लवणायाम् ।
वडीमालकांगणी० इ० भा० ॥
महाज्वाल : । पुं० यज्ञवह्नौ ॥ त्रि
त्याम् ॥
महाज्वाला । स्त्री० जिनानांविद्याध
रीविशेषे ॥ वृहदग्निशिखायाम् ॥
महाडीनम् । न० पक्षिण : बहूडय
नेनप्रत्यावृत्तौ ॥

महाढ्य : । पुं॰ कदम्बे ॥ त्रि॰ अतिशयधनवति ॥

महातपा : । पुं॰ विष्णौ ॥ महत्सृष्टिविषयं तपोज्ञानमस्य । ऐश्वर्यं प्रतापोवामहदस्य ॥

महातमप्रभा । स्त्री॰ अतिशयान्धकारमयेनरकविशेषे ॥

महातरु : । पुं॰ स्नुहीवृक्षे ॥ वृहद्वृक्षे ॥

महातलम् । न॰ पातालप्रभेदे ॥

महातारा । स्त्री॰ जिनानांदेवीविशेषे ॥

महाताली । स्त्री॰ आवर्त्तक्याम् ॥

महातिक्त : । पुं॰ महानिम्बे ॥ त्रि॰ अतिशयतिक्तरसयुक्ते ॥

महातिक्ता । स्त्री॰ यवतिक्तायाम् ॥ पाठायाम् ॥

महातीक्ष्णा । स्त्री॰ भल्लातकवृक्षे ॥ त्रि॰ अतिशयतीक्ष्णे ॥

महातुम्बी । स्त्री॰ राजालाब्वाम् ॥

महातेजा : । पुं॰ अग्नौ ॥ कार्त्तिकेये ॥ विष्णौ ॥ यथा । तेजस्विनोयदीयेनतेजसाभास्करादय : । तत्तेजोमहदस्येतिमहातेजा : स ईश्वर: ॥ शौर्यशौर्यादिभिर्द्धर्म्मैर्महद्भि : समलङ्कृत: । इतिवास्यान्महातेजा : श्रनुपातनईश्वर : ॥ न॰ पारदे ॥ त्रि॰ अतिशयतेजस्विनि ॥ महत्प्रकृष्टं तेजयेत न्यलङ्घ्यमस्य ॥

महात्मा । त्रि॰ महामनसि । महाशये ॥ अत्यन्तशुद्धान्त: करणत्वाज्जीवन्मुक्ते ॥ सर्वोत्कृष्टे ॥ रजस्तमोमलरहितान्त: करणे । शुद्धसत्त्वे । समुत्पन्नसम्यग्दर्शने ॥ साधूनामभयदायके । परमोदारचित्ते ॥ परमकारुणिके ॥ सर्वेश्वरे॰ सर्वज्ञे॰ परमात्मनि ॥ अत्रवुद्वी ॥ महानुभावैकजन्मसुकृते : संस्कृत : चुद्रकामाद्यनभिभूत : • आत्मा ।• अन्त : करणं यस्य स : । महांश्चासावात्माचेतिवा ॥

महात्यय : । पुं॰ चतुर्थक॰ विषमज्वरे ॥ गम्भीरे ॥ महतिकष्टे ॥

महादण्ड : । पुं॰ यमदूतप्रभेदे ॥

महादन्त : । पुं॰ गजदन्ते । ईशादन्ते ॥ वृहद्दन्तमात्रे ॥ त्रि॰ तद्वति ।

महादानम् । न॰ श्रेष्ठदाने । तुलापुरुषादिषोडशप्रकारे । यथा । आद्यन्तुसर्वदानानांतुलापुरुषसंज्ञितम् । । हिरण्यगर्भदानञ्चब्रह्माण्डं तदनन्तरम् ॥ कल्पपादपदानञ्चगोसहस्रन्तुपञ्चमम् । हिरण्यकामधेनुश्चहिरण्याश्वस्तथैवच ॥ पञ्चलांगलकं तद्वद्धरादानंतथैवच । हिरण्याश्वरथस्तद्वद्देमहस्तिरथस्तथा ॥ द्वादशंविष्णुचक्रञ्चतत: कल्पलतात्मकम् । सप्तसागरदानञ्चरत्नधेनुस्तथैवच । महाभूतघटस्तद्

नृपोत्तम : परिकीर्त्तित : ॥

महादारु । न॰ देवदारुणि ॥

महादाह : । पुं॰ नरकान्तरे ।

महादेव : । पुं॰ शिवे ॥ महांश्चासौ-देवश्च । आन्महतइत्यात्वम् ॥ महान्देवोनृत्यादिरूपाक्रीडायस्येतिवा ॥ ब्रह्मादीनांसुराणाञ्चमुनीनांब्रह्मवादिनाम् । तेषाञ्चमहतोदेवोमहादेव:प्रकीर्त्तित: ॥ महतीपूजितावित्वं मूलप्रकृतिरीश्वरी । तस्यादेव: पूजितश्चमहादेव : सचस्मृत: ॥ इ॰ ब्र॰ वै॰ पु॰ ॥ सर्व्वदेवानांमहनीयत्वाच्चमहादेव: । तथोक्तं साम्बपुराणे । पूज्यतेयत्सुरै : सर्व्वैर्महांश्चैव प्रमाणत : । धातुर्महेतिपूजायांमहादेवस्ततस्मृत : ॥ स्कांदेपि । महतामपिदेवानामहमेवमहान्यत : । नतुमत्तोमहानन्योमहादेवस्ततोह्यहमिति ॥ कोटयोब्रह्महत्यानामगम्यागमकोटय : । सद्य : प्रलयमायान्तिमहादेवेतिकीर्त्तनात् ॥ महादेवमहादेवमहादेवेतिवादिनम् । वत्सं गौरिवगौरीशोधावन्तमनुधावति ॥ चकोक्तमथर्व शिरसि । सर्व्वान्भावान्परित्यज्यात्मज्ञानयोगेश्वर्ये महतिमहीयतेतस्मादुच्यतेमहादेवइति । अस्यार्थोविष्णुसहस्रनामभाष्यटीकायांद्रष्टव्य : ॥

महादेवी । स्त्री॰ दुर्गायाम् ॥ महतो-ब्रह्मादीनपिदेवयतिसर्गादिभिर्व्यवहारयति॰ इतिमहादेवी । दिवु॰ । अच् । टित्वान्ङीप् ॥ पूज्यतेयासुरै : सर्व्वैर्महतीचप्रमाणत: । धातुर्महेतिपूजायांमहादेवीतत : स्मृतेतिदेवीपुराणम् । सर्व्वदृश्यंमहादेवी द्रष्टासाक्षीचसैवहीतिदेवीभागवतम् । द्रष्टाजीव : साक्षी॰ ईश्वर: ॰ दृश्यंसर्व्वंजगत्॰ इदंचय सैवभगवती भवतीत्यर्थ: ॥ राज्ञ्याम् । महिष्याम् । पट्टदेव्याम् ॥

महादैत्य : । पुं॰ भौत्यमन्वन्तरीयदैत्यविशेषे ॥ उत्कृष्टदैत्ये ।

महाद्युति : । त्रि॰ ईश्वरे ॥ महतीबाह्याभ्यन्तरव्यापिनीद्युतिर्यस्य तन्यलवणास्त्रकामादिपराभवेनस्वहितसाधनोन्मुखे॰ पुरुषर्षभे । महतीद्युतिरस्य ॥

महाद्रिभृक् । पुं॰ हरौमहान्तमद्रिं-मन्दरंगोवर्द्धनंवाऽमृतमथनेगोरक्षणेवाधृतवानितिव्युत्पत्ति: फलितार्थकथनपरा । वस्तुतस्तुमहाद्रयेयच्योति॰ धत्तृमप्रगल्भते । ञिधृ-षाप्रागल्भ्ये । क्विप् । क्विन्प्रत्ययस्यकु : ।

महाद्रुम : । पुं॰ अश्वत्थे ॥ महांश्चासौद्रुमश्च ॥ उच्चवृक्षे ।

महाद्रोणा । स्त्री॰ देवकुरुम्बायाम् । दिव्यपुष्पायाम् ।

महाद्रोणी । स्त्री० महाद्रोणाक्षुपे ॥
महाद्वन्द्वः । पुं० युद्धवाद्ये ॥ अतिकलहे ॥
महाधनम् । न० महामूल्ये । बहुमूल्ये वस्तुनि । महगो० इ० भा० । सुवर्णे ॥ सिह्लके ॥ चारुवाससि ॥ महद्धनंमूल्यमस्य ॥ कृषिकर्म्मणि ॥ त्रि० अतिशयधनयुक्ते ॥
महाधातुः । पुं० स्वर्णे ॥
महाध्वगः । पुं० उष्ट्रे ॥
महानटः । पुं० महादेवे ॥
महानदः । पुं० नदविशेषे ॥
महानदी । स्त्री० पुरुषोत्तमक्षेत्रान्तर्गतनदीविशेषे । चित्रोत्पलायाम् ॥ गङ्गायाम् ॥ यथा । अम्बुजमम्बुनिजातंजातुनजायतेम्बुजादम्बु । मुरहरतत्रविपरीतंपदाम्बुजाद्यन्महानदीजाता ॥
महानन्दः । पुं० मुक्तौ ॥ अधिकाह्लादे ।
महानन्दा । स्त्री० अमृतायाम् ।सुरायाम् ॥ माघशुक्लनवम्याम् ॥ नदीविशेषे । देवीविशेषे । अट्टहासेमहानन्दादेवी ॥
महानन्दिः । पुं० नन्दिकेश्वराख्यराजपुत्रे ॥
महानरकः । पुं० अतिशयनामाप्रकारयातनास्थाने ॥
महानलः पुं० इन्द्रदग्नौ ॥ देवनले ।

महानवमी । स्त्री० आश्विनशुक्लनवम्याम् ॥
महानसम् । न० पाकस्थाने । रसवत्याम् ॥ तत्ररक्षणीयत्वनामाख्येऽत्राः । यथा । सूदशास्त्रविधानज्ञाः पराऽभेद्याः कुलोद्गताः । सर्वेमहानसेधार्याः कृत्तकेशनखाजनाः ॥ इति ॥ पुंलिङ्गोप्ययमितिकश्चित् ॥ महच्चतदनश्च । अनोश्माय: सरसांजातिसंज्ञयोरितिसंज्ञायांटच् ॥
महानसाधिकृतः । त्रि० पौरोगवे ॥ महानसेऽधिकृतः ॥
महानाटकम् । न० हनुमन्नाटके ॥ नाटकविशेषे ॥
महानाडी । स्त्री० कण्डरायाम् ॥
महानादः । पुं० कुञ्जरे ॥ वर्षुकाब्दे ॥ महाध्वने ध्वनियुक्ते । कर्णे ॥ सिंहे ॥ उष्ट्रे ॥ शङ्खे ॥ कोहलायाम् ॥ महान्नादोयस्यसः ॥
महानिद्रा । स्त्री० मरणे ॥
महानिम्बः । पुं० पवनेष्टे । पार्वते । वक्कायन० द्रेक० र्द्रक० इ० भाषा । महानिम्बोहिमोरूक्षस्तिक्तोग्राहीकषायकः । कफपित्तभ्रमिच्छर्दिकुष्ठहृल्लासरक्तजित् ॥ प्रमेहश्वासगुल्मार्शोमूषिकाविषनाशनः ॥
महानिशा । स्त्री० निशामध्यभागे । निशीथे ॥ रात्रेर्मध्यमप्रहरद्वये ॥

यथा । महानिशातुविज्ञेयामध्यस्थंप्रहरद्वयम् । तत्रस्नानंनकुर्वीत काम्यनैमित्तिकादृते ॥ स्मृत्युक्तमहानिशासार्द्धप्रहरोपरिप्रहरद्वयमितिरघुनन्दन : । देवलोक्तमहानिशारात्रिमध्यमदण्डद्वयात्मिकासाद्वितीयप्रहरशेषदण्डतृतीयप्रहरप्रथमदण्डरूपा ॥

महानीच: । पुं० रजके । अतिशयहीनवर्णे ।

महानील: । पुं० भृङ्गराजे । नागविशेषे ॥ सिंहलद्वीपाकरोद्भूते० मणिविशेषे ॥ सिंहलस्याकरोद्भूतामहानीलास्तुतेस्मृता:इत्यगस्त्योक्ते: । तल्लक्षणं यथा । यस्तुवर्णस्यभूयस्त्वात् क्षीरेशतगुणेस्थित: । नीलतांतनुयात्सर्वंमहानील : सउच्यते ॥ इतिगारुडे० ७२ अध्याय : ॥

महानीला । स्त्री० महाजम्ब्वाम् ॥

महानीली । स्त्री० नीलापराजितायाम् ॥ बृहन्नील्याम् । श्रीफलिकायाम् । कैशार्हायाम् ।

महानुभाव : । पुं० औहरी ॥ महाशये । सुकृतिनि । महामाहात्म्ये ॥ महान्श्रुताध्ययनतपआचारादिनिबन्धनोऽनुभाव: प्रभावोयस्य स: ।

महान्तक : । पुं० महेन्द्राचलपीठस्थशिवे । स्त्री० देशीविशेषे ॥ महेन्द्रेचमहान्तका ॥

महापक्ष : । पुं० बहुपुत्रादिपरिजने ॥

महापञ्चमूलम् । न० बृहत्पञ्चमूले । तद्यथा । बिल्वोग्निमन्थ : श्योनाक : काश्मर्य : पाटलातथा । सर्वैस्तुमिलितैरेतै : स्यान्महापञ्चमूलकम् ॥

महापञ्चविषम् । न० बृहद्विषपञ्चके ॥ तद्यथा । शृङ्गीचकालकूटश्चमुस्तकोवत्सनाभक : । शङ्खकर्णीतियोगोयंमहापञ्चविषाभिध : ।

महापञ्चाङ्गुल : । पुं० स्थूलैरण्डे ।

महापत्र: । पुं० शाकवृक्षे ॥ मानके । मानकचू० इ० गौ० दे० भा० प्र० कन्दे ॥ त्रि० बृहत्पत्रयुक्ते ॥ महान्तिपत्राणियस्य स : ॥

महापत्रा । स्त्री० महाजम्ब्वाम् ।

महापथ: । पुं० प्रधानेऽध्वनि । घण्टापथे । राजवर्त्मनि ॥ आकाशे ॥ विस्तीर्णपथि ॥ श्मशाने ॥ महतांपन्था : ० अ : ॥

महापथगम : । पुं० मरणे ॥

महापद्म: । पुं० अष्टनागान्तर्गतनागविशेषे । अतिशुक्ले । दशबिन्दुकमस्तके ॥ कुबेरस्यनवनिध्यन्तर्गतनिधिविशेषे ॥ लक्षकोटिसङ्ख्यायाम् । १०००००००००००० ॥ न० सितपद्मे ।

महापातकम् । न० ब्रह्महत्यादिषु ॥

यथा । ब्रह्महत्यासुरापानंस्तेयंगुर्व-
ङ्गनागमः । महान्तिपातकान्याहु
स्संसर्गश्चापितैः सह ॥ महापात
कजंचिह्नं सप्तजन्मसुजायते । बाध
तेव्याधिरूपेणतस्यकृच्छादिभिः श
मः ॥ महच्चतत्पातकञ्च ॥

महापातकी । स्त्री • ब्रह्महत्याद्यन्यतम
पातकयस्ते ॥वीरहननाद्यन्यतममहा
पातकयस्ते॥ यथा । वीरघातीद्रया
पायीचौरायांस्त्रीगमस्तथा । स्तेयीम
हापातकिनस्तत्संसर्गीचपञ्चमः ॥
सचपतितः • यथा । महापातकि
नोयेचपतितास्ते प्रकीर्त्तिताः । प
तितानांनदाहः स्यान्नान्त्येष्टिर्ना-
स्थिसञ्चयः । नचाश्रुपातः पिण्डो
वाकार्यं श्राद्धादिकंक्वचित् ॥ ए-
तानिपतितानान्तुयः करोतिविमो
हितः । तप्तकृच्छ्रद्वयेनैवतस्यशुद्धि
र्नचान्यथा ॥ इतिशुद्धितत्त्वधृतंवि
ष्णुपुराणवचनम् ॥ महापातकिनो
जीवतएवप्रेतस्योदकक्रियावच्च्यमा
णरीत्यासपिण्डैः समानोदकैश्चग्रा
माद्बहिर्गत्वाज्ञात्यृत्विग्गुरुसन्निधा-
नेरिक्तायांनवम्यांतिथौदिनान्तेकर्त्त
व्यत्याहमनुः ॥ पतितस्योदककंका-
र्यंसपिण्डैर्बान्धवैर्बहिः । निन्दि-
तेहनिसायाह्नेज्ञात्यृत्विग्गुरुसन्नि
धौ । दासीघटमपांपूर्णंपर्यस्येत्प्रे
तवत्पदा ॥ अहोरात्रमुपासीरन्नशौ
चंबांधवैः सह ॥ निवर्त्तेरंश्चतस्मा
त्सम्भाषणसहासने । दायाद्यस्य
प्रदानञ्चयात्राचैवहिलौकिकी ॥
ज्येष्ठताचनिवर्त्तेतज्येष्ठावाप्यञ्चयद्ध
नम् । ज्येष्ठांशंप्राप्नुयाच्चास्ययवीया
न्गुणतोधिकः ॥ प्रायश्चित्ते तुच-
रितेपूर्णंकुम्भमपांनवम् । तेनैवसा
र्द्धंप्राप्स्येयुः स्नात्वाशुद्धे जलाशये-
॥ सत्वप्सुतंघटंप्रास्यप्रविश्यभवनं
स्वकम् । सर्वाणिज्ञातिकार्याणियथा
पूर्वंसमाचरेत् ॥ एवमेवविधिंकुर्या
द्योषित्सुपतितास्वपि । वस्त्रान्नपा
नंदेयन्तुवसेयुश्चगृहान्तिके ॥ महा
पातकमस्त्यस्यामिन्वा । इनिः ॥
पारिभाषिकमहापातकीयथा ॥ कृ
तप्राणप्रतिष्ठास्वर्णैचैयांप्रतिमांहिज
दुर्गांनप्रणमेद्यस्तुसमहापातकीस्मृ-
तः ॥ अपिच । पितरंमातरंभार्यां
गुरुपत्नींगुरुंपरम् । योनपुष्णातिका
पण्यात्समहापातकीभवेत् ब्र • वै •
पु • ॥

महापापम् । न • महापातके ॥ अत्यु
त्कटपापे ॥

महापाप्मा । पुं • अत्युग्रे ॥ कामे ॥
महतः पापस्यहेतुत्वात् ॥

महापारेवतम् । न • दक्षपारेवते ।
द्वीपखर्जूरे ॥

महापाश: । पुं • यमदूतविशेषे । इ
त्यादि ॥

महापासक : । पुं॰ गोमिनि । चेलुके । बुद्धभिक्षुशिष्ये ॥

महापिण्डीतक : । पुं॰ कृष्णवर्णमदनद्रुमे । वाराहे ॥

महापिण्डीतरु : । पुं॰ वृक्षविशेषे । श्वेतपिण्डीतके । शस्त्रकोषतरौ । शरे । पिण्डीतरौ । पिण्डिरा॰ वृ॰ भा॰ ॥

महापीठम् । न॰ एकपञ्चाशत्पीठे ॥

महापीलु : । पुं॰ वृहत्पीलुवृक्षे । महाफले । मधुपीलौ ॥

महापुराणम् । न॰ एकादशलक्षणयुक्ते व्यासप्रणीतेऽष्टादशसङ्ख्यकपुराणविशेषे ॥ तल्लक्षणं यथा । सृष्टिश्चापिविसृष्टिश्चस्थितिस्तेषाञ्चपालनम् । कर्मणांवासनावार्त्तामनूनाञ्चक्रमेणच । वर्णनंप्रलयानाञ्चमोक्षस्यचनिरूपणम् । उत्कीर्त्तनंहरेरेवदेवानाञ्चपृथक्पृथक् ॥ दशाधिकंलक्षणञ्चमहतांपरिकीर्त्तितम् ॥ इतिब्रह्मवैवर्त्ते कृष्णजन्मखण्डे १३२ अध्याय : ।

महापुरुष : । पुं॰ नारायणे । श्रेष्ठनरे ॥ लक्षणंवाराह्या ६७ अ॰ ॥ ब्रह्मात्माभेदज्ञानिनि॰ जीवन्मुक्ते । महांश्चासौपुरुषश्च । सन्महदिति समास : । आन्महतइत्यात्वम् ॥

महापुरुषदन्ता । स्त्री॰ शतमूल्याम् ॥

महापुरुषदन्तिका । स्त्री॰ महाशतावर्य्याम् ॥

महापुष्पा । स्त्री॰ अपराजितायाम् ॥

महापृष्ठ : । पुं॰ उष्ट्रे त्रि॰ वृहत्पृष्ठे ॥

महापौरुषिक : । पुं॰ वैकुण्ठनाथानुचरे ॥

महाप्रकृति : । स्त्री॰ दुर्गायाम् ॥

महाप्रपञ्च : । पुं॰ स्थूलसूक्ष्मकारणप्रपञ्चानांसमष्टौ ॥ यथाऽवान्तरवनानांसमष्टिरेकंमहद्वनम्॰ यथाऽवान्तरजलाशयानांसमष्टिरेकोमहान् जलाशयोभवति॰तद्वत्स्थूलसूक्ष्मकारणशरीरप्रपञ्चानामपिसमष्टिरेकोमहान्प्रपञ्चोभवतीति ॥

महाप्रभ : । त्रि॰ अतिशयदीप्तियुक्ते ॥

महाप्रभाव : । त्रि॰ अतिशयतेज : शक्तिविशिष्टे ॥

महाप्रभु : । पुं॰ जगन्नाथे ॥

महाप्रलय : । पुं॰ सर्वसंहारे । एककालिकसमस्तजन्यपदार्थनाशे । महांश्चासौप्रलयश्च ॥ न्यायमते जन्यभावानधिकरणकालोमहाप्रलय : • सचचरमध्वंसरूप : ।

महाप्रसाद : । पुं॰ विष्णुनैवेद्यादौ ॥ यथा । पादोदकञ्चनिर्माल्यंनैवेद्यञ्चविशेषत: । महाप्रसादइत्युक्त्वाग्राह्यंविष्णो: प्रयत्नत: ॥ ब्राह्मणब्रह्मसंवेणब्रह्मणे पिंतवस्तुनि । तन्माहात्म्यं महानिर्वाणतन्त्रेसम्यक्

निरूपितम् ।

महाप्रस्थानम् । न॰ शास्त्रोयदेहत्या गविशेषे ॥ महत्॰ आवृत्तिशून्यंप्र स्थानम्॰ सर्पव्याघ्रिकसिंहव्याघ्रादि विषमभूम्याद्यपरिहारेणगमनंयाव च्छरीरपातंतन्महाप्रस्थानम्॰इत्यु च्यते ॥

महाप्राण : । पुं॰ द्रोणकाके ॥

महाप्रेत : । पुं॰ ब्रह्मादिषु ॥ यथा । ब्रह्माविष्णुश्चरुद्रश्चईश्वरश्चसदाशि व:। एतेपञ्चमहाप्रेताभूताधिपतयो मता:॥ चत्वारोमञ्चचरणा:पञ्चम: प्रच्छद:पट:। सच्चित्प्रकाशरूपेणशि वेनाभिन्नविग्रहा: ॥ तत्रासनेसमा सीनानिर्भरानन्दरूपिणीति ॥

महाफल : । पुं॰ मालूरे । विल्वे ॥ त्रि॰ उत्कृष्टफले ॥ न॰ वृहत्फले ॥

महाफला । स्त्री॰ इन्द्रवारुण्याम् ॥ राजजम्ब्वाम् ॥ तुम्ब्याम् ॥ महा कोशातक्याम् ॥ मधुवीजपुरे ॥

महाफेना । स्त्री॰ अब्धिफेने । हिण्डी रे ॥

महाबल : । पुं॰ वायौ ॥ वुद्धे ॥ न॰ सीसके ॥ त्रि॰ बलोत्कटे । बलीय सि ॥ महासामर्थ्ये ॥ महत्प्रकृष्टं बलमस्य ॥

महाबला । स्त्री॰ अतिबलायाम् । पी तपुष्पाम् । पीतबाट्यालके ॥

महाबोधि : । पुं॰ वुद्धे ॥

महाब्राह्मण : । पुं॰ निन्दितब्राह्मणे । कच्या॰ भ्रष्टारज॰ इ॰ भा॰ ॥

महाभद्रा । स्त्री॰ काश्मर्याम् ॥ गङ्गा याम् ॥

महाभट : । पुं॰ अतिशययोद्धरि ।

महाभाग : । त्रि॰ अतिधन्ये ॥ दयाद्य ष्टगुणयोगोमहाभागता॰ तद्विशिष्टे ॥ महान्भागोभाग्यमस्य ॥ महान् असाधारणोभागऐश्वर्यादिभगसमु दायोयस्यवा ॥

महाभागा । स्त्री॰ महालयतीर्थस्थायां देव्याम् ॥

महाभारतम् । न॰ व्यासप्रणीतेतिहास शास्त्रे ॥ तन्नामकारणं यथा । एक तश्चतुरोवेदाभारतञ्चैतदेकत: । पुराकिलसुरै: सर्वै: समस्यतुलया धृतम् ॥ चतुर्भ्य: सरहस्येभ्योदेवे भ्योभ्यधिकंयदा । तदाप्रभृतिलोके स्मिन्महाभारतमुच्यते ॥ महत्वा द्भारतत्वाच्चमहाभारतमुच्यते ॥

महाभाष्यम् । न॰ पातञ्जलेव्याकरण भाष्ये ॥

महाभिलाष : । त्रि॰ महेच्छे ॥ महा नभिलाषोस्य ॥

महाभिष: । पुं॰ राजर्षिविशेषे । प्रा तीपे । शन्तनौ ॥ यथा । महाभि षोनृपोजात: प्रतीपस्यसुतस्तदा । शन्तनुर्नामराजर्षिर्धर्मात्मासत्यसङ्ग रइति ॥

महाभीता। स्त्री॰ लज्जालुवृक्षे ॥ त्रि॰ अतिशयभययुक्ते ॥
महाभीम:। पुं॰ शान्तनुनृपे ॥ भृङ्गिनामकशिवद्वारपाले ॥ त्रि॰ अतिशयभयानके ॥
महाभीरु:। पुं॰ कीटविशेषे। गोपालिक॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ ग्वाली॰ इ॰ दे॰ भा॰ ॥ अतिशय भयशीले ॥
महाभीष्म:। पुं॰ शान्तनुनृपे ॥
महाभूतम्। न॰ व्योमादिपञ्चसु। भूम्यादिपंचसु ॥ महाभूतानिपंचैव खानिलाग्न्यम्बुभूमय: ॥
महाभृङ्ग:। पुं॰ नीलभृङ्गराजे ॥
महाभैरव:। पुं॰ शरभरूपिणिहरे ॥
महाभोग:। त्रि॰ नारायणे। अतिसुखिनि ॥ महान्भोग: सुखरूपोऽस्य ॥
महाभोगा। स्त्री॰ दुर्गायाम्। महार्थसाधिनीदेवीमहाभोगाततः स्मृता॥
महामण्डूक:। पुं॰ पीतमण्डूके ॥
महामति:। त्रि॰ अतिशयबुद्धिविशिष्टे ॥
महामद:। पुं॰ मत्तगजे ॥ त्रि॰ अतिशयहर्षयुक्ते ॥
महामना:। त्रि॰ सदन्तःकरणे। उत्कृष्टे। महेच्छे। उदारे। महाशये। अक्षुद्रचित्ते। सर्वश्रेष्ठोऽहमितिमन्यमाने ॥ महद्भिर्गम्भीरमन्यैरसममात्मानंमन्यमानंमनोयस्यस: ॥ परमेश्वरे ॥ सृष्टिस्थित्यन्तकर्माणिजगतांमनसैवकरोतीतिमहामना: ॥ मनसैवजगत्सृष्टिंसंहारञ्चकरोतियइतिविष्णुपुराणम् ॥ मनसैव॰ सङ्कल्पमात्रेणैव ॥
महामाघ:। पुं॰ योगविशेषे ॥ माघेमघसंयुक्तामघायांचगुरुर्यदा। महामाघस्तदाप्रोक्तोव्रतोद्वाहादिवर्ज्जयेत् ॥
महामात्र:। पुं॰ प्रधाने। अमात्ये। सामान्यादौ ॥ समृद्धे। हस्तिपकाधिपे। हस्तिशिक्षाजीविनि। महतीमात्रापरिच्छेदोऽस्य ॥
महामात्री। स्त्री॰ आचार्यपत्न्याम् ॥ महामात्रयोषायाम् ॥
महामानसी। स्त्री॰ जिनाननांविद्यादेवीभेदे ॥
महामाय:। पुं॰ हरौ। मायाविनामपिमायाकारित्वात्। महतीप्रकृष्टामायास्य। महामायात्वंचमायाविनामपिमयशम्बरप्रभृतीनांविविधप्रपंचविभ्रमकारिमायाप्रयोक्तृत्वात् ॥
महामाया। स्त्री॰ दुर्गायाम् ॥ ईश्वरशक्त्याम् ॥ विसदृशप्रतीतिसाधनंमाया॰ तस्याश्चमहत्त्वंसर्वविषयत्वमितिव्याख्यानात् ॥ तस्या: स्वरूपंयथा। कालिकापुराणे। गर्भान्तर्ज्ञानसम्पन्नंप्रेरितंसूतिमारुतै:

। उत्पन्नं ज्ञानरहितंकुरुतैयामिरक्त रम् । पूर्वातिपूर्वसम्बद्धसंस्कारेण-नियोज्यच । आहाराद्वीततोमोह-ममत्वंज्ञानसंशयम् ॥ क्रोधोपरोध लोभैर्बुद्धिमूढ़ाविमूढ़ापुन: पुन: । प-श्चात्कामेनसंयोज्यचिन्तायुक्तमहर्नि शम् ॥ आमोदयुक्तंव्यसनासक्तंज-न्तुंकरोतिया । महामायेतिसाप्रो क्तातेनसाजगदीश्वरी ॥ इति ।

महामायी । पुं॰ ईश्वरे ॥

महामायी । स्त्री॰ दुर्गायाम् ।

महामारी । स्त्री॰ महाकाल्याम् ॥ भा मयैश्वभूतायांमहाजनक्षयकर्यां देव तायाम् । संहारशक्तौ ॥ महतीमा रयतीतितथा । महतीचासौमारी चतिवा ॥ व्याप्तंतयैतत्सकलंब्रह्मा ण्डंमनुजेश्वर । महाकाल्यामहा-कालेमहामारीस्वरूपया ॥ सैवका-लेमहामारीसैवसृष्टिर्भवत्यजा ॥ स्थि तिंकरोतिभूतानांसैवकालेसनातनी-तिमार्कण्डेयपुराणम् ॥ अतिशय-मारके ॥

महामार्ग: । पुं॰ राजमार्गे ॥

महामालिनी । स्त्री॰ नाराचाभिधेवृ-त्तविशेषे ॥ यदिहनयुगलंततोवेदरे फैर्महामालिनीतिलक्षणम् ॥

महामाष: । पुं॰ राजमाषे चौरा॰ लोबिया॰ इ॰ भा॰ ॥

महामुख: । पुं॰ कुम्भीरे न॰ बृह न्मुखे ॥ त्रि॰ तद्वति ॥

महामुण्डी । स्त्री॰ महाश्रावणिका-याम् ॥

महामुनि: । पुं॰ नारायणे । अग-स्त्ये ॥ बुद्धे काले । कृपाचार्ये ॥ व्यासे ॥ महांश्चासौमुनिश्च । सन्म हदितिसमास: । आन्महतइत्यात्वम् ॥ ब्रह्मविदि ॥ तुम्बुरुवृक्षे ॥ न॰ कुस्तुम्बुरुणि । धन्याके ॥

महामूर्द्धा पुं॰ शिवे ॥ त्रि॰ बृहन्मस्त कयुक्ते ॥

महामूल: । पुं॰ राजपलाण्डौ ॥ छि लिहिण्टे ॥

महामूल्य: । पुं॰ पद्मरागे ॥ न॰ म हार्घे ॥ त्रि॰ तद्वति ॥

महामूषिक: । पुं॰ बृहद्दुन्दुरौ । महा खुः ॥

महामृग: । पुं॰ हस्तिनि ॥ शरभे ॥

महामृत्युञ्जय: । पुं॰ मृत्योर्मृत्युक रे शिवमन्त्रविशेषे ॥ नित्यमष्टशतं जप्त्वामृत्युंमृत्युपथंनयेत् ॥

महामेघ: । पुं॰ अतिशयमेघे ॥

महामेद: । पुं॰ अष्टवर्गाङ्गौषधे । पुरोहवे । बृहन्मेदे ॥

महामेदा । स्त्री॰ अष्टवर्गाङ्गौषधविशे षे । वसुच्छिद्रायाम् । जीवन्याम् । पांशुरागिण्याम् ॥ महामेदाभिध: कन्दोमोरङ्गादौप्रजायते । शुक्लार्द्र-कनिभ :कन्दोलताजात:सुपाण्डुर: ।

महामेदाभिधः प्रोक्तोग्रन्थे भावप्रकाशके। मेदायुगं गुरुस्वादुवृष्यं स्तन्यकफापहम्। हृणं शीतलं पित्तरक्तवातज्वरप्रणुत्॥ तस्याश्च लाभं यस्याः स्यानेभ्यतावरीदेया॥

महामैत्रः। पुं॰ बुद्धभेदे॥ * ॥

महामोहः। पुं॰ भोगेच्छारूपाज्ञाने॥ महामोहस्तुविज्ञेयोग्राम्यभोगसुखैषणा॥ रागे। विषयविशेषे सद्दशविधः। शब्दादिषु पञ्चसु दिव्यादिव्यतयादशविधेषु विषयेषु रञ्जनीयेषु रागः॰ आसक्तिर्महामोहः॰ सचदशविधविषयत्वाद्दशविधः॥

महामोही पुं॰ शिवप्रिये धत्तूरे॥ त्रि॰ महामोहविशिष्टे॥

महाम्बुजः। पुं॰ मरकान्तरे॥

महाम्लम्। न॰ तिन्तिडीके। वृक्षाम्ले॥

महायक्षः। पुं॰ हर्षदुपासकविशेषे॥

महायज्ञः। पुं॰ अध्यापनादिपंचसु॥ पाठोहोमश्चातिथीनांसपर्यातर्पणं बलिः। एते पञ्चमहायज्ञाब्रह्मयज्ञादिनामकाः॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तुतर्पणम्। होमोदैवोबलिर्भौतोनृयज्ञोऽतिथिपूजनम्॥ अहुतञ्चहुतञ्चैवतथाप्रहुतमेवच। ब्राह्मंहुतं प्राशितञ्चपञ्चयज्ञान्प्रचक्षते॥ जपोऽहुतोहुतोहोमः प्रहुतोभौतिकोबलिः। ब्राह्मंहुतंद्विजाग्र्यार्चाप्राशितंपितृतर्पणम्॥ पञ्चैतान्योमहायज्ञान्नहापयतिशक्तितः। सगृहेऽपिवसन्नित्यंसूनादोषैर्नलिप्यते॥ देवताऽतिथिभृत्यानांपितॄणामात्मनश्चयः। ननिर्वपतिपञ्चानामुच्छ्वसन्नसजीवति॥ अपिच। एते पञ्चमहायज्ञाब्रह्मणानिर्मितापुरा। ब्राह्मणानांहितार्थायद्रुतरेषांच तत्पुरा॥ इतरेषांचवर्णानांब्राह्मणैः कारिताः शुभाः॥ एवंकृत्वानरोमुक्तोऽ आशरीरीविमुच्यति। अन्यथाप्रीहवोप्यत्रएतेकष्टयशिणाः॥ सव्याव्यादात्मभोक्तॄणांमहामांसंतुतद्भवेत्॥ इ॰ वराहपुराणं॥

महायशाः। पुं॰ सुताष्टविशेषे॥ न॰ कल्पभेदे॥ त्रि॰ लोकेवेदेच प्रसिद्धविभवे॥ अतिशययशोयुक्ते॥

महायशस्कः। त्रि॰ अतिशययुक्ते॥

महायोगी। पुं॰ अद्रिकूटपीठस्थे शिवे॥

महारजतम्। न॰ स्वर्णे। धत्तूरे॥ वृहद्रौप्ये॥ महच्चतद्रजतंच। सन्महदितिसमासः। आन्महतइत्यात्वम्॥

महारजनम्। न॰ कुसुम्भे। कसुं भा॰ इ॰ भा॰॥ शातकुम्भे। स्वर्णे॥ रज्यतेऽनेन। रञ्जरागे।

ल्युट्। रजकरजनरञ्जनरजस्सु प सङ्ख्यानान्नलोप :॥ रञ्जे: क्युन् वा ॥ महच्चतद्रजनं च। सन्महदिति समास: ।

महारण्यम्। न॰ अरण्यान्याम् ॥ महच्चतदरण्यञ्च। सन्महत्परमोत्तमोत्कृष्टा: पूज्यमानैरितिसमास:। आन्महतइत्यात्वम् ॥

महारत्नम्। न॰ मुक्तादिनवसु ॥ मुक्ताफलंहीरकञ्चवैदूर्यंपद्मरागकम्। पुष्परागञ्चगोमेदंनीलंगारुत्मतं तथा ॥ प्रवालयुक्तान्युक्तानिमहारत्नानिवैनव ॥

महारथ:। पुं॰ रथिकविशेषे। अयुतधन्विभि: सहयोहरि। यथा। एकोदशसहस्राणियोधयेद्यस्तुधन्विनाम्। शस्त्रशास्त्रप्रवीणश्चमहारथइतिस्मृत:॥ अपिच। आत्मानंसारथिञ्चाश्वान् रक्षन् युद्ध्येत योनर:। समहारथसंज्ञ: स्यादित्याहुर्नीतिकोविदा:। शिवे॥ विष्णौ। महान् महात्मा॰नन्दी॰गरुडोवारथोयस्य स:॥

महारम्भम्। म॰ गडलवणे। सांभर॰हू॰भा॰॥

महारस:। पुं॰ खर्जूरे॥ कोशकारे। इक्षुविशेषे। कोसिआर॰हू॰ भा॰॥ कशेरुणि॥ पारदे। रसेन्द्रे॥ न॰काञ्जिके॥

महारसाष्टकम्। न॰ हिङ्गुलाद्यष्टसु॥ यथा। दरदंपारद: सस्यौवैक्रान्तं कान्तमभ्रकम्। माक्षिकंविमलश्चेतिस्युरेतेऽष्टौमहारसा:॥

महाराज:। पुं॰ बुद्धभेदे। महाघोषे॥ अस्पप्तराज्यइति। नृपश्रेष्ठे॥

महाराजचूत:। पुं॰ उत्तमाम्रे। मम्पथानन्दे॥

महाराजद्रुम:। पुं॰ आरग्वधे

महाराजिक:। पुं॰ गणदेवताविशेषे॥ सत्त्वसुधन्वसबलाद्योविंशत्यधिकशतद्वयसङ्ख्यातागौरवाप्रदर्शिता:। महाराजिकनामानोद्विशतैविंशतिस्तथा॥ महतीराजि: पङ्क्तिर्येषामितिविग्रहेशेशादिभाषेतिकन्॥

महारात्रि:। स्त्री॰ महाष्टम्याम्। अर्द्धरात्रात्परंमुहूर्त्तद्वये॥ ब्रह्मलयोपलक्षितायांमहाप्रलयरात्र्याम्॥ ब्रह्मणस्तुनिपातेचमहाकल्पोभवेन्नृप। प्रकीर्त्तितामहारात्रि: सापञ्चपुरातमैरितिब्र॰वै॰पु॰।

महाराष्ट्र:। पुं॰ देशविशेषे॥ विपक्षकंसमारभ्यमध्येचोज्जयिनीशिवे। मार्जारतीर्थराजेन्द्रकोलापुरनिवासिनी॥ तावद्देशोमहाराष्ट्र: कर्णाटस्वामिगोचर:। इ॰शक्तिसङ्गमे ७ पटल:॥ अपिच। नेकर्तेष्ट

विज्ञानत्त्वं महाराष्ट्रासुरैवत : । ज-
वन : पह्लव : सिन्धु : पारसोकाद
योमता : । इ॰ज्योतिषतत्त्वे कू-
र्मचक्रं ।।

महाराष्ट्री । स्त्री॰ जलपिप्पल्याम् ।।
शाकविशेषे । मरैठी॰इ॰भा॰ ।।
भाषाप्रभेदे ।

महारिष्ट : । पुं॰ महानिम्बे । गिरि
निम्बे ।

महारुद्र : । पुं॰ महादेवे ।

महारूप : । पुं॰ शिवे

महारूपकम् । न॰ नाटके ।।

महारोग : । पुं॰ पापरोगे ।। सचाष्ट
विधोयथा । उन्माद : १ । त्व-
ग्दोष: २ । राजयक्ष्मा ३ । श्वास:
४ । मधुमेह : ५ । भगन्दर : ६ ।
उदर : ७ । अश्मरी ८ । इति ।।

महारोगी । त्रि॰ महारोगयुक्ते ।।

महारौरव : । पुं॰ नरकान्तरे ।। महा
रौरवसंज्ञन्तुअधोर्द्धतामसम्पुटम् ।
अग्नितेषहिराड्रारैगुरुहारापनाय
क : ।। देवद्रव्यापहारीचपच्यतेका
लमक्षयम् ।। महान्रौद्रोरवोऽत्र ।
शकन्ध्वादित्वाद्लोप : । यद्वा ।
रुरुर्भारशृङ्गाख्योमृग : ॰ महतोरु
रोरयम् । अण् ।।

महार्घ : । पुं॰ लावकाख्यपक्षी ।। त्रि॰
महामूल्ये ।

महार्णव : । पुं॰ महासमुद्रे ।

महार्थ : । पुं॰ परमार्थे ।

महार्द्र : । पुं॰ हवविशेषे । महाना
इ॰ गौ॰ दे॰ भा॰ ।।

महार्द्रम् । न॰ चन्दने ।।

महार्द्रकम् । न॰ वनार्द्रके ।

महार्बुदम् । न॰ दशार्बुदे । शतकोटि
१००००००००० सङ्ख्यायाम् ।
यज्ञे ।।

महार्ह : । पुं॰ विष्णौ । मह : पूजा॰
तामर्हति । अर्हइतिसूत्रात्अर्हते:
कर्मण्युपपदेअच्प्रत्यय : ।। न॰
श्वेतचन्दने ।।

महालक्ष्मी : । नारायणशक्त्याम् । रा
धायाम् ।। यन्मायया मोहिताब्रह्म
ह्मविष्णुशिवादय : । वेश्यावात्तां
महालक्ष्मींपरांराधांवदन्तिते ।। यद्
र्वाशामहालक्ष्मी : प्रियानारायण
स्यचेति ब्र॰ वै॰ पुराणम् ।।

महालय : । पुं॰ विहारे ।। तीर्थमहा
भागादिव्यासेते ।। परमात्मनि ।
पितॄणामुत्सवाश्रयेकन्यागतापरपक्षे
कन्यागत॰ इ॰ भा॰ ।

महालसा । स्त्री॰ देवीविशेषे । दक्षि
णदेशे॰ महादिस्थानमितिविख्या-
ते॰ देवीस्थाने ।

महालिकटभी । स्त्री॰ श्वेतकिणही
वृक्षे ।।

महालोलसरस्वती । स्त्री॰ तारादेव्या :
प्रभेदे ।। लोलयावाक्प्रदाचेतितेन

लीलसरस्वती ॥

महालोध्रः । पुं० लोध्रे । पटियालो ध० दू० भा० ॥

महालोलः । पुं० काके ॥ चि० अतिचञ्चले ॥

महालोहम् । न० अयस्कान्ते ॥

महावनम् । न० महारण्ये ॥ वृन्दावनस्थचतुरशीतिवनान्तर्गतवनविशेषे ॥

महावपः । पुं० महासेदे ॥

महावरा । स्त्री० दूर्वायाम् ॥

महावराहः । पुं० आदिवराहे ॥ महांश्चासौवराहश्च । महत्त्वञ्चास्यातिविपुलशरीरधारणात्पृथिव्युद्धरणाय ॥

महावरोहः । पुं० प्लक्षवृक्षे ॥

महावलिः । पुं० नरवली ॥

महावल्ली । स्त्री० माधवीलतायाम् ॥

महावसः । पुं० शिशुमारे ॥

महावाक्यम् । न० परमार्थबोधकवेदिकोपदेशवाक्यविशेषे । सङ्कल्पापरपर्यायेप्रतिष्ठादावुत्सर्गवाक्ये ॥ योग्यताकांक्षासत्तियुक्तवाक्यसमूहे ॥

महावारुणी । स्त्री० तिथिविशेषे ॥ सायथा । शनिवारसमायुक्तासामहावारुणीस्मृता । गङ्गायांयदिलभ्येतकोटिसूर्यग्रहैः समा ॥ सा० वारुणीस्यर्थः ॥ महामहावारुणी तु । यथा । शुभयोगसमायुक्ताशनौशतभिषायदि । महामहेतिविख्याताभिकोटिकुलमुद्धरेत् ॥

महाबाहुः । पुं० स्कन्दे ॥ श्रीरामे ॥ महाश्चोबाहूयस्य । अस्यबाहोर्महत्त्वञ्चोक्तं युद्धकांडे । पिशाचानुदानवान्यज्ञाम्पृथिव्यांयेचराक्षसाः । अङ्गुल्यग्रेणतान्हन्यामिच्छन्हरिगणेश्वरेति ॥

महाविद्या । स्त्री० देवताविशेषे ॥ यथा । कालीतारामहाविद्याषोडशीभुवनेश्वरी । भैरवीछिन्नमस्ताचविद्याधूमावतीतथा । वगलासिद्धविद्याचमातङ्गीकमलात्मिका । एतादशमहाविद्याः सिद्धविद्याः प्रकीर्त्तिताः ॥ तासांदशावतारत्वं यथा । प्रकृतिर्विष्णुरूपाचपुंरूपश्चमहेश्वरः । एवंप्रकृतिभेदेनभेदास्तुप्रकीर्तिताः । कृष्णरूपाकालिकास्याद्रामरूपाचतारिणी । वगलाकूर्ममूर्तिःस्यान्मीनोधूमावतीभवेत् ॥ छिन्नमस्तानृसिंहःस्याद्वराहश्चैवभैरवी । सुन्दरीयामदग्न्यःस्याद्वामनोभुवनेश्वरी ॥ कमलाबौद्धरूपास्याद्दुर्गास्यात्कल्किरूपिणी । स्वयंभगवतीकालीकृष्णस्तुभगवान्स्वयम् ॥ स्वयस्वभगवान्कृष्णः कालीरूपोभवद्भजे ॥

महाविराट् । पुं० महाविष्णौ ॥

महाविलम् । न० नभसि हृच्छिद्रे ॥

महाविषः । पुं० द्विमुखसर्पे । काल

सर्पे ॥
महाविषम् । न॰ मेषसङ्क्रान्तौ ॥ मसूरं निम्बपत्राभ्यां योऽत्ति मेषग तेरवौ । अपिरोषान्वितस्तस्य तक्षकः किं करिष्यति ॥
महाविष्णुः । पुं॰ महाविराजि ॥
महावीचिः । पुं॰ नरकविशेषे । महावीचिय॰ चमहाकल्लोलैमतुमीयते ॥
महावीष्यम् । न॰ विटपे । मुष्कवङ्क्षणयोरन्तरे ॥
महावीरः । पुं॰ गरुडे ॥ शूरे ॥ सिंहे ॥ महानसे । यज्ञाग्नौ ॥ वज्रे ॥ श्वेततुरङ्गे । अन्तिमजिने ॥ कोकिले ॥ लक्ष्मणे । हनुमति ॥ एकवीरवृक्षे ॥ सङ्ग्रामविहगे । जराटके । कामदेवे । मारे ।
महावीरा । स्त्री॰ क्षीरकाकोल्याम् ॥
महावीर्यः । पुं॰ ब्रह्मणि महदुत्पत्तिकारणमविद्यालक्षणं वीर्यमस्य । बुद्धभेदे । वाराहीकन्दे । त्रि॰ महाप्रभावे । अतिशयबलयुक्ते ॥
महावीर्या । स्त्री॰ संज्ञायाम् । सूर्यपत्न्याम् ॥ वनकार्पास्याम् । महाशतावर्य्याम् ॥
महावृक्षः । पुं॰ स्नुहीद्रुमे ॥
महावृहती । स्त्री॰ वार्ताक्याम् ।
महावेगः । त्रि॰ अधिकवेगवति ॥
महाव्याधिः । पुं॰ कुष्ठादिमहारोगे ॥

महाव्रणम् । न॰ दुष्टव्रणे ॥
महाव्रतम् । न॰ द्वादशवार्षिकव्रते ॥ यथा । ते नवधकालादूर्ध्वं विंशत्य्ऽधिकशतक्षयावद्वदिष्टं तावत्परिमाणमहाव्रतानुरूपाधिनवोद्दातव्याः शरत्कालिकदुर्गापूजने ॥ यथा । महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम् । कर्त्तव्यं सुरराजेन्द्रदेवीभक्तिसमन्वितैः ॥ अरुणोदयकालिकमाघस्नाने ॥ अस्तिषयोगशास्त्रे ऽष्टविशेषः । सयथा । अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहाय माः ॥ ३० ॥ एते जातिदेशकालसमयाऽनवच्छिन्नाः सार्वभौमामहाव्रतम् । ३१ । येचाहिंसाद्याः पञ्चयमाउक्तास्तएवजात्याद्यनवच्छेदेन • दृढभूमयोमहाव्रतशब्दवाच्याः तत्राहिंसाजात्यवच्छिन्नायथा • मृगयोर्मृगातिरिक्तान्नहनिष्यामीति • सैवकालावच्छिन्नायथा • नचतुर्द्दश्यांनपुण्येऽह्नीतिसैवप्रयोजनविशेषरूपसमयावच्छिन्नायथा • क्षत्रियस्यदेवब्राह्मणप्रयोजनव्यतिरेकेणनहनिष्यामीति • युद्धं विनानहनिष्यामीतिच । एवं विवाहादिप्रयोजनव्यतिरेकेणानृतं नवदिष्यामीति । एवमापत्कालव्यतिरेकेण सुहृदयाद्व्यतिरिक्तः स्तेयं नकरिष्यामीति । एवमृतुकालव्यतिरिक्त

काशीपत्तीनगमिष्यामीति । एवं गुर्वादिप्रयोजनमन्तरे णनपरिग्रही ष्यामीति • यथायोग्यमवच्छेदोद्रष्ट व्य : । एतादृगवच्छेदोपरिहारे ण यदासर्वजातिसर्वदेश सर्व्वकाल सर्वप्रयोजनेषुभवा : सार्वभौमा अहिंसादयोभवन्तिमहताप्रयत्ने न परिपाल्यमानत्त्वात् • तदातेमहाव्र तशब्दे नोच्यंते । एवंकाष्ठमौना दिव्रतमपिद्रष्टव्यम् । एतादृशव्रत दार्ढ्यंच • कामक्रोधलोभमोहानांच तुर्णामपिनरकद्वारभूतानांनिवृत्ति:। तत्राहिंसमयाक्षमयाचक्रोधस्य • ब्रह्म- चर्येणवस्तुविचारेणचकामस्य • अ- स्तेयापरिग्रहरूपेणसन्तोषे णलोभ- स्यसत्येनयथार्थज्ञानरूपेणविवेकि- नमोहस्य • तन्मूलानाञ्चसर्वेषांनिवृ त्तिरितिद्रष्टव्यम् । इतराणिचफला निसकामानांयोगशास्त्रे कथितानि ॥

महाव्रती । पुं० शिवे ॥ उत्स्कटे ॥ त्रि • महाव्रतयुक्ते ॥

महाशक्ति : । पुं० कार्त्तिकेये ॥ हा- रौ ॥ महतीशक्ति : सामर्थ्यमस्य ॥ अतिशयपराक्रमे ॥ स्त्री • मायाशब- लब्रह्मरूपिण्याम् । निर्गुणायाम् ॥ त्रि० तद्युक्ते ॥

महाशङ्ख : । पुं • नरास्थनि । कर्ण नेत्रयोर्मध्यगतास्थ्नि ॥ कर्णनेत्रान्त- रालास्थिमहाशङ्ख : प्रकीर्त्ति-

त : ॥ दशनिखर्वे १०००००००००००० । निधिप्रभे दे ॥ अलिके । ललाटे ॥ बृहच्छङ्खे ॥ यात्रायोगान्तरे ॥ यथा । स्त्री स्वस्थेलाभगेशुक्रे त्रिषष्टे देवपूजिते । महाशङ्खाह्वयोयोग : प्रतिप- द्यापमानद : ॥

महाशठ : । पुं० राजधत्तूरे ॥ त्रि • अ तिधूर्त्ते ।

महाशणपुष्पिका । स्त्री • बृहच्छणपु- ष्प्याम् । वृत्तपर्ण्याम् । श्वेतपुष्पा याम् ॥

महाशता । स्त्री० महाशतावर्याम् ॥

महशतावरी । स्त्री • सहस्रवीर्याया- म् । सुरसायाम् । शतवीर्यायाम् ॥ महाशतावरीमेध्याहृद्यावृष्यारसाय नी । शीतवीर्यानिहन्त्यर्शोग्रहणी- नयनामयान् ॥

महाशन : । पुं० विष्णौ ॥ कल्पा- न्ते सर्वग्रसनात्महत्त्यशनंसंहार्य्य- मस्य ॥ महाभैरवे ॥ कामे ॥ मह- दशनंविषयजातंयस्य स : ॥ अघा- सुरे ॥ त्रि • अतिभक्षणशीले ।

महाशफर : । पुं • शफराख्यमत्स्ये ॥ महाशफरसंज्ञस्तुतिक्त : पित्तकफा पह : । शिशिरोमधुरोहृद्योवात- साधारण : स्मृत : ॥

महाशय : । त्रि० सदिच्छे ॥ महान्- आशयोयस्य ॥ पुं • समुद्रे ॥

महाशय्या । स्त्री० राजतल्पे ॥ बृहच्छय्यायाम् ॥

महाशर : । पुं० स्थूलशरे ॥

महाशल्क : । पुं० चिङ्गटमत्स्ये ॥

महाशाक : पुं० शाकभेदे ॥

महाशाखा । स्त्री० नागबलायाम् ॥

महाशाल : । पुं० महागृहस्थे । विस्तीर्णाभि : शालाभिर्युते । सम्पन्ने ॥ महतीविस्तीर्णाशाला०गृहंयस्यस : ॥

महाशालि : । पुं० स्थूलशालौ । सुगन्धिके ॥ महान्श्रेष्ठ : शालि : ॥

महाशिव : । पुं० महादेवे ॥

महाशीता । स्त्री० शतमूल्याम् ॥

महाशुक्ति : । पुं० मुक्तामातरि ॥

महाशुक्ला । स्त्री० सरस्वत्याम् ॥ त्रि० अतिशुक्लवर्णयुक्ते ॥

महाशुभ्र : । त्रि० अतिशुभ्रवर्णयुक्ते ॥ न०रजते ॥

महाशूद्र : पुं० आभीरे ॥

महाशूद्रा । स्त्री० महत्यांशूद्रायाम् ॥ महतीशूद्रेतिविग्रह : ॥

महाशूद्री । स्त्री० आभीर्याम् ॥ महाशूद्रस्यस्त्री०जातीयावा । पुं०योगादिति०जातेरितिवाङीप् ॥

महाशीखडी । स्त्री० श्वेतकिणिहीवृक्षे ॥

महाशीषिर : । पुं० दंतरोगविशेषे ॥ दन्ताश्चलन्तिवेष्टभ्यस्तालुचाप्यवदीर्यते । दन्तमांसानिपच्यंतेमुखस्यप- तुद्यते ॥ यस्मिन्ससर्वजोव्याधिर्महाशीषिरसंज्ञित : ॥

महाश्मशानम् । न० आनन्दवने । काश्याम् ॥ महांत्यपिचभूतानिप्रलयेसमुपस्थिते । शेरतेऽत्रशवाभूत्वाश्मशानन्तुततोभवेत् ॥ वाराणसीतिविख्यातारुद्रावासस्तुतिद्विज : । महाश्मशानमित्येवंप्रोक्तमानन्दकाननम् ॥

महाश्यामा । स्त्री० शिंशपावृक्षे ॥ श्यामलतायाम् ॥

महाश्रम : । पुं० तीर्थविशेषे ॥

महाश्रमण : । पुं० बुद्धभेदे । शाक्यमुनौ ॥

महाश्रावणिका । स्त्री० कदम्बपुष्प्याम् । महामुण्डाम् ॥

महाश्री : । स्त्री० बुद्धशक्त्यन्तरे । तारायाम् ॥

महाश्रोत्रिय : । पुं० महत्त्वसतिश्रुताऽध्ययनव्रतसम्पन्ने । महांश्चासौश्रोत्रियश्च ॥

महाश्वेता । स्त्री० शुक्लभूकूष्माण्डे । क्षद्रगन्धिकायाम् ॥ श्वेतभूमिकूष्माण्डे ॥ सरस्वत्याम् ॥ श्वेतापराजितायाम् ॥ सितायाम् ॥ मधुजायाम् । श्वेतकिणिहीवृक्षे ॥ दुर्गायाम् ॥ महतीचासौश्वेताच ॥

महाषष्ठी । स्त्री० दुर्गायाम् ॥

महाष्टमी । स्त्री० आश्विनशुक्लाष्टम्याम्

। शरत्कालोद्भवायातुसैवप्रोक्तामहाष्टमी। महारात्रिरितिख्यातातस्यामभ्यर्चयेत्सुधी:॥ अष्टम्यांरुधिरैर्मांसैर्महामांसै: सुगंधिभि:। पूजयेद्बहुजातीयैर्बलिभिर्भोजनै: शिवाम् । सिन्दूरै: पट्टवासोभिर्नानाविधविलेपनै:। पुष्पैरनेकजातीयै: फलैर्बहुविधैरपि॥ उपवासंमहाष्टम्यांपुत्रवान्नसमाचरेत्। यथातथैवपूतात्मात्रतीदेवींप्रपूजयेत्॥ पूजयित्वामहाष्टम्यांनवम्यांबलिभिस्तथा। विसर्ज्ययेद्दशम्यान्तुश्रवणे तांवरोत्सवै: तत्राद्रार्चापूजा यथा। कन्यासंस्थेरवाविषे शुक्लाष्टम्यांप्रपूजयेत्। सोपवासोनिशार्द्धेतुमहाविभवविस्तरै:। पूजांसमारभेद्व्यानक्षत्रेवारुणेपिवा। पशुघातश्चकर्त्तव्योगवलात्रवधस्तथैतिदेवीपुराणेवाक्यपदेनपुर्वाषाढोच्यत इतिरघुनन्दन:॥ महाष्टम्युपवासंपारयन्तु। अष्टम्यांसमुपोष्यैवनैवम्यामपरेऽहनि। मत्स्यमांसोपहारेणदद्यान्नैवेद्यमुत्तमम्॥ तेनैवविधिनान्नन्तुस्वयंभुञ्जीतनान्यथेति॥

महासन्न:। पुं॰ कुवेरे। त्रि॰अतिनिकटे।

महासमङ्गा। स्त्री॰ हयवलायाम्। खिरहिट्ट्याम्। वलायाम्। कंगहियां॰कंघी॰खरेटी॰हि॰भा॰॥

महासर्ज:। पुं॰ असनवृक्षे॥ पनसे।

महासह:। पुं॰ कुलकवृक्षे॥ त्रि॰ अतिक्षमे॥

महासहा। स्त्री॰ माषपर्ण्याम्। अम्लाने। कठसरैय्या॰हि॰भा॰॥ महतीचासौसहाच। सन्महदितिसमास:। आन्महतद्व्यात्वम्॥

महासान्तापनम्। न॰ व्रतविशेषे॥ अथयाज्ञवल्क्य:। कुशोदकञ्चगोक्षीरंदधिमूत्रंशकृद्घृतम्। जग्ध्वापरेऽह्न्युपवसेत्कृच्छ्रंसान्तपनंचरन्॥ द्वादसाध्यसान्तपनमुक्ताह। पृथकसान्तपनद्रव्यै: षडह: सोपवासक:। सप्ताहेनैवकृच्छ्रोयंमहासान्तपनंस्मृतम्॥ महासान्तपनं धेनु षट्कदानसमम्।

महासार:। पुं॰ दुष्खदिरे॥ त्रि॰ युक्तियुक्ते॥

महासाहसम्। न॰ अतिबलात्कारकृतकार्ये। अतिशयदण्डे॥

महासाहसिक:। त्रि॰ अतिसाहसयुक्ते॥ प्रसह्यापहारिणि। महांश्चासौसाहसिकश्च।

महासिंह:। पुं॰ शरभे। पर्वताश्रये। देव्या: सिंहे॥ यथा। तीक्ष्णदंष्ट्र: करालास्य: शटाशोभितकन्धर:।

चतुरङ्घ्रिर्वंशनखोमहासिंहः प्रकीर्त्तितइति ॥

महासुखः । पुं॰ बुद्धे ॥ न॰ क्रीडारत्ने ॥ प्रचुरसुखे ॥ त्रि॰ तद्वति ॥

महासुगन्धा । स्त्री॰ गन्धनाकुल्याम् ॥ त्रि॰ अतिसुगन्धयुक्ते ॥

महासूक्ष्मा । स्त्री॰ वालुकायाम् ॥ त्रि॰ अतिशयसूक्ष्मे ॥

महासेनः । पुं॰ कार्त्तिकेये ॥ महासैन्यपतौ ॥ बौद्धभेदे ॥ महतीसेनाऽस्य ॥

महास्कन्धः । पुं॰ शरभे ॥ त्रि॰ उन्नतस्कन्धयुक्ते ॥

महास्कन्धा । स्त्री॰ जम्बूवृक्षे ॥

महास्कन्धी । पुं॰ शरभे ॥

महास्थली । स्त्री॰ पृथिव्याम् ॥ श्रेष्ठस्थाने ॥

महास्नायुः । पुं॰ कण्डरायाम् ॥

महास्रग्वी । पुं॰ शिवे ॥

महास्वनः । पुं॰ वाद्यप्रभेदे । मल्लतूर्ये ॥ विष्णौ ॥ महान्ऊर्ज्जितः स्वनः नादोऽस्य । यद्वा । महान्स्वनः श्रुतिलक्षणोनादोऽस्य ॥ सम्भवदितिसमासे॰आत्वम् । उच्चशब्दे ॥ त्रि॰ तद्वति ॥

महाहनुः । पुं॰ शिवे ॥ हनूमति ॥ त्रि॰ उच्चहनुयुक्ते ॥

महाहविः । न॰ गोघृते ॥ ब्रह्मणि ॥ महच्चतद्धविश्च॰ब्रह्माग्निसर्वजगत्तदात्मतयाहूयतेइतिमहाहविः । यद्वामहाग्निहवींषिआज्यपुरोडाशपशुसोमादिरूपाण्यस्य॰ इन्द्रादिदेवतारूपस्ययजमानरूपस्यवेतिमहाहविः ॥

महाहासः । पुं॰ अट्टहासे ॥

महाहिगन्धा । स्त्री॰ गन्धनाकुल्याम् ॥

महाह्रस्वा । स्त्री॰ कपिकच्छ्वाम् । शूकशिम्ब्याम् ॥ त्रि॰ अतिखर्वे ॥

महि । अ॰ महिमनि ॥

महिः । स्त्री॰ भूमौ ॥ मह्यते । मह पूजायाम् । चुरादिरदन्तः । अच्॰ । सर्वधातुभ्यइन् ॥ ? स्मादिदन्तः ॥

महिका । स्त्री॰ हिमे ॥ मह्यते । मह॰ । क्वुन्शिल्पिसंज्ञयोः ॥

महितः । त्रि॰ पूजिते ॥ मह्यतेस्म ॥ मह॰ । मतिबुद्धिपूजार्थेभ्यश्चेतिक्तः ॥

महितम् । न॰ राज्ये ॥ त्रि॰ पूजनीये ॥ मह्यते । मह॰ । महेरिनण्चेति पक्षेइनन् ॥

महिमा । पुं॰ शिवैश्वर्ये । ऐश्वर्यातिशये । भूतिप्रभेदे ॥ महान्भवति॰ येनसमस्तब्रह्माण्डे पिन्समवैति ॥ विभूतिविस्तारे ॥ आत्मनः कर्मनिमित्तवृद्धिचयराहित्ये ॥ महतोभावः । पृथ्वादिभ्यइमनिच् ॥ उत्कर्षे ॥

महिमभृत् । त्रि॰ ऐश्वर्यवति ॥

महिरः । पुं॰ पीथे । मिहिरे । सूर्ये ॥

द्युतिविकागडशेष : ।।

महिला । स्त्री॰ फलिन्याम् । गुन्द्रायाम् । प्रियङ्गौ । स्त्रियाम् । योषिति ॥ रेणुकानामगन्धद्रव्ये ॥ मदमत्तायाम्योषायाम् ॥ महति॰ मह्यते वा । मह॰ । सलिकलोति॰ इलच् । टाप् ॥

महिलाह्वया । स्त्री॰ श्यामायाम् । प्रियङ्गौ ॥ महिलायाआह्वयोयस्या : ॥

महिष : । पुं॰ लुलाये । कासरे । यमवाहने । भैंसा॰ हू॰ भा॰ ॥ महिषस्यामिषंस्वादुस्निग्धोष्णंवातनाशनम् । निद्राशुक्रबलस्तन्यतनुदार्ढ्यकरंगुरु ॥ हृष्यस्वदृष्टिविण्मूत्रंवातपित्तास्रनाशनम् ॥ महति • मह्यतेवा । मह॰ । अविमह्योष्टिषच् । यद्वामंहतेमहिषहीटिषच् । आगमशासनस्यामित्यत्वान्ननुम् ॥ अर्हध्वजविशेषे ॥ असुराधिपविशेषे । महिषासुरे ॥ श्मश्रुधारिणिमर्त्ये क्षत्रजातिविशेषे ॥ पुरायंक्षत्रियआसीत्सगरेणास्वेदाद्यमधिकारोवेशान्यत्वंधर्मनाशश्चकृत: ॥

महिषकन्द : । पुं॰ महाकन्दविशेषे । शुभाली ॥

महिषघ्नी । स्त्री॰ दुर्गायाम् ॥

महिषध्वज : । पुं॰ यमे ॥ अर्हद्विशेषे ॥ महिषोध्वजं यस्यस : ॥

महिषमर्दिनी । स्त्री॰ दुर्गायाम् ॥

महिषवल्ली । स्त्री॰ लताविशेषे । सोम्यायाम् ॥

महिषवाहन : । पुं॰ यमे ॥

महिषाक्ष : । पुं॰ )

महिषाख्य : । पुं॰ ) गुग्गुलौ । भृङ्गाञ्जनसमप्रभे ॥

महिषादि । न॰ महिषाक्षादिपञ्चाङ्गगणे ॥ यथा । महिषाक्षलताराल निर्यास : सर्जकस्यच । कृष्णागुरु:कदम्बश्चमहिषाक्षादिपञ्चकम् ॥

महिषासुर : । पुं॰ महासुरविशेषे । रम्भासुरात्मजे ॥

महिषासुरसम्भव : । पुं॰ भूमिजगुग्गुलौ ॥

महिषासुरहन्त्री । स्त्री॰ दुर्गायाम् ॥

महिषी । स्त्री॰ कृताभिषेकायांराज्ञ : पत्न्याम् ॥ मह्यते । मह॰ । अविमह्योष्टिषच् । टित्त्वान्ङीप् ॥ औषधीभेदे ॥ सैरिभ्याम् । मन्दगमनायाम् । महाक्षीरायाम् । भैंस॰ हू॰ भा॰ ॥

महिषीगोष्ठम् । न॰ महिषीशालायाम् । भैंसवाड़ा॰ हू॰ भा॰ ॥ महिषीणांस्थानम् । गोष्ठच् ॥

महिषीदुग्धम् । न॰ महिषीक्षीरे । सैरिभ्या : सर्व्ये ॥ माहिषंमधुरंगव्यात्स्निग्धंशुक्रकरंगुरु । निद्राकरमभिष्यन्दिक्षुधाधिक्यकरंहिमम् ॥

महिषीप्रिया। स्त्री॰ तृणविशेषे। शूल्या
म्। शूलपत्न्याम्। जलाश्रय।याम्॥
महिष्मान्। पुं॰ देशविशेषे॥ महि
षा: सन्त्यस्मिन्। महिषा इति
वक्तव्यमिति॰ड्मतुप्।
मही। स्त्री॰ भूमौ। पृथिव्याम्॥
मह्यते। मह॰। चुरादावदन्त:।
अयन्तादच्:। कृदिकारादिति
ङीष्॥ यद्वा। महीयते। महीङ्
पूजायाम्॰ कण्ड्वादियगन्त:।
क्विप्चेतिक्विप्। अल्लोपयलोपौ
। कृदिकारादितिङीष्। तदभावे
विसर्गश्च्युत्याह:॥ मालवदेशवि
हारिण्यांनद्याम्॥ महीजलन्तुसु
स्वादुबल्यं पित्तहरं गुरु॥ गवि॥
हिलमोचिकायाम्॥ वर्णावृत्तच्छ
न्दयुक्याप्रभेदे॥ यथा। लघुगुरु:
। महीस्मृता॥ यथा। हरोऽस्तुमे।
मनोमुदे॥
महीचित्। पुं॰ नृपे। राजनि॥
महीं॰ चयते॰ इष्टे। चिनिवास
गत्यो:। मह्यांचयतिवा। चिच
यैश्वर्ययो:। क्विप्। तुक्॥
महीज:। पुं॰ भौमे। मङ्गलग्रहे॥
न॰ आर्द्रके॥ त्रि॰ भूमिजाते॥
महिदुर्गम्। न॰ मृदापाषाणैर्नेष्टकै
र्वाविस्ताराद्द्विगुणोच्छ्रायैर्यद्वादश
हस्ताद्युच्छ्रितैर्युद्धार्थमुपरिभ्रमणयो
ग्यैर्नसौवर्णगवाक्षादियुक्तै नप्राकारे

षवैदिहितैरावृतांवासस्थाने॥
महीधर:। पुं॰ विष्णौ॥ महीगिरि
रूपेणधत्ते। धरति। धृञ्॰।
मह्याधर:॥ अच्॥
महीध्र:। पुं॰ शिखरिणि। पर्वते॥
महीधरतिधारयतिवा। धृञ्॰।
मूलविभुजादित्वात्क:॥
महीपाल:। पुं॰ राजनि॥ महीपाल
यति। पाल॰। कर्मण्यण्॥
महीप्राचीरम्। न॰ समुद्रे॥
महीभृत्। पुं॰ पर्वते॥ नृपे॥
महीमय:। त्रि॰ मृत्तिकानिर्मिते॥
मह्याविकारे॥
महीयान्। त्रि॰ महत्तरे॥
महीरुह:। पुं॰ शाखिनि। पादपे। वृक्षे
॥ शाकवृक्षे॥ मह्यांरोहयति। रुहबीज
जन्मनिप्रादुर्भावे। इगुपधं लक्षण:॥
महीलता। स्त्री॰ किञ्चुलुके। कॅचु
वा॰ इतिख्याते॥ कुगस्वदीर्घत्वा
भ्यांमह्यालता॥
महीसुत:। पुं॰ मङ्गलग्रहे। लोहि
ताङ्गे॥ मह्या: सुत:॥
महेच्छ:। त्रि॰ महाशये। महाभि
लाषे॥ महतीइच्छाऽस्य॥
महेन्द्र:। पुं॰ कलिङ्गदेशस्थेकुलपर्व
तविशेषे॥ सिद्धपीठोयमद्रि:।
यथा। महान्तकोमहेन्द्रेचपार्वती
चमहान्तकेति॥ त्रिसामाऋषि
कुल्याद्यामहेन्द्रप्रभवा: स्मृता:।

इन्द्रे ॥ महांश्चासौ॰इन्द्रश्चमहान्वा यमभूयोदयमवधीदितिश्रुते:। ईश्वरे। विष्णौ ॥
महेन्द्रकदली। स्त्री॰ कदलीप्रभेदे ॥
महेन्द्रतनया। स्त्री॰ सरिद्भेदे ॥
महेन्द्रनगरी। स्त्री॰ अमरावत्याम् ॥
महेन्द्रपर्वत:। पुं॰ तीर्थविशेषे ॥
महेन्द्रमदभित्। पुं॰ श्रीकृष्णे ॥
महेन्द्रवारुणी। स्त्री॰ लताविशेषे। चित्रवल्ल्याम्। महाफलायाम्। वडीमाकाल्॰ इ॰ गौ॰ दे॰ भा॰ ॥
महेन्द्राणी। स्त्री॰ इन्द्रयोषिति। पुलोमजायाम् ॥ महेन्द्रस्यस्त्री। महतीचासाविन्द्राणीचेतिवा ॥
महेन्द्रियम्। त्रि॰ माहेन्द्रे ॥ महेन्द्रो देवताऽस्य। महेन्द्राद्घाणौचेतिघः॥
महेन्द्रीयम्। त्रि॰ माहेन्द्रे॰ हविरादौ ॥ महेन्द्रोदेवताऽस्य। महेन्द्राद्घाणौचेतिचकाराच्छ:॥
महेरणा। स्त्री॰ कुन्दुरुक्याम्। शल्लकीवृक्षे ॥ महदीरणमस्या:॥ महमुत्सवमीरयतिवा। ईर॰। ल्यु:॥
महेला। स्त्री॰ महिलायाम् ॥ वामायाम् ॥ महस्यउत्सवस्य॰ इला भूमि: ॥ यद्वा। महति॰ महातेवा। सलिकलीतीलच्। पृषोदरादि: ॥ माया: शैलाक्रीडावा। परमहेलारतोथ्यपारदारिकइतिदमयन्ती काव्यम् ॥

महेलिका। स्त्री॰ महेलायाम् ॥ स्वार्थेकन् ॥
महेश:। पुं॰ शिवे ॥ महेशान्नापरोदेव: ॥
महेशबंधु:। पुं॰ श्रीफलवृक्षे। बिल्वे। महेशस्यबन्धुरिव ॥
महेशिता। त्रि॰ परमेश्वरे। परदेवतायाम् ॥ महांश्चासावीशिताच। सन्महदितिसमास:॥
महेश्वर:। पुं॰ शिवे। महादेवे ॥ महेश्वरस्त्र्यम्बकएवनापरइतिरघु:॥ विश्वस्यानाञ्चसर्वेषांमहतामीश्वर: स्वयम्। महेश्वरस्ततेनेमंप्रवदन्तिमनीषिण:॥ महांश्चासावीश्वरश्च। सन्महदितिसमास:। त्रि॰ अधीश्वरे ॥
महेश्वरी। स्त्री॰ महेश्वरपत्न्याम्। भगवत्याम्परदेवतायाम् ॥ अपराजितायाम् ॥ पित्तलप्रभेदे। कपिलायाम्। ब्रह्माण्याम् ॥ राजरीत्याम्। महतीचासावीश्वरीच ॥
महेष्वास:। पुं॰ हरौ ॥ शिवे॥ महानवितथइष्वासइषुक्षेपोयस्य: ॥ त्रि॰ उत्तमधानुष्के ॥
महैरण्ड:। पुं॰ स्थूलैरण्डे ॥
महैला। स्त्री॰ स्थूलैलायाम् ॥
महोक्ष:। पुं॰ वृहदृषे। वृषभे ॥ महांश्चासावुक्षाच। अचतुरेति साधु: ॥

महोटिका । स्त्री० )
महोटी । स्त्री० ) इहत्याम्

महोत्पलम् । न० पद्मे । नलिने । अरविन्दे । महच्चतत्उत्पलञ्च ॥

महोत्सवः । पुं० अतिशयितसुखजनकव्यापारे ॥ यथा । दुर्गातन्त्रे । यमन्त्रेणकुर्याद्दुर्गामहोत्सवम् । महानवम्यांशरदिबलिदानंन्टपादयः ॥

महोत्साहः । पुं० राम्याद्गप्रासराजपुरुषे ॥ अतिशयोद्यमे ॥ त्रि० अतिशयोत्साहयुक्ते ; महोद्यमे ॥ दुःसाध्यकार्य्येपिसाधनपरे ॥ महान् उत्साहोऽस्य ॥ परदेवतायाम् ॥ अजहत्वादनायथंमुद्युक्तत्वात् ॥

महोदधिः । पुं० समुद्रे ॥

महोदधिशयः । पुं० नारायणे ॥ प्रलयेसर्वभूतानिसंहृत्यैकार्णवंजगत् । कृत्वाऽधिशेते । शीङ्स्वप्ने । अः ॥

महोदयः । पुं० कान्यकुब्जदेशे ॥ आधिपत्ये ॥ अपवर्गे । मोक्षे ॥ सदाक्रतयुगस्यास्तुसदायासुरायणम् । सदामहोदयस्यास्तुसाम्यांनिवसतांसताम् । महात्मनि ॥ स्वामिनि ॥ दुग्धकेमधुनि ॥ न० पुरविशेषे । कान्यकुब्जे । गाधिपुरे । कन्नौज० इतिमहोदयइतिचभाषा ॥ महानुदयोवैभवंयस्य० यथया ॥

महोदया । स्त्री० मेरोरुत्तरभागस्थोर्द्ध्वमेखलायामुदग्दिशिसोमस्यपुर्याम् । यथोक्तम्गेन्द्रसंहितायाम् । महोदयाचन्द्रमसः श्वेतायुक्तादिनिर्मिता । द्विजसङ्घस्तुताभातिपुरेहिमगिरिप्रभैरिति । नागबलायाम् ॥

महोदरः । पुं० ह्रहदुदरे ॥ त्रि० तद्वति ॥

महोदरी । स्त्री० रवेः सङ्क्रमणविशेषे कुजादिवारभेदेयदासङ्क्रमः । ध्वाङ्क्षमहोदरीसीताक्रूराद्यांसुखाय । महाशतावर्याम् ॥

महोद्यमः । त्रि० महोत्साहे । दुःसाध्यकार्य्येपिसाधनपरे ॥ महानुद्यमोऽस्य ॥

महोन्नतः । पुं० तालगमे ॥ त्रि० महोन्नतिविशिष्टे ॥

महोन्नतिः । स्त्री० अतिशयवृद्धौ ॥ यथा । भूयात्तेसहदैश्वर्यंपुत्रादीनांमहोन्नतिः । अव्याधिनाशरीरेणचिरञ्जीवसुखीभव ॥

महोन्मादः । पुं० फलकयाम् । फलु० मा०च०गौ०दे०आ०प्र०मीने ॥

महोऽसर्ग । पुं० मार्यादिषु ॥

महोरगः । पुं० वासुकिसर्पे ॥ ह्रहत्सर्पे ॥ महांश्चासावुरगश्च ॥ न० तगरमूले ॥

महोल्का । स्त्री० क्रूरयहे ॥ उल्काविशेषे ॥ उल्कालक्षणन्तु । तत्पुच्छिखावसूक्ष्मायारक्तानीलाथिखोज्ज्वलापी

कषीचप्रमाणेनउल्कानामाविधाम्मृता ॥

महौजा : । त्रि० वीर्यवति ॥ महानुभावे ॥ महत्ओजोयस्येतिविग्रहः ॥

महौषधम् । न० शुण्ठ्याम् ॥ विषायाम् । अतिविषायाम् । अतीस० हि० भा० ॥ लशुने ॥ भूम्याहुल्ये ॥ वाराहीकन्दे ॥ वत्सनाभे ॥ पिप्पल्याम् ॥ सुरायाम् ॥ महौषधंयज्जीवानांदुःखविस्मारकंमहत् । आनन्दजनकंयच्चतदायातत्त्वलक्षणम् ॥ महच्चतत्औषधञ्च ॥

महौषधिः । स्त्री० दूर्वायाम् ॥ लज्जालुकुपे ॥

महौषधिगणः । पुं० पृश्निपर्ण्यादिषु ॥ यथा । पृश्निपर्णीश्यामलताभृङ्गराजशतावरी । गुडूचीसहदेवाचमहौषधिगणः स्मृतः ॥

महौषधी । स्त्री० हिलमोचिकायाम् ॥ श्वेतकण्टकार्याम् ॥ कटुकायाम् ॥ अतिविषायाम् ॥

महौषध्यष्टकम् । न० महास्नानीयद्रव्यविशेषे ॥ यथा । सहदेवीतथाव्याघ्रीबलाचातिबलातथा । शङ्खपुष्पीतथासिंहीचाष्टमीचसुवर्चला ॥ महौषध्यष्टकंप्रोक्तंमहास्नानेनियोजयेत् ॥

मा । अ० वारणे ॥ विकल्पे ॥

मा । स्त्री० लक्ष्म्याम् । पद्मालयायाम् ॥ विद्यायाम् ॥ माने ॥ मातरि ॥ मानम् । माधातोः सम्पदादित्वात्क्विप् ॥

मांसम् । न० पिशिते । तरसे । पललि । आमिषे । अस्रजे । रक्तजधातौ । मांस० हि० भा० ॥ मांसंवातहरंसर्वंबृंहणंबलपुष्टिकृत् । प्रीणनंगुरुहृद्यञ्चमधुरंरसपाकयोः ॥ मांसवर्गोद्विधाज्ञेयोजाङ्गलाऽनूपभेदतः ॥ तत्रसद्योहतादिमांसेषुविशेषउक्तः सचोच्यते । यथा । सद्योहतस्यमांसंस्याद्व्याधिघातियथामृतम् । वयस्थंबृंहणंसात्म्यमन्यथातद्विवर्जयेत् ॥ स्वयंमृतञ्चाबल्यमतीसारकरंगुरु ॥ वृद्धानांदोषलंमांसंबालानांबलदंलघु । त्रिदोषकृद्व्यालजुष्टंशुष्कंशूलकरंगुरु ॥ विषाम्बुरुङ्मृतस्यैतन् मृत्युदोषरुजाकरम् ॥ क्लिन्नमुत्क्लेदजनकंकृशंवातप्रकोपनम् ॥ तोयपूर्णंशिराजालंमृतमप्युत्रिदोषकृत् ॥ विहङ्गेषुपुमान्श्रेष्ठः स्त्रीचतुष्पदजातिषु । पराद्धंलघुपुंसांस्यात्स्त्रीणांपूर्वार्द्धमादिशेत् ॥ देहमध्यंगुरुप्रायः सर्वेषांप्राणिनांस्मृतम् । पक्षोत्क्षेपादिहङ्गानांतद्वलघुकथ्यते ॥ गुरूण्यण्डानिसर्वेषांगुर्वीग्रीवाचपक्षिणाम् । उरस्कन्धोदरंमूर्धापाणीपादौकटिस्तथा । पृष्ठत्वग्यकृद

स्थानिगुरूणीहयथोत्तरम् ॥ लघुशा
तहरं मांसं खगानांधान्यचारिणा
म् । मत्स्याशिनांपित्तकरं वातघ्नं
गुरुकीर्त्तितम् ॥ फलाशिनाञ्च प्र
हरं लघुरूक्षमुदीरितम । बृंहणं
गुरुवातघ्नं तेषामेवफलाशिनाम् ॥
तुल्यजातिष्वल्पदेहामहादेहेषुपूजि
ताः । अल्पदेहेषुशस्यन्ते तथैवस्थू
लदेहिनः ॥ चेष्टावतांपरं मांसं
हृद्यं रुच्यं लघुस्मृतम् ॥ येमृतावि
षगायेचदूरावासप्रचारकाः । ते
चाभिष्यन्दिनः सर्वे विपरीतम
तोऽन्यथा ॥ जलानूपचराः सर्वे त
थास्थलचराश्चये । गुरुभुक्त्यागुरुत
रं तेषांमांसमुदीरितम् ॥ धान्योत्प
त्तिप्रचाराणां लघुस्याल्लघुपक्षिणा
म् ॥ ग्राम्यं मांसं वनजमथवानूपजं
चाविलोक्य शुक्लं पीतं हरितमरुणं
पाचितं सूपकारैः । तस्य तुल्यं
सरसमधुरं स्विद्यतं वर्द्धितं वायस-
प्रायोयद्भिरुचितं स्तूयतेतेनतद्वि।
अपिच । मांसन्तुत्रिविधं ज्ञेयं मृदु
लंकठिनंघनम् ॥ पारावताजचट
कशशशूकरटिट्टिभाः । क्षुद्रमत्
स्यादिकाः सर्वे मांसेषुमृदुलाः
स्मृताः । मृगरोहितकाद्याश्चमत्
स्याः शल्लकिशम्बराः । एतेकठि
नमांसाः स्युः पक्षिणोजलचारि
णः ॥ गजकुम्भीरखड्गाद्याः सग

मांसम्

व्यावर्करादयः । गोधागोश्वाल्लला
याद्याःघनमांसाःप्रकीर्त्तिताः॥एकत्र
सर्वंमांसानिविरुद्ध्यन्तेपरस्परम्॥
वैद्यशास्त्रोक्तविधिनामांसस्योक्तागु-
णाइमे । मनूक्तविधिनावक्ष्ये विधिं
भक्षणवर्जने ॥ प्रोक्षितंभक्षयेन्मांसं
ब्राह्मणानाञ्चकाम्यया । यथाविधि
नियुक्तस्तुप्राणानामेवचात्यये ॥ प्रा
णस्यान्नमिदंसर्वंप्रजापतिरकल्पयत्।
स्थावरं जङ्गमञ्चैवसर्वंप्राणस्यभोजन
म् ॥ चराणामन्नमचरादंष्ट्रिणाम-
प्यदंष्ट्रिणः । अहस्ताश्चसहस्तानां-
शूराणांचैवभीरवः ॥ नात्तादुष्य-
त्यदन्नाद्यान्प्राणिनोऽहन्यहन्यपि
। धात्रैवसृष्टाह्याद्याश्चप्राणिनोऽत्ता
रएवच ॥ यज्ञायजग्धिर्मांसस्येत्येष
दैवोविधिः स्मृतः । अतोन्यथा
प्रवृत्तिस्तुराक्षसोविधिरुच्यते ॥ क्री
त्वास्वयंवाप्युत्पाद्यपरोपकृतमेववा।
देवान्पितॄंश्चार्चयित्वाखादन्मांसंन
दुष्यति ॥ नाद्यादविधिनामांसंवि
धिज्ञोऽनापदिद्विजः । जग्ध्वाह्यवि
धिनामांसंप्रेत्यतैरद्यतेऽवशः ॥
नतादृशंभवत्येनोमृगहन्तुर्धनार्थिनः
। यादृशंभवतिप्रेत्यवृथामांसानि-
खादतः । नियुक्तस्तुयथान्यायंयो
मांसंनात्तिमानवः । सप्रेत्यपशुतां
यातिसम्भवानेकविंशतिम् ॥ अस
ंस्कृतान्पशून्मन्त्रैर्नाद्याद्विप्रः क

दापन । मन्त्रैस्तु संस्कृतानद्याच्छा- श्वतंविधिमास्थितः । कुर्याद्घृतप शुंसङ्गे कुर्यात्पिष्टपशुंतथा । नत्वे वतुवृथाहन्तुं पशुमिच्छेत्कदाचन- । यावन्तिपशुरोमाणितावत्कृत्वोह मारणम् । वृथापशुघ्नः प्राप्नोतिं प्रेत्यजन्मनिजन्मनि ॥ यज्ञार्थंप शवः सृष्टाः स्वयमेवस्वयम्भुवा । यज्ञोऽस्यभूत्यैसर्वस्यतस्माद्यज्ञे वधो ऽवधः ॥ ओषध्यः पशवोवृक्षास्ति र्यञ्चः पक्षिणस्तथा । यज्ञार्थंनिधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः ॥ मधुपर्केचयज्ञे च पितृदैवतकर्मणि । अत्रैवपशवोहिंस्यानान्यत्रेत्यब्रवी न्मनुः ॥ एष्वर्थेषुपशून्हिंसन्वेद तत्त्वार्थविद्द्विजः । आत्मानञ्चपशूंश्चै वगमयत्युत्तमांगतिम् ॥ गृहेगुरा- वरण्येवानिवसन्नात्मवान्द्विजः । नावेदविहितांहिंसामापद्यपिसमा- चरेत् । यावेदविहिताहिंसानि यतास्मिंश्चराचरे । अहिंसामेवतां विद्याद्वेदाद्धर्मोहिनिर्बभौ ॥ योऽहिं सकानिभूतानिहिनस्त्यात्मसुखेच्छ या । सजीवंश्चमृतश्चैवनक्वचित्सु खमेधते । योबन्धनवधक्लेशान्प्रा णिनांनचिकीर्षति । ससर्वस्यहित प्रेप्सुः सुखमत्यन्तमश्नुते यद्ध्या यतियत्कुरुतेधृतिंबध्नातियत्र च । तदवाप्नोत्ययत्नेनयोहिनस्तिनकि-

ञ्चन ॥ नाकृत्वाप्राणिनांहिंसांमांस मुत्पद्यतेक्वचित् । नचप्राणिवधः स्वर्ग्यस्तस्मान्मांसंविवर्जयेत् ॥ स समुत्पत्तिञ्चमांसस्य वधबन्धौचदेहि नाम् । प्रसमीक्ष्यनिवर्त्तेतसर्वमां सस्यभक्षणात् ॥ नभक्षयतियोमां- संविधिंहित्वापिशाचवत् । सलोके प्रियतांयातिव्याधिभिश्चनपीड्यते । अनुमन्ताविशसितानिहन्ताक्रयवि क्रयी । संस्कर्त्ताचोपहर्त्ताचखाद- कश्चेतिघातकाः ॥ स्वमांसंपरमां सेनयोवर्द्धयितुमिच्छति । अनभ्यर्च्य पितॄन्देवांस्ततोऽन्योनास्त्यपुण्यकृ त् ॥ वर्षेवर्षेऽश्वमेधेनयोयजेतशतंस माः । मांसानिचनखादेद्यस्तयोः पुण्यफलंसमम् । फलमूलाशनैर्मे ध्यैर्मुन्यन्नानाञ्चभोजनैः । नतत्- फलमवाप्नोतियन्मांसपरिवर्जना- त् ॥ ५४ ॥ मांसभक्षयितामुत्रयस्य मांसमिहाद्म्यहम् । एतन्मांसस्य- मांसत्वंप्रवदन्तिमनीषिणः ॥ न- मांसभक्षणेदोषोनमद्येनचमैथुने । प्रवृत्तिरेषाभूतानांनिवृत्तिस्तुमहा- फला ॥ अपिच । श्रीमहानिर्वाणत न्त्रे । मांसन्तुत्रिविधंप्रोक्तंजलभूच रखेचरम् । यस्मात्तस्मात्समानी तंयेनकेनविघातितम् ॥ तत्सर्वं दे- वताप्रीत्यैभवेदेवनसंशयः । साध केच्छाबलवतीदेयेवस्तुनिदैवते ॥ य

दृशा सम्मानित्द्रव्ये स्तमदिष्टायकल्प्य येत ॥ बलिदानार्थमोदावबद्धित : पुरुष पशु: । स्त्रीपशुर्नचकृत्त व्यक्तत्वशौभवशासनात् ॥ मन्यते- टेवादिप्रीत्यर्थम् । स्त्रमे । म मेर्द्दीर्घ्येत्तिस : ॥

मांस : । पुं॰ काले । कीटे ॥

मांसकारि । न॰ रक्ते । रुधिरे ॥

मांसच्छदा । स्त्री॰ मांसरोहिणीविशेषे । मांस्याम् । सुलोमायाम् ॥

मांसजम् । न॰ मेदसि ॥

मांसतेज : । न॰ मेदसि ॥

मांसदलन : । पुं॰ प्रीष्मवृक्षे ॥

मांसद्रावी । पुं॰ अम्लवेतसे

मांसपचनम् । न॰ मांसपाके ॥

मांसपेशी । स्त्री॰ गर्भस्थावयवविशेषे॥ यथा । वृहद्: सप्तरात्रं गमांसपेशी भवन्मत : । निष्काशात्भवेत्पेशी रक्तमांसचितादृढा ॥ बीजस्येवाङ्कुरा : पेश्य : पञ्चविंशतिरान्वित : ॥

मांसप्रन्थि : । पुं॰ ग्रन्थिविशेषे ॥ पश्यप्रन्थिम् ॥

मांसफला । स्त्री॰ वार्त्ताक्याम् ॥

मांसभक्ष : । त्रि॰ मांसभक्षणकर्त्तरि ॥

मांसमाषा । स्त्री॰ माषपर्ण्याम् ॥

मांसरस : पुं॰ भोल॰ रसा॰ इति ख्यातेमांसस्वजले ॥ सिद्धमांसरसो रुच्य : श्रमश्वासभयापह : । प्रोणनोवातपित्तघ्न : क्षीणानामल्परेतसाम् ॥ विश्लिष्टभग्नसन्धीनांशुद्धानांशुद्धकाङ्क्षिणाम् । स्मृत्योजोबलहीनानांज्वरक्षीणक्षतोरसाम् ॥ शस्यतेस्वरहीनानांदृष्ट्यायु: श्रवणार्थिनाम् ॥

मांसरोहिणी । स्त्री॰ सुगन्धिद्रव्यविशेषे । अग्निरुहायाम् । चर्मकषायाम् । विकषायाम् । स्यान्मांसरोहिणीवृष्यासरादोषत्रयापहा ॥

मांसलम् । न॰ काव्यस्यगौडीरीत्यन्तर्गतस्यौजोगुणस्याङ्गविशेषे ॥ यथा । ओज : समासभूयस्त्वंमांसलंपदडम्बरम् । त्रि॰ अंसले । बलवति ॥ स्थूले ॥ यथा । निस्वाम्बुवक्त्ररेखा : स्निग्धव्याघ्रिवृषी : क्षपे : । मांसलैश्चघनोपेताश्चक्रे रुधनेन्तृपा : ॥ मांसमस्त्यस्य । सिध्मादित्वाल्लच् ॥ पुं॰ माषे ॥

मांसलफला । स्त्री॰ हन्ताक्याम् ॥

मांसविक्रयी । त्रि॰ वैतंसिके । शौटिके ॥ सकृदपिमांसविक्रयकारिणि ॥ सद्य : पततिमांसेनलाक्षया लवणेनच ॥

मांसव्यध : । त्रि॰ मांसखण्डने ॥ मांसस्यव्यधनम् ॥ व्यधजपोरनुपसर्गे॰ इत्यप् ॥

मांसशृङ्गाटकम् । न॰ मांसप्रकारवि

शिषे । मांसकाचिखूंट० इतिभाषा ॥ शुद्धमांसंतनूकृत्यकत्तितंखेदितं घनं । लवङ्गहिङ्गुलवणमरिचार्द्र- कसंयुतम् ॥ एलाजीरकधान्याकनि म्बूरससमन्वितम् । घृतेसुगन्धितञ्च इष्टपूरणंप्रोच्यतेबुधैः ॥ शृङ्गाटकं समितयाकृतंपूरणपूरितम् ।पुनः सर्पिषसम्भृष्टं मांसशृङ्गाटकंवदेत् ॥ मांसशृङ्गाटकंरुच्यंवृष्यंबलकृद् गुरु ॥ वातपित्तहरंहृद्यंकफघ्नंवीर्य वर्द्धनम्

मांससार: । पुं० मेदसि ॥ मांसस्य सार: ॥

मांसस्नेह: । पुं० मेदसि ॥

मांसहासा । स्त्री० चर्मणि ॥

मांसिक: । त्रि० मांसविक्रयजीविनि । वैतसिके ॥ मांसंपण्यमस्य । त- दस्यपण्यमितिठक् ॥ यद्वा । मांसं नियुक्तंदीयतेऽस्मै । श्राणामांसौ दनादितिटिठन् । टित्वान्ङीप् ॥ इकारउच्चारणार्थ: ॥

मांसिका । स्त्री० मांस्याम् ॥ मन्यते । मनज्ञाने । मनेर्दीर्घश्चेतिस: । गौरादि: । स्वार्थेकन् ॥

मांसिनी । स्त्री० जटामांस्याम् ॥

मांसी । स्त्री० कक्कोल्याम् ॥ मांसच्छ दायाम् ॥ तपस्विन्याम् । जटामां स्याम् ॥ मांसीतिक्ताकषायाचमे- ध्याकांतिबलप्रदा । स्वाद्वीहिमाग्नि दोषास्रदाहवीसर्पकुष्ठनुत् ॥ मन्य ते । मन० । मनेर्दीर्घश्चेतिस: । गौरादि: ॥

मांसेष्टा । स्त्री० पक्षिप्रभेदे । वल्गुला याम् । दिवांधायाम् वादुड इ०भा०॥

मांसौदनम् । न० मांससंयुक्तओद ने । पलौदने ॥

मांसौदनिक: । त्रि० मांसौदनार्हे ॥ मांसौदनंनियुक्तंदीयतेऽस्मै । श्रा- णामांसौदनाट्टिठन् । टोङीबर्थ: । इकारउच्चारणार्थ: ॥

मांस्यादि: । पुं० जटामांस्यादिगणा- नांगणे ॥ जटामांसीनखंपत्रीलव- ङ्गंतगरंरस: । शिलयागन्धपाषा- ण: सप्तमांस्यादिकाइमी ॥

माकन्द: । पुं० सहकारे ॥

माकन्दी । स्त्री० आमलकीफले ॥ न- गरविशेषे ॥ बहुमूल्याम् । माद- न्याम् । गन्धमूलिकायाम् । माद्रा णी०मांगनी०इ०भा० ॥ पीतचन्द ने ॥

माकरी । स्त्री० माघशुक्लसप्तम्याम् ॥ यदाजन्मकृतंपापंमयासप्तसुजन्म- सु । तन्मेरोगञ्चशोकञ्चमाकरीहन्तु सप्तमीतिपठित्वास्नायात् ॥ रथस प्तमीतिनामान्तरम् ॥ रोकंच्छि- द्रम् ॥

माकिम् । अ०)

माकिर् । अ०)वर्जने ॥

उक्तं हिभरतसूत्रे । भिषक्घघपय
कराद्यभाम : पुरावासिषेटकादी
नांमागधीति । मगध •देशेभवा ।
तत्रभवइत्यण् ॥

मागमा । स्त्री० कर्कर्यां ॥

माघ : । पुं० मासविशेषे । तपसि ॥
अत्रजातस्यफलम् । यथा । विद्या
विनीतस्वकुलप्रधानसदासदाचारयु
त:प्रवीण:।योगानुरक्तोविषयेषुसक्तो
माघेथमासेमघवानिवेश : इति॥
माघीपौर्णमास्यस्मिन्‌पौषमासो
ऽण् । श्रीदत्तकसूनौशिशुपाल
वधमहाकाव्यकर्त्तरि ॥ तस्यनाम्ने
वस्यास्ति महाकाव्ये ॥ यथा। पुष्पे
षुजातीनगरेषुकाशी नारीषुरम्भा
पुरुषेषुविष्णु : । नदीषुगङ्गानृप
तौचराम : काव्येषुमाघ : कवि
कालिदास : ॥ इत्याधुनिक : क-
श्चित्

माघवती । स्त्री० पूर्वदिशि ॥

माघवनम् त्रि० इन्द्रसम्बन्धिनि ॥
मघवतइदम् । अण् ॥

माघी । स्त्री० तपोमासस्यपूर्णिमाया
म् ॥ मघयायुक्तापौर्णमासी ।
नचत्रेणयुक्त: कालः इत्यण् । ततोङीप् ॥

माघोनी । स्त्री० पूर्व्वदिशि ॥

माघ्यम् । न० कुन्दपुष्पे ॥ माघेसा
धु । तत्रसाधुरितियत् ॥ माघेभव
म् । दिगादित्वाद्यत् ॥

माङ् । अ० निषेधे ॥ आशङ्कायाम्॥

माङ्गलिक : । पुं० प्रणवे । अथशब्दे ॥
प्रणवस्याथशब्दस्यचद्वावेतौब्रह्मण : पु
रा । कण्ठं भित्त्वाविनिर्यातौतस्मा
न्माङ्गलिकावुभौ ॥ मङ्गलायक्रिय
माणे तूर्यादिवाद्ये ॥ अपार्हताभी
ष्टार्थसिद्धिर्मङ्गलम् । मङ्गलंप्रयोज
नमस्य । प्रयोजनमितिठक् ॥ यथा
माङ्गलिकमाचार्य्य इति ॥

माङ्गल्यम् । न० मङ्गलक्रियायाम् ॥
मङ्गलायहिते ॥ यथा । माङ्ग
ल्ये पुविवाहेषुकन्यासंवरणेषुच ।
दशमासा : प्रशस्यन्ते चैत्रपौषविव
र्जिता : ॥ इतिराजमार्त्तण्ड : ॥
मङ्गलस्यभाव : । भावेष्यञ् ॥

माङ्गल्यार्हा । स्त्री० त्रायमाणायांल
तायां ॥

माच : । पुं० पथि ॥

माचल : । पुं० बन्दिचौरे ॥ रुजि ॥
ग्राहे ॥

माचिका । स्त्री० मक्षिकायाम् ॥ अ
म्बष्ठायाम् ॥ मोइया० इ० पश्चि
मदेशप्रसिद्धायामौषधौ ॥ माचिका
म्लारसेपाकेकषायाशीतलालघु :
। पक्वातीसारपित्तास्रकफकण्ठाम
यापहा ॥

माचिरम् । अ० शीघ्रे ॥

माचीपत्रम् । न० सुरपर्णे ॥

माजल : । पुं० चाषपक्षिणि ॥

माञ्जिष्ठम् । न० लोहितवर्णे ॥ त्रि० सद्वति ॥ मञ्जिष्ठयारक्तम् । तेनर क्तं रागादित्यण् ॥

माटामख : । पुं० वृक्षविशेषे ॥

माठार : । पुं० चण्डांशो : पारि पार्श्विके । सूर्यानुगे ॥ व्यासे ॥ विप्रे । मठन्त्यनेन । मठमदनिवा सयो : । पुंसीतिघ : । मठं राति । रा० । क: । मठस्यापत्यम् । वि दादित्वादण् ॥ गर्गादित्वात् माठर्य : ॥

माड : । पुं० वृक्षविशेषे । ध्वजवृक्षे । वितानके । मण्डपे । माडवेनौ ० ड० कौकणे प्रसिद्धे ॥

माडव : । पुं० वंश सङ्करजातिविशेषे यथा । लिटलो वरकान्यायांजनया मासप्रगान्तरान् । माळं मळं माडवश्च भडं कोलं कलन्दरं ॥

माड्डुक : । पुं० माड्डुकिके ॥ मड्डुकवा दनं शिल्पमस्य । मड्डुकझर्झराद- न्यतरस्यामित्यण् ॥

माड्डुकिक : । पुं० माड्डुके ॥ मड्डुक- वादनं शिल्पमस्य । मड्डुकझर्झरा- दितिपक्षे ठक् ॥

माढि : । स्त्री० पत्रभङ्गे ॥ पत्रशिरा- याम् ॥ दैन्यप्रकाशने ॥ देशविशे- षे ॥ अर्चायाम् ॥ मह्नमनस्यापा । मह० । क्तिन् । ढत्वष्टुत्वढलोप- दीर्घा : ॥

माढी । स्त्री० दलशिरायाम् ॥

माणक : । पुं० वृक्षविशेषे । स्थूलप- र्णे । वृक्षकन्दे ॥ न० कन्दविशेषे । मानकचू० ड० गौ० दे० भा० ॥

माणव : । पुं० बालके ॥ अपत्ये कुत्सि ते मूढे मनोरौत्सर्गिक : स्मृत : । नकारस्य च मूर्द्धन्यस्तेन सिद्धाति माण व : ॥ मनोरयम् । तस्येदमित्यण् । वाह्मणमाणवेति निपातनाण्णत्वम् ॥ षोडशवर्षिष्टिकाहारे ॥

माणवक : । पुं० विंशतियष्टिकाभि- र्निर्मितेहारविशेषे । बालके । षो- डशवर्षपर्यन्तप्रथमवयस्के ॥ कुपु- रुषे ॥ माणवीनाम : ० सत्रय । इवेप्रतिकृताविति कन् ॥ [illegible] । [illegible] ॥ अल्पइति क : ॥ न० अनुष्टुप्छन्दोभेदे ॥ [illegible] माणवकम् ॥ यथा । [illegible] लेवैस्त्वकृते : [illegible] वसा रसुर्वं [illegible] माणवक [illegible] ॥

माणवक [illegible] म् । न० [illegible] विशेषे । माणवके ॥ [illegible]- र्यधरं साम्यमिदं वृत्तवरम् । [illegible] रासे नक्षत माणवकक्रीडितम् ॥ यथा । कोकवधू [illegible] कर पद्मवनी- बोधकरम् । गाढतमोनाशकरं नौ- मितरामुषाकरम् ॥

माणवीनम् । त्रि० माणवमस्वन्धिनि ॥ माणवार्यकृते ॥ माणवचरकाभ्यां-

ञ् ॥

माणव्यम् । न॰ माणवकन्दे ॥ माण-
वानांसमूहः । ब्राह्मणमाणववाडवाद्यन् ॥ माणवत्वे ॥ माणवस्यकर्मभावोवा । ब्राह्मणादित्वात्ष्यञ् ॥

माणिका । स्त्री॰ अष्टपलपरिमाणे ॥

माणिक्याम् । न॰ रत्नविशेषे । शोणरत्ने । रत्नराजि । रविरत्नके । पद्मरागे । कुरविन्दे । माणिक॰माणक॰इतिभाषा ॥ तस्यलक्षणंयथा स्निग्धंगुरुगात्रयुतंदीप्तंस्वच्छंसुरङ्गंसमाङ्गम् । इतिजात्यंमाणिक्यंकल्याणंधारणात्कुरुते ॥ तस्यदोषायथा । द्विच्छायमभ्रपिहितंकर्कशमाकंरिलंभिन्नधूम्रम् । विरूपंरागविमलंलघुमाणिक्यंनधारयेद्धीमान् ॥ तस्यचतुर्विधाजातिर्यथा । तद्रक्तं यदि पद्मरागमथतत्पीतातिरक्तंद्विधाजानीयात्कुरुविन्दकंयदरुणंस्यादेषसौगन्धिकम् । तन्नीलं यदिनीलगन्धिकमितिज्ञेयंचतुर्धाज्वलैर्माणिक्यंकषघर्षणेप्यविकलंरागेणजात्यंजगुः ॥ विशेषोन्यत्रयुक्तिकल्पतरौद्रष्टव्यः ॥ मणिक-मेव । चतुर्वर्णादीनांस्वार्थेउपसङ्ख्यानमितिष्यञ् ॥

माणिक्या । स्त्री॰ ज्येष्ठाम् । मुषल्याम् । गृहगोधायाम् । पल्ल्या

म् ॥

माणिमन्थ्यम् । न॰ सैन्धवलवणे ॥ मणिमन्थाख्येपर्वतेभवम् । तत्रभव इ॰ यत् ॥

माण्डलिकः । पुं॰ ग्रामसमराष्ट्रि ॥ मण्डलस्येव । अङ्गुल्यादिभ्यष्ठक् ॥

माण्डूक्यम् । न॰ उपनिषद्विशेषे ॥

मातङ्गः । पुं॰ श्वपचे । गजे । हस्तिनि । अर्हदुपासकविशेषे ॥ मतङ्गस्यायम् । तस्येदमित्यण् ॥ मतङ्गस्यापत्यम् । शिवाद्यण्वा ॥

मातङ्गमकः । पुं॰ मातङ्गाकारेग्राहे ॥

मातङ्गमकरः । पुं॰ महामत्स्यप्रभेदे । मातङ्गाकारेमत्स्ये ॥

मातङ्गी । स्त्री॰ महाविद्याविशेषे ॥ मतङ्गस्यमुनेः कन्यामातङ्गीसाप्रकीर्तिता ॥

मातरपितरौ । पुं॰ द्विवचनान्तोयम् । सहोक्त्यामातापित्रोः ॥ माताच पिताच । मातरपितरावुदीचामितिपूर्वपदे॰ ऋकारस्यारङादेशोनिपातनात् ॥

मातरि । अ॰ अन्तरीक्षे ॥ सप्तम्यन्तप्रतिरूपकमव्ययम् ॥

मातरिश्वा । पुं॰ वायौ । सर्वप्राणभृतांक्रियाहेतुभूते ॥ मातरि॰ अन्तरिक्षेश्वयतिवर्द्धतेगच्छति । टुओश्वि गतिवृद्ध्योः । यद्वा । मातरि॰

अमन्याम्० श्वयतिवर्त्तते० समस्त-प्रवत्वात्० गर्भस्थएवायंमात्योम-पश्चात्तदागः क्षतव्य,पाय्यायती। श्वन्,चन्निति सूत्रे० कनिप्रत्ययोधातोरिकारलोपश्चनिपातनात्० सप्तम्यामलुक्च ॥ मातरीतिसप्तम्यन्त प्रतिरूपकमव्ययंवा ।

मातलिः। पुं० इन्द्रस्यसारथौ ॥ मतं लाति। पातीमुपितिकः। मतल स्यापत्यम्। अतइञ्।

मातापितरौ। पुं० द्विवचनान्तोय म्०० पित्रोः। मातरपित्रोः ॥ माताचपिताच। आनङ्घृतोद्वन्द्वे ॥ अभ्यर्हितत्वात्पूर्वंनिपातः। चतुर्दशगुणंमातागौरवेणातिरिच्यते ॥

मातापुरम्। न० सह्याद्रौरेणुकाधिष्ठितेषस्मिकास्थाने ।

मातामह:। पुं० मातुः पितरि। मातुः पिता। मातृपितृभ्यांपितरिडामहच्।

मातामही। स्त्री० मातुर्जनन्याम् ॥ मातुर्माता। मातरिषिच्चेतिडामहच्। षित्वान्ङीष् ॥

मातिः। स्त्री० माने ॥ अवच्छेदे ॥ मानम्। माङ्०। क्तिन्।

मातुल:। पुं० मातुर्भ्रातरि। पितृव्याडि। मातुर्भ्राता। पितृव्यमातुलेतिनिपातनात्० मातुर्डुलच्। ओषधिप्रभेदे ॥ मदनद्रुमे ॥ सर्पविशेषे ॥ धुस्तूरे ॥ मान्ति० नास्तितुला यस्य। मा० श्रीः तुलाऽस्येतिवा० श्वनकनामकत्वात् ॥

मातुलकः। पुं० धुस्तूरवृक्षे ।

मातुलपुत्रकः। पुं० धतूरस्यफले ॥ मातुलस्यपुत्रएव। कन्। मातुलसुते ॥

मातुला। स्त्री० मातुलान्याम् ॥

मातुलानी। स्त्री० मातुलस्यस्त्रियाम् ॥ मातुलस्य स्त्री। इन्द्रवरुणभवाहिमामातुलशब्दात्पुंयोगे० मातुलोपाध्याययोरानुक्० ङीष्च ॥ कलाये ॥ भंगायाम् ॥ मायात्तुला० मातुलामानयति। अनप्राणनेगतौवा। कर्मण्यण्। ङीप् ॥ मातुलस्यधत्तूरस्यस्त्रीवता। पूर्ववन्ङीषानुकौ ॥ शणे। प्रियङ्गुवृक्षे ।

मातुलाहि:। पुं० चित्रसर्पे। मालुधाने ॥ मातुलयति। मूलविभुजादित्वात्कः। मातुलयासार्न्धिःस। मालुयासांप० फेयुआटी० इतिचयस्यगौडदेशेप्रसिद्धिः। अयं खट्वाकृतिरायतदेहोदीर्घलांगूलश्चतुष्पादितिकेचित् ॥

मातुली। स्त्री० मातुलान्याम् ॥ मातुलस्यस्त्री। मातुलोपाध्याययोरानुग्वेत्यानुयागमाभावे० इन्द्रवरुण

तिङीष् ॥ भङ्गायाम् ॥
मातुलुङ्गः । पुं० बीजपूरे । क्षोलङ्गि । टावालेंबुङ्० गौ० दे० भाषा ॥ मिनात्यरुचिम् । मीञ्हिंसायाम् । बाहुलकात्तुन् । लुञ्ज्यते । लुजिर्भाषार्थः । घञ् । चजोरिति कुत्वम् । म्यङ्क्वादित्वाद्वा । मातुश्चासौलुङ्गश्च ॥
मातुलुङ्गकः । पुं० क्षोलङ्गवृक्षे । फलपूरे । बीजपूरे । रुचिके ॥ स्वार्थेकन् ॥
मातुलुङ्गा । स्त्री० मधुकुक्कुट्याम् ॥ यथा । मातुलुङ्गासुगन्धान्यागिरिआपतिपुष्पिका । अन्यस्मादेवदूतीच साक्षाचिन्मधुकुक्कुटी ॥ इतिरत्नमाला । मखुर० इ०महूर० इ० गौ० देशभाषा० ॥
मातुलुङ्गिका । स्त्री० वनबीजपूरे ॥
मातुलेयः । पुं० स्त्री० मातुलस्यापत्ये । शुभ्रादित्वात्ढक् ॥
माता । त्रि० प्रस्थादिनाधान्यादिमातरि ॥ मिनोति । डुमिञ्० तृच् पुं० साधिष्ठानबुद्धिस्थचिदाभासरूपेप्रमातरि ॥
माता । स्त्री० जनयित्र्याम् । प्रसूम् । जनन्याम् । सवित्र्याम् । मा० इ०भाषा ॥ आपदिमातेवशरणम् ॥ षोडशप्रकारामातरो यथा । स्तनदात्रीगर्भधात्रीभक्ष्यदात्रीगुरुप्रिया । अभीष्टदेवपत्नीचपितुः पत्नीचकन्यका ॥ सगर्भजायाभगिनीपुत्रपत्नीप्रियाप्रसूः । मातुर्मातापितुर्मातासोदरस्यप्रिया तथा ॥ मातुः पितुश्चभगिनीमातुलानी तथैवच । जनानांवेदविहितामातरः षोडशस्मृताः तस्यागौरवं यथा । जनकोजन्मदानत्वात्पालनाच्च पितास्मृतः । गरीयान्जन्मदातुश्च योन्नदातापितामुने ॥ विनान्नाञ्श्वरोदेहोननित्यः पितृरूपवः । तयोः शतगुणं माताप्ज्यामान्या चवन्दिता ॥ गर्भधारणपोषाभ्यां साचताभ्यांगरीयसी । इतिब्र० वै० पु० ॥ अत्रमनुर्यथा । उपाध्यायान्दशाचार्य आचार्याणांशतंपिता । सहस्रन्तुपितॄन्मातागौरवेणातिरिच्यत इति ॥ नपितुर्वचनंकार्यं यथा । मातुः मृतेनहि । पिताच पतितस्त्याज्योनमातासत्सुतेनहि ॥ गर्भधारणपोषाभ्यांतेनमातागरीयसी । दशविप्रादुपाध्यायोगौरवेणातिरिच्यते ॥ तेभ्यः पितादशभ्यस्तुमाताचैवगरीयसी । मातृतोन्योनदेवोस्तितस्मात्पूज्यासदासुतैः ॥ मातुश्चयद्धितंकिञ्चित्कुरुतेभक्तितः पुमान् । तद्धर्मंहिविजानीयादेवं धर्मविदोविदुः ॥ पितुर्भगिन्यां मातुश्च ज्यायस्यांस्वसर्यपि ।

स्वविर्स्त्र्यामातृबान्धवा :

मातृभोगीण : । त्रि० मातुर्हिते ॥ मातुर्भोग : शरीरम् ० तस्मै हित : । आत्मविश्वजनेत्यादिनाख : ॥

मातृमुख : । त्रि० जडे ॥ इतित्रिकाण्डशेष : ॥

मातृयोग : । पुं० यात्रायोगान्तरे ॥ यथा । अधिमात्रांशगैसौम्यैर्मितैर्वाप्यसुरार्चितै । लग्नगैमातृयोगोयंशत्रूणांसम्बिक्तत्सदा ॥

मातृवाहिनी । स्त्री० वल्गुलायाम् । मांसिष्टायाम् । पक्षिविशेषे ॥

मातृशासित : । पुं० मूर्खे ॥

मातृष्वसा । स्त्री० मातुर्भगिन्याम् ॥ मातु : स्वसा । मातृपितृभ्यांस्वसेतिषत्त्वं ॥

मातृष्वसेय: । पुं० मातृष्वसृसुते । मातृष्वसीये ॥ मातृष्वसुरपत्यम् । ढक्लोप: । अतएवज्ञापकाड्ढक् ॥

मातृष्वसेयी । स्त्री० मातुर्भगिनीसुतायाम् ॥ ङीप् ॥

मातृष्वस्रीय: । पुं० मातृष्वसृसुते ॥ मातृष्वसुरपत्यम् । मातृष्वसुश्चेति छण् ।

मातृष्वस्रीया । स्त्री० मातुर्भगिन्या : कन्यायाम् । टाप् ॥

मातृसिंही । स्त्री० वासके ॥

मात्रम् । न० कार्त्स्न्ये ॥ यथा । जीवमात्रंनहिंसेत ॥ अवधारणे ॥ यथा । पयोमात्रंभुङ्क्ते ॥ मीयते० अनयावा । मति० मिमीतेवा । मामाने । माङ्मानेवा । हुयामाश्रुभसिभ्यस्त्रन् ॥ स्वार्थे ॥

मात्रा । स्त्री० कर्णभूषणे ॥ वित्ते । द्रव्ये ॥ माने ॥ ह्रस्वस्वादौपरिच्छेदे ॥ अक्षराऽवयवे ॥ स्वल्पे ॥ काले । अकारादिलघूच्चारकाले ॥ वृत्ते ॥ कालविशेषे ॥ यथा । कालेनयावतापाणि : पर्येतिजानुमण्डले । सामात्राकविभि : प्रोक्ताह्रस्वदीर्घप्लुतेमता ॥ अपिच । वामजानुनिजहस्तभ्रमणंयावताभवेत् । कालेनमात्रामात्रा यामुनिभिर्वेदपारगै : ॥ पुनश्च । स्वजानुन : करावर्त्तं कुर्याच्छोटिकयायुतम् । एषामात्राभवेदेकासर्वत्रैवैषनिश्चय: ॥ याथात्म्ये । विषयेषु ॥ मीयन्ते० इ० मात्रा : विषया : ॥ उपभोगयोग्यविशेषे इन्द्रियवृत्तिषु ॥ इन्द्रियेषु ॥ मीयतेऽनया० इतिमात्रा० परिच्छित्ति : ॥ मियन्ते विषयाआभिरितिमात्रा: ० इन्द्रियवृत्तय : ॥ मीयते० अनयावा । माति० मिमीतेवा । मामाने० माङ्मानेवा । ष्ट्रन् । अनित्य : षित्वं ङीष् । टाप् हुयामेतित्रान्वन् ॥ पञ्चलघ्वक्षरेकाले ॥ अंशे ॥ यथा । नयोषिद्भ्य : पृथग्दद्यात्स्वसानदिनाहते । स्वभर्तृपिण्डमात्राभ्यस्तृ

ग्रिरासांयत : स्मृतेति पिण्डेभ्य स्वल्पिकांमात्रामितिच ।

मात्राकाल : । पुं० कालविशेषे । निमेषानन्तरंयावताकालेनस्वभावत- उन्मेषोभवतितावतिकाले ॥ निमेषोन्मेषणं मात्राकाललघ्वक्षरंतथे- तिपुराणम् ॥

मात्रायाम् । अ० अल्पपरिमाणे ॥

मात्रीय : । त्रि० मात्रे हिते ॥ तस्मै हितमितिछ : ॥

मात्सर्य्यम् । न० अन्यशुभद्वेषे ॥ मत्सरएव । ष्यञ् ॥

मात्स्यिक : । त्रि० मत्स्यघातिनि ॥ मत्स्यान्हन्ति । पक्षिमत्स्यमृगान् हन्तीतिठक् । मत्स्यस्यङ्यामिति- परिगणनात्० सूर्यतिष्येतियलो- पोन ॥

माथ : । पुं० अध्वनि । पथि ॥

माथुर : । त्रि० मथुरायांजाते ॥ तत्र जातइत्यण् ॥ शैषिकेष्वर्थेष्वेव ॥

माद : । पुं० दर्पे । हर्षे मदे ॥ मदनम् । मदीहर्षे । सधमादस्थयोरिति ज्ञापकात्० क्वचिदपवादेतिन्याया द्वा० घञ् ॥

मादक : । पुं० दात्यूहेपक्षिणि ॥ त्रि० मत्तताजनके ॥

मादन : । पुं० कामदेवे ॥ मदनवृक्षे ॥ धत्तूरे ॥ न० लवङ्गे ॥ त्रि० हर्षकारयितरि ॥

मादनी । स्त्री० भङ्गायाम् । विजयायाम् ॥ माकन्द्याम् ॥

मादृश : । त्रि० मत्सदृशे ॥ अहमिव दृश्यते । त्यदादिष्वित्यादिनाकञ् । आसर्वनाम्न : ॥

माद्री । स्त्री० अतिविषायाम् ॥ नकुलसहदेवयोर्मातरि । मद्रपुत्र्याम् ॥ भर्गादित्वात्तद्राजस्यनलुक् ॥

माद्रीपति : । पुं० पाण्डुनृपे ॥

माद्रीसुत : । पुं० नकुले ॥ सहदेवे ॥

माधव : । पुं० विष्णौ । नारायणे । लक्ष्मीपतौ ॥ मधुविद्यायांऽवबुध्यते० इतिमाधव : । शैषिकोऽण् । आदिवृद्धि : गुणाधादेशौ ॥ मायालक्ष्म्या : ० विद्यायावा० धव : पति : ॥ यद्वा । यदोर्ज्येष्ठ : पुत्रोमधु : ० तस्यापत्यं माधवस्तद्वंश्यत्वात् ॥ मधोर्हन्तेतिवा । शेषे० इत्यण् । ॥ माधवस्यस्वरूपायामूलप्रकृतिरीश्वरी । नारायणीतिविख्याता विष्णुमायासनातनी ॥ महालक्ष्मी स्वरूपाचवेदमातासरस्वती राधा वसुन्धरागङ्गातासांस्वामीचमाधव : ॥ मधौ । वसन्ते ॥ राधे । वैशाखे ॥ मधुमकरन्द : ० सोऽस्मिन्नस्ति । मधोर्श्चेतिञ : ॥ यादवे ॥ मधूकवृक्षे ॥ कृष्णमुद्गे ॥

माधवक : । पुं० मधूकपुष्पमद्ये । म

ध्वामवं ॥ मधूकपुष्पमधु । मधुना कृत : सञ्चित : । कुलालादिभ्यो- वुञ् ॥

माधवद्रुम : । पुं॰ आम्रवृक्षे ॥ माधवस्यवसन्तस्यद्रुम :

माधवप्रियम् । न॰ पीतचन्दने ॥

माधवि : । पुं॰ प्रद्युम्ने ॥ माधवस्यापत्यम् । अतइञ् ।

माधविका । स्त्री॰ माधवीलतायाम् ॥ सङ्कृतिवृत्ति २४ प्रभेदे ॥ यथा । भवन्तिपुरोजमणायदिसमलतोयगणोहितदाकरयन्त : प्रकाम मतीवमृदनुमाधविकामितितांक्षयन्त्यलिसमन्त : । तुषारधराधररा जसुतापरिचारकभूमिपतंयमवन्ततमानयमानयतसमदोलिमदोद्धतगर्वभरखञ्जमन्त : ॥

माधवी । स्त्री॰ मिसौ ॥ मधुशर्करायाम् । सितागुण्डे ॥ कुट्टन्याम् ॥ मदिराया : प्रभेदे ॥ यथा । पीत्वाद्यमाधवीमिष्टांगातयामिरयाङ्गवे॰ भ्रूतिमञ्चिप्रतिदेशीबाक्यंभागवते ॥ गोमहिष्यादिसम्पत्तौ ॥ दुर्गायाम् ॥ तुलस्याम् ॥ सुभद्रायाम् ॥ पुष्पलताविशेषे । अतिमुक्ते । पुण्ड्रके । वासन्त्याम् । लतायाम् ॥ माधवीमधुरा॰ तालक्ष्यौदोषत्रयापहा ॥ मधौपुष्प्यति । कालात्साधुपुष्प्यत्पच्यमानेष्वितिपुष्प्यदर्थे॰- ण् । ङीप् ॥ उर्व्याम् । भूमौ ॥ त्वम्मयाहंत्वदाधारात्वत्सृष्टात्वामुपाश्रिता । माधवीतिचलोकोयमभिधत्ततोहिमामितिविष्णुपुराणम् ॥

माधवेष्टा । स्त्री॰ वाराहीकन्दे ॥

माधवोचितम् । न॰ कक्कोलके ॥

माधवोद्भव : । पुं॰ राजादन्याम् ॥

माधुक : । पुं॰ वर्णसङ्करजातिविशेषे ॥

माधुपर्किकम् । न॰ मधुपर्कदानकाले पूज्यतयाचार्ध्येधमादौ ॥

माधुमत : । पुं॰ काश्मीरदेशे ॥ काश्मीरास्तुमाधुमता: सारस्वतास्तुविकर्णिका: ॥ इतिहेमचन्द्र : ॥ मधुमद्भिजनोस्य । सिन्धुतक्षशिलादिभ्योणाभिजनस्य ॥

माधुरम् । न॰ मल्लिकायाम् ॥ त्रि॰ मधुरसम्भवे ॥

माधुरी । स्त्री॰ मद्ये ॥ माधुर्ये ॥ चिरंकृष्णपदारविन्दरसिकंसामाधुरी माधुरी ॥

माधुर्य्यम् । न॰ निसर्गसौम्यत्वे ॥ रामणीयके ॥ रसिकतायाम् ॥ काव्यगुणभेदे ॥ यथा । आह्लादकत्वंमाधुर्यंशृङ्गारेद्रुतिकारणम् । शृङ्गारे॰ यथात्सम्भोगेद्रुतिर्गलितत्वमिव । अव्यक्त्त्वंपुनरोज : प्रसादयोरपि । करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् । अत्यन्तद्रुतिहेतु

स्यात् ॥ मधुरस्यभावः । दृढादित्वा त्ष्यञ् ॥

माधूकम् । त्रि॰ मधूकस्यावयवे ॥ तद्विकारे कोपधाच्चे त्यण् ॥ मधुरसादिषिच ॥

माध्यन्दिनः । पुं॰ यजुर्वेदीयशाखाविशेषाध्यायिनि ॥ त्रि॰ मध्यमे ॥ मध्येभवः । मध्यमध्यन्दिनण्चास्मादितिवर्त्ति : ॥

माध्यमम् । त्रि॰ मध्यमीये ॥ मध्येभवम् । मध्यान्मण् इतिवर्त्ति : ॥

माध्यमिकः । पुं॰ बौद्धशास्त्रभेदेशून्यवादिनि ॥ विज्ञानं क्षणिकं नात्मादिविद्यत्भ्रमनिमित्तवत् । अन्यस्यानुपलब्धत्वाच्छून्यं माध्यमिकागताः ॥

माध्यस्थम् । न॰ मध्यस्थत्वे ॥ अत्रैगुण्यात्पुरुषस्यमाध्यस्थाम् ॥ मध्यस्थस्यभावः । ष्यञ् ॥ मध्यस्थकर्म ॥

माध्याह्निकः । पुं॰ वन्धूके । त्रि॰ मध्याह्नभवे ॥ ठञ् ॥

माध्वकम् । न॰ माध्वीके ।

माध्वी । स्त्री॰ मद्ये ॥ मध्वादिकृतसुरायाम् । मधुरकलकमद्ये ॥

माध्वीकम् । न॰ मधूकपुष्पैः कृतेमद्ये । मध्वासवे । माधवकी ॥ मृद्वीका॰द्राक्षा॰तस्याविकारः । तस्यविकारद्रव्यण् । अनुदात्तादेश्चे-त्यञ् वा । पृषोदरादिः ॥ मधुनः प्रभेदे ॥

माध्वीकफलः । पुं॰ मधुनारिकेरके ॥

माध्वीमधुरा । स्त्री॰ मधुखर्जूरिकायां ॥

मानः । पुं॰ चित्तसमुन्नतौ ॥ चित्तस्यसमुन्नतिरुद्धतामानः । धनाद्युत्कर्षेणात्मनिचित्तोन्नतिर्मानः । मत्समोनान्योस्तीतिमननंमानः ॥ गर्वे । अपूज्यत्वे पिपूज्यत्वस्थापने । आत्मनिपूज्यत्वाध्यासे ॥ पूज्यत्वे ॥ यथा । अधमाः कलिमिच्छन्तिसन्धिमिच्छन्तिमध्यमाः । उत्तमामानमिच्छन्तिमानोहिमहतांधनम् ॥ मानोहिमूलमर्थस्यमानेम्लानेधनेनकिम् । प्रभ्रष्टमानदर्पस्यकिंधनैर्नाकिमायुषा । सत्कारे । आत्मन्यविद्यमानगुणारोपेणोत्कर्षबुद्धौ ॥ प्रत्युत्थानाभिवादनादौ ॥ गुणवतिनिर्गुणत्वधीरूपस्यअयोपिमानेसम्भवति ॥ यद्धे ॥ आदरे । मन्यामे । कोपविशेषे ॥ स्त्रीणामीर्ष्याकृतः कोपोमानोन्यासङ्गिनिप्रिये । प्रियापराधसूचिकाचेष्टामानः ॥ अनुरक्तयोर्दम्पत्योर्भावविशेषे । यथा । दम्पत्योर्भावएकवसतोरप्यनुरक्तयोः । स्वाभीष्टाश्लेषवीक्षादिनिरोधोमानउच्यते ॥ न॰प्रमाणे । प्रस्थचादौ ॥ अनुब

षोमोऽस्य ॥

मानाथ : । पुं॰ लक्ष्मीकान्ते । नारायणे ॥

मानार्थकम् । न॰ यौतवे ॥ मानमर्थोयस्यतत् ॥

मानास : । त्रि॰ पराहङ्कारत्वारिणि ॥ मानमस्यति । असु॰ । कर्म्मण्यण् ॥

मानिका । स्त्री॰ मद्ये ॥ शरावे । से-र॰ इतिभाषा ॥ इतिवैद्यकपरिभाषा ।

मानित : त्रि॰ पूजिते ॥ मान : स-ञ्जातोऽस्य । तारकादित्वादितच्॥

मानिता । स्त्री॰ अभिमानितायाम् । मानिनोभाव : । तल् ॥

मानित्वम् । न॰ विद्यमानैरविद्यमानैर्वागुणैरात्मन : श्लाघने ॥ भा-वेत्व : ॥

मानी । पुं॰ सिंहे ॥ त्रि॰ मानविशिष्टे ॥ अहङ्कारिणि ॥ मननशीले ॥ मानास्यास्ति॰ अस्मिन्वा । इनि : ॥ अनात्मवस्तुष्वात्माभि-मानोमान : । सोऽस्यास्तीतिमानी ॥ ॥

मानिनी । स्त्री॰ फल्याम् । प्रियङ्गौ ॥ मानवत्याम् । स्त्रीविशेषे ॥ उ भयोरपिति॰ मानश्चित्तोन्नतिरस्य स्या : । इनि : । ङीप् ॥ कोपनायाम् ॥ स्त्रीणामीर्ष्याकृत : कोपो मानोन्यासङ्गिनिप्रिये॰ इतिलक्षणात् ॥

मानिषाद : । पुं॰ श्रीरामे ॥ मा॰ लक्ष्मीरस्मिन्विषादोनिषोदति॰ तिष्ठति । षद्लृ॰ । इलश्चेतिघञ् । सदिरप्रतेरितिषत्वम् ॥

मानुष : । पुं॰ मनुष्ये ॥ मनोरपत्यम् । मनोर्जातावञ्यतौषुक्च ॥ आसुरविवाहे ॥ शुल्केनासुरइति हारीतसूत्रात् ॥ त्रि॰ मनुष्यसम्बन्धिनि ॥ मनुष्यस्यायम् । तस्येदमित्यण् । आपत्यस्येतियलोप : । ग्रैऽव्धामम्दमतश्चैविधिनाम् त्रिता श्रये । तेप्राप्यमानुषंजन्मपुनर्बन्धं विशन्त्युत ॥

मानुषतीर्थम् । न॰ तीर्थविशेषे ॥

मानुष्यविभव : । पुं॰ शरीरपाटवे ॥ गोभूहिरण्यादिसाधनसम्पत्तौ ॥ मानुषश्चासौविभवश्च ॥

मानुषी । स्त्री॰ नरभार्यायाम् ॥ मनोरपत्यंस्त्री । मनोर्जातावञ्यतौषुक्च । टिड्ढेतिङीप् ॥ जातिविश्चायोपरत्वान्ङीन् ॥ पुंयोगेतुङीष् ॥ चिकित्साप्रभेदे ॥ यथा आसुरीमानुषीदैवीचिकित्सामा-चिधामता ॥

मानुष्य: । पुं॰ त्रिविधभौतिकसर्गे ॥ सचैकविध: ॰ ब्राह्मणाद्यवान्तर-जातिभेदाविवक्षया॰ संस्थानस्य

षतुर्ष्व पित्रर्ष्वविशेषात् चैतन्यो त्कर्षनिष्कर्षतारतम्याभ्यां धर्माधर्मभावेन वैविध्यं बोध्यम् ॥ न० मनुष्यत्वे । मनुष्यशरीरे ॥ मानुष्यं कदलीस्तम्भनि : सारे सारमार्गणम् ॥

मानुष्यकम् न० मानुषसत्त्वे । मनुष्याणां समूह : । गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् । प्रकृत्याकैराजन्यमनुष्ययुवान इतियलोपेन ॥ मनुष्याणां भावे यो पधाद्गुरूपोत्तमाद्वुञ् ॥

मानोज्ञकम् । न० मनोज्ञतायाम् ॥ मनोज्ञस्य भाव : । द्वन्द्वमनोज्ञादिभ्यश्चेति वुञ् ॥

मान्थर्यकम् । न० मन्थरत्वे । व्रह्मणि ॥

मान्द्यम् । न० मन्दत्वे । मन्दस्यकर्म भावयो : ॥ पत्यन्तपुरोहितादिभ्यो यक् ॥ रोगे ॥

मान्धाता । पुं० युवनाश्वनृपात्मजे सौवनाश्वे राजनि ॥ मामयंधास्यतीतिदेवराड्वचनात्० मान्धाता नामतोऽभवत् । यावत्सूर्यउदेति स्मयावच्चप्रतितिष्ठति । सर्वंतद्यौवनाश्वस्य मान्धातु : क्षेत्रमुच्यते ॥

मान्य : । त्रि० पूज्ये । मन्तव्ये । मानार्हे ॥ मानपूजायामस्माद्गुरादिभ्यन्तादर्हार्थे यत्प्रत्यय : ॥

मान्यस्थानम् । न० पूज्यत्वकारणे ॥ यथा । वित्तंबन्धुर्वय : कर्मविद्या भवति पञ्चमी । एतानि मान्यस्थानानिगरीयो यद्यदुत्तरम् ॥ पञ्चानां त्रिषुवर्णेषु भूयांसि गुणवन्ति च । यत्रस्यु : सोऽत्रमानार्ह : शूद्रोऽपिदशमीं गत : ॥

मान्या । स्त्री० पूजायाम् । मरुन्मालायामोषधौ ॥

मापक : । पुं० प्रमापके । प्रमाणनकर्त्तरि ॥

मापत्य : । पुं० कामदेवे ॥

मापन : । पुं० तुले ॥ न० परिमाणे ॥

मापित : । त्रि० परिच्छिन्ने ॥ मातेर्मङ्डोया०णस्मात्कर्मणि क्त : । अर्त्तिह्रीव्लीत्यादिनापुगागम : ॥

माभी : । स्त्री० अभये ॥ नञर्थमाशब्दस्यभीशब्देन सुप्सुपेतिसमास : ॥

माभीद : । त्रि० अभयप्रदे ॥ माभीं ददाति । ददाते : । आतदोति क : ॥

मामक : । पुं० मातुले ॥ कृपणे ॥ त्रि० मदीये ॥ ममतायुक्ते ॥ ममायम् । अण् । ममकादेश : ॥

मामकीन : । त्रि० मदीये । मामके । ममायम् । युष्मदस्मदोरन्यतरस्यां खञ्चेति खञ् । तवकममकावेक

यंमहजाधवा महजाऽनादिः० घ.।याबन्धोचास्यायिनोमायाशक्ति र्ममास्तीत्यर्थः। एतेन मायाशक्त्या सद्वितीयत्वं ब्रह्मणोस्तीति० कथंजगत्सृष्टेः पूर्वं ब्रह्मसजातीयभेदशून्य मितिशङ्कापरास्ता० शक्तेः शक्तानतिरेकात्० नह्यवह्निशक्तिर्वह्नेः पृथक्त्वेन० क्वचित्कदाचि दृश्यते। किञ्चद्वितीयः सत्यपदार्थोनास्तीत्यर्थे वैकमेवाद्वितीयंब्रह्मेति श्रुतेरर्थः। तथाचासत्यामायया मद्वितीयत्वं पिदोषाभावात्० इति॥ विश्वंमात्यस्याम्० मिमीतेवा। मामाने० माङ् मानेवा। माच्छासस्मिन्योवः। मांयातिवा। घातोनुपेतिकः॥ वर्णवृत्तान्तरे॥ तल्लक्षणम्। कन्याकर्णैकुण्डलयुक्तौकुरलंदत्त्वापादनूपुरयुक्तंकुरुहारम्। मायावृत्तंपिङ्गलनागोदितमेतज्जानीताऽदः पण्डितवक्त्राम्बुजसारम्॥ यथा। उद्यद्वावासम्प्रतिराधामधुमासे० शक्रे सक्ते। तत्प्रतियाताकिमुदासि। केलीकुञ्जंशून्यम वेक्ष्यास्तरहस्याप्राणाचाय्यं भाविकथंवावदतस्याः॥

मायाकारः। त्रि० ऐन्द्रजालिके। प्रातिहारिके। मायां० स्थलजलादौजलस्थलादिज्ञानंकरोति। कृञ् अ०। कर्म्मण्यण्॥

मायाकृत्। पुं० मायाकारे। प्रातिहारिके॥

मायाजीवी। पुं० प्रातिहारिके। बाजीकर इ० भा० प्रसिद्धे॥

मायातिः। पुं० नरवले।

मायादः। पुं० कुम्भीरे॥

मायादेवी। स्त्री० शाक्यमुनेर्जनन्याम्॥

मायादेवीसुतः। पुं० शाक्यमुनौ। शाक्यसिंहे। गौतमे। अर्कबन्धौ। बुद्धभेदे॥ मायाचासौदेवीच। तस्याः सुतः॥

मायाधमनः। पुं० मायाधमने० भगवति॥

मायाफलम्। न० फलविशेषे। छिद्राफले। मायफले। माजूफल० इ० गौ० भा०॥

मायामयः। त्रि० मायाविनाकृते॥ न० जगति॥ ननिरूपयितुंशक्या विस्पष्टंभासतेचया। सामायेतीन्द्रजालादौलोकाः सम्प्रतिपेदिरे॥ स्पष्टंभातिजगच्चेदमशक्यंतन्निरूपणम्। मायामयंजगत्तस्मादीक्षस्वापक्षपाततः॥

मायामोहः। पुं० अर्हद्धर्मप्रवर्त्तके० भगवदंशेऽसुराणांमोहायोत्पन्ने॥

मायारसिकः। त्रि० परप्रतारके॥ मायायांरसिकः॥

मायावान्। त्रि० मायासंयुक्ते। मा

याविनि ॥ मायास्यस्यास्मिन्वाम् तुप् ॥

मायावती । स्त्री॰ कामदेवपत्न्याम् । रत्याम् ॥ उगित्त्वान्ङीप् ॥

मायावी । पुं॰ कंसासुरे । बिडाले ॥ त्रि॰ मायाकारे । व्यंसके । ऐन्द्रजालिके ॥ मायास्यास्ति॰ अस्मिन्वा । अस्मायामेधास्रजोविनि : ॥

मायाविनोदः । पुं॰ दैत्यदानवादौ ॥ मायायामायायांवाविनोदश्चमत्कारविशेषः क्रीडावाचस्येतिविग्रहः ॥

मायाशक्ति : । स्त्री॰ आवरण विक्षेप शक्तिसम्पन्नायाम् ॥

मायासीता । स्त्री॰ योगेमाग्निकृत सीताप्रकृतौ ॥

मायासुत : । पुं॰ बुद्धे ॥ मायाया : सुत : ॥

मायिक : । पुं॰ मायाकारे ॥ मायास्त्यस्य । व्रीह्यादिपाठाट्ठन् ॥ न॰ मायाफले ॥ त्रि॰ मृषात्मके ॥

मायी । पुं॰ मायाकारे । धूर्त्ते । जालिके ॥ मायाविनि । मायाशक्तिमति॰ महेश्वरे । मायाया : प्रकृते र्नियामके ॥ मायान्तुप्रकृतिंविद्यान्मायिनन्तुमहेश्वरम् । समाय्यस्त्रजतीत्याहु : श्वेताश्वतरशाखिनः ॥ मायास्य॰ अस्मिन्वाअस्ति । व्रीह्यादिपाठादिनि : ॥

मायु : । पुं॰ पित्ते ॥ मिनोति॰ प्रक्षिपतिदेहेऊष्माणम् । डुमिञ्प्रक्षेपणे । कृवापाजिमीत्युण् ॥

मायुराज : । पुं॰ कुबेरात्मजे । बणकर्त्री ॥

मायूरम् । न॰ मयूरसमूहे । मयूराणां समूह : । अनुदात्तादेरञ् ॥ मयूरमांसे ॥ मयूरस्यावयवोविकारोवा । प्राणिरजतादिभ्योञ् ॥ मायूरंपाचितंमांसंघृतेचोपस्कारान्विते । ईषल्लवणसंयुक्तं मरिचैलासमन्वितम् ॥ कषायमुष्णंमायूरंकफानिलहरंगुरु । वर्षाकालेमतंसेव्यं दुष्टकीटादिभक्षणात् ॥

मायूरिक : । पुं॰ मयूरघातिनिशाकुनिके ॥ मयूरान्हन्तिपक्षिमत्स्यमृगान्हन्तीतिठक् ॥

मायूरी । स्त्री॰ अजमोदायाम् ॥

मार : । पुं॰ अनङ्गे । स्मरे ॥ मारयति॰ विरहिणम् । पचाद्यच् ॥ मृतौ ॥ विघ्ने ॥ धत्तूरे ॥ मारणे ॥ म्रियतेऽनेन । मृङ्॰ । करणेघञ् ॥

मारक : । पुं॰ मरके । उत्पाते । पक्षिविशेषे । घातपक्षिणि । वाज॰ । डू॰भा॰ ॥ त्रि॰मारणकर्त्तरि ॥

मारजित् । पुं॰ जिने । बुद्धे ॥ मारंकामंजयति । जि॰ । सत्सूद्विषेति क्विप् । तुक् ॥

मारणम् । न॰ प्रतिघातने । वधे ।

व्याअन्यथानहि ॥ इतिदेवीपुराणे लोकाभ्युदयेगोपुरद्वार लक्षणा ध्यायः ॥ मृगशिरायुक्तापौर्णमासी मार्गी०साऽस्मिन्नस्ति । अण् ॥ मृज्यते विहायीक्रियते पादैः । मृजूशुद्धौ । मार्ग्यते वा । मृगअन्वेषणे । घञ् ॥ मार्गोश्चिजोङ्गलानूपाट विकविषयभेदेनचिविधोज्ञेयः ॥ सम्प्रदाये ॥ त्रि० मृगसम्बन्धिनि ॥

मार्गकः । पुं० आग्रहायणे ।

मार्गणः । पुं० शरे । न० अन्वेषणे । संवीक्षणे । याञ्चायाम् । याचने ॥ त्रि० अर्थिनि । याचके ॥ मार्ग अन्वेषणे । बहुलमन्यत्रापीतियुच् ॥ मार्ग० ल्युट् ॥ मार्गयति । मार्ग्यते वा । ल्युःक्तत्वल्युट इतिल्युड्वा ॥

मार्गणकः । पुं० याचके ॥

मार्गधेनुः । पुं० )

मार्गधेनुकम् । न० ) योजनपरिमाणे ।

मार्गवः । निषादादायोगव्यामुत्पन्ने दाशापरनामनि ॥ निषादोमार्गवं सूतेदाशंनौकर्मजीविनम् कैवर्त्तमितियंप्राहुरार्यावर्त्तनिवासिनः ॥

मार्गशिरः । पुं० मार्गमासे ॥

मार्गशीर्षः । पुं० सहसि । मार्गे । आग्रहायणिके । मंगसिर० इ० भा० ॥ द्वादशमासानामर्थे । अभिनवशालिवाम्तकशाकादिशाली० शीतातपशून्यत्वे नचसुखहेतुर्मार्गशीर्षोभगवद्विभूतिः । मासानांमार्गशीर्षोऽहमितिभगवद्वचनात् ॥ अत्रजातस्यफलंयथा । यस्यप्रसूतिः खलुमार्गमासितीर्थप्रवासीसततंमतिः स्यात् । परोपकारीधृतसाधुवृत्तिः सद्वृत्तियुक्तोललनाभिलाषी । मृगशिरसायुक्तापौर्णमासी । नक्षत्रेणयुक्तः कालइत्यण् । ततो ङीप् । मार्गशीर्षीपौर्णमासीत्यण् ॥ त्रि० मृगशिरसिजाते ॥ सन्धिवेलेत्यण् ॥

मार्गिकः । पुं० व्यारिणिके । मृगहन्तरि मृगान्हन्ति । पक्षिमत्स्येतिठक् ॥

मार्गितः । त्रि० अन्वेषिते ॥ मार्ग्यतेस्म । म० । क्तः ॥

मार्गीवीथी । स्त्री० दक्षिणमार्गेनक्षत्रविशेषाणांसंज्ञाविशेषे ॥ यथा । श्रवणश्रवनिष्ठाचमार्गीति ॥

मार्जः । पुं० विष्णौ ॥ वस्त्रादिनिर्मलीकरणे । मार्जने । रजके ॥

मार्जनः । पुं० लोध्रवृक्षे । न० प्रोञ्छनादिनाऽङ्गनिर्मलीकरणे । मार्ष्टी । मांजना० इ० भा० ॥ स्नानकालिशरीरमार्जनगुणाः । यथा ।

दौर्गन्ध्यं गौरवं कण्डूं कफं च मलमरोचकम्। स्वेदबीभत्सतां हन्ति शरीरपरिमार्जनमिति ॥ देवगृहमार्जनफलं यथा। देव्या गृहात्तु यः शुक्रं सम्मार्जयति नित्यशः। स भवेद्दलबान् मौख्यसर्वसम्पत्तियुतः इति ॥ मङ्गलानां श्रवणनाथं भस्ममृद्विलाम्भसा पुष्करलेपने ॥ मार्ष्टि पनेन। मृजूशुद्धौ। ल्युट् ॥

मार्ज्जना। स्त्री॰ मलस्यापकर्षणे। मार्ष्टौ। मार्जने। मांजना॰ इ॰ भा॰ ॥ मार्जनम्। मृज॰। मृजूशौचालङ्करणयोर्वा। चुरादि। ण्यासश्रन्थोयुच् ॥ मुरजध्वनौ ॥

मार्ज्जनी। स्त्री॰ सम्मार्जन्याम्। शोधन्याम्। सोहनी॰ इ॰ भा॰ ॥ मार्ज्यतेऽनया। मृज॰। करणे ल्युट्। ङीप् ॥

मार्ज्जनीय :। त्रि॰ मङ्करे अवस्करे ॥ मार्ज्जितुं योग्यः। अनीयर् ॥

मार्ज्जार :। पुं॰ खट्टाशे। रक्तचित्रके ॥ चोतौ। बिडाले ॥ अस्पर्शनेदोषा यथा। अभोज्यसूतिकाषण्ढमार्जाराखुश्वकुक्कुटान्। पतितापविद्धचण्डालमृतहारांश्च वर्जित्। संस्पृश्य शुध्यते स्नानात् उदक्याग्रामसूकरौ ॥ मार्ष्टि मुखम्। मृज॰। कञ्जिमृजिभ्यांचिदित्यारन्। मृजेर्वृद्धिः। पारिभाषिकमार्जारो यथा। रम्भार्धजपतैयस्तत्यतैयजलैस्तथा। नरपञ्चार्धमुद्राकोमार्जार : परिकीर्त्तितः ॥

मार्ज्जारक :। पुं॰ मयूरे। सिता...ङ्गे ॥

मार्ज्जारकरणम्। न॰ रतबन्धान्तरे यथा। प्रसारितैपाणिपादेगच्छतस्रस्त्रिभिःमुखोरसि। उन्नतायाः स्त्रियाः कथ्यं मार्जारकरणं विदुः ॥

मार्ज्जारकर्णिका स्त्री॰ चामुण्डादेव्याम्। चर्मामुण्डायाम् ॥

मार्ज्जारकर्णी स्त्री॰ चामुण्डायाम् ॥

मार्ज्जारगन्धा। स्त्री॰ मुद्गपर्णीविशेषे ॥

मार्ज्जारगन्धिका। स्त्री॰ मुद्गपर्ण्याम् ॥

मार्ज्जारलिङ्गि :। त्रि॰ बैडालव्रतिके ॥

मार्ज्जारी। स्त्री॰ मार्जारस्त्रियाम् ॥ कस्तूर्याम्। गन्धमार्जारे पूतिकायाम्। गन्धचिलायाम्। गन्धगोकुला॰ खाटाशी॰ इ॰ गौ॰ देशभाषा ॥

मार्ज्जालीय :। पुं॰ मार्जारौ ॥

मार्ज्जाल :। पुं॰ मार्जार ॥

मार्ज्जालीय :। पुं॰ शूद्रे ॥ बिडाले ॥ कायशोधने ॥ मार्ष्टि। मृज॰। स्थावतिमृजेरालच् बालआलीयच् : इति मृजेरालयच् ॥

मार्ज्जित : । त्रि॰ कृतमार्ज्जने ॥ मृ-
जे : क्त : ॥

मार्ज्जिता । स्त्री॰ रसालायाम् । शि-
खरिण्याम् । त्रि॰ शोधिते ॥ मा-
र्ज्यं तेऽस्य । मृजूशौचालङ्कारयो : ।
क्त : । टाप् ॥

मार्त्तण्ड : । पुं॰ तरणौ । सूर्ये ॥
मृताण्डेभव : । शक्वन्ध्वादि : ॥
क्रोडे । शूकरे ॥

मार्त्तण्डवल्लभा । स्त्री॰ सूर्यपत्न्याम् ।
आदित्यभक्तायाम् ॥

मार्त्ताण्ड : । पुं॰ सूर्ये ॥ मृताण्डेभ-
व : । अण् ॥ क्रोडे । भूदारे ॥

मार्त्तिक : । पुं॰ शरावे ॥ त्रि॰ मृ-
त्तिकारचिते । मृत्तिकाया विकार: ।
तस्य विकारइत्यण् ॥

मार्द्दङ्गम् । न॰ पत्तने ॥

मार्द्दङ्गिक : । त्रि॰ मौरजिके । मृदङ्ग
वादके । मृदङ्गवादनं शिल्पमस्य
। शिल्पमितिठक् । अत्र॰ मृदङ्ग
वादने॰ प्रकृतेर्वर्त्तनं यथा । मुख्यार्थ
वृत्तिस्त्वनभिधानात् ॥

मार्द्दव : । पुं॰ वर्णसङ्करजातिवि
शेषे ॥ न॰ मृदुतायाम् । परदु:ख
प्रदर्शनात् पीडायुक्ते ॥ अक्रूरत्वे ।
तथापूर्वपद्मादिकारिख्वपिशिष्यादि
षु॰ अप्रियभाषणादिव्यतिरेकेणवो
धयितृत्वे । चित्ताकाठिन्ये ॥ मृ-
दोर्भाव : । इगन्तश्चेत्यण् ॥

माद्वीकम् । न॰ मधुनि । द्राक्षाम-
द्ये ॥ मृद्वीकाद्राक्षा॰ तस्याविकार: ।
तस्यविकारइत्यण् ॥ अनुदात्तादे-
श्चेत्यञ् वा ॥

माष : । पुं॰ मारिषशाके ॥ माष्यो
स्याधार्ये ॥ मषवधात् धमन्तात्॰ मा
ष : ॥

माषिका : । पुं॰ मारिषशाके ॥

माष्टि : । स्त्री॰ प्रोञ्छनादिनाद्रव्य-
निर्मलीकृतौ । मार्ज्जनायाम् ॥ मा
र्ज्जनम् । मृजूशुद्धौ । मृजूशौचाल
ङ्करणयोर्वा॰ चुरादि: । क्तिन् । रि
तुर्चे तिनेट् । णिलोप : ॥

माल : । पुं॰ उन्नतभूतले॰ क्षेत्रे ।
म्लेच्छजातिविशेषे ॥ यथा । मा-
लाभिल्ला : किराताश्च सर्वेपिम्ले-
च्छजातय : ॥ देशविशेषे ॥ तच॰
मेदिनीपुरप्रदेशे मालभूमित्त्वेनख्या
त: ॥ न॰ कपटे ॥ वने ॥ उन्नतभू-
तले ॥ क्षेत्रे ॥ माति । मामाने ।
कर्म्मेन्द्रायमवस्थविप्रशुक्रचुक्रचुरखुर
भद्रोग्रभेरभेलशुक्रशुक्लगौरवक्रेरा-
माला : । इतिरन् । निपातनाल्ल
त्वम् ॥

मालक : । पुं॰ निम्बवृक्षे । मल्लके
। मलधारणे । अङ्कोट ॥ न॰ स्थल
पद्मे ॥

मालका । स्त्री॰ माल्ये ॥

मालकोष : । पुं॰ कौशिके । रागवि

शेषे । अथ गानसमयोरागविशेष:॥

मालवक्रम्। न० सकृष्य रूपवंसखी। मालाबृचाणि० इ० गौ० भा०।

मालतिका। स्त्री० वृत्तविशेषे॥ यथा। चादिगुरु: पुनरन्तगुरुर्यदि चान्तरगा: सगणा मुनिमाना: मालतिकाकथितावि सम्यविभिर्विदित भृतिभि: क्रतमाना। गौडकुलमधुरध्वरदीनदयाकरसत्कविभि: कृतगाना श्रीयशवन्तनरेशनिशामपशामयमानवदानविधाना। मालव्यं चक: ॥

मालती। स्त्री० युवती॥ काचमाक्षयाम्। विशल्यायाम्॥ ज्योत्स्नायाम्॥ निशि॥ नदीविशेषे॥ जात्याम्। चंवेली० इ० प्रसिद्धायां पुष्पलतायाम्॥ यथा वृत्तान्तरे॥ चादौ चत्वारो यांक्रर्णाजायन्ते शेषि यश्वारामस्थाराराजन्ते। रुद्रैर्वर्णै: पादेपादे विख्याता मालत्यं यावाणी भूषाविख्याता॥ यथा। पायात्मा यामीमौलीन: कल्याणं प्रागादि योणीभर्तु: पादिक्रीडे। व्याप्ताम् भोधेयस्मिन्नालीलीलाभि: सम्यक् सर्वौषध्योयत्पृष्ठे तिष्ठन्॥ जगतीछन्दोभेदेपि॥ तल्लक्षणं यथा। भवतिनजावथमालतीजरौ॥ यथा। इदकथयाच्युतकेलिका नवेमधुरसमीरभसारसोलुप:। कुसुमकृतस्मितचारुविभ्रमामलिरपिचुंबतिमालतींमुहु:॥ मालतिकाच्छन्दसि॥ मालत्यौसततिलति: सौत्रोवेदनार्थ:। मुजविभुजादित्वात्क:। गौरादि:॥

मालतीमोतिका। ततु०। पञ्चभ्यो पीतिङ:॥

मालतीतीरज:। पुं० टङ्कणे। सुहागा० इ० भा०॥

मालतीतीरसम्भवम्। न० स्वर्णे तटङ्कणे॥

मालतीपत्रिका। स्त्री० जातीपत्र्याम्॥

मालतीफलम्। न० जातीफले॥

मालय:। पुं० चन्दनवृक्षे॥ त्रि० मलयसम्बन्धिनि॥ न० पद्मे॥

मालव:। पुं० अवन्तिदेशे। मालवा० इ० भा०॥ अवन्तीत: पूर्वभागे गोदावर्यास्तथोत्तरे। मालवाख्यो महादेशो धनधान्यपरायण:॥ रागविशेषे॥

मालविका। स्त्री० निवृति।

मालसी। स्त्री० केशपुष्ठहर्षे। मालाख्याम्॥ रागिणीविशेषे। मालवरागस्यपत्न्याम्॥ मतान्तरे चामेघरागस्यभार्यायाम्। अथागानसमयो यथा। इन्द्रोत्थानात् समारभ्य यावद्गर्भसमुत्सवम्। गेयाभवेद्

धैर्निर्त्यं मालसीसाममोदरा ॥
अपिच । गान्धारीदीपिकाचैवक
र्णाटीपूरवीतथा । अद्ववारीका
मडाचगौरीकेदारपाहिडा ॥ माध
वीमालसीनाटीभूपालीसिन्धुडात
था । सायान्हरागिणीरेता: प्रगा
यन्तिचतुर्द्दश ॥

माला । स्त्री॰ मजिन्प्यादिशामनि ।
मल्ये ॥ मर्वनिम्यस्तपुष्पादिदा
मनि ॥ श्रेण्याम् । पङ्क्तौ ॥ गला
भरणे ॥ पृक्कायाम् ॥ मल्यते ।
मलधारणे । घञ् । टाप् ॥ मां॰
लक्ष्मींशोभांवालाति । ला॰ । आ
तोनुपसर्गेकोवा ॥ यद्वा । माति ।
मामाने । अन्यद्राग्यत्यादिमा॰
रन् । निपातनाल्लत्वम् ॥ माला
वृत्तविशेषे ॥ तल्लक्षणोदाहरणे
यथा । द्विजवरनवगणमिहकृतद
नुरगणमपिदालय कमलमुखिभव
तिललितमपिकर्णवश्रेषे । अप
रदलगाथायामालावृत्तंविचित्रंत
त् ॥ यथा । खरनखरमुखदलित
दितितनयकठिनहृदयरुधिरनिर
भरदभिनवसुखितमानसोहन्या
त् । भवदंशोनरसिंहोऽविपत्सु
मद्योपसङ्घात: ॥ लघ्वादिचिकाले
॰ । ऽ ॥ पुं॰ जपसाधनभूतायाम्
। गुणनिकायाम् ॥ सार्विविधाय
था । मालातुत्रिविधादेविवर्णाचपवं

भेदतइतिमन्त्रसूक्तम् ॥

मीलाकण्ठ: । पुं॰ अपामार्गे ॥

मालाकन्द: । पुं॰ कन्दविशेषे । आ
विलकन्दे । त्रिशिखदलायाम् ॥

मालाका । स्त्री॰ मालायाम् ॥

मालाकार: । पुं॰ वर्णसङ्करजाति-
विशेषे । मालिके । वनार्थके । पु
ष्पाजीविनि । माली॰इ॰भा॰ अ
यन्तुशूद्रायांविश्वकर्म्मणोजातइति
ब्र॰वै॰पु॰ ॥ तैलिक्यांकर्म्मकारा-
न्मालाकारस्यसम्भव: । इ॰परा-
शरपद्धति: । मालांकरोति । ह्कृ
अ॰ । कर्म्मण्यण् ॥

मालाग्रन्थि: । पुं॰ मालादूर्वायाम् ॥

मालातृणम् । न॰ भूस्तृणे ॥ अति-
च्छत्रतृणे ॥ मालाकाराणितृणानि।

मालादीपकम । न॰ अर्थालङ्कारविशे
षे ॥ तल्लक्षणादिकंयथा । मालादी
पकमाद्यञ्चयथोत्तरगुणावहम् पू
र्वंणपूर्वंणवस्तुनोत्तरमुत्तरं चेदुपक्रि
यते॰तन्मालादीपकम् । यथा । स
ङ्ग्रामाङ्गणमागतेनभवताचापेस-
मारोपितेदेवाकर्णययेनयेनसहसा
यद्यत्समासादितम् । कोदण्डेन
शरा: शरैररिशिरस्तेनापिभूमण्ड
लम् तेनत्वं भवतादकीर्त्तिरतुला-
कीर्त्यांचलोकत्रयम् ॥

मालादूर्वा । स्त्री॰ दूर्वाविशेषे । ग्रन्थि
लायाम् । पर्ववल्ल्याम् । गोंठि-

यादृबद्द०भा० ॥

मालाधरः। पुं० वर्णवृत्तविशेषे ॥ द्विजवरयगणान्वितोगजपतिः पुनस्तुर्यवाम्० करतलपरिस्फुरत्कमकुण्डलेनान्वितः। सुरपतिगुरुश्रियापरिगतः समंतात्सखे० जयतिभुविनत्तभूपतिरयन्तुमालाधरः ॥ यथा। क्वचिदपिवयस्ययासस्वविनोदमातन्वती० कतिपयकथारसैर्मयतिवासरीयांरुजम्। सुभगतवकामिनीसमधिगम्यसायामिनी मनुभवतिभामिनी मदनवेदना मन्ततः ॥

मालारिष्टा। स्त्री० पाठ्याम्। मरकतपत्र्याम्। हरितलतायाम् ॥

मालालिका। स्त्री० पृक्कायाम् ॥

मालाली। स्त्री० पृक्कायाम् ॥

मालिः। पुं० सुकेशराक्षसपुत्रे ॥

मालिकः। पुं० मालाकारे ॥ पक्षिविशेषे ॥ मालाशिल्पमस्य। शिल्पमितिठक् ॥ मालास्यास्तिवा। व्रीह्यादिभ्यश्चेतिठन् ॥

मालिका। स्त्री० सप्तलायाम् ॥ पुत्र्याम् ॥ ग्रीवालङ्करणे ॥ पुष्पमाल्ये ॥ नदीविशेषे ॥ सुरायाम्। मद्ये ॥ टाप् ॥

मालिकी। स्त्री० मालिकयोषिति। मालिन्० इ० भा० ॥ टिड्ढेति ङीप् ॥

माली। पुं० मालावति ॥ मालास्त्यस्य। सुखादिषु० मालाक्षेपे० इतिपाठादिनिः ॥ व्रीह्यादित्वाद्वा० इनिः। सतुक्षेपादन्यत्रापि ॥ सुकेशराक्षसपुत्रे ॥

मालिनी। स्त्री० मातृकायाम् ॥ मालिकयोषिति ॥ गौर्याम्। उमायाम् ॥ चम्पानगर्याम् ॥ मन्दाकिन्याम् ॥ नदीविशेषे ॥ मालाअस्तिअस्याः अस्यांवा। व्रीह्यादित्वादिनिः। ङीप् ॥ यद्वा। मलते। मलधारणे। णिनिः। ङीप् ॥ अग्निशिखायाम् ॥ दुरालभायाम् ॥ अतिशक्करीच्छन्दो १५ भेदे ॥ यथा। ननमयययुतेयं मालिनीभोगिलोकैः ॥ कुगसदकृतचर्चापीतकौशेयवासारुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा। अनृजुनिहितमंसेवंशमुत्क्वाणयन्तीधृतमधुरिपुलीलामालिनीपातुराधा ॥

मालिन्यम्। न० मलिनत्वे ॥

मालायः। त्रि० मालायाम्भवे ॥ हृद्यः ॥

मालुः। स्त्री० पत्रलतायाम्। पत्रवल्ल्याम् ॥ नार्याम् ॥

मालुधानः। पुं मातुलाहौ। चित्रसर्पे ॥ मालुरोषधी० तत्रधानमस्य ॥ महापद्मे ॥

मालुधानी। स्त्री० लतान्तरे ॥

मालूक : । पुं० कृष्णार्जके ॥

मालूर : । पुं० शाणिडस्थवृक्षे । श्रीफले । विल्वे । वेल० इ० भा० ॥ मांलक्ष्मींपरेषांलुनाति । लूञ्छेदने । बाहुलकाद्रक् ॥ कपित्थवृक्षे ॥

मालेया । स्त्री० स्थूलैलायाम् ॥

माल्यम् । न० कुसुमे । पुष्पे ॥ मालायांसाधुमाल्यंपुष्पमितिविवरणम् यथा । यथाचाल्येनमाल्येनवासितंतिलसर्षपम् । नमुञ्चतिस्वकंगन्धंतद्वत्सूक्ष्मस्यदर्शनम् ॥ पुष्पमालायाम् ॥ मूर्ध्निन्यस्तपुष्पदामनि ॥ केशकलापार्द्रेहिर्माल्यधारणनिषेधोयथा । नविगर्ह्यकथांकुर्याद्वहिर्माल्यंनधारयेत् । गवाञ्चयानंपृष्ठेनसर्वथैवविगर्हितम् ॥ रत्नमयस्रजि ॥ मालामाच ॥ मल्यते । मलधारणे ऋहलोर्ण्यत् ॥ यद्वा । मालेव । चतुर्वर्णादित्वात्ष्यञ् ।

माल्यपुष्प : । पुं० शणवृक्षे ॥

माल्यपुष्पिका । स्त्री० शणपुष्प्याम् ॥

माल्यवान् । पुं० पर्वतविशेषे । मेरुत : प्राच्यामानीलनिषधंयाम्योत्तरायते द्विसहस्रयोजनविस्तीर्णेकेतुमालेलावृत्तवर्षयोर्मर्यादाद्रौ ॥ माल्याकारतास्त्यस्मिन्मतुप् ॥ राक्षसभेदे ॥

माव : । पुं० लेटात्तीवरकन्यायामुत्पन्ने० सङ्करजातौ ॥

माव्रवी । स्त्री० मन्नयाचायाम् ॥

माशब्दिक : । त्रि० प्रतिषेधरि । निषेधके ॥ माशब्द : इतियआहस: । तदाहेतिमाशब्दादिभ्यउपसङ्ख्यानमितिठक् ॥

माष : । पुं० व्रीहिप्रभेदे । कुरुविन्दे । धान्यवीरे । वृषाकरे । मांसले । बलाढ्ये । पित्र्ये । भोजने । मा० ह०उडद० इ० भा० ॥ माषस्यफलंमाष : । अवयवेचप्राण्योषधिवृक्षेभ्यइत्यण् । तस्यफलपाकशुषामितिलुपि०युक्तवद्भाव : ॥ माषोगुरु : स्वादुपाक : स्निग्धोरुच्योऽनिलापह : । उष्ण : सन्तर्पणोबल्य : शुक्रलोहृंहण : पर : ॥ भिन्नमूत्रमलस्तन्यमेद : पित्तकफप्रद : । गुदकीलार्दितश्वासपक्तिशूलानि नाशयेत् ॥ कफपित्तकरामाषा : कफपित्तकरंदधि । कफपित्तकरामत्स्याकुष्माण्डंकफपित्तकृत् ॥ मूलकंमाषसूपेनमधुनाचनभक्षयेत् ॥ रूप्यपरिमाणविशेषे ॥ द्वेकृष्णलेसमधृते विज्ञेयोरूप्यमाषक : ॥ परिमाणविशेषे । माषके ॥ सचमागधमानेसुश्रुतमते ५ गुञ्जाचरकमते ६ ८ गुञ्जापरिमाणम् । कालिङ्गमानेसुश्रुतमते ५ ७ ८ गुञ्जापरिमाणम् । वै

द्यकान्तरे १० गुञ्जापरिमाणम् ॥ यथा। गुञ्जाभिर्दशभिर्माषः. शाणो माषचतुष्टयमितिवैद्यकपरिभाषा । मासाइति भाषा॥ ज्योतिःस्मृतिमते १२ गुञ्जापरिमाणम्। यथा। पलन्तुलौकिकैर्मानैः साष्टरक्तिद्विमाषकम्। तोलकत्रितयं चैवं ज्योतिश्चैःस्मृतिसम्मतमितिनिष्यादितत्त्वधृतवचनेनपलमष्टरक्तिकाधिकमाषद्वयाधिकतोलकत्रयम्। एतेनमाषकपरिमाणंद्वादशरक्तिकंभवति॥ मूर्खे॥ त्वग्दोषभेदे। मस्साइति भाषा॥

माषकः। पुं० पञ्चरक्तिकपरिमाणे॥ गुञ्जाः पञ्चाद्यमाषकइत्यमरः॥ दशार्द्धगुञ्जंप्रवदन्तिमाषंमाषाह्वयैः षोडशभिश्चकर्षमितिलीलावतीच॥ षड्भिस्तुरक्तिकाभिः स्यान्माषकोहेमधान्यकौ। माषोगुञ्जाभिरष्टाभिः सप्तभिर्वाभवेत्क्वचिदितिभावप्रकाशः॥

माषपर्णी। स्त्री० महासहायाम्। हयपुच्छौषधौ। काम्बोज्याम्। वनमाषे। माषाणीति० गौ०दे०भा०॥ माषपर्णीहिमातिक्ताशुक्रबलासकृत्। मधुराग्राहिणीशोथवातपित्तज्वरास्रजित्॥

माषवर्द्धकः। पुं० स्वर्णकारे॥

माषवटी स्त्री० वटिकाविशेषे। उड्डी० वड्डी० इ० भा०॥ माषाणांपिष्टिकाहिङ्गुलवणार्द्रकसंस्कृता। तयाविरचितावस्त्रेवटिकाश्मातपशोषिताः॥ तलितास्तप्ततैलेताश्चयवासुप्रलेहिताः। वटकस्यगुणैर्युक्तास्तास्तत्व्यारुचिदाभृशम्॥

माषशः। अ० प्रतिमाषम्० इत्यर्थे॥

माषादः। पुं० कच्छपे॥ त्रि० माषभक्षके।

माषादिः। पुं० शमीधान्यगणे। माषआदिर्यस्यगणविशेषस्यसः। माषोमुद्गोराजमाषः कुलत्थश्चणकस्तिलः। काकाण्डश्चैवरइतिशमीधान्यगणःस्मृतः॥

माषीणम्। न० माषक्षेत्रे। माष्ये॥ माषाणांभवनंक्षेत्रम्। विभाषातिलमाषोमाभङ्गाणुभ्यइतिपक्षे खञ्॥

माषोण्डरी। स्त्री० ड्रमडरे० डुन्दरे० सोफ० इतिहिमपर्वतप्रसिद्धखाद्यद्रव्ये॥

माष्यम्। न० माषीणे। माषक्षेत्रे॥ माषाणांभवनम्क्षेत्रम्। विभाषातिलमाषेतिपक्षे यत्। माषेभ्योहितंवा। खलयवमाषेत्यादिना यत्॥

मा:। पुं० चन्द्रे॥ मासे॥ मिमीते आनन्दमितिमाः। बाहुलकात्कि

बलादप्यसि : ॥

मास : । पुं० ग्रासे । वर्षांशे । शुक्लकृष्णपक्षद्वयात्मकेकाले ॥ मासोद्विविध : शुक्लादि : कृष्णादिश्च । तत्र चैत्रशुक्लप्रतिपदमारभ्यामावास्यापर्य्यन्तंशुक्लादि : । कृष्णपक्षप्रतिपदमारभ्यपूर्णिमापर्य्यन्तंकृष्णादि : ॥ माश्चन्द्रस्तस्यायम् । अण् । सौरादिषु । यथा । मासश्चतुर्विधः प्रोक्त : सावनादिप्रभेदत: । त्रिंशद्दिनात्मकस्तत्रसावन : परिकीर्त्तित : ॥ एकस्मात्सङ्क्रमादासङ्क्रान्ति: सौरोभिधीयते । शुक्लपक्षादिकृष्णान्तश्चान्द्र : स्यादन्यथापिवा ॥ सर्वनक्षत्रभुक्त्यातुमासश्चोमासउच्यते ॥ तत्र । आब्दिकेपितृकृत्येषुमासश्चान्द्रमस: स्मृत: । विवाहादौस्मृत: सौरोयज्ञादौसावनोमतइतिविवेक : ॥ मस्यते परिमीयते चन्द्रवृद्धिचयाभ्यां य: । मसीपरिणामे । कर्म्मणिघञ् ॥

मासजात : । त्रि० जननाद्वृद्धर्यस्यमासोगतस्तत्र ॥ तत्रैवव्यवहारात् । मासोजातस्ययस्यस : । काला : परिमाणिनेतिसमास : ॥

मासज्ञ: । पुं० दात्यूहे ॥ त्रि० मासविदि ॥

मासतम : । पुं० मासस्यपूरणे ॥ नित्यंशतादीतिडटस्तमडागम : । अतएवस्थापकाट् डट् ॥

मासनम् । न० सोमराज्याम् ॥

मासमान : । पुं० वत्सरे ॥ न० मासपरिमाणे ॥

मासर : । पुं० निस्रावे । भक्तसमुद्भवेमण्डे । मांड० पीच० इ० भा० ॥ मास्यते । मसीपरिणामे० बाहुलकादरम् ॥ यद्वा । मा० । श्री : सरस्यच । स० । पुंसीतिघ : ।

मासवर्त्तिका स्त्री० सर्षपौषधिविशेषे ॥

मासान्त : । पुं० अमावास्यायाम् ॥ सङ्क्रान्तिदिने ॥

मासिकम् । न० अन्वाहार्ये । दर्शश्राद्धे ॥ पितृणांमासिकंश्राद्धमन्वाहार्यं विदुर्बुधा : । तच्चामिषेणकर्त्तव्यंप्रशस्तेनप्रयत्नत : ॥ मासे भवम् । कालाट्ठञ् ॥ प्रतिमास० संवत्सराभ्यन्तरे० प्रतिमासंमृताहेक्रियमाणे श्राद्धे ॥ मासोदेवताऽस्यवा । कालेभ्योभववत् ॥ ऋणे ॥ मासे देयं । देयमृणे । ठक् ॥ त्रि० माससम्बन्धिनि । मासेननिर्वृत्तम् । ठञ् ॥ मासे भवंवा ॥

मासुरी । स्त्री० श्मश्रौ ॥

मासूर : । त्रि० मसूरविकृतौ ॥ मसूरस्यावयवोविकारोवा । बिल्वाद्यण् ॥

मास्म । अ० अलम् । वारणे ॥ माच स्मच । अनयो : समाहार : ॥

माहाकुल : । त्रि॰ महाकुलीने ॥ महाकुलस्यापत्यम् । महाकुलादञ्खञावितिपक्षेऽञ् ॥

माहाकुलीन : । त्रि॰ महाकुले ॥ महाकुलस्यापत्यम् । महाकुलादितिपक्षेखञ् ॥

माहाजनिक : । त्रि॰ महाजनायहिते ॥ महांश्चासौजनश्च । महाजनाट्ठञ् ॥ बह्वचोहेतु । महाजनीयः ॥

माहात्म्यम् । न॰ महात्मत्वे ॥ प्रभावे ॥ महात्मनोभावः । ष्यञ् ॥ अनतिशयैश्वर्ये । विश्वसृष्ट्यादिकर्तृत्वेप्यविकारित्वे । शुभाशुभकर्मकारयितृत्वेप्यवैषम्ये । धर्ममोक्षादिफलदातृत्वेप्यसङ्गौदासीन्ये ॥

माहाराजिक : । पुं॰ गणदेवताभेदे ॥ महाराजोदेवतैषाम् । महाराजप्रोष्ठपदाट्ठञितिठञ् ॥ महाराजोभक्तिरस्यवा । महाराजाट्ठञ् ॥

माहाव्रती । स्त्री॰ पाशुपतव्रतसम्बन्धिन्यांपद्धतौ ॥

माहिनम् । न॰ राज्ये ॥ मह्यतेऽस्मिन् । मह॰ महेरिनण्चेतीनण् ॥ त्रि॰ महनीये ॥

माहिर : । पुं॰ देवराजे । इन्द्रे ।

माहिषम् । न॰ महिष्याधर्मे ॥ अण् महिष्यादिभ्य : ॥ त्रि॰ महिषसम्बन्धिनि ॥ महिषोपजीविनि । महिष्या : ॰ महिषस्यवा॰ इदम् । अण् ॥

माहिषस्थलक : । पुं॰ शालिप्रभेदे ॥

माहिषिक : । पुं॰ महिषजीविनि ॥ महिषीपतौ । व्यभिचारिण्यनुरक्तपतौ ॥ यथा । महिषीत्युच्यतेनारी याचस्याद्व्यभिचारिणी । तांदुष्टांकामयतियः सवैमाहिषिकः स्मृतः ॥ भगद्वारोपार्जितस्त्रीधनोपजीविनि ॥ यथा । महिषीत्युच्यते भार्याभगेनोपार्जितंधनम् । उपजीवतियस्तस्याः सवैमाहिषिकः स्मृतइति ॥

माहिष्मती । स्त्री॰ शिशुपालनगर्याम् ॥

माहिष्य : । पुं॰ वर्णसङ्करजातिविशेषे । वैश्यायांक्षत्रियादुत्पन्ने ॥ नक्षत्रजीवनंनृत्यगीतिसस्यरक्षणम् । माहिष्याणांशुभावृत्तिः प्रोक्ताचोशनसाध्ययम् ॥

माहेन्द्र : । पुं॰ शुभदण्डविशेषे ॥ रव्यादिवारेषुवायुवरुणयमनैन्द्राणामेकैकदण्डोभवन्ति तत्रवरुणमहेन्द्रयोर्दण्डौशुभौ । वायुयमयोर्दण्डावशुभौ ॥ यथा । स्यात्तंवायवमासूर्येमावावयकलानिधौ । वयमावाकुजेश्च यामावावयसुधांशुजे ॥ गुरौवावयमाचैव॰मावावयतथाभृगौ । सूर्यपुत्रे यमावावघटीयुग्मंश्च

भाशुभम् ॥ माहेन्द्रेविजयोनित्यं-वारुणे चधनागम : । वायौचभ्रम-तेनित्यंयमेपिमरणंध्रुवम् ॥ त्रि॰ महेन्द्रसम्बन्धिनि ॥

माहेन्द्री । स्त्री॰ गवि ॥ शच्याम् ॥ अमरावत्याम् ॥

माहेय : । त्रि॰ मह्याअपत्ये ॥

माहेयी । स्त्री॰ गवि । सौरभेय्याम् ॥ मह्या : ॰ गोत्रापत्यम् । स्त्रीभ्योढक् ॥ मह्यतेपूज्यते : मह॰पुंसीति॰खनोघचेतिबाध : । मह्याया-अपत्यम् । ढक्॰इतिस्वामी ॥

माहेशी । स्त्री॰ दुर्गायाम् ॥ यथा । महादेवात्समुत्पन्नामहेशि : प्रोच्यतेयत : । माहेश्वर्यातनुर्यस्यामाहेशीतेनसास्मृता ॥ ( * ) ॥ ॥

माहेश्वर : । त्रि॰ कौलिके । जीवन्मुक्ते । यथा । धर्मैर्माहेश्वरै : स्वार्थ प्रत्यभिज्ञानशालिभि : । स्वपरिज्ञानमात्रेणजीवन्मुक्ताभवन्तिहि ॥ अस्माकमानन्दितमानसानांमाहेश्वराणांविबुधा : प्रयान्त्विति च ॥ महेश्वरसम्बन्धिनि ॥ तस्येदमित्यण् । न॰उपपुराणविशेषे ॥

माहेश्वरपदम् । न॰ तीर्थविशेषे ॥

माहेश्वरी । स्त्री॰ दुर्गायाम् ॥ मातृभेदे । यवतिक्तायाम् ॥ त्रिषौ ॥ यथाकौर्मे ४ ८ ध्याये । अयंनारायणोगौरीजगन्मातासनातन : । विभज्यसंस्थितोदेव : स्वात्मानंबहुधेश्वर : ॥ नमेविदु : परंतत्त्वंदेवाद्यानमहर्षय : । एकोयंदेवदेवात्माभवानीविष्णुरेवचेत्यादिवचनात् । शिवशक्त्याम् ॥ महेश्वरस्येयम् । अण् । ङीप् ॥ तीर्थविशेषे ॥

मित : । त्रि॰ ज्ञाते ॥ निश्चिते ॥ परिच्छिन्ने ॥ मीयतेस्म । मा॰माङ्॰मेङ्प्रणिदानेवा । क्त : । द्यतिस्यतीतीकारान्तादेश : । ( * ) ॥

मितङ्गम : । पुं॰ दन्तावले । हस्तिनि ॥ मितङ्गच्छति । गम्लृ॰ । गमे : सुपिवाच्यइतिखच् । खितिमुम् ॥ स्त्री॰ टाप् ॥ त्रि॰ परिमितगामिनि ॥

मितद्रु : । पुं॰ समुद्रे ॥ मितंद्रवति । द्रु॰ । हरिमितयोर्द्रुवइतिकु : ॥

मितम्पच : । त्रि॰ किम्पचाने ॥ कृपणे ॥ दुर्गते ॥ मितम्पचति । मितनखेचेतिमितोपपदात्पचे : कर्त्तरिखश् । मुम् ॥

मिताशन : । त्रि॰ युक्ताहारे । परिमितभोजिनि ॥ मितमशनंयस्य स : ॥

मिति : । स्त्री॰ ऐयत्ये । अवच्छेदे ॥ माने ॥ विज्ञाने ॥ मानम् । माङ्॰ । क्तिन् । द्यतिस्यतीतीत्त्वम् ॥

मित्र : । पुं॰ द्युमणौ । सूर्ये ॥ न॰

सुहृदि । सख्यौ । मीत० इ० भा०
॥ यथा । सार्थः प्रवसतो मित्रं भा
र्यामित्रं गृहेसत: । आतुरस्यभिष
ङ्मित्रं दानंमित्रं मरिष्यत: ॥ इ
ति । अपिच । सन्त्याग: सहनोबन्धु:
सदैवानुगत: सुहृत् । एकक्रियो
भवेन्मित्रं समप्राण: सखाभवेत् ॥
इतिभेदस्त्वविवक्षित: ॥ स्नेहेनो
पकर्त्तरि । प्रीतिकारके । तच्चतु
र्विधं यथा । सहार्थीभजमानस्य
सहज: कृत्रिमस्तथा । तिभेदात् ॥
नकश्चित्कस्यचिन्मित्रं नकश्चित् क
स्यचद्रिपु: । कारणादेवजायन्ते
मित्राणिरिपवस्तथा ॥ साध्वीर्यान
मदं कुर्यात्मसुखीतृष्णयोज्झित:
। तन्मित्रं यस्यविश्वास: पुरुष:
सजितेन्द्रिय: ॥ सर्वथासुकरं मि
त्रं दुष्करं परिपालनम् । अनित्यत्वा
द्धिचित्तानांप्रीतिरल्पेपिभिद्यते ॥
शत्रो: परस्मिन् । स्वदेशाऽव्यवहित
राजात् परस्मिन् ॥ विषयानन्तरो
राजाशत्रुर्मित्र मत: परमित्य
मरोक्त: ॥ हिरण्यभूमिसम्प्राप्
त्यापार्थिवोनतथेधते । यथा मि
त्रं ध्रुवंलब्ध्वाकृशमप्यायतिक्षमम् ।
धर्मज्ञञ्चकृतज्ञञ्चतुष्टप्रकृतिमेवच ।
अनुरक्तं स्थिरारम्भं लघुमित्रं प्रशस्य
ते । मेद्यति । ञिमिदाक्त्वे हनं
अमिचिमिदिशसिभ्य: क्त्रइतिक्

त्र: । यद्वा । मितात्त्रायते ।
त्रैङ्पालने । सुपीतिक: ॥ अष्ट
मतारायाम् ॥ अनुराधानक्षत्रे ॥
सर्वभूतात्मकेतातजगन्नाथे जगन्म
ये । परमात्मनिगोविन्दे मित्रामि
त्रकथाकुत: ।

मित्रद्रोही । त्रि० नरकाधिकारिविशे
षे । मित्रद्रुहि ॥ यथा । मित्रद्रोही
कृतघ्नश्च चविश्वासघातका: । ते
नरानरकं यान्तियावच्चन्द्रदिवाकरा
वितिसमं मिरोपाख्यानम् ॥

मित्रध्रुक् । पुं० मित्रद्रोहिणि । मित्र
स्यापकारके ॥ मित्रंद्रुह्यति । द्रुह:
सत्सूद्विषेतिक्विप् ॥

मित्रयु: । पुं० लोकयात्राभिज्ञे ॥
। त्रि० मित्रवत्सले । क्याच्छन्दसी
त्यु: ॥ यद्वा मित्रंयाति । या०
। मृगय्वादित्वात्कु: ॥

मित्रयुद्धम् । न० मल्लयुद्धिकायाम् । सु
हृत्संग्रामे ।

मित्रलब्धि: । स्त्री० )

मित्रलाभ: । पुं० ) सुहृत्प्राप्तौ ॥

मित्रवत्सल: । त्रि० मित्रप्रिये । मित्र
यौ ॥ मित्रंवत्सलं यस्यस: ॥

मित्रा । स्त्री० सुमित्रायाम् । शत्रुघ्न
मातरि ॥

मित्रावरुणीयम् । न० मित्रावरुणस्येक्ष्ट
त्विग्विशेषस्यकर्मभावयो: ॥ छो
ताभ्यश्छ: ॥

मिथः । अ० अन्योन्यस्मिन् । सहार्थे ॥ रहोर्थे ॥ मेथति । मेथृमङ्गमे । असुन् । पृषोदरादित्वात् रूपम् ॥

मिथिः । पुं० मिथिराजपुत्रे । जनके ॥

मिथिला । स्त्री० जनकपुर्याम् ॥ विदेहायाम् ॥ देशविशेषे । तैरभुक्ति । तिरहुत० इ० भा० प्र० ॥ यथा । गण्डकीतीरमारभ्य चम्पारण्यान्तकं शिवे । विदेहभूः समाख्याता तैरभुक्ताभिधः सतु ॥ मथ्यंतेरिपवोऽत्र । मथ विलोडने । मिथिलादयश्चेतीलच् । अकारश्चेत्त्वंनिपातनात् ॥

मिथु । अ० द्वाविस्यर्थे ॥

मिथुनम् । न० स्त्रीपुंसयोर्युग्मे । इमृहे । युगले ॥ जुगल० जोडी० इ० भा० ॥ द्वयोः ॥ सुरते । द्वन्द्वजनिते सुखे ॥ तृतीयराशौ । मिथुने ॥ मिथुनलग्नजस्य फलं यथा । मिथुनोदयसञ्जातोमानीस्वजनवत्सलः । त्यागीभोगीधनीकामीदीर्घसूत्रोरिमर्दनः । मेथति । मिथृसङ्गमेच । क्षुधिपिशिमिथिभ्यः कित् । उनन् उपसर्गविशिष्टधातौ । सम्बन्धे ॥

मिथुनाधिपः । पुं० बुधग्रहे ॥

मिथो । अ० रहसि ॥ सहार्थे । अन्योन्यस्मिन् ॥ मेथति । मेथृ० । बाहुलकादोः । पृषोदरादित्वाद्रूपम् ॥

मिथ्या । अ० अनृते । वितथे ॥ प्रागभावयुतत्त्वेसत्यचिन्त्यत्त्वमथाख्यं मिथ्यात्त्वमितिमिथ्यालक्षणम् ॥ यदसद्वासमानं तन्मिथ्यास्वप्नगजादिवदितिच ॥ स्त्री० अधर्मपत्न्याम् ॥ यथा । अधर्मपत्नीमिथ्यासासर्वधूर्तैश्चपूजिता । ययाविनाजगत्सर्वंमुच्छिन्नं विधिनिर्मितम् ॥ मिथ्ययाविनाधूर्त्तसमुदायरूपमुच्छिन्नंभवति । मिथ्याभाषणाभावेधूर्त्तत्वस्याभावात् इत्यर्थः । सत्येचादर्शनायाचमेतायांमृषारूपिणी । अर्द्धावयवरूपाचद्वापरे चैवसंवृता ॥ कलौमहाप्रगल्भाचसर्वव्यापिकाबलात् । कपटेनसमंभ्रात्राभ्रमत्यत्र गृहेगृहे इति ॥ मथ्यते । मथ० । अघ्न्यादित्वात्साधुः ॥

मिथ्याचारः । त्रि० पापाचारे ॥ अत्युग्रभावेनफलायोग्यत्वात् ॥

मिथ्याज्ञानम् । न० भ्रमेद्वायत्पूर्वस्मिं० अन्यस्यान्यात्मताबभासे ।

मिथ्यादर्शनम् । न० शास्त्रोपपत्तिबाह्येतदर्शने ।

मिथ्यादृष्टिः । स्त्री० कर्मफलापवादकज्ञाने । नास्तिकतायाम् । मिथ्येत्यपक्षे० तद्विषयिणीदृष्टिर्ज्ञानम् । असत्यदर्शने ॥

मिथ्याध्यवसिति : । स्त्री॰ मिथ्याध्यवसाये ॥

मिथ्यानिरसनम् । न॰ शपथे ॥

मिथ्याप्रयुक्त : । त्रि॰ यद्दर्थं प्रतिपादनायप्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात्प्रतिपादयति । शब्दे ॥

मिथ्याभियोग : । पुं॰ अभ्याख्याने । शतं मेधारयसीत्यादिमिथ्योद्भावनरूपे॰ मिथ्यापवादे ॥ मिथ्याचासावभियोगश्च ॥

मिथ्याभिशंसनम् । न॰ अभिशापे । । स्वर्णस्तेयं त्वयाकृतमित्यादिमिथ्यास्तेयादिसाधनरूपे मिथ्यारोपवाक्ये ॥ अभिशंसेभावे ल्युट् ॥

मिथ्याभिशाप : । पुं॰ मिथ्यापवादे ॥ यथा । शुक्लपक्षे चतुर्थ्यान्तुसिंहे चन्द्रस्यदर्शनम् । मिथ्याभिशापं कुरुते नपश्येत्तत तत : ॥

मिथ्यामति : । स्त्री॰ भ्रान्तौ । भ्रमे ॥ मिथ्याचासौमतिश्च ॥

मिथ्याविनीत : । त्रि॰ कपटेनविनयिनि ॥

मिथ्यासाक्षी । त्रि॰ कूटसाक्षिणि ॥ तस्यज्ञानप्रकारमाहयाज्ञवल्क्य : । उक्ते पिसाक्षिभि : साक्ष्ये यद्यन्ये गुणवत्तमा : । द्विगुणावान्यथाब्रू यु : कूटा : स्यु : पूर्वसाक्षिण : ।

मिथ्योत्तरम् । न॰ चतुर्विधोत्तरान्तर्गतोत्तरविशेषे ॥ तल्लक्षणंयथा । अभियुक्तोऽभियोगस्ययदिकुर्यादपह्नवम् । मिथ्यातत्तुविजानीयादुत्तरं व्यवहारत : ॥ तच्चतुर्विधंयथा । मिथ्यैतन्नाभिजानामि ममतत्रन संनिधि : । अजातश्चास्मितत्काले॰ इतिमिथ्याचतुर्विधम् ॥ इतिव्यवहारतत्त्वं ॥

मिथ्योपलब्धि : । स्त्री॰ मायागन्धर्वनगरादिज्ञाने ॥ मिथ्याचासावुपलब्धिश्च ॥

मिद्धम् न॰ चित्ताभिसङ्क्षेपे ॥ आलस्ये ॥ चित्ते ॥ निद्रायाम् ॥

मिन्मिन : । त्रि॰ सानुनासिकवाग्विशिष्टे । गुनगुना॰ इ॰ भा॰ । खोना॰ इ॰ गौ॰ दे॰ भा॰ । सींमणा इ॰ पर्वतीयभाषा ॥ अस्यनिदानन्तु । आवृत्त्यवायु : सकफोधमनी: शब्दवाहिनी : । नरान्करोत्यक्रियकान्मूकमिन्मिनगद्गदान् ।

मिमङ्क्षु : । त्रि॰ मङ्क्तुमिच्छौ ॥ मस्जे : सन्नन्तादुप्रत्यय : ॥

मिमन्थिषु : । त्रि॰ मथितुमिच्छौ ॥ मथे : सन्नन्तादु : ॥

मिमान : । त्रि॰ मानङ्कुर्वाणे ॥ माङोलट : शानजादेश : । श्नाविति द्विर्भाव : ॥

मिम्मिण : । त्रि॰ )
मिम्मिन : । त्रि॰ ) मिन्मिने ॥

मिलित : । त्रि॰ सङ्गते । युक्ते ॥ मिश्रिते ॥ श्लिष्टे । सम्बन्धविशिष्टे ॥ मिलसंश्लेषे । कर्त्तरिक्तः ॥

मिशि : । स्त्री॰ जटामांस्याम् ॥ मधुरिकायाम् । धानसौंफ॰ इ॰ भा॰ ॥ मिशति । मिश॰ । इन् ।

मिशी । स्त्री॰ जटामांस्याम् ॥ मधुरायाम् ॥ धानसौंफइतिभाषा ॥ मिशति । मिश॰ इन् । क्लदिकारादितिङीष् ॥

मिश्र : । पुं॰ गजजातिविशेषे ॥ यथा । भद्रोमन्द्रोमृगोमिश्रश्चतुर्द्धागजजातय : ॥ न॰ विशेषनचत्रसंज्ञायाम् ॥ यथा । छिद्रेवोकृत्तिकाचैवमिश्रंसाधारणंबुध : । एषुमिश्राणिकार्याणिवृषोत्सर्गादिकंतथा । चाणक्यमूलकं ॥ मिश्रफले ॥ त्रि॰ आर्य्ये । श्रेष्ठे ॥ संयुक्ते । सम्पृक्ते । मिश्रिते ॥ मिश्रयति । मिश्र॰ । अच् ।

मिश्रकम् । न॰ तीर्थविशेषे । देवोद्याने ॥ औषरलवणे ॥

मिश्रकावणम् । न॰ इन्द्रस्योद्याने । नन्दनवने ॥ मिश्रकाणांवनम् । वनगिर्यो : संज्ञायांकोटरकिंशुलुकादीनामितिदीर्घ : । वनंपुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्य इतिणत्वम् ॥

मिश्रज : । पुं॰ अश्वतरे । खेसरे ॥

मिश्रणम् । न॰ एकत्रीकरणे । संयोजने ॥ मिश्र॰ । ल्युट् ॥

मिश्रपुष्पा । स्त्री॰ मेथिकायाम् ॥

मिश्रफलम् । न॰ इष्टानिष्टसंयुक्ते मानुष्यलक्षणे पापपुण्ययुगलस्यफले ॥ मिश्रश्चतत्फलञ्च ।

मिश्रवर्णम् । न॰ कृष्णागुरुणि ॥ त्रि॰ नानावर्णयुक्ते ॥

मिश्रवर्णफला । स्त्री॰ वार्त्ताक्याम् ॥

मिश्रशकुनम् । न॰ शुभाशुभयो : सूचकेनिमित्ते ॥ यथा । वदन्तिवामंरुदितंप्रशस्तमदृष्टदेहोयदिरोदितास्यात्निन्दन्त्यवामंपथिसर्वकामान् शुभंविधत्तरुदितंरजन्याम्मृत्यु : सुतानांरुदितनपृष्ठे लाभोभवेत्तत्र निवर्त्तनेन । मृत्युस्तथाग्रेरुदितनगन्तु : सिद्धिंविधत्तरुदितंरिपूणाम् ॥ उग्रंभवेद्रोदनमग्रभागेभयंभवेद्वह्निविभागभूते । नैऋत्यकोणेरणमागरोधोवायव्यकोणे रुदितंसमृद्धौ ॥ पृष्ठांशयोर्दक्षिणवामयोश्चसिद्धि : सदातोरणरोदनेन । शुभोपिसम्यग्यदिरोदनार्थोज्ञातोत्रिभाव्य : सपुनस्तथापि ॥ यद्बालकैनोक्रमनरुदितेनतत्स्यात्सत्यंनयुगान्तरेपि । क्षुतंनकार्य्यक्वचिदेवशस्तंगवांक्षुतम्प्राणहरंमतन्तु ॥ निषिधमग्रेऽक्षिणिदक्षिणे चधनक्षयंदक्षिण-

कर्णदेशे । तत्पृष्ठभागे कुरुते ऽरिष्ट- हिंसुतं कुरुकाम्याशुभमादधाति ॥ भोगायवामश्रवणस्य पृष्ठे कर्णे च वामेकथितंजयाय । सर्वार्थलाभा- यचवाममेनेत्रजातं चुतं यात्क्रमतो ऽष्टधैव ॥ क्रमान्निषेधंगमनस्य विघ्नं- कालंसमृद्धिंचुतमुग्ररोगम् । करो- तिरोगचयमर्थलाभंदीप्तादिदिक्चुत्यु तमुन्नतंसत् ॥ औषधेवाहनारोहेवि वादेशयनेऽशने । विद्यारम्भे बीज- वायेक्षुतंसप्तसुशोभनं ॥

मिश्रशब्द : । पुं० अश्वतरे ॥

मिश्रा । स्त्री० सङ्क्रान्तिविशेषे ॥ भृ गौमिश्रमेसाभवेदेवमिश्रापशूनांसु- खं तत्रविद्वद्भिरुक्तम् ॥

मिश्रिका । स्त्री० मिश्रायाम् ॥ मिश्रे- वस्वार्थेक : ॥

मिश्रित : । त्रि० गौरविते ॥ मिलिते । युक्ते ॥ ( * ) ॥ ॥

मिश्रिता । स्त्री० सङ्क्रान्तिविशेषे । मिश्रायाम् ॥ मिश्रिताचैवविज्ञेया मिश्रितर्क्षेस्तुसङ्क्रमे ॥

मिश्रेया । स्त्री० मधुरिकायाम् । सौं फ० धनसौंफ० धन्सावा० इ० भा० ॥ शतपुष्यायाम् । तालपर्ण्याम् । व- नजायाम् । अवाक्पुष्प्याम् । सं- हितपुष्पिकायाम् । सलुफा० इ० - गौ० दे० भा० ॥ मिश्रेयातद्गुणाप्रो- क्ताविशेषाद्योनिशूलनुत् । अग्निमा न्द्यहरीहृद्याबद्धविट्क्रमिशुक्रहृत् ॥ रूक्षोष्णापाचनीकासवमिश्लेष्मानि लानहरेत् ॥ तद्गुणा० मधुरिका- पर्यायशतपुष्पागुणा ॥ मिश्रयति । मिश्र० । अच् । ईयते । ईङ्० । पचाद्यच् । मिश्राचासावेयाच । शकन्ध्वादि : ॥

मिष : । पुं० स्पर्द्धने ॥ न० व्याजे ॥ मिषति । मिष० । क : ॥

मिषन् । त्रि० पश्यति ॥

मिषि : । स्त्री० मधुरिकायाम् ॥ शत पुष्पायाम् । जटामांस्याम् ॥

मिषिका । स्त्री० जटामांस्याम् ॥

मिषी । स्त्री० मिस्याम् ॥

मिष्ट : । पुं० मधुररसे ॥ नूतनसर्पि- पशाकंनवौदनं पिच्छिलानिचदधी नि । अल्पव्ययेसुन्दरिग्राम्यजनो- मिष्टमश्नाति ॥ त्रि० मधुररसवि- शिष्टे ॥

मिष्टनिम्बुकम् । न० मीठा० नीम्बू० इतिप्रसिद्धेफले । मिष्टनिम्बुफलं स्वादुगुरुमारुतपित्तनुत । गरारग- विषध्वंसिकफोत्क्लेशिचरक्तहृत् । शोषारुचितृषाच्छर्दिहरंबल्यञ्चबृंह णम् ॥

मिष्टान्नम् । न० मधुरद्रव्ये ॥ मिष्टान्न पानदाताथसततंश्रद्धयान्वित : । दे वपूजापरोनित्यंनप्रेतोजायतेमृ- त : ॥

मिसि : । स्त्री॰ मधुरायाम् ॥ जटामांस्याम् ॥ शतपुष्पायाम् ॥ अजमोदायाम् ॥ मस्यति । मसीपरिणामे । सर्वधातुभ्यइन् । बाहुलकादत : स्यामेड् : ॥ उशीर्याम् ॥

मिसी । स्त्री॰ मिसी । तपस्विन्याम् । जटामांस्याम् । मस्यति । मसी॰ । इन् । कृदिकारादितिङीष् । पृषोदरादि : ॥

मिहिका । स्त्री॰ अवश्याये । नीहारे । तुषारे । मेहति । मिहसेचने । कुन् शिल्पिसंज्ञयोरितिकुन् ॥

मिहिर : । पुं॰ विकर्त्तने । अर्के । मार्त्तण्डे । सूर्ये ॥ मेघे ॥ बुद्धे ॥ मेहति मिह॰ । इषिमदिमुदिखिदीतिकिरच् ॥ वायौ ॥ इन्द्रे ॥

मिहिराण : । पुं॰ जगद्योनौ । शिवे ॥

मीढ : । त्रि॰ मूत्रिते ॥ मिह्यतेस्म । मिह॰ । क्त : ॥ सिक्ते ॥

मीढुष्टम : । पुं॰ शिवे ॥

मीढ्वान् । पुं॰ शिवे ॥ मीढ्वांसौ॰मीढ्वांस : इत्यादि ॥

मीत : । त्रि॰ हते ॥ मीयतेस्म । मी अहिंसायाम् । गत्यर्थेतिकर्त्तरिकर्म्मणिवाक्त : ॥

मीन : । पुं॰ मत्स्ये ॥ राशिविशेषे । अन्त्यभे । अक्षयातस्यफलंयथा । मीनलग्नेसमुत्पन्नोरत्नकाञ्चनपूरित : । अल्परोमामहाप्राज्ञोदीर्घकालपरीक्षक : । मीनाति॰मी यतेवा । मञ्॰ फेनमीनावितिनिपातित : ॥ भगवतोविष्णो : प्रथमावतारे ॥ प्रकृतिर्विष्णुरूपाच पुंरूपश्चमहेश्वर : । एवंप्रकृतिभेदेनभेदास्तुप्रकृतेर्दश ॥ कृष्णरूपा कालिकास्याद्रामरूपाचतारिणी । बगलाकूर्म्ममूर्त्ति : स्यान्मीनोधूमावतीभवेत् । छिन्नमस्ता नृसिंह : स्याद्वराहश्चैवभैरवी । सुन्दरीजामदग्न्य : स्याद्वामनोभुवनेश्वरी ॥ कमलाबौद्धरूपास्यात्मातङ्गीकल्किरूपिणी । स्वयंभगवतीकालीकृष्णस्तुभगवान्स्वयम् ॥ स्वयञ्चभगवान्कृष्ण : कालीरूपीभवद्व्रजे ॥

मीनकेतन : । पुं॰ प्रद्युम्ने । कन्दर्पे ॥ मीनशब्दोजलचरोपलक्षणार्थं : । मीनोमकर : केतनंध्वजोयस्यस: ॥

मीनगोधिका । स्त्री॰ जलाशये ॥

मीनघाती । पुं॰ बके ॥ त्रि॰मत्स्यघातके ॥

मीननेत्रा । स्त्री॰ गण्डदूर्वायाम् ॥

मीनर : । पुं॰ जलरूपे । मकरे । अतिदंष्ट्रके ॥

मीनरंक : । पुं॰ पक्षिविशेषे । मत्स्याशने ॥

मीना । स्त्री॰ उषाकन्यायाम् । कश्यपस्यभार्यायाम् ॥

ष्मोनिपातित: ॥
मीवर: । त्रि० हिंस्रे ॥ मीनाति । मीञ्० । छित्वरकत्वरेत्यादिना ष्वरच् ॥
मु: । पुं० बन्धने ॥ मरणे ॥
मुकु: । पुं० मुक्तौ ॥
मुकुटम् । न० शिरोभूषणे । किरीट ॥ मङ्कतेऽनेनवा । मकिमण्डने । बाहुलकादुटप्रत्ययोधातोरतउत्व ॥
मुकुटी । स्त्री० अङ्गुलिमोटने ।
मुकुटेश्वरी । स्त्री० मार्कोटस्थानस्थायांदेव्याम् ॥
मुकुन्द: पुं० विष्णौ । गरुडध्वजे ॥ मुकुमव्ययं नाम्नामुनिर्वाणमोक्षवाचकम् । तद्ददातिचयोदेवोमुकुन्दस्तनकीर्त्तित: इ० ब्र० वै० पु० निधिप्रभेदे ॥ रसविशेषे ॥ पारदे ॥ कुन्दुरौ ॥ मुक्तिंददाति । आतोनुपसर्गेक: । पृषोदरादि: ॥
मुकुन्दक: । पुं० षष्टिकव्रीहौ ॥ षष्टिक: शतपुष्पश्चप्रमोदकमुकुन्दकौ । महाषष्टिकइत्याद्या: षष्टिका: समुदाहृता: ॥
मुकुन्द: । पुं० कुन्दुरौ ॥
मुकुम् । अ० निर्वाणे । भक्तिरसे ॥ प्रेमणि ॥
मुकुर: । पुं० आदर्शे । दर्पणे ॥ वकुलद्रुमे ॥ कुलालदण्डे ॥ कोरके ॥ मुच्यतिज्योति: । मुच्लृ० । बाहुलकादुरच् ॥ यद्वा । मङ्कते मकि ० । मकुरदर्दुरावित्युरच् । नलोपश्च । बाहुलकात्पर्चे धातोरुपधायाउकारश्च ॥
मुकुल: । पुं० न० ईषद्विकासोन्मुखकलिकायाम् । कुड्मले । मुच्यति कलिकात्वम् । मुच्लृमोक्षणे । बाहुलकादुलक् । आत्मनि ॥ शरीरे ॥
मुकुलित: । त्रि० निमीलिते
मुकुलक: । पुं० दन्तिबृषे । निकुम्भे ॥ मङ्कते । मकि० । पिशादित्वादुलच् । स्वार्थेकन् । आगमशासनस्यानित्यत्वान्नुम् । पृषोदरादि: ॥
मुक्त: । त्रि० मोचिते ॥ उत्सृष्टे । त्यक्ते व्यपगतपाशे । विमुक्तमोहादिबन्धने । यमक्तोऽद्वैषसमुक्त: ॥ नितत्ताविद्ये । कर्तृत्वभोक्तृत्वाद्यध्यासशून्ये । कल्पितवियदादिप्रपञ्चनिरासाधिष्ठाने ॥ अस्यलक्षणमपियथा । कपालंवृक्षमूलानिकुचेलमसहायता । समताचैवसर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥ अस्यनमस्काराभावेभगवत्पूज्यपादैर्दर्शितोयथा । नामादिभ्य: परेभूम्निस्वाराज्येचेत्स्थितोऽद्वये । प्रणमेत्कन्तदात्मज्ञोनकार्यंकर्मणात देतिविज्ञायनामरूपाणिनित्यं ब्रह्म

चिनिस्यते । परिनिश्चिततत्त्वोय : समुक्त : कर्मबन्धनात् ॥ नमुक्तिर्जपनाद्धोमादुपवासशतैरपि । ब्रह्मैवाहमितिज्ञात्वामुक्तोभवतिदेहभृत् ॥ आत्मासाक्षीविभु : पूर्ण : सत्योऽद्वैत : परात्पर : । देहस्थोपिनदेहस्थोज्ञात्वैवंमुक्तिभाग्भवेत् बालक्रीडनवत्सर्वंरूपनामादिकल्पनम् । विहायब्रह्मनिष्ठोय: समुक्तोनात्रसंशयइतिश्रीमहानिर्वाणतन्त्रेकुलार्णवेर्मतीचतुर्दशोल्लास: ॥ मुच्यतेस्म । मुच्लृ० । क्त : ॥

मुक्तकञ्चुक : । पुं० निर्मुक्ते । अचिरत्यक्तनिर्मोकेसर्पे ॥ मुक्त : कञ्चुकोयेन ॥

मुक्तचक्षु : । पुं० सिंहे ॥ त्रि० मुक्तनेत्रे ॥

मुक्तबन्धन : । त्रि० त्यक्ताभिमाने ॥ त्यक्तपाशे ॥ मुक्तंबन्धनंयेनयस्य वा ॥

मुक्तरसा । स्त्री० रास्नायाम् ॥ त्रि० त्यक्तरसे ॥

मुक्तसङ्ग : । त्रि० त्यक्तफलाभिसन्धौ ॥

मुक्तस्वाप : । त्रि० त्यक्तनिद्रे ॥

मुक्ता । स्त्री० मौक्तिके । इन्दुरत्ने । मोतिये । मोती० इ० भा० प्र० रत्ने मुच्यतेस्म । मुच्लृ० । क्त: ॥ अपगतपाशायां । पुंश्चल्याम् ॥

मुक्ताकलाप : । पुं० मुक्ताहारे ॥

मुक्तागारम् । न० शुक्त्याम् । मुक्ताया अगारम् ।

मुक्तागारा । स्त्री० पुंश्चल्याम् ॥ मुक्तंत्यक्तमगारंयया सा ॥

मुक्तापुष्प: । पुं० कुन्दवृक्षे ॥ मुक्तेवपुष्पाण्यस्य ॥

मुक्ताप्रसू : । स्त्री० शुक्तौ । मुक्ताया : प्रसू : ॥

मुक्ताप्रालम्ब : । पुं० मुक्ताहारे ॥

मुक्ताफलम् । न० घनसारे । कर्पूरे ॥ लवलीफले ॥ मौक्तिके ॥ गजेन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानिप्रथितानिलोकेतेषान्तुशुक्त्युद्भवमेवभूरि । विशेषोन्यत्रगरुडपुराणादौद्रष्टव्य : । अथवाराह्युक्तंलक्षणादिकंयथा। द्विपभुजगशुक्तिशङ्खाभ्रवेणुतिमिसूकरप्रसूतानि । मुक्ताफलानितेषांबहुसाधुचशुक्तिजंभवति ॥ सिंहलकपारलौकिकसौराष्ट्रिकताम्रपर्णिपारशवा : । कौवेर्यपाण्ड्यहाटकहैमकइत्याकरास्त्वष्टौ ॥ बहुसंस्थाना : स्निग्धाहंसाभा : सिंहलाकरा : स्थूला : । ईषत्ताम्रा : श्वेतास्तमोवियुक्ताश्चताम्राख्या : ॥ कृष्णा : श्वेता : पीता : सशर्करा : पारलौकिकाविषमा : । नस्थूलानात्यल्पामधुनीतनिभाश्चसौराष्ट्रा : ॥ ज्योतिष्मन्त : शुभागुरवोऽतिमहागुणाश्चप्रावराश्च

तापःकिन सं योऽस्य कुर्याद्यत्नतः तुर्मा. हकान् । लघुर्याही विद्धावघ्न: स्वादुः शीतो रुचिप्रदः अपर्थ्या स्वरहृहृल्ल्यसन्पर्श्यो मङ्गमेदृक ॥
मुक्तालता । स्त्री० मुक्ताहारे ।
मुक्तावली । स्त्री० मुक्तामालायाम् मुक्तानामावलीदीर्घा-इक्ति: ॥
मुक्तास्फोटः । पुं० शुक्तौ । मुक्तोत्पादिकायांशुक्तौ ॥ मुक्ताः स्फुटन्त्यस्मात् । इत्यर्थेतिघञ् ॥
मुक्तास्फोटा । स्त्री० शुक्तौ ॥
मुक्तिः । स्त्री० कैवल्ये । निर्वाणे । श्रेयसि निःश्रेयसे । अमृते । मोक्षे । अपवर्गे । स्वरूपावस्थाने । अज्ञाननिवृत्तिलक्षणायांसिद्धौ ॥ मुक्तौतमोतिरेकेणनान्यराये न्यद्ध्यते । यतोऽज्ञानविध्वस्तोमुक्तः सन्न वमुच्यते ॥ साचपुण्यैर्विनालभ्यतेऽत्याहुराचार्याः यथा । जन्तूनांनरजन्मदुर्लभमतः पुंस्त्वं ततोविप्रतातस्माद्वैदिकधर्ममार्गपरतांविदत्स्वमस्मात्परम् । आत्मानात्मविवेचनंस्वनुभवोब्रह्मात्मनासंस्थितिर्मुक्तिर्नोशतकोटिजन्मसुकृतैः पुण्यैर्विनालभ्यतेइति ॥ मोचनम् । मुच्लृमोचणे । भावेक्तियांक्तिन् ॥ मुक्तिः पञ्चविधेति पौराणिकाः । यथा सालोक्यंचापिसारूप्यंसाष्ट्यंसायुज्यमेवच । कैवल्यंचेतितांविद्धिमुक्तिंराघवपञ्चधां ॥ अपिच । साष्टिंसारूप्यसालोक्यसामीप्यैकत्वमप्युत । दीयमानं नगृह्णन्तिविनामत्सेवनं जना: ॥ इतिभागवता: ॥ मुक्तिस्तुद्विविधामाध्विकैरुक्ता । सर्वसम्मता । निर्वाणपदहात्रीचहरिभक्तिप्रदानृणाम् ॥ हरिभक्तिस्वरूपांचमुक्तिंवाञ्छन्तिवैष्णवा: । अन्ये निर्वाणरूपांचमुक्तिमिच्छन्तिसाधव: । इ० ब्र० वै० पुं० ॥ आत्यन्तिकदुःखनिवृत्तिरितिनैयायिका: ॥ प्रकृतिपुरुषयोर्विवेकग्रहणात्मुक्तिरितिसाङ्ख्या: ॥ प्रकृतावुपरतायांपुरुषस्यस्वरूपेणावस्थानंमुक्तिरितिसाङ्ख्यसिद्धान्त: ॥
मुक्तिद: । त्रि० कैवल्यप्रदे ॥
मुक्तिदा । स्त्री० गुरुचाचि ॥
मुक्तिभाक् । त्रि० मुमुक्षौ । मुक्ताधिकारिणि ॥ ब्रह्मज्ञानाहतेदैदिककर्मसन्न्यसनंविना कुर्वन्कल्पशतंकर्म्मनभवेन्मुक्तिभाग्जन: ॥
मुक्तिमण्डप: । पुं० काश्यांविश्वेश्वरस्यदक्षिणपार्श्वस्थमण्डपे ॥ यथा । निमिषमात्रंस्थितचित्तवृत्तास्तिष्ठन्तियेदक्षिणमण्डपेच । अनन्यभावाश्चपिगाढमानसानतेपुनर्गर्भदशामुपासते ॥
मुक्तिमुक्त: । पुं० गन्धद्रव्यविशेषे । तुरुष्के । सिह्लकी । सिलारस० लोबा

न॰ कृ॰भा॰ प्र॰ ॥

मुक्तियुक्त : । स्त्री॰ मुक्तिबोधनप्रकार

मुख : । पुं॰ डशी । लकुचे । वडश्ल॰कृ॰भा॰ ॥

मुखम् । न॰ शरीरावयवविशेषे । वक्त्रे । आस्ये । वदने । तुंडे । आनने । लपने ॥ तत्स्वरूपंयथा । ओष्ठौचदन्तमूलानिदन्ताजिह्वाचतालु च । गलोगलादिसकलंसप्तांगमुखमुच्यते ॥ कथयस्तुललाटादिचिबुकान्तरूमुदायेप्रयुज्यते ॥ निर्गमे । निःसरणे । गृहस्यनिर्गमनप्रवेशनयोर्वर्त्मनि ॥ प्रारम्भे ॥ उपाय ॥ नाटकादेः सन्धिविशेषे ॥ शब्दे ॥ त्रि॰श्रेष्ठे ॥ खन्यते । खनुअवदारणे । डित्खनेर्मुट्चोदात्तइत्यच॰आदेर्मुडागम :

मुखकमलम् । न॰ वदनारविन्दे ॥ मखंकमलमिव । उपमितसमास: ॥

मुखगन्ध : । पुं॰ मुखामोदे ॥

मुखगन्धक : । पुं॰ पलाण्डौ ॥

मुखघण्टा । स्त्री॰ हुलहुल्याम् । मङ्गलकर्मणिस्त्रीणांमुखध्वनिविशेषे । उलूलौ । हुलु॰कृ॰गौ॰भा॰ ॥

मुखचपला । स्त्री॰ आर्याप्रभेदे ॥ आद्यंदलंसमस्तंभजेत्लक्ष्मचपलागतं यस्या : । शेषेपूर्वजलक्ष्मामुखचपलासेतिदितामुनिना ॥ यथा । मन्दस्मितवश्वकस्त्वंदृष्टंमतिप्रिमगच्छतचैव । यत्रभवतितेरागः कापिञ्जलगादेतिमुखचपला ॥

मुखचौरी । स्त्री॰ रसनायाम् । जिह्वायां ॥

मुखतोय : । त्रि॰ मुखशीलादाद्ौ ॥ आद्यादित्वात्तसौ॰मुखपार्श्वतसीर्लोपश्चेतिङ : ॥

मुखदूषण : । पुं॰ पलाण्डौ ॥

मुखधावनम् । न॰ आस्यप्रक्षालने ॥ पटोलनिम्बजम्वाम्रमालतीनवपल्लवै : । पञ्चपल्लवज : श्रेष्ठ: कषायो मुखधावने ॥

मुखधौता । स्त्री॰ ब्राह्मणयष्टिकायाम् ॥

मुखनिरीक्षक : । पुं॰ अलसे ॥

मुखपूरणम् । न॰ गण्डूषे ॥

मुखप्रिय : । पुं॰ ऐरावते । नागरङ्गे ॥

मुखभूषणम् । न॰ ताम्बूले ॥

मुखमण्डनक : । पुं॰ तिलकवृक्षे । त्रि॰ आस्यभूषणे ॥

मुखामोद : पुं॰ शोभाञ्जने ॥

मुखयन्त्रणम् । न॰ कविकायाम् । खलीने ॥

मुखयोनि : । पुं॰ आसेव्ये ॥

मुखर : । त्रि॰ दुर्मुखे । अबद्धमुखे । अप्रियवादिनि ॥ निन्दितंमुखमस्य । रप्रकरणे खमुखकुञ्जेभ्यश्च प्रसङ्ख्यानम् । मुखशब्दोबलस

ब्याधिघ्नपर : ॥ भिरज्जरसाविति ॥ मुखं वागस्यास्ति । पूर्वैवत् ॥ शब्दायमाने ॥ यथा । मुखरमृदु खलकपिं पवृति ॥ पुं॰ काके ॥ श ङ्खे ॥

मुखरता । स्त्री॰ वाचालतायाम् ॥ भावे तल् ॥

मुखरिका । स्त्री॰ वचने ॥

मुखरित : । त्रि॰ कीर्त्तिते ॥ प्रकटि ते ॥ यथा । सम्मुखरितम् ॥

मुखरोग : । पुं॰ वक्त्रामये ॥ मुखरो गाणांनिदानं यथा । अनूपपिशित क्षीरदधिमाषादिसेवनात् । मुख मध्ये गदान्कुर्युः क्रुद्धादोषाकफो त्तरा : । तेषां सङ्ख्या यथा । षु रष्टावोष्ठयोर्दन्तमूलेतु दशपट् तथा । दन्तेष्वष्टौरसनायां पञ्च स्युर्नवतालु नि कण्ठे स्वष्टादशप्रोक्तास्त्रय : सर्वसरा : स्मृता : । एवं मुखाम या : सर्वे सप्तषष्टिर्मतावुधै : ॥ त त्रपुनीयकगोच्छुरमूलं पीतं पयोन्वि तम् । कामलादिहरं प्रोक्तं मुखरोग हरं तथा ॥ शुष्कमूलकशुण्ठीनांक्षा रोहिङ्गुलनागरम् । शुष्कंचतुर्गुणं दद्यात्तैलमेतद्विपाचयेत् ॥ बा धिर्यकर्णशूलघ्नपूयस्रावककर्णयो : । पूयस्रावस्ततैलक्षमय: कर्णयो: स्थिता : ॥ क्षिप्रं विनाशमायान्ति मुखाद्यकृतमीश्वर । वारतैलमिदं

श्रेष्ठं मुखदन्तामयापहम् ॥

मुखलाङ्गल : । पुं॰ शूकरे । कोले । भूदारे ॥ मुखंलाङ्गलंयस्य ॥

मुखप्रभ : । पुं॰ दाडिमवृक्षे ॥ त्रि॰ मुखप्रिये ॥

मुखवाचिका । स्त्री॰ अम्बष्ठायाम् ॥

मुखवाद्यम् । न॰ वक्त्रनालवाद्ये । बांकबुंतिगौ॰ भाषाप्रसिद्धे ॥ मु खस्य॰मुखेनवबाद्यं ।

मुखवास : । पुं॰ गन्धतृणे ॥

मुखवासन : । पुं॰ मुखसद्गन्धकारक द्रव्ये । आमोदिनि । मुखंवासय ति । वस॰ । नन्द्यादित्वात् ल्युः ॥

मुखविलुण्ठिका । स्त्री॰ अजायाम् । छाग्याम् ।

मुखविष्ठा । स्त्री॰ तैलपायिकाया म् ।

मुखशफ : । पुं॰ दुर्मुखे ॥

मुखशुद्धि : । स्त्री॰ वक्त्रशोधने । यथा । अभावेदन्तकाष्ठानांप्रतिषि द्धदिनेतथा । अपांद्वादशगण्डूषैर्मु खशुद्धिर्विधीयते ॥

मुखशोधन : । पुं॰ कटुरसे ॥ न॰ त्वचि ॥

मुखशोधी । स्त्री॰ जम्बीरे ।

मुखशील : । त्रि॰ दुर्मुखे ॥

मुखसम्भव : । पुं॰ ब्राह्मणे । मुखा त्सम्भवोऽस्य ॥

मुखसिव : । पुं॰ मुखकम्मंणि सिद्धे

षु ॥ यथोक्तं रैवतोत्तरे । सदाध

राष्टमितफेनबलाभिरामफूत्कारवा

युप्रदममन्नतकन्धरायम् । नीत्वोप

कुप्ततमुखेनवलोइसाम्यमप्ल ष्टतु

ष्वाममयेमुखसिद्धमाहुरिति ॥

मुखसूरम् । न॰ तालव्याम् । आरा

सवे । तोडी॰ बृ॰ प्रसिद्धमद्ये ॥

गण्डूषमद्ये ॥ मुखसुरा । विभा

षास मासुरेतिक्लीवता ॥

मुखस्राव : । पुं॰ लालायाम् । चा

ला॰ बृ॰ भा॰ ॥

मुखाग्नि : । पुं॰ दावाग्नौ ॥

मुखामय : । पुं॰ मुखरोगे ॥

मुखार्जक : । पुं॰ अर्जके । श्वेतप

र्णासे ॥

मुखास्व : । पुं॰ कर्कटे ॥

मुखाल्का । स्त्री॰ दावाग्नौ । भृतस

[illegible] [illegible]

मुख्य : । पुं॰ [illegible] दाविधौ । शास्त्रोक्त

[illegible] यथा । [illegible]

[illegible] मार्थ यथास्यतादर्थ्यं

[illegible] । सं मुख्यमर्थं मन्यन्ते ॥

त्रि॰ [illegible] । वरे । प्रधाने ॥ मुखे

[illegible] [illegible]शादित्वाद्य : ॥ मुखा

त्यत् । मुखेभव : । दिगादित्वा

द्यत् ॥

मुख्यक्रम : पुं॰ प्रमाणविशेषे । प्रधान॰

क्रमेणयोङ्गानांक्रम : समुख्यक्रम: ।



येनहिक्रमेणप्रधानानिक्रियन्ते तेने

वक्रमेण॰तेषामङ्गान्यनुष्ठीयन्ते॰

तदासर्वेषामङ्गानांस्वै : स्वै : प्रधा-

नैस्तुल्य व्यवधानंभवति । व्युत्क्र-

मेणानुष्ठानेकेषांचिदङ्गानांस्वै : प्र-

धानैरत्यन्तमव्यवधानम्॰केषांचि-

दत्यन्तंव्यवधानंस्यात् । तथायुक्तं-

म् । प्रयोगविध्यवगतसाहित्यबाधा

पत्ते : । अत: प्रधानक्रमोप्यङ्ग-

क्रमेहेतु : । अतएवप्रयाजशेषेणाघा

रावाग्न यभिघारणम्॰पश्चा

देन्द्रवायवग्रहः । आग्नेयैन्द्रवागयो :

पौर्वापर्यात् । एवञ्चद्वयोर्द्वयोरभि

धारणयो : स्वस्वप्रधानैस्तुल्यमेका

न्तरितंव्यवधानम् । व्युत्क्रमेणाभि

धारणे आग्ने यस्यैरभिघारणाग्ने-

ययागयोरत्यन्तमव्यवधानम् । ऐ-

न्द्रदध्यभिघारणैन्द्रयागयोर्द्व्यन्त-

रितंव्यवधानं॰तथायुक्तमित्युक्तमे

व । सचमुख्यक्रम : पाठक्रमाद्दु-

र्बल : । मुख्यक्रमोहिप्रमाणान्तर-

मपेक्ष्यप्रधानक्रमप्रतिपत्तिंसापेक्ष-

तयाविलम्बितप्रतिपत्तिक : । पा-

ठक्रमस्तुनिरपेक्षस्वाध्यायपाठक्रम

मात्रसापेक्षतयानतथेतिबलवान् ।

प्रवृत्तिक्रमात्बलवान् । प्रवृत्तिक्रमे

[illegible]नामङ्गानांप्रधानविप्रकर्षा

त् । मुख्यक्रमेतुसन्निकर्षात् ॥

मुख्यसर्ग : । पुं॰ स्थावरसृष्टौ ॥ मु-

व्युत्सर्गश्चतुर्थस्तु मुख्या वैश्याश्च या: ।
स्मृता इ० वराहपुराणात् ।

मुख्यार्थ : । पुं० शब्दश्रवणमात्रावग-
म्यार्थे । यथा । श्रुतिमात्रेण यत्रा-
स्य तादर्थ्यमवसीयते । तं मुख्यमर्थं
मन्यन्ते गौणं यत्नोपपादितम् ॥ प्र
तिपाद्यार्थे ॥

मुगूह : । पुं० दात्यूहपक्षिणि ॥

मुग्ध : । पुं० भिक्षुकविशेषे ॥ यथा ।
सान्निध्ये विषयाणामसमर्थोऽविकृ
तेन्द्रिय: । सुप्तवद्वर्त्तते नित्यं भिक्षु
र्मुग्ध : स उच्यते । त्रि० रम्य । सु
न्दरे । मूढे । विवेकविकले । विप
र्यस्ते । मुग्धार्थपरिशीलनविधुरे
नवे ।

मुग्धा । स्त्री० नायिकाप्रभेदे उदय
द्यौवना मुग्धा लज्जाविजितमन्मथा ।
इ० लक्षणम्

मुचिर : । त्रि० दातरि । मुञ्चति । मु-
च्लृ० । इषिमदिमुदीत्यादिना कि
रच् ॥ पुं० धर्मे ॥ वायौ । देवे ॥

मुचकुन्द : पुं० मान्धातृनृपते : पु
त्रे ॥ पुष्पवृक्षविशेषे । क्षत्रवृक्षे ।
चित्रके । प्रतिविष्णुके । मेचकुन्द-
फल० इ० भा० । मुचुकुन्द : शिर :
पीडापित्तास्रविषनाशन : ॥

मुचुटी । स्त्री० मुकुल्याम् । मुष्टौ ।
मुट्ठी इ० भाषा ॥

मुचक : । पुं० मुष्ककवृक्षे ॥

मुञ्ज : । पुं० तृणविशेषे । ब्राह्मण्ये ।
बाणे । स्थूलदर्भे । मूंज इ० भा० ॥
मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा ।
दाहतृष्णाविसर्पास्रमूत्रबस्त्यक्षिरोग
जित् । दोषत्रयहरं वृष्यं मेखलासूप
युज्यते ॥ मुञ्जद्वयम् मुञ्जभद्रमु-
ञ्जौ ॥

मुञ्जकेशी । पुं० विष्णौ ॥

मुञ्जरम् । न० शालूके ॥

मुञ्जातक : । पुं० मुञ्जे ॥ पुष्पशा-
कप्रभेदे ॥

मुञ्जावट : । पुं० तीर्थविशेषे ॥ प-
ञ्चमहादेवस्तिष्ठति । तीर्थान्तरे ॥

मुण्ड : । पुं० दैत्यविशेषे । राहुग्रहे ॥
मुण्डितसमस्तशिर : केशब्रह्मचा-
रिविशेषे ॥ सशिखकेशश्मश्रुरहिते
परिव्राजि ॥ नापिते । स्थाणुद्रौ
पुं० न० मूर्द्धनि न० वोले ॥ मुण्डा
यसे ॥ त्रि० मुण्डिते ॥ मुण्ड्यते ।
मुडि खण्डने । घञ् ॥

मुण्डक : । पुं० नापिते । न० मस्त-
के ॥ उपनिषद्विशेषे

मुण्डचणक : । पुं० कलाये ॥

मुण्डनम् । न० वपने । परिवाप
ने । क्षौरे । केशच्छेदने । मुण्डनं
चोपवासश्च सर्वतीर्थेष्वयं विधि: । व
र्जयित्वा गयां गङ्गां विशालां विरजां
तथा । मुडि० । ल्युट् ।

मुण्डफल : । पुं० नारिकेलवृक्षे ॥

तिकिरच् ॥ कामुके ॥ भेके ॥

मुद्गः । पुं॰ शमीधान्यभेदे । सूपप्रधाने । रसोत्तमे । भुक्तिप्रदे । हयानन्दे ॥ मुद्गोरूक्षोलघुर्ग्राहीकफपित्तहरोहिमः । स्वादुरल्पानिलोनेत्रोज्वरघ्नोवनजस्तथा ॥ कृष्णमुद्गो महामुद्गोहरितःपीतकस्तथा । श्वेतोरक्तश्चतेषान्तुपूर्वः पूर्वोलघुः स्मृतः ॥ सुश्रुतेनपुनः प्रोक्तोहरितः प्रवरोगुणैः । चरकादिभिरप्युक्तएषएवगुणाधिकः ॥ मुद्गस्यफलंमुद्गः । बिल्वादिभ्योण् । तस्यफलपाकेतिलुपियुक्तवद्भावः ॥ यद्वा । मोदयति । मुद॰ । मुदिग्रोर्गग्गाविति गक् ॥

मुद्गपर्णी । स्त्री॰ वनमुद्गे । काकमुद्गायाम् । सहायाम् । सूर्प्यपर्ण्याम् ॥ मुद्गपर्णीहिमारूक्षातिक्तास्वादुश्चकृष्णला । चक्षुष्याक्षतशोथघ्नीग्राहिणीज्वरदाहनुत् ॥ दोषत्रयहरीलघ्वीग्रहण्यर्शोतिसारहृत् ॥ मुद्गः पर्णमस्याः । मुद्गशब्देनमुद्गपर्णसदृशंलक्ष्यते । पाककर्णेतिङीष् ॥

मुद्गभुक् । पुं॰ घोटके ॥

मुद्गभोजी । पुं॰ घोटके । अश्वे ॥

मुद्गमोदकः । पुं॰ मुक्तामोदके ॥

मुद्गरः । पुं॰ लोष्ठादिभेदने ॥ कर्मारद्रव्ये ॥ मोगरा॰ इ॰ भा॰ प्र॰ पुष्पवृक्षविशेषे । गन्धसारे । सप्तपत्रे । अतिगन्धे । जनेष्टे । स्वनामप्रसिद्धवृक्षविशेषे । द्रुघणे ॥ कोरके ॥ न॰ मल्लिकाप्रभेदे ॥ गिरति । गृनिगरणे । अच् । मुदोगरः ॥

मुद्गरकः । पुं॰ कर्मारद्रव्ये । कमरख इतिभाषा ॥

मुद्गलः । पुं॰ गोत्रकारकेमुनिविशेषे । हर्यश्वराजपुत्रे ॥ म॰ रोहिषतृणे ॥

मुद्गवटकः पुं॰ । मूंगवरा॰ इतिलोकप्रसिद्धे ॥ मुद्गानांवटकास्तक्रमज्जितालघवोहिमाः । संस्कारजप्रभावेणत्रिदोषशमनाहिताः ॥

मुद्गवटिका । स्त्री॰ मुंगौडी इ॰ लोकप्रसिद्धवटिकायाम् ॥ मुद्गानांवटिकास्तद्वद्रचितासाधितास्तथा । पथ्यारुच्यास्ततोलघ्व्योमुद्गसूपगुणाःस्मृताः ॥ तद्वत्॰ माषवटीवत् ॥

मुद्गार्द्रकवटः । पुं॰ वटकविशेषे । अदेवरा॰ इ॰ भा॰ ॥ आदावडा॰ इ॰ गौ॰ भा॰ ॥ मुद्गपिष्ट्याविरचितान् वटकांस्तैलपाचितान् । हस्तेनचूर्णयेत्सम्यक्तस्मिञ्चूर्णेविनिक्षिपेत् ॥ भृष्टंहिङ्ग्वार्द्रकंसूक्ष्ममरिचंजीरकंतथा । निम्बूरसयवानीभ्यांयुक्त्यासर्वंविमिश्रयेत् ॥ मुद्गपिष्टींपचेत्सम्यक्स्थाल्यामास्तारकोपरि । तस्यास्तुगोलकान्कुर्यात्तन्मध्येपूरणंक्षिपेत् ॥ तैलेतान्गोलकान्पक्त्वाक्वाथितायांनिमज्जयेत् । गोम-

काः पावकेः प्रोक्तास्तेस्वाद्वैकव टाश्चपि ॥ मुद्रादर्कवटारुच्या लघवोवलकारकाः । दीपना स्तर्पणापथ्याः स्त्रिषु दोषेषुपूजि ताः ॥

मुद्रा । स्त्री० प्रत्ययकारिण्याम् । छा प० इ० भाषाप्रसिद्धायाम् ॥ मोद- तेऽनया । मुद् । स्फायितञ्चीति रक् ॥ चिन्हे ॥ पञ्चविधलिप्यन्तर्ग- तलिपिविशेषे छापाअक्षर इति- भा० प्र० ॥ यथोक्तं वाराहीतन्त्रे मुद्रालिपिः शिल्पलिपिर्लिपिर्ले- खनिसम्भवा । गुण्डिका घुणसम्भू- तालिपयः पञ्चधास्मृताः एता भिर्लिपिभिर्व्याप्ताधरित्रीशुभदाइरे ति ॥ मुण्डमालातन्त्रे पिच्छया । लेखन्यालिखितं विप्रैर्मुद्राभिरङ्कित ञ्चयत् । शिल्पादिनिर्मितं चापा- ठ्यं धार्यञ्चसर्वदा ॥ इ० ॥ लोकप्र सिद्धा० स्वर्णरौप्यमुद्रकयोः ॥ पु राणाद्युक्ता० शरीरेधारणीयेभगव- तश्चायुधादिचिह्ने ॥ छ्रायायुधाङ्कि तंदेहंगोपीचन्दनमृत्स्नया प्रया- गादिषुतीर्थेषु सगत्वाकिंकरिष्य- ति यद्दायस्यप्रपश्य तदेहंशङ्खा दिचिह्नितं । तद्दातद्दाजगत्स्वामी- तुष्टोहरतिपातकम् ॥ भवतियस्यदे- हेतु मध्यरात्रंदिनेदिने । शङ्खच क्रगदापद्मं लिखितसोऽच्युतः स्व यम् ॥ नारायणायुधैर्युक्तं कृत्वात्मा नंकलौयुगे । कुरुतेपुण्यकर्माणिमे रुतुल्यानितस्यवै शङ्खादिना- ङ्कितोभूत्वाश्राद्धं यः कुरुतेद्विजः । विधिहीनन्तुसम्पूर्णं पितृणाञ्चगया- समम् यथाग्निर्दहतिक्षत्रं वायुनाप्रे रितोभृशम् । तथादहन्तिपापानि दृष्ट्वाकृष्णायुधानिवै ॥ देवताप्रीति जनिकाङ्गुलिरचनायाम् ॥ मो- दनात्सर्वदेवानां द्रावणात्पापस- न्ततेः । तस्मात्मुद्रेतिसाख्याता- सर्वकामार्थसाधनी ॥

मुद्राङ्कितः । त्रि० मुद्रिते । मुद्रया चिह्निते । मोहरकियो० इ० भा० प्र० ॥

मुद्रालिपिः । स्त्री० पञ्चधालिप्यन्तर्ग तलिपिविशेषे । छापेकाअक्षर० इतिभाषा

मुद्रिका । स्त्री० स्वर्णरूप्यादिनिर्मि तमुद्रायाम् ।

मुद्रितः । त्रि० अप्रफुल्ले सङ्कुचि ते । निद्राणे । मीलिते । मुद्रा० इ० भा० ॥ मुद्राङ्किते

मुधा । अ० व्यर्थे । मुह्यति । मुह बैचित्त्ये । काप्रत्ययः । पृषोदरा दित्वात्हस्यधः

मुनिः । पुं वशिष्ठादौ ॥ वाचंयमे । मौनिनि ॥ ज्ञानातिशयवति ॥ मननशीले । विवेकिनि । सन्न्या

सिमि। परमार्थतत्त्वस्यमननान्मु
निरितिशास्त्रकृतांव्युत्पत्तिर्नेतद्द्वा
नन: शास्त्रविदपितत्त्वज्ञानाभा
वात्। सदामननशीलोयोजीवन्मु
क्तामुनि: सहि। स्थितप्रज्ञादिभि:
शब्दैर्मोक्षशास्त्रेषुवर्ण्यते ॥ दु:
खेष्वनुद्विग्नमना: सुखेषुविगतस्पृ
ह:। वीतरागभयक्रोध: स्थित
धीर्मुनिरुच्यते ॥ मौनान्नमुनिर्भ
वतिनारण्यवसनान्मुनि:। स्वलक्षण
न्तुयोवेदसमुनि: श्रेष्ठउच्यते ॥
अगस्त्ये ॥ बुधे ॥ मन्यते। मन
ज्ञाने। मनेरुच्चेतीन्० उपधाया
उत्त्वञ्च। किञ्चिन्मनुत्तेनान्नगुण:
॥ वङ्कसेने। अगस्त्यद्रुमे ॥ अर्हं
ति॥ पियाले किंशुके ॥ दम
नकवृक्षे ॥ सप्ताङ्के

मुनिखर्जूरिका। स्त्री० खर्जूरीप्रभे
दे ॥

मुनिच्छद:। पुं० सप्तच्छदवृक्षे ॥

मुनितरु:। पुं० वकवृक्षे

मुनिद्रुम:। पुं० वकपुष्पे। वङ्कसे
ने। अगस्तिया० इ० भा० प्र०
वृक्षे ॥ श्योनाकवृक्षे ॥ मुनिसंज्ञ
कोद्रुम:। शाकपार्थिवादि: ॥

मुनिनिर्म्मित:। पुं० डिण्डिशे।
डिंडसो० टिंडा० इ० प्र० फल
शाके ॥ मुनिनानिर्मित: ॥

मुनिपिप्पलम्। न० ताम्रे ॥

मुनिपुत्र:। पुं० दमनकद्रुमे। ऋ
षिसुते ॥

मुनिपुत्रक:। पुं० भद्रनामनि। ख
ञ्जने

मुनिपुष्प:। पुं० अगस्तिद्रुमे ॥ न०
अगस्त्यपुष्पे

मुनिपूग:। पुं० रामपूगे। कामी
ने ॥

मुनिभेषजम्। न० अगस्त्यहरीत
क्याम्। अगस्तिपथ्यायाम्॥ ल
ङ्घने ॥

मुनिव्रत:। त्रि० उपशान्ते॥ मुनी
नांव्रतमस्य ॥

मुनिसुव्रत:। पुं० सुव्रताख्येबुद्धभे
दे ॥

मुनिस्थानम्। न० आश्रमे ॥

मुनीन्द्र:। पुं० श्रीघने। बुद्धे। जि
ने ॥ मुनिष्विन्द्र: श्रेष्ठ: ॥

मुन्यन्नम्। न० नीवारादौ ॥ मुने
र्वानप्रस्थस्य अन्नम् ॥

मुमुक्षु:। पुं० यतौ। संसारग्रन्थि
भेदनैकृतप्रयत्ने ॥ साधनचतुष्टय
सम्पन्ने ॥ यथा। काव्यनाटकत
र्कादीनभ्यस्यतिनिरन्तरम्। विजि
गीषुर्यथातद्वन्मुमुक्षु: स्वंविचा
रयेदिति ॥

मुमुक्षुता। स्त्री० मोक्षेच्छायाम्॥
संसारबन्धनिर्मुक्ति: कथंस्यान्मे
कथाविधे। इतियासुदृढाबुद्धिर्व

न्व्यासामुमुक्षुता ॥ मुमुक्षोर्भाव : तल् ॥
मुमुक्षुत्वम् । न० मुमुक्षुतायाम् ॥ वैराग्यश्चमुमुक्षुत्वं तीव्रं यस्यतुविद्यते । तस्मिन्नेवार्थवन्त : स्युः फलवन्त : शमादय : ॥ मोक्षेच्छा मोक्षविषयेच्छा० तद्वत्त्वम मुमुक्षुत्वं । भावेत्व : ॥
मुमुचान : । पुं० मेघे ।
मुमुषिषु : । त्रि० चौरे ।
मुमूर्षु : । त्रि० आसन्नमृत्यौ । मर्तुमिच्छौ । सन्नन्तान्मृङ : समाशंसभिक्षउ : ॥
मुर : पुं० दैत्यविशेषे । मुरति । मुरसंवेष्ठने । इगुपधत्वात्क : ॥ न० वेष्टने ॥
मुरज : । पुं० मृदङ्गे ॥ मुरणम् । मुर० । तुदादि : । घञर्थेकविधानमितिक : । मुरंवेष्टनंजातमस्य ॥
मुरजफल : । पुं० पनसवृक्षे । मुरजसदृशानिफलानियस्यस : ॥
मुरजबन्ध: । पुं० चित्रकाव्यविशेषे ॥
मुरण्ड : । पुं० लम्पाकदेशे ॥ तद्देशस्थे तुमुरण्डा : ॥
मुरन्दला । स्त्री० मुरलानद्याम् ॥
मुरमर्द्दन : । पुं० विष्णौ ॥
मुररिपु : । पुं० विष्णौ । मुरस्यरिपु : ॥
मुरला । स्त्री० मुरन्दलायांसरिति ।
मुरली । स्त्री० वंशीवाद्ये । वंशिकायाम् ॥ इतिशब्दरत्नावली ॥
मुरलीधर : । पुं० श्रीकृष्णे ॥
मुरहा । पुं० केशवे । विष्णौ ॥
मुरा । स्त्री० स्वनामख्यातप्रसिद्धगन्धद्रव्ये । तालपर्ण्याम् । गन्धकुट्याम् । मुरातिक्ताहिमास्वाद्वीलघ्वीपित्तानिलापहा । ज्वरासृग्भूतरक्षोघ्नीकुष्ठकासविनाशिनी ॥ मुरति । मुर० । इगुपधत्वात्क : टाप् ॥
मुरारि : । पुं० श्रीकृष्णे ॥ मुरस्यअरि : । मुर : क्लेशेचसन्तापेकर्मभोगेचकर्मिणाम् । दैत्यभेदेप्यरिस्तेषां,रारिस्तेनकीर्त्तित : ॥
मुरु : । पुं० लौहविशेषे ॥
मुर्भिणी । स्त्री० अङ्गारधान्याम् ॥
मुर्मुर : । पुं० तुषवह्नौ ॥ मन्मथे ॥ रविवाजिनि ।
मुलतान : । पुं० देशविशेषे ॥ करतोयांसमारभ्यहिङ्गुलाजान्तकंशिवे । मुलतानदेशोदेवेशिमहार्म्लेच्छपरायण : ॥
मुशटी । स्त्री० सितकङ्गुन्याम् ॥
मुशल: । पुं० न० मुसले । मुष्यत्यनेनवा । मुसखण्डने । उज्ज्वलदत्तादयोमुंतालव्यमध्यमाहुस्तत्रोदिषादित्वात्कल : ॥
मुशलिका । स्त्री० पल्याम् । इतिहलायुध : ॥

मुशली । स्त्री० पलल्याम् ॥ तालमूल्याम् ॥ इ० राजनिर्घण्ट : ॥

मुषल : । पुं० न० मुसले ॥ मुषत्यनेनश । मुषखण्डने० इतिधातोर्न्त्यान्तेमुमूर्छन्यान्तेमुषवोपदेवायादिभि : पठितमत्वात्कल : ॥

मुषा । स्त्री० मूषायाम् ॥ मुष्णाति । मुषस्तेये । भिदादाङ् । टाप् ॥

मुषित : । त्रि० वञ्चिते ॥ हृते ॥ खण्डिते ॥ मुष्यतेस्म । मुषस्तेये । क्त : ॥ नमुषितांश्चियंप्रेक्षित । चचमुषितेवमुषिताचोरैर्हृतवस्त्रेव० नग्नेस्वर्थं इतिव्याख्येयम् ॥

मुष्क : । पुं० अण्डकोषे । वृषणे ॥ मुष्णातिरेत : । मुष० । सृवृभूशुषिमुषिभ्य : कक् ॥ समूहे ॥ मोचकवृक्षे । मुष्कके ॥ मुष्कावृषस्तुद्विविध : पृवितकृष्णप्रभेदत : ॥ तस्करे ॥ मांसले ॥

मुष्कक : । पुं० घण्टापाटली । गोलीटे । मुष्के । भाटले । मोचे ॥ मुष्कक : कटुकस्तिक्तोग्राहुष्ण : कफवातहृत् । विषमेदोगुल्मकण्डूवस्तिरुक्शुक्रमिशुक्रनुत् ॥ मुष्णातिरोगम् । मुषे : ककन्तात्० स्वार्थेकन् ॥

मुष्कर : । पुं० समुष्के ॥ प्रशस्ताण्डे ॥ मुष्कोण्ड : । सोस्यास्ति । ऊषसुषीतिर : ॥

मुष्कशून्य : । पुं० वृषणरहिते । अनुपस्थे । स्त्रीस्वभावे । मण्डिके । राज्ञोन्त : पुररक्षके । खोजा० भाषा ॥

मुष्ट : । त्रि० चोरिते ॥ मुषित : ॥

मुष्टि : । पुं० स्त्री० पलपरिमाणे । चारतोला इतिभाषा ॥ बद्धपाणौ । मुट्ठी० इ० भा० । बद्धाङ्गुलिसन्निवेशोमुष्टि : ॥ यथा । घासमुष्टिंपरगवेसाह्नंदद्यात्मय : सदा । अकृत्वात्स्वयमाहारंस्वर्गंलोकंसगच्छतीतिश्रीमहाभारतम् ॥ त्सरौ । मूठ० इतिभाषा ॥ धान्यमानभेदे । कुञ्च्यष्टभागे । छटांक० इ०भा० ॥ मोषणे । सङ्कोपने । मुष्यतेनया । मुष० । क्तिन् ॥ यद्वा । मुष्णाति । क्तिच् ॥ प्रहारविशेषे । मुक्की इतिभाषा ॥ पथिक्षुधार्त्तस्यतिलादीनांमुष्टिग्रहणे चौर्याभावो यथा । तिलमुद्गयवादीनांमुष्टिर्ग्राह्यापथिस्थितै : । क्षुधार्त्तैर्नान्यथा विप्रविधिविद्भिरितिस्थिति : ॥

मुष्टिक : । पुं० कंसासुरस्यमल्लविशेषे ॥ स्वर्णकारे ॥

मुष्टिकान्तक : । पुं० बलदेवे ॥ मुष्टिकस्यान्तक : ॥

मुष्टिद्यूतम् । न० जुआकी । द्यूतप्रभेदे ॥

मुष्टिन्धय : । पुं० बालके ॥ मुष्टिंध

यति । घेटू पाने । नाडीमुष्यो षेति॰ खश् । मुम् ॥

मुष्टिबन्ध : । पुं॰ सङ्ग्रहे । मुष्टिबन्धनक्रियायाम् ॥ षष्ठीतत्पुरुषम् मुष्टिबन्ध : ॥ मुष्टेर्बन्ध : ॥ मुष्टिनाबन्धोदृढग्रहणं वा ॥

मुसल : । पुं॰ न॰ अयोग्रे । काष्ठनीयदण्डे । मूसर॰ मूसल॰ बृ॰ भा॰ ॥ मुस्यत्यनेनवा । मुसखण्डने । वृषादिभ्यश्चेतिकल : ॥

मुसली । पुं॰ हलिनि । बलदेवे ॥ मुसलमस्त्यस्य । अतइनिठनाविति : ॥ यथोक्तं विष्णुपुराणे जरासन्धयुद्धोद्योगे । हलञ्चबलभद्रस्य गगनादागतं ज्वलत् । मनसोभिमतं विप्रसौनन्दं मुसलं तथेति ॥

मुसली । स्त्री॰ तालमूल्याम् ॥ तालमूलीतुविद्वद्भिर्मुसलीतिनिगद्यते ॥ मुसलीचद्विधाप्रोक्ताश्वेता चापरसंज्ञका । श्वेतातास्त्पगुणोपेता अपराचरसायनी ॥ मुसलीमधुरा वृष्यावीर्योष्णाबृंहणीगुरु: । तिक्ता रसायनीहन्तिगुदजान्यनिलं तथा ॥ आखुपर्ण्याम् ॥ गृहगोधिकायाम् ॥ मुष्णाति॰ मुसतिसंश्रयं वा । मुस॰ । वृषादिभ्यश्चिदिकल : । जातेरितिगौरादित्वाद्वाङीष् ॥

मुसलीय : । त्रि॰ मुसल्ये ॥ मुसलायहित : । विभाषाहविरपूपादिभ्यइतिपक्षे छ : ॥

मुसल्य : । त्रि॰ मुसलेनवध्ये ॥ दण्डादिभ्योयत् ॥ मुसलीये । मुसलायहित : । अपूपादित्वात्पक्षे यत् ॥

मुस्त : । पुं॰ न॰ मुस्तके । मोथा॰ बृ॰ भा॰ ॥

मुस्तक : । पुं॰ न॰ मुस्ते । कुरुविन्दे । मेघनामनि । मुस्तायाम् । मोथा ॰ बृ॰ भा॰ ॥ मुस्तंकटुहिमंग्राहितिक्तंदीपनपाचनम् । कषायं कफपित्तास्रतृड्ज्वरारुचिजन्तुहृत् ॥ अनूपदेशेयज्जातं मुस्तकंतत्प्रशस्यते । तत्रापिमुनिभि : प्रोक्तंवरं नागरमुस्तकम् ॥ मुस्तसङ्घाते । चु॰ । ण्वुल् ॥

मुस्ता । स्त्री॰ मुस्तके । मोथाख्यतृणे ॥ मुस्तयति । मुस्त॰ अच् । टाप् ॥

मुस्ताद : । पुं॰ शूकरे ॥ मुस्तामत्ति । अद॰ । कर्मण्यण् ॥

मुस्ताभम् । न॰ मुस्तकविशेषे । कुटन्नटे । नागरमोथा॰ बृ॰ भा॰ ॥

मस्तु : । पुं॰ मुष्टौ ॥

मुसम् । न॰ अश्रुणि ॥ मुसति । मुस॰ । मुसेरक्वाहुलकात् ॥ मुखे ॥

मुष्टिर : । पुं॰ कामे ॥ मूर्खे ॥ मुष्णाति । मुषवैचित्र्ये । इषिमदि

मुदीत्यादिनाकिरच् ॥

मुहुर्भाषा । स्त्री॰ पुन : पुन : कथने । अनुलापे ॥ मुहुर्भाषणम् । भाष॰ अच् ॥

मुहु : । अ॰ पौन : पुन्ये । मोहनम् । मुह॰ । मुहे : किच्चेत्युसि : ॥ पुनरर्थे ॥

मुहूर्त्त : । पुं॰ न॰ द्वादशक्षणात्मके काले ॥ त्रिंशत्कालात्मकेकाले ॥ दंडद्वयात्मकेकाले ॥ मुहूर्त्तंघटिकाद्वयमित्युक्त : ॥ अक्षिपक्ष्मपरिक्षेपोनिमेष : परिकीर्त्तित : । द्वौ निमेषौत्रुटिर्नामद्वेत्रुटीतुलव : स्मृत : ॥ द्वौलवौक्षणइत्युक्त : काष्ठाप्रोक्ताद्दशक्षणा : । त्रिंशत्काष्ठाकलाप्रोक्ताकलात्रिंशन्मुहूर्त्तक : ॥ पुराणोक्तलक्षणन्तु । रौद्र : श्वेतस्तथामैत्रस्तत : सारभट : स्मृत : ॥ सावित्रोवैश्वदेवश्चगनृधर्व : कुतपस्तथा । रोहिणस्तिलकश्चैवविजयोनिरृतिस्तथा ॥ संवरोवरुणश्चैवभग : पञ्चदशस्मृत : ॥ इति दिनपञ्चदशभागैकभागे ॥ यथा । प्रात : कालोमुहूर्तांस्त्रीन्सङ्गवस्तावदेवतु । मध्याह्नस्त्रिमुहूर्त्त : स्यादपराह्णस्तत : परम् ॥ सायाह्नस्त्रिमुहूर्त्त : स्याच्छ्राद्धंतत्रनकारयेत् । राक्षसीनामसावेलागर्हिता सर्वकर्मसु ॥ हूर्च्छति । हूर्च्छाकौटिल्ये । अस्माल्लिङ्चोर्द्धंमौहूर्त्तिकइतिनिर्द्देशान्मुहूर्त्तशब्दोनिष्पन्न : ॥ अल्पकाले ॥ दिनशुद्धिविशेषे । लक्षणयातदुपलक्षिते काले ॥

मुहिर : । त्रि॰ मूर्खे ॥ मुह्यति । मुह॰ । मूलेराद्यस्येतिसाधु : ॥

मुह्यमान : । त्रि॰ अनेकानर्थप्रकारैरविवेकतयाविक्षिप्तचित्ततयाक्षिप्तामापद्यमाने ॥

मू : । स्त्री॰ बंधने ॥

मूक : । पुं॰ जलेशये । मत्स्ये ॥ दैत्ये ॥ त्रि॰ अवाचि । वर्णानुच्चारके ॥ दीने ॥ मूमितिकायति । कै॰ । आतोनुपेतिक : ॥

मूढ : । त्रि॰ तन्द्रिते ॥ बाले । जडे ॥ मूर्खे । यथाजाते ॥ स्वाज्ञानकार्यविपर्यसमोहव्याप्ते ॥ इदमर्थसाधनमिदमनर्थसाधनमितिविवेकशून्ये । अविचारके । अविवेकिनि । अनात्मविदि ॥ तन्द्रादिग्रस्तचित्ते । तमसाच्छन्ने । मोहयुक्ते ॥ चित्तस्यद्वितीयायांभूमौ ॥ मुह्यतिस्म । मुह॰ । गत्यर्थेतिक्त : ॥ आकाशादिषुस्थलेषुकेचित्तम : प्रधानतयामूढा : मोहप्रकाशका: विषमा : गुरव : केचिद्विशेषास्तेमूढा : कथ्यन्ते ॥

मूढग्राह : । पुं॰ अविवेकातिशय

कृतेदुराग्रहे ॥ ग्राहोग्रहणम् । मूढानांग्राह: ॥

मूढता । स्त्री० अर्थावपरिज्ञानत्वे । अविवेकतायाम् ॥ यथा । यानंक्षितौयानगतस्यदेशोदेशेपिचान्य: पुरुषोनिविष्ट: । ममत्वमुर्व्यांनतथा यथाऽस्मिन्देशेऽतिमात्रंवतमूढतैषेति ॥

मूढदृक् । त्रि० देहमानिनि । देहमात्मत्वेनाभिमन्यमाने ॥

मूढयोनि: । पुं० पश्वादौ ॥

मूढा । स्त्री० तामस्यांमनसोवृत्तौ ॥

मूत: । त्रि० बद्धे ॥ मूयतेस्म । मूङ् बन्धने । क्त: ॥ आलानपाशे ॥

मूत्रम् । न० प्रस्रावे । मूत० पिसाब० इ० भा० ॥ मूत्र्यते । मूत्रप्रस्रवणे । घञ् ॥ मूत्रमित्याहुरुदकंवस्तेस्थानिलनिर्गतम् ॥ यद्वा । मुच्यते यत् । मुच्लृ० । सिविमुच्योष्टेरूच्चेतिष्ट्रन् ॥ अथास्यगुणा: । गोमूत्रंकटुतीक्ष्णोष्णंक्षारंतिक्तंकषायकम् । लघ्वग्निदीपनंमेध्यंपित्तकृत्कफवातहृत् ॥ शूलगुल्मोदरानाहकण्डूक्षिमुखरोगजित् । किलासगदवातामवस्तिरुक्कुष्ठनाशनम् ॥ कासश्वासापहंशोथकामलापाण्डुरोगहृत् । कण्डूकिलासगदशूलमुखाक्षिरोगान्गुल्मातिसारमरुदामयमूत्ररोधान् । कासंसकुष्ठजठरकृमिपाण्डुरोगान् गोमूत्रमेकमपिपीतमपाकरोति ॥ सर्वेष्वपिचमूत्रेषु गोमूत्रंगुणतोधिकम् । अतोविशेषात्कथनेमूत्रंगोमूत्रमुच्यते ॥ प्लीहोदरश्वासकासशोथवर्चोग्रहापहम् । शूलगुल्मरुजानाहकामलापाण्डुरोगनुत् ॥ कषायंतिक्ततीक्ष्णञ्चपूरणात्कर्णशूलहृत् ॥ नरमूत्रंगरंहन्तिसेवितंतद्रसायनम् । रक्तपामाहरंतीक्ष्णंसक्षारलवणंस्मृतम् ॥ गोजाविमहिषीणान्तुस्त्रीणांमूत्रंप्रशस्यते । खरोष्ट्रेभनराश्वानांपुंसांमूत्रंहितंमतम् ॥ अथमूत्रपरीक्षा । वातेनपाण्डुरंमूत्रंरक्तंनीलञ्चपित्तत: । रक्तमेवभवेद्रक्तात् धवलंफेनिलंकफादिति ॥

मूत्रकृच्छ्रम् । न० प्रस्रावघटितरोगविशेषे । मूत्ररोधे । अश्मर्याम् । कृच्छ्रे ॥ मूत्रे कृच्छ्रमत्र ॥ अथास्यचिकित्सा । त्रिकण्टकारग्वधदर्भकाशयवासधात्रीगिरिभेदपथ्या: । निघ्नन्तिपीतामधुनाश्मरीञ्चसमीपस्थ्योरपिमूत्रकृच्छ्रम् ॥ त्रिकण्टकादिक्वाथ: ॥ १ ॥ एलाश्मभेदकशिलाजतुगोक्षुराणांमेर्वारुबीजलवणोत्तमकुङ्कुमानाम् । चूर्णानितण्डुलजलेलुलितानिपीत्वाप्रत्यक्षमृत्युरपिजीवतिमूत्रकृच्छ्री ॥ एलादिचूर्णम् ॥ २ ॥ अयोरज:

मूत्रनिरोधः

सूक्ष्मपिष्टं मधुना सहयोजितम् । मूत्रकृच्छ्रं निहन्त्याशु संलीढं दिवसत्रयम् ॥ ३ ॥ गुडेन मिश्रितं क्षीरं कटूष्णं कामतः पिवेत् । मूत्रकृच्छ्रेषु सर्वेषु शर्करायाश्च निश्चयः ॥ ४ ॥ धात्रीरसं चेक्षुरसं पिवेद्वाकृच्छ्रे सरक्तं मधुनाभिमिश्रम् । शल्याभिघातोत्थितमूत्रकृच्छ्रे कार्या क्रियामारुतकृच्छ्रतुल्या ॥ ५ ॥ क्वाथो गोक्षुरवीजस्य यवक्षारसमन्वितः । पीतः प्रशमयत्येव कृच्छ्रं विड्धारणोत्थितम् ॥ ६ ॥ त्रिफलायाः सुपिष्टायाः कल्कं कोलसमन्वितम् । वारिणा लवणीकृत्य पिवेन्मूत्ररुजापहम् । कोलं वदरम् ॥ ७ ॥ गुडमामलकं वृष्यं श्रमघ्नं तर्पणं प्रियम् । पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रहरं परम् ॥ ८ ॥ सपादशाणतुलितो यवक्षारः सितायुतः । भक्षितो नाशयत्येव मूत्रकृच्छ्रं न संशयः ॥ ९ ॥ द्राक्षासितोपलाकल्कः पीतः कर्षमितो नरैः । मस्तुना पलमात्रेण मूत्रकृच्छ्रं व्यपोहति ॥ १० ॥ समूलगोक्षुरक्वाथः सितामाक्षिकसंयुतः । नाशयेन्मूत्रकृच्छ्राणि तथैवोष्णसमीरणम् ॥ उष्णसमीरणं उष्णवातं मूत्राघातविशेषम् ॥ इति भावप्रकाशः ॥

मूत्रदोषः । पुं० प्रमेहे ॥

मूत्रनिरोधः । पुं० मूत्रप्रतिवन्धकरोगविशेषे ॥ यथा । पिष्टं वै मालतीमूलं ग्रीष्मकाले समाहृतम् । साधितं छागदुग्धेन पीतं शर्करयान्वितम् । हरेन्मूत्रनिरोधञ्च हरेद्वै पाण्डुशर्करां ॥

मूत्रपतनः । पुं० गन्धमार्जारे ॥

मूत्रपुटम् । न० नाभेरधोभागे । मूत्राशये ॥

मूत्रफला । स्त्री० कर्कट्याम् ॥ त्रपुष्याम् ॥

मूत्रलम् । न० त्रपुषि ॥ त्रि० मूत्रवर्द्धके ॥

मूत्रला । स्त्री० कर्कट्याम् ॥ वालुक्याम् ॥

मूत्राघातः । पुं० प्रस्रावरोधकरोगविशेषे ॥ प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादयः । जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश ॥ मूत्रविघाताद्यैरित्याद्यशब्देन पुरीषशुक्रादिवेगविघातादीनां रूक्षाशनादीनाञ्च ग्रहणम् । मूत्रविघाताद्यैः कुपितैर्दोषैरित्यन्वयः । ननु मूत्रकृच्छ्रमूत्राघातयोः कोभेदः । उच्यते । मूत्रकृच्छ्रे कृच्छ्रमधिकं विबन्धोऽल्पः । मूत्राघाते तु विबन्धो वलवान् कृच्छ्रमल्पमित्यनयोर्भेदः ॥ अस्य चिकित्सा यथा । नलकुशकाशेक्षुवलाक्वाथंप्रातः सुशीतलं ससितम् । पिवतो नश्यति नियतं मूत्रग्रहणस्थवाचकवि ॥ कवि शुक्रः । कर्पूरर-

मूर्खः

जसायुक्तावसवर्तिः शनैः शनैः । मेढ्रमार्गान्तरेन्यस्तामूत्राघातंव्यपोहति ॥ धान्यगोक्षुरकः क्वाथः कल्कसिद्धं हितंघृतम् । मूत्राघातेमूत्रकृच्छ्रे शुक्रदोषेचदारुणे ॥ धान्यगोक्षुरकं घृतम् ॥ मूत्रकृच्छ्रे श्मरीरोगेभेषजं यत्प्रकीर्तितम् । मूत्राघातेषु सर्वेषुतत्कुर्य्याद्देशकालवित् ॥

मूत्रातिसारः । पुं॰ प्रस्रावातिसरणरोगे ॥ तस्यौषधंयथा । बलामूलत्वचस्सूक्ष्मंपीतंसक्षीरशर्करम् । मूत्रातिसारं हरतिदृष्टमेतन्नसंशयइति ॥

मूत्रातीतः । पुं॰ मूत्ररोगविशेषे ॥ यथाहुः । चिरं धारयतोमूत्रंत्वरया नप्रवर्त्तते । मेहमानस्यमन्दंवामूत्रातीतः सउच्यते ॥ इति ॥

मूत्राशयः । पुं॰ वस्तौ । मूत्रपुटे ॥

मूत्राशयपुटः । पुं॰ अस्याम् । मूत्रपुटे ॥

मूत्रितः । वि॰ कृतमूत्रोत्सर्गे । मीढे ॥ मूत्र्यतेस्म । मूत्र॰ । क्तः ॥

मूर्खः । पुं॰ पुरीषमे । माषे ॥ गायत्रीरहिते । सार्थगायत्रीरहिते ॥ त्रि॰ मन्दे । वैधेये । बालिशे ॥ शास्त्रज्ञानशून्ये ॥ शून्यवादिनि ॥ देहात्मवादिनि । अधीत्यवेदशास्त्राणिसंसारेरागिणश्चये । तेभ्यः प

मूर्खत्वम्

रोनमूर्खोस्तिसधर्मः श्वाजशूकरैः ॥ समद्युतिशेषः । मानुष्यं दुर्लभं प्राप्यवेदशास्त्राण्यधीत्यच । बध्यते यदिसंसारेकोविविच्येत मानवः ॥ मुह्यति । मुह॰ । मुहः खोमूर्च ॥ मूर्खोविषप्रवासीसतिनिजविभवे सद्ययोनास्तिगेहेनानाधान्यौषधीनांसतिपितरिगृहेनार्जितायेनविद्या । भार्यांत्यक्त्वासुरूपांरतिमिहकुरुतेभर्तमत्यांचदास्यांवाराङ्गनाभिलाषीकुमतिजनरुचिर्दक्षिराजनृत्यगोयम् ॥ बाण्याम्॰ गीर्वाणभाषायाम् । उत्कृष्टपुरुषार्थलाभे सम्भवत्यधमं कामयमानोमूर्खः ॥ मूर्खसहस्रसंयोगोविषादपिसुदुर्जरः । विज्ञ नसहस्रसंयोगः सुधारससमः स्मृतः ॥ अत्रमूर्खनिन्दादेवीभागवतेद्रष्टव्या ।

मूर्खता । स्त्री॰ मूर्खत्वे ॥ मूर्खस्य भावः । तस्यभावस्त्वतलाविति तल् ॥

मूर्खत्वम् । न॰ मूर्खतायाम् । अज्ञत्वे । मूरखपन॰ इ॰ भा॰ ॥ मूर्खत्वं सुलभं भजस्वकुमते मूर्खस्य चाष्टौगुणानिश्चिन्तोबहुभोजकोतिमुखरोरात्रिंदिवास्वप्नभाक् । कार्याकार्यविचारणादिरहितोमानापमानेसमोदत्त्वासर्वजनस्यमूर्ध्नि चरणोमूर्खश्चिरम् जीवतु ॥

मूर्च्छनम् । न० मूर्च्छायाम् ॥ मूर्च्छापित्ततम: प्राय: ॥

मूर्च्छना । स्त्री० गीताङ्गविशेषे । ग्रामस्यसप्तमभागे ॥ चतुर्दशविधायाम् । षड्जादिस्वरसंपूर्णतायाम् । तदुक्तं शाण्डिल्येन । यतेऽस्मु: स्वरा: पूर्णामूर्च्छनासंस्युदाहृतेति ॥ अन्यवमूर्च्छनालक्षणं यथा । क्रमात्स्वराणांसप्तानामारोहश्चावरोहणम् । सामूर्च्छेत्युच्यते ग्रामस्थाएता: सप्तसप्त च । ग्रामत्रयेपिप्रत्येकंसप्तसप्ततुमूर्च्छना०इत्येकविंशतिमूर्च्छनाभवंति ।

मूर्च्छा । स्त्री० कश्मले । मोहे ॥ संज्ञावहासुनाडीषु पिहितास्वनिलादिभि: । तमोभ्युपैतिसहसासुखदु: खव्यपोहकृत् ॥ सुखदु:खव्यपोहाच्चनर: पततिकाष्ठवत् । मोहोमूर्च्छेतितांप्राहु: षड्विधासाप्रकीर्तिता ॥ मूर्च्छनम् । मूर्च्छामोहसमुच्छ्राययो: । गुरो: श्चहलइत्य: । उपधायाश्चेतिदीर्घ: । टाप् ॥ इन्द्रिये: सहमनसउपरमेणमूर्च्छेतिव्याख्यातार: ॥

मूर्च्छाय: । पुं० मूर्च्छायाम् ॥

मूर्च्छाल: । वि० मोहयुक्ते । मूर्च्छते । मूर्च्छास्यास्ति । सिध्मादिषु० क्षुद्रजन्तूपतापयोश्चेतिपठितात्वच् । प्राणिस्थादातइतिनभवति० प्राप्यङ्गादिवेतिव्याख्यानात् ॥

मूर्च्छित: । वि० मूर्त्ते । मूर्च्छायुक्ते । मूर्च्छालि । विचेतने ॥ सोच्छ्रये ॥ मूढे ॥ वृद्धे ॥ मूर्च्छतिस्म । मूर्च्छा० । गत्यर्थेतिक्त: ॥ मूर्च्छासञ्जाताऽस्य वा । तारकादित्वादितच् ॥

मूर्त्त: । वि०. मूर्च्छालि । मूर्च्छिते ॥ कठिने ॥ मूर्त्तिमति । सन्निवेशोनेवदृश्यायस्यतन्मूर्त्तमुच्यते। चित्यम्बुग्निवयंमूर्त्तमम्बर्त्वितरद्द्वयम् ॥ मूर्च्छतिस्म । मूर्च्छा० । अकर्मकत्वात्क्त: । राल्लोप: । नध्याख्येतिनत्वंन ॥ न्यायमते० पृथिवी० जलं० तेज: ० वायु: मनश्च । एषांगुणा: रूपं० रस:० गन्ध: स्पर्श: ० परत्वम्० अपरत्वम्० गुरुत्वम् स्नेह: ० वेगश्च मूर्त्तामूर्त्तसाधारणगुणा: । सङ्ख्या० परिमिति: ० पृथक्त्वम्० संयोग:० विभागश्च इतिभाषापरिच्छेद: ० ॥

मूर्त्तवित् । वि० आगमिके ॥ त्रिशूलधारीमहेश्वर: शङ्खचक्रादिधारीविष्णुर्वापरमार्थोभवतीत्यागमिका: कल्पयन्ति । तत्त्वतेषांकल्पनम्० भ्रान्तिमात्रम् । अस्मदादिशरीरवत्तत्रापिशरीरस्यपाञ्चभौ

तिकत्वात्लीलाविग्रहकल्पनञ्च ० विग्रहाभावे लीलायोगादयुक्तमेव ॥
मूर्त्तिः । स्त्री० काठिन्ये ॥ प्रतिमायाम् । असर्वगतद्रव्यस्य परिमाणे ॥ शिवस्याष्टमूर्त्तयोयथा । सर्वं क्षितिः समुद्दिष्टाभवोजलमुदाहृता । रुद्रोग्निरुग्रोवायुः स्यात्भीम माकाशशब्दिता ॥ पशोः पतिर्यजमानोमहादेवः सुधाकरः । ईशानः सूर्य इत्येतामूर्त्तयोष्टौप्रकीर्त्तिताः ॥ मूर्त्तिर्धर्मस्यपत्नी । यथा । मूर्त्तिश्च धर्मपत्नीसाकान्तिरूपामनोहरा । कान्तिरूपाशोभारूपा । परमात्माचविश्वौघोनिराधारोययाविना ॥ शोभांविनापरात्मापिनिराधारोनिरर्थकइत्यर्थः ॥ सर्वत्रशोभारूपाचलक्ष्मीमूर्त्तिमती सती । श्रीरूपामूर्त्तिरूपाचमान्या धन्यातिपूजितेतिभागवते ८ स्कन्धे १ ध्यायः ॥ काये । देहे । जरायुजाण्डजोद्भिज्जादिभेदेनविलक्षणविविधसंस्थानासुतनुषु ॥ मूर्च्छति० मूर्च्छतेर्वा । मूर्च्छा० । क्तिन् । राल्लोपः ॥ रूपे ॥ स्वभावे ॥ लक्ष्मे ॥

मूर्त्तिमान् । त्रि० कठिने । मूर्त्तिविशिष्टे ॥ मूर्त्तिः काठिन्यमस्यास्ति । तदस्याऽस्त्यस्मिन्निति मतुप् ॥ स्त्रियाम्० मूर्त्तिमती । उगित्त्वान्ङी प् ॥ न० शरीरे ॥

मूर्त्त्युपचयः । पुं० स्थौल्ये ॥

मूर्द्धकः । पुं० क्षत्रिये ॥

मूर्द्धकर्परी । स्त्री० जलछायाम् ॥

मूर्द्धखोलम् । न० छत्रे ॥

मूर्द्धजः । पुं० केशे ॥ त्रि० मूर्द्धिजाते ॥

मूर्द्धतैलम् । न० तैलविशेषे ॥ अभ्यङ्गः परिषेकश्चपिचुर्बस्तिरितिक्रमात् । मूर्द्धतैलंचतुर्द्धास्याद्बलवत्तद्यथोत्तरं ॥

मूर्द्धा । पुं० उत्तमाङ्गे । शिरसि । मस्तके ॥ छायाः कारैः शिरोभिस्तुनृपानिस्नशिराधनौ । चिपिटैस्तु पितुर्मृत्युर्गबाढ्याः परिमण्डलैः घटमूर्द्धापापरुचिर्धनाढ्याः परिवर्ज्जितः ॥ मुह्यत्यस्मिन्नाहते । मुह० । श्वन्नुक्षन्निति० मुहेः कनिन् ० निपातनादुपधादीर्घोधिकारादेशोरमागमश्च ॥

मूर्द्धन्यः । त्रि० मूर्द्धनिभवे ॥ शरीरावयवाच्चेतियत् । येचाभावकर्मणोरितिप्रकृतिभावान्नस्तद्धितइति० टिलोपाभावः ॥

मूर्द्धपुष्पः । पुं० शिरीषवृक्षे ॥

मूर्द्धरसः । पुं० भक्तफेने ॥

मूर्द्धवेष्टनम् । न० उष्णीषे ॥

मूर्द्धाभिषिक्तः । पुं० भूपाले । राजनि ॥ क्षत्रिये । राजन्ये । बाहुजे ॥

मूर्द्ध्नि॰ अभिषिच्यतेस्म । षिचध्वरणे । क्तः । राज्यदानसमये॰ मूर्द्धन्यभिषिच्यते॰ तत्प्रभवत्वात्सर्वोपिक्षत्रियोमूर्द्धाभिषिक्तउच्यते ॥ मन्त्रिणि ॥ प्रधाने ॥ मूर्द्धन्यभिषिक्तः । वर्णसङ्करजातिविशेषे । विप्रात्क्षत्रियायाम्जाते ॥

मूर्द्धावसिक्तः । पुं॰ ब्राह्मणात्परिणीतक्षत्रियायामुत्पन्ने ॥ अस्यवृत्तिस्तु । हस्त्यश्वरथशिक्षाचअस्त्राणांधारणंतथा । मूर्द्धावसिक्तस्यवृत्तिः प्रोक्ताउशनसाशुभा ॥

मूर्वा । स्त्री॰ लताविशेषे । देव्याम् । मधुरसायाम् । मोरटायाम् । मुरहरा॰ इ॰ भा॰ प्र॰ । धनुर्गुणोपयुक्ता॰ मुरगा॰ इ॰ गौ॰ भा॰ प्र॰ मूर्वासरागुरुः स्वादुस्तिक्तापित्तास्रमेहनुत् । त्रिदोषतृष्णाहृद्रोगकण्डूकुष्ठज्वरापहा । मूर्वति । मूर्वीबन्धने । अच् ।

मूर्विका । स्त्री॰ मूर्वायाम् ॥ मूर्वैव । स्वार्थे कन् ॥

मूलम् । न॰ शिफायाम् ॥ ब्रध्ने । अङ्घ्रिनामके । जड॰ इ॰ भा॰ । मूलमात्रे यथा । अर्थस्यमूलंनिकृतिः क्षमाचकामस्यमूलन्त्ववपुर्वयश्च । धर्मस्ययागादिदयादमश्चमोक्षस्य सर्वोपरमः क्रियाभ्यः ॥ आद्ये । प्रथमे ॥ यथा । मूलप्रकृति । मूलवित्ते ॥ भे ॥ निकुञ्जे ॥ निजे ॥ चरणे ॥ टीकार्हग्रन्थे । शूरणे ॥ पिप्पलीमूले ॥ पुष्करमूले ॥ विशेषमूलस्यान्वेषणे निषेधोयथा । नदीनामग्निहोत्राणांभारतस्यकुलस्यच । मूलान्वेषोनकर्त्तव्योमूलाद्दोषोमहीयते ॥ पुं॰ न॰ अन्तिके । पार्श्वे । नक्षत्रविशेषे ॥ यथा । हस्तास्वातिश्रवणाअश्लेषामृगशिरोनपुंसिस्यात् । पुंसिपुनर्वसुपुष्यौमूलन्त्वस्त्रीस्त्रियांशेषाः ॥ निरृतिदेवताकेनक्षत्रे ॥ अस्मिञ्जातस्यफलंयथा । मूलंविरुद्धावयवंसमूलंकुलंदहत्येवदन्तिसन्तः । चेदन्यथातः पुरुषाविशेषात् सौभाग्यमायुश्चकुलानुवृद्धिः ॥ मूलमन्त्रे ॥ मूलति । मूलप्रतिष्ठायाम् मूलरोहणे वा । इगुपधेति कः ॥ मन्नते । मूङ्बन्धने । मूशक्यम्बिभ्यः क्तः ॥

मूलकः । पुं॰ स्थावरविषप्रभेदे ॥

मूलकम् । न॰ मूलविशेषे । राजालुके । महाकन्दे । हस्तिदन्तके । मूली॰ इतिभाषाप्रसिद्धेकन्दे ॥ अस्यगुणाः । मूलकंद्विविधंप्रोक्तंतत्रैकंलघुमूलकम् । शालामर्कटकंविस्रंशालेयंमरुसम्भवम् ॥ चाणक्यमूलकंतीक्ष्णंतथामूलकपोतिका । नेपालमूलकंचान्यत्

तद्वद्विद्वद्दन्तवत् ॥ लघुमूलकम् उष्णं स्याद्रुच्यं लघु च पाचनम् । दोष त्रयहरं स्वर्यं ज्वरश्वासविनाशनम् ॥ नासिकाकण्ठरोगघ्नं नयनामयनाशनम् । महत्तदेव रूक्षोष्णं गुरु दोष त्रयप्रदम् ॥ स्नेहसिद्धं तदेव स्याद्दोष त्रयविनाशनम् । तत्पुष्पं स्मृतं पित्तघ्नं फलं वातकफप्रदमिति ॥ मूल ति । मूल० । क्वुन् । यद्वा मूलय ति । मूलरोहणे । चु० । अच । संज्ञायां कन् ॥ यद्वा । मूले जातः । पूर्वाह्णापराह्णार्द्रामूलप्रदोषा वस्कराद्वुन् ॥

मूलकदण्डः । पुं० गांडर० गण्डल० इ० प्र० मूलकावयवे । सपत्रः स्वेदितस्तस्य दण्डो मूलस्य सूक्ष्मकः । घृतेपक्वस्तु शिक्यं स्वाढ्येवयवैर्मविमिश्रितः ॥ मुरुच्यं मूलकं शाकं विष्टम्भिकफकारकम् । वातपित्त हरं स्नेहपक्वं त्वक्मुगुणावहम् ॥

मूलकपत्रम् । न० मूलकस्य पत्रं ॥ पाचनं लघु रुच्योष्णं पत्रं मूलकजं नवम् । स्नेहसिद्धं त्रिदोषघ्नमसिद्धं कफपित्तकृत् ॥

मूलकपर्णी । स्त्री० शोभाञ्जने ॥

मूलकमूला । स्त्री० चोरकपुष्पिकाया-म् । चोरीगच्छे ॥

मूलकर्म । न० कार्मणे । टौना० इ० भा० प्र० कर्मविशेषे । मूले रौषधीमूलैः कर्म० चासनोच्चाट-नस्तम्भनवशीकरणादि० मूलकर्म । उपपातकविशेष एतत् । यथा । सर्वाकरेष्वधीकारो महायन्त्रप्रवर्त्त नम् । हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म च ॥ इति मनुः । मूलकर्म० मन्त्रौषधादिना वशीकर णमिति कुल्लूकभट्टः ॥

मूलकारः । पुं० मूलग्रन्थकर्त्तरि । मूलं करोति । कृञ् : कर्मण्यण् ॥

मूलकारिका । स्त्री० चुल्ल्याम् । मूलग्रन्थार्थप्रकाशकपद्ये ॥ मूल धनस्य वृद्धिविशेषे ॥

मूलकृच्छ्रः । पुं० न० एकादशविध-पर्णकृच्छ्रवतान्तर्गतव्रतविशेषे । यदा क्वथितानि मूलकमूलानि मासं पी-यन्ते० तदा मूलकृच्छ्रव्यपदेशं लभ-न्ते । यथाह मार्कण्डेयः । फलैर्मासेन कथितः फलकृच्छ्रो मनीषिभिः । श्रीकृच्छ्रः श्रीफलैः प्रोक्तः पद्मा क्षैरपरस्तथा ॥ मासेनामलकैरेवं श्रीकृच्छ्रमपरं स्मृतम् । पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते ॥ मूलकृच्छ्रः स्मृतो मूलैस्तोयकृच्छ्रो जलेनतु० इति ॥

मूलजः । पुं० उत्पलादौ ॥ न० आ-र्द्रके ॥ त्रि० मूलोद्भवे ॥

मूलत्रिकोणभवनम् । न० सूर्यादिग्रहा णां राशिरूपस्थानविशेषे ॥ यथा । सिंह

गोमेषत्रनितायमुर्युकघटास्तथा। मूलत्रिकोणभवनान्याहुः सूर्यादितः क्रमात्॥ एतेराशयः क्रमात् सूर्यादीनांमूलत्रिकोणभवनान्याहुः। यथा। सिंहः सूर्यस्यमूलत्रिकोणभवनम्। एवंवृषश्चन्द्रस्य•मेषः कुजस्य•कन्याबुधस्य•धनुर्गुरोः तुला।शुक्रस्य•कुम्भः शनेरिति॥

मूलत्रिकोणांशः। पुं॰ रव्यादीनांत्रिकोणभागे य॰। रवियुग्मभार्काद्दिक्पा[illegible]विंशतिः। मूलत्रिकोणांशभागाः स्युः सूर्यादीनांयथाक्रमात् यथा। सिंहराशौसूर्यस्यविंशत्यंशामूलत्रिकोणभागाःस्युः। एवंच[illegible]वृषेत्रयांशत्रयात्[illegible]ध्वंसप्तविंशत्यंशाः कुजस्यमेषेद्वादशांशाः बुधस्यकन्यायांतुपञ्चदशांशाद्दूर्द्ध्वंदशांशाःपञ्चविंशत्यंशपर्यन्तम्॰गुरोर्धनुषिदशांशाःशुक्रस्यतुलायांपञ्चदशांशाःशनेःकुम्भे विंशत्यंशाः मूलत्रिकोणभागाः स्युरिति।

मूलदेवः। पुं॰ मूलभद्रे। कंसासुरे।

मूलद्रव्यम्। न॰ मूलधने॥

मूलधनम्। न॰ वणिङ्मूलवित्ते। नीव्याम्। परिपणे। पूंजी॰इ॰भा॰॥ मूलस्थितधनम्॥

मूलनगरम्। न॰ राजधान्याम्॥

मूलपर्णी। स्त्री॰ मण्डूकपर्ण्याम्॥

मूलपुष्करम्। न॰ पुष्करमूले॥

मूलपोती। स्त्री॰ शाकप्रभेदे। क्षुद्रवल्ल्याम्। क्षुद्रपोतिकायाम्॥

मूलप्रकृतिः। स्त्री॰ आद्यायांशक्तौ। प्रधाने। प्रकृतिःप्रधानम्। मूलञ्चासौप्रकृतिश्चेतिविग्रहः। विश्वस्यकार्य्यकलापस्यसामूलम्॰नस्य॰चामूलान्तरमस्तिअनवस्थाप्रसङ्गात्। अथानवस्थायामस्तिप्रमाणम्॥

मूलफलदः। पुं॰ पनसे। कण्टकिफले। मूले॰फलंददाति। ददातेः॰। कः॥

मूलबन्धः। पुं॰ राजयोगाङ्गविशेषे। यन्मूलंसर्वभूतानांयन्मूलंचित्तबन्धनम्। मूलबन्धःसदासेव्योयोग्योसौराजयोगिनाम्॥

मूलभद्रः। पुं॰ कंसासुरे॥

मूलरसः। पुं॰ मोरटलतायाम्॥

मूलविभुजः। पुं॰ रथे॥ मूलाभिविभुजति। भुजौकौटिल्ये। मूलविभुजादित्वात्कः॥

मूलस्तम्भः। पुं॰ श्विनिष्कृतौ॥

मूला। स्त्री॰ शतावर्याम्॥ मूलभे॥

मूलाधारः। पुं॰ गुह्यलिङ्गयोर्मध्येऽङ्गुलिद्वयमितस्थाने। शरीरस्थसकलनाडीनांमूलस्थाने॥ मूलमाधारषट्कानाम्मूलाधारंततोविदुरितिदेवीगीतोक्तेः॥

मूलाविद्या । स्त्री॰ अनाद्यविवेके ॥ अयंजीवोनकूटस्थंविविनक्तिकदाचन । अनादिरविवेकोयंमूलाविद्येतिगम्यताम् ॥

मूलाह्वयम् । न॰ मूलके ॥

मूली । पुं॰ वृक्षे ॥

मूली । स्त्री॰ ज्येष्ठाम् ॥

मूलेर : । पुं॰ जटायाम् ॥ मूलति । मूल॰ । मूलेराद्यस्चेति साधु : ॥

मूल्यम् । न॰ अवक्रये । वस्ने । मोल॰ निरख॰ इ॰ भा॰ दर॰ दाम॰ इतिसाधारणजनभाषा ॥ भृत्यायाम् । वेतने । महीना॰ भाड़ा॰ इ॰ भा॰ । मूलेनआनाम्यम्॰मूलेनसमंवा । नौवयोधर्मेत्यादिनायत् । त्रि॰ मूलतउत्पाटनयोग्येमुद्गादौ ॥ मूलमार्वर्हयस्य । मूलमस्यावर्हीतियत् ॥

मूष : । पुं॰ मूषिके ॥ तैजसावर्त्त न्यां ॥

मूषक : । पुं॰ मूषिके ॥ मूषति । मूषस्तेयेदीर्घोपधोप्यस्ति । भ्वादि : । खुलस्वार्थेकुन्वा ॥

मूषककर्णी । स्त्री॰ आखुपर्ण्याम् ॥

मूषकमारी । स्त्री॰ सुतश्रेण्याम् ॥

मूषका । स्त्री॰ मूषिकायाम् ॥

मूषिकाराति : । पुं॰ ओतौ । बिडाले ॥

मूषली । स्त्री॰ तालां ॥



मूषा । स्त्री॰ स्वर्णाद्यावर्त्तनपात्रे । तैजसावर्त्तन्याम् ॥ देवताडे ॥ अन्त : शुषिरायांमृत्प्रतिमायाम् ॥ मूषति । मूष॰ । इगुपधेतिक : ॥ गवाक्षे ॥ यथा॰। एकद्वित्यादिमूषावहनमितिमद्दोत्रुहिमेभूमिभर्तुर्हर्म्ये रम्ये हमूषे चतुरविरचिते शुद्धशालाविशाले । इत्यादिलीलावत्यांश्रेढीव्यवहार : ॥

मूषाकर्णी । स्त्री॰ आखुपर्ण्याम् ॥

मूषातुत्थम् । न॰ कांस्यनीले । वितुन्नके । हेमतुत्थे ॥

मूषिक : । पुं॰ उन्दुरौ । आखौ ॥ अस्यमांसगुणा : । अहिनकुलशल्यगोधामूषिकमुख्याविलेशया: कथिता : । श्वासानिलकासहरंतन्मांसंपित्तदाहकरम् ॥ अन्येविलेशयायेस्यु : केञ्चिडोन्दुरुकादय : । गर्हितंतस्यमांसस्तुमद्यगौरवदुर्जरम् ॥ अपिच । मूषकोमधुर : स्निग्धोव्यवायीबलवर्धन : ॥ पारिभाषिकोयथा । विभवेसतिनैवात्तिनददातिजुहोतिच । तमाहुराखुंतस्यान्नंभुक्त्वाकृच्छ्रेणशुध्यति ॥ मुष्णाति । मुष॰ । मुषेर्दीर्घस्चेतिकिकन् ॥

मूषिकपर्णी । स्त्री॰ जलदृषविशेषि । चित्रायाम् । उपचित्रायाम् । न्यग्रोध्याम् । मूषाकर्णीतिख्याता

याम्। इ रद्राक्नानीयामा० तृ० गौ०
दे०भा० ॥ मूषिकपर्ण्यस्याः मू
षिककर्णाकारपर्णत्वात्। पाकक
र्णेतिङीष् ॥
मूषिका। स्त्री० मूषिकपर्ण्याम्॥ मू
षकस्त्रियाम्॥ अजादित्वाट्टाप्॥
मूषायाम्॥
मूषिकाङ्क:। पुं० गणेशे॥
मूषिकाञ्चन:। पुं० विघ्नहारिणि।
गणेशे॥
मूषिकार:। पुं० आखौ। उन्दुरौ॥
मूषिकाया: पुमान्। आरक्पुंसी
त्यारक्
मूषिकाराति:। पुं० बिडाले॥
मूषिकाह्वया। स्त्री० सुतश्रेण्याम्।
मूषिकपर्ण्याम्॥
मूषित:। त्रि० मुषिते। चोरिते। मू
ष्यतेस्म। मूषस्तेये। क्त:॥
मूषिपर्णिका। स्त्री० मूषिकपर्ण्याम्॥
मूषी। स्त्री स्वर्णाद्यावर्त्तनमात्रे। स्व
र्णादिद्रवीकरणपात्रे। मूषायाम्॥
मूषीक:। पुं० उन्दुरौ। मूषिके॥
मूषीककर्णी। स्त्री० मूषिकपर्ण्याम्॥
मूषीका। स्त्री० उन्दुरौ॥
मृकण्ड:। पुं० मृकण्डुमुनौ॥ अयम
दन्तोमृगय्वादयश्चेतिसूत्रे० उज्ज्वल
दत्तग्रन्थे स्पष्ट:॥ मृकण्डस्यमुने-
स्तीर्थंतथाख्यामतिनिर्मलमितिस्का
न्दोक्तेश्च॥

मृकण्डु:। पुं० मृकण्डमुनौ॥
मृग:। पुं० आरण्यपशुमात्रे। करि
विशेषे॥ मृगशिरोनक्षत्रे॥ यथा।
मृगेगत्वाशिवेस्थित्वाऽदितौगच्छ
न्जयेद्रिपूनिति॥ एकदेशप्रयोगा
त्॥ अन्वेषणे॥ याञ्चायाम्॥ मा
र्गशीर्षमासे॥ यज्ञविशेषे॥ मृग-
नाभौ॥ मकरराशौ॥ मृगयाया-
म्॥ स्वनामप्रसिद्धे पशुविशेषे।
कुरङ्गे। वातायौ। हरिणे। अ
जिनयोनौ॥ अस्यमांसप्रकारगुणा:
। मार्गमांसंबहुशकलितंस्विन्नमी-
षच्चतोयैस्तप्तेहैङ्गरसहितैपाचि
तंशब्दमुख्ये:। सान्द्रंसार्द्रंलवणस
हितंदाडिमेनातियुक्तंखादन्खा-
दन्कलयतिशिरश्चन्द्रचूडोपिनूनम्
॥ ऐणंमांसंहिमंग्राहिरुच्यंदोषत्र
यापहम्। षड्रसंबलदंपथ्यंहृद्यंलघु
ज्वरापहम्॥ मृग्यते। मृगअन्वेष
णे। अदन्त:। घञ्। मृगोनव-
विधोयथा। सम्बरोरोहितोन्यङ्कु:
कुरङ्ग: सृमरोरुरु:। एणश्चह-
रिणश्चेतिमृगा: नवविधामता:॥
पाठान्तरंयथा। रामृकरोहितोन्य-
ङ्कु: सम्बरोवभ्रुणोरुरु:। अथै
णहरिणाश्चेतिमृगा:नवविधामता:
॥ हरिणश्चापिविज्ञेय: पञ्चभेदोत्र
भैरव। ऋष्य: खड्गोरुरुश्चैवपृषतश्च
मृगस्तथा॥ एतेबलिप्रदानैचचर्म्म

मृग :

द्रामैवकीर्त्तिता:॥ इतिकालिका पुराणे ६७ अध्याय : अथमृगपरीक्षा । मृगनाभिंसमादातुंकौतुकार्थंतथापुन : । मृगा : पोष्यामहीन्द्राणांतेषांवच्यामिलक्षणम् ।। पृथिव्यव्वायुगगनतेजोधिकास्तुपञ्चधा'भिद्यन्ते नैकभेदास्तुसमस्तामृगजातय : ।। तद्यथा । येगन्धिन: क्षीणशरीरकर्णास्ते पार्थिवागन्धमृगा : प्रदिष्टा : । सर्वाङ्गमेषांसुरभिप्रकामं पुण्येप्रदेशेप्रभवन्तितेतु ॥ येवैविशालागुरुदीर्घशृङ्गाश्चमांसलास्तोयखुरादिष्टा : । आप्यास्तुतेवैप्रसरन्तिभूरिसर्वत्रदेशेप्रभवन्तिचैव ॥ धावन्तिवातमिवान्तरीक्षेदीर्घास्तुतेवातमृगा : प्रदिष्टा : । तेयत्रयत्रभवन्तिशक्तास्तत्रैवमर्वाणिशुभानिसन्ति ॥ लघुप्रमाणालघुवीर्यसत्वानिर्गन्धदेहाश्छगलप्रमाणा : । तेगगनावेगकरानराणांस्पृश्यानतेनापिनिरीक्षणीया : ॥ येकृष्णवर्णागुरुदीर्घशृङ्गा : क्रुद्धाभृशंयान्तिचवायुवेगा : । तेकृष्णसारा : खलुतैजसास्तुपुण्यप्रदेशेप्रभवन्तितेतु ॥ भोजोप्याह ।पार्थिवादिमृग: सर्वश्चतुर्जातिर्भवेत्पृथक् । सुशृङ्गास्तनुलोमानोब्राह्मणामृगजातय : ॥ क्रुद्धा : पञ्चरिशृङ्गाश्चक्षत्रिया : खरलोमशा :। आवर्त्तशृङ्गास्तनवो हरिणावैश्यजातय: ।। कुशृङ्गावाप्यशृंगावाशूद्रा: खरतनूरुहा: । अथवानांयेगुणादोषा स्तेचयाहरिणेष्वपि ।। तथापिदोषा : पञ्चामीवक्ष्यन्ते हरिणाश्रया : । नेत्रयोरन्तरेयश्चलोमावर्त्ता : सपापकृत् ॥ विषमोविकृतौशृङ्गेयश्चसक्षमनाशन : । आवर्त्त : पृष्ठतोयस्यआनाभिमभिविन्दति ।। पश्चार्द्धयस्यवावर्त्तौस्तौस्याज्यौभयकारकौ । वर्णमेवपदादीनांचैकृताहननाशन : । गार्ग्य : । दोषवन्मृगजातीनांभिजातीनामथ पिवा। दर्शनात्स्पर्शनाच्चैवगन्धादानाच्चपोषणात् ॥ भवेयुर्विपद : सर्वास्तथाचैवाद्यपोषणात् ॥ शङ्खोपि । हरिणपोषणतो धरिणीभुजांनहिभवेन्मरुदुद्भवपीडनम् । नपविवह्निरुजारिपुजंभयंत द्वत हरिणं गुणिनंनृप: ॥ इतिमृगपरीक्षा युक्तिकल्पतरौ ॥ चतुर्विधपुरुषेषुपुरुषविशेषे ॥ तल्लक्षणं यथा । वदतिमधुरवाणींदीर्घनेत्रोऽतिभीरुश्चपलमतिसुदेह : शीघ्रवेगोमृगोयम् ॥ शशकेपद्मिनीतुष्टा मृगेतुष्टाचचित्रिणी। वृषभे शङ्खिनी तुष्टाहयेतुष्टाचहस्तिनी ।। पद्मिनी शशयोर्योनिमेढ्रकौचतुरङ्गुलौ । चित्रिणीमृगयोर्योनिमेढ्रकौचतथाविधौ ॥ इ० रतिमञ्जरी ॥

मृगगामिनी । स्त्री० विडङ्गे ॥ मृगस्येवगमनशीलायाम् ॥

मृगचर्म्मजम् । न० जवादिनामकगन्धद्रव्ये ॥ चि० मृगचर्मजाते ॥

मृगचेटकः । पुं० खट्टासे ॥

मृगचेष्टितम् । न० मृगेङ्गिते ॥ तद्यथा । सौमागतावन्यमृगारुवन्तः स्थितान्नजन्तोथसमापतन्तः । सम्प्रस्थतौतैष्यभयानिदीप्ताः कुर्वन्ति शून्यंपरितोभ्रमन्तः ॥ दीप्ताः भयंकुर्वन्तिआवेदयन्तीतिसर्वत्रान्वयीबोध्यः ॥ तेग्राम्यसत्त्वैरनुवाच्यमानाभयावरोधायभवन्तिवन्याः । द्वाभ्यामपिप्रस्थतुवाशितास्तेबन्दिग्रहायैवमृगारुवन्ति ॥ वन्येसत्त्वेद्वारसंस्थेपुरस्यरोधोवाच्यःसंप्रविष्टे विनाशः । सूतप्रसूत्युः स्याद्भयंसंस्थितेचगेहंयातिबन्धनंसंप्रदिष्टम् ॥

मृगजहुः पुं० मृगापत्ये ॥

मृगजालिका । स्त्री० वागुरायाम् ॥

मृगजीवनः । पुं० व्याधे ॥ मृगाः जीवनमस्य ॥

मृगणा । स्त्री० अपहृतद्रव्यान्वेषणे ॥ मृग० । युवासेतियुच् ॥

मृगतट् । स्त्री० मृगतृष्णायाम् ॥

मृगतृषा । स्त्री० मरीचिकायाम् ॥ मृगाणांतृषाऽत्रस्याम् । अर्शआद्यच् । टाप् ॥

मृगतृष्णा । स्त्री० मरीचिकायाम् ॥ ग्रीष्मे मरुदेशेसिकतासुअर्करश्मयः प्रतिफलिताद्दूरस्थानांजलमितिबुद्धिविषयास्ताम् मृगतृष्णाऽत्रस्याम् । अर्शआद्यच् । टाप् ॥

मृगतृष्णिका । स्त्री० मृगतृष्णायाम् ॥ मृगतृष्णैव । स्वार्थेकन् ॥ रेचित्तचिन्तयचरंचरणौमुरारेः पारंगमिष्यसियतोभवसागरस्य । पुत्राः कलत्रमितरेसुहृदःसहायाः सर्वंविलोकयसखेमृगतृष्णिकाभम् ॥

मृगदंशकः । पुं० कुक्कुरे ॥ मृगान्दशति । दंशदशने । कर्म्मण्यण् । कः ॥

मृगधूर्त्तकः । पुं० गोमायौ । शृगाले ॥ मृगेषुधूर्त्तइव । संज्ञायांकन् ॥

मृगनाभिः । पुं० कस्तूर्याम् ॥ मृगस्यनाभिः ॥

मृगनाभिजा । स्त्री० कस्तूर्याम् ॥

मृगनेत्रा । स्त्री० रात्रिविशेषे ॥ त्वयापुत्रकनाधीतंमृगनेत्रासुरात्रिषु-तेनत्त्वंविदुषांमध्येपङ्के गौरिवसीदसि ॥ मृगेनक्षत्रविशेषेनेत्रायस्याः । नेतुर्नक्षत्रे ऽब्वक्तव्यः ॥ योषित्प्रभेदे । मृगलोचनायाम् ॥ मृगस्यनेत्रे इवनेत्रे चक्षुषी यस्याः ॥

मृगपतिः । पुं० मृगेन्द्रे । सिंहे ॥

मृगपिप्लुः । पुं० पक्षजे । चन्द्रे । हि

मांशी ॥
मृगप्रियम् । न० पर्वततृणे ॥
मृगवधाजीव : । पुं० व्याधे ॥ मृगवध आजीवोयस्यस : ॥ मृगवधेनाजीवतिवा । जीव० । इगुपधेतिक: ॥
मृगबन्धनी । स्त्री० मृगबन्धनार्थंजालविशेषे । खावल० द्र० पर्वत भा० ॥ वागुरायाम् ॥ मृगोबध्यतेऽनया । बन्धबन्धने । करणेल्युट् । ङीप् ।
मृगभक्ष्या । स्त्री० जटामांस्याम् ॥
मृगमद : पुं० कस्तूर्याम् ॥ मृगस्य मद : ॥
मृगमदवासा । स्त्री० कस्तूरीमल्लिकायाम् ॥
मृगमातृक: । पुं० मृगविशेषे ॥ स्याल्य : पृथूदरोज्ञेय : शरभोमृगमातृक : । गुणै: शशिनसदृशोगदितो मृगयमातृक : ॥
मृगया स्त्री० आखेटने । मृगव्ये । आखेटे । खेटे । हेडा०द्र०भा० ॥ अवलस्वकुलाशिनोझषान्निजनीडद्रुमपीडिन : खगान् । अनवद्यतृणार्दिनोमृगान्मृगयाघोयनभूभृतांमताम् ॥ इतिश्रीहर्ष : ॥ मृग्यन्ते मृगाअस्याम् । मृग० । चु० अदन्त : । परिचर्य्यापरिसर्यामृगयाऽटाट्यानामुपसङ्ख्यानमितिसाधु : ॥
मृगयु : । पुं० व्याधे । लुब्धके । हे

डिया० द्र० भा० प्र० । मांसविक्रयार्थंमृगादिपशुहन्तरि ॥ मृगान्वधार्थंयाति । या० । मृगव्यादित्वात्कु : ॥ गोमायौ । शृगाले ॥ परमेष्ठिनि ॥
मृगरसा । स्त्री० सहदेव्याम् ॥
मृगराट् । पुं० सिंहे । मृगेषुराजते । राजृ० । क्विप् ॥
मृगराज : पुं० सिंहे ॥ मृगाणांराजा । राजाह : सखिभ्यष्टच् ॥
मृगराटिका । स्त्री० जीवन्त्याम् ॥
मृगरिपु: । पुं० सिंहे ॥ मृगाणांरिपु: ॥
मृगरोमजम । न० राङ्कवे । मृगरोमजेवस्त्रे ॥
मृगलाञ्छन : । पुं० चन्द्रे । शशिनि ॥ मृगोलाञ्छनंयस्य ॥
मृगवल्लभ : । पुं० कुन्दुरुतृणे ॥
मृगवाहन : । पुं० वायौ ॥ मृगोवाहनंयस्य ॥
मृगव्ययम् । न० मृगयायाम् ॥ मृगाव्ययन्त्यऽत्र । व्ययगतौ । अन्येष्वपीतिड : ॥
मृगशिरा : । स्त्री० पंचमनक्षत्रे ॥ मृग : शिरोऽस्य ॥
मृगशिर : । न० मृगशीर्षे । पंचमे नक्षत्रे ॥ अत्रजातस्यफलम् । शरासनाभ्यासरतोविनीत: सदानुरक्तो गुणिनांगुणेषु । भक्तानुपक्ते भरे

णपूर्णः सन्मार्गवर्त्ती मृगजन्मभागी ॥ आक्रुत्यामृगः शिरोऽस्य ॥

मृगशिरा । स्त्री० आग्रहायण्याम् ॥ मृगशिरसि ॥

मृगशीर्षम् । न० मृगशिरसिनक्षत्रे ॥ आक्रुत्यामृगः शीर्षंयस्य ॥

मृगशीर्षा । स्त्री० मृगशिरोनक्षत्रे ॥

मृगा । स्त्री० सहदेवीलतायाम् ॥

मृगाक्षी । स्त्री० इन्द्रवारुण्याम् । विशालायाम् ॥ मृगनेत्रायांराज्ञौ ॥ मृगलोचनायांनार्याम् ॥ मृगस्य अक्षिणीइवअक्षिणीयस्याः ॥

मृगाङ्कः । पुं० कलानिधौ हिमांशौ ॥ कर्पूरे ॥ वायौ ॥ मृगचिह्ने ॥ मृगोऽङ्कोयस्यसः ॥ यथादर्पणंप्राप्य परावृत्तानयनरश्मयोग्रीवास्थमेवमुखंदर्पणगतमिवपश्यन्ति०एवंचन्द्रमण्डलंप्राप्यपरावृत्तास्तेदूरत्वदोषात्०पृथिवीमव्यक्तरूपामिवचन्द्रमण्डलगतांपश्यन्ति०सएवचन्द्रेमृगचिह्नमित्युपचर्यते० इतिव्याख्यातारः ॥ यक्ष्मरोगस्यौषधविशेषे ॥ यथा । स्याद्रसेनसमंहेममौक्तिकंद्विगुणंभवेत् । गन्धकस्तुसमस्तेनरसपादस्तुटङ्कणः ॥ सर्वंतद्गोलकंकृत्वा काञ्जिकेनविशोधयेत् । भाण्डेलवणपूर्णेथपचेद्यामचतुष्टयम् ॥ मृगाङ्कसंज्ञकोह्येषरोगराजनिकृन्तनः ॥ अपिच । रसस्यभस्मनोहेमपिष्टीकृत्यप्रयोजयेत् । गुञ्जाचतुष्टयस्वाज्यमरिचैर्भक्षयेन्नरः ॥ इति मधुमती ॥

मृगाजीवः । पुं० व्याधे ॥

मृगाण्डजा । स्त्री० कस्तूर्याम् ॥

मृगादनः । पुं० तरक्षौ । तेंदुवावाघ०तरख इ० भा० प्र० ॥ मृगमत्ति । अद० । ल्युः ॥

मृगादनी । स्त्री० इन्द्रवारुण्याम् । गवादन्याम् ॥ मृगेर्वारौ ॥ सहदेव्याम् ॥

मृगादिः । पुं० मार्गशीर्षे ॥

मृगादी । पुं० सिंहे ॥ मृगानत्तुंशीलंयस्य । णिनिः ॥

मृगाधिपः । पुं० सिंहे ॥

मृगान्तकः । पुं० चित्रव्याघ्रे । चीता० इ० भा० ॥ मृगाणामन्तकः ॥

मृगारातिः । पुं० मृगस्यशत्रौ ॥ कुक्कुरे ॥ मृगस्यअरातिः ॥

मृगारिः । पुं० कण्ठीरवे । सिंहे ॥ शार्दूले । व्याघ्रे ॥ मृगस्यअरिः ॥ कुक्कुरे ॥ रक्तशिग्रौ ॥

मृगावित् । पुं० व्याधे ॥

मृगास्यः । पुं० मकरराशौ ॥ मृगस्य आस्यमिवआस्यंयस्यसः ॥

मृगितः । त्रि० अन्वेषिते । ढूंढा० इ० भा० ॥ मृग्यतेस्म । मृग० । क्तः । इट् ॥

मृगी । स्त्री० वनिताविशेषे ॥ मृग

जातिस्त्रियाम् । मृगीणांजङ्गलोत्था नांछागोचीरगुणं पय: ॥ कश्यपकन्यायाम् । पुलहभार्यायाम् । हरिणादिमृगाणांमातरि ॥ मध्यावृत्तिप्रभेदे । रोमृगी० इतिलक्षणलक्षिते ॥ यथा । सामृगीलोचना । राधिकाश्रीपते: ॥ हरिण्याम् ॥ सितोदरेपीतपृष्ठे वराटके ॥

मृगेक्षणा । स्त्री० मृगनेत्रायाम् ॥ मृगेक्षी ॥

मृगेन्द्र: । पुं० सिंहे ॥ नाभिषेकोनसंस्कार: सिंहस्याक्रियते वने । विक्रमार्जितसत्त्वस्यस्वयमेवमृगेन्द्रता ॥ मृगाणामिन्द्र: ॥ वर्णवृत्तान्तरे ॥ पयोधरधारिमृगेन्द्रमवेहि ॥ यथा । कृपाविलपानि ॥ मध्यलघो: पञ्चमात्रापर्याये० ऽ । ऽ० ॥ यात्रायोगान्तरे ॥ लग्ने शुक्र: शशीबन्धौ कर्मस्थानेगुरुर्यदा । मृगेन्द्रयोगोविख्यातोयातु: सर्वार्थसाधक: ॥

मृगेन्द्रचटक: । पुं० श्येने ॥ चटकानांमृगेन्द्र: ॥ राजदन्तादि: ॥

मृगेन्द्रमुखम् । न० अतिजगती १३ छंदोभेदे ॥ भवतिमृगेन्द्रमुखंनजौजरौग: ॥ यथा । गुरुभुजवीर्यभरं हरिंमदान्धायुधिसमुपेत्यनदानवाजिजीवु: । क्षुधितमृगेन्द्रमुखंमृगाउपेत्यकतुखलविभर्तिजीवनस्ययोगम् ॥

मृगेन्द्राणी । स्त्री० वासके ॥

मृगेर्वारु: । स्त्री० श्वेतेन्द्रवारुण्याम् । मृगाच्याम् । श्वेतपुष्पायाम् । मरुजायाम् ॥

मृगेष्ट: । पुं० मुद्गरवृत्ते ॥

मृग्य: । त्रि० अन्वेष्ये । मृगितव्ये ॥

मृज: । पुं० वाद्यविशेषे । मर्दले । दारुजे । मादल० इ० गौ० दे० भा० प्र० ॥

मृजा । स्त्री० मार्जनायाम् । प्रोञ्छनादिनाङ्गनिर्मलीकरणे ॥ मार्जनम् । मृजशुद्धौ । मृजशौचालङ्करणयो: चुरादिर्वा । भिदाद्यङ् ॥

मृज्य: । त्रि० मार्ज्जनीये ॥

मृड: । पुं० शिवे ॥ मृडति । मृडसुखने । मृड्णातिवा । मृडचचात् चोदे । इगुपधत्वात्क: ॥

मृडङ्कण: । पुं० बालके ॥ मृडति । मृड० । मृड: कीकच्कङ्कणाविति कङ्कण: प्रत्यय: ॥

मृडा । स्त्री० दुर्गायां ॥

मृडानी । स्त्री० चण्डिकायाम् । अम्बिकायाम् ॥ मृडस्यस्त्री । इन्द्रवरुणेतिङीषानुकौ ॥

मृडी । स्त्री० दुर्गायाम् ॥

मृडीक: । पुं० मृगे । हरिणे ॥ मृडति । मृड: कीकच्कङ्कणाविति कीकच् ॥

मृणालम् । न० नलदे । उशीरे ॥ पुं०

न० वर्षे । पद्मनाले ॥ मृणालं शीतलं वृष्यं पित्तदाहास्रजिद्गुरु । दुर्जरं स्वादुपाकञ्च स्तन्यानलकफप्रदम् ॥ सङ्ग्राहि मधुरं रूक्षं शालूकमपि तद्गुणम् विसाङ्कुराश्चन्द्रकलानुकाराविभाविताः सैभ्ववनिम्बुकाभ्याम् । विकीर्णखण्डीकृतशृङ्गवेराजलेपिश्रङ्गि लघुदीपवन्ति ॥ मृण्यते । मृणहिंसायाम् । तमिविशिविडिमृणीतिकालन् ॥

मृणालिनी । स्त्री० पद्मिन्याम् ॥ मृणालानिसन्त्यत्र । पुष्करादिभ्यो देशइतीनि: ॥

मृणाली । स्त्री० विसे । अत्रादिमूले ॥ अपचयविवक्षायाम्गौरादित्वान्ङीष् ॥ स्वल्पमृणालजातौ ॥

मृत: । त्रि० परासौ । प्राप्तपञ्चत्वे । परेते । प्रेते । संस्थिते । प्रमीते । मरा० इ० भा० ॥ यथा । धर्म: प्रव्रजितस्तप: प्रवसितं सत्यञ्चदूरे गतंपृथ्वीमन्दफलाजना: कपटिनो लौल्ये स्थिताब्राह्मणा: । मर्त्या: स्त्रीवशगा: स्त्रियश्चचपला: नीचाजनाउन्नताहाकष्टंखलुजीवितंकलियुगेधन्यानरायेमृता: ॥ इतिगारुडे ११५ अध्याय: ॥ न० मृत्यौ॥ याचिते । मृतन्तुयाचितंप्रोक्तमितिमनु: । याचनवृत्तिर्हिमरणमिवदु:खजनकत्वान्मृतमुच्यते ॥ म्रियतेस्म । मृङ्प्राणत्यागे । गत्यर्थेतिक्त: ॥ तनिमृङ्भ्याकिच्चेतितन्वा ॥

मृतकम् । न० शवे ॥ मरणाशौचे ॥ यथा । यदिस्यान्मृतकेसूतिर्मृतकेचमृतिस्तथा । शेषेणैवभवेच्छुद्धिरह: शेषेद्विरात्रकम् ॥

मृतकल्प: । त्रि० मृतप्राये ॥ ईषदूनोमृत: । ईषदसमाप्ताविति कल्पप्प्रत्यय: ॥

मृतकान्तक: । पु० शृगाले ॥

मृतजीव: । पु० तिल्वकवृक्षे ॥

मृतमत्त: । पु० )

मृतमत्तक: । पु० ) शृगाले ॥

मृतवत्सा । स्त्री० अजीवत्सन्तानायाम् । मृतापत्यायाम् ॥

मृतसञ्जीवनी । स्त्री० मृतजीवनार्थिकायांविद्यायाम् ॥ गोरक्षदुग्धायाम् ॥ मृत: सञ्जीव्यतेऽनया । जीवप्राणधारणे । ल्युट् । ङीप् ॥

मृतस्नात: । त्रि० अपस्नाते । मृतमुद्दिश्यकृतस्नानेजने ॥ मृतेस्नात: । सप्तमीतिसमास: ॥

मृतस्नानम् । न० अपस्नाने । मृतोद्देशेनस्नाने ॥

मृतसञ्जीवक: । पु० राजर्षिविशेषे ॥

मृतामदम् । न० तुत्थे ॥

मृतालकम् । न० तुवरिकायाम् ॥ मृतमालयति । अलभूषणादौ ।

मंण्यण्। संज्ञायांकन्॥

मृति:। स्त्री॰ मरणे॥ मृङ् प्राण त्यागे। स्त्रियांक्तिन्॥ मृति: प्राणवियोग: स्यान्नतुनाश: सतो मत:। मृङ् प्राणत्यागइत्युक्तं स्वयंनष्ट: कथं त्यजेत्॥

मृत्कर:। पुं॰ कुम्भकारे॥

मृत्कांस्यम्। न॰ शरावे॥

मृत्किरा। स्त्री॰ जलजन्तुविशेषे। घुर्घुर्याम्॥

मृत्क्षारम्। न॰ मूलके॥

मृत्खलिनी। स्त्री॰ सप्तलायाम्। चमकषायाम्॥

मृत्तालम्। न॰ तुवरिकायाम्। सुराष्ट्रजमृत्तिकायाम्॥ मृदिताल: प्रतिष्ठाऽस्या:॥

मृत्तालकम्। न॰ मृत्ताले॥ स्वार्थे कन्॥

मृत्तिका। स्त्री॰ मृदि॥ माटी॰ इ॰ भा॰॥ मृदेव। स्वार्थे॰ मृदस्तिकन्। प्रत्ययस्यादित्वे वसिद्धे॰इकारोच्चारणं प्रक्रियालाघवार्थम्। टापोलुक्यपिश्रवणार्थञ्च। पञ्चभिर्मृत्तिकाभि: क्रीत: पञ्चमृत्तिक: पट:॥

मृत्फली। स्त्री॰ कुष्टौषधे॥

मृत्यु:। पुं॰ मरणे। पञ्चतायाम्। निधने। शरीराद्यारम्भककर्मक्षय निमित्ते। सर्वमर्मच्छेदनरूपे॰



शरीरादिविच्छेदे॥ सचसर्वेषांब्रह्मादीनांकालंप्राप्यावश्यमेवभवति। तथाहि। प्राप्तेकालेस्वयंब्रह्मापरार्द्धद्वयसम्मिते। निधनंयातितरसा जगत्कर्तास्वयंप्रभु:॥ चतुर्युगसहस्रेषुब्रह्मणोदिवसेकिल। पतन्ति भवनात्पञ्चनवचेन्द्रास्तथापुन:। तथैवहरिगुणविष्णुर्मरणायोपकल्पते॥ तथैवहरिगुणकालेशङ्कर: शान्तिमेतिच॥ क्वाचिन्नामरणे मूढानिस्थलेदैवनिर्मिते। महीमही धरागाञ्चनाश: सूर्य्यशशाङ्कयो:॥ जातस्यहिध्रुवोमृत्युध्रुवंजन्ममृतस्यच। अध्रुवेस्मिन्शरीरेतुरक्षणीयंयश: स्थिरम्॥ इतिश्रीदेवीभागवते ५ स्कन्धे ३१ ऽध्याय:॥ आसन्नमृत्युर्लोकोयंध्रुवादीन्नहिपश्यति॥ तथाहि। अरुन्धतींध्रुवञ्चैवविष्णोस्त्रीणिपदानिच। आसन्नमृत्युर्नोपश्येच्चतुर्थंमातृमण्डलम्॥ अरुन्धतीभवेज्जिह्वाध्रुवोनासाग्रमुच्यते। विष्णो: पदानिभ्रूमध्येनेत्रयोर्मातृमण्डलमितिकाशीखण्डे १२ अध्याय:॥ संसारे। अविद्याकामकर्मसमुदाये। स्वाभाविकेकर्मणि॥ स्वाभाविकेज्ञाने॥ संहारकारिणांमध्येविनाशकर्त्री भगवतोविभूतौ। यमे। वैवस्वते॥ मरणम्। मृङ्॰। भुजिमृङ्भ्यां

युक्त्युक्ताविति क्त क् ॥ योगविशेषे ॥ यथा । रवावनुराधा० सोमे उत्तराषाढा० कुजे शतभिषा० बुधे ऽश्विनी० गुरौ मृगशीर्षम्० भृगौ श्लेषा० शनौ हस्तनक्षत्रे नृमृत्युयोगं भवति ॥ लग्नादष्टमभवने ॥ यात्रायोगान्तरे ॥ अन्योन्यक्षेत्रगावेकक्षेत्रे वाकविभास्करौ । मृत्युयोगोयमाख्यातो यातुर्मृत्युप्रदायकः ॥

मृत्युजरे । स्त्री० द्वि० प्रज्वारस्याप्रियाप्रिययोः ॥ यथा । कालकन्ये मृत्युजरे प्रज्वारस्यप्रियाप्रिये । याभ्यांजगत्समुच्छिन्नं विधात्रानिर्मितं विधौ ॥ जरामृत्योरपिकालादुत्पन्नत्वात्कन्यासदृशत्वात्कन्यात्वम् । तेमृत्युजरे कालस्यकन्ये प्रज्वारस्य प्रकृष्टज्वरस्यप्रियाप्रियेपत्न्यौभवतः । प्रियातोऽप्रियेऽतिशयितप्रियेइत्यर्थः ॥

मृत्युञ्जयः । पुं० कृत्तिवाससि । शिवे ॥ मृत्युकन्याजिताश्वच्छिवेनगुरुणाऽमम । नमृत्युनाजितः शम्भुः कल्पेकल्पेश्रुतौश्रुतम् ॥ मृत्युं जयति । जिजये । संज्ञायांभृतृवृजिधारिसहितपिदमः । इतिखच् । मुम् ॥ यात्रायोगान्तरे ॥ लाभे भौमोगुरुश्छिद्रे षष्ठस्थाने च भास्करः । मृत्युञ्जयसमाख्योयं सर्वशत्रुनिवर्हणः ॥

मृत्युनाशकः । पुं० पारदे ॥ त्रि० मरणहर्त्तरि ॥

मृत्युपाशः । पुं० अधर्माज्ञानरागद्वेषादौ ॥

मृत्युपुष्पः । पुं० इक्षौ ॥

मृत्युफलः । पुं० महाकालफले ॥

मृत्युफली । स्त्री० कदल्याम् ॥

मृत्युभङ्गुरकः । पुं० भवरुति । प्रेतपटहे । मरणसमयवाद्ये ॥

मृत्युभृत्यः । पुं० रोगे ॥

मृत्युमान् । त्रि० मृते ॥

मृत्युवञ्चनः । पुं० शम्भौ ॥ श्रीफले ॥ द्रोणकाके ॥

मृत्युबीजः । पुं० वंशे ॥

मृत्युसूतिः । स्त्री० कर्कट्याम् । मागमायाम् ॥ मृत्यवेसूतिः प्रसवो यस्याः ॥ यथाकर्कटकीगर्भमाधत्तेमृत्युमात्मनः ॥

मृत्सा । स्त्री० प्रशस्तमृदि ॥ प्रशस्तामृत् । सस्नौप्रशंसायामितिसः । टाप् ॥ तुवरिकायाम् । तूवर० इ० भा० ॥ मृत्साऽस्त्यस्याः सचत्वेन । अर्शआद्यच् । टाप् ॥

मृत्स्ना । स्त्री० प्रशस्तायांमृत्तिकायाम् । मृत्सायाम् ॥ प्रशस्तामृत् । सस्नौप्रशंसायामितिस्नः । टाप् ॥ तुवर्याम् । आढक्याम् । अरहर तूअर० इ० भा० ॥

मृत्०ट्। स्त्री० मृ... ायाम्॥ शौचे मृद्विशेषोयथाविष्णुपुराणे । वल्मीकमूषकोत्खातांमृदमं...जा तथा । शौचावशिष्टंगे...ाद द्यात्लेपसम्भ...ाम्॥ अन्न : प्राग्वपन्नाग्रहलोत्खातांचपार्थिव । परित्यजेन् मृदस्त्वेता : सकला शौचसाधनइति ॥ अन्न : प्राग्वयन्मा...तकोटाम्॥ मृदति० मृद्यतेवा । मृदचोदेसम्पदादित्वात्क्विप्। काच्याम् । तुवरिकायाम्॥

मृदङ्गुर : । पुं० हारीतपक्षिणि ॥

मृदङ्ग : । पुं० स्वनामप्रसिद्धे वाद्ये । मुरजे ॥ अथमृदङ्गादिविवरणम्। मर्द्दल : खादिर : श्रेष्ठोहीन: स्याद्न्यदारुज : । रक्तचन्दनजोवाद्योगभीरध्वनिरुत्तमो : ॥ सार्द्धहस्तप्रमाणात्तुदैर्घ्यमस्यविधीयते । चयोदशाङ्गुलंवाममथवाद्वादशाङ्गुलम् ॥ दक्षिणञ्चभवेद्धीनमेकेनाऽर्द्धाङ्गुलेनवा । करिणानद्धवद्नोमध्ये चैवपृथुर्भवेत् ॥ षण्मासीयोभवेद्वस्तस्तच्चर्मकरणंमतम् । मृत्तिकानिर्म्मितश्चैवमृदङ्ग : परिकीर्त्तित:॥ पातयेत्खर्लिवाद्यवादनार्थंस्वमर्द्दले । विभूतिर्गैरिकंभक्तंकेन्दुकीनचसंयुतम् ॥ यद्वाचिपीटकांटेयंकोविनीसत्त्वमिश्रितम् । सर्वमेकत्र पिष्टंतल्लेप : खरलिरुच्यते ॥ वामास्येपूरिकांकृत्वालेपंदद्याच्चदक्षिणे । एवंमर्द्दलक : प्रोक्त : सर्ववाद्योत्तमोमत : ॥ अस्यसंयोगमासाद्यसर्ववाद्यश्शोभते । एतद्गवीजकाष्ठं दलमर्द्धाङ्गुलंविदु : ॥ इति । विशेष : सङ्गीतशास्त्रे द्रष्टव्य: ॥ पटहे ॥ घोषे ॥ वंशे ॥ मृद्यते । मृद० । विडादिभ्य : किदित्यङ्गच् ॥ मृत्सङ्गमस्येतिवा ॥

मृदङ्गक : । पुं० मृदङ्गे ॥

मृदङ्गफल : । पुं० पनसवृक्षे ॥ मृदङ्गइवफलान्यस्य ॥

मृदङ्गफलिनी । स्त्री ० कोषातक्याम्॥

मृदङ्गी । स्त्री० कोषातक्याम् । श्वेतघोषाइतिगौ०दे०भा० ॥

मृदर : । पुं० विषे ॥ त्रि०विलसति ॥ म्रियतेऽनेन०मृदृातिवा । मृ०्मद्०वा । कृदराद्यश्चेति० अरप्रत्ययान्तोनिपातित : ॥ भये ॥

मृदा । स्त्री० मृत्तिकायाम्॥

मृदाकर : । पुं० वज्रे ॥

मृदित :। त्रि० अभिनष्टे । विनाशिते ॥ निष्पीडिते ॥ चूर्णीकृते ॥ मृद्यतेस्म । मृद० । क्त : । इट् । क्ङितिचेतिनगुण: ॥ चौर्णे ॥

मृदिनी । स्त्री० मृत्सायाम्॥

मृदुः । त्रि० कोमले ॥ अतीक्ष्णे ॥ मृदुः सर्वत्रबाधकः ॥ मृदति । मृद मर्दने । प्रथिम्रदिभ्रस्जामितिकुः सम्प्रसारणं च ॥ मृदुशब्दोमृदुत्वगुणमुक्त्वातद्द्रव्यमभिधत्ते इतिगुणवचनोमृदुशब्दः । तेनस्त्रियांङीष- भावे०मृदुः ॥ न० विशेषनक्षत्रा- र्द्रौ ॥ यथा । चित्रेन्दुमित्रपौष्णा- श्वमृदुमैत्रंतथाभृगुः । तत्रगीता- म्बरक्रीडामित्रकार्यंचशोभनम् ॥ स्त्री०गृहकन्याराम् ॥

मृदुकृष्णायसम् । न० सीसके ॥

मृदुगमना । स्त्री० हंस्याम् ॥ त्रि०मन्दगमने ॥

मृदुचर्मी । पुं० भूर्जवृक्षे । त्रि०कोमलत्वग्विशिष्टे ॥

मृदुच्छदः । पुं० भूर्जे । कुकुरद्रुमे ॥ शीताले ॥ अक्षोटे ॥

मृदुता । स्त्री० मृदुत्वे ॥

मृदुतालः पुं० शीतालवृक्षे ॥

मृदुत्वक् । पुं० भूर्जपत्रवृक्षे ॥ मृद्वीत्वगस्य ॥

मृदुत्वचः । पुं० मृदुत्वचि ॥ मृद्वी- त्वचायस्यसः ॥

मृदुत्वकम् । न० सुवर्णे ॥ इतिशब्दचन्द्रिका ॥

मृदुपत्रः । पुं० नले॥न०कोमपलर्णे ॥ त्रि०कोमलपत्रवति॥ मृदूनिपत्राणियस्यसः ॥

मृदुपर्णी । स्त्री० चिल्लीशाके ॥

मृदुपर्वकः । पुं० वेत्रे ॥ त्रि० कोमलपर्ववति ॥

मृदुपुष्पः । पुं० शिरीषवृक्षे ॥ त्रि० कोमलकुसुमविशिष्टे ॥ मृदूनिपुष्पाणियस्यसः ॥

मृदुफलः । पुं० मधुनारिकेले ॥ विकङ्कते ॥ त्रि० कोमलफलवति ॥ मृदूनिफलानियस्यसः ॥

मृदुमध्यः । पुं० सात्त्विकराजसवृत्तिद्वये ॥

मृदुरेचनी । स्त्री० मार्कण्डिकायाम् ॥

मृदुलः । त्रि० कोमले ॥ मृदुर्गुणोस्यास्ति । सिध्मादिभ्यश्चेतिलच् ॥ न० जले ॥

मृदुलोमकः । पुं० शशके ॥ त्रि०कोमलरोमविशिष्टे ॥

मृदूत्पलम् । न० नीलपद्मे ॥

मृदङ्गम् । न० वङ्गे ॥ कोमलावयवे ॥ त्रि०तद्वति । मृदून्यङ्गानियस्य ॥ कर्मधारयोवा ॥

मृद्वी । स्त्री० कपिलद्राक्षायां ॥ कोमलाङ्ग्याम् ॥ मृदुशब्दोमृदुत्वगुणमुक्त्वा०मृदुत्वगुणयुक्तंद्रव्यमभिधत्ते इतिगुणवचनत्वेन०वोतोगुणवचनादितिपाक्षिकोङीष् ॥

मृद्वीका । स्त्री० गोस्तन्याम् । द्राक्षायाम् । सुनक्षा० इ० भा० ॥ मृद्नाति । मृदु० । अलीकादयश्चेति-

साधु: ॥ कपिलद्राक्षायाम् ॥
मृधम् । न० युद्धे ॥ मर्द्दनम् । मृधु हिंसायाम् । बाहुलकात्• भावे• घञर्थेवाक: ।
मृन्मय: । त्रि• मृदोविकारे ॥ मयट् ॥ स्त्री• मृन्मयी ॥
मृन्मरु: । पुं• अश्मनि । पाषाणे ॥
मृषा । अ० वितथे । मिथ्या झूठ• इ० भा• ॥ मृष्यते । मृषुसहने । काप्रत्यय: ॥
मृषाध्यायी । पुं• वके ॥
मृषार्थकम् । न० आहते । अत्यन्तासम्भवार्थवाक्ये ॥ यथा । एषवन्ध्यासुतोयातिखपुष्पकृतशेखर: । कूर्मलोमतनुत्राण: शशशृङ्गधनुर्द्धर: ॥ इ० । मृषाऽर्थोयस्यतत् । कप् ।
मृषालक: । पुं• आम्रवृत्ते ॥
मृषावाद: । पुं० मिथ्योदिते । मिथ्यावाक्ये । टङ्कयाम् ॥
मृषावादी त्रि० मिथ्यावादिनि । मृषोद्ये । मृषावादोस्यास्ति । इनि: ॥ मिथ्याभियोक्तरि ।
मृषोद्य: । त्रि० मिथ्यावादिनि ॥ राजसूयसूर्यमृषोद्येत्यादिनामृषोपपदाद्वदे: कर्म्मणिनित्यंक्यब्निपात्यते ॥ न० मिथ्यावाक्ये ॥
मृष्ट: त्रि० अपनीतमले । शोधिते ॥ मृज्यतेस्म मृजूशुद्धौ । क्त: । न०
मरिचे ॥
मृष्टि: । स्त्री० अन्नादे: संस्कारविशेषे ।
मृष्टेरुक: । पुं० वदान्ये । दानशौण्डे ॥ मिष्टाशिनि ॥ अतिथिद्विषि ॥
मेक: । पुं• अजे । छागे ॥
मेकल: । पुं• ऋष्यन्तरे ॥ गिरिविशेषे ॥
मेकलकन्यका । स्त्री• नर्मदायांसरिति । रेवायाम् ॥ मेकलस्यर्षेरद्रेर्वाकन्यका ।
मेकलाद्रिजा स्त्री• सोमोद्भवायाम् । रेवायाम् ॥ मेकलाद्रेर्जाता । जनौ• । ड: ॥
मेक्षणम् । न० यज्ञीयपात्रविशेषे ॥
मेखल: । पुं० मेकलपर्वते ।
मेखलकन्यका स्त्री• रेवायाम् ॥
मेखला । स्त्री० खड्गबन्धे । खड्गादेश्चर्मादिनिर्मितेकटिबन्धने ॥ युद्धेहस्तात्पतनवारणायमणिबन्धे प्रक्षिप्यमाणे चर्म्मादौ ॥ स्त्रीकट्याभरणे । काञ्च्याम् ॥ रशनायाम् ॥ केचित्तु• एकयष्टिर्भवेत्कास्त्रीमेखलात्वष्टयष्टिका । रशनाषोडशज्ञेयाकलाप: पञ्चविंशक: ॥ इतिपठन्ति• इत्थत्वभेदात्पर्य्यायता ॥ स्त्रीकट्यांवस्त्रग्रन्थने ॥ शैलस्याने ॥ शैलनितम्बे उपनयनकाले

धारणीयमुञ्जनिर्मितसूत्रत्रये ॥ यथा । मौञ्जीत्रिवृत्समाश्लक्ष्णाकार्याविप्रस्यमेखला । क्षत्रियस्यतुमौर्वीज्यावैश्यस्यशणतान्तवी ॥ मुञ्जालाभेतुकर्त्तव्या : कुशाश्मान्तकबल्वजै : । त्रिवृताग्रन्थिनैकेनत्रिभि: पञ्चभिरेववा ॥ इ०मनु : ॥ होमकुण्डोपरिमृद्घटितवेष्टनविशेषे ॥ यथोक्तंवशिष्ठपञ्चरात्रे । यावानकुण्डस्यविस्तार : खननंतावदिष्यते । हस्तैकेमेखलास्तिस्रोवेदाग्निनयनाङ्गुला : ॥ कुण्डेद्विहस्ते ताश्च यारसवेदगुणाङ्गुला : । चतुर्हस्ते तुकुंडे तावसुतर्कयुगाङ्गुला : ॥ मेखलाब्रह्मचारिमेखलावत्कुण्डवेष्टितामृद्घटिता:तास्वखातदेशाद्वाह्ये एकाङ्गुलिरूपंकण्ठंपरित्यज्योच्छ्रायेणविस्तारेणचेत्यादिक्रमेणवेदाद्यङ्गुला : एतद्विपरीतास्तन्त्रान्तरोक्ताव्यवहारविरुद्धा : ॥ पिङ्गलामतेपि । खातादेकाङ्गुलंत्यक्त्वा मेखलानांविधिर्भवेदिति ॥ मखंगतिंलाति । ला० । आतइतिक : । पृषोदरादि : ॥ मांलक्ष्मीम् ईखति ०माईखतिवा । माशब्दोनिषेधेईखगतौ । बाहुलकात्कलच् ॥ यद्वा । माईखलति । खलसञ्चयेसिञ्चनेच । मूलविभुजादित्वात्क: । णत्वेतु०वृद्धि : स्यात् ॥ नर्मदायाम् ॥ प्रश्निपर्ण्यां ॥ "

मेखलिक : । पुं० मेखलिनि ॥ मेखलास्यास्ति । व्रीह्यादित्वाट्ठक् ॥

मेखली । पुं० मेखलावति । मेखलिके । मेखलास्यास्ति । व्रीह्यादित्वादिनि : ॥

मेघ : । न० अभ्रे । वारिवाहे । घने । जलदे ॥ मेघास्त्रिविधास्तत्रवह्निजाधूमयोनय: । निश्वासजास्तुजीमूतास्तेज्ञेयाजीवरूपिण : ॥ यज्ञजास्तुघनाघोरा : पुष्करावर्त्तकादय : । इतिविशेषउक्त : शब्दार्णवे- ॥ मेहतिसिञ्चति । मिहसेचने । अच् । न्यङ्क्वादित्वात्कुत्वम् ॥ मुस्तायाम् ॥ राक्षसे ॥ षड्रागान्तर्गतरागविशेषे ॥ यथा । भैरवोथवसन्तश्चनटोनारायणस्तथा । श्रीरागोमेघरागश्चषडेतेपुरुषाह्वया : ॥

मेघकफ : । पुं० करकायाम् ॥

मेघकाल : । पुं० वर्षर्त्तौ ॥

मेघचिन्तक : । पुं० चातकपक्षिणि ॥

मेघङ्कर : । पुं० मेघजनने ॥ मेघान्करोति । मेघर्त्तिभयेषुकृञ : खच् प्रत्यय : । अरुर्द्विषदितिमुम् ॥

मेघज : । त्रि० मेघभववस्तुनि ॥

मेघजालम् । न० कालिकायाम् । मेघावली ॥

मेघजीवन : । पुं० चातके ॥ मेघेजीवनमस्य ॥

मेघज्योति : । पुं० इरम्मदे । वज्राग्नौ ॥ मेघस्यज्योति : ॥ अन्योन्यसङ्घट्टनेनमेघाग्नि : सूत्यन्नत्वाद्दीयो ज्योतिरग्नि : पततिस : ॥

मेघडम्बर : । पुं० मेघगर्जने ॥ मेघस्यडम्बर : ॥

मेघतिमिरम् । न० मेघाच्छन्नदिने ॥

मेघदीप : । पुं० विद्युति ॥

मेघध्वनि : । पुं० गर्जिते । मेघनिर्घोषे ॥

मेघनाद : । पुं० वरुणे ॥ रावणात्मजे । इन्द्रजिति ॥ मेघस्यनादइवनादीयस्य ॥ मेघशब्दे ॥ पलाशवृक्षे । तण्डुलीयशाके ॥ इतिराजनिर्घण्ट : ॥ मेघस्यनाद : ॥

मेघनादजित् । पुं० रामानुजे । लक्ष्मणे ॥ मेघनादमजैषीत् । जि० । सत्सूद्विषेतिक्विप् । तुक् ॥

मेघनादानुलासक: । पुं० मयूरे ॥

मेघनादानुलासी । पुं० मयूरे ॥ मेघनादेनअनुलसति० तच्छील : । लसश्लेषणक्रीडनयो : । सुप्यजातौणिनिस्ताच्छील्ये इति णिनि : ॥

मेघनामा । पुं० मुस्तके ॥ मेघनामानिनामान्यस्य ॥ आदिलघोपञ्चमावर्के० ।ऽऽ॥

मेघनायक : । पुं० आवर्त्ताद्रौ ॥ यथा । चियुतशाकवर्षंतुचतुर्भि :शोधितेक्रमात् । आवर्त्तंविद्धिसंवर्त्तंपुष्करंद्रोणमम्बुदम् ॥ फलंयथा । आवर्त्तेनिर्जलोमेघ:संवर्त्तश्चबहूदक: । पुष्करोदुष्करजलोद्रोण: सस्यप्रपूरकइति ॥

मेघनिर्घोष : । पुं० स्तनिते । गर्जिते ॥ मेघस्यनिर्घोष : ॥

मेघपर्याय : । पुं० आदिलघौपञ्चमांत्रके० ।ऽऽ॥ मुस्तके ॥ मेघोमेघवाचक : शब्द : पर्यायोऽस्य ॥

मेघपुष्पम् । न० पिण्डाभ्रे । वर्षोपले ॥ अम्बुनि ॥ नदीजले ॥ पुं० इन्द्रस्याश्वे ॥ कृष्णस्यघोटके ॥ मेघस्यपुष्पमिव ॥

मेघप्रसव : । पुं० जले ॥

मेघभव : । त्रि० मेघोत्पन्नवस्तुनि ॥

मेघभूति : । पुं० वज्रे ॥

मेघमाल : । पुं० प्लक्षद्वीपस्थे गिरिविशेषे ॥ रमागर्भजातकल्किदेवपुत्रे ॥

मेघमाला । स्त्री० कादम्बिन्याम् । मेघानांमाला ॥

मेघयोनि : । पुं० धूमे ॥

मेघराग : । पुं० रागविशेषे ॥ मेघसंज्ञकोराग : ॥

मेघवर्णा । स्त्री० नीलीवृक्षे ॥ त्रि० घनसमानवर्णवति ॥

मेघवर्त्म । न० नभसि । गगने ॥

मेघवह्नि : । पुं० वज्राग्नौ । इरम्मदे ॥

मेघवाह:। पुं० इन्द्रे ॥ यथा। राजा स्वर्थान्समाहृत्यकुर्यादिन्द्रमहोत्सवम्। प्रणीतोमेघवाहस्तुमहतीं वृष्टिमाहवेदितिदण्डनीति:॥

मेघवाहन:। पुं० इन्द्रे। तुरासाहि॥ मेघा:मत्तामेघागजरूपधारिणऐरावतादयोवाहनमस्य॥ मेघानवाहयतिचालयतिवा। ल्यु:॥ इन्द्रोहिमेघानांविश्ववर्षणीत्याग म:॥

मेघविस्फूर्जिता। स्त्री० अतिधृतिच्छन्द: १९ प्रभेदे॥ तल्लक्षणोदाहरणे यथा। रसर्त्वश्वैर्य्यौन्स्रौररगुरुयुतामेघविस्फूर्जितास्यात्॥ यथा। कदम्बामोदाढ्याविपिनपवना: केकिन: कान्तकेका:॥ विनिद्रा: कन्दल्यादिशिदिशिमुदादर्दुराहप्तनादा:। निशान्तस्थद्विद्युद्विलसितलसन्मेघविस्फूर्जिताचेत् प्रिय: स्वाधीनोसौदनुजदलनोराज्यमस्मात्किमन्यत्॥

मेघवेश्म। न० खे॥

मेघसार:। पुं० चीनकर्पूरे॥

मेघसुहृत्। पुं० मयूरे। मेघ: सुहृदस्य॥

मेघस्तनितोद्भव:। पुं० विकण्टकवृक्षे॥

मेघाकाश:। पुं० अभ्राकाशे॥

मेघाख्यम्। न० मुस्तके॥

मेघागम:। पुं० प्रावृषि। वर्षाकाले॥ मेघस्यागमोयस्मिन्॥ मेघस्यागमने॥

मेघानन्दा। स्त्री० बलाकायाम्॥

मेघानन्दी पुं० मयूरे॥

मेघान्त:॥ पुं० शरदि॥ मेघानामन्तोयस्मिन्॥

मेघास्त:। पुं शरद्वतौ॥

मेघास्थि। न० करकायाम्

मेघाह्वदम्। न० आकाशे॥

मेघोदर:। पुं० अर्हत्पितरि॥

मेघ्य:। त्रि० मेघभवे॥ दिगादित्वात्यत्॥

मेचक:। पुं० मयूरचन्द्रके॥ मेचकोवर्णोस्त्यस्य। अर्श आद्यच्॥ श्यामलवर्णे। कृष्णे॥ मेचक: कृष्णनील:स्यादतसीपुष्पसन्निभ:। इतिशब्दार्णवे भेद:। वर्हिकण्ठसमंवर्णंमेचकंब्रुवतेबुधा इतिकाव्य:। मचतिमिश्रीभवतिवर्णान्तरेण। मच मुचिकल्कने। कृञादिभ्य: संज्ञायां वुन्। पचिमच्योरिच्चोपधाया इतीत्वं लघूपधगुण:॥ धूमे॥ मेघे॥ शोभाञ्जने॥ न० स्रोतोञ्जने॥ अन्धकारे॥ नीलाञ्जने॥ त्रि० श्यामलयुक्ते॥

मेचकाभिधा। स्त्री० पातालगरुडीलतायाम्॥

मेटुला। स्त्री० आमलक्याम्॥

मेठः। पुं० हस्तिपके । निषादि नि ॥

मेढ्रः पुं० मेहने। शिश्ने ॥ मेहन् त्यनेन। मिहसेचने। दाम्नीतिष्ट्रन् ॥ मेहतिवा ॥ मेषे ॥

मेढ्रशृङ्गी। स्त्री० मेषशृङ्गीवृक्षे ॥

मेण्ठः। पुं० हस्तिपके ॥

मेण्डः पुं० मेठे । हस्तिपके ॥

मेण्ढः। पुं० मेषे ॥

मेथिः। पुं० मेधिकाष्ठे । खलेवा ल्याम्। खलेपशुबन्धनार्थंकाष्ठे ॥ मेथ्यन्तेपशवोऽत्र। मेथृसङ्गमे । सर्वधातुभ्यइन् ॥

मेथिका। स्त्री० मेथिन्याम्। मेथ्याम्। गन्धबीजायाम्। मेथीतिप्र सिद्धशाके ॥ मेथिकावातशमनी श्लेष्मघ्नीज्वरनाशिनी। ततः स्वल्प गुणावन्यावाजिनांसातुपूजिता ॥ अपिच। मेथिकादीपनीहृद्यावद्ध विट्कृमिशुक्रनुत्। रूक्षोष्णांतत् फलंकासानिलश्लेष्मवमीन्जयेत् ॥

मेथिनी। स्त्री० मेथिकायाम् ॥

मेथी। स्त्री० मेथिकायाम्। गौरादि त्वात्कृदिकारादितिवाङीष् ॥

मेदः। पुं० मेदसि। वपायाम्। शुद्धमांसस्नेहे ॥ अलम्बुषायाम् ॥ मेद्यति। ञिमिदास्नेहने। घञ् ॥ वैदेहेननिषादभार्यायांजनिते०ऽ न्त्यजविशेषे ॥

मेदःपुच्छः। पुं० दुम्बके। दुम्बा० दुम्बा० इं० भा० प्र० मेषविशेषे ॥ मेदःपुच्छोद्भवंमांसंहृद्यंवृष्यंश्र मापहम्। पित्तश्लेष्मकरंकिञ्चिद्वा तव्याधिविनाशनम् ॥

मेदःसारा। स्त्री० मेदायाम् ॥

मेदकः। पुं० जगले। सुराकल्के ॥ मेद्यतिञिमिदा०। कृञादिभ्यो वुन् ॥

मेदजः। पुं० भूमिजगुग्गुलौ ॥ त्रि० मेदोभवे ॥

मेदः। न० शुद्धमांसप्रभवस्नेहविशेषे ॥ वपायाम्। वसायाम् ॥ मेदसः स्वरूपंयथा। यन्मांसंस्वाग्निनापक्वं तन्मेदइतिकथ्यते। तदतीवगुरुस्नि ग्धंबलकार्यंतिक्तंहरम् ॥ स्थानं यथा। मेदोहिसर्वभूतानामुदरेष्व स्थिषुस्थितम्। अतएवोदरेवृद्धिः प्रायोमेदस्विनोभवेत् ॥ रोगविशे- षे ॥ तन्निदानंयथा। अव्यायामदि वास्वप्नश्लेष्मलाहारसेविनः। मधु- रोन्नरसः प्रायः स्नेहान्मेदोविवर्द्ध येत् ॥ अन्नरसः० आमद्रवः अ स्यवृद्धैवेगुण्यंयथा। मेदसावृतमा- र्गत्वात्पुष्यन्त्यन्येनधातवः। मेद- स्तुचीयतेतस्मादशक्तः सर्वकर्मसु- ॥ मेद्यति। ञिमिदा०। असुन् ॥

मेदस्कृत्। न० मांसे ॥

मेदा। स्त्री० अष्टवर्गाङ्गौषधिविशेषे

मेदोद्भवायाम् । जीवन्त्याम् : श्रेष्ठां
याम् ॥ मणिच्छिद्रायाम् ॥ तल्लच
णादिर्यथा । शुक्लकान्दोनखच्छेद्यो
मेदोधातुमिवस्रवेत् । यः सर्मेदे
तिविज्ञेयोजिज्ञासातत्परैर्जनैः
॥ मेदायुगं गुरुस्वादुवृष्यं स्तन्यक
फावहम् । बृंहणं शीतलं पित्तरक्त
वातज्वरप्रणुत् ॥ मेदायुगम् ० मेदा
महामेदे ॥ मेदामहामेदाख्याने
शतमूलीप्रचिपन्ति ॥

मेदिनी । स्त्री ० काश्मर्याम् । मेदा
याम् ॥ मह्याम् । भूमौ ॥ मेदस
स्त्यस्याम् । अतद्गनिः । मलघ्नोमे
दकुष्ठैतिशालिहोत्रेऽदन्तोपिमेद
शब्दोस्ति ॥ यद्वा । मेद्यति । ञि
मिदा० । यस्यादित्वात्निनिः ॥
मधुकैटभयोरासोन्मेदसैवपरिप्लु
ता । तेनेयंमेदिनीदेवीप्रोच्यतेब्रह्म
वादिभिः ॥

मेदिनीद्रवः । पुं ० पांशौ । धूलौ ॥

मेदुरः । त्रि ० सान्द्रस्निग्धे । अति
शयस्निग्धे ॥ मेदनशीलः । ञि
मिदा० । भङ्गभासमिदोघुरच् ।

मेदुरा । स्त्री ० काकोल्याम् ॥

मेदोजम् । न ० अस्थ्नि ॥

मेदोद्भवा । स्त्री ० मेदायाम् ॥

मेदोष्म : । पुं ० वर्णसङ्करजातिभे
दे ॥

मेदोवती । स्त्री ० मेदायाम् ॥

मेधः । पुं ० यागे । क्रतौ ॥ मेधति ।
मेधृसङ्गमे ॥ पचाद्यच् ॥

मेधाः । पुं ० मेधाभिधानेमुनिविशे
षे ॥ वसिष्ठे ॥ स्वायम्भुवमनोः
पुत्रे ॥

मेधा । स्त्री ० धारणावत्यांबुद्धौ । अने
कग्रन्थार्थधारणशक्तौ ॥ अतीतानु
स्मृतिर्मेधातत्कालग्राहिणीमतिः
। शुभाशुभविचारज्ञाप्रज्ञाधीरैरु
दाहृता ॥ इतिविशेषः ॥ साचेयं
ज्ञानस्यभार्या । यथा । ज्ञानस्यति
स्रोभार्यासुबुद्धिर्मेधाधृतिस्तथा ।
याभिर्विनाजगत्सर्वं मूढं मत्तसमं स
देति । मेधतिसङ्गच्छतेसर्वमस्या
म् । मेधृ० । गुरोश्चहलः । टाप्
॥ मेधाकरमौषधं यथा । शङ्खपुष्पी
वचासोमाब्राह्मीब्रह्मसुवर्चला ।
अभयाचगुडूचीचअटरूषकवाकुची
॥ एतैरचसमैर्भागैर्घृतं प्रस्थं विपा
चयेत् । कण्टकार्यारसं प्रस्थं वृ
हत्याचसमन्वितम् ॥ एतद्ब्राह्मीघृ
तं नामस्मृतिमेधाकरं परम् ॥ * ॥

मेधाकरः । पुं ० मेधाजनकोगणविशे
षे । यथा । सतताध्ययनं तत्त्वज्ञा
नस्यचकथासदा । श्रेष्ठानांतत्त्वशा
स्त्राणामवलोकनमेवच । सद्विजा
चार्यसेवाच गणोमेधाकरः स्मृ
तः ॥

मेधाकृत् । स्त्री ० मुनिपक्षके सिता

वरशाके । त्रि० मेधाकारके ॥

मेधाजित् । पुं० कात्यायनमुनौ ॥

मेधातिथि: । पुं० मुनिविशेषे । कण्वर्षे : पुत्रे ।

मेधारुद्र : । पुं० कालिदासे ॥

मेधावती । स्त्री० महाज्योतिष्मत्याम् त्रि० मेधाविशिष्टायाम् ॥ मेधावान् । मेधावत् । इ० पुंनपुंसकयो : ॥

मेधाविक्रम् । न० तीर्थविशेषे ॥

मेधावी । पुं० शुकपक्षिणि ॥ पण्डिते ॥ व्याडौ । मदिरायाम् ॥ त्रि०मेधान्विते । प्रज्ञातिशयवति । ऊहापोहसमर्थे ॥ शमदमसर्वकर्मोपरमगुरूपसदनादिसाधनापिकाङ्गयुक्तेनमनननिदिध्यासनाख्यवेदान्तवाक्यविचारेणपरिनिष्पन्नंवेदान्तमहावाक्यकरणकंनिरस्तसमस्ताप्रामाण्याशङ्कंचिदन्याविषयकमहंब्रह्मास्मीतिब्रह्मात्मैक्यज्ञानमेव मेधा • तयानित्यंयुक्ते • स्थितप्रज्ञे • विपश्चिति ॥ मेधास्यास्ति । अस्मायामेधास्रजोविनि : ॥

मेधाविनी । स्त्री०ब्रह्मण : पत्न्याम् । ब्राह्म्याम् ॥

मेधि : । पुं० खलेशाल्याम् । खलेपशुबन्धनायारोपितेकाष्ठे । पुंसिमेधि : खलेदारुन्यस्तंयत्पशुबन्धने । मेध्यन्तेपशवोऽत्र । मेधृ० । इन् ॥

मेधिर : । त्रि० मेधाविनि ॥

मेध्य : । पुं० यवे ॥ छागे ॥ खदिरे ॥ त्रि०पवित्रे । शुचौ । शुद्धे । यज्ञिये ॥ मेधनार्हम् । मेधृ० । ऋहलोर्ण्यत् ॥ मेधायैहितोवा । उगवादिभ्योयत् ॥ मेधामर्हतिवा । दण्डादित्वाद्यत् ॥ मेधइववा । शाखादिभ्योय : ॥ ज्ञानेनमेध्यमखिलममेध्यंज्ञानतोभवेत् । ब्रह्मज्ञानेसमुत्पन्नेमेध्यामेध्यंनविद्यते ॥

मेध्या । स्त्री० रक्तवचायाम् ॥ रोचनायाम् ॥ केतक्याम् ॥ ज्योतिष्मत्याम् ॥ शङ्खपुष्प्याम् ॥ ब्राह्म्याम् ॥ मेधायैहिता । यत् । टाप् ॥ योषिति । नार्याम् ॥ सोम : शौचंददौस्त्रीणांगन्धर्वश्शुभांगिरम् । पावक : सर्वमेध्यत्वंमेध्यावैयोषितोह्यत : ॥

मेनका । स्त्री० हिमालयस्यभार्यायाम् । अपर्णामातरि ॥ स्वर्वेश्यायाम् । शकुन्तलायाजनयित्र्याम् ॥

मेनकात्मजा । स्त्री० गिरिजायाम् । दुर्गायाम् ॥ मेनकाया : आत्मजा ॥

मेनकापति : । पुं० हिमालये ॥

मेनकापुत्र : । पुं० मैनाके ॥ मेनकाया : पुत्र : ॥

मेनकाप्राणेश : । पुं० हिमालये ॥

मेना । स्त्री० मेनकायाम् । हिमाद्रे

भौर्यायाम् ॥

मेनाजा । स्त्री० पार्व्वत्याम् ॥

मेनादः । पुं० केकिनि । मयूरे ॥ मार्जारे ॥ छगले । छागे ॥

मेनाधव : । पुं० उमागुरौ । हिमालये ॥

मेनासुत : । पुं० मैनाके ॥

मेय : । त्रि० प्रमेये ॥ मानाधीनामेयसिद्धि : ॥ मीयते । माङ्माने । यचोयत् । ईद्यति । गुण : ॥ मातुंपरिच्छेत्तुंयोग्योवा ॥

मेयाभ : । त्रि० मेयसमानाकारे ॥ मेघस्याभेवाभायस्य स : ॥

मेरक : । पुं० विष्णौ ॥: अन्न प्रभेदे

मेरु : । पुं० सुमेरौ । अत्युच्छ्रितानां शिखरिणांमध्येभगवतोविभूतौ । हेमाद्रौ । रत्नसानौ । सुरालये ॥ जम्बुद्वीपं यितेर्नाभिस्तद्वृत्तं लक्षयोजनम् । क्षाराब्धिनापरिक्षिप्तम् परिवृत्तेनतावता ॥ तस्यमध्ये स्थित : शैलराजराजोहिरण्मय : । तिरस्कृतांशुमज्ज्योतिर्मेरु:सुरनिषेवित: सषोडशसहस्राणिक्षितौविष्टोमहीतलात् । तदूनमुन्नतोनक्ष मूलेषोडशविस्तृत : ॥ समेरुभूमेरन्त : षोडशयोजनसहस्राणिप्रविष्ट : महीतलादारभ्यजर्द्धंयावच्चतुरशीतियोजनसहस्रोन्नति : मूलेचषोडशसहस्रविस्तार : । ऊर्द्धतोस्यशरावाकृतिविस्ताराधिक्यैमद्वैगुण्यम् । उक्तञ्चश्रीमत्स्यतन्त्रे । षोडशैकसहस्राणिबुध्नभागेप्ररोपित : । तान्यस्यमूलेविस्तार : स्याद्वूर्द्धे द्विगुणस्तु स : ॥ शशरावाकृतिर्दिविमेरुर्देवाश्रयोद्रिराट् । इति । त्रिषुपादान्तरेष्वस्यचतुर्द्वृषुपर्वसु । नेमय: कटकाकारानिर्गताद्दीप्तिमत्तरा: ॥ एकादशसहस्रातुमनुसाहस्रकोपरा । नेमिर्यामस्तकोपान्तेलोकपालसमाश्रया ॥ चक्रवाटेतितामाहु : सर्वरत्नप्रभावतीम् । अस्यमेरो:स्वोच्छ्राय पादेनपञ्चविंशतिसहस्रात्मकेनान्तरेष्वेषांतिषु तथाविधेषु तरेषु चतु : सहस्रविवृत्तेषु पर्वसुभागसन्धिषु कटकाकारा : सुष्ठु दीप्तास्तिस्रोनेमयोमेखलानिर्गता : ० तदेवेषु त्रिषुस्थानेषुचतुर्द्धत्वंदर्शयति । एकादशसहस्रै स्यादिना० एकामाद्यादशसहस्रप्रमाणा० द्वितीयामनुसाहस्रिकाचतुर्द्दशसहस्रा० चतुर्द्दहत्वोक्तेश्च० तृतीयाऽष्टादशसाहस्रविस्तृता । सानेमिर्यामस्तकसमीपेलोकपालाश्रयभूताचानेकरत्नप्रभाभासुराच० तांचक्रवाटोक्त्याआगमज्ञाआहु : । एवञ्चप्रागुक्तञ्चतुरशीतियोजनसहस्रोच्छ्रायश्चमेरो : पर्वत्रयंपञ्चसप्ततिसहस्रमानकम् । कटकत्रयमनुनवसहस्रोन्नत

## मेरुः

मेघोकायविसहस्रमानकात्तृखमिथ्यागमच्छा : । सिद्धगन्धर्वमरुतांतदध : पर्वसुस्थिति : । चक्रवाटाध : स्थितेषुत्रिषुपर्वसुसिद्धादीनामास्पदम् । यातुचक्रवाटास्योर्द्ध्वमेखला तस्यामष्टसुशृङ्गेषुपुर्योष्टौसमवस्थिता : । प्राच्यादिष्विन्द्रमुख्यानांनामतस्तानिबोधत ॥ नानारत्नप्रभाजालमण्डलालङ्कृताम्बरे : । सिद्धसाध्यमरुज्जुष्टारुक्मभूरमरावती ॥ रक्तपीतमणिप्रायहेमप्राकारगोपुरा । वह्नेस्तेजोवतीवह्नितुल्यभूतनिषेविता । मृत्यो : संयमनीतुङ्गलोहप्राकारमण्डला । कालपाशपितृव्याधिप्रेतमारीनिषेविता ॥ कृष्णादेस्वपतिर्मृत्योर्धामवहेस्वसेविता । नीलरत्नप्रभाजालवितानवरभूषणा ॥ शुद्धस्यम्बुनाथस्यस्फटिकोपलनिर्मिता । पाण्डुराभ्रोपमैर्यादः सेविताभातिधामभिः ॥ वायोर्गन्धवतीतुङ्गश्वेतपीतध्वजाकुला । बलवद्भूतसङ्घुष्टासर्वरत्नविनिर्मिता ॥ महोदयाचन्द्रमसःश्वेतामुक्तादिनिर्मिता । द्विजसङ्घस्तुताभातिपुरैर्हिमगिरिप्रभै : ॥ ज्वलत्कवाटहट्टघण्टारवरम्यप्रशोभत : । पुरीयशोवतीसम्यरत्नजारुद्रसेविता ॥ द्युतिसर्वर्त्तुसुखदाचक्रवाटार्द्धविस्तृता : । सुर्योद्यावनिसोद्भूतमारि

## मेरुदेवी

जातरजोरुणा : ॥ चक्रवाटार्धेननवसहस्रात्मकेनविस्तीर्णा : ॥ तेषसानिमन्तालोकपालचक्रानुवर्तिनाम् । भूतयेस्वर्गद्रष्टेतागीयन्तेकविभि : स्थिती ॥ ब्रह्मण : पुरी । चतुर्दशसहस्राणियोजनानांस्वयम्भुव : । मध्येमनोवतीनाम पुरीलोकैश्ववन्दिता ॥ याचकारावचानुव्वैर्यन्मार्गान्मव : श्रिया । सावित्र्या : स्पर्द्धमानेवस्वर्गकामातिवर्त्तिनी ॥ तस्यामुपासतेदेवामुनयश्चमहौजस : । महायोगीश्वरंसिद्धयमाद्यंभूतवैभवम् । तटीशभागेतस्याद्रे : शृङ्गमादित्यसन्निभम् । यत्तज्ज्योतिष्कमित्याहु : सदापशुपते : प्रियम् ॥ तस्यसानुषुहैमेषुरत्नचित्रेषुसंस्थिता : । स्कन्दनन्दिमहाकालगणेशादिगणेश्वरा : ॥ मूर्ध्निदेवादिदेवस्यस्यामंत्रिपुरविद्विष : । रुद्रायुतगणैर्जुष्टंब्रह्माद्यैरसुरोत्तमै : ॥ इतिमृगेन्द्रसंहितायांविद्यापादेभुवनाध्वप्रकरणेमेरोर्वर्णनम् ॥ अपमालायवर्त्तिन्येकस्मिन्मणौ ॥ मितोतित्रिपतिज्योतीष्युन्नतत्वात् । कुमित्रप्रणपदे । मिपीभ्यांदः ॥ माचामाचे । ०।० ॥

मेरुक : । पुं० यक्षभूपे ॥

मेरुदेवी । स्त्री० नाभिभूपेःपत्न्याम् ॥

भगवतऋषभस्यजनन्याम् ॥
मेरुसावर्णः । पुं० एकादशमनौ ॥
मेल: । पुं० सङ्गमे ॥ मेलनम् । मिल संश्लेषे । घञ् ॥
मेलक: । पुं० सङ्गे । सङ्गमे ॥ मेलनम् । मिल० । घञ् । स्वार्थेक: ॥
मेलकलवणम् । न० सौवर्चलवणे ॥
मेलनम् । न० मेले । सङ्गमे ॥
मेला । स्त्री० मसीजले ॥ मेलके ॥ अञ्जने ॥ महानील्याम् ॥ टाप् ॥
मेलानन्दा । स्त्री० मस्याधारे । मसीपात्रे ॥
मेलान्धू: । स्त्री० मेलानन्दायाम् ॥
मेलाम्बु: पुं० मस्याधारे ॥
मेष: । पुं० हुडौ । मेढ्रे । उरभ्रे । उरणे । अर्णायौ । एडके । मेंढा० हि० भा० ॥ मेषस्यमांसंपुष्ट्यैस्यात्पित्तश्लेष्मकरंगुरु । तस्यैवाण्डविहीनस्यमांसंकिञ्चिल्लघुस्मृतम् ॥ चपिचास्यमांसगुणा: । मेषमांसंगुरुस्निग्धंबल्यंवातकफप्रदम् । मेद:पुच्छामिषंहृद्यंकफवातकरंगुरु ॥ मिषति । मिषस्पर्धायाम् । अच् । भैषज्यप्रभेदे । राशिविशेषे । क्रियसंज्ञके । लग्नविशेषे ॥ मेषलग्नोत्पन्नस्यफलंयथा । मेषलग्नेसमुत्पन्नश्चण्डोमानीधनीशुभ: । क्रोधीखलजनद्वेष्टा चविक्रमीपरवत्सल: ॥
मेषक: । पुं० जीवशाके ।

मेषकम्बल: । पुं० ऊर्णायौ ॥ मेषलोमकृत: कम्बल: । शाकपार्थिवादि: ॥
मेषलोचन: । पुं० चक्रमर्दे ॥ मेषस्य लोचनमिवलोचनमस्य । तस्यपुष्पत्वात् । लोचनशब्दस्तत्पुष्पेलाक्षणिक: ॥ त्रि० मेषचक्षुस्तुल्यनेत्रे ॥
मेषवल्ली । स्त्री० मेषशृङ्ग्याम् ॥
मेषविषाणिका । स्त्री० मेषशृङ्ग्यां ॥
मेषशृङ्ग: । पुं० स्थावरविषप्रभेदे ॥
मेषशृङ्गी । स्त्री० मन्दीलते । मेढ्रशृङ्ग्याम् । मेषविषाणिकायाम् ॥ मेषशृङ्गीरसेतिक्तावातलाश्वासकासहृत् । रूक्षापाकेकटु: पित्तव्रणश्लेष्माक्षिशूलनुत् ॥ मेषशृङ्गीफलंतिक्तंकुष्ठमेहकफप्रणुत् । दीपनंस्रंसनंकासकृमिव्रणविषापहम् ॥ मेष: शृङ्गमस्या: । मेषशब्दोमेषशृङ्गसदृशेलाक्षणिक: ॥ गौरादि: ॥
मेषा । स्त्री० त्रुटौ । क्षुद्रैलायाम् ॥
मेषाक्ष: । पुं० चक्रमर्दके । मेषस्याक्षीवाक्षिवत्० तत्सदृशपुष्पत्वात् । अच्प्रत्ययोदर्शनादित्यच् । अक्षिशब्द: पुष्पेलाक्षणिक: ॥
मेषाक्षिकुसुम: । पुं० चक्रमर्दके ॥
मेषाण्ड: । पुं० इन्द्रे ॥
मेषाधिप: । पुं० भौमग्रहे ॥ मेषस्य मेषराशे: अधिप: ॥

मेषाण्डी । स्त्री॰ वस्तान्त्रीवृक्षे ॥
मेषालु : । पुं॰ वर्ब्बरावृक्षे ॥
मेषाह्वय : । पुं॰ चक्रमर्द्दे ॥
मेषिका । स्त्री॰ मेष्याम् ॥
मेषी । स्त्री॰ मेषस्त्रियाम् । भेड॰ मेडी॰ इ॰ भा॰ ॥ तिनिशवृक्षे ॥ जटामांस्याम् ॥
मेसूरणम् । न॰ दशमलग्ने ॥ यथा । कर्मस्थानञ्चदशमंखंमेसूरणमास्पदम् ॥
मेह : । पुं॰ प्रमेहरोगे ॥ मेहति । मिहसेचने । पचाद्यच् ॥ मेहनंवा । घञ् ॥ प्रस्रावे ॥ मेषे ॥
मेहघ्नी । स्त्री॰ हरिद्रायाम् ॥ मेहंहन्ति । हन॰ । चमनुष्यकर्तृकेचेतिटक् ङीप् ॥
मेहत् । त्रि॰ मूत्रयति ॥ मेहति । मिह॰ । शतृ ॥
मेहन : । पुं॰ मुष्कक्वृक्षे ॥ न॰ मूत्रे ॥ शिश्ने ॥ मेहन्त्यनेन । मिह॰ । करणेल्युट् ॥
मैत्र : । पुं॰ ब्राह्मणे ॥ सुधन्वाचार्ये ॥ न॰ अनुराधानक्षत्रे ॥ विशेषमस्य चाहयथा । चित्रेन्दुमित्रपौष्णाख्य मृदुमैत्रंतथाभृगु : । तत्रगीताम्बर क्रीडामित्रकार्य्यशोभनम् ॥ अष्टमतारायाम् ॥ मित्रदेवताकपायु सम्बन्धान्मूत्रपुरीषोत्सर्गे ॥ यथाशा यस्तम्ब : । मूत्रपुरीषेकुर्याद्दक्षिणां दिशंदक्षिणापरांवेति । दक्षिणापरां नैर्ऋतीम्॰ गच्छेतिशेष : ॥ तथा चस्त्रमितिचवश्यिर्मादाराद्यावसथा न्मूत्रपुरीषयो : कर्मैवर्ज्जयेद्दिति ॥ शुष्कैस्तृणैस्तथाकाष्ठै : पत्रैर्वेणुदलै नवा । मृन्मयैर्भाजनैर्वापिपक्षणाद्यं वसुन्धरामितिवायुपुराणम् ॥ मूत्रो च्चारसमुत्सर्गंदिवाकुर्यादुदङ्मुख : । दक्षिणाभिमुखोरात्रौसन्ध्ययोश्चय थादिवेतिमनु : ॥ त्रि॰ मित्रसम्बन्धिनि ॥ मैत्रीस्निग्धता॰ तद्वति ॥ मित्रस्यकर्मभावोवा । युवादित्वा दण् ॥ मित्रोदेवतास्यवा । सास्यदे वतेत्यण् ॥
मैत्रभम् । न॰ अनुराधानक्षत्रे ॥
मैत्रायणीय : । पुं॰ यजुर्वेदस्यशाखाभेदे ॥
मैत्रावरुण : । पुं॰ पुरोनुवाक्यायाव क्तरि॰ ऋत्विग्विशेषे ॥ यथा । मैत्रावरुणंमपुरोवाक्यायामुक्तायां तत्प्रकाशितदेवतोद्देशेनाध्वर्युर्हो तृपठितयाय्याव्षट्कारेणसोमादिकंजुहोतीति ॥ अगस्त्यमुनौ ॥
मैत्रावरुणि : । पुं॰ अगस्त्यमुनौ ॥ मित्रावरुणयो॰ मित्रावरुणौ । देवताद्वन्द्वेचेत्यानङ् । तयोरपत्यम् । अतइञ् ॥ पौरवागस्त्यन्तृत्यप त्ये॰ ॥
मैत्री । स्त्री॰ सौहार्द्दे ॥ स्निग्धताया

म्॥ सर्वप्राणिषु सुखसम्भोगापन्ने षु॰ साध्वेतन्ममित्राणांसुखित्व मितिमैत्रींभावयेन्नत्वौघ्यम्॥ अण ज्ञाम्मैत्रयब्राह्मणेष्॥ विश्विष तितोम्मत्तबहुवैरातिकीटके:। व अकीवन्धकीभर्तृबुद्धान्तकाये: स ह। तथातिव्ययशीलेखपरीवादके रे: शठे:। बुधोमैत्रींनकुर्वीत॰ मैत्र: अत्यन्तकीटवत्पीडक:॥ उत्कृष्टमध्यमनिकृष्टजनेषु मैत्रीयत्र च्छिलासुसिकतासुजलेषु रेखा। वैरंक्रमादधममध्यमसज्जनेषुयद्वच्छि लासुसिकतासुजलेषु रेखेत्युक्त:॥ उपकारित्वे॥ अनुराधाभे॥

मैत्रीबल:। पुं॰ बुद्धे॥ मैत्रीबलंयस्य स:॥

मैत्रेय:। पुं॰ ग्लावाभिधर्षौ। बौद्धे। चैकितायने॥ मुनिविशेषे॥ मि त्राया: अपत्यम्। गृह्यादिभ्यश्चे तिढञ्। दांविड्मायिनेतिनिपात नादयुलोप:॥ वैदेहाद्रायोगव्यां जाते॰ सङ्करजातिविशेषे॥ मैत्रे यकस्तुवैदेहोमाधूकंसम्प्रसूयते। नृ नृप्रशंसत्यजस्रंयोघण्टाताडोरुणो दये।। माधूकंमधुरभाषिणम्॥ भाविबुद्धविशेषे॥

मैत्रेयिका। स्त्री॰ मित्रयुद्धे॥ मित्रयू नांभावे॥ गोत्रचरणाच्छ्लाघात्या कारतदवेतेष्वितिवुञ्। वैकर्यमि

वयुप्रत्ययानामितियादेश:॥

मैत्रेयी। स्त्री॰ याज्ञवल्क्यस्यर्षे: पत्न्याम्॥

मैथिल:। पुं॰ जनकनृपे॥ वि॰ मिथिलायांभवे॥ अण्॥

मैथिली। स्त्री॰ जानक्याम्॥ सीता याम्॥

मैथिलेय:। पुं॰ सीतापुत्रे। अप त्ये ढक्॥

मैथुनम्। न॰ मिथुनसाध्ये अन्याधा नपुनीत्पादनादौ॥ सङ्गते॥ रते। सुरते। धर्षिते। व्यवाये। या म्यधर्मे। निधुवने॥ मिथुनमेव। प्रज्ञाद्यण्॥ मिथुनस्येदंवा॥ स्मर णंकीर्त्तनंकेलि:प्रेक्षणंगुह्यभाषणम्। सङ्कल्पोध्यवसायश्चक्रियानिर्वृत्ति रेवच। एतन्मैथुनमष्टाङ्गंप्रवदन्ति मनीषिण:॥ अथास्त्रीयेस्त्रीपुंस व्यतिकरे॥ शीघ्रंमैथुनगामीदीर्घा युरन्यथाल्पायु:॥

मैथुनी। पुं॰ सारसे॥

मैथुन्य:। वि॰ मिथुनायहिते। त स्मैहितमितियत्॥ न॰ मिथुनी भावसुखे॥

मैनाक:। पुं॰ पर्वतविशेषे। हिमा लयस्याद्ये हपुत्रे। हिरण्यनाभे। सुनाभे॥ क्रौञ्चंगिरिमतिक्रम्यमै नीनामपर्वत:। मयस्यभवनंतत्र दानवस्यस्वयंकृतम्॥

मैनाकस्वसा । स्त्री॰ पार्वत्याम् ॥ मैनाकस्यमेनासुतस्यस्वसा ॥

मैनिकः । पुं॰ मात्स्यिके । मीनान् हन्ति । पक्षिमत्स्येतिठक् ॥

मैन्दः । पुं॰ वानरविशेषे ॥ विष्णुवध्यासुरविशेषे ॥

मैन्दहा । स्त्री॰ विष्णौ ॥

मैरेयम् । न॰ मद्यविशेषे ॥ मैरेयंधातकीपुष्पगुडधानाम्बुसंहितमितिमाधवः ॥ आसवे ॥ मिरायांदेशविशेषे॰ औषधिविशेषे वाभवम् । नद्यादिभ्योढक् ॥ वारुण्यां वा मैरेयमितिव्याख्यातारः । तेषांमैरेयदोषेणाविषमीकृतचेतसाम् । निम्नोच्चतिरश्चोनासीद्भूनामिवमर्द्दनम् ॥ तेषांयादवानाम् ॥

मोक्षः । पुं॰ पाटलिद्रुमे ॥ मोचने मृतौ । मृत्युरेवापवर्गइतिचार्वाकः ॥ प्रक्षीणसर्वावरणत्वात्स्वातन्त्र्यसम्प्राप्तावूर्द्ध्वपदासादनंमोक्षइत्येकान्तवादिनः । यदाहुः । लोहपञ्जरविच्छेदात्प्रवसेऽलाबुकं यथा । आरोहतितथामोक्षंजीवोमोहादिसंक्षयात् ॥ नित्यबोधसुखाद्यैस्स्वधर्मैर्युक्तः सतिष्ठतीति ॥ मुक्तौ । कैवल्ये । निर्वाणे । श्रेयसि । निःश्रेयसे । अमृते । अपवर्गे । तत्त्वज्ञानकृतेऽज्ञानतत्कार्याभावे । निरतिशयानन्दाभिव्यक्तौ । निरवशेषानर्थोच्छित्तौ । स्वाविद्याकल्पितानात्मदेहाद्यात्मत्वाभिमानरूपबन्धनिवृत्तिद्वारास्वस्वरूपावस्थाने ॥ अनात्मभूतेदेहादावात्मबुद्धिस्तुदेहिनाम् । साऽविद्यातत्कृतोबन्धस्तन्नाशोमोक्षउच्यते ॥ मोक्षमिच्छन्सदाकर्मत्यजेदेवससाधनम् । त्यजतैवहितज्ज्ञेयंत्यक्तुः प्रत्यक्परंपदम् ॥ यथोक्तंनिर्वाणे । यावन्नक्षीयतेकर्मशुभंवाऽशुभमेववा । तावन्नजायतेमोक्षोनृणांकल्पशतैरपि ॥ यथालौहमयैः पाशैः पाशैः स्वर्णमयैरपि । तथाबद्धोभवेज्जीवः कर्मभिश्चाशुभैः शुभैः ॥ कुर्वाणः सततंकर्मकृत्वाकष्टशतान्यपि । तावन्नलभतेमोक्षंयावज्ज्ञानंनविन्दति ॥ मोक्षणम् । मोक्षअवसानेचुरादिः । घञ् ॥ यद्वा । मोक्षयति । मुचेः सन्नन्तादकर्मकाण्णिजन्तादच् ॥ मुचेर्वाहुलकात्सोवा ॥

मोक्षकः । पुं॰ मुष्ककवृक्षे ॥

मोक्षणम् । न॰ मोचने ॥

मोक्षधर्म्मः पुं॰ शमदमादिषु ॥ महाभारतोक्तप्रकरणविशेषे ॥

मोक्षपरायणः । त्रि॰ सर्वविषयविरक्ते ॥ मोक्षः परमयनमस्य ॥

मोक्षमयः । त्रि॰ परमानन्दस्वरूपावस्थानरूपे ॥

मोक्षसाधनम् । न॰ ज्ञाने ॥ कर्मणा-

त्वम : करणशुद्धिद्वाराज्ञानेउपयो गीनतेषांसाक्षान्मोक्षसाधनत्वम् । । यथा । कषायपक्ति : कर्माणिज्ञा नन्तुपरमागति : । कषायेकर्मभि : पक्वे ततोज्ञानंप्रवर्त्तत इति ॥ उ पासनानान्तुचित्तैकाग्र्यम् नके वल्यमुपासनात् । तथाचमोक्षप्रा प्तौद्वयोमार्गा : । तत्रज्ञानमार्ग : साक्षान्मोक्षसाधनमितरौचित्तशुद्धि द्वारेतिविवेक : ॥

मोक्षी । त्रि॰ मोक्षाधिकारिमानवे । मोक्षयोग्ये ॥ स्थावरा : कृमयश्चा ब्जा : पक्षिण : पशवोनरा : । धा र्मिकास्त्रिदशास्तद्वन्मोक्षिणश्चयथा क्रमम् ॥ चतुर्विधशरीराणिधृत्वा मुक्तासहस्रश : । सुकृतान्मानवोभू त्वाज्ञानीचेन्मोक्षमाप्नुयात् ॥ चतु रशीतिलक्षेषुशरीरेषुशरीरिणाम् । नमानुष्यंविनान्यत्रतत्त्वज्ञानन्तुलभ्य ते ॥ अत्रजन्मसहस्राणांसहस्रैरपि पार्वति । कदाचिल्लभतेजन्तुर्मानु ष्यंपुण्यसञ्चयात् ॥ सोपानभूतंमो क्षस्यमानुष्यंप्राप्यदुर्लभम् । यस्ता रयतिनात्मानंतस्मात्पापतरोत्रक: ॥ नर : प्राप्योत्तमंजन्मलब्ध्वाचे न्द्रियसौष्ठवम् । नवेत्त्यात्महितंव स्तुसभवेद्ब्रह्मघातक : ॥ इतिश्रीकु लार्णवेप्रथमोल्लास : ॥

मोक्षोपाय : । पुं॰ विविदिषासन्न्या सं ॥ साधनचतुष्टयसम्पत्तौ ॥

मोग : । पुं॰ जलचरपक्षे ॥

मोघ : । पुं॰ प्राचीरे ॥ त्रि॰ हीने ॥ इ॰ हे॰ चन्द्र : ॥ क्षीणे ॥ इतिमेदिनी ॥ निरर्थके । निष्फले ॥ मुह्यन्त्यस्मिन् । मुह॰ । इत्यर्थेतिघञ् । न्यङ्क्वादित्वात्कु त्वम् ॥

मोघकर्म्मा । पुं॰ सकामकर्म्मणि ॥ मोघानिश्रममात्ररूपाणिफलनिष्ठोषा दीनिकर्म्माणियस्यस : ॥

मोघज्ञान : । त्रि॰ कुतर्कज्ञानविशि ष्टे ॥ मोघमीश्वराप्रतिपादककुत र्कशास्त्रजनितंज्ञानंयस्य ॥

मोघपुष्पा । स्त्री॰ वन्ध्यायाम् ॥

मोघवृत्ति : । त्रि॰ व्यर्थव्यापारे ॥

मोघा स्त्री॰ पाटलावृक्षे मोहयति । मुह॰ । पचाद्यच् । न्यङ्क्वादि त्वात्कुत्वम् ॥ विडङ्गे ॥

मोघाश : । त्रि॰ कार्मिणि ॥ ईश्वर मन्तरेणकर्माण्येवन:फलंदास्यन्ती त्येवंरूपामोघानिष्फलैवआशाफल प्रार्थनायस्यस : ॥

मोघोलि : । पुं॰ प्राचीरे ॥

मोच : । पुं॰ शोभाञ्जने ॥ मोचयति । मुच्लृ॰ । णिच् । अच् । न॰ क दलीफले ॥

मोचक : । पुं॰ कदल्याम् ॥ शिग्रौ । मुष्कवृक्षे ॥ वि॰ निर्मोचके ॥

विरागिणि ॥ मोचयति । मुच्लृ० । णिच् । अच् । स्वार्थे कन् ॥

मोचनम् । न० मोचने । त्रि० मोच कर्त्तरि ॥

मोचनिर्यास : । पुं० मोचरसे ।

मोचनी । स्त्री० कंटकार्याम् ॥ मोचकल्याम् ।

मोचरस : । पुं० शाल्मलिनिर्यासे । पिच्छिलसारे । शाल्मलीवेष्टे ॥

मोचसार : । पुं० मोचरसे । मोचसावोहिमोग्राहीस्निग्धोवृष्य:कषायक: । प्रवाहिकातिसारामकफपित्तास्रदाहनुत् ।

मोचस्रुत् । पुं० मोचस्रावे ॥

मोचा । स्त्री० रम्भायाम् । कदल्याम् ॥ शाल्मलीवृक्षे । नीलीवृक्षे । मुञ्चतिरसम् । मुच्लृ० । पचाद्यच् । टाप् ॥ मोच्यते । घञ् वा ।

मोचाट : । पुं० कृष्णजीरे ॥ रम्भास्थ्नि । कदलीगर्भे ॥ मलयोद्भवे ॥

मोचाफलम् । न० कदलीसस्ये । मोचाफलं स्वादुशीतं विष्टम्भिकफकृद्गुरु । स्निग्धं पित्तास्रतृट्दाहक्षतक्षयसमीरजित् ॥ पक्वंस्वादुहिमं पाकेस्वादुवृष्यञ्चबृंहणम् । क्षुत्तृष्णानेत्रगदहृन्मेहघ्नं रुचिमांसकृत् । माणिक्यमर्त्यामृतचम्पकाद्याभेदा: कदल्याबहवोपिसन्ति । उक्तागुणा स्तेष्वधिकाभवन्ति निर्दोषतास्याल्लघुताचतेषाम् ॥

मोचिका । स्त्री० मल्लविशेषे । मोट्ट० इतिख्याते ॥ मोचिकावातहृद्बल्या बृंहणीमधुरागुरु: । पित्तहृत्कफकृद्रुच्यावृष्याहीप्ताग्निवेरिता ॥

मोचित : । त्रि० मुक्ते । मोक्षंप्रापिते ।

मोटकम् । न० पितृदानार्थत्रिगुणकुशमञ्जर्याम् ।

मोटकी । स्त्री० रागिणीविशेषे ।

मोटन : । पुं० वायौ । न० चूर्णीकरणे । चाञ्चल्ये ।

मोटनकम् । न० वृत्तच्छन्द: ११ प्रभेदे । यथा । ज्यान्मोटनकंतजजाश्चलगौ । रङ्गे खलुमल्लकलाकुशलस्तात्तरमल्लभटमोटनकम् । य: केलिलवेनचकारसमेसंसाररिपुं परिमोटयतु ।

मोटा । स्त्री० बलायाम् ॥

मोट्टायितम् । न० स्त्रीणांस्वाभाविकदशविधालङ्कारान्तर्गतालङ्कारविशेषे । तल्लक्षणं यथा । मोट्टायितंप्रियंस्मृत्वासाङ्गभङ्गं विजृम्भणम् ॥ अपिच । कान्तस्मरणवार्त्तादौहृदितद्भावभावत: । प्राकट्यमभिलाषस्यमोट्टायितमुदीर्यते । हु० । मोटनम् । मुटप्रमर्दने घञ् । बाहुलकादृघञस्तुट् । श्वादित्वात्

आह्नाविष : ।
मोच : । पुं॰ शुष्कफले । वाने । नव मल्लिकायाम् । सर्पकरण्डे ।
मोद : । पुं॰ हर्षे । सन्तोषे ॥
मोदक : । पुं॰ क्षत्रियाच्छूद्रायांजातेवर्णसङ्करजातिविशेषे । मयरा॰ इ॰ गौ॰ दे॰ भाषाप्रसिद्धे ॥ पुं॰ न॰ खाद्यविशेषे । लड्डुके । यवासशर्करायाम् । शर्करादिहारापक्वौषधविशेषे । न॰ वर्णवृत्तप्रभेदे । यथा । पादयुगंकुरुनूपुरसुन्दरमाशुकरं कुसुमद्वयमाहर । सुन्दरिसर्वजनौ ममनेत्रमोदकवृत्तमिदंपरिभावय बधा । मामसमं तदनुव्रणमिच्छति गोपकुलेयदिहरिरागच्छति । तत् करवैप्रणतिंमुरविद्विषिसर्वसपत्नजनेविहतत्त्विषि । वि॰ हर्षके ॥
मोदनम् । न॰ सिक्थके ॥ मोदे ।
मोदनीय : । वि॰ हर्षणीये । आत्मनि ॥
मोदमान : । त्रि॰ आनन्दावस्थाप्राप्ते । प्रमुदिते । अटम्यांसिद्धौ ॥
मोदमोदिनी । स्त्री॰ जम्ब्वाम् ॥
मोदयन्ती । स्त्री॰ वनमल्लिकायाम् । काठबेंवेली॰इ॰भा॰ ।
मोदा । स्त्री॰ अजमोदायाम् ॥
मोदाख्य : । पुं॰ आम्रवृक्षे ।
मोदाढ्य : । त्रि॰ हर्षयुक्ते ॥
मोदाढ्या । स्त्री॰ मोदिन्याम् । अजमोदायां ।
मोदित: । त्रि॰ सुरभीकृते । हर्षिते । हृष्टे । मुद्हर्षे । कर्त्तरिक्त : ।
मोदिनी । स्त्री॰ मल्लिकायाम् ॥ यूथिकायाम् ॥ मदिरायाम् ॥ कस्तूरिकायाम् ॥ अजमोदायां ॥
मोरट : । पुं॰ लताप्रभेदे । कर्णपुष्पे । पीलुपर्णे । मधुस्रवे । दीर्घमूले- क्षीरमोरटे । न॰इक्षुमूले ॥ अङ्कोठप्रसूने ॥ सप्तरात्रात्परक्षीरे ॥ न ष्टदुग्धभवंक्षीरंमोरटं कैय्यटोऽब्रवीत् ॥ मुरति । मुरसंवेष्टने । शका- दिभ्योऽटन् ॥ अङ्कोठमूले ॥
मोरटकम् । न॰ इक्षुमूले ॥
मोरटा । स्त्री॰ मूर्विकायाम् । मुरहरा॰इ॰भा॰ । टाप्
मोष : । पुं॰ चौरधर्मे ॥ मुष्यते । सुपस्तेये । घञ् ॥
मोषक : । पुं॰ तस्करे ॥ मुष्णाति । मुष॰ । ण्वुल् ॥
मोषणम् । न॰ लुंटने । मोसना॰लूटना॰इ॰भा॰ ॥ छेदने ॥ बधे ॥
मोषिता । त्रि॰ चोरे । मोषणकर्त्तरि ।
मोह : । पुं॰ मूर्च्छायाम् ॥ दु:खे ॥ देहादावात्मबुद्धौ ॥ यत्र कुण्ठीभवेद्बुद्धि: समोहइतिलौकिका: ॥ चित्तविभ्रमे ॥ अविद्यायाम् । विपर्यये । अज्ञतायाम् । तम : कार्ये ।

भ्रमे । हिताहितविवेकासामर्थ्ये । तमसि । अज्ञानकृतविपर्यये । निर्णयासामर्थ्ये । व्याकुलताहेतावविवेके ॥ मोहेनभवतिभेदः क्लेशाः सर्वेपितन्मूलाः ॥ अस्याष्टविधोभेदः । देवाह्यष्टविधमैश्वर्यमासाद्यामृताभिमानिनः ० अणिमादिकमात्मीयं शाश्वतमभिमन्यन्तइति ०सोयमस्मितामोहोऽष्टविधैश्वर्यविषयत्वादष्टविधः ॥ मोहनम् । मुह्वैचित्त्ये । घञ् ॥ धर्मविमूढत्वं ॥मोहोधर्मविमूढत्वं मानस्त्वात्माभिमानिता ॥ मोहश्चोयथापाद्मे । सुमनोवाच । मूयतामभिधास्यामिसर्वसंदेहनाशनम् । स्वरूपमुपदेशस्यसर्वविज्ञानदर्शनम् ॥ लोभः पापस्यबीजोऽयंमोहोमूलमस्यतु । असत्यं तस्यवस्कन्धोमायाशाखासुविस्तरः ॥ दम्भःकौटिल्यपत्राणिकुबुद्ध्यापुष्पितःसदा । पैशुन्यं तस्यसौगन्ध्यमज्ञानं फलमेवहि ॥ छद्मपाषण्डचौरास्तु क्रूराः पापिनः । पक्षिणोमोहवृक्षस्यमायाशाखासमाश्रिताः । अज्ञानन्तुफलंतस्यरसोऽधर्मः फलस्यहि । भावोद्दीनसंक्लेशस्तस्यसत्त्वासस्तुप्रियः । अधर्मस्तस्यसुरभिः क्षेदस्यमधुरायते । तादृशैश्चफलैश्चवसुफलोलोभपादपः ॥ तस्यच्छा-

यांसमाश्रित्ययोनरः परिवर्त्तते । फलानितस्ययोऽश्नातिसुपक्वानिदिनेदिने ॥ फलानान्तुरसेनैवअधर्मणतुपोषितः । सुसम्पुष्टोभवेन्मर्त्यः पतनायप्रयच्छति ॥ इति ॥

मोहकलिलम् । न० अविवेकात्मकालुष्ये । अहमिदंममेदमित्यज्ञानविलसिते ॥ रजस्तमोमले ॥

मोहनः । पुं० कामदेवस्यबाणविशेषे ॥ धूस्तूरवृक्षे ॥ गर्वे ॥ न० ग्राम्यधर्मे । सुरते ॥ होममन्त्रौषध्यादिद्वारामुग्धताकरणे ॥ त्रि० मोहकारके ॥

मोहनलीला । स्त्री० सुरक्रीडायाम् ॥

मोहना । स्त्री० त्रिपुरमालीपुष्पे ॥ मरुन्मालायाम् । पृक्कायाम् ॥

मोहनी । स्त्री० उपोदक्याम् ॥ वटपत्र्याम् ॥

मोहपङ्क : । पुं० विपर्ययसंशयतर्कमानप्रमादभयशोकेषु ॥ मोहस्यपङ्कः ॥

मोहरात्रिः । स्त्री० जन्माष्टम्याम् ॥ कृष्णजन्मतिथिप्रोक्तामोहरात्रिस्तुसामता ॥ अपिच । जन्माष्टमीमहेशानिमोहरात्रिः प्रकीर्त्तिता ॥ दैनन्दिनप्रलये ॥ यथा । एवंपश्चाद्दन्द्वे गतेतुब्रह्मणोनृप । दैनन्दिनन्तुप्रलयंवेदेषुपरिकीर्त्तितम् ॥ मोहरात्रिश्चसाप्रोक्तावेदविद्भिः पुरातनैः । तत्रसर्वेप्रनष्टाश्चचन्द्रार्कादिदिवौ-

श्वराः ॥ इत्यादिब्रह्मवैवर्त्तपुराणम् ॥ महाप्रलये॰ पु॰ क्वचित् ।

मोहशास्त्रम् । न॰ अविद्याजनकग्रन्थे ॥

मोहान्धकारः । पुं॰ अज्ञानध्वान्ते ॥

मोहितः । त्रि॰ विवेकायोग्यत्वमापादिते । निर्णयासामर्थ्यं प्राप्ते ॥ मोहः सञ्जातोऽस्य । तारकादित्वादितच् ॥ अनात्मसु देहेन्द्रियादिष्वात्माभिमानरूपयुक्ते पुरुषे ॥

मोहिनी । स्त्री॰ त्रिपुरमालिकापुष्पे ॥ पृक्कायामोषधौ ॥ शास्त्रीयज्ञानभ्रंसहेतुभूतायां प्रकृतौ ॥ समुद्रमथनकाले देवानाममृतपानायासुराणां मोहनाय च भगवदवतारविशेषे ॥ स्वर्वेश्याविशेषे ।

मौक्तिकम् । न॰ मुक्तायाम् । इन्द्ररत्ने । मुक्ताफले । मोती॰ इ॰ भा॰ ॥ मौक्तिकं शीतलं वृष्यं चक्षुष्यं बलपुष्टिदम् ॥ अपि च । मौक्तिकञ्च मधुरं सुशीतलं दृष्टिरोगशमनं विषापहम् । राजयक्ष्मपरिकोपनाशनं क्षीणवीर्यबलपुष्टिवर्द्धनम् ॥ अस्य लक्षणं यथा । नक्षत्राभं शुद्धमत्यन्तमुक्तं स्निग्धं स्थूलं निर्मलं निर्व्रणञ्च । न्यस्तं धत्ते गौरवं यत्तुलायां तन्निर्मूल्यं मौक्तिकं सौख्यदायि ॥ अस्य दोषलक्षणं यथा । यद्विच्छायं मौक्तिकं व्यङ्गकायं शुक्तिस्पर्शं रक्ततां चातिधत्ते । मत्स्याक्ष्यङ्कं रूक्षमुक्तामनस्कं नैतद्धार्यं धीमता दोषदायि । अष्टधा मौक्तिकं यथा । मातङ्गोरगमीनपोत्रिशिरसस्त्वक्सारशङ्खाम्बुभृच्छुक्तीनामुदराच्च मौक्तिकमणिः स्पष्टं भवत्यष्टधा । मौक्तिकविशेषो यथा । छायापाटलनीलपीतधवलास्तत्रापि सामान्यतः समानां बहुशोनलब्धिरिति चेच्छौक्तयकं तूल्वणम् ॥ अस्य परीक्षा यथा । लवणक्षारक्षोदिनि पात्रेऽलगोमूत्रपूरिते क्षिप्तम् । मर्द्दितमपि शालितुषैर्यद्विकृतं तन्मौक्तिकं जात्यं । मुक्तैवं । विनयादिभ्यष्ठक् ॥

मौक्तिकतण्डुलः । पुं॰ धवलयावनाले ॥

मौक्तिकदाम । न॰ वर्णवृत्तप्रभेदे ॥ यथा । पयोधरमत्र चतुष्कमवेहि वालाम्बरगा किलपोडशदेहि । भुजङ्गपतेरिह मौक्तिकदाममुदाहृतमिदं शृणु मौक्तिकदाम ॥ यथा । मया तव किञ्चिदकारि कदापि विलासिनि रासमनुस्मरतापि । तथापि मनस्तव नाथ सनाथ जामि कथं भवतीमपहाय ।

मौक्तिकप्रसवा । स्त्री॰ शुक्तौ ॥

मौक्तिकयोनिः । पुं॰ शुक्तिशङ्खाद्यष्टसु ॥ यथा । शुक्तिः शङ्खो गजः क्रोडः फणी मत्स्यश्च दर्दुरः । वेणुरेते समाख्यातास्तज्ज्ञैर्मौक्तिकयोनयः ॥ अगस्त्योऽप्याह । जीमूतकरिमत्स्याहिवंशशङ्खवराहजाः । शुक्त्युद्भवाश्च विज्ञेया अष्टौ मौक्तिकयोनयः । इति ॥

मौखर्य्यम् । न० मुखरत्वे ॥
मौञ्जी । स्त्री० मुञ्जनिर्मितमेखलायां॥
मौञ्जीतृणाख्यः । पुं० मुञ्जे ॥
मौञ्जीनिबन्धनम् । न० उपनयने ॥
मौञ्ज्यानिबन्धनंयत्र ॥
मौञ्जीपत्रा । स्त्री० बल्वजायाम् ॥
मौञ्जीबन्धः । पुं० उपनयने ॥
मौञ्जीबन्धनम् । न० उपनयने ॥
मौढ्यम् । न० मोहे ॥ मूढस्यकर्मभा
वोवा । गुणवचनब्राह्मणादिभ्यः
कर्मणिचेतिष्यञ् ॥
मौदकिकः । पुं० कान्दविकविशेषे ॥ मो
दकाः पण्यमस्यतदस्यपण्यमितिठक्
मौद्गः । त्रि० मुद्गावयवे ॥ मुद्गविकारे
॥ मुद्गस्यावयवोविकारोवा । बिल्वा
द्यण् । मुद्गैःसंसृष्टेऽन्ने ॥मुद्गादण्
मौद्गलिः । पुं० काके ॥
मौद्गल्यः । पुं० मुद्गलमुनिपुत्रे० गो
त्रकारके ॥
मौद्गीनम् । न० मुद्गक्षेत्रे ॥ मुद्गानांभव
नंक्षेत्रम् । धान्यानांभवनेक्षे० खञ् ॥
मौनम् । न० अभाषणे । तूष्णीम् ।
तूष्णीकाम् । शब्दप्रयोगराहित्ये ॥
कर्मविशेषेमौनंयथा । उच्चारेमैथुने
चैवप्रस्रावेदन्तधावने । स्नानेभोज
नकालेचषट्सुमौनंसमाचरेत् ॥ गो
प्यानांगोपनहेतुमौनंचाचं यमत्वं-
भगवतोविभूतिः । नहितूष्णींस्थि
तस्याभिप्रायोज्ञायते ॥ गुह्यानांम-
ध्येसन्यासश्रवणमननपूर्वकमात्म-
नोनिदिध्यासनलक्षणंमौनंवाभगव-
तोविभूतिः । मौनञ्चैवास्मिगुह्यानां
मितिभगवदुक्तेः ॥ मुनिभावे । ए
कायतयात्मचिन्तने० निदिध्यासना
ख्येवाङ्मयसंयमवेत्ती ॥ मनःसं
यमोमौनमितिभाष्यम् ॥ मुनेःकर्म
णि० ज्ञानाभ्यासलक्षणे० निदिध्या-
सनशब्दिते ॥ यस्माद्वाचोनिवर्त-
न्ते अप्राप्यमनसासह । यन्मौनंमौ-
निभिर्गम्यं तद्भवेत्सर्वदाबुधः ॥ वा
चायस्मान्निवर्त्तन्ते तद्वक्तुं केनशक्य
ते । प्रपञ्चोयदिवक्तव्यः सोपिशब्दवि
वर्जितः ॥ इतिवातद्भवेन्मौनंस
तांसहजसंज्ञितम् । गिरामौनन्तुबा
लानांप्रयुक्तं ब्रह्मवादिभिः विषाद
त्यागे । मुनेःकर्मभावेवा । युगांता
ङ्गलघुपूर्वादित्यण् ॥
मौनधरः । त्रि० मौनिनि ॥ धरति ।
धृञ्० । अच् । मौनस्यधरः ॥
मौनंधरतिवा ॥
मौनी । पुं० मुनौ ॥ त्रि० संयतवा-
चि । मौनयुक्ते ॥ यथा । सिनी-
वालीकुहूर्वापियदिसोमदिनेभवेत् ।
गोसहस्रफलंदद्यात्स्नानंयन्मौनि
नाकृतम् ॥ एतच्चमौनमहर्णोदय-
मारभ्यस्नानपर्यन्तंकार्यंनतुस्नानका
लमात्रे । मौनमस्यास्ति । अतइ-
निठनावितीनिः ॥

मौनेय : । पुं॰ गन्धर्वगणविशेषे ॥

मौरजिक : । त्रि॰ मार्दङ्गिके । मुरजवादके ॥ मुरज: तद्वादनवादनं शिल्पमस्य । शिल्पमितिठक् ॥

मौर्ख्यम् । न॰ जाड्ये ॥ मूर्खस्यभाव: । वर्णदृढादिभ्य: ष्यञ् चेतिष्यञ् ॥

मौर्वम् । न॰ काण्डे ॥ भस्मनि ॥ मूर्वाया:विकार: अवयवोवा । अण् ॥

मौर्वी । स्त्री॰ ज्यायाम् । धनुर्गुणे ॥ मूर्वायाविकार: । अवयवेचप्राण्योषधिवृक्षेभ्यइत्यण् । ङीप् अजस्त्र्याम् कौ॰गा॰वृ॰गौ॰भा॰ ॥

मौल : । पुं॰ वंशपरम्पराक्रमेणतद्देशावस्थायिनि ॥ भूम्यादेर्मूलज्ञातरि । मोउल् ॰ वृ॰गौ॰भा॰ ॥ यथा । यंपरम्परयामौला : सामन्ता : स्वामिनंविदु: । तदन्वयस्यागतस्यदातव्यागोचजैर्मही । तल्लक्षणं यथा । येतत्रपूर्वम्सामन्ता: पश्चाद्देशान्तरंगता: । तन्मूलत्वात्तुतेमौलाऋषिभि: परिकीर्त्तिता: ॥ मन्विवृत्ते ॥ मूलादागत: । मूलेभवोवा । अण् ॥

मौलि : । पुं॰ स्त्री॰ किरीटे ॥ धम्मिल्ले संयतकेशे ॥ चूडायाम् ॥ मूर्द्धनि ॥ पुं॰ अशोकपादपे ॥ स्त्री॰ भूमौ ॥ मूलस्यादूरभव : । सुतङ्गमादित्वादिञ् ॥ यद्वा । मूलस्यापत्यम् । अतइञ् ॥

मौषलम् । न॰ मुषलतुल्ये ॥ यथा । गङ्गायांमौषलंनामंमहापातकनाशनम् । महाभारतस्यपर्वविशेषे ॥

मौष्टा । स्त्री॰ क्रीडाविशेषे ॥ मुष्टि : प्रहरणमस्यांक्रीडायाम् । तदस्यां प्रहरणमितिण : । टाप् ॥

मौहूर्त : । पुं॰ ज्योतिर्विदि । दैवज्ञे ॥ मुहूर्तमधीते॰ वेदवा । तदधीततद्वेदेत्यण् ॥

मौहूर्तिक : । पुं॰ गणके । ज्योतिर्विदि । मुहूर्त्तमधीते॰ वेदवा । क्रतूक्थादितिठक् ॥

म्रक्ष : । पुं॰ स्वदोषाच्छादने । म्रक्षणे ॥

म्रक्षणम् । न॰ स्नेहने । अभ्यङ्गे ॥ तैले ॥ स्निग्धतायाम् ॥ द्रव्यस्यद्रव्यान्तरेण संयोजने ॥

म्रदिमा । पुं॰ मार्दवे । मृदुत्वे ॥ मृदोर्भाव : । पृथ्वादिभ्यइमनिज्वा ॥

म्रदिष्ठ : । त्रि॰ म्रदीयसि ॥ इष्ठन् ॥

म्रदीयान् । त्रि॰ अतिसुकुमारे । अतिशयेनमृदौ ॥ ईयसुन् ॥ * ॥

म्रातनम् । न॰ कैवर्त्तीमुस्तके ॥

म्रियमाण : । त्रि॰ मरणासन्ने ॥

म्लक्तम् । न॰ चोरिते ॥

म्लान: । त्रि॰ मलिने । कश्मले । मलीमसे म्लैहर्षक्षये । क्त: । संयोगादेरातोधातोर्यण्वतइतिनिष्ठातस्यन: ॥

म्लाना । स्त्री॰ रजस्वलायाम् ॥ म्लायतिस्म म्लै॰ । गत्यर्थेतिक्त : । संयोगादेरितितस्यन : । टाप् ॥

म्लानि: । स्त्री० कान्तिक्षये ॥ म्लायति । म्लै० । वाह्लकान्ति: ॥

म्लिष्टम् । न० अविस्पष्टे । अव्यक्तवचये ॥ त्रि० अव्यक्तवाचि । अस्पष्टभाषिते ॥ म्लानि ॥ म्लेच्छितम् । म्लेच्छ अव्यक्ते शब्दे । घञ्म्लानिस्यादितानिपातितम् ॥

म्लेच्छ: । पुं० किरातशबरपुलन्दादि पामरभेदे ॥ म्लेच्छानां सर्वधर्मराहित्यमुक्तं हरिवंशे । सगरस्तां प्रतिज्ञा गुरोर्वाक्यं निशम्य च । धर्मं जघान तेषां वै वेशान्यत्वं चकार ह । अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्जयत् । यवनानां शिर: सर्वं काम्बोजानां तथैव च ॥ पारदा मुक्तकेशाश्च पह्लवा: श्मश्रुधारिण: । नि: स्वाध्यायवषट्कारा: कृतास्तेन महात्मना ॥ शकायवनकाम्बोजा: पारदा: पह्लवास्तथा । कोलिसर्पा: समहिषादार्वाश्चोला: सकेरला: ॥ वशिष्ठवचनाद्राजन् सगरेण महात्मना ॥ शकानां शकदेशोद्भवानां चेयमाज्ञा । एवं यवनादीनाम् ॥ तेचात्मधर्मपरित्यागान्म्लेच्छत्वं ययुरिति विष्णु० पुरा० बौधायन: गोमांसभक्षको यस्तु विरुद्धं बहुभाषते । सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते ॥ पापरक्ते ॥ अपभाषणे ॥ अपशब्दे ॥ म्लेच्छो ह वा एष यदपशब्द

इतिभाष्यम् ॥ न० हिङ्गुलि ॥ म्लेच्छति । म्लेच्छ० । पचाद्यच् ॥

म्लेच्छकन्द: । पुं० लशुने ॥

म्लेच्छजातीय: । त्रि० म्लेच्छप्रकारे ॥ प्रकारवचने जातीयर् ॥ ॥

म्लेच्छदेश: । पुं० शिष्टाचाररहितखशादिदेशे । प्रत्यन्ते यज्ञियदेशादन्यस्मिन् देशे ॥ चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते । तं म्लेच्छविषयं प्राहुरार्यावर्त्तमत: परम् ॥ अत्रापि विशेषो यथा । न यत्र सफला यवनविष्णुस्तुलसीदलम् । तं म्लेच्छदेशं जानीयात् यवनानां निवेशवा: ॥ म्लेच्छानां देश: ॥

म्लेच्छभोजन: । पुं० गोधूमे ॥ न०-यावके ॥

म्लेच्छमण्डलम् । न० म्लेच्छदेशे ॥

म्लेच्छमुखम् न० ताम्रे । शुल्वे । तांबा इतिभाषाप्रसिद्धे ॥ म्लेच्छदेशे मुखमुत्पत्तिरस्य ॥ म्लेच्छस्य मुखमिव यस्य ॥

म्लेच्छास्यम् । न० ताम्रे ॥ म्लेच्छदेश आस्यमुत्पत्तिरस्य ॥ म्लेच्छमास्यमिवयस्य ॥

म्लेच्छितम् । न० अपशब्दे । परभाषायाम् ॥ न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत् । सङ्कीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कृतम् ॥ म्लेच्छितम् । म्लेच्छ० क्त: । इट् ॥

